विश्वेश्वरानन्द-वैदिकशोध-संस्थान-प्रकाशनम् —३१२
V. V. Research Institute Publication —312



विश्वेश्वरानन्द-भारतभारती-ग्रन्थमाला–२३
Vishveshvaranand Indological Series—23

संपादकः — विश्वबन्धुः

Editor — VISHVA BANDHU



भारते होशिआरपुरे वि. वै. शो. सं. मुद्राग्रहे ।
शास्त्रिणा देवदत्तेन संमुद्राप्य प्रकाश्यते ॥

Printed and Published by DEV DATTA SHASTRI
at the V. V. R. I. Press, Hoshiarpur (Pb., India)

V. I. Series—23

# ṚGVEDA

*with*

The Padapāṭha and the available portions of the Bhāṣya-s by Skandasvāmin and Udgītha, he Vyākhyā by Veṅkaṭamādhava and Mudgala's Vṛtti based on Sāyaṇa-bhāṣya

*Edited,*

Critically, and annotated with text-comparative data from original manuscripts and other available materials



*By*

**VISHVA BANDHU**

*In collaboration with*

BHĪM DEV, AMAR NĀTH, K. S. RĀMASWĀMI SĀSTRĪ AND PĪTĀMBAR DATTA

## PART V

(Maṇḍala-s VII and VIII)

**HOSHIARPUR**
**Vishveshvaranand Vedic Research Institute**
**1964**

वि. भाष्यं, पुष्पमाला—२३

# ऋग्वेदः

स च

पदपाठेन च यथोपलम्भं स्कन्दस्वाम्युद्गीथीये भाष्ये, वेङ्कटमाधवीया व्याख्या, सायणभाष्यानुसारिणी मुद्गलीया वृत्तिर् इत्येतैश्च पाठविमर्शौपयिकैः पाठभेदादिटिप्पणैश्च संयोज्य

भीमदेवः, अमरनाथः, के. एस्. रामस्वामिशास्त्री, पीताम्बरदत्त इत्येषां सायुज्यभाजा

**विश्वबन्धुना**

संपादितः

तत्र चाऽयं

सप्तमाऽष्टम—मण्डलात्मकः

**५मो भागः**

होशिआरपुरम्

**विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्**

२०२१ वि.

प्रथमं संस्करणम्, २०२१ वि.

प्रकाशकृत् — विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,

साधु-आश्रमः (प. गृ.), होशिआरपुरम् (पं., भारतम्)।



FIRST EDITION, 1964

*Publishers:*

**Vishveshvaranand Vedic Research Institute,**

Sadhu Ashram (P.O.), Hoshiarpur (Pb. India)




Prepared and Published under the Patronage of the Government of India in the erstwhile Ministry of Scientific Research and Cultural Affairs, the Government of Panjab, the University Grants Commission, the University of Panjab, the Dayanand Anglo-Vedic College Management, New Delhi and the Trusts and Charities of Shri Vishva Bandhu, Shri Moolchand Khairaitiram and other donors.

अथ

# ऋग्वेदे सभाष्ये

सप्तमाऽष्टम-मण्डलात्मकः

पञ्चमो भागः

अथ

# ऋग्वेदे सभाष्ये

## सप्तमं मण्डलम्

### [ १ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । विराट् छन्दः, एकोनविंशाद्यास्त्रिष्टुभः[1] ।

**अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्युम् ॥१॥**

अग्निम् । नरः । दीधितिऽभिः । अरण्योः । हस्तऽच्युती । जनयन्त । प्रऽशस्तम् ।
दूरेऽदृशम् । गृहऽपतिम् । अथर्युम् ॥ १ ॥

**वेङ्कट०** मैत्रावरुणिर्वसिष्ठः सप्तमं मण्डलमपश्यत्[2] ॥ अग्निम् ऋत्विजो मनुष्याः अङ्गुलिभिः अरण्योः 'हस्तप्रच्युत्या जनयन्त प्रशस्तम् दूरेदर्शनम् गृहपतिम् अतनवन्तम्[3]' ( या ५,१० ) इति ॥ १ ॥

**तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित् ।**
**दक्षाय्यो यो दम आस नित्यः ॥ २ ॥**

तम् । अग्निम् । अस्ते । वसवः । नि । ऋण्वन् । सुऽप्रतिचक्षम् । अवसे । कुतः । चित् ।
दक्षाय्यः । यः । दमे । आस । नित्यः ॥ २ ॥

**वेङ्कट०** तम् अग्निम् गृहे वसवः देवाः हविर्वहनार्थं[4] [5]प्राक्षिपन् अवासयन्[5] सुदर्शनम् कुतः चित् अपि रक्षसो रक्षणाय । वर्धनीयः यः[6] गृहे भवति नित्यः ॥ २ ॥

**प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।**
**त्वां शश्वन्त उप यन्ति वाजाः ॥ ३ ॥**

प्रऽइद्धः । अग्ने । दीदिहि । पुरः । नः । अजस्रया । सूर्म्या । यविष्ठ ।
त्वाम् । शश्वन्तः । उप । यन्ति । वाजाः ॥ ३ ॥

**वेङ्कट०** प्रकर्षेणेद्धः[7] अग्ने![8] दीप्यस्व पुरतः अस्माकम् अनवरतया सरणशीलया युवतम! । बहूनि अन्नानि त्वाम् उप गच्छन्ति[9] ॥ ३ ॥

---

१-१. नास्ति मूको. २. °मर्मण्यिल° वि[2] अ[1] ल; °मर्मण्यवमप° लअ. ३. अनन् मूको.
४. हविर्विहननार्थं वि[2] अ[1]; °हनार्थः ल. ५-५. °पन्नचासयत् मूको. ६. नास्ति मूको. ७. प्रकर्षेद्धः ल; °कर्षणे° लअ. ८. °ग्ने दीप्तो अ[1]. ९. गच्छति मूको.

**प्र ते अग्नयोऽग्निभ्यो वरं निः सुवीरासः शोशुचन्त द्युमन्तः । यत्रा नरः समासते सुजाताः ।४।**

प्र । ते । अग्नयः । अग्निऽभ्यः । वरम् । निः । सुऽवीरासः । शोशुचन्त । द्युऽमन्तः ।
यत्र । नरः । समऽआसते । सुऽजाताः ॥ ४ ॥

**वेङ्कट०** प्रकर्षेण [1]निः शोशुचन्त[1] अन्येभ्यो लौकिकेभ्यः [2]अग्निभ्यः ते अग्नयः[2] वरिष्ठं शोभनवीराः दीप्तिमन्तः । यत्र ऋत्विजः समासते शोभनजननाः ॥ ४ ॥

**दा नो अग्ने धिया रयिं सुवीरं स्वपत्यं सहस्य प्रशस्तम् ।**
**न यं यावा तरति यातुमावान् ॥ ५ ॥**

दाः । नः । अग्ने । धिया । रयिम् । सुऽवीरम् । सुऽअपत्यम् । सहस्य । प्रऽशस्तम् ।
न । यम् । यावा । तरति । यातुऽमावान् ॥ ५ ॥

**वेङ्कट०** देहि अस्मभ्यम् अग्ने! कर्मणा धनं शोभनवीरं शोभनपुत्रं हे सहनरूप![3] प्रशस्तम्, यम् रयिम् अभिगन्ता शत्रुः[4] न[5] तरति हिंसावान् ॥ ५ ॥

[6]इति पञ्चमाष्टके प्रथमाध्याये त्रयोविंशो वर्गः[6] ॥

**उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची । उप स्वैनमरमतिर्वसूयुः ।६।**

उप । यम् । एति । युवतिः । सुऽदक्षम् । दोषा । वस्तोः । हविष्मती । घृताची ।
उप । स्वा । एनम् । अरमतिः । वसुऽयुः ॥ ६ ॥

**वेङ्कट०** उप एति यम् युवतिः सुबलम् रात्रिन्दिवम्[7] हविष्मती जुहूः । एनम् उप गच्छतु मदीया विरामवर्जिता अर्थकामा स्तुतिः ॥ ६ ॥

**विश्वा अग्नेऽप दहारातीर्येभिस्तपोभिरदहो जरूथम् । प्र निस्वरं चातयस्वामीवाम् ॥७॥**

विश्वाः । अग्ने । अप । दह । अरातीः । येभिः । तपःऽभिः । अदहः । जरूथम् ।
प्र । निऽस्वरम् । चातयस्व । अमीवाम् ॥ ७ ॥

**वेङ्कट०** सर्वाः अग्ने! [8]अप दह[8] अरातीः, यैः[9] तेजोभिः, [10]अदहः रक्षः । [10] 'जरूथं' गरूथं गृणातेः' इति यास्कः ( ६,१७ )? । [11]परुषस्वनशीलम् अपि च[11] जरयितृ । प्र चातयस्व निशब्दम्[12] रक्षः ॥ ७ ॥

---

१-१. शोशुचन्तः वि[2]; निर्गोशुचन्तः अ[1] लअ; निः शोशुचन्तः ल. २-२. °भ्यः···नयो वि[2]. ३. °नरूश मूको; सहनकुशल ल प्रस्तावः. ४. शत्रून् वि[2] अ[1]. ५. नास्ति वि[2]. ६-६. नास्ति मूको. ७. °न्दिनम् वि[2]. ८-८. अचदह वि[2] अ[1] ल; अचादह लअ. ९. यैर्यैः वि[2] अ[1] ल; केर्यैः लअ. १०-१०. ऊहो रक्षो जतृफं वि[2]; ऊहो रक्षो जतृभं अ[1]; उहः रक्षः जतृफं ल; उहः रक्षः जत्रफं लअ. ११-११. परुष्वचशीलमपि चा ल लअ; परुष्य शीलमपि चा वि[2]; परुष्य च शीलमपि चा अ[1]. १२. निश्शब्दं अ.[1]

आ यस्ते॑ अग्न इ॒धते॒ अनी॑कं॒ वसि॑ष्ठ॒ शुक्र॒ दीदि॑वः॒ पाव॑क ।
उ॒तो न॑ ए॒भिः स्त॒वथै॑रि॒ह स्याः॑ ॥ ८ ॥

आ । यः । ते॒ । अ॒ग्ने॒ । इ॒धते॑ । अनी॑कम् । वसि॑ष्ठ । शुक्र॑ । दीदि॑ऽवः । पाव॑क ।
उ॒तो इति॑ । न॒ः । ए॒भिः । स्त॒वथैः॑ । इ॒ह । स्या॒ः ॥ ८ ॥

वेङ्कट० आभिमुख्येन अग्ने! यः[१] ते तेजस्सङ्घातम्[२] इन्धे, श्रेष्ठ![३] ज्वलन्! दीप्त! शोधक![४] तस्य[५] ममापि च एभिः स्तोत्रैः इह भव ॥ ८ ॥

वि ये ते॑ अग्ने भेजि॒रे अनी॑कं॒ मर्ता॒ नरः॒ पित्र्या॑सः पुरु॒त्रा ।
उ॒तो न॑ ए॒भिः सु॒मना॑ इ॒ह स्याः॑ ॥ ९ ॥

वि । ये । ते॒ । अ॒ग्ने॒ । भे॒जि॒रे । अनी॑कम् । मर्ताः॑ । नरः॑ । पित्र्या॑सः । पु॒रु॒ऽत्रा ।
उ॒तो इति॑ । न॒ः । ए॒भिः । सु॒ऽमनाः॑ । इ॒ह । स्या॒ः ॥ ९ ॥

वेङ्कट० वि भेजिरे ये तव अग्ने![६] रश्मिसङ्घं[७] समिन्धनेन मनुष्याः[८] नेतारः[९] पितृहिताः बहुषु देशेषु । अपि च तेषाम् अस्माकम् एभिः[१०] स्तोत्रैः इह सुमनाः भव ॥ ९ ॥

इ॒मे नरो॑ वृत्र॒हत्ये॑षु॒ शूरा॒ विश्वा॒ अदे॑वीर॒भि स॑न्तु मा॒याः ।
ये मे॒ धियं॑ प॒नय॑न्त प्रश॒स्ताम् ॥ १० ॥

इ॒मे । नरः॑ । वृ॒त्र॒ऽहत्ये॑षु । शूराः॑ । विश्वाः॑ । अदे॑वीः । अ॒भि । स॒न्तु॒ । मा॒याः ।
ये । मे॒ । धिय॑म् । प॒नय॑न्त । प्र॒ऽश॒स्ताम् ॥ १० ॥

वेङ्कट० इमे नरः अस्मदीयाः सङ्ग्रामेषु शूराः विश्वाः [११]आसुरीः मायाः[११] अभि भवन्तु, ये मे कर्म प्रशस्तम् स्तुवन्ति ॥ १० ॥

[१२]इति पञ्चमाष्टके प्रथमाध्याये चतुर्विंशो वर्गः[१२] ॥

मा शूने॑ अग्ने॒ नि ष॑दाम नृ॒णां माशेष॑सो॒ऽवीर॑ता॒ परि॑ त्वा ।
प्र॒जाव॑तीषु॒ दुर्या॑सु दुर्य ॥ ११ ॥

मा । शूने॑ । अ॒ग्ने॒ । नि । स॒दा॒म॒ । नृ॒णाम् । मा । अ॒शेष॑सः । अ॒वीर॑ता । परि॑ । त्वा॒ ।
प्र॒जाऽव॑तीषु । दुर्या॑सु । दु॒र्य॒ ॥ ११ ॥

वेङ्कट० मा[१३] नृणाम् केवलत्वाय अग्ने! त्वाम् परि [१४]नि सीदाम[१४] । त्वाम् परिनिषीदन्तः आश्रितान्

---

१. यत् अ[१].   २. °घातः वि[२].   ३. श्रेष्ठं वि[२] अ[१].   ४. मोधक वि[२]; गोधक अ[१] ल लभ.   ५. तमस्य अ[१].   ६. अग्नेः वि[२] अ[१]; अग्ने ल लभ.   ७. °सङ्घैः अ[१].   ८. नास्ति वि[२] अ[१].   ९. °तारं मूको.   १०. एहि मूको.   ११-११. आसुरीं मायाम् मूको.   १२-१२. नास्ति मूको   १३. मां मूको   १४-१४. निवदा° वि[२]; निषदाम ल लभ.

भर्तुं शक्नुमः[1]। मा च अनपत्यस्य धनस्य मा चावीरयुक्तस्य धनस्य लाभाय प्रजायुक्तेषु गृहेषु भवेम गृहपते![2] ॥ ११ ॥

यम॒श्वी नित्य॑मुप॒याति॑ य॒ज्ञं प्र॒जाव॑न्तं स्वप॒त्यं क्षयं॑ नः ।
स्वज॑न्मना॒ शेष॑सा वावृधा॒नम् ॥ १२ ॥

यम् । अ॒श्वी । नित्य॑म् । उ॒प॒ऽयाति॑ । य॒ज्ञम् । प्र॒जाऽव॑न्तम् । सु॒ऽअ॒प॒त्यम् । क्षय॑म् । न॒ः ।
स्वऽज॑न्मना । शेष॑सा । व॒वृ॒धा॒नम् ॥ १२ ॥

**वेङ्कट०** यम्[3] यज्ञम् अश्ववान् अग्निः[4] नित्यम् उपगच्छति, स यज्ञः प्रजायुक्तम् शोभनापत्यम् च गृहम् अस्मभ्यं प्रयच्छतु औरसेन पुत्रेण वर्धमानम्[5] ॥ १२ ॥

पा॒हि नो॑ अग्ने र॒क्षसो॑ अजु॑ष्टात् पा॒हि धू॒र्तेरर॑रुषो अघा॒योः ।
त्वा यु॒जा पृ॑तना॒यूँर॒भि ष्या॑म् ॥ १३ ॥

पा॒हि । न॒ः । अ॒ग्ने॒ । र॒क्षस॑ः । अजु॑ष्टात् । पा॒हि । धू॒र्तेः । अर॑रुषः । अ॒घ॒ऽयोः ।
त्वा । यु॒जा । पृ॒त॒ना॒ऽयून् । अ॒भि । स्या॒म् ॥ १३ ॥

**वेङ्कट०** पाहि[6] अस्मान् अग्ने! रक्षसः अप्रियात्। पाहि हिंसितुः अदातुः अघमिच्छतः। त्वया सहायेन युद्धकामान् अहम् अभि भवेयम् ॥ १३ ॥

सेद॒ग्निर॒ग्नीँरत्य॑स्त्व॒न्यान् यत्र॑ वा॒जी तन॑यो वी॒ळुपा॑णिः । स॒हस्र॑पाथा अ॒क्षरा॑ स॒मेति॑ ।१४।

सः । इत् । अ॒ग्निः । अ॒ग्नीन् । अति॑ । अ॒स्तु॒ । अ॒न्यान् । यत्र॑ । वा॒जी । तन॑यः । वी॒ळुऽपा॑णिः ।
स॒हस्र॑ऽपाथाः । अ॒क्षरा॑ । स॒म्ऽएति॑ ॥ १४ ॥

**वेङ्कट०** सः एव अग्निः अन्यान् परकीयान् अग्नीन् अभिभवतु, यस्मिन् हविष्मान् मम पुत्रः[7] दृढहस्तः[8] बहुरक्षणः स्तोत्राणि समेति ॥ १४ ॥

सेद॒ग्निर्यो व॑नुष्य॒तो नि॒पाति॑ स॒मेद्धा॑र॒मंह॑स उरु॒ष्यात् ।
सु॒जा॒तास॒ः परि॑ चरन्ति वी॒राः ॥ १५ ॥

सः । इत् । अ॒ग्निः । यः । व॒नु॒ष्य॒तः । नि॒ऽपाति॑ । स॒म्ऽए॒द्धार॑म् । अंह॑सः । उ॒रु॒ष्यात् ।
सु॒ऽजा॒तास॑ः । परि॑ । चर॑न्ति । वी॒राः ॥ १५ ॥

**वेङ्कट०** सः एव अग्निः यः हन्तुः परिरक्षति, यश्च समेद्धारम् अंहसः रक्षति। शोभनजननाः तमिमम् परि चरन्ति पुत्राः ॥ १५ ॥

'इति पञ्चमाष्टके प्रथमाध्याये पञ्चविंशो वर्गः' ॥

---

१. शरोमः मूको. २. °पतयः वि[2] अ[1] ल; ग्रह···त लअ. ३. नास्ति वि[2]. ४. अग्निं मूको. ५. °मानः मूको. ६. नास्ति वि[2] अ[1]. ७. °त्रो मूको. ८. °स्तौ वि[2] अ[1]. ९-९. नास्ति मूको.

अयं सो अग्निराहुतः पुरुत्रा यमीशानः समिदिन्धे हविष्मान् ।
परि यमेत्यध्वरेषु होता ॥ १६ ॥

अयम् । सः । अग्निः । आऽहुतः । पुरुऽत्रा । यम् । ईशानः । सम् । इत् । इन्धे । हविष्मान् ।
परि । यम् । एति । अध्वरेषु । होता ॥ १६ ॥

**वेङ्कट०** अयम् सः अग्निः आहुतः बहुषु देशेषु, यम् ईश्वरः हविष्मान् सम् इत् इन्धे । परि एति यम्[1] यज्ञेषु होता ॥ १६ ॥

त्वे अग्न आहवनानि भूरीशानास आ जुहुयाम नित्या ।
उभा कृण्वन्तो वहतू मियेधे ॥ १७ ॥

त्वे इति । अग्ने । आऽहवनानि । भूरि । ईशानासः । आ । जुहुयाम । नित्या ।
उभा । कृण्वन्तः । वहतू इति । मियेधे ॥ १७ ॥

**वेङ्कट०** त्वयि अग्ने! हवींषि भूरीणि ईश्वराः[2] आ जुहुयाम नित्यानि उभौ वहतू[3] स्तोत्रं शस्त्रं च कृण्वन्तः अपि यज्ञे ॥ १७ ॥

इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ ।
प्रति न ईं सुरभीणि व्यन्तु ॥ १८ ॥

इमो इति । अग्ने । वीतऽतमानि । हव्या । अजस्रः । वक्षि । देवऽतातिम् । अच्छ ।
प्रति । नः । ईम् । सुरभीणि । व्यन्तु ॥ १८ ॥

**वेङ्कट०** इमान्येव अग्ने! कान्ततमानि हवींषि अनवरतः वह देवसङ्घम् अभि । प्रति भक्षयन्ति अस्माकम् इमानि सुरभीणि हवींषि देवाः ॥ १८ ॥

मा नो अग्नेऽवीरते परा दा दुर्वाससेऽमतये मा नो अस्यै ।
मा नः क्षुधे मा रक्षस ऋतावो मा नो दमे मा वन आ जुहूर्थाः ॥ १९ ॥

मा । नः । अग्ने । अवीरते । परा । दाः । दुःऽवाससे । अमतये । मा । नः । अस्यै ।
मा । नः । क्षुधे । मा । रक्षसे । ऋतऽवः । मा । नः । दमे । मा । वने । आ । जुहूर्थाः ॥१९॥

**वेङ्कट०** मा अस्मान् अग्ने! अपुत्रत्वाय परा दाः, मा[4] च अशोभनवस्त्राय अमतये अस्यै[5], मा च अस्मान् क्षुधे, मा च रक्षसे यज्ञवन्! । मा हिंसीः च अस्मान् [6]गृहे, मा च वने[6] ॥ १९ ॥

---

१. नास्ति वि[२]. २. श्वराणि वि[२] ल लअ; नश्वराणि अ[१]; ईश्वराणि ल प्रस्तावः. ३. वहतु वि[२] अ[२]. ४. म मूको. ५. यस्यै मूको. ६-६. गृणिर्मानवचनः वि[२]; गृणमाणचवनो अ[२]; ग्रहे मान वनो ल; ग्रहे माण च वचनः लअ.

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ २० ॥

नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवत्ऽभ्यः । सुसूदः ।
रातौ । स्याम । उभयासः । आ । ते । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ २० ॥

**वेङ्कट०** क्षिप्रं मह्यम् अन्नानि त्वम् अग्ने! उत् शशाधि गृहाणेति ब्रूहि । त्वम्[१] हे देव! हविष्मद्भ्योऽन्नानि क्षरसि[२] । वयं तव दाने स्याम[३] उभयासः[४] हविष्मन्तः स्तुतिमन्तश्च । यूयम् पात अविनाशैः[५] [६]सर्वदा अस्मान्[६] इति, अग्निः अनुचरांश्चेति ॥ २० ॥

[७]इति पञ्चमाष्टके प्रथमाध्याये षड्विंशो वर्गः[७] ॥

त्वमग्ने सुहवो रण्वसंदृक् सुदीती सूनो सहसो दिदीहि ।
मा त्वे सचा तनये नित्य आ धङ्मा वीरो अस्मन्नर्यो वि दासीत् ॥ २१ ॥

त्वम् । अग्ने । सुऽहवः । रण्वऽसंदृक् । सुऽदीती । सूनो इति । सहसः । दिदीहि ।
मा । त्वे इति । सचा । तनये । नित्ये । आ । धक् । मा । वीरः । अस्मत् । नर्यः । वि । दासीत् ॥ २१ ॥

**वेङ्कट०** त्वम् अग्ने! स्वाहावः रमणीयसन्दर्शनः शोभनदीप्त्या[८] हे सहसः पुत्र![९] दीप्यस्व[१०] । मा त्वयि वर्तमानो रश्मिः औरसे पुत्रे आदहनं करोतु । मा वीरः नृभ्यो हितः अस्मत्तः अपक्षयं यातु ॥ २१ ॥

मा नो अग्ने दुर्भृतये सचैषु देवेद्धेष्वग्निषु प्र वोचः ।
मा ते अस्मान् दुर्मतयो भृमाच्चिद् देवस्य सूनो सहसो नशन्त ॥ २२ ॥

मा । नः । अग्ने । दुःऽभृतये । सचा । एषु । देवऽइद्धेषु । अग्निषु । प्र । वोचः ।
मा । ते । अस्मान् । दुःऽमतयः । भृमात् । चित् । देवस्य । सूनो इति । सहसः । नशन्त ॥ २२ ॥

**वेङ्कट०** मा अस्मान् अग्ने! सहायभूतः त्वम् एषु अग्निषु अशोभनभरणाय प्र वोचः देवैरिद्धेषु । मा तव अस्मान् दुर्मतयः[११] भ्रमणशीलस्वभावाः देवस्य हे सहसः सूनो! व्याप्नुवन्तु[१२] ॥ २२ ॥

स मर्तो अग्ने स्वनीक रेवानमर्त्ये य आजुहोति हव्यम् ।
स देवता वसुवनिं दधाति यं सूरिरर्थी पृच्छमान एति ॥ २३ ॥

सः । मर्तः । अग्ने । सुऽअनीक । रेवान् । अमर्त्ये । यः । आऽजुहोति । हव्यम् ।
सः । देवता । वसुऽवनिम् । दधाति । यम् । सूरिः । अर्थी । पृच्छमानः । एति ॥ २३ ॥

---

१. त्वा मूको; वा ल प्रस्तावः. २. क्षासि मूको. ३. स्योमो मूको. ४. उभव वि[२] अ[१]; उभवा ल लअ. ५. अपिनागैः मूको. ६-६. सदम अस्मा° ल लअ; सर्वस्मान् वि[२] अ[१]. ७-७. नास्ति मूको. ८. °भनया दी° अ[१]; °भनादी° लअ. ९. पुत्रं मूको. १०. दीप्य मूको. ११. °यः भ्रमणशीला अ[१] वि[२], १२. °प्नुवन्तः वि[२] अ[१] ल; °प्नुववन्तः लअ.

**वेङ्कट०** सः मनुष्यः अग्ने! शोभनज्वालानीक![1] धनवान्[2] भवति, अमर्त्ये त्वयि यः[3] आजुहोति हविः। सः देवतानां धनदानं[4] धारयति, यम् विद्वान् धनदानार्थं[5] पृच्छन् एति उदारम् ॥ २३ ॥

महो नो अग्ने सुवितस्य विद्वान् रयिं सूरिभ्य आ वहा बृहन्तम् ।
येन वयं सहसावन् मदेमाविक्षितास आयुषा सुवीराः ॥ २४ ॥

महः । नः । अग्ने । सुवितस्य । विद्वान् । रयिम् । सूरिऽभ्यः । आ । वह । बृहन्तम् ।
येन । वयम् । सहसाऽवन् । मदेम । अविऽक्षितासः । आयुषा । सुऽवीराः ॥ २४ ॥

**वेङ्कट०** महान्तम् अस्मभ्यम् अग्ने! [6]अभ्युदयं जानन्[6] धनं स्तोतृभ्यः [7]आ वह महत्, येन[7] वयम् धनेन बलवन्! माद्येम अक्षीणाः[8] आयुषा शोभनवीराः ॥ २४ ॥

नू मे ब्रह्माण्यग्न उच्छशाधि त्वं देव मघवद्भ्यः सुषूदः ।
रातौ स्यामोभयास आ ते यूयं पात स्वस्तिभिः सदा नः ॥ २५ ॥

नु । मे । ब्रह्माणि । अग्ने । उत् । शशाधि । त्वम् । देव । मघवत्ऽभ्यः । सुसूदः ।
रातौ । स्याम । उभयासः । आ । ते । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ २५ ॥

**वेङ्कट०** सेयम् एकस्मिन्नपि सूक्ते [9]द्विः पठिता[9] विराट्। द्विः[10] अग्निं स्तुत्वा सकृदुपसंहृत्य [11]पुनरप्यन्यैश्च नौति[11] स्तुत्वोपसंहार इति ॥ २५ ॥

[12]इति पञ्चमाष्टके प्रथमाध्याये सप्तविंशो वर्गः[12] ॥

कुशिकानां कुले जातो माधवः सुन्दरीसुतः ।
पञ्चमस्याष्टकस्याऽऽद्यम् अध्यायं व्याकरोदिति ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने पञ्चमाष्टके प्रथमोऽध्यायः ॥

—※—

इति ऋग्वेदे सभाष्ये पञ्चमाष्टके प्रथमोऽध्यायः ॥



१. °लानिक मूको. २. धनवान् मूको. ३. वा वि[2] अ[1] ल; व लअ. ४. दानं धनस्य अ[1].
५. धनार्थी अ[1]. ६-६. दयजातम् वि[2]; °दयजानं अ[1]. ७-७. °वहं अहृयेन वि[2]. ८. अक्षिणा मूको.
९-९. द्विपठिता वि[2] ल लअ. १०. हिः अ[1]. ११-११. न्यैस्तनोति अ[1]; °न्यैश्च नोति वि[2] ल; °न्यैच्छनोति लअ. १२-१२. नास्ति मूको.

## अथ द्वितीयोऽध्यायः।

वेङ्कट०

अथाध्यायं[1] [2]‘जुषस्व नः’[2] व्याचिख्यासति माधवः।
गोत्रेष्वृषीणां वक्तव्यम् आदावेव प्रदर्शयन् ॥ १ ॥

पित्रादिषु प्रसिद्धेन येन नाम विशेष्यते।
वेदेष्वृषीणां तद्गोत्रं ज्ञातव्यं तत्र[3] वैदिकैः ॥ २ ॥

जेतुः पिता मधुच्छन्दाः श्यावाश्वस्य पितामहः।
पितामहो गौरिवीतेः गोत्रत्वेन प्रदर्शितः ॥ ३ ॥

अपालाऽत्रिकुले जाता विश्ववारा च तादृशी।
दूरस्थोऽत्रिस्तयोर्गोत्रं बहवः सन्ति तादृशाः ॥ ४ ॥

पितरौ मित्रावरुणौ वसिष्ठस्येत्यपि[4] श्रुतम्।
‘उतासि मैत्रावरुणः’[5] प्रवरेषु पुनस्तयोः ॥ ५ ॥

पुत्रस्थाने [6]समावेशाद् वसिष्ठो मैत्रावरुणिः[6]।
तत्राहुः कारणं प्राज्ञा [7]विदेहो हि शशाप[7] तम् ॥ ६ ॥

ऋषे! भव विदेहस्त्वम् ऋषिः शप्तः समाविशत्।
अहोरात्रे योगबलात् तौ मित्रावरुणौ स्मृतौ ॥ ७ ॥

ददर्श मन्त्रांश्च तदा पुत्रश्चाभूत् पुनस्तयोः।
क्रमेणार्षेयवरणम् उपपन्नं तयोरिति ॥ ८ ॥

विश्वामित्रजमदग्नी [8]तथा वसिष्ठ एव च[8]।
इन्द्रो अगस्त्यो मरुतो गोत्रम् एषु[9] प्रदृश्यते ॥ ९ ॥

यद्यप्यृषीणां सप्तानां ब्राह्मणेषु [10]न दृश्यते[10]।
गोत्रं तथापि विज्ञेयम् ऋक्षु गोत्रनिदर्शनात्[11] ॥ १० ॥

असगोत्रो भवेच्छ्राद्धे सगोत्रात् तन्तुमाहरेत्।
न प्रयच्छेद् दुहितरं सगोत्रायेति च स्मृतिः ॥ ११ ॥

---

१. श्रीः अथा° वि². २-२. °स्वेति अ¹ वेंकअ. ३. तव वि¹ अ¹. ४. वसिष्ठस्येत्यृचि वेंकअ. ५. ऋ ७,३३,११. ६-६. °वेशो वासिष्ठ मैत्रावरुणा वि² अ¹; °वेशो वासिष्ठ मैत्रावरुण लअ. ७-७. °होऽभिश° वेंकअ. ८-८. तदु वासिष्ठमेव वा वि² अ¹. ९. नैषु वि² ल; नेषु लअ; णेषु अ¹. १०-१०. दृश्यते ल; दन्दृश्यते वि² अ¹. ११. °निवेशनाव वि² ल लअ.

किमेतेषु मनुष्याणां गोत्रमित्यभिधीयते ।
वक्तव्यं छान्दसैनैतद् धर्मशास्त्रपरैरिव[1] ॥ १२ ॥

कौतूहलनिवृत्त्यर्थम् अथ चास्माभिरुच्यते ।
गोत्राणां तु सहस्राणि प्रयुतान्यर्बुदानि[2] च ॥ १३ ॥

[3]कुलाख्यानि हि तानीह[3] तानि गोत्राणि सन्तु नः ।
ननु[4] स्मरन्ति नैतानि[5] सम्प्रति ब्राह्मणा इमे ॥ १४ ॥

तर्हि गोत्रसहस्राणि प्रयुतान्यर्बुदानि च ।
षट्छतैः[6] सङ्गृहीतानि कतबोधायनादिभिः[7] ॥ १५ ॥

स्मरन्ति तानि चित्तेषु सम्प्रतित्वेन मानवाः ।
मार्कण्डेयोऽस्मि माण्डूकस्तथा माण्डव्य इत्यपि ॥ १६ ॥

प्रदर्शयन् बहून् पक्षान् न कथञ्चिदपीच्छति ।
[8]इतरेतरसम्बन्धं तदध्यायमिति ब्रुवन्[8] ॥ १७ ॥

यदि ह्येतानि गोत्राणि मार्कण्डेयः समुद्वहेत् ।
माण्डूकस्य दुहितरम् असगोत्राऽस्य[9] सा यतः ॥ १८ ॥

तस्माद्वत्सादिकं गोत्रम् इति माधवदर्शनम् ।
आपस्तम्बश्च तानेव वेददृष्टानदर्शयत्[10] ॥ १९ ॥

## [ २ ]

[11]वसिष्ठो मैत्रावरुणिर्ऋषिः । आप्रीसूक्तम् = ( आद्याया इध्मः समिद्धोऽग्निर्वा देवता, द्वितीयस्या नराशंसः, तृतीयस्या इळः, चतुर्थ्या बर्हिः, पञ्चम्या देवीर्द्वारः, षष्ठ्या उषासानक्ता, सप्तम्या दैव्यौ होतारौ प्रचेतसौ, अष्टम्यास्तिस्रो देव्यः सरस्वतीळाभारत्यः, नवम्यास्त्वष्टा, दशम्या वनस्पतिः, एकादश्याः स्वाहाकृतयः ) । त्रिष्टुप् छन्दः[11] ।

जुषस्व॑ नः स॒मिध॑मग्ने अ॒द्य शोचा॑ बृ॒हद् य॑ज॒तं धू॒मम॑ृ॒ण्वन् ।
उप॑ स्पृश दि॒व्यं सानु॒ स्तूपैः॒ सं र॒श्मिभि॑स्ततनः॒ सूर्य॑स्य ॥ १ ॥

---

१. छान्दसेनैत° वि[2] ल  २. प्रयुक्तान्य° वि[2] ल.  ३-३. °ख्याभिमता° वेंऋअ.  ४. न तु वेंऋअ. ५. चैतानि वेंऋअ.  ६. नास्ति अ[1].  ७. कं बोधोदयनादिभिः वि[2] अ[2]; कम्बो धोय° लअ.  ८-८. नास्ति मूको. ९. °त्रा हि अ[2]; वेंऋअ.  १०. देवदृ° वि[2] अ[1] ल; देवदृष्ट न दर्शयत् लअ.  ११-११. नास्ति मूको.

जुषस्व । नः । सम्ऽइधम् । अग्ने । अद्य । शोच । बृहत् । यजतम् । धूमम् । ऋण्वन् ।
उप । स्पृश । दिव्यम् । सानु । स्तूपैः । सम् । रश्मिऽभिः । ततनः । सूर्यस्य ॥ १ ॥

वेङ्कट० वसिष्ठः । सेवस्व[1] नः समिधम् अग्ने! अद्य । प्रज्वल च बृहन्तम् यष्टव्यम् धूमम् उद्गमयन् । उप स्पृश च दिवि भवम् समुच्छ्रितम् आदित्यं तेजस्सङ्घातैः । सम् गच्छस्व सूर्यस्य रश्मिभिः इति ॥ १ ॥

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।
ये सुक्रतवः शुचयो धियंधाः स्वदन्ति देवा उभयानि हव्या ॥ २ ॥[2]

नराशंसस्य । महिमानम् । एषाम् । उप । स्तोषाम । यजतस्य । यज्ञैः ।
ये । सुऽक्रतवः । शुचयः । धियम्ऽधाः । स्वदन्ति । देवाः । उभयानि । हव्या ॥ २ ॥

वेङ्कट० नराशंसस्य महिमानम् एषाम् [3]यजमानानामर्थाय वयम्[3] उप स्तुमः यष्टव्यस्य यज्ञैः । ये सुयज्ञाः[4] शुचयः कर्मणां धारयितारः यजमानाः, तेषाम् उभयानि पाशुकानि सौमिकानि[5] च हवींषि स्वदन्ति देवताः । [6]नाराशंसः पूजयामास सदैव यज्ञार्थम्[6] ॥ २ ॥

ईळेन्यं वो असुरं सुदक्षमन्तर्दूतं रोदसी सत्यवाचम् ।
मनुष्वदग्निं मनुना समिद्धं समध्वराय सदमिन्महेम ॥ ३ ॥

ईळेन्यम् । वः । असुरम् । सुऽदक्षम् । अन्तः । दूतम् । रोदसी इति । सत्यऽवाचम् ।
मनुष्वत् । अग्निम् । मनुना । सम्ऽइद्धम् । सम् । अध्वराय । सदम् । इत् । महेम ॥ ३ ॥

वेङ्कट० ... ... ... ... ... ॥ ३ ॥

सपर्यवो भरमाणा अभिज्ञु प्र वृञ्जते नमसा बर्हिरग्नौ ।
आजुह्वाना घृतपृष्ठं पृषद्वदध्वर्यवो हविषा मर्जयध्वम् ॥ ४ ॥

सपर्यवः । भरमाणाः । अभिऽज्ञु । प्र । वृञ्जते । नमसा । बर्हिः । अग्नौ ।
आऽजुह्वानाः । घृतऽपृष्ठम् । पृषत्ऽवत् । अध्वर्यवः । हविषा । मर्जयध्वम् ॥ ४ ॥

वेङ्कट० परिचरणमिच्छन्तः अरण्यात् आहरन्तः अभिगतजानुकम्[7] प्र हरन्ति हविषा सह बर्हिः अग्नौ । अभिमुखं जुह्वानाः घृतपृष्ठम् नानावर्णं बर्हिः, हे अध्वर्यवः! अग्निम्[8] हविषा परिचरत[9] ॥ ४ ॥

स्वाध्यो३ वि दुरो देवयन्तोऽशिश्रयू रथयुर्देवताता ।
पूर्वी शिशुं न मातरा रिहाणे समग्रुवो न समनेष्वञ्जन् ॥ ५ ॥

---

१. °सिष्ठ वि[२] अ[१] ल; °सिष्ठे लअ; जुषस्व वि[२] ल लअ. २. यास्केन ( ८,६ ) व्याख्याता. ३-३. °र्थावयवम् मूको. ४. °प्रजाः मूको. ५. सौम्यानि वि[२]. ६-६. नास्ति वि[२] अ[१]. ७. अहिगत° मूको. ८. अग्निः वि[२] अ[१]; अग्नि ल लअ. ९. °रतः मूको.

सुऽआध्यः । वि । दुरः । देवऽयन्तः । अशिश्रयुः । रथऽयुः । देवऽताता ।
पूर्वी इति । शिशुम् । न । मातरा । रिहाणे इति । सम् । अग्रुवः । न । समनेषु । अञ्जन् ॥५॥

**वेङ्कट०** सुकर्माणः[1] देवानिच्छन्तः वि अशिश्रयुः यज्ञद्वाराणि विवृतानि कुर्वन्ति सङ्ग्रामजिगमिषया रथमिच्छन्तः । जसि पूर्वरूपम् । यज्ञे । अथ विवृतेषु द्वारेषु पूर्वैः [2]प्राचीनैर्जुहूप्रभृतौ अग्निम्[2] वत्सम् इव मातरौ जिह्वया लिहाने भवतः । तमग्निम् उपस्थितेषु सङ्ग्रामेषु जिगमिषवो घृतेन[3] सम् अञ्जन्ति, यथा नद्यो जलेन क्षेत्राण्यञ्जन्तीति ॥ ५ ॥

[4]इति पञ्चमाष्टके द्वितीयाध्याये प्रथमो वर्गः[4] ॥

उत योषणे दिव्ये मही न उषासानक्ता सुदुघेव धेनुः ।
बर्हिषदा पुरुहूते मघोनी आ यज्ञिये सुविताय श्रयेताम् ॥ ६ ॥

उत । योषणे इति । दिव्ये इति । मही इति । नः । उषसानक्ता । सुदुघाऽइव । धेनुः ।
बर्हिऽसदा । पुरुहूते इति पुरुऽहूते । मघोनी इति । आ । यज्ञिये इति । सुविताय । श्रयेताम् ॥६॥

**वेङ्कट०** अपि स्त्रियौ[5] दिवि भवे उषासानक्ते महत्त्वाद् अस्मान् आ श्रयेताम्, यथा सुदुघा धेनुः आश्रयत्येवम्, बर्हिषि सीदन्त्यौ बहुभिराहूते धनवत्यौ यज्ञार्हे अभ्युदयार्थमिति ॥ ६ ॥

विप्रा यज्ञेषु मानुषेषु कारू मन्ये वां जातवेदसा यजध्यै ।
ऊर्ध्वं नो अध्वरं कृतं हवेषु ता देवेषु वनथो वार्याणि ॥ ७ ॥

विप्रा । यज्ञेषु । मानुषेषु । कारू इति । मन्ये । वाम् । जातऽवेदसा । यजध्यै ।
ऊर्ध्वम् । नः । अध्वरम् । कृतम् । हवेषु । ता । देवेषु । वनथः । वार्याणि ॥ ७ ॥

**वेङ्कट०** मेधाविनौ यज्ञेषु मनुष्यकृतेषु कर्मशीलौ मन्ये वाम्[6] जातप्रज्ञौ[7] यष्टव्यौ[8] । तौ युवाम् ऊर्ध्वम् अस्माकं यज्ञं कुरुतम् । आह्वानेषु तौ युवां यजमानानाम् देवेषु भजथः धनानि ॥ ७ ॥

आ भारती भारतीभिः सजोषा इळा देवैर्मनुष्येभिरग्निः ।
सरस्वती सारस्वतेभिरर्वाक् तिस्रो देवीर्बर्हिरेदं सदन्तु ॥ ८ ॥

आ । भारती । भारतीभिः । सऽजोषाः । इळा । देवैः । मनुष्येभिः । अग्निः ।
सरस्वती । सारस्वतेभिः । अर्वाक् । तिस्रः । देवीः । बर्हिः । आ । इदम् । सदन्तु ॥ ८ ॥

**वेङ्कट०** एषा व्याख्याता ( ऋ ३,४,८ ) ॥ ८ ॥

---

१. स्वक° मूको. २-२. °पहूतावर्हि वि[२] अ[१]; °पभृतावर्हि अ[१]. ३. घृतं मूको. ४. नास्ति मूको. ५. चरन्त्यौ वि[२]; चरौ अ[१]; स्त्रौ लअ. ६. वा मूको. ७. प्रज्ञो वि[२] ल लअ. ८. यजिष्ठव्यौ वि[२] अ[१]; यमृष्ठव्यौ लअ. ९. नास्ति वि[२] अ[१].

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।
यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥ ९ ॥

तत् । नः । तुरीपम् । अध । पोषयित्नु । देव । त्वष्टः । वि । रराणः । स्यस्वेति स्यस्व ।
यतः । वीरः । कर्मण्यः । सुऽदक्षः । युक्तऽग्रावा । जायते । देवऽकामः ॥ ९ ॥

**वेङ्कट०** एषा व्याख्याता ( ऋ ३,४,९ ) ॥ ९ ॥

वनस्पतेऽव सृजोप देवानग्निर्हविः शमिता सूदयाति ।
सेदु होता सत्यतरो यजाति यथा देवानां जनिमानि वेद ॥ १० ॥

वनस्पते । अव । सृज । उप । देवान् । अग्निः । हविः । शमिता । सूदयाति ।
सः । इत् । ऊँ इति । होता । सत्यऽतरः । यजाति । यथा । देवानाम् । जनिमानि । वेद ॥१०॥

**वेङ्कट०** एषा व्याख्याता ( ३,४,१० ) ॥ १० ॥

आ याह्यग्ने समिधानो अर्वाङिन्द्रेण देवैः सरथं तुरेभिः ।
बर्हिर्न आस्तामदितिः सुपुत्रा स्वाहा देवा अमृता मादयन्ताम् ॥ ११ ॥

आ । याहि । अग्ने । सम्ऽइधानः । अर्वाङ् । इन्द्रेण । देवैः । सऽरथम् । तुरेभिः ।
बर्हिः । नः । आस्ताम् । अदितिः । सुऽपुत्रा । स्वाहा । देवाः । अमृताः । मादयन्ताम् ॥११॥

**वेङ्कट०** एषा व्याख्याता ( ३,४,११ ) ॥ ११ ॥

[1]इति पञ्चमाष्टके द्वितीयाध्याये द्वितीयो वर्गः[1] ॥

## [ ३ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥ १ ॥

अग्निम् । वः । देवम् । अग्निऽभिः । सऽजोषाः । यजिष्ठम् । दूतम् । अध्वरे । कृणुध्वम् ।
यः । मर्त्येषु । निऽध्रुविः । ऋतऽवा । तपुःऽमूर्धा । घृतऽअन्नः । पावकः ॥ १ ॥

**वेङ्कट०** अग्निम् यूयम् देवम् अन्यैः अग्निभिः [2]सहितम् यष्टृतमम्[2] दूतम् यज्ञे कुरुत, यः मनुष्येषु देवोऽपि सन् अभिमुखो ध्रुवस्तिष्ठति यज्ञवान्[3] तापयितृशिरस्कः[4] घृतान्नः शोधकः ॥ १ ॥

---

१-१. नास्ति मूको. २-२. °तं यष्टव्यम् अ[१]. ३. यज्ञीयान् वि[१] अ[१]. ४. °यितृनिरस्तः मूको.

प्रोथदश्वो न यवसेऽविष्यन् यदा महः संवरणाद् व्यस्थात् ।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥ २ ॥

प्रोथत् । अश्वः । न । यवसे । अविष्यन् । यदा । महः । सम्ऽवरणात् । वि । अस्थात् ।
आत् । अस्य । वातः । अनु । वाति । शोचिः । अध । स्म । ते । व्रजनम् । कृष्णम् । अस्ति ॥

वेङ्कट० प्रोथतिः शब्दकर्मा । शब्दं कुर्वन् अश्वः इव अग्रतः स्थिते यवसे भक्षणं करिष्यन् अयमग्निः अरण्यमत्तुम् यदा महतः संवरणात् अन्योन्यसङ्घटितात्[1] शुष्कात् [2]काष्ठसङ्घातात् वि अस्थात्, अनन्तरमेव[2] अस्य शोचिः वातः अनु वाति । अथ [3]प्रत्यक्षः । अनन्तरं[3] तव मार्गः कृष्णो भवति ॥ २ ॥

उद् यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः ।
अच्छा द्यामरुषो धूम एति सं दूतो अग्न ईयसे हि देवान् ॥ ३ ॥

उत् । यस्य । ते । नवऽजातस्य । वृष्णः । अग्ने । चरन्ति । अजराः । इधानाः ।
अच्छ । द्याम् । अरुषः । धूमः । एति । सम् । दूतः । अग्ने । ईयसे । हि । देवान् ॥ ३ ॥

वेङ्कट० उत् चरन्ति यस्य ते नवजननस्य वर्षितुः अग्ने! जरारहिताः दीप्यमाना रश्मयः, तस्य तदानीं दिवं प्रति[4] आरोचमानः धूमः एति । त्वं हि देवानां दूतः सन् अग्ने! दिवि स्थितान् सम् ईयसे सङ्गच्छसे देवैः इति ॥ ३ ॥

वि यस्य ते पृथिव्यां पाजो अश्रेत् तृषु यदन्ना समवृक्त जम्भैः ।
सेनेव सृष्टा प्रसितिष्ट एति यवं न दस्म जुह्वा विवेक्षि ॥ ४ ॥

वि । यस्य । ते । पृथिव्याम् । पाजः । अश्रेत् । तृषु । यत् । अन्ना । सम्ऽअवृक्त । जम्भैः ।
सेनाऽइव । सृष्टा । प्रऽसितिः । ते । एति । यवम् । न । दस्म । जुह्वा । विवेक्षि ॥ ४ ॥

वेङ्कट० विविधं श्रयति[5] यस्य ते दावभूतस्य[6] पृथिव्याम् तेजः, क्षिप्रम् यदा अन्नानि काष्ठलक्षणानि [7]दन्तैः सम्पृङ्क्ते[7] । तदानीं सेना इव उद्युक्ता ज्वाला ते एति प्रभञ्जिनी[8] । तदानीं[9] यथा यवम् पशुः एवं हे दर्शनीय! त्वम् ज्वालया अरण्यं व्याप्नोषीति ॥ ४ ॥

तमिद् दोषा तमुषसि यविष्ठमग्निमत्यं न मर्जयन्त नरः ।
निशिशाना अतिथिमस्य योनौ दीदाय शोचिराहुतस्य वृष्णः ॥ ५ ॥

---

१. °सङ्घभीता° वि[२] अ. २-२. °ताद्यस्वापन्नतर° वि[२] अ[१]. ३-३. °त्यक्षोदन्त° मूको. ४. प्रत्याह मूको. ५. °यन्ति मूको. ६. उपहूत° वि[२]; दापहूत° अ[१] ल लभ. ७-७. °न्तैः पाजः सं.क्ते वि[२] ल; °न्तैः वाजः संपृक्ते अ[१] लभ. ८. प्रबन्धनीति चं वि[२]; प्रबन्धनीति च अ[१]; प्रबन्धनीतिं च ल लभ. ९. नास्ति वि[२]. १०-१०. दर्शयन्ति यत्त्वत् वि[२] अ[१]; दर्शयन्ति यत्त्व ल लभ.

तम् । इत् । दोषा । तम् । उषसि । यविष्ठम् । अग्निम् । अत्यम् । न । मर्जयन्त । नरः ।
निऽशिशानाः । अतिथिम् । अस्य । योनौ । दीदाय । शोचिः । आऽहुतस्य । वृष्णः ॥ ५ ॥

**वेङ्कट०** तम् एव रात्रौ तम् उषसि[1] यविष्ठम् अग्निम् अश्वम्[2] इव घासैः[3] परिचरन्ति मनुष्याः तीक्ष्णीकुर्वन्तः अतिथिम् अस्य अतिथेः स्थाने आहवनीये। तदानीम् आहुतस्य वर्षितुः[4] शोचिः दीप्यते ॥ ५ ॥

[5]इति पञ्चमाष्टके द्वितीयाध्याये तृतीयो वर्गः[5] ॥

सुसंदृक् ते स्वनीक प्रतीकं वि यद् रुक्मो न रोचस उपाके ।
दिवो न ते तन्यतुरेति शुष्मश्चित्रो न सूरः प्रति चक्षि भानुम् ॥ ६ ॥

सुऽसन्दृक् । ते । सुऽअनीक । प्रतीकम् । वि । यत् । रुक्मः । न । रोचसे । उपाके ।
दिवः । न । ते । तन्यतुः । एति । शुष्मः । चित्रः । न । सूरः । प्रति । चक्षि । भानुम् ॥६॥

**वेङ्कट०** शोभनसन्दर्शनम्[6] ते हे शोभनज्वालानीक! अङ्गम् । यदा आदित्य इव मनुष्याणाम् अन्तिके वि रोचसे दावभूतः, तदा द्युलोकाद् इव अशनिः एति ते शोषकं ज्योतिः । स त्वं चित्ररूपः सूर्यः इव सर्वतः प्रदर्शयसि दीप्तीरिति ॥ ६ ॥

यथा वः स्वाहाग्नये दाशेम परीळाभिर्घृतवद्भिश्च हव्यैः ।
तेभिर्नो अग्ने अमितैर्महोभिः शतं पूर्भिरायसीभिर्नि पाहि ॥ ७ ॥

यथा । वः । स्वाहा । अग्नये । दाशेम । परि । इळाभिः । घृतवत्ऽभिः । च । हव्यैः ।
तेभिः । नः । अग्ने । अमितैः । महःऽभिः । शतम् । पूःऽभिः । आयसीभिः । नि । पाहि ॥७॥

**वेङ्कट०** यथा[7] तुभ्यम् [8]अग्नये वयम्[8] स्वाहाकारं परितः[9] दाशेम, इळेति गोनाम, पश्वाहुतिभिः तथा घृतवद्भिः च पुरोडाशैः । तथा अस्मान् अग्ने! तैः त्वदीयैः तेजोभिः बहुभिः नितरां रक्ष शतेन, पुरैरिव अयसा निर्मितैरिति औपमिकमिति ॥ ७ ॥

या वा ते सन्ति दाशुषे अधृष्टा गिरो वा याभिर्नृवतीरुरुष्याः ।
ताभिर्नः सूनो सहसो नि पाहि स्मत् सूरीञ्जरितॄञ्जातवेदः ॥ ८ ॥

याः । वा । ते । सन्ति । दाशुषे । अधृष्टाः । गिरः । वा । याभिः । नृऽवतीः । उरुष्याः ।
ताभिः । नः । सूनो इति । सहसः । नि । पाहि । स्मत् । सूरीन् । जरितॄन् । जातऽवेदः ॥८॥

**वेङ्कट०** याः वा ते भवन्ति यजमानरक्षणार्थं रक्षोभिः अनभिभूताः दीप्तयः, गिरः च मन्त्रात्मिकाः

---

१. असि मूको. २. °श्व वि[२] अ[१]. ३. वासैः अ[१] लअ. ४. र्षितः मूको. ५-५. नास्ति मूको. ६. सुसदृक् शोभन… वि[२] अ[१]. ७. नास्ति वि[२] अ[१]. ८-८. अग्ने यवं मूको. ९-९. पितरोमिंदा° मूको.

यास्ते भवन्ति। याभिः प्रजावतीः[1] प्रजाः रक्षसि, ताभिः अस्मान् अपि अग्ने! नि पाहि सहसः सूनो!। स्मत्-शब्दः [2]कल्याणवचनः। शोभनान्[3] मेधाविनः स्तोतॄन्[4] जातवेदः! ॥ ८ ॥

निर्यत् पूतेव स्वधितिः शुचिर्गात् स्वया कृपा तन्वा॒३ रोचमानः।
आ यो मात्रोरुशेन्यो जनिष्ट देवयज्याय सुक्रतुः पावकः ॥ ९ ॥

निः। यत्। पूताऽइव। स्वऽधितिः। शुचिः। गात्। स्वया। कृपा। तन्वा। रोचमानः।
आ। यः। मात्रोः। उशेन्यः। जनिष्ट। देवऽयज्याय। सुऽक्रतुः। पावकः ॥ ९ ॥

वेङ्कट० निः गच्छति यदा पूता शिलायां निशितीकृता स्वधितिः इव दीप्तः, तदा स्वया कल्पनया ततया[5] तन्वा दीप्यमानो भवति। यः अरण्योः आ जनिष्ट, कमनीयश्च[6] देवयागाय सुप्रज्ञः शोधकः ॥ ९ ॥

एता नो अग्ने सौभगा दिदीह्यपि क्रतुं सुचेतसं वतेम।
विश्वा स्तोतृभ्यो गृणते च सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

एता। नः। अग्ने। सौभगा। दिदीहि। अपि। क्रतुम्। सुऽचेतसम्। वतेम।
विश्वा। स्तोतृऽभ्यः। गृणते। च। सन्तु। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥१०॥

वेङ्कट० एतानि अस्माकम् अग्ने! सौभगानि प्रज्वलय। अपि च कर्म सुशोभनेन ज्ञानेन प्रणीतम् वतेम। वनतेर्वर्णान्तरापत्तिः[7]। विश्वानि धनानि स्तोतृभ्यः गृणते मह्यम् च सन्तु। यूयम् इति सानुचराभिप्रायमिति ॥ १० ॥

[8]इति पञ्चमाष्टके द्वितीयाध्याये चतुर्थो वर्गः[8] ॥

## [ ४ ]

[9]वसिष्ठो मैत्रावरुणिर्ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः[9]।

प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम्।
यो दैव्यानि मानुषा जनूंष्यन्तर्विश्वानि विद्मना जिगाति ॥ १ ॥

प्र। वः। शुक्राय। भानवे। भरध्वम्। हव्यम्। मतिम्। च। अग्नये। सुऽपूतम्।
यः। दैव्यानि। मानुषा। जनूंषि। अन्तः। विश्वानि। विद्मना। जिगाति ॥ १ ॥

वेङ्कट० 'प्र भरध्वम्' यूयम् ज्वलते दीप्यमानाय हव्यम् स्तुतिम् च अग्नये निर्मलम्, यः दैव्यानि मानुषाणि च विश्वानि जातानि भूतानि देवान् मनुष्यांश्च अन्तः गच्छति ज्ञानेन। मनुष्येभ्यो देवान् प्रति गच्छति देवेभ्यो मनुष्यानिति ॥ १ ॥

---

१. वतीं वि[२]. २. अस्मच्छन्दः वि[१]; अस्मच्छब्दः अ[१] ल लअ. ३. °नम् मूको. ४. स्तोतिः वि[२]; स्तोतु वि[२] ल; स्तोत्र ··· लअ. ५. तया मूको. ६. ॰यश्चो मूको. ७. °न्तरावर्ति मूको; °न्तरवर्तिनः लप्रस्तावः. ८-८. नास्ति मूको. ९-९. प्रहर° अ[१].

स गृत्सो अग्निस्तरुणश्चिदस्तु यतो यविष्ठो अजनिष्ट मातुः ।
सं यो वना युवते शुचिदन् भूरि चिदन्ना समिदत्ति सद्यः ॥ २ ॥

सः । गृत्सः । अग्निः । तरुणः । चित् । अस्तु । यतः । यविष्ठः । अजनिष्ट । मातुः ।
सम् । यः । वना । युवते । शुचिऽदन् । भूरि । चित् । अन्ना । सम् । इत् । अत्ति । सद्यः ॥२॥

**वेङ्कट०** सः मेधावी अग्निः सर्वदा युवा [1]एव अस्तु[1] अशान्तः, यतः प्रभृति युवतमः अरणेः अजनिष्ट । सम् युवते यः भस्मीकुर्वन् मिश्रयति वनानि शुचिदन्तः, स बहूनि अपि अन्नानि सहैव अत्ति सद्यः एकस्मिन् क्षणे ॥ २ ॥

अस्य देवस्य संसद्यनीके यं मर्तासः श्येतं जगृभ्रे ।
नि यो गृभं पौरुषेयीमुवोच दुरोकमग्निरायवे शुशोच ॥ ३ ॥

अस्य । देवस्य । सम्ऽसदि । अनीके । यम् । मर्तासः । श्येतम् । जगृभ्रे ।
नि । यः । गृभम् । पौरुषेयीम् । उवोच । दुःऽओकम् । अग्निः । आयवे । शुशोच ॥ ३ ॥

**वेङ्कट०** अस्य देवस्य संसदने सति वयम् अनीके [2]मुखे स्याम[2] । यम्[3] मनुष्याः कार्यार्थं श्वेतवर्णं गृह्णन्ति, यः पुरुषैः अर्प्यमाणं[4] हविषो मुष्टिम् अभिमुखं सेवते, सः अग्निः मनुष्यार्थं दुस्सेवं दीप्यते, अत्यन्तं प्रज्वलितो भवति ॥ ३ ॥

अयं कविरकविषु प्रचेता मर्तेष्वग्निरमृतो नि धायि ।
स मा नो अत्र जुहुरः सहस्वः सदा त्वे सुमनसः स्याम ॥ ४ ॥

अयम् । कविः । अकविषु । प्रऽचेताः । मर्तेषु । अग्निः । अमृतः । नि । धायि ।
सः । मा । नः । अत्र । जुहुरः । सहस्वः । सदा । त्वे इति । सुऽमनसः । स्याम ॥ ४ ॥

**वेङ्कट०** अयम् क्रान्तप्रज्ञः प्रकृष्टज्ञानः अप्रकृष्टज्ञानेषु निहितः, तथा मरणधर्मिषु [5]अमरणधर्मा नि धायि[5] । प्रत्यक्षः शिष्टः । सः त्वम् मा अस्मान् अस्मिन् स्तोत्रे क्रियमाणे हिंसीः । हे बलवन्! सदा त्वयि वयम् सुमनसः स्याम इति ॥ ४ ॥

आ यो योनिं देवकृतं ससाद क्रत्वा ह्य१ग्निरमृताँ अतारीत् ।
तमोषधीश्च वनिनश्च गर्भं भूमिश्च विश्वधायसं बिभर्ति ॥ ५ ॥

आ । यः । योनिम् । देवऽकृतम् । ससाद । क्रत्वा । हि । अग्निः । अमृतान् । अतारीत् ।
तम् । ओषधीः । च । वनिनः । च । गर्भम् । भूमिः । च । विश्वऽधायसम् । बिभर्ति ॥ ५ ॥

---

१-१. °व शास्तु वि[2] ल; एवा शास्तु अ[1] लअ. २-२. मुखस्या वि[2] अ[1]. ३. य वि[2] अ[1] लअ.
४. तृप्यमा° मूको. ५-५. °र्मामिधा° मूको.

वेङ्कट० आ सीदति यः स्थानम् ओषध्यादिकं देवैरेतस्य वासाय कल्पितम्। प्रज्ञानेन हि अग्निः देवान् दुरितेभ्यः उत्तारयति[1] मथ्यमानः[2]। तम् ओषध्यो वृक्षाः गर्भम् भूमिः च विश्वस्य धर्तारम्[3] धारयन्ति ॥ ५ ॥

[4]इति पञ्चमाष्टके द्वितीयाध्याये पञ्चमो वर्गः[4] ॥

ईशे ह्य१ग्निरमृतस्य भूरेरीशे रायः सुवीर्यस्य दातोः ।
मा त्वा वयं सहसावन्नवीरा माप्सवः परि षदाम मादुवः ॥ ६ ॥

ईशे । हि । अग्निः । अमृतस्य । भूरेः । ईशे । रायः । सुऽवीर्यस्य । दातोः ।
मा । त्वा । वयम् । सहसाऽवन् । अवीराः । मा । अप्सवः । परि । सदाम । मा । अदुवः ॥६॥

वेङ्कट० ईशे हि अग्निः अन्नं बहु दातुम्। ईशे धनं शोभनवीर्यं दातुम्। अथ प्रत्यक्षः। तादृशम् त्वा वयम् बलवन्! मा अपुत्राः परि निषीदाम, मा च अप्सवः सोमस्य अपातारः[5]। मा च अपरिचारकाः[6] परिनिषीदाम[7] ॥ ६ ॥

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥ ७ ॥

परिऽसद्यम् । हि । अरणस्य । रेक्णः । नित्यस्य । रायः । पतयः । स्याम ।
न । शेषः । अग्ने । अन्यऽजातम् । अस्ति । अचेतानस्य । मा । पथः । वि । दुक्षः ॥ ७ ॥

वेङ्कट० परिहर्तव्यम् हि, परिहृत्य गन्तव्यं नोपसर्तव्यम् अरणस्य धनम्। अरणोऽन्यो भवति, न रमत इति, अपि वा अर्तेः अरणोऽन्यतो गच्छतीति। यास्कस्त्वाह "अरणः अपार्णो भवति" (३,२)। यदि तस्य धनमुपसीदति तस्मिन्नागते दातव्यं तद्भवति। ततश्च तदनित्यं भवति। ततो वयम् नित्यस्य एव धनस्य पतयः स्याम इति पुत्रानभिप्रेत्य वदति। तथा चाह—न शेषो अग्ने अन्यजातमस्ति इति। शेष इत्यपत्यनाम। शिष्यते प्रयतः[8] इति। न अन्यजातम् मनुष्यस्यापत्यं भवति। ततश्च अचेतयमानस्य तत्प्रमत्तस्य भवति। मा अस्मात् पथः वि दूदुषः, औरसमेव पुत्रमस्मभ्यं देहीति। अस्योत्तरा भूयसे निर्वचनाय ( तु. या ३,२ ) ॥ ७ ॥

नहि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित् स एत्या नो वाज्यभीषाळेतु नव्यः ॥ ८ ॥

नहि । ग्रभाय । अरणः । सुऽशेवः । अन्यऽउदर्यः । मनसा । मन्तवै । ऊँ इति ।
अध । चित् । ओकः । पुनः । इत् । सः । एति । आ । नः । वाजी । अभीषाट् । एतु । नव्यः ॥८॥

---

१. उत्तरयतीति ल लअ. २. मथपानाः वि[2] ल लअ; मथमानाः अ[1]. ३. धत्तां वि[2] अ[1].
४-४. नास्ति मूको. ५. पाता° वि[2] ल; अवात अ[1] लअ. ६. °रकः मूको. ७. अपरिष्यूधः अ[1]; परिष्यदुवः ल; अपरिष्युधः लअ; परिषदाम यद्वा हि अदुवः ल प्रस्तावः. ८-८. मूको. अनवधानत एष पाठः अष्टम्या ऋचो भाष्यान्ते पठितः. ९. मृतमिति वि[2] अ[1]; मृतस्य ल लअ.

वेङ्कट० [1]न ग्रहीतव्यः[1] अरणः गन्ता जनकगृहम् प्रति सुसुखतमः अपि। अन्यस्य उदराज् जातः मनसा अपि न मन्तव्यो ममायमिति। अथापि गृहं जनकस्य स पुनरेव गच्छति, यद्यप्ययं गृह्णाति यदि वा[2] मन्यते। तस्मात् एतु नः वाजी वेजनवान् औरसः अभिषहमाणः सपत्नान्[3] नवजातः, स एव पुत्र इति ॥ ८ ॥

त्वम॑ग्ने वनुष्य॒तो नि पा॑हि॒ त्वमु॑ नः सहसावन्नव॒द्यात् ।
सं त्वा॑ ध्वस्म॒न्वद॒भ्ये॑तु॒ पाथः॒ सं र॒यिः स्पृ॑ह॒याय्यः॑ सह॒स्री ॥ ९ ॥

त्वम् । अ॒ग्ने॒ । व॒नु॒ष्य॒तः । नि । पा॒हि॒ । त्वम् । ऊँ इति॑ । न॒ः । स॒ह॒सा॒ऽव॒न् । अ॒व॒द्यात् ।
सम् । त्वा॒ । ध्व॒स्म॒न्ऽवत् । अ॒भि । ए॒तु॒ । पाथः॑ । सम् । र॒यिः । स्पृ॒ह॒याय्यः॑ । स॒ह॒स्री ॥ ९ ॥

वेङ्कट० त्वम् अग्ने! हन्तुः अस्मान् नि पाहि, त्वम् एव [4]अस्मान् बलवन्! अवद्यात् निन्दितुः[4]। सम् अभि एतु त्वां मदीये गृहे वर्तमानम् इव [5]सत् क्रियायुक्तम् अन्नं[5] धनं स्पृहणीयं सहस्रसङ्ख्याकम् ॥ ९ ॥

ए॒ता नो॑ अग्ने॒ सौभ॑गा दिदी॒ह्यपि॒ क्रतुं॑ सु॒चेत॑सं वतेम ।
विश्वा॑ स्तो॒तृभ्यो॑ गृण॒ते च॑ सन्तु यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ १० ॥

ए॒ता । न॒ः । अ॒ग्ने॒ । सौभ॑गा । दि॒दी॒हि॒ । अपि॑ । क्रतु॑म् । सु॒ऽचेत॑सम् । व॒ते॒म॒ ।
विश्वा॑ । स्तो॒तृऽभ्यः॑ । गृ॒ण॒ते । च॒ । स॒न्तु॒ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ॥ १० ॥

वेङ्कट० ऋ ७,३,१० द्र. ॥ १० ॥

[6]इति पञ्चमाष्टके द्वितीयाध्याये षष्ठो वर्गः[6] ॥

## [ ५ ]

[6]वसिष्ठो मैत्रावरुणिर्ऋषिः। वैश्वानरोऽग्निर्देवता। त्रिष्टुप् छन्दः[6]।

प्राग्नये॑ त॒वसे॑ भरध्वं॒ गिरं॑ दि॒वो अ॑र॒तये॑ पृथि॒व्याः ।
यो विश्वे॑षाम॒मृता॑नामु॒पस्थे॑ वैश्वान॒रो वा॑वृ॒धे जा॑गृ॒वद्भिः॑ ॥ १ ॥

प्र । अ॒ग्नये॑ । त॒वसे॑ । भ॒र॒ध्व॒म् । गिर॑म् । दि॒वः । अ॒र॒तये॑ । पृ॒थि॒व्याः ।
यः । विश्वे॑षाम् । अ॒मृता॑नाम् । उ॒पऽस्थे॑ । वै॒श्वा॒न॒रः । व॒वृ॒धे । जा॒गृ॒वत्ऽभिः॑ ॥ १ ॥

वेङ्कट० वैश्वानरः। प्र भरध्वम् अग्नये वृद्धाय गिरम् पृथिव्याः सकाशाद् दिवं प्रति गन्त्रे, यः विश्वेषाम् देवानाम् उपस्थे पृथिव्याम् वैश्वानरः वर्धते जागृवद्भिः यजमानैः समिद्धः ॥ १ ॥

---

१. ग्रभित° वि[2]; न विग्रहि° ल लभ; ग्रहित° अ[1]. २. यदि व मूको. ३. सम्पन्नान् मूको. ४-४. °स्माद् बलवद् वधात् निन्दित वि[2]; स्माद् बलवन्तवधात् निन्दितः अ[1]; °स्मात् बलवन् अवद्वधान्निन्दितः ल; स्मात् बलवन्तवधां निन्दितः लभ. ५. सनक्रि° वि[2] अ[1]. ६-६. नास्ति मूको.

पृष्टो दिवि धाय्यग्निः पृथिव्यां नेता सिन्धूनां वृषभः स्तियानाम् ।
स मानुषीरभि विशो वि भाति वैश्वानरो वावृधानो वरेण ॥ २ ॥

पृष्टः । दिवि । धायि । अग्निः । पृथिव्याम् । नेता । सिन्धूनाम् । वृषभः । स्तियानाम् ।
सः । मानुषीः । अभि । विशः । वि । भाति । वैश्वानरः । ववृधानः । वरेण ॥ २ ॥

**वेङ्कट०** सम्पृक्तः दिवि निहितः अग्निः पृथिव्याम् च नेता नदीनां वर्षिता उदकानाम् । सः मानुषीः विशः [1]अभि वि भाति[1] वैश्वानरः वर्धमानः वरिष्ठेन तेजसा आदित्य[2] इव ॥ २ ॥

त्वद् भिया विश आयन्नसिक्नीरसमना जहतीर्भोजनानि ।
वैश्वानर पूरवे शोशुचानः पुरो यदग्ने दरयन्नदीदेः ॥ ३ ॥

त्वत् । भिया । विशः । आयन् । असिक्नीः । असमनाः । जहतीः । भोजनानि ।
वैश्वानर । पूरवे । शोशुचानः । पुरः । यत् । अग्ने । दरयन् । अदीदेः ॥ ३ ॥

**वेङ्कट०** [3]त्वत्तः भयेन[3] विशः गच्छन्ति असितवर्णाः, रक्षांसीत्यर्थः, त्यक्तसङ्ग्रामाः परित्यजन्त्यः अन्नानि । वैश्वानर! अग्ने! पूरवे राज्ञे शोशुचानः तच्छत्रूणां पुराणि यदा दारयन्[4] प्राज्वलः ॥ ३ ॥

तव त्रिधातु पृथिवी उत द्यौर्वैश्वानर व्रतमग्ने सचन्त ।
त्वं भासा रोदसी आ ततन्थाजस्रेण शोचिषा शोशुचानः ॥ ४ ॥

तव । त्रिऽधातु । पृथिवी । उत । द्यौः । वैश्वानर । व्रतम् । अग्ने । सचन्त ।
त्वम् । भासा । रोदसी इति । आ । ततन्थ । अजस्रेण । शोचिषा । शोशुचानः ॥ ४ ॥

**वेङ्कट०** तिस्रो देवता अग्निर्वायुः सूर्य इति । [5]तथा भिन्नस्य[5] तव त्रिधातु व्रतम् पृथिवी अन्तरिक्षं द्यौः च वैश्वानर! अग्ने! सेवन्ते । पृथिवी अग्नेः कर्म, [6]अन्तरिक्षं वायोः[6], द्यौः सूर्यस्य । त्वम् भासा द्यावापृथिव्यौ आ ततन्थ अजस्रेण तेजसा दीप्यमानः ॥ ४ ॥

त्वामग्ने हरितो वावशाना गिरः सचन्ते धुनयो घृताचीः ।
पतिं कृष्टीनां रथ्यं रयीणां वैश्वानरमुषसां केतुमह्नाम् ॥ ५ ॥

त्वाम् । अग्ने । हरितः । वावशानाः । गिरः । सचन्ते । धुनयः । घृताचीः ।
पतिम् । कृष्टीनाम् । रथ्यम् । रयीणाम् । वैश्वानरम् । उषसाम् । केतुम् । अह्नाम् ॥ ५ ॥

**वेङ्कट०** त्वाम् अग्ने! दिशः कामयमानाः सेवन्ते, स्तुतयश्च, तथा हविषां कम्पयित्र्यः स्रुचश्च,

---

१-१. अदि वि° वि[2] अ[1]. २. दीप्त वि[2] ल. ३-३. त्वद्भये° अ[1]. ४. °रयत् मूको.
५-५. तथाभि° ल लभ. ६-६. वायोरन्तरिक्षं वि[2].

पतिम् प्रजानाम् नेतारम् धनानाम् वैश्वानरम् उषसाम् अह्नाम् च प्रज्ञापकम् ॥ ५ ॥

[1]इति पञ्चमाष्टके द्वितीयाध्याये सप्तमो वर्गः[1] ॥

त्वे असुर्यं१ वसवो न्यृण्वन् क्रतुं हि ते मित्रमहो जुषन्त ।
त्वं दस्यूँरोकसो अग्न आज उरु ज्योतिर्जनयन्नार्याय ॥ ६ ॥

त्वे इति । असुर्यम् । वसवः । नि । ऋण्वन् । क्रतुम् । हि । ते । मित्रऽमहः । जुषन्त ।
त्वम् । दस्यून् । ओकसः । अग्ने । आजः । उरु । ज्योतिः । जनयन् । आर्याय ॥ ६ ॥

**वेङ्कट०** त्वयि असुराणां हन्तृ बलम्[2] वसवः प्राक्षिपन् । कर्म हि ते हे मित्राणां पूजयितः![3] जुषन्त । त्वम् च तेषाम् अग्ने! दस्यून्[4] स्वात्[5] स्थानात् निरगमयः विस्तीर्णम् ज्योतिः आर्याय मनुष्याय जनयन् ॥ ६ ॥

स जायमानः परमे व्योमन् वायुर्न पाथः परि पासि सद्यः ।
त्वं भुवना जनयन्नभि क्रन्नपत्याय जातवेदो दशस्यन् ॥ ७ ॥

सः । जायमानः । परमे । विऽओमन् । वायुः । न । पाथः । परि । पासि । सद्यः ।
त्वम् । भुवना । जनयन् । अभि । क्रन् । अपत्याय । जातऽवेदः । दशस्यन् ॥ ७ ॥

**वेङ्कट०** सः प्रादुर्भवन् परमे व्योम्नि सूर्यात्मना वायुः इव क्षिप्रम् यज्ञमुखे सोमलक्षणमन्नम् पिबसि । त्वम् उदकानि जनयन् अभि क्रन्दसि पुत्रभूतायास्मै लोकाय जातवेदः! प्रयच्छन् ओषध्यादिकम् ॥ ७ ॥

तामग्ने अस्मे इषमेरयस्व वैश्वानर द्युमतीं जातवेदः ।
यया राधः पिन्वसि विश्ववार पृथु श्रवो दाशुषे मर्त्याय ॥ ८ ॥

ताम् । अग्ने । अस्मे इति । इषम् । आ । ईरयस्व । वैश्वानर । द्युऽमतीम् । जातऽवेदः ।
यया । राधः । पिन्वसि । विश्वऽवार । पृथु । श्रवः । दाशुषे । मर्त्याय ॥ ८ ॥

**वेङ्कट०** ताम् अग्ने! अस्मभ्यं वृष्टिम् आभिमुख्येन गमय वैश्वानर! विद्युद्युक्ताम्[6] जातवेदः!, यया वृष्ट्या क्षरसि धनं हे विश्ववार! पृथु च अन्नं प्रयच्छते मर्त्याय ॥ ८ ॥

तं नो अग्ने मघवद्भ्यः पुरुक्षुं रयिं नि वाजं श्रुत्यं युवस्व ।
वैश्वानर महि नः शर्म यच्छ रुद्रेभिरग्ने वसुभिः सजोषाः ॥ ९ ॥

तम् । नः । अग्ने । मघवत्ऽभ्यः । पुरुऽक्षुम् । रयिम् । नि । वाजम् । श्रुत्यम् । युवस्व ।
वैश्वानर । महि । नः । शर्म । यच्छ । रुद्रेभिः । अग्ने । वसुऽभिः । सऽजोषाः ॥ ९ ॥

---

१-१. नास्ति मूको. २. वर्णं मूको. ३. °यिषत मूको. ४. दस्युः मूको. ५. स्वात् स्वात् अ[1]. ६. विद्युक्तात् वि[1]; विद्युत्कात् अ[1]; विद्युक्ताम् ल लअ.

वेङ्कट० तम् अस्मभ्यम् अग्ने! हविष्मद्भ्यः[1] बहुषु शब्दितम् रयिम् नि युवस्व निमिश्रय, अन्नं च श्रवणीयम्। वैश्वानर![2] महत् च अस्मभ्यं[3] सुखं प्रयच्छ रुद्रैः अग्ने! वसुभिः च सङ्गतः ॥ ९ ॥

[4]इति पञ्चमाष्टके द्वितीयाध्याये अष्टमो वर्गः[4] ॥

[ ६ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः। वैश्वानरोऽग्निर्देवता। त्रिष्टुप् छन्दः[4]।

प्र सम्राजो असुरस्य प्रशस्तिं पुंसः कृष्टीनामनुमाद्यस्य।
इन्द्रस्येव प्र तवसस्कृतानि वन्दे दारुं वन्दमानो विवक्मि ॥ १ ॥

प्र। सम्ऽराजः। असुरस्य। प्रऽशस्तिम्। पुंसः। कृष्टीनाम्। अनुऽमाद्यस्य।
इन्द्रस्यऽइव। प्र। तवसः। कृतानि। वन्दे। दारुम्। वन्दमानः। विवक्मि ॥ १ ॥

वेङ्कट० प्र वन्दे प्रोच्चारयामि सर्वेषाम्[5] सम्राजः[6] प्राज्ञस्य प्रशस्तिम् वृष्णः मनुष्याणाम् अनुमोदनीयस्य, यथा इन्द्रस्य वृद्धस्य कर्माणि प्रोच्चारयन्ति तद्वत्। किञ्च एनं दरणशीलं नमस्यन् स्तुतिं ब्रवीमि ॥ १ ॥

कविं केतुं धासिं भानुमद्रेर्हिन्वन्ति शं राज्यं रोदस्योः।
पुरंदरस्य गीर्भिरा विवासेऽग्नेर्व्रतानि पूर्व्या महानि ॥ २ ॥

कविम्। केतुम्। धासिम्। भानुम्। अद्रेः। हिन्वन्ति। शम्। राज्यम्। रोदस्योः।
पुरम्ऽदरस्य। गीःऽभिः। आ। विवासे। अग्नेः। व्रतानि। पूर्व्या। महानि ॥ २ ॥

वेङ्कट० क्रान्तकर्माणं[7] प्रज्ञापकं धारयितारं दीपयितारं आदर्तुः स्तोतुः प्रीणन्ति शङ्करं [8]राजानम् रोदस्योः,[8] राजतेर्यो नामकरणः। पुरान् दारयितुः अहं च स्तुतिभिः परिचर्यां करोमि। अग्नेः हि महान्ति पूर्वकृतानि कर्माणीति ॥ २ ॥

न्यक्रतून् ग्रथिनो मृध्रवाचः पणीँरश्रद्धाँ अवृधाँ अयज्ञान्।
प्रप्र तान् दस्यूँरग्निर्विवाय पूर्वश्चकारापराँ अयज्यून् ॥ ३ ॥

नि। अक्रतून्। ग्रथिनः। मृध्रऽवाचः। पणीन्। अश्रद्धान्। अवृधान्। अयज्ञान्।
प्रऽप्र। तान्। दस्यून्। अग्निः। विवाय। पूर्वः। चकार। अपरान्। अयज्यून् ॥ ३ ॥

---

१. हविष्यन् स्यो ल लभ; °ष्मन् सो अ[1]; °ष्मन् स वि[2]. २. °नरम् मूको. ३. °स्मदीयम् अ[1]. ४-४. नास्ति मूको. ५. °र्वेसां ल. ६. संराज्ञः वि[2] ल; सा राज्ञः अ[1] लभ. ७. °णं प्रज्ञावन्तम् अ[1]. ८-८. रोदस्योः राजानम् ल लभ,

वेङ्कट० नितरां प्रगमयति अकर्मणो ग्रन्थनकामान् [1]हिंसकवाचः पणिनामकान्[1] श्रद्धारहितान् अव-र्धयितॄन्[2] हविर्भिः [3]विरहितान् अयज्ञान्[3] तान् दस्यून्। एतदेवाह—पूर्वः[4] यः सन् जघन्यान्[5] चकार अयज्यून् अग्निः इति ॥ ३ ॥

यो अ॑पा॒ची॒ने॒ तम॑सि॒ मद॑न्तीः प्राची॑श्च॒कार॒ नृत॑मः॒ शची॑भिः ।
तमीशा॑नं॒ वस्वो॑ अ॒ग्निं गृ॑णी॒षेऽना॑नतं द॒मय॑न्तं पृत॒न्यून् ॥ ४ ॥

यः । अ॒पा॒ची॒ने॑ । तम॑सि । मद॑न्तीः । प्राचीः॑ । च॒कार॑ । नृऽत॑मः । शची॑भिः ।
तम् । ईशा॑नम् । वस्वः॑ । अ॒ग्निम् । गृ॒णी॒षे॒ । अना॑नतम् । द॒मय॑न्तम् । पृ॒त॒न्यून् ॥ ४ ॥

वेङ्कट० यः अपाचिकाः(?) ॥ ४ ॥

यो दे॒ह्यो॒३॒॑ अन॑मयद् व॒धस्नै॒र्यो अ॒र्यप॑त्नीरु॒षस॑श्च॒कार॑ ।
स नि॒रुध्या॒ नहु॑षो य॒ह्वो अ॒ग्निर्विश॑श्चक्रे बलि॒हृतः॒ सहो॑भिः ॥ ५ ॥

यः । दे॒ह्यः॑ । अन॑मयत् । व॒धऽस्नैः॑ । यः । अ॒र्यऽप॑त्नीः । उ॒षसः॑ । च॒कार॑ ।
सः । नि॒ऽरुध्य॑ । नहु॑षः । य॒ह्वः । अ॒ग्निः । विशः॑ । च॒क्रे॒ । ब॒लि॒ऽहृतः॑ । सहः॑ऽभिः ॥ ५ ॥

वेङ्कट० ··· उषसः चकार। सः निरुध्य नहुषः राज्ञः अग्निः महान् प्रजाः चक्रे करप्रदायिनीः बलैः ॥ ५ ॥

यस्य॒ शर्म॒न्नुप॒ विश्वे॒ जना॑स॒ एवै॑स्त॒स्थुः सु॑म॒तिं भिक्ष॑माणाः ।
वै॒श्वा॒न॒रो वर॒मा रोद॑स्यो॒राग्निः स॑साद पि॒त्रोरु॒पस्थ॑म् ॥ ६ ॥

यस्य॑ । शर्म॑न् । उप॑ । विश्वे॑ । जना॑सः । एवैः॑ । त॒स्थुः । सु॒ऽम॒तिम् । भिक्ष॑माणाः ।
वै॒श्वा॒न॒रः । वर॑म् । आ । रोद॑स्योः । आ । अ॒ग्निः । स॒सा॒द॒ । पि॒त्रोः । उ॒प॒ऽस्थ॑म् ॥ ६ ॥

वेङ्कट० यस्य सुखनिमित्तम् उप [6]तस्थुः विश्वे[6] जनाः गमनैः [7]सुमतिम् तमेव[7] भिक्षमाणाः, सः वैश्वानरः अग्निः वरिष्ठम्[8] उपस्थम् आ सीदति द्यावापृथिव्योः पित्रोः। [9]प्रातरादित्यात्मना द्यावा-पृथिव्योर्मध्ये[9] प्राच्यां प्रादुर्भवति ॥ ६ ॥

आ दे॒वो द॑दे बु॒ध्न्या॒३॒॑ वसू॑नि वैश्वान॒र उदि॑ता॒ सूर्य॑स्य ।
आ स॑मु॒द्राद॑व॑रा॒दा पर॑स्मा॒दाग्निर्द॑दे दि॒व आ पृ॑थि॒व्याः ॥ ७ ॥

---

१-१. 'कपणवानान् श्र° वि[1]; °चः पणवानाज्ञन्धार° अ[1]; °चः पणवानान् श्र° ल; °चः पणवानान् ज्ञंधार° लभ. २. वर्धयि° वि[2] अ[1] ल; वर्षयितृभिः लभ. ३-३. हविर्भिर्विहितानयज्ञा° वि[2] अ[1] ल; पिता हितानय° लभ; अविहितयज्ञान् ल प्रस्तावः. ४. पूर्वं वि[2] ल, पूर्व अ[1] लभ. ५. सन्। जघ° ल; सज्जघ लभ; सन्जघ° वि[2]; सन्चघ° अ[1]. ६-६. 'पस्थः विश्ये मूको. ७-७. °तिमन्ता° मूको. ८. वसिष्ठम् मूको. ९-९. द्यावा-पृथिव्योर्मध्ये प्रातरादित्यात्मना अ[1].

आ । देवः । ददे । बुध्न्या । वसूनि । वैश्वानरः । उत्ऽइता । सूर्यस्य ।
आ । समुद्रात् । अवरात् । आ । परस्मात् । आ । अग्निः । ददे । दिवः । आ । पृथिव्याः ॥७॥

**वेङ्कट०** आ ददे देवः आन्तरिक्ष्याणि वसूनि अन्नानि वैश्वानरः उदये सूर्यस्य । पूर्वापरयोः समुद्रयोः मध्ये यानि वसूनि, यानि च द्यावापृथिव्योः मध्ये, तानि सर्वाणि आ दत्ते । मनुष्येषु पक्षिषु देवेषु च वर्तमानः सर्वं भक्षयतीति ॥ ७ ॥

[1]इति पञ्चमाष्टके द्वितीयाध्याये नवमो वर्गः[1] ।

[ ७ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

प्र वो देवं चित् सहसानमग्निमश्वं न वाजिनं हिषे नमोभिः ।
भवा नो दूतो अध्वरस्य विद्वान् त्मना देवेषु विविदे मितद्रुः ॥ १ ॥

प्र । वः । देवम् । चित् । सहसानम् । अग्निम् । अश्वम् । न । वाजिनम् । हिषे । नमःऽभिः ।
भव । नः । दूतः । अध्वरस्य । विद्वान् । त्मना । देवेषु । विविदे । मितऽद्रुः ॥ १ ॥

**वेङ्कट०** प्र ईरयामि युष्माकम् देवम् बलमाचरन्तम् अग्निम् अश्वम् इव बलिनम् अन्नैः । भव नः दूतः । यज्ञं जानन् स्वयमेव अग्निः देवेषु प्रयच्छति ज्ञापयते वा[2] विहिताध्वा इति ॥ १ ॥

आ याह्यग्ने पथ्या३ अनु स्वा मन्द्रो देवानां सख्यं जुषाणः ।
आ सानु शुष्मैर्नदयन् पृथिव्या जम्भेभिर्विश्वमुशधग्वनानि ॥ २ ॥

आ । याहि । अग्ने । पथ्याः । अनु । स्वाः । मन्द्रः । देवानाम् । सख्यम् । जुषाणः ।
आ । सानु । शुष्मैः । नदयन् । पृथिव्याः । जम्भेभिः । विश्वम् । उशधक् । वनानि ॥ २ ॥

**वेङ्कट०** आ गच्छ अग्ने! [3]मार्गैः आत्मीयैः एव[3] मन्द्रः देवानाम् सख्यम् सेवमानः । आ याहि पृथिव्याः समुच्छ्रितं वनं तेजोभिः शब्दयन्[4] दंष्ट्राभिः विश्वम्[5] कात्स्न्र्येन यथाकामं दहन् काष्ठानीति ॥ २ ॥

प्राचीनो यज्ञः सुधितं हि बर्हिः प्रीणीते अग्निरीळितो न होता ।
आ मातरा विश्ववारे हुवानो यतो यविष्ठ जज्ञिषे सुशेवः ॥ ३ ॥

प्राचीनः । यज्ञः । सुऽधितम् । हि । बर्हिः । प्रीणीते । अग्निः । ईळितः । न । होता ।
आ । मातरा । विश्ववारे इति विश्वऽवारे । हुवानः । यतः । यविष्ठ । जज्ञिषे । सुऽशेवः ॥३॥

---

१-१. नास्ति मूको. २. वाह अ[1]. ३-३. मातः जरात्मीयैवं वि[2] अ[1]; मातर्गः आत्मीदैवं ल लभ. ४. शब्दं मूको. ५. विश्वन्नं वि[2] ल लभ; विश्वमन्तं अ[1]; विश्वंवनं पक्षे ल प्रस्तावः.

वेङ्कट० प्राङ्मुखः यज्ञः प्रवृत्तः। सुनिहितं च बर्हिः। आ प्रीणाति च अग्निः[१] प्रशस्तः इव होता। द्यावापृथिव्यौ विश्वैर्वरणीये। हूयमानः [२]यतः त्वम्[२] युवतम ! जायसे सुसुखः[३] ॥ ३ ॥

सद्यो अध्वरे रथिरं जनन्त मानुषासो विचेतसो य एषाम्।
विशामधायि विश्पतिर्दुरोणे३ऽग्निर्मन्द्रो मधुवचा ऋतावा ॥ ४ ॥

सद्यः। अध्वरे। रथिरम्। जनन्त। मानुषासः। विऽचेतसः। यः। एषाम्।
विशाम्। अधायि। विश्पतिः। दुरोणे। अग्निः। मन्द्रः। मधुऽवचाः। ऋतऽवा ॥ ४ ॥

वेङ्कट० सद्यः यज्ञे रथवन्तं जनयन्ति[४] मानुषासः[५] विशिष्टप्रज्ञाः[६]। यः एषाम् मनुष्याणां नेता भवति, स विशांपतिः विशाम् गृहे निहितः अग्निः मोदनः मधुवचनः यज्ञवान् ॥ ४ ॥

असादि वृतो वह्निराजगन्वानग्निर्ब्रह्मा नृषदने विधर्ता।
द्यौश्च यं पृथिवी वावृधाते आ यं होता यजति विश्ववारम् ॥ ५ ॥

असादि। वृतः। वह्निः। आऽजगन्वान्। अग्निः। ब्रह्मा। नृऽसदने। विऽधर्ता।
द्यौः। च। यम्। पृथिवी। ववृधाते इति। आ। यम्। होता। यजति। विश्वऽवारम् ॥ ५ ॥

वेङ्कट० स्थापितः वृतः होतृत्वेन वोढा दूरादागतः अग्निः महान् गृहे विधारकः। यम् द्यावा-पृथिव्यौ[७] वर्धयतः, यम् च होता आ यजति मानुषः विश्वैर्वरणीयम् ॥ ५ ॥

एते द्युम्नेभिर्विश्वमातिरन्त मन्त्रं ये वारं नर्या अतक्षन्।
प्र ये विशस्तिरन्त श्रोषमाणा आ ये मे अस्य दीधयन्नृतस्य ॥ ६ ॥

एते। द्युम्नेभिः। विश्वम्। आ। अतिरन्त। मन्त्रम्। ये। वा। अरम्। नर्याः। अतक्षन्।
प्र। ये। विशः। तिरन्त। श्रोषमाणाः। आ। ये। मे। अस्य। दीधयन्। ऋतस्य ॥ ६ ॥

वेङ्कट० एते यशोभिः सर्वम् आ छादयन्ति, ये वा अग्नये वैश्वानराय पर्याप्तं मन्त्रं कुर्वन्ति नृहिताः, ये वा वर्धयन्ति अन्नार्थिनीः प्रजाः वैश्वानराधिष्ठिताः[८] तदुक्तम् [९]आज्ञावचनं[९] शृण्वानाः[१०], ये वा मदीयम् अमुं वैश्वानरम् [११]आ अदीपयन्[११] प्राज्वलयन्निति ॥ ६ ॥

नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनाम्।
इषं स्तोतृभ्यो मघवद्भ्य आनड् यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

१. अग्निम् मूको. २-२. ययोस्त्वम् वि[२] अ[१] ल; योस्त्वम् लअ. ३. °सुखम् मूको. ४. °यति मूको. ५. मानुसः लअ; मानुषाः ल प्रस्तावः. ६. अविशि° वि[२]; अपिशि° अ[१] लअ. ७. °थिव्योः मूको. ८. °धितिष्ठि° अ[१]. ९-९. °क्तयाज्ञा (°ज्ञा अ[१]) व° मूको. १०. °नः मूको. ११. आदीसय° वि[२]; आदीप्तय° अ[१]; आदीयत् लअ; आसीदय° ल.

नु । त्वाम् । अग्ने । ईमहे । वसिष्ठाः । ईशानम् । सूनो इति । सहसः । वसूनाम् ।
इषम् । स्तोतृऽभ्यः । मघवत्ऽभ्यः । आनट् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥७॥

**वेङ्कट०** क्षिप्रम् त्वाम् अग्ने! याचामहे वसिष्ठाः[1] ईशानम् हे सहसः सूनो! धनानाम्। तथा सति अन्नम् स्तोतृभ्यः हविष्मद्भ्यः प्रापयेति[2] ॥ ७ ॥

[3]इति पञ्चमाष्टके द्वितीयाध्याये दशमो वर्गः[3] ॥

## [ ८ ]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[3] ।

**इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।**
**नरो हव्येभिरीळते सबाध आग्निरग्र उषसामशोचि ॥ १ ॥**

इन्धे । राजा । सम् । अर्यः । नमःऽभिः । यस्य । प्रतीकम् । आऽहुतम् । घृतेन ।
नरः । हव्येभिः । ईळते । सऽबाधः । आ । अग्निः । अग्रे । उषसाम् । अशोचि ॥ १ ॥

**वेङ्कट०** सम् इन्धे तम् राजा ईश्वरः[4] हविर्भिः[5], यस्य मुखम् आहुतम् घृतेन भवति। तं मनुष्याः हविर्भिः[6] स्तुवन्ति बाधासहिताः[7] । आ दीप्यते यः [8]सोऽयम् अग्निः[8] उषसाम् अग्रे इति ॥ १ ॥

**अयमु ष्य सुमहाँ अवेदि होता मन्द्रो मनुषो यह्वो अग्निः ।**
**वि भा अकः ससृजानः पृथिव्यां कृष्णपविरोषधीभिर्ववक्षे ॥ २ ॥**

अयम् । ऊँ इति । स्यः । सुऽमहान् । अवेदि । होता । मन्द्रः । मनुषः । यह्वः । अग्निः ।
वि । भाः । अकरित्यकः । ससृजानः । पृथिव्याम् । कृष्णऽपविः । ओषधीभिः । ववक्षे ॥ २ ॥

**वेङ्कट०** अयम् एव सः सुमहान् ज्ञायते होता मोदमानः मनुष्यस्य महान् अग्निः । वि करोति तेजांसि । पृथिव्याम् अरण्योः सृज्यमानः[9] कृष्णमार्गः ओषधिभिः[10] निः[11] उह्यते[12] ॥ २ ॥

**कया नो अग्ने वि वसः सुवृक्तिं कामु स्वधामृणवः शस्यमानः ।**
**कदा भवेम पतयः सुदत्र रायो वन्तारो दुष्टरस्य साधोः ॥ ३ ॥**

कया । नः । अग्ने । वि । वसः । सुऽवृक्तिम् । काम् । ऊँ इति । स्वधाम् । ऋणवः । शस्यमानः ।
कदा । भवेम । पतयः । सुऽदत्र । रायः । वन्तारः । दुस्तरस्य । साधोः ॥ ३ ॥

---

१. वासिष्ठा वि[2] अ[1]. २. °येरिति ल; °येदिति लअ. ३-३. नास्ति मूको. ४. वीश्विश्व° वि[2]; विशिश्व° अ[1]; पीश्व° ल लअ. ५. हविः वि[2] अ[1]; हविहि ल लअ. ६. हविषः वि[2] अ[1]; ७. बोधा° मूको. ८-८. सोममग्निः वि[2] अ[1]; सोमाग्निः ल लअ. ९. °मान वि[2] अ[1]; °मान ल लअ. १०. ओषसि वि[2] अ[1]; ओष ओषसिभिः ल लअ. ११. नास्ति ल लअ. १२. ऊह्यते लअ.

वेङ्कट० कया स्वधया अस्माकम् अग्ने! त्वं स्तुतिं प्रतिवससि। 'किम् अन्नम्' स्तूयमानः त्वम् आत्मानं प्रापयसि। कदा वयम् भवेम स्वामिनः सुखधन![2] रायः सम्भक्तारः शत्रुभिः तरितुम् अशक्यस्य साधयितुः[3] ॥ ३ ॥

प्रप्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद् भाः ।
अभि यः पूरुं पृतनासु तस्थौ द्युतानो दैव्यो अतिथिः शुशोच ॥ ४ ॥

प्रऽप्र । अयम् । अग्निः । भरतस्य । शृण्वे । वि । यत् । सूर्यः । न । रोचते । बृहत् । भाः ।
अभि । यः । पूरुम् । पृतनासु । तस्थौ । द्युतानः । दैव्यः । अतिथिः । शुशोच ॥ ४ ॥

वेङ्कट० प्रशृणोति अयम् अग्निः मनुष्यस्य स्तुतिम्, वि[4] रोचते यदा सूर्यः इव अत्यन्तम् भासमानः[5]। 'अभि तस्थौ[6] यः[7] 'पूरुम् नामासुरं[8] सङ्ग्रामेषु, स दीप्यमानः दैव्यः अतिथिः प्रजज्वाल ॥ ४ ॥

असन्नित् त्वे आहवनानि भूरि भुवो विश्वेभिः सुमना अनीकैः ।
स्तुतश्चिदग्ने शृण्विषे गृणानः स्वयं वर्धस्व तन्वं सुजात ॥ ५ ॥

असन् । इत् । त्वे इति । आऽहवनानि । भूरि । भुवः । विश्वेभिः । सुऽमनाः । अनीकैः ।
स्तुतः । चित् । अग्ने । शृण्विषे । गृणानः । स्वयम् । वर्धस्व । तन्वम् । सुऽजात ॥ ५ ॥

वेङ्कट० भवन्ति[9] एव त्वयि हवींषि बहूनि। भव त्वं सर्वैः रश्मिभिः सुमनाः। स्तोतुः[10] अग्ने![11] शृणोषि स्तुतिं स्तूयमानः। स्वयम् वर्धय आत्मीयम् अङ्गं शोभनजनन![12] ॥ ५ ॥

इदं वचः शतसाः संसहस्रमुदग्नये जनिषीष्ट द्विबर्हाः ।
शं यत् स्तोतृभ्य आपये भवाति द्युमदमीवचातनं रक्षोहा ॥ ६ ॥

इदम् । वचः । शतऽसाः । सम्ऽसहस्रम् । उत् । अग्नये । जनिषीष्ट । द्विऽबर्हाः ।
शम् । यत् । स्तोतृऽभ्यः । आपये । भवाति । द्युऽमत् । अमीवऽचातनम् । रक्षःऽहा ॥ ६ ॥

वेङ्कट० इदम् वचः गोशतस्य[13] सम्भक्तृ तथा सहस्रधनसम्भक्तृ[14] च अग्नये उत् जनिषीष्ट द्वयोः स्थानयोः परिवृढः (तु. या ६,१७) वसिष्ठः, पृथिव्यां मनुष्यो भूत्वा वर्तते दिवि देवः। शङ्करम् यत् स्तोतृभ्यः आपये ज्ञातये पुत्रादिकाय भवति, तत् प्रयच्छति दीप्तिमत् रोगचातनम्[15] रक्षसां हन्तृ ॥ ६ ॥

नू त्वामग्न ईमहे वसिष्ठा ईशानं सूनो सहसो वसूनाम् ।
इषं स्तोतृभ्यो मघवद्भ्य आनड् यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

१-१. तिमन्न मूको. २. सुखा° मूको. ३. °यितुम् मूको. ४. नास्ति लअ. ५. इवास° अ[1] लअ. ६-६. हितव्य वि[2] अ[1]; हि तव्यौ ल लअ. ७. यम् वि[2] अ[1] ल; नास्ति लअ. ८-८. पुरुनामा° मूको. ९. भवन् वि[2] अ[1]; भवन्त ल लअ. १०. श्रोतुः वि[2]; श्रोतुम् अ[1]. ११. अग्नेः ल लअ. १२. गोहन-जननम् मूको. १३. गोगत° वि[2]; योगत° अ[1]. १४. °भर्तृ वि[2] अ[1]. १५. रोगतनम् मूको.

नु । त्वाम् । अग्ने । ईमहे । वसिष्ठाः । ईशानम् । सूनो इति । सहसः । वसूनाम् ।
इषम् । स्तोतृऽभ्यः । मघवत्ऽभ्यः । आनट् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

वेङ्कट० ऋ ७,७,७ द्र. ॥ ७ ॥

[1]इति पञ्चमाष्टके द्वितीयाध्याये एकादशो वर्गः[1] ॥

[ ९ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

अबोधि जार उषसामुपस्थाद्धोता मन्द्रः कवितमः पावकः ।
दधाति केतुमुभयस्य जन्तोर्हव्या देवेषु द्रविणं सुकृत्सु ॥ १ ॥

अबोधि । जारः । उषसाम् । उपऽस्थात् । होता । मन्द्रः । कविऽतमः । पावकः ।
दधाति । केतुम् । उभयस्य । जन्तोः । हव्या । देवेषु । द्रविणम् । सुकृत्ऽसु ॥ १ ॥

वेङ्कट० प्रबुद्धः उषसः जारः उषसाम् उत्सङ्गात् होता मन्द्रः कवितमः[2] पावकः। स करोति प्रज्ञानम् दैव्यस्य च मानुषस्य च जन्तोः[3], हव्यानि च देवेषु करोति, धनं च यजमानेषु ॥ १ ॥

स सुक्रतुर्यो वि दुरः पणीनां पुनानो अर्कं पुरुभोजसं नः ।
होता मन्द्रो विशां दमूनास्तिरस्तमो ददृशे राम्याणाम् ॥ २ ॥

सः । सुऽक्रतुः । यः । वि । दुरः । पणीनाम् । पुनानः । अर्कम् । पुरुऽभोजसम् । नः ।
होता । मन्द्रः । विशाम् । दमूनाः । तिरः । तमः । ददृशे । राम्याणाम् ॥ २ ॥

वेङ्कट० सः सुप्रज्ञः, यः वि श्लथयति द्वाराणि पणीनाम् क्षरन्[4] प्रयच्छन्नस्मभ्यम् अर्कम्[5] बहुभक्षणम्[5]। होता मोदनः मनुष्याणाम् दममनाः[7] तिरः कुर्वन् तमांसि दृश्यते रात्रीणाम् ॥ २ ॥

अमूरः कविरदितिर्विवस्वान्त्सुसंसन्मित्रो अतिथिः शिवो नः ।
चित्रभानुरुषसां भात्यग्रेऽपां गर्भः प्रस्व१ आ विवेश ॥ ३ ॥

अमूरः । कविः । अदितिः । विवस्वान् । सुऽसंसत् । मित्रः । अतिथिः । शिवः । नः ।
चित्रऽभानुः । उषसाम् । भाति । अग्रे । अपाम् । गर्भः । प्रऽस्वः । आ । विवेश ॥ ३ ॥

वेङ्कट० अमूढः कविः अदीनः परिचरणवान् शोभनसदस्कः[8] मित्रः अतिथिः शिवः नः चित्रदीप्तिः उषसाम् अग्रे विभाति अपाम् गर्भः ओषधीः आ विवेश ॥ ३ ॥

---

१-१. नास्ति मूको. २. कपित अ[1] लअ. ३. °न्तोः हि अ[1]. ४. क्षीरम् ल प्रस्तावः. ५. नास्ति मूको. ६. बाहुरक्ष° वि[2]; बहुरक्ष° अ[1] ल लअ. ७. दमूनाः वि[2]. ८. °भजनसद° अ[1] लअ.

ई॒ळेन्यो॑ वो॒ मनु॑षो यु॒गेषु॑ समन॒गा अ॑शुचज्जा॒तवे॑दाः ।
सु॒सं॒दृशा॑ भा॒नुना॒ यो वि॒भाति॒ प्रति॒ गावः॑ समिधा॒नं बु॒धन्त ॥ ४ ॥

ई॒ळेन्यः॑ । व॒ः । मनु॑षः । यु॒गेषु॑ । स॒म॒न॒ऽगाः । अ॒शु॒च॒त् । जा॒तऽवे॑दाः ।
सु॒ऽसं॒दृशा॑ । भा॒नुना॑ । यः । वि॒ऽभाति॑ । प्रति॑ । गावः॑ । स॒म्ऽइ॒धा॒नम् । बु॒ध॒न्त ॥ ४ ॥

**वेङ्कट०** ईडयः[1] युष्माकं मनुष्यस्य यजमानस्य यागदिवसेषु[2] सेनाग्रे गन्ता प्राज्वलत्[3] जातप्रज्ञः । शोभनसन्दर्शनेन तेजसा यः विभाति, तं स्तुतिवाचः समिध्यमानम् प्रति बोधयन्तु ॥ ४ ॥

अग्ने॑ या॒हि दू॒त्यं१॒॑ मा रि॑षण्यो दे॒वाँ अच्छा॑ ब्रह्म॒कृता॑ ग॒णेन॑ ।
सर॑स्वतीं म॒रुतो॑ अ॒श्विना॒पो यक्षि॑ दे॒वान् र॑त्न॒धेया॑य॒ विश्वा॑न् ॥ ५ ॥

अग्ने॑ । या॒हि । दू॒त्य॑म् । मा । रि॒ष॒ण्यः॒ । दे॒वान् । अच्छ॑ । ब्र॒ह्म॒ऽकृता॑ । ग॒णेन॑ ।
सर॑स्वतीम् । म॒रुतः॑ । अ॒श्विना॑ । अ॒पः । यक्षि॑ । दे॒वान् । र॒त्न॒ऽधेया॑य । विश्वा॑न् ॥ ५ ॥

**वेङ्कट०** अग्ने! याहि दूत्यम्, मा चाध्वनि विनष्टो भूः, देवान् प्रति स्तोत्रकृता सङ्घेन सह ऋषीणाम् । सरस्वतीम् मरुतः अश्विनौ अपः यज रत्नानां दानाय सर्वान् देवान् इति[4] ॥ ५ ॥

त्वाम॑ग्ने समिधा॒नो वसि॑ष्ठो॒ जरू॑थं ह॒न् यक्षि॑ रा॒ये पुर॑न्धिम् ।
पु॒रु॒णी॒था जा॑तवेदो जरस्व यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ६ ॥

त्वाम् । अ॒ग्ने॒ । स॒म्ऽइ॒धा॒नः । वसि॑ष्ठः । जरू॑थम् । ह॒न् । यक्षि॑ । रा॒ये । पुर॑म्ऽधिम् ।
पु॒रु॒ऽनी॒था । जा॒त॒ऽवे॒दः॒ । ज॒र॒स्व॒ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ॥ ६ ॥

**वेङ्कट०** त्वाम् अग्ने! प्रज्वलयन् वसिष्ठः जरूथम्[5] रक्षः हन्तु । यज त्वं धनाय बहुप्रज्ञं देवगणम् । बहुनयनानि रक्षांसि जातवेदः! जारय ॥ ६ ॥

[6]इति पञ्चमाष्टके द्वितीयाध्याये द्वादशो वर्गः[6] ॥

## [ १० ]

[6]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[6] ।

उ॒षो न जा॒रः पृ॒थु पाजो॑ अश्रे॒द् दवि॑द्युत॒द् दीद्य॒च्छोशु॑चानः ।
वृषा॒ हरिः॒ शुचि॒रा भा॑ति भा॒सा धियो॑ हिन्वा॒न उ॑श॒तीर॑जीगः ॥ १ ॥

---

१. ईड्ये अ[1] ल लअ; ईडे वि[1]. २. यागादि॰ अ. ३. प्रज्वालं वि[2] अ[1]. ४. अति मूको, ५, तु, ऋ ७,१,७ भाष्यम्. ६-६. नास्ति मूको.

उषः । न । जारः । पृथु । पाजः । अश्रेत् । दविद्युतत् । दीद्यत् । शोशुचानः ।
वृषा । हरिः । शुचिः । आ । भाति । भासा । धियः । हिन्वानः । उशतीः । अजीगरिति ॥१॥

वेङ्कट० आदित्यः इव पृथु बलम् श्रयति द्योतमानः दीप्यमानः प्रज्वलन्[1] । वृषा हरणशीलः शुचिः आ भाति तेजसा कर्माणि प्रेरयन् । कामयमानाः प्रजाः तमसा तिरोहिताः उज्जगारेति ॥ १ ॥

स्व१र्ण वस्तोरुषसामरोचि यज्ञं तन्वाना उशिजो न मन्म ।
अग्निर्जन्मानि देव आ वि विद्वान् द्रवद् दूतो देवयावा वनिष्ठः ॥ २ ॥

स्वः । न । वस्तोः । उषसाम् । अरोचि । यज्ञम् । तन्वानाः । उशिजः । न । मन्म ।
अग्निः । जन्मानि । देवः । आ । वि । विद्वान् । द्रवत् । दूतः । देवऽयावा । वनिष्ठः ॥ २ ॥

वेङ्कट० आदित्य [2]इव अग्निः[2] [3]उषसाम् आगमने[3] अह्नि दीप्यते । यज्ञम् कुर्वन्तः ऋत्विजः इव अग्निरपि स्तोत्रम् उच्चारयति । अग्निः देवः जातानि भूतानि जानन् विविधम् आ द्रवति दूतः देवान् प्रति गन्ता दातृतमः ॥ २ ॥

अच्छा गिरो मतयो देवयन्तीरग्निं यन्ति द्रविणं भिक्षमाणाः ।
सुसंदृशं सुप्रतीकं स्वञ्चं हव्यवाहमरतिं मानुषाणाम् ॥ ३ ॥

अच्छ । गिरः । मतयः । देवऽयन्तीः । अग्निम् । यन्ति । द्रविणम् । भिक्षमाणाः ।
सुऽसंदृशम् । सुऽप्रतीकम् । सुऽअञ्चम् । हव्यऽवाहम् । अरतिम् । मानुषाणाम् ॥ ३ ॥

वेङ्कट० स्तुतयः बुद्धयः च देवानिच्छन्त्यो यष्टुम् अग्निम् प्रथमम् अच्छ यन्ति धनम् भिक्षमाणाः शोभनसन्दर्शनम् शोभनाङ्गम् शोभनगमनम् हव्यवाहम् मनुष्यान्[4] देवान् प्रति गन्तारम् ॥ ३ ॥

इन्द्रं नो अग्ने वसुभिः सजोषा रुद्रं रुद्रेभिरा वहा बृहन्तम् ।
आदित्येभिरदितिं विश्वजन्यां बृहस्पतिमृक्वभिर्विश्ववारम् ॥ ४ ॥

इन्द्रम् । नः । अग्ने । वसुऽभिः । सऽजोषाः । रुद्रम् । रुद्रेभिः । आ । वह । बृहन्तम् ।
आदित्येभिः । अदितिम् । विश्वऽजन्याम् । बृहस्पतिम् । ऋक्वऽभिः । विश्वऽवारम् ॥ ४ ॥

वेङ्कट० इन्द्रम् नः अग्ने! वसुभिः [5]सङ्गतः त्वम्[5] आ वह, तं च रुद्रम्[6] महान्तं रुद्रैः, आदित्यैश्च सह अदितिम् विश्वजनहिताम्, बृहस्पतिम् च स्तुतिमद्भिः अङ्गिरोभिः विश्वैर्वरणीयमिति ॥ ४ ॥

मन्द्रं होतारमुशिजो यविष्ठमग्निं विश ईळते अध्वरेषु ।
स हि क्षपावाँ अभवद् रयीणामतन्द्रो दूतो यजथाय देवान् ॥ ५ ॥

---

१. °लत् मूको.　२-२. वाह्नि मूको.　३-३. °सा गम° मूको.　४. मानुषाणाम् ल लअ, ५-५, °ङ्गतम् वि[2] अ[1].　६. नास्ति मूको.

मन्द्रम् । होतारम् । उशिजः । यविष्ठम् । अग्निम् । विशः । ईळते । अध्वरेषु ।
सः । हि । क्षपाऽवान् । अभवत् । रयीणाम् । अतन्द्रः । दूतः । यजथाय । देवान् ॥ ५ ॥

**वेङ्कट०** मन्द्रम् होतारम् ऋत्विजः युवतमम् अग्निम् मनुष्याः स्तुवन्ति यज्ञेषु । सः हि रात्रिमान् भवति धनानां दाता [1]अतन्द्रः दूतः[1] देवान् यष्टुम्[2] ॥ ५ ॥

[3]इति पञ्चमाष्टके द्वितीयाध्याये त्रयोदशो वर्गः[3] ॥

[ ११ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

महाँ अस्यध्वरस्य प्रकेतो न ऋते त्वदमृता मादयन्ते ।
आ विश्वेभिः सरथं याहि देवैर्न्यग्ने होता प्रथमः सदेह ॥ १ ॥

महान् । असि । अध्वरस्य । प्रऽकेतः । न । ऋते । त्वत् । अमृताः । मादयन्ते ।
आ । विश्वेभिः । सऽरथम् । याहि । देवैः । नि । अग्ने । होता । प्रथमः । सद । इह ॥ १ ॥

**वेङ्कट०** महान् त्वम् असि अध्वरस्य प्रज्ञापयिता । न ऋते त्वत्तः देवाः माद्यन्ति । आ याहि सरथम् विश्वैः देवैः । नि सीद अग्ने! होता स मुख्यः त्वं बर्हिषि अस्मिन् ॥ १ ॥

त्वामीळते अजिरं दूत्याय हविष्मन्तः सदमिन्मानुषासः ।
यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवन्ति ॥ २ ॥

त्वाम् । ईळते । अजिरम् । दूत्याय । हविष्मन्तः । सदम् । इत् । मानुषासः ।
यस्य । देवैः । आ । असदः । बर्हिः । अग्ने । अहानि । अस्मै । सुऽदिना । भवन्ति ॥ २ ॥

**वेङ्कट०** त्वाम् स्तुवन्ति गमनशीलम् दूत्याय संहृतहविष्काः सदा एव[4] मनुष्याः । यस्य त्वं यजमानस्य बर्हिः [5]देवैः सह आ असदः[5], अहानि अस्मै शोभनाहानि भवन्ति ॥ २ ॥

त्रिश्चिदक्तोः प्र चिकितुर्वसूनि त्वे अन्तर्दाशुषे मर्त्याय ।
मनुष्वदग्न इह यक्षि देवान् भवा नो दूतो अभिशस्तिपावा ॥ ३ ॥

त्रिः । चित् । अक्तोः । प्र । चिकितुः । वसूनि । त्वे इति । अन्तः । दाशुषे । मर्त्याय ।
मनुष्वत् । अग्ने । इह । यक्षि । देवान् । भव । नः । दूतः । अभिशस्तिऽपावा ॥ ३ ॥

**वेङ्कट०** त्रिः चित् अह्नः[6] प्र वेदयन्ति हवींषि सवनेषु त्वयि[7] अन्तः[8] [9]यजमानाय ऋत्विजे[9] प्रयच्छते ।

---

१-१. नास्ति वि[२] अ[१]; द्रः ऽतो ल लअ. २. नास्ति वि[२] अ[१]; युष्णु ल लअ. ३-३. नास्ति मूको. ४. इव मूको. ५-५. देवारसभासदः वि[२]. ६. अन्न वि[२] अ[१]; अन्नः ल लअ. ७. यदि वि[२]; ययि अ[१]. ८. नास्ति मूको. ९-९. 'मानर्वि॰ वि[२] अ[१].

मनोरिव अग्ने![1] इह अस्मदीये यज्ञे[2] यज देवान् । भव नः दूतः अभिशस्तिभ्यो[3] रक्षिता ॥ ३ ॥

अग्निरीशे बृहतो अध्वरस्याग्निर्विश्वस्य हविषः कृतस्य ।
क्रतुं ह्यस्य वसवो जुषन्ताथा देवा दधिरे हव्यवाहम् ॥ ४ ॥

अग्निः । ईशे । बृहतः । अध्वरस्य । अग्निः । विश्वस्य । हविषः । कृतस्य ।
क्रतुम् । हि । अस्य । वसवः । जुषन्त । अथ । देवाः । दधिरे । हव्यऽवाहम् ॥ ४ ॥

**वेङ्कट०** अग्निः ईशे महतः यज्ञस्य । अग्निः विश्वस्य हविषः सम्पादितस्य । प्रज्ञानम् हि अस्य वसवः सेवन्ते । अथ एनम् देवाः कुर्वन्ति हविषां वोढारम्[4] ॥ ४ ॥

आग्ने वह हविरद्याय देवानिन्द्रज्येष्ठास इह मादयन्ताम् ।
इमं यज्ञं दिवि देवेषु धेहि यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

आ । अग्ने । वह । हविःऽअद्याय । देवान् । इन्द्रऽज्येष्ठासः । इह । मादयन्ताम् ।
इमम् । यज्ञम् । दिवि । देवेषु । धेहि । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** निगदसिद्धेति ॥ ५ ॥

[5]इति पञ्चमाष्टके द्वितीयाध्याये चतुर्दशो वर्गः[5] ॥

[ १२ ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[5] ।

अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ १ ॥

अगन्म । महा । नमसा । यविष्ठम् । यः । दीदाय । सम्ऽइद्धः । स्वे । दुरोणे ।
चित्रऽभानुम् । रोदसी इति । अन्तः । उर्वी इति । सुऽआहुतम् । विश्वतः । प्रत्यञ्चम् ॥ १ ॥

**वेङ्कट०** गच्छामः महता नमस्कारेण युवतमम्, यः दीप्यते काष्ठैः समिध्यमानः आहवनीये, चित्रभानुम् द्यावापृथिव्योः विस्तीर्णयोः अन्तरे वर्तमानम्[6] स्वाहुतम् सर्वत एव अभिमुखम् । समिद्धो ह्यग्निः सर्वतः दीप्तः भवति भयावर्जितः[7] (?) ॥ १ ॥

स मह्ना विश्वा दुरितानि साह्वानग्निः ष्टवे दम आ जातवेदाः ।
स नो रक्षिषद् दुरितादवद्यादस्मान् गृणत उत नो मघोनः ॥ २ ॥

---

१. अह्नः मूको. २. नास्ति वि[१] अ[१]. ३. रितम्नां वि[१]; °स्तीर्म्नां अ[१]; °स्तीनां ल लभ. ४. पोतारं वि[१] ल; पोत्वारं अ[१]; पोक्तारं लभ. ५-५. नास्ति मूको. ६. °मानः मूको. ७. मायावर्जितः वि[१] अ[१].

सः । मह्ना । विश्वा । दुःऽइतानि । सहान् । अग्निः । स्तवे । दमे । आ । जातऽवेदाः ।
सः । नः । रक्षिषत् । दुःऽइतात् । अवद्यात् । अस्मान् । गृणतः । उत । नः । मघोनः ॥ २ ॥

**वेङ्कट०** सः महत्त्वेन विश्वानि दुरितानि सहमानः अग्निः स्तूयते यज्ञे जातप्रज्ञः। सः अस्मान् रक्षतु दुरितात् अवद्यात् च निन्दितुः अस्मान्[1] स्तुवतः, अपि च अस्मान् हविष्मत इति ॥ २ ॥

त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

त्वम् । वरुणः । उत । मित्रः । अग्ने । त्वाम् । वर्धन्ति । मतिऽभिः । वसिष्ठाः ।
त्वे इति । वसु । सुऽसननानि । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥

**वेङ्कट०** त्वम् अग्ने! वरुणः अपि च मित्रः भवसि। त्वाम् वर्धयन्ति स्तुतिभिः वसिष्ठाः । त्वयि स्थितानि धनानि सुदानानि[2] सन्तु वसिष्ठेष्विति[3] ॥ ३ ॥

[4]इति पञ्चमाष्टके द्वितीयाध्याये पञ्चदशो वर्गः[4] ॥

## [ १३ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । वैश्वानरोऽग्निर्देवता । त्रिष्टुप् छन्दः[4] ।

प्राग्नये विश्वशुचे धियंधेऽसुरघ्ने मन्म धीतिं भरध्वम् ।
भरे हविर्न बर्हिषि प्रीणानो वैश्वानराय यतये मतीनाम् ॥ १ ॥

प्र । अग्नये । विश्वऽशुचे । धियम्ऽधे । असुरऽघ्ने । मन्म । धीतिम् । भरध्वम् ।
भरे । हविः । न । बर्हिषि । प्रीणानः । वैश्वानराय । यतये । मतीनाम् ॥ १ ॥

**वेङ्कट०** प्र भरध्वम् अग्नये[5] विश्वस्य शोचयित्रे कर्मणां धारयित्रे असुराणां हन्त्रे स्तुतिं कर्म च इत्युक्त्वा तथा करोमीति वदति—वहामि[6] हविः इदानीं यज्ञे प्रीयमाणः वैश्वानराय नियन्त्रे स्तुतीनाम् ॥ १ ॥

त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः ।
त्वं देवाँ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा ॥ २ ॥

त्वम् । अग्ने । शोचिषा । शोशुचानः । आ । रोदसी इति । अपृणाः । जायमानः ।
त्वम् । देवान् । अभिऽशस्तेः । अमुञ्चः । वैश्वानर । जातऽवेदः । महिऽत्वा ॥ २ ॥

---

१. ते देवा हि अस्मान् वि[2] ल; ते देवा हि स्यां अ[1]; ते देवा ह असां लअ. २. सधनानि वि[2] अ[1].
३. °ठेष्वित्यर्थः अ[1]. ४-४. नास्ति मूको. ५. अग्ने वि[1] अ[1] ल; अग्नेः लअ. ६. हामि अ; हामी लअ.

**वेङ्कट०** त्वम् अग्ने![1] ज्वालया ज्वलन् [2]आ पूरयसि[2] द्यावापृथिव्यौ प्रातः आदित्यात्मना जायमानः। त्वम् देवान्[3] अस्मच्छत्रूणाम्[4] असुराणाम् अभिशस्तेः च मुञ्चसि वैश्वानर! जातवेदः! महत्त्वेन ॥ २ ॥

जातो यदंग्ने भुवंना व्यख्यः पशून् न गोपा इर्यः परिंज्मा ।
वैश्वानर ब्रह्मणे विन्द गातुं यूयं पांत स्वस्तिभिः सदां नः ॥ ३ ॥

जातः । यत् । अग्ने । भुवंना । वि । अख्यः । पशून् । न । गोपाः । इर्यः । परिंऽज्मा ।
वैश्वानर । ब्रह्मणे । विन्द । गातुम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥

**वेङ्कट०** यदा त्वम् अग्ने! प्रादुर्भूतो भूतानि[5] विविधं पश्यसि[6] पशून् इव[7] गोपालः[8] स्वामी परितो[9] गच्छन्, तदानीम् वैश्वानर! स्तोत्राय चास्माकम् लभस्व गमनमिति ॥ ३ ॥

[10]इति पञ्चमाष्टके द्वितीयाध्याये षोडशो वर्गः[10] ॥

## [ १४ ]

[10]वसिष्ठो मैत्रावरुणिर्ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः, प्रथमा बृहती[10]।

समिधा जातवेंदसे देवाय देवहूंतिभिः ।
हविर्भिः शुक्रशोंचिषे नमस्विनों वयं दाशेमाग्नयें ॥ १ ॥

सम्ऽइधां । जातऽवेंदसे । देवाय । देवहूंतिऽभिः ।
हविःऽभिः । शुक्रऽशोंचिषे । नमस्विनः । वयम् । दाशेम । अग्नये ॥ १ ॥

**वेङ्कट०** समिधा देवानाम् आह्वानैश्च सह अग्निमावह सोममावहेत्याह्वानादिभिः[11] देवानाम् जातवेदसे देवाय[12] हविर्भिः दीप्ततेजसे नमस्कारयुक्ताः वयम् दानं कुर्मः अग्नये ॥ १ ॥

वयं तें अग्ने समिधां विधेम वयं दांशेम सुष्टुती यंजत्र ।
वयं घृतेनांध्वरस्य होतर्वयं देंव हविषां भद्रशोचे ॥ २ ॥

वयम् । ते । अग्ने । सम्ऽइधा । विधेम । वयम् । दाशेम । सुऽस्तुती । यजत्र ।
वयम् । घृतेनं । अध्वरस्य । होतरिति । वयम् । देव । हविषां । भद्रऽशोचे ॥ २ ॥

**वेङ्कट०** वयम् तुभ्यम् अग्ने! समिधा परिचरणं कुर्मः। वयम् हवींषि च दाशेम शोभनया स्तुत्या यष्टव्य![13], वयम् घृतेन अध्वरस्य होतः![14], वयम् देव![15] हविषा भद्रदीप्ते! ॥ २ ॥

---

१. अग्नये वि[२]. २-२. आ…सि वि[२] अ[१]; आसि लभ. ३. नास्ति वि[२] अ[१]; दे ल लभ.
४. शत्रूणाम् अ[१] लभ. ५. भूतादि मूको. ६. पश्यति मूको. ७. इव च अ[१]. ८. °ल मूको.
९. परतः मूको. १०-१०. नास्ति मूको. ११. °नादि मूको. १२. देवा मूको. १३. °ष्टव्या मूको.
१४. धातः मूको. १५. देवा लभ.

आ नो॑ दे॒वेभि॒रुप॑ दे॒वहू॑ति॒मग्ने॑ या॒हि वष॑ट्कृतिं जु॒षा॒णः ।
तुभ्यं॑ दे॒वाय॒ दाश॑तः स्याम यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ३ ॥

आ । नः॒ । दे॒वेभि॑ः । उप॑ । दे॒वऽहू॑तिम् । अग्ने॑ । या॒हि । वष॑ट्ऽकृतिम् । जु॒षा॒णः ।
तुभ्य॑म् । दे॒वाय॑ । दाश॑तः । स्या॒म॒ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । नः॒ ॥ ३ ॥

**वेङ्कट०** [1]उप आ याहि[1] देवैः सह अस्माकं यज्ञम् अग्ने! वषट्कारं सेवमानः । तुभ्यम् देवाय वयं ददतः[2] स्याम ॥ ३ ॥

[3]इति पञ्चमाष्टके द्वितीयाध्याये सप्तदशो वर्गः[3] ॥

[१५]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[3] ।

उ॒प॒सद्या॑य मी॒ळ्हुष॑ आ॒स्ये॑ जुहुता ह॒विः । यो नो॒ नेदि॑ष्ठ॒माप्य॑म् ॥ १ ॥

उ॒प॒ऽसद्या॑य । मी॒ळ्हुषे॑ । आ॒स्ये॑ । जु॒हु॒त॒ । ह॒विः । यः । नः॒ । नेदि॑ष्ठम् । आप्य॑म् ॥ १ ॥

**वेङ्कट०** समाश्रयणीयाय कामानां दोग्ध्रे[4] प्रियार्थं तस्य आस्ये जुहुत हविः । यः अस्माकम् अन्तिकतमं ज्ञातेयं भवति ॥ १ ॥

यः पञ्च॑ च॒र्षणी॑र॒भि नि॑ष॒साद॒ दमे॑दमे । क॒विर्गृ॒हप॑ति॒र्युवा॑ ॥ २ ॥

यः । पञ्च॑ । च॒र्षणीः॑ । अ॒भि । नि॒ऽस॒साद॑ । दमे॑ऽदमे । क॒विः । गृ॒हऽप॑तिः । युवा॑ ॥ २ ॥

**वेङ्कट०** यः पञ्च जनान् अभि निषसाद गृहे-गृहे कविः गृहपतिः युवा[5] ॥ २ ॥

स नो॒ वेदो॑ अ॒मात्य॑म॒ग्नी र॑क्षतु वि॒श्वतः॑ । उ॒तास्मान् पा॒त्वंह॑सः ॥ ३ ॥

सः । नः॒ । वेदः॑ । अ॒मात्य॑म् । अ॒ग्निः । र॒क्ष॒तु॒ । वि॒श्वतः॑ । उ॒त । अ॒स्मान् । पा॒तु॒ । अंह॑सः ॥३॥

**वेङ्कट०** सः अस्माकं धनं सहभवम् अग्निः रक्षतु सर्वतः । अपि च अस्मान् रक्षतु रक्षसः ॥ ३ ॥

नवं॒ नु स्तोम॑म॒ग्नये॑ दि॒वः श्ये॒नाय॑ जीजनम् । वस्वः॑ कु॒विद्व॒नाति॑ नः ॥ ४ ॥

नव॑म् । नु । स्तोम॑म् । अ॒ग्नये॑ । दि॒वः । श्ये॒नाय॑ । जी॒ज॒न॒म् । वस्वः॑ । कु॒वित् । व॒नाति॑ । नः॒ ॥४॥

**वेङ्कट०** नवम् क्षिप्रम् स्तोमम् अग्नये[6] द्युलोकस्य श्येनभूताय जनयामि । स हि अस्मभ्यं[7] बहुधनं प्रयच्छति ॥ ४ ॥

---

१-१. उभायाभिः वि[1]; उभायाहि अ[1] ल लभ. २. °त लभ. ३-३. नास्ति मूको. ४. धर्त्रे लभ. ५. युवाम् मूको. ६. अग्ने मूको. ७. अ:यै वि[1]; अत्रं अ[1].

स्पार्हा यस्य श्रियों दृशे रयिर्वीरवंतो यथा । अग्रें यज्ञस्य शोचंतः ॥ ५ ॥

स्पार्हाः । यस्यं । श्रियः । दृशे । रयिः । वीरऽवंतः । यथा । अग्रें । यज्ञस्यं । शोचंतः ॥ ५ ॥

**वेङ्कट०** स्पृहणीयाः यस्य श्रियः दर्शनाय भवन्ति, यथा[1] पुत्रवतः रयिः दर्शनीयः भवति, यज्ञस्य अग्रे आहवनीये दीप्यमानस्य ॥ ५ ॥

[2]इति पञ्चमाष्टके द्वितीयाध्याये अष्टादशो वर्गः[2] ॥

सेमां वेंतु वर्षट्कृतिमग्निर्जुंषत नो गिरंः । यजिंष्ठो हव्यवाहंनः ॥ ६ ॥

सः । इमाम् । वेतु । वर्षट्ऽकृतिम् । अग्निः । जुषत । नः । गिरंः । यजिंष्ठः । हव्यऽवाहंनः ॥६॥

**वेङ्कट०** सः इमं वषट्कारं कामयताम् अग्निः, सेवताम् गिरः च अस्माकम् यष्टृतमः[3] हविषां वोढा[4] ॥६॥

नि त्वां नक्ष्य विश्पते द्युमन्तं देव धीमहि । सुवीरंमग्न आहुत ॥ ७ ॥

नि । त्वा । नक्ष्य । विश्पते । द्युऽमन्तंम् । देव । धीमहि । सुऽवीरंम् । अग्ने । आऽहुत ॥ ७ ॥

**वेङ्कट०** नि धीमहि स्थाने त्वाम् उपगन्तव्य![5] विशांपते![6] द्युमन्तम्[7] देव![8] सुवीरम् अग्ने! आहुत![9] ॥७॥

क्षपं उस्रश्चं दीदिहि स्वग्नयस्त्वयां वयम् । सुवीरस्त्वमंस्मयुः ॥ ८ ॥

क्षपंः । उस्रः । च । दीदिहि । सुऽअग्नयंः । त्वया । वयम् । सुऽवीरंः । त्वम् । अस्मऽयुः ॥८॥

**वेङ्कट०** रात्रीः अहानि च सर्वदा त्वं दीप्यस्व । स्वग्नयः त्वया वयम् । त्वम् च सुवीरः अस्मत्कामः[10] ॥ ८ ॥

उपं त्वा सातये नरो विप्रासो यन्ति धीतिभिः । उपाक्षंरा सहस्रिणीं ॥ ९ ॥

उपं । त्वा । सातयें । नरंः । विप्रांसः । यन्ति । धीतिऽभिः । उपं । अक्षंरा । सहस्रिणीं ॥ ९ ॥

**वेङ्कट०** उप यन्ति त्वां[11] लाभाय नरः मेधाविनः[12] कर्मभिः । उप याति [13]वाक् सहस्रसङ्ख्यायुक्ता[13] ॥९॥

अग्नी रक्षांसि सेधति शुक्रशोंचिरमंर्त्यः । शुचिः पावक ईड्यंः ॥ १० ॥

अग्निः । रक्षांसि । सेधति । शुक्रऽशोंचिः । अमंर्त्यः । शुचिः । पावकः । ईड्यंः ॥ १० ॥

**वेङ्कट०** अग्निः रक्षांसि निषेधति शुक्रेति स्पष्टम् ॥ १० ॥

[2]इति पञ्चमाष्टके द्वितीयाध्याये एकोनविंशो वर्गः[2] ॥

---

१. नास्ति लअ. २-२. नास्ति मूको. ३. °तमा मूको. ४. पोथग् वि[2] अ[1]. ५. °न्तव्यात् मूको. ६. °ते मूको. ७. ममतं वि[2] ल लअ; ममन्तं अ[1]. ८. देवं वि[2] ल. ९. °तम् मूको. १०. अस्मान् कामः ल लअ. ११. त्वा मूको. १२. °विनं मूको. १३-१३. वाक्यसहस्रसंख्या° (°स्रं ख्या° लअ.) मूको.

स नो राधांस्या भरेशानः सहसो यहो। भगश्च दातु वार्यम् ॥ ११ ॥

सः। नः। राधांसि। आ। भर। ईशानः। सहसः। यहो इति। भगः। च। दातु। वार्यम् ॥

**वेङ्कट०** सः अस्मभ्यं धनानि आ हर ईशानः हे सहसः पुत्र![1]। भगः[2] च देवः त्वदनुचरः[3] प्रयच्छतु धनम् ॥ ११ ॥

त्वमग्ने वीरवद् यशो देवश्च सविता भगः। दितिश्च दाति वार्यम् ॥ १२ ॥

त्वम्। अग्ने। वीरऽवत्। यशः। देवः। च। सविता। भगः। दितिः। च। दाति। वार्यम् ॥ १२ ॥

**वेङ्कट०** त्वम् अग्ने! वीरवत् अन्नम् देवः च सविता भगः च [4]दितिः च[4] देवी धनं प्रयच्छतु ॥ १२ ॥

अग्ने रक्षा णो अंहसः प्रति ष्म देव रीषतः। तपिष्ठैरजरो दह ॥ १३ ॥

अग्ने। रक्ष। नः। अंहसः। प्रति। स्म। देव। रिषतः। तपिष्ठैः। अजरः। दह ॥ १३ ॥

**वेङ्कट०** अग्ने! रक्ष अस्मान् रक्षसः। प्रति दह देव![5] हिंसतः[6] तप्ततमैः[7] त्वत्तेजोभिः[8] अजरः[9] ॥ १३ ॥

अधा मही न आयस्यनाधृष्टो नृपीतये। पूर्भवा शतभुजिः ॥ १४ ॥

अध। मही। नः। आयसी। अनाधृष्टः। नृऽपीतये। पूः। भव। शतऽभुजिः ॥ १४ ॥

**वेङ्कट०** अध[10] महती अयसा निर्मिता अस्माकं पुरी। त्वम् भव शत्रुभिः अनाधृष्टः। त्वं नृणां[11] रक्षणार्थम् शतभुजिः [12]बहुरक्षकः इति[12] ॥ १४ ॥

त्वं नः पाह्यंहसो दोषावस्तरघायतः। दिवा नक्तमदाभ्य ॥ १५ ॥

त्वम्। नः। पाहि। अंहसः। दोषाऽवस्तः। अघऽयतः। दिवा। नक्तम्। अदाभ्य ॥ १५ ॥

**वेङ्कट०** त्वम् अस्मान् रक्ष रक्षसः दोषावस्तः![13] अघम्[14] इच्छतः। तदेवोक्तम्—दिवा नक्तम् रक्ष[15] अहिंसित! इति ॥ १५ ॥

[16]इति पञ्चमाष्टके द्वितीयाध्याये विंशो वर्गः[16] ॥

[ १६ ]

[16]वसिष्ठो मैत्रावरुणिर्ऋषिः। अग्निर्देवता। प्रगाथः छन्दः ( विषमा बृहती, समा सतोबृहती )[16]।

एना वो अग्निं नमसोर्जो नपातमा हुवे।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥ १ ॥

---

१. °त्रम् अ[1]. २. भगम् मूको. ३. त्वमनु° मूको. ४-४. नास्ति वि[2] अ[1]; अदितिश्च ल लभ. ५. देवे मूको. ६. हिंसितः वि[2]. ७. तृप्ततमै( °मैः अ[1]. ) मूको. ८. तत्तेजोहिः वि[2] अ[1]; त्वत्तेजोभिः ल लभ. ९. अहरणु मूको. १०. अह मूको. ११. नः वि[2]; नास्ति अ[1]. १२-१२. °क्षके वि[2] अ[1]; °क्षकेति ल लभ. १३. °वस्ता मूको. १४. अरम् अ[1] ल भल. १५. नास्ति वि[2]. १६-१६. नास्ति मूको.

एना । वः । अग्निम् । नमसा । ऊर्जः । नपातम् । आ । हुवे ।
प्रियम् । चेतिष्ठम् । अरतिम् । सुऽअध्वरम् । विश्वस्य । दूतम् । अमृतम् ॥ १ ॥

**वेङ्कट०** अनेन युष्माकम् अग्निम् अन्नेन अन्नस्य पुत्रम् आ ह्वयामि प्रियम् अतिशयेन ज्ञातारं गन्तारं सुयज्ञम् विश्वस्य यजमानस्य दूतम् अमृतम् ॥ १ ॥

स योजते अरुषा विश्वभोजसा स दुद्रवत् स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी वसूनां देवं राधो जनानाम् ॥ २ ॥

सः । योजते । अरुषा । विश्वऽभोजसा । सः । दुद्रवत् । सुऽआहुतः ।
सुऽब्रह्मा । यज्ञः । सुऽशमी । वसूनाम् । देवम् । राधः । जनानाम् ॥ २ ॥

**वेङ्कट०** सः युनक्ति [1]आरोचमानौ अश्वौ[1] विश्वस्य भोक्तारौ। सः अत्यन्तं द्रवति देवलोकं प्रति स्वाहुतः। सोऽयं वसूनाम् मध्ये सुस्तोत्रः यष्टव्यः सुकर्मा च देवनशीलं धनं प्रयच्छति यजमानानाम् ॥ २ ॥

उदस्य शोचिरस्थादाजुह्वानस्य मीळ्हुषः ।
उद् धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः ॥ ३ ॥

उत् । अस्य । शोचिः । अस्थात् । आऽजुह्वानस्य । मीळ्हुषः ।
उत् । धूमासः । अरुषासः । दिविऽस्पृशः । सम् । अग्निम् । इन्धते । नरः ॥ ३ ॥

**वेङ्कट०** उत् तिष्ठति अस्य दीप्तिः आहूयमानस्य सेक्तुः। [2]उत् तस्थुः[2] धूमाश्च आरोचमानाः[3] दिविस्पृशः। तम् अग्निम् सम् इन्धते मनुष्याः[4] ॥ ३ ॥

तं त्वा दूतं कृण्महे यशस्तमं देवाँ आ वीतये वह ।
विश्वा सूनो सहसो मर्तभोजना रास्व तद् यत् त्वेमहे ॥ ४ ॥

तम् । त्वा । दूतम् । कृण्महे । यशःऽतमम् । देवान् । आ । वीतये । वह ।
विश्वा । सूनो इति । सहसः । मर्तऽभोजना । रास्व । तत् । यत् । त्वा । ईमहे ॥ ४ ॥

**वेङ्कट०** तम्[5] त्वा दूतम् कुर्मः यशस्वितमम्। देवान् आ वह अशनाय। हे सहसः सूनो! विश्वानि अपि मनुष्यभोज्यानि देहि तदानीम्, यदा[6] त्वां याचामहे ॥ ४ ॥

त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे ।
त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥ ५ ॥

---

१-१. °मानाश्वो वि[2] अ[1]; °मानाविश्वो ल लभ. २-२. उक्थस्थुद् वि[2] अ[1]; उक्थस्थू ल; उक्त लभ. ३. °चमा लभ. ४. °ष्या वा अ[1]. ५. न्त लभ; त्वम् वि[2] अ[1] ल. ६. यदा अपि च अ[1].

त्वम् । अग्ने । गृहऽपतिः । त्वम् । होता । नः । अध्वरे ।
त्वम् । पोता । विश्वऽवार । प्रऽचेताः । यक्षि । वेषि । च । वार्यम् ॥ ५ ॥

**वेङ्कट०** त्वम् अग्ने! गृहपतिः, त्वम् होता च असि अस्माकं यज्ञे, त्वम् पोता च विश्वैर्वरणीय! प्रकृष्टज्ञानः । तथा सति त्वं देवान् यज, भक्षय च हविः वरणीयम् ॥ ५ ॥

कृधि रत्नं यजमानाय सुक्रतो त्वं हि रत्नधा असि ।
आ न ऋते शिशीहि विश्वमृत्विजं सुशंसो यश्च दक्षते ॥ ६ ॥

कृधि । रत्नम् । यजमानाय । सुक्रतो इति सुऽक्रतो । त्वम् । हि । रत्नऽधाः । असि ।
आ । नः । ऋते । शिशीहि । विश्वम् । ऋत्विजम् । सुऽशंसः । यः । च । दक्षते ॥ ६ ॥

**वेङ्कट०** कुरु रत्नम् यजमानाय सुकर्मन्! । त्वम् हि रत्नस्य दाता भवसि । स त्वम् आशीर्भिः तीक्ष्णीकुरु अस्माकं यज्ञे सर्वम् ऋत्विजम् शोभनशंसनः[1], यः च होता सहते, तं चेति ॥ ६ ॥

[2]इति पञ्चमाष्टके द्वितीयाध्याये एकविंशो वर्गः[2] ॥

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानामूर्वान् दयन्त गोनाम् ॥ ७ ॥

त्वे इति । अग्ने । सुऽआहुत । प्रियासः । सन्तु । सूरयः ।
यन्तारः । ये । मघऽवानः । जनानाम् । ऊर्वान् । दयन्त । गोनाम् ॥ ७ ॥

**वेङ्कट०** त्वयि अग्ने! स्वाहुत! प्रियाः सन्तु प्राज्ञाः, प्रयन्तारः[3] ये आढ्याः जनानाम् सङ्घातान्[4] प्रयच्छन्ति गवां दरिद्रेभ्यः ॥ ७ ॥

येषामिळा घृतहस्ता दुरोण आँ अपि प्राता निषीदति ।
ताँस्त्रायस्व सहस्य द्रुहो निदो यच्छा नः शर्म दीर्घश्रुत ॥ ८ ॥

येषाम् । इळा । घृतऽहस्ता । दुरोणे । आ । अपि । प्राता । निऽसीदति ।
तान् । त्रायस्व । सहस्य । द्रुहः । निदः । यच्छ । नः । शर्म । दीर्घऽश्रुत ॥ ८ ॥

**वेङ्कट०** येषाम् जनानाम् इळा[5] अन्नम् [6]घृतहस्ता गृहे[6] निषीदति, अन्नस्य प्राता प्रदाता च । दासादिः सघृतमन्नं प्रयच्छतीत्यर्थः[7] । [8]तान् त्रायस्व[8] सहसो जात! द्रोग्धुः निन्दितुः च, यच्छ च अस्मभ्यं सुखं दीर्घकालं श्रोतव्यम् ॥ ८ ॥

---

१. गोह° अ[1] लअ. २-२. नास्ति मूको. ३. प्रज्ञातारः अ[1]; प्रभातारः लअ. ४. °तात् अ[1] लअ. ५. नास्ति मूको. ६-६. घृते हस्ते हस्तं गृहीतं अ[1]. ७. °च्छन्तीत्य° वि[2] अ[1] लअ. ८-८. तान्त्रासयस्व मूको.

स मन्द्रया च जिह्वया वह्निरासा विदुष्टरः ।
अग्ने रयिं मघवद्भ्यो न आ वह हव्यदातिं च सूदय ॥ ९ ॥

सः । मन्द्रया । च । जिह्वया । वह्निः । आसा । विदुःऽतरः ।
अग्ने । रयिम् । मघवत्ऽभ्यः । नः । आ । वह । हव्यऽदातिम् । च । सूदय ॥ ९ ॥

वेङ्कट० सः मन्द्रया वाचा च आस्यस्थानीयया[1] ज्वालया च हविषो वोढा भवति विद्वत्तरः । अग्ने! रयिम् आढयेभ्यः अस्मभ्यम् आ वह । [2]यजमानम् च प्रेरय[2] । 'यजमानो वै हव्यदातिः' इति शतपथब्राह्मणम् ( १,४,१,२४ ) ॥ ९ ॥

ये राधांसि ददत्यश्व्या मघा कामेन श्रवसो महः ।
ताँ अंहसः पिपृहि पर्तृभिष्ट्वं शतं पूर्भिर्यविष्ठ्य ॥ १० ॥

ये । राधांसि । ददति । अश्व्या । मघा । कामेन । श्रवसः । महः ।
तान् । अंहसः । पिपृहि । पर्तृऽभिः । त्वम् । शतम् । पूःऽभिः । यविष्ठ्य ॥ १० ॥

वेङ्कट० ये अन्नानि प्रयच्छन्ति अश्वसङ्घान् धनानि च कामेन श्रवसः यशसो महतो महत् यशः कामयमानाः, तान् अंहसः पालय पालयितृभिः तेजोभिः त्वम् पुरां शतेन युवतम![3] ॥ १० ॥

देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् ।
उद् वा सिञ्चध्वमुप वा पृणध्वमादिद् वो देव ओहते ॥ ११ ॥

देवः । वः । द्रविणःऽदाः । पूर्णाम् । विवष्टि । आऽसिचम् ।
उत् । वा । सिञ्चध्वम् । उप । वा । पृणध्वम् । आत् । इत् । वः । देवः । ओहते ॥ ११ ॥

वेङ्कट० देवः युष्माकं धनस्य प्रदाता अग्निः पूर्णाम् कामयते जुहूम्[4] । तथा[5] सति द्रोणकलशात् सोमम् उत् वा सिञ्चध्वम् उप वा गृहीतं प्रयच्छत[6] । समुच्चयार्थीयौ वाशब्दौ । अनन्तरम् एव युष्मान् देवः नयति ॥ ११ ॥

तं होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥ १२ ॥

तम् । होतारम् । अध्वरस्य । प्रऽचेतसम् । वह्निम् । देवाः । अकृण्वत ।
दधाति । रत्नम् । विधते । सुऽवीर्यम् । अग्निः । जनाय । दाशुषे ॥ १२ ॥

---

१. आस्या स्थानीयेन वि[2] अ[1] लभ; आस्यास्था° ल. २-२. नास्ति मूको. ३. युवत्वम् वि[2] अ[2] लभ. ४. नास्ति वि[2] अ[2]. ५. तथापि वि[2] ल; तथासि लभ. ६. °च्छत् वि[2].

वेङ्कट० तम् ह्वातारम्[1] अध्वरस्य प्रचेतसम् वोढारम् देवाः अकुर्वन्[2] । शिष्टं स्पष्टमिति ॥ १२ ॥

[3]इति पञ्चमाष्टके द्वितीयाध्याये द्वाविंशो वर्गः[3] ॥

[ १७ ]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । द्विपदा त्रिष्टुप् छन्दः[3] ।

अग्ने भव सुषमिधा समिद्ध उत बर्हिरुर्विया वि स्तृणीताम् ॥ १ ॥

अग्ने । भव । सुऽसमिधा । सम्ऽइद्धः । उत । बर्हिः । उर्विया । वि । स्तृणीताम् ॥ १ ॥

वेङ्कट० द्वैपदमिदं सूक्तम् । अग्ने! भव शोभनया समिधा समिद्धः । [4]अपि च[4] [5]उर्विया उरु[5] [6]बर्हिः वि स्तृणातु[6] ॥ १ ॥

उत द्वार उशतीर्वि श्रयन्तामुत देवाँ उशत आ वहेह ॥ २ ॥

उत । द्वारः । उशतीः । वि । श्रयन्ताम् । उत । देवान् । उशतः । आ । वह । इह ॥ २ ॥

वेङ्कट० अपि च द्वारः देव्यः कामयमानाः विवृता भवन्तु । उत[7] देवान् कामयमानान् इह आ वह ॥ २ ॥

अग्ने वीहि हविषा यक्षि देवान्त्स्वध्वरा कृणुहि जातवेदः ॥ ३ ॥

अग्ने । वीहि । हविषा । यक्षि । देवान् । सुऽअध्वरा । कृणुहि । जातऽवेदः ॥ ३ ॥

वेङ्कट० अग्ने! गच्छ, हविषा यज च देवान् । सुयज्ञांश्च [8]कुरु तान्[8] जातवेदः! ॥ ३ ॥

स्वध्वरा करति जातवेदा यक्षद् देवाँ अमृतान् पिप्रयच्च ॥ ४ ॥

सुऽअध्वरा । करति । जातऽवेदाः । यक्षत् । देवान् । अमृतान् । पिप्रयत् । च ॥ ४ ॥

वेङ्कट० स्वध्वरान्[9] करोतु देवान् जातवेदाः, यजतु देवान् अमृतान्, प्रीणयतु च ॥ ४ ॥

वंस्व विश्वा वार्याणि प्रचेतः सत्या भवन्त्वाशिषो नो अद्य ॥ ५ ॥

वंस्व । विश्वा । वार्याणि । प्रचेत इति प्रऽचेतः । सत्याः । भवन्तु । आऽशिषः । नः । अद्य ॥५॥

वेङ्कट० देहि विश्वानि धनानि प्रचेतः! । सत्यानि भवन्तु आशासनानि अस्माकम् इदानीम् ॥ ५ ॥

त्वामु ते दधिरे हव्यवाहं देवासो अग्न ऊर्ज आ नपातम् ॥ ६ ॥

---

१. होता° अ[1] लअ. २. युंकु° वि[2]; युकु° ल लअ. ३-३. नास्ति मूको. ४-४. नास्ति वि[2] अ[1]; वाचा ल लअ. ५-५. नास्ति वि[2] अ[1]; धवयूरुद्र लअ. ६-६. नास्ति वि[2] अ[1]. ७. तत् मूको; ततः ल प्रस्तावः. ८-८. कुरुतां मूको; कुरु ल प्रस्तावः. ९. °रा अ[1] लअ.

त्वाम् । ऊँ इति । ते । दधिरे । हव्यऽवाहम् । देवासः । अग्ने । ऊर्जः । आ । नपातम् ॥ ६ ॥

**वेङ्कट०** त्वाम् एव ते कृतवन्तः हव्यवाहम् देवाः अग्ने! अन्नस्य पुत्रम् । आ-कारः पूरणः ॥ ६ ॥

ते ते देवाय दाशतः स्याम महो नो रत्ना वि दध इयानः ॥ ७ ॥

ते । ते । देवाय । दाशतः । स्याम । महः । नः । रत्ना । वि । दधः । इयानः ॥ ७ ॥

**वेङ्कट०** ते वयं तुभ्यम् देवाय हवींषि[1] ददतः[2] स्याम । महांस्त्वम् अस्मभ्यं रत्नानि वि धेहि याच्यमानः ॥ ७ ॥

[3]इति पञ्चमाष्टके द्वितीयाध्याये त्रयोविंशो वर्गः[3] ॥

[ १८ ]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता, अन्त्यानां चतसृणां सुदाः पैजवनः । त्रिष्टुप् छन्दः[3] ।

त्वे ह यत् पितरश्चिन्न इन्द्र विश्वा वामा जरितारो असन्वन् ।
त्वे गावः सुदुघास्त्वे ह्यश्वास्त्वं वसु देवयते वनिष्ठः ॥ १ ॥

त्वे इति । ह । यत् । पितरः । चित् । नः । इन्द्र । विश्वा । वामा । जरितारः । असन्वन् ।
त्वे इति । गावः । सुऽदुघाः । त्वे इति । हि । अश्वाः । त्वम् । वसु । देवऽयते । वनिष्ठः ॥१॥

**वेङ्कट०** त्वय्येव यस्मात् पितरः अपि अस्माकम् इन्द्र! विश्वानि धनानि स्तोतारः अभजन्त । ततो वयं च त्वां स्तुमः । त्वयि एव सुदुघाः गावः सन्ति, त्वयि एव अश्वाः । त्वम् वसु[4], यजमानाय अत्यन्तम् वनिष्ठः दानशीलः ॥ १ ॥

राजेव हि जनिभिः क्षेष्येवाव द्युभिरभि विदुष्कविः सन् ।
पिशा गिरो मघवन् गोभिरश्वैस्त्वायतः शिशीहि राये अस्मान् ॥ २ ॥

राजाऽइव । हि । जनिऽभिः । क्षेषि । एव । अव । द्युऽभिः । अभि । विदुः । कविः । सन् ।
पिशा । गिरः । मघऽवन् । गोभिः । अश्वैः । त्वाऽयतः । शिशीहि । राये । अस्मान् ॥ २ ॥

**वेङ्कट०** राजा इव हि जायाभिः अभ्युपगच्छसि[5] एव दीप्तिभिः विद्वान् क्रान्तः सन् । विशा प्रजया स्तुवतः गोभिः अश्वैः च हे मघवन्! त्वत्कामान् तीक्ष्णीकुरु धनार्थम् अस्मान् ॥ २ ॥

इमा उ त्वा पस्पृधानासो अत्र मन्द्रा गिरो देवयन्तीरुप स्थुः ।
अर्वाची ते पथ्या राय एतु स्याम ते सुमताविन्द्र शर्मन् ॥ ३ ॥

---

१. हविषि वि[२] अ[१]. २. ददत लअ. ३-३. नास्ति मूको. ४. सु मूको. ५. अभ्यवग° ल लअ.

इमाः । ॐ इति । त्वा । पस्पृधानासः । अत्र । मन्द्राः । गिरः । देवऽयन्तीः । उप । स्थुः ।
अर्वाची । ते । पथ्या । रायः । एतु । स्याम । ते । सुऽमतौ । इन्द्र । शर्मन् ॥ ३ ॥

**वेङ्कट०** इमाः एव त्वां स्वयमेवेतरेतरं स्पर्धमानाः अस्मिन् यज्ञे मदयन्तः[1] स्तुतयः देवं त्वां कामयमानाः उप तिष्ठन्ति। तथा सति अभिमुखी तव धनस्य प्रदात्री वाग् एतु। स्याम ते वयम् सुमतौ सुखहेतुभूतायाम् इन्द्र! ॥ ३ ॥

धेनुं न त्वा सूयवसे दुदुक्षन्नुप ब्रह्माणि ससृजे वसिष्ठः ।
त्वामिन्मे गोपतिं विश्व आहा न इन्द्रः सुमतिं गन्त्वच्छ ॥ ४ ॥

धेनुम् । न । त्वा । सुऽयवसे । दुधुक्षन् । उप । ब्रह्माणि । ससृजे । वसिष्ठः ।
त्वाम् । इत् । मे । गोऽपतिम् । विश्वः । आह । आ । नः । इन्द्रः । सुऽमतिम् । गन्तु । अच्छ ॥

**वेङ्कट०** धेनुम् इव त्वां शोभनयवसे[2] गोष्ठे दोग्धुमिच्छन् वसिष्ठः स्तोत्राणि वत्सस्थानानि उप सृजति[3]। त्वाम् एव मे गोपतिम् सर्वो जनः वदति। अथ परोक्षः — आ गच्छतु अस्माकम् इन्द्रः [4]सुष्ठु स्तुतिम् अभीति[4] ॥ ४ ॥

अर्णांसि चित् पप्रथाना सुदास इन्द्रो गाधान्यकृणोत् सुपारा ।
शर्धन्तं शिम्युमुचथस्य नव्यः शापं सिन्धूनामकृणोदशस्तीः ॥ ५ ॥

अर्णांसि । चित् । पप्रथाना । सुऽदासे । इन्द्रः । गाधानि । अकृणोत् । सुऽपारा ।
शर्धन्तम् । शिम्युम् । उचथस्य । नव्यः । शापम् । सिन्धूनाम् । अकृणोत् । अशस्तीः ॥ ५ ॥

**वेङ्कट०** उदकानि चित् प्रथमानानि सुदासे राज्ञे इन्द्रः गाधानि[5] अकृणोत् शोभनपाराणि[6]। अगाधानि[7] उदकानि गाधानि[8] कृत्वा पैजवनम्[9] गमयामासेति। वर्धमानम् शिम्युम्[10] वेद्धारं[11] बाधकम् कूलयोः[12] उचथस्य स्तोतव्यः शाप इत्युदकनाम तम् सिन्धूनाम् अकरोत् अहिंसितः ॥ ५ ॥

[13]इति पञ्चमाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः[13] ॥

पुरोळा इत् तुर्वशो यक्षुरासीद् राये मत्स्यासो निशिता अपीव ।
श्रुष्टिं चक्रुर्भृगवो द्रुह्यवश्च सखा सखायमतरद् विषूचोः ॥ ६ ॥

पुरोळाः । इत् । तुर्वशः । यक्षुः । आसीत् । राये । मत्स्यासः । निऽशिताः । अपिऽइव ।
श्रुष्टिम् । चक्रुः । भृगवः । द्रुह्यवः । च । सखा । सखायम् । अतरत् । विषूचोः ॥ ६ ॥

---

१. °यन्त्य वि[2] अ[1]. २. °नवसे अ[1] ल लभ; °नवत्से वि[2]. ३. °जन्ति मूको. ४-४. सुष्ठु स्तुम् अहीति वि[2]; तु अहीति अ[1]; सुष्मतिम् ल लभ; सुष्टुतिम् ल प्रस्तावः. ५. गोधा° मूको. ६ °नपरा° मूको. ७. अग्राथादि वि[2] लभ; अग्राधादि अ[1] ल. ८. नास्ति वि[2]. ९. चैज° मूको. १०. शिम्न्युं वि[2] ल लभ; शिम्नुं अ[1]. ११. वोद्धा° अ[1]. १२. तूल° मूको. १३-१३. नास्ति मूको.

वेङ्कट० पुरोदाता धनानाम्[1] तुर्वशः नाम राजा यक्षुः आसीत् इन्द्रप्रियार्थम् । अथ तस्मै मत्स्यदेशस्था अपि धनाय अभवन् । बलिनम् करम् प्रददुः । तथा तस्य भृगवः द्रुह्यवः च श्रुष्टिम् चक्रुः[2] कर्मसु शीघ्रम् आगमनं चक्रुः, यज्ञार्थं भृगवः शत्रुवधार्थं द्रुह्यवः । सखा इन्द्रः सखायम् तुर्वशम् अतरत् विषूचुनाम्नः शत्रोः ॥ ६ ॥

आ प॒क्थासो॑ भला॒नसो॑ भन॒न्ताऽलि॑नासो विषा॒णिनः॑ शि॒वासः॑ ।
आ योऽन॑यत् सध॒मा आर्य॑स्य ग॒व्या तृत्सु॑भ्यो अजगन् यु॒धा नॄन् ॥ ७ ॥

आ । प॒क्थासः॑ । भ॒ला॒नसः॑ । भ॒न॒न्त॒ । आ । अ॒लि॑नासः । वि॒षा॒णिनः॑ । शि॒वासः॑ ।
आ । यः । अन॑यत् । स॒ध॒ऽमाः । आर्य॑स्य । ग॒व्या । तृत्सु॑ऽभ्यः । अ॒ज॒ग॒न् । यु॒धा । नॄन् ॥ ७ ॥

वेङ्कट० आभिमुख्येन तस्येन्द्रस्य स्वभूताः शब्दमकुर्वन् पक्काः भलानसः भलाश्च अनसश्च । [3]भलः भनक्तेः, अनः अनतेः[3] गतिकर्मणः । उभयविधाः शरा भवन्ति विवृतमुखा नाराचमुखाश्चेति । त उभयेऽप्यग्निपक्का भवन्ति । शत्रुशरीरेषु एवं लीनाः शरीरं निर्भिद्य शीघ्रं गच्छन्तः विषाणिनः रुरुशृङ्गेण तद्वन्तः कल्याणाः ऋजवः । 'आलाक्ता या रुरुशीर्ष्णी' ( ऋ ६, ७५, १५ ) इति मन्त्रः । यः इन्द्रः सहमदनः आर्यस्य [4]आ अनयत्[4] तुर्वशस्य । स [5]गोसङ्घान् तृत्सुभ्यः अगमयत्[5] तुर्वशं प्रति । युद्धेन नेतुम् [6]तच्छत्रूंश्च अजयत्[6] ॥ ७ ॥

दु॒रा॒ध्यो॒३॒॑ अदि॑तिं स्रे॒वय॑न्तोऽचे॒तसो॒ वि ज॑गृभ्रे परु॑ष्णीम् ।
म॒ह्नावि॑व्यक् पृथि॒वीं पत्य॑मानः प॒शुष्क॒विर॑शय॒च्चाय॑मानः ॥ ८ ॥

दुः॒ऽआ॒ध्यः॑ । अदि॑तिम् । स्रे॒वय॑न्तः । अ॒चे॒तसः॑ । वि । ज॒गृ॒भ्रे॒ । परु॑ष्णीम् ।
म॒ह्ना । अ॒वि॒व्य॒क् । पृ॒थि॒वीम् । पत्य॑मानः । प॒शुः । क॒विः । अ॒श॒य॒त् । चाय॑मानः ॥ ८ ॥

वेङ्कट० दुर्बुद्धयः अदीनाम् परुष्णीकूलभेदनेन शोषयन्तः अज्ञानाः विविधं गृहीतवन्तः परुष्णीम् नदीम् [7]सुदासः अभिभवाय[7] चायमानस्य राज्ञः सैनिकाः[8] । महत्त्वेन सेनायाः चायमानः सर्वाम् पृथिवीम् अविव्यक्[9] व्याप्तवान् आगच्छन् । अथ युद्धे निर्जितः [10]पशुः इव अशयत् क्रान्तकर्मेति[10] ॥ ८ ॥

ई॒युरर्थं॒ न न्य॒र्थं परु॑ष्णीमा॒शुश्च॒नेद॑भिपि॒त्वं ज॑गाम ।
सु॒दास॒ इन्द्रः॑ सु॒तुकाँ॑ अ॒मित्रा॒नर॑न्धय॒न्मानु॑षे॒ वध्रि॑वाचः ॥ ९ ॥

ई॒युः । अर्थ॑म् । न । नि॒ऽअ॒र्थम् । परु॑ष्णीम् । आ॒शुः । च॒न । इत् । अ॒भि॒ऽपि॒त्वम् । ज॒गा॒म॒ ।
सु॒ऽदासे॑ । इन्द्रः॑ । सु॒ऽतुका॑न् । अ॒मित्रा॑न् । अर॑न्धयत् । मानु॑षे । वध्रि॑ऽवाचः ॥ ९ ॥

---

१. नानाम् ल लअ; ··· नानाम् वि[२] अ[१]; जनानां ल प्रस्तावः. २. चक्रुः मूको. ३-३. हलो हिनत्तेरनोनतेः वि[२] अ[१]; हलो हिनत्तेरेरनोऽनतेः ल; हलो हिनक्तेरेनतेः लअ. ४-४. नयन्यनं वि[२] अ[१]; आनयन् ल लअ. ५-५. शोसं ··· ग° वि[२] अ[१]; शोसंवान् तृत्सु° ल लअ. ६-६. त्रुटितम् वि[२] अ[१]; तच्छत्रूंश्चायत् ल, तत् सून्च्छयत् लअ. ७-७. °सोहिभ° मूको. ८. सैनिरा मूको. ९. अपि वि[२] अ[१]; अपिव्यग् ल लअ. १०-१०. परशुरिव···क्रा° वि[२] अ[१]; परशुरिव भ···यत् ल लअ.

वेङ्कट० भिन्नाम् परुष्णीम् इन्द्रः सन्दधे । तस्याः [1]तीरवासिन्यः प्रजाः[1] परुष्णीम् सार्धम् ईयुः न न्यर्थम् । अश्वः चास्य शत्रूणाम् अभिप्राप्तिम् जगाम । सुदासे इन्द्रः सुहिंसान् अमित्रान्, तुकः तुजतेर्हिंसाकर्मणः, वशमनयत्[2] मानुषे अस्मिन् लोके प्रवृद्धवाचः सुदास इति[3] ॥ ९ ॥

ई॒युर्गावो॒ न यव॑सा॒दगो॑पा य॒थाकृ॒तम॒भि मि॒त्रं चि॒तासः॑ ।
पृश्नि॑गावः॒ पृश्नि॑निप्रेषितासः श्रु॒ष्टिं च॑क्रुर्नि॒युतो॒ रन्त॑यश्च ॥ १० ॥

ई॒युः । गावः॑ । न । यव॑सात् । अगो॑पाः । य॒था॒ऽकृ॒तम् । अ॒भि । मि॒त्रम् । चि॒तासः॑ ।
पृश्नि॑ऽगावः । पृश्नि॑ऽनिप्रेषितासः । श्रु॒ष्टिम् । च॒क्रुः॒ । नि॒ऽयुतः॑ । रन्त॑यः । च॒ ॥ १० ॥

वेङ्कट० यथा गावः यवसमुद्दिश्य अरक्ष्यमाणा यथारामं गच्छन्ति, तद्वद् यथाकृतम् संविदनुरूपम् अभि अगच्छन् मित्रम् इन्द्रं प्रति चेतयमानाः । पृश्निगावः पृश्निवर्णाश्वाः पृश्निप्रसूताः आशुग्यासिं चक्रुः नियुतः रन्तयश्च इति मरुत उच्यन्ते, नियच्छन्तीति नियुतः रमयन्तीति रन्तयः । सुदासं प्रति गच्छन्तमिन्द्रं मरुतश्चाभ्यगच्छन्नित्यर्थः ॥ १० ॥

[4]इति पञ्चमाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः[4] ॥

एकं॑ च॒ यो विं॑श॒तिं च॑ श्रव॒स्या वै॑क॒र्णयो॒र्जना॒न् राजा॒ न्य॑स्तः॑ ।
द॒स्मो न सद्म॒न् नि शि॑शाति ब॒र्हिः शूरः॒ सर्ग॑मकृणो॒दिन्द्र॑ एषाम् ॥ ११ ॥

एक॑म् । च॒ । यः । विं॒श॒तिम् । च॒ । श्र॒व॒स्या । वै॒क॒र्णयोः॑ । जना॑न् । राजा॑ । नि । अ॒स्त॒रित्य॑स्तः॑ ।
द॒स्मः । न । सद्म॑न् । नि । शि॒शा॒ति॒ । ब॒र्हिः । शूरः॑ । सर्ग॑म् । अ॒कृ॒णो॒त् । इन्द्रः॑ । ए॒षा॒म् ॥ ११ ॥

वेङ्कट० एकम् च यः विंशतिम् च अन्नेच्छया वैकर्णयोः जनपदयोः जनान् अधिपतीन् राजा [5]सुदाः पैजवनः[5] [6]नि अस्तारीत्[6] । दस्मः कर्मशील इव अध्वर्युः यज्ञे नि वृश्चति बर्हिः [5]सुदाः पैजवनः[5] शत्रुम् । तदानीम् शूरः इन्द्रः[7] एषाम् संस्थानं विनाशं मारणम् अकरोत् युद्ध इति ॥ ११ ॥

अध॑ श्रु॒तं क॒वषं॑ वृ॒द्धम॒प्स्वनु॑ द्रु॒ह्युं नि वृ॑ण॒ग्वज्र॑बाहुः ।
वृ॒णा॒ना अत्र॑ स॒ख्याय॑ स॒ख्यं त्वा॒यन्तो॒ ये अम॑द॒न्ननु॑ त्वा ॥ १२ ॥

अध॑ । श्रु॒तम् । क॒वष॑म् । वृ॒द्धम् । अ॒प्ऽसु । अनु॑ । द्रु॒ह्युम् । नि । वृ॒ण॒क् । वज्र॑ऽबाहुः ।
वृ॒णा॒नाः । अत्र॑ । स॒ख्याय॑ । स॒ख्यम् । त्वा॒ऽयन्तः॑ । ये । अम॑दन् । अनु॑ । त्वा॒ ॥ १२ ॥

वेङ्कट० अनन्तरम् एव विश्रुतं कवषनामानम् अप्सु वृद्धम् अनुक्रमेण द्रुह्युम् च निवृक्णवान्[8] वज्रबाहुः[9] । अथ प्रत्यक्षः । वृणानाः[10] अत्र त्वयि[11] सख्यसिद्ध्यर्थं त्वया[12] सख्यम् त्वत्कामाः ये त्वाम्

---

१-१. °सिन्यजा वि[2] अ[1]; °सिन्यजाः ल लअ. २. पजगशमन यत् अ[1]; पशमनं यत् वि[2]; पशमनयत् ल लअ; वशमानयत् ल प्रस्तावः. ३. °ति प्राहुः अ[1]. ४-४ नास्ति मूको. ५-५. सुदा वैज° वि[2] ल लअ; सुदासो वैज° अ[1]. ६-६. न्यस्तारि मूको; न्यस्तः ल प्रस्तावः. ७. इमन्द्र मूको. ८. निवृष्ण निवृष्णन्वा° वि[2] अ[1]; निवृण° ल लअ. ९. वाबा° मूको. १०. प्राणा° मूको. ११. त्वयि मूको. १२. चया मूको.

अनु अमदन्[1] । एषां प्रीत्यर्थं सुदासः सैनिकैः स्तुतः कवषं द्रुह्युं च न्यहन् इत्यर्थः ॥ १२ ॥

वि स॒द्यो विश्वा॑ दृंहि॒तान्ये॑षा॒मिन्द्र॒: पुर॒: सह॑सा स॒प्त द॑र्दः ।
व्यान॑वस्य॒ तृत्स॑वे॒ गयं॑ भा॒ग्जेष्म॑ पू॒रुं वि॒दथे॑ मृ॒ध्रवा॑चम् ॥ १३ ॥

वि । स॒द्यः । विश्वा॑ । दृं॒हि॒तानि॑ । ए॒षा॒म् । इन्द्रः॑ । पुरः॑ । सह॑सा । स॒प्त । द॒र्द॒रि॒ति॑ दर्दः॑ ।
वि । आन॑वस्य । तृत्स॑वे । गय॑म् । भा॒क् । जेष्म॑ । पू॒रुम् । वि॒दथे॑ । मृ॒ध्रऽवा॑चम् ॥ १३ ॥

**वेङ्कट०** वि अदारयत्[2] सद्यः एव विश्वानि अपि दृंहितानि दृढानि प्राकारादीनि एषाम् सुदासः शत्रूणाम्[3] इन्द्रः पुरीश्च अन्वाजेन सप्त । वि अभजच्च अनोः[4] पुत्रस्य पुरं [5]तद्दत्त्वा तृत्सवे । तमेनं[5] स्तुवन्तो वयं जयेम पूरुम् सङ्ग्रामे परुषवाचमिति[6] ॥ १३ ॥

नि ग॒व्यवोऽन॑वो द्रु॒ह्यव॑श्च ष॒ष्टिः श॒ता सु॑षुपु॒: षट् स॒हस्रा॑ ।
ष॒ष्टिर्वी॒रासो॒ अधि॒ षड् दु॑वो॒यु विश्वेदिन्द्र॑स्य वी॒र्या॑ कृ॒तानि॑ ॥ १४ ॥

नि । ग॒व्यवः॑ । अन॑वः । द्रु॒ह्यवः॑ । च॒ । ष॒ष्टिः । श॒ता । सु॒सु॒पुः॒ । षट् । स॒हस्रा॑ ।
ष॒ष्टिः । वी॒रासः॑ । अधि॑ । षट् । दु॒वः॒ऽयु । विश्वा॑ । इत् । इन्द्र॑स्य । वी॒र्या॑ । कृ॒तानि॑ ॥ १४ ॥

**वेङ्कट०** नि सुषुपुः मृताः सुदासः गाः अपहर्तुमिच्छन्तः अनवः द्रुह्यवः च षष्टिः शता षट् सहस्राणि पुनश्च षष्टिः वीराः पुनश्च षट् । परिचरणमिच्छतः[7] सुदासः इन्द्रस्य एतानि विश्वानि कर्माणीति । दुवोयु इति षष्ठ्यन्तमिति ॥ १४ ॥

इन्द्रे॑णै॒ते तृत्स॑वो॒ वेवि॑षाणा॒ आपो॒ न सृ॒ष्टा अ॑धवन्त॒ नीची॑: ।
दु॒र्मि॒त्रास॑: प्रक॒ल॒विन्मि॒मा॑ना ज॒हुर्विश्वा॑नि॒ भोज॑ना सु॒दासे॑ ॥ १५ ॥

इन्द्रे॑ण । ए॒ते । तृत्स॑वः । वेवि॑षाणाः । आपः॑ । न । सृ॒ष्टाः । अ॒ध॒व॒न्त॒ । नीचीः॑ ।
दुः॒ऽमि॒त्रास॑ः । प्र॒क॒ल॒ऽवित् । मि॒मा॑नाः । ज॒हुः । विश्वा॑नि । भोज॑ना । सु॒ऽदासे॑ ॥ १५ ॥

**वेङ्कट०** इन्द्रेण एते तृत्सवः व्याप्नुवन्तः आपः इव गमनोद्युक्ता नीचीनाः[8] अधावन्[9] पराजिताः दुर्मित्रासः प्रकलविदः कलाश्च जानन्तो वणिजः[10] [11]परिच्छेद्यं परिच्छिन्दन्तः । तृत्सवः[11] नूनं वणिजः । ते जहुः विश्वानि अन्नानि सुदासे राज्ञे ॥ १५ ॥

[12]इति पञ्चमाष्टके द्वितीयाध्याये षड्विंशो वर्गः[12] ॥

---

१. °मदन्ति मूको. २. दार° मूको. ३. सुराः सशत्रू° लभ. ४. अनो मूको. ५-५. °त्वा···तमे° वि[2] अ[1]. ६. चरुष् वा° वि[2] अ[1] ल; चरुष्याच° लभ. ७. परिमिच्छतः अ[1]; परिमाणमिच्छन्तः वि[2]. ८. नीचि° मूको. ९. °धावत् वि[2] ल लभ; आधावत् अ[1]. १०. °जम् वि[2] अ[1]; °ज ल लभ. ११-११. परिच्छिन्नं तत्स्वस° वि[2]; °च्छिन्नं स्तृप्सपो अ[1]; °च्छिन्नन्तस्तृत्सपौ ल लभ. १२-१२. नास्ति मूको.

अर्धं वीरस्य शृतपामनिन्द्रं परा शर्धन्तं नुनुदे अभि क्षाम् ।
इन्द्रो मन्युं मन्युम्यो मिमाय भेजे पथो वर्तनिं पत्यमानः ॥ १६ ॥

अर्धम् । वीरस्य । शृतऽपाम् । अनिन्द्रम् । परा । शर्धन्तम् । नुनुदे । अभि । क्षाम् ।
इन्द्रः । मन्युम् । मन्युऽम्यः । मिमाय । भेजे । पथः । वर्तनिम् । पत्यमानः ॥ १६ ॥

वेङ्कट० भगानाम् अर्धम् वीरस्य [1]अभ्यावर्तिनः चायमानस्य[1] श्रृतस्य[2] पातारम् अयष्टव्य इन्द्र इति स्वस्मिन्नास्ये श्रृतं[3] प्रक्षिपन्तः स्ववीर्यैः अधिगुप्ता[4] जुह्वतेत्युक्तम् इन्द्रवर्जितम् परा नुनुदे शर्धन्तम् पृथिव्यां सुदासो युद्धे । तदानीम् इन्द्रः क्रोधम् मन्युना हिंसितुः चायमानस्य अबाधत । स च चायमानः पथः युद्धमार्गात् वर्तनिम् वर्तनयोग्यं परोक्षं देशम् भेजे युद्धदेशाद् अपगच्छन्निति ॥ १६ ॥

आध्रेण चित् तद्वेकं चकार सिंह्यं चित् पेत्वेना जघान ।
अव स्रक्तीर्वेश्यावृश्चदिन्द्रः प्रायच्छद् विश्वा भोजना सुदासे ॥ १७ ॥

आध्रेण । चित् । तत् । ऊँ इति । एकम् । चकार । सिंह्यम् । चित् । पेत्वेन । जघान ।
अव । स्रक्तीः । वेश्या । अवृश्चत् । इन्द्रः । प्र । अयच्छत् । विश्वा । भोजना । सुऽदासे ॥ १७ ॥

वेङ्कट० [5]तत् खलु[5] इन्द्रः दरिद्रेण धनानाम् एकम् गमनम् दानम् चकार । तथा अजेन सिंहम् अपि जघान । तथा वास्याऽवतक्षणीयाः यूपादेः स्रक्तीः[6] वेश्या अव अवृश्चत् । वेशी[7] सूची । यथैते अर्था [8]दुश्शकाः, एवं†[8] दुश्शकोऽयमर्थो यत् सुदासे शत्रूणां सर्वाण्यन्नानि इन्द्रः प्र अयच्छत् इति ॥ १७ ॥

शश्वन्तो हि शत्रवो रारधुष्टे भेदस्य चिच्छर्धतो विन्द रन्धिम् ।
मर्तॉं एनः स्तुवतो यः कृणोति तिग्मं तस्मिन् नि जहि वज्रमिन्द्र ॥ १८ ॥

शश्वन्तः । हि । शत्रवः । ररधुः । ते । भेदस्य । चित् । शर्धतः । विन्द । रन्धिम् ।
मर्तान् । एनः । स्तुवतः । यः । कृणोति । तिग्मम् । तस्मिन् । नि । जहि । वज्रम् । इन्द्र ॥ १८ ॥

वेङ्कट० बहवः हि शत्रवः तव वशीभूताः । तथा सति [9]भेदस्य चायमानस्य[9] अपि वर्धमानस्य वशम् लम्भय । [10]तमपि वशं नय[10] । मर्तान् [11]एनः त्वाम् स्तुवतः[11] यः करोति चायमानः तिग्मम् तस्मिन् नि जहि वज्रम् इन्द्र ! ॥ १८ ॥

आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत् ।
अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रुरश्व्यानि ॥ १९ ॥

---

१-१. °वर्तिः नश्वाय° मूको. २. श्रुत° मूको. ३. श्रितं वि[2] अ[1]; श्रित ल लअ. ४. °प्ता व अ[1]. ५-५. त्रुटितम् वि[2] अ[1]; तम् ल लअ. ६. स्रक्तिः वि[2] अ[1] ल; सृक्तीः लअ. ७. एशी मूको. ८-८. त्रुटितम् लअ. † एव वि[2] अ[1] ल. ९-९. °दस्याचाय° लअ. १०-१०. °विलगन्नय वि[2]; °विलशय अ[1]; °पि लशन्नय ल लअ. ११-११. एन···स्तुवन्तः वि[2]; ···स्तुवन्तः अ[1]; °स्तुवन्तः ल लअ.

आवत् । इन्द्रम् । यमुना । तृत्सवः । च । प्र । अत्र । भेदम् । सर्वऽताता । मुषायत् ।
अजासः । च । शिग्रवः । यक्षवः । च । बलिम् । शीर्षाणि । जभ्रुः । अश्व्यानि ॥ १९ ॥

**वेङ्कट०** यमुना नदी तृत्सवः च योद्धारः तृत्सून् प्रति युद्धाय अगच्छन्[1]। यमुनायां तृत्सुभिः[2] सङ्गमे इन्द्र इति। ततः प्र मुषायत्[3] यमुनायां युद्धे चायमानं जघान। तदानीम् अजासः शिग्रवः यक्षवः च जनपदनामान्येतानीति तत्र जाता इन्द्राय भेदस्य अश्वानाम् शीर्षाणि छित्त्वा बलिम् जह्रुः[4]। अग्रतः प्राक्षिपन्नश्वशिरांसीत्यर्थः ॥ १९ ॥

न त इन्द्र सुमतयो न रायः संचक्षे पूर्वा उषसो न नूत्नाः ।
देवकं चिन्मान्यमानं जघन्थाव त्मना बृहतः शम्बरं भेत् ॥ २० ॥

न । ते । इन्द्र । सुऽमतयः । न । रायः । सम्ऽचक्षे । पूर्वाः । उषसः । न । नूत्नाः ।
देवकम् । चित् । मान्यमानम् । जघन्थ । अव । त्मना । बृहतः । शम्बरम् । भेत् ॥ २० ॥

**वेङ्कट०** न ते इन्द्र! सुमतयः न च धनानि सङ्ख्यातुं शक्यन्ते। न गताः उषसः नापि नूतना[5] इत्यौपमिकम्। देवकनामानम् असुरं मन्यमानस्य पुत्रम् जघन्थ[6]। अव अभैत्सीः[7] शम्बरम् स्वयमेव बृहतः शिलोच्चयात् ॥ २० ॥

[8]इति पञ्चमाष्टके द्वितीयाध्याये सप्तविंशो वर्गः[8] ॥

प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः ।
न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥ २१ ॥

प्र । ये । गृहात् । अममदुः । त्वाऽया । पराऽशरः । शतऽयातुः । वसिष्ठः ।
न । ते । भोजस्य । सख्यम् । मृषन्त । अध । सूरिऽभ्यः । सुऽदिना । वि । उच्छान् ॥ २१ ॥

**वेङ्कट०** ये प्र अममदुः प्रकर्षेण तृप्यन्ति गार्हस्थ्याश्रमात्[9] त्वत्कामनया यस्मिन्नाश्रम[10] इज्यते[11]। ते च पराशरः शतयातुः[12] शक्तिः बहुभिर्यातुधानैः तद्वानिति वसिष्ठः च अहम्। तेषामस्माकं भोजयितुः तव सख्यम् शत्रवः न मृष्यन्ति। तथा सति स्तोतृभ्योऽस्मभ्यं सुदिनानि अहानि वि उच्छन्ति[13] ॥ २१ ॥

द्वे नप्तुर्देववतः शते गोर्द्वा रथा वधूमन्ता सुदासः ।
अर्हन्नग्ने पैजवनस्य दानं होतेव सद्म पर्येमि रेभन् ॥ २२ ॥

---

१. °च्छद् वि[1] ल लअ; °च्छति अ[1]. २. तत्स्तुहि वि[1] अ[1]. ३. °मुष्णात्यत् अ[1] लअ.
४. जगृहुः अ[1]. ५. भूत° मूको. ६. जघन्थः ल. ७. अपा° मूको. ८-८. नास्ति मूको.
९. श्रमत्वात् वि[2] अ[1]. १०. तत्का° वि[2] अ[1]. ११. °ज्यसे तौ वि[2] ल; °ज्यसे तो अ[1]; °ज्यसो ते लअ.
१२. नास्ति वि[2] अ[1]. १३. °च्छन्तयः मूको.

द्वे इति॑ । नप्तुः॑ । दे॒वऽव॑तः । श॒ते इति॑ । गोः । द्वा । रथा॑ । व॒धूऽम॑न्ता । सु॒ऽदासः॑ ।
अर्ह॑न् । अ॒ग्ने॒ । पै॒ज॒ऽव॒नस्य॑ । दान॑म् । होता॑ऽइव । सद्म॑ । परि॑ । ए॒मि॒ । रेभ॑न् ॥ २२ ॥

**वेङ्कट०** पैजवनस्य चतस्रोऽन्त्या दानस्तुतिः[1] । देववतः [2]नप्तुः पौत्रस्य[2] पैजवनस्य गवाम्[3] द्वे शते द्वौ च रथौ वधूयुक्तौ सुदासः[4] । पूजयन् अग्ने ! पैजवनस्य एवंरूपं दत्तं[5] धनम् परि गच्छामि स्तुन्वन् होता इव होतृषदनमिति[6] ॥ २२ ॥

च॒त्वारो॑ मा पैजव॒नस्य॑ दा॒नाः स्मद्दि॑ष्टयः कृश॒निनो॑ नि॒रेके॑ ।
ऋ॒ज्रासो॑ मा पृथिवि॒ष्ठाः सु॒दास॑स्तो॒कं तो॒काय॒ श्रव॑से वहन्ति ॥ २३ ॥

च॒त्वारः॑ । मा॒ । पै॒ज॒ऽव॒नस्य॑ । दाना॑ः । स्मत्ऽदि॑ष्टयः । कृ॒श॒निनः॑ । नि॒ऽरे॒के ।
ऋ॒ज्रासः॑ । मा॒ । पृ॒थि॒वि॒ऽस्थाः । सु॒ऽदासः॑ । तो॒कम् । तो॒काय॑ । श्रव॑से । व॒ह॒न्ति॒ ॥ २३ ॥

**वेङ्कट०** चत्वारः मा पैजवनस्य देयाः अश्वाः प्रशस्तधनातिसर्जनाः[7] सुवर्णालङ्कृताः गमनवेलायाम् ऋजुगामिनः[8] पृथिव्यां सुसंस्थिताः सुदासः राज्ञः पुत्रभूतं[9] पुत्रस्य अन्नार्थम् वहन्ति इति । पुनः मा इति पूरणम् ॥ २३ ॥

यस्य॒ श्रवो॑ रोद॑सी अ॒न्तरु॒र्वी शी॒र्ष्णेशी॑र्ष्णे वि॒ब॒भाजा॑ वि॒भ॒क्ता ।
स॒प्तेदिन्द्रं॒ न स्र॒वतो॑ गृणन्ति॒ नि यु॑ध्याम॒धिम॑शिशाद॒भीके॑ ॥ २४ ॥

यस्य॑ । श्रवः॑ । रोद॑सी॒ इति॑ । अ॒न्तः । उ॒र्वी इति॑ । शी॒र्ष्णेऽशी॑र्ष्णे । वि॒ऽब॒भाज॑ । वि॒ऽभ॒क्ता ।
स॒प्त । इत् । इन्द्र॑म् । न । स्र॒वतः॑ । गृ॒ण॒न्ति॒ । नि । यु॒ध्या॒म॒धिम् । अ॒शि॒शा॒त् । अ॒भीके॑ ॥ २४ ॥

**वेङ्कट०** यस्य यशः द्यावापृथिव्योः महत्योः मध्ये भवति । सर्वमन्तरिक्षमस्य यशसा व्याप्तम् । यश्च[10] शीर्ष्णेशीर्ष्णे धनं विभजति धनस्य विभक्ता । सर्वेभ्यः पुरुषेभ्यः प्रयच्छतीत्यर्थः । तं सर्वे[11] च लोकाः उदारम् इन्द्रम् इव नद्यः स्तुवन्ति । सोऽयं सङ्ग्रामे [12]युध्यामधिम् नाम[12] शत्रुम् नि अशिशात्, जघानेत्यर्थः ॥ २४ ॥

इ॒मं नरो॑ मरुतः सश्चता॒नु दिवो॑दासं॒ न पि॒तरं॑ सु॒दासः॑ ।
अ॒वि॒ष्टना॑ पैजव॒नस्य॒ केतं॑ दू॒णाशं॑ क्ष॒त्रम॒जरं॑ दुवो॒यु ॥ २५ ॥

इ॒मम् । न॒रः॒ । म॒रु॒तः॒ । स॒श्च॒त॒ । अनु॑ । दिवः॑ऽदासम् । न । पि॒तर॑म् । सु॒ऽदासः॑ ।
अ॒वि॒ष्टन॑ । पै॒ज॒ऽव॒नस्य॑ । केत॑म् । दुः॒ऽनश॑म् । क्ष॒त्रम् । अ॒जर॑म् । दु॒वः॒ऽयु ॥ २५ ॥

---

१. दाने स्तु° मूको. २-२. नप्तृपौ° वि[2] अ[1]. ३. गवा लअ. ४. °दासु मूको. ५. धत्तं वि[2] अ[1]. ६. °षद° मूको. ७. °स्तजनातमस° वि[2] ल; स्तस्तनातमस° अ[1]; °स्तधनानितिमस° लअ. ८. °मिनं मूको. ९. पुत्रं मृतं वि[2] अ[1]; पुत्रमृतं ळ लअ. १०. यशश्च वि[2] अ[1]. ११. सर्वं मूको. १२-१२. °मधिर्नां° मूको; °मधिनाम° लप्रस्तावः.

**वेङ्कट०** इमम् पैजवनं हे नेतारः मरुतः! अनु सेवध्वम् अस्य रक्षार्थम् दिवोदासम् इव सुदासः[1] पितरम्। रक्षत च पैजवनस्य गृहम् दूणाशम्[2]। अस्तु अस्य बलम् जरारहितम् परिचरणकामस्येति॥२५॥

[3]इति पञ्चमाष्टके द्वितीयाध्याये अष्टाविंशो वर्गः[3] ॥

[ १९ ]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[3]।

यस्तिग्मशृङ्गो वृषभो न भीम एकः कृष्टीश्च्यावयति प्र विश्वाः।
यः शश्वतो अदाशुषो गयस्य प्रयन्तासि सुष्वितराय वेदः ॥ १ ॥

यः। तिग्मऽशृङ्गः। वृषभः। न। भीमः। एकः। कृष्टीः। च्यवयति। प्र। विश्वाः।
यः। शश्वतः। अदाशुषः। गयस्य। प्रऽयन्ता। असि। सुस्विऽतराय। वेदः॥ १ ॥

**वेङ्कट०** यः तिग्मश्रृङ्गः वृषभः[4] इव भयानकः एकः[5] प्रजाः विश्वाः प्र च्यावयति, यः च त्वं बहोः अदाशुषः अयजमानस्य गृहस्य सम्बन्धि धनम् आहरसि, स त्वम् आहृतं तद्धनं प्रयच्छसि, अतिशयेन सोमाभिषवं कुर्वते यजमानायेति ॥ १ ॥

त्वं ह त्यदिन्द्र कुत्समावः शुश्रूषमाणस्तन्वा समर्ये।
दासं यच्छुष्णं कुयवं न्यस्मा अरन्धय आर्जुनेयाय शिक्षन् ॥ २ ॥

त्वम्। ह। त्यत्। इन्द्र। कुत्सम्। आवः। शुश्रूषमाणः। तन्वा। सऽमर्ये।
दासम्। यत्। शुष्णम्। कुयवम्। नि। अस्मै। अरन्धयः। आर्जुनेयाय। शिक्षन्॥ २ ॥

**वेङ्कट०** त्वम् खलु एतम्[6] इन्द्र! कुत्सम्[7] अरक्षः परिचर्यमाणस्त्वव पुत्रेण कुत्सेन सङ्ग्रामे। यदा[8] अस्मै कुत्साय अर्जुन्याः पुत्राय कुयवम् उपक्षयितारम् शुष्णम् च नि अरन्धयः, वशम् अनय इत्यर्थः, एतत्[9] कर्तव्यम् इति शिक्षन् इति ॥ २ ॥

त्वं धृष्णो धृषता वीतहव्यं प्रावो विश्वाभिरूतिभिः सुदासम्।
प्र पौरुकुत्सिं त्रसदस्युमावः क्षेत्रसाता वृत्रहत्येषु पूरुम् ॥ ३ ॥

त्वम्। धृष्णो इति। धृषता। वीतऽहव्यम्। प्र। आवः। विश्वाभिः। ऊतिऽभिः। सुऽदासम्।
प्र। पौरुऽकुत्सिम्। त्रसदस्युम्। आवः। क्षेत्रऽसाता। वृत्रऽहत्येषु। पूरुम्॥ ३ ॥

**वेङ्कट०** त्वम् धृष्णो! बलेन दत्तहव्यम् प्र आवः विश्वैः पालनैः[10] सुदासम्। [11]प्र आवः च[11] पुरुकुत्सपुत्रम् त्रसदस्युम्। [11]प्रावः च[11] क्षेत्रसम्भजने सङ्ग्रामेषु [12]पूरुम् च[12] राजानमिति ॥ ३ ॥

---

१. सुदास मूको. २. दूर्णा° लअ; दुणा° वि[2] अ[1]. ३-३. नास्ति मूको. ४. °भज अ[1].
५. एव वि[2] अ[1]. ६. एतत् ल लअ. ७. मरुत्स अ[1]; रुत्स लअ. ८. यद्वा वि[2]; या अ[1].
९. नास्ति मूको. १०. °यितानैः वि[2] ल लअ; °यितानैः अ[1]. ११-११. प्रापुः मूको.
१२-१२ पूरुच वि[2] अ[1]; पंच ल लअ.

त्वं नृभिर्नृमणो देववीतौ भूरीणि वृत्रा हर्यश्व हंसि ।
त्वं नि दस्युं चुमुरिं धुनिं चास्वापयो दभीतये सुहन्तु ॥ ४ ॥

त्वम् । नृऽभिः । नृऽमनः । देवऽवीतौ । भूरीणि । वृत्रा । हरिऽअश्व । हंसि ।
त्वम् । नि । दस्युम् । चुमुरिम् । धुनिम् । च । अस्वापयः । दभीतये । सुऽहन्तु ॥ ४ ॥

वेङ्कट० त्वम् मरुद्भिः हे नेतृशीलमनस्क![1] यज्ञार्थं बहूनि वृत्राणि हर्यश्व! अनाशयः[2] । [3]त्वम् नि अस्वापयः[3] उपक्षपयितारम् चुमुरिम् धुनिम् च दभीतये राज्ञे तत्प्रीत्यर्थं शोभनहननेनायुधेनेति ॥ ४ ॥

तव च्यौत्नानि वज्रहस्त तानि नव यत् पुरो नवतिं च सद्यः ।
निवेशने शततमाविवेषीरहंश्च वृत्रं नमुचिमुताहन् ॥ ५ ॥

तव । च्यौत्नानि । वज्रऽहस्त । तानि । नव । यत् । पुरः । नवतिम् । च । सद्यः ।
निऽवेशने । शतऽतमा । अविवेषीः । अहन् । च । वृत्रम् । नमुचिम् । उत । अहन् ॥ ५ ॥

वेङ्कट० तव बलानि वज्रहस्त! तानि नव[4] यत् पुरः नवतिम् च सद्यः एवाभ्रथः (?) । स त्वं शतानि पुराणां भगेषु जाग्रत्स्वन्तर्निविष्टेष्वेव व्याप्तवानसि । तदा अहिम् नमुचिम् च जघन्थेति[5] ॥ ५ ॥

[6]इति पञ्चमाष्टके द्वितीयाध्याये एकोनत्रिंशो वर्गः[6] ॥

सना ता त इन्द्र भोजनानि रातहव्याय दाशुषे सुदासे ।
वृष्णे ते हरी वृषणा युनज्मि व्यन्तु ब्रह्माणि पुरुशाक वाजम् ॥ ६ ॥

सना । ता । ते । इन्द्र । भोजनानि । रातऽहव्याय । दाशुषे । सुऽदासे ।
वृष्णे । ते । हरी इति । वृषणा । युनज्मि । व्यन्तु । ब्रह्माणि । पुरुऽशाक । वाजम् ॥ ६ ॥

वेङ्कट० सनातनानि[7] तानि इन्द्र! तव भोजनानि अन्नानि दत्तहविष्काय धनानि प्रयच्छते सुदासे अभूवन्[8] । वृष्णे तुभ्यम् हरी वर्षितारौ युनज्मि । [9]प्राप्नुवन्तु मदीयानि स्तोत्राणि[9] हे बहुसहाय! अन्नम्[10] ॥ ६ ॥

मा ते अस्यां सहसावन् परिष्टावघाय भूम हरिवः परादै ।
त्रायस्व नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम ॥ ७ ॥

---

१. °मनस्त मूको. २. नाशय मूको. ३-३. नि त्वं न्यस्वा° वि[2] अ[1]; नि त्वं यस्वा° ल लअ. ४. नप अ[1] लअ. ५. जगन्थेति वि[2] अ[1]; जगाद्धेति ल लअ; जघानेति ल प्रस्तावः. ६-६ नास्ति मूको. ७. तनानि लअ. ८. हुवन् वि[2]; भुवन् अ[1]. ९-९. प्राप्नुव ··· स्तो° वि[2] अ[1]; प्राप्नुवत्वम् ल लअ. १०. नास्ति वि[2] अ[1].

मा । ते । अस्याम् । सहसाऽवन् । परिष्टौ । अघाय । भूम । हरिऽवः । पराऽदै ।
त्रायस्व । नः । अवृकेभिः । वरूथैः । तव । प्रियासः । सूरिषु । स्याम ॥ ७ ॥

**वेङ्कट०** अस्मिन्[1] ते[2] अन्वेषणे क्रियमाणे सहसावन्! हरिवः! वयम् अघाय परादै मा[2] [3]भूम। मा अस्मान्[3] आहन्त्रे परादा इत्यर्थः। त्रायस्व अस्मान् वृकरहितैः गृहैः। तव प्रियासः वयम् स्याम स्तोतॄणां मध्ये ॥ ७ ॥

प्रियास इत् ते मघवन्नभिष्टौ नरो मदेम शरणे सखायः ।
नि तुर्वशं नि याद्वं शिशीह्यतिथिग्वाय शंस्यं करिष्यन् ॥ ८ ॥

प्रियासः । इत् । ते । मघऽवन् । अभिष्टौ । नरः । मदेम । शरणे । सखायः ।
नि । तुर्वशम् । नि । याद्वम् । शिशीहि । अतिथिऽग्वाय । शंस्यम् । करिष्यन् ॥ ८ ॥

**वेङ्कट०** प्रियासः एव ते मघवन्! अभ्येषणे[4] नेतारः माद्येम गृहे समानख्यानाः तव। नि शिशीहि याद्वम्[5] च तुर्वशम्[6] च दिवोदासाय अतिथिग्वाय शंसनीयं धनम् करिष्यन्। निशिशीहि[2] तनूकुर्विति ॥ ८ ॥

सद्यश्चिन्नु ते मघवन्नभिष्टौ नरः शंसन्त्युक्थशास उक्था ।
ये ते हवेभिर्वि पणीँरदाशन्नस्मान् वृणीष्व युज्याय तस्मै ॥ ९ ॥

सद्यः । चित् । नु । ते । मघऽवन् । अभिष्टौ । नरः । शंसन्ति । उक्थऽशासः । उक्था ।
ये । ते । हवेभिः । वि । पणीन् । अदाशन् । अस्मान् । वृणीष्व । युज्याय । तस्मै ॥ ९ ॥

**वेङ्कट०** सद्यः एव क्षिप्रं तव मघवन्! अभ्येषणार्थम्[7] [8]उक्थानां शंसितारः[8] नरः उक्थानि[9] शंसन्ति। ये तव स्तोत्रैः पणीनपि धनानि प्रदापयन्ति[10], तान् अस्मान् त्वम् वृणीष्व सख्याय[11] तस्मै त्वदीयायेति ॥ ९ ॥

एते स्तोमा नरां नृतम तुभ्यमस्मद्र्यञ्चो ददतो मघानि ।
तेषामिन्द्र वृत्रहत्ये शिवो भूः सखा च शूरोऽविता च नृणाम् ॥ १० ॥

एते । स्तोमाः । नराम् । नृऽतम । तुभ्यम् । अस्मद्र्यञ्चः । ददतः । मघानि ।
तेषाम् । इन्द्र । वृत्रऽहत्ये । शिवः । भूः । सखा । च । शूरः । अविता । च । नृणाम् ॥ १० ॥

**वेङ्कट०** नेतॄणाम् अस्माकम् एते स्तोमाः हे नेतृतम! तुभ्यम् अस्माभिः क्रियन्ते। तथा सति

---

१. नास्ति वि[2] अ[1] लअ. २. नास्ति मूको. ३-३. हूममस्मान् मूको. ४. अप्ये१° मूको. ५. याद्वं वि[2]; यधुं अ[1]; यदुं लअ. ६. °शुम् वि[2] अ[1] लअ. ७. अन्वेष° मूको. ८-८. अर्थानां शंसितारु मूको. ९. 'सितारस्था° लअ. १०. प्रापय° अ[1]. ११. संख्याय मूको.

अस्मदभिमुखा भवेयुः धनानि ददतः उदाराः। तेषाम् उदाराणाम् इन्द्र! सङ्ग्रामेषु कल्याणः भूः सखा च शूरः रक्षिता [1]च नृणाम्[1] इति ॥ १० ॥

नू इ॑न्द्र शूर॒ स्तव॑मान ऊ॒ती ब्रह्म॑जूतस्त॒न्वा॑ वावृधस्व ।
उप॑ नो॒ वाजा॑न् मिमी॒ह्युप॒ स्तीन् यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ११ ॥

नु । इ॒न्द्र॒ । शू॒र॒ । स्तव॑मानः । ऊ॒ती । ब्रह्म॑ऽजूतः । त॒न्वा॑ । व॒वृ॒ध॒स्व॒ ।
उप॑ । नः॒ । वाजा॑न् । मि॒मी॒हि॒ । उप॑ । स्तीन् । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । नः॒ ॥ ११ ॥

**वेङ्कट०** क्षिप्रम् इन्द्र! शूर! स्तूयमानः रक्षणाय स्तोत्राकृष्टः शरीरेण [2]वृद्धो भव[2], उप मिमीहि च अस्माकम् अन्नानि। उप मिमीहि च गृहानिति ॥ ११ ॥

[3]इति पञ्चमाष्टके द्वितीयाध्याये त्रिंशो वर्गः[3] ॥

व्याख्यद् द्वितीयमध्यायं पञ्चमस्याष्टकस्य सः ।
गाधिनेयकुले जातो माधवो वेङ्कटात्मजः ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने पञ्चमाष्टके द्वितीयोऽध्यायः।

—*—

इति ऋग्वेदे सभाष्ये पञ्चमाष्टके द्वितीयोऽध्यायः ॥



---

१. चतसृ॰ मूको. २-२. वृद्धा ··· त वि[2] अ[1]; वृद्धा तव ल लभ. ३-३. नास्ति मूको.

अथ तृतीयोऽध्यायः ।

वेङ्कट० 'उग्रो जज्ञे 'वीर्याये(य' इ)ति[1] व्याचिख्यासति माधवः ।
अमितेषु मितर्षीणाम् आगमे कारणं वदन्[2] ॥ १ ॥

'जातवेदसे'[3] इत्येतत् प्रसङ्गात् सूक्तमागतम् ।
कुत्समध्ये कश्यपार्षं कुत्सेन बहवः स्तुताः ॥ २ ॥

औषसो[4] द्रविणोदाश्च शुचिर्वैश्वानरस्तथा ।
जातवेदसमप्यग्निम् अथ तुष्टाव कश्यपः[5] ॥ ३ ॥

स्तुतो मरुत्वान् कुत्सेन तत इन्द्रः 'प्र मन्दिने'[6] ।
वार्षागिरैस्तत्प्रसङ्गात् 'स यो वृषे (°ष्णा'[7] इ)ति स स्तुतः ॥ ४ ॥

कुत्सस्त्रितश्च पतितौ कूपे तुष्टुवतुश्च तौ ।
तेन त्रितस्यागमनं 'चन्द्रमा अप्स्व१न्तरि(न्तः'[8] इ)ति ॥ ५ ॥

मध्ये 'गृत्समदस्यागाद् ऋषिः'[9] सोमाहुतिस्तथा ।
तत्रेदं कारणं प्राहुरग्निः सूक्तैस्त्रिभिः स्तुतः ॥ ६ ॥

जागताभ्यां त्रैष्टुभेन 'त्वमग्ने द्युभिस्त्वम्'[10] इति ।
'वाजयन्निव नू रथान्'[11] गायत्रं सूक्तमन्ततः ॥ ७ ॥

गायत्रात्प्राक्सोमाहुतिः 'हुवे वः'[12] इति दृष्टवान् ।
क्रमेण त्रीणि छन्दांसि त्रिष्टुबादीनि भार्गवः ॥ ८ ॥

अन्यस्मिन्पुनरध्याये छन्दसोऽन्यस्य[13] दर्शनम् ।
'नि होता होतृषदने'[14] इति गृत्समदोऽकरोत् ॥ ९ ॥

पुनर्गृत्समदस्यैव मध्ये कूर्मोऽभ्यगादृषिः[15] ।
'इमा गिर आदित्येभ्यः'[16] त्रीणि सूक्तानि दृष्टवान् ॥ १० ॥

---

१-१. वीर्याय ल लभ. २. पदम् वि[2] अ[1] ल. ३. ऋ १,९९,१. ४. औषधः वि[2] अ[1]; ओषधः लभ. ५. काश्यपः बि[2] अ[1] ल लभ. ६. ऋ १,१०१,१. ७. ऋ १,१००,१. ८. ऋ १,१०५,१. ९-९. °स्यागा ऋ° वि[2] अ[1]; °स्य गा° लभ. १०. ऋ २,१,१. ११. ऋ २,८,१. १२. ऋ २,४,१. १३. छान्द° ल लभ. १४. ऋ २,९,१. १५. कुर्मो° वि[2] अ[1]. १६. ऋ २, २७,१.

बहुदैवतसामान्यात्[1] सूक्तं हि बहुदैवतम् ।
'ऋतं देवाय कृण्वते'[2] तद्द्रक्ष्यत्यमित[3] ऋषिः[4] ॥ ११ ॥

विश्वामित्रो द्वादशभिः स्तुतवानग्निमादितः ।
सूक्तैस्तैरनुवाकं[5] च समाप्तं शौनकोऽब्रवीत् ॥ १२ ॥

अग्निमेव पुनश्चास्तौत् 'अग्ने सहस्व पृतनाः'[6] ।
मध्ये विरामो विस्पष्टस्तत्रान्येषां समागमः ॥ १३ ॥

मण्डलादौ 'सोमस्ये( स्य'[7] इ )ति सूक्तेऽग्निः प्रथमं स्तुतः ।
वैश्वानरीयसूक्तेन[8] ततो वैश्वानरः स्तुतः ॥ १४ ॥

उपक्रम्य पुनश्चापि तावेव क्रमशः स्तुतौ ।
ऋषीणामृषभादीनाम् अतो मध्ये समागमः ॥ १५ ॥

आग्नेयत्वाच्च सूक्तानाम् आग्नेयेषु समागमः ।
ऐन्द्रात् प्राक् स्तूयते ह्यग्निः[9] 'सोमस्ये(स्य'[10] इ)ति प्रधानतः ॥ १६ ॥

'इच्छन्ति त्वे( त्वा'[11] इ )ति द्व्यधिकं सूक्तमैन्द्रं तथोत्तरम् ।
छन्दोदैवतसङ्ख्यानां समत्वात्कुशिकागतिः ॥ १७ ॥

'इन्द्रापर्वता बृहता'[12] विश्वामित्रार्षमुच्यते ।
अनुवाकः समाप्तश्च तत आगात्प्रजापतिः ॥ १८ ॥

'इमं महे विदथ्याय'[13] त्रीण्यपश्यत्प्रजापतिः ।
वैश्वदेवानि सूक्तानि वैश्वदेवमथामितः ॥ १९ ॥

'इन्द्रा को वां वरुणे( °णा'[14] इ)ति सूक्तमाहुर्द्विदैवतम् ।
'एष स्य भानुः'[15] इति च वामदेवस्तयोर्ऋषिः ॥ २० ॥

त्रसदस्युस्तयोर्मध्ये सौहोत्रावपि चागतौ ।
द्विदैवत्यत्वात् सामान्याद् आवापस्तत्र[16] युज्यते ॥ २१ ॥

---

१. °देवस्य सा° वि[2] अ[1] ल लअ. २. ऋ २,३०,१. ३. तद्द्रक्ष्य° वि[2] अ[1] ल; तद्द्रक्ष° लअ. ४. इत्यृषिः वि[2] अ[1] लअ. ५. सूक्तेष्वेष्वनु° वि[2] अ[1] ल लअ. ६. ऋ ३,२४,१. ७. ऋ ३,१,१. ८. ऋ ३,२,१;३,१; वैश्वानराय सू° वि[2] अ[1] लअ. ९. चाग्निः वेंऋअ. १०. ऋ ३,१,१. ११. ऋ ३,३०,१. १२. ऋ ३,५३,१. १३. ऋ ३,५४,१. १४. ऋ ४,४१,१. १५. ऋ ४,४५,१. १६. °त्यत्वसामा° वेंऋअ.

तत्राजगाम प्रथमं त्रसदस्युः 'मम द्विता'[१]।
'इन्द्रा को वाम्'[२] इतीन्द्रस्य प्रसङ्गादिति निश्चयः ॥ २२ ॥

ऋषिर्नास्त्यमितोऽत्रीणां किन्त्वत्रिः पुनरागतः।
ददर्श(र्श 'अ)बोध्यग्निः'[३] इति सूक्तं च तत उत्तरम् ॥ २३ ॥

द्विदैवत्येषु सूक्तेषु यान्यासन्नाश्विनानि[४] च।
छन्दश्चानुगुणं तत्र तस्मात्स पुनरागतः ॥ २४ ॥

अमितर्षौ भरद्वाजे वीतहव्योऽभ्यगादृषिः।
आद्यानुवाकसंस्थाने[५] 'इममू षु वो अतिथिम्'[६] ॥ २५ ॥

'अभूरेको रयिपते'[७] सुहोत्रः सूक्तयोर्ऋषिः।
तद्भ्रातरौ ददृशतुश्चत्वारि क्रमशस्ततः ॥ २६ ॥

शुनहोत्रो नरश्चेति भरद्वाजस्ततोऽमितः।
सर्वाणि त्रैष्टुभान्येव सूक्तानीन्द्रश्च देवता ॥ २७ ॥

स्थितानि चानुवाकस्य मध्ये नाद्यन्तयोः पुनः।
'भूय इद् वावृधे'[८] सूक्तं पञ्चर्चं तत्प्रसङ्गतः ॥ २८ ॥

पञ्चर्चानामावपनं[९] तत्रेति कवयो विदुः।
बार्हस्पत्यस्य 'यो रयिवः'[१०] शंयोरातृणपाणिकात् ॥ २९ ॥

'स्वादुष्किले(लं'[११] इ)ति तन्मध्ये मितो गर्गः समागतः।
शंयुरस्तौत् त्रिभिः [१२]सूक्तैरिन्द्रं गर्गस्तदाऽभ्यगात्[१२] ॥ ३० ॥

'यज्ञायज्ञा'[१३] वैश्वदेवम् उत्तराण्यप्यृजिश्वनः।
सूक्तानि वैश्वदेवानि पायुरन्ते व्यवस्थितः ॥ ३१ ॥

आगच्छन्ति तत्कुलीनास्तस्य मध्ये मितर्षयः।
छन्दोदैवतसङ्ख्यार्थजन्मक्रमविरामतः ॥ ३२ ॥

इमां सूक्ष्मेक्षिकां कुर्वन् न मन्त्रार्थेषु मुह्यति।
बहुभिर्हेतुभिः[१४] कुर्यात् तां [१५]सर्वत्रैव पण्डितः[१५] ॥ ३३ ॥ इति ॥

---

१. ऋ ४,४२,१. २. ऋ ४,४१,१. ३. ऋ १,१५७,१. ४. °सनास्थितानि वि[२] अ[१]; °सनाश्रितानि लअ. ५. °वाकावसाने वेंऋअ. ६. ऋ ६,१५,१. ७. ऋ ६,३१,१. ८. ऋ ६,३०,१. ९. °वननम् वि[२] अ[१]. १०. ऋ ६,४४,१. ११. ऋ ६,४७,१. १२-१२. °रिन्द्रर्गस्तु तद्धविः वि[२] अ[१]; °रिन्द्रं गर्भस्तु तद्धपि लअ. १३. ऋ ६,४८,१. १४. °र्होतृभिः वि[२] अ[१]; °र्होतुभिः लअ. १५-१५. °त्रेति पण्डिताः वेंऋअ; सर्वत्रेषु प° वि[२] अ[१].

बहुदैवतसामान्यात्[1] सूक्तं हि बहुदैवतम् ।
'ऋतं देवार्य कृण्वते'[2] तद्वक्ष्यत्यमित[3] ऋषिः[4] ॥ ११ ॥

विश्वामित्रो द्वादशभिः स्तुतवानग्निमादितः ।
सूक्तैस्तैरनुवाकं[5] च समाप्तं शौनकोऽब्रवीत् ॥ १२ ॥

अग्निमेव पुनश्चास्तौत् 'अग्ने सहस्व पृतनाः'[6] ।
मध्ये विरामो विस्पष्टस्तत्रान्येषां समागमः ॥ १३ ॥

मण्डलादौ 'सोमस्ये(स्य'[7] इ)ति सूक्तेऽग्निः प्रथमं स्तुतः ।
वैश्वानरीयसूक्तेन[8] ततो वैश्वानरः स्तुतः ॥ १४ ॥

उपक्रम्य पुनश्चापि तावेव क्रमशः स्तुतौ ।
ऋषीणामृषभादीनाम् अतो मध्ये समागमः ॥ १५ ॥

आग्नेयत्वाच्च सूक्तानाम् आग्नेयेषु समागमः ।
ऐन्द्रात् प्राक् स्तूयते ह्यग्निः[9] 'सोमस्ये(स्य'[10] इ)ति प्रधानतः ॥ १६ ॥

'इच्छन्ति त्वे(त्वा'[11] इ)ति द्व्यधिकं सूक्तमैन्द्रं तथोत्तरम् ।
छन्दोदैवतसङ्ख्यानां समत्वात्कुशिकागतिः ॥ १७ ॥

'इन्द्रापर्वता बृहता'[12] विश्वामित्रार्षमुच्यते ।
अनुवाकः समाप्तश्च तत आगात्प्रजापतिः ॥ १८ ॥

'इमं महे विदथ्याय'[13] त्रीण्यपश्यत्प्रजापतिः ।
वैश्वदेवानि सूक्तानि वैश्वदेवमथामितः ॥ १९ ॥

'इन्द्रा को वां वरुणे(°णा'[14] इ)ति सूक्तमाहुर्द्विदैवतम् ।
'एष स्य भानुः'[15] इति च वामदेवस्तयोर्ऋषिः ॥ २० ॥

त्रसदस्युस्तयोर्मध्ये सौहोत्रावपि चागतौ ।
द्विदैवत्यत्वात् सामान्याद् आवापस्तत्र[16] युज्यते ॥ २१ ॥

---

१. °देवस्य सा° वि[२] अ[१] ल लअ. २. ऋ २,३०,१. ३. तद्द्रक्ष्य° वि[२] अ[१] ल; तद्द्रक्ष° लअ. ४. इत्यृषिः वि[२] अ[१] लअ. ५. सूक्तेष्वेष्वनु° वि[२] अ[१] ल लअ. ६. ऋ ३,२४,१. ७. ऋ ३,१,१. ८. ऋ ३,२,१;३,१; वैश्वानराय सू° वि[२] अ[१] लअ. ९. चाग्निः वेंऋअ. १०. ऋ ३,१,१. ११. ऋ ३,३०,१. १२. ऋ ३,५३,१. १३. ऋ ३,५४,१. १४. ऋ ४,४१,१. १५. ऋ ४,४५,१. १६. °त्यत्वसामा° वेंऋअ.

तत्राजगाम प्रथमं त्रसदस्युः 'मम द्विता'[१] ।
'इन्द्रा को वाम्'[२] इतीन्द्रस्य प्रसङ्गादिति निश्चयः ॥ २२ ॥

ऋषिर्नास्त्यमितोऽत्रीणां किन्त्वत्रिः पुनरागतः ।
ददर्शा(र्श 'अ)बोध्यग्निः'[३] इति सूक्तं च तत उत्तरम् ॥ २३ ॥

द्विदैवत्येषु सूक्तेषु यान्यासन्नाश्विनानि[४] च ।
छन्दश्चानुगुणं तत्र तस्मात्स पुनरागतः ॥ २४ ॥

अमितर्षौ भरद्वाजे वीतहव्योऽभ्यगादृषिः ।
आद्यानुवाकसंस्थाने[५] 'इममू षु वो अतिथिम्'[६] ॥ २५ ॥

'अभूरेको रयिपते'[७] सुहोत्रः सूक्तयोर्ऋषिः ।
तद्भ्रातरौ ददृशतुश्चत्वारि क्रमशस्ततः ॥ २६ ॥

शुनहोत्रो नरश्चेति भरद्वाजस्ततोऽमितः ।
सर्वाणि त्रैष्टुभान्येव सूक्तानीन्द्रश्च देवता ॥ २७ ॥

स्थितानि चानुवाकस्य मध्ये नाद्यन्तयोः पुनः ।
'भूय इद् वावृधे'[८] सूक्तं पञ्चर्चं तत्प्रसङ्गतः ॥ २८ ॥

पञ्चर्चानामावपनं[९] तत्रेति कवयो विदुः ।
बार्हस्पत्यस्य 'यो रयिवः'[१०] शंयोरातृणपाणिकात् ॥ २९ ॥

'स्वादुष्किले(लं'[११] इ)ति तन्मध्ये मितो गर्गः समागतः ।
शंयुरस्तौत् त्रिभिः [१२]सूक्तैरिन्द्रं गर्गस्तदाऽभ्यगात्[१२] ॥ ३० ॥

'यज्ञायज्ञा'[१३] वैश्वदेवम् उत्तराण्यप्यृजिश्वनः ।
सूक्तानि वैश्वदेवानि पायुरन्ते व्यवस्थितः ॥ ३१ ॥

आगच्छन्ति तत्कुलीनास्तस्य मध्ये मितर्षयः ।
छन्दोदैवतसङ्ख्यार्थजन्मक्रमविरामतः ॥ ३२ ॥

इमां सूक्ष्मेक्षिकां कुर्वन् न मन्त्रार्थेषु मुह्यति ।
बहुभिर्हेतुभिः[१४] कुर्यात् तां [१५]सर्वत्रैव पण्डितः[१५] ॥ ३३ ॥ इति ॥

---

१. ऋ ४,४२,१. २. ऋ ४,४१,१. ३. ऋ १,१५७,१. ४. °सनास्थितानि वि[२] अ[१]; °सनाश्रितानि लअ. ५. °वाकावसाने वेंऋअ. ६. ऋ ६,१५,१. ७. ऋ ६,३१,१. ८. ऋ ६,३०,१. ९. °वननम् वि[२] अ[१]. १०. ऋ ६,४४,१. ११. ऋ ६,४७,१. १२-१२. °रिन्द्रर्गस्तु तद्धविः वि[२] अ[१]; °रिन्द्रं गर्भस्तु तद्धपि लअ. १३. ऋ ६,४८,१. १४. °र्होतृभिः वि[२] अ[१]; °र्होतुभिः लअ. १५-१५. °त्रेति पण्डिताः वेंऋअ; सर्वत्रेषु प° वि[२] अ[१].

[ २० ]

[१]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[१] ।

उग्रो जज्ञे वीर्याय स्वधावाञ्चक्रिरपो नर्यो यत् करिष्यन् ।
जग्मिर्युवा नृषदनमवोभिस्त्राता न इन्द्र एनसो महश्चित् ॥ १ ॥

उग्रः । जज्ञे । वीर्याय । स्वधाऽवान् । चक्रिः । अपः । नर्यः । यत् । करिष्यन् ।
जग्मिः । युवा । नृऽसदनम् । अवःऽभिः । त्राता । नः । इन्द्रः । एनसः । महः । चित् ॥ १ ॥

वेङ्कट० वसिष्ठः । उग्रः अजायत वीर्यकरणायैव बलवान् यत् शत्रुवधादिकं[२] कर्म करिष्यामीति मन्यते तस्य कर्मणः ताच्छील्येन कर्ता नृहितः तथा युवा नराणां गृहम् रक्षणैः प्रदित्सितैः सह गन्ता रक्षिता अस्माकम् इन्द्रः दारिद्र्याद् अपि महतः[३] ॥ १ ॥

हन्ता वृत्रमिन्द्रः शूशुवानः प्रावीन्नु वीरो जरितारमूती ।
कर्ता सुदासे अह वा उ लोकं दाता वसु मुहुरा दाशुषे भूत् ॥ २ ॥

हन्ता । वृत्रम् । इन्द्रः । शूशुवानः । प्र । आवीत् । नु । वीरः । जरितारम् । ऊती ।
कर्ता । सुऽदासे । अह । वै । ऊँ इति । लोकम् । दाता । वसु । मुहुः । आ । दाशुषे । भूत् ॥ २ ॥

वेङ्कट० हन्ता शत्रुम्[४] इन्द्रः वर्धमानः प्र यच्छति क्षिप्रम् वीरः जरितारम् रक्षणाय । कर्ता शोभनदानायैव [५]यजमानाय आलोकनम् उत्तमम्[५] दाता धनम् यजमानाय मुहुर्मुहुः [६]आ भवति[६] आगच्छति ॥ २ ॥

युध्मो अनर्वा खजकृत् समद्वा शूरः सत्राषाड् जनुषेमषाळ्हः ।
व्यास इन्द्रः पृतनाः स्वोजा अधा विश्वं शत्रूयन्तं जघान ॥ ३ ॥

युध्मः । अनर्वा । खजऽकृत् । समत्ऽवा । शूरः । सत्राषाट् । जनुषा । ईम् । अषाळ्हः ।
वि । आसे । इन्द्रः । पृतनाः । सुऽओजाः । अध । विश्वम् । शत्रुऽयन्तम् । जघान ॥ ३ ॥

वेङ्कट० योधनशीलः अभिगन्तृरहितः[७] सङ्ग्रामकृत् कलहवांश्च शूरः बहूनां सोढा [८]जन्मना एव शत्रुभिरसोढः[८] इन्द्रः पृतनाः वि अस्यति सुबलः, अथ विश्वम् अपि शातनमिच्छन्तम् हन्ति ॥ ३ ॥

उभे चिदिन्द्र रोदसी महित्वा पप्राथ तविषीभिस्तुविष्मः ।
नि वज्रमिन्द्रो हरिवान् मिमिक्षन्त्समन्धसा मदेषु वा उवोच ॥ ४ ॥

---

१-१. नास्ति मूको. २. °धादिन्द्रोऽस्माकं लभ. ३. महते मूको. ४. गन्तुम् वि[२]; गन्तृम् अ[१]; शत्रुम् ल लभ. ५-५ °मानालोक° अ[१]; °मानायोत्तमं लोकनम् लभ. ६-६. आ वहति वि[२] अ[१]; आहवति ल लभ. ७. अहिग° अ[१]. ८-८. नास्ति वि[२] अ[१].

उभे इति । चित् । इन्द्र । रोदसी इति । महिऽत्वा । आ । पप्राथ । तविषीभिः । तुविऽशुष्म । नि । वज्रम् । इन्द्रः । हरिऽवान् । मिमिक्षन् । सम् । अन्धसा । मदेषु । वै । उवोच ॥ ४ ॥

वेङ्कट० उभे अपि इन्द्र! द्यावापृथिवी[1] महत्त्वेन आ पूरितवानसि बलैः हे वृद्धिमन्![2] । नितरां सम् सेवते इन्द्रः हरिवान् सोमेन जनितेषु मदेषु[3] वज्रम् पृथिवीं सेक्तुमिच्छन् । उचतिः सेवाकर्मा[4] ॥४॥

वृषा जजान वृषणं रणाय तमु चिन्नारी नर्यं ससूव ।
प्र यः सेनानीरध नृभ्यो अस्तीनः सत्वा गवेषणः स धृष्णुः ॥ ५ ॥

वृषा । जजान । वृषणम् । रणाय । तम् । ऊँ इति । चित् । नारी । नर्यम् । ससूव ।
प्र । यः । सेनाऽनीः । अध । नृऽभ्यः । अस्ति । इनः । सत्वा । गोऽएषणः । सः । धृष्णुः ॥५॥

वेङ्कट० वृषा प्रजापतिः वृषणम् इन्द्रं जनयामास युद्धार्थम्[5] । तम् एव नारी माता अदितिः असूत नृहितम्[6] । प्र भवति यः सेनानीः नृभ्यः योद्धृभ्यः, सः ईश्वरः शत्रूणां सदनशीलः गवामेषणशीलः शत्रूणां धर्षको भवति ॥ ५ ॥

[7]इति पञ्चमाष्टके तृतीयाध्याये प्रथमो वर्गः[7] ॥

नू चित् स भ्रेषते जनो न रेषन् मनो यो अस्य घोरमाविवासात् ।
यज्ञैर्य इन्द्रे दधते दुवांसि क्षयत् स राय ऋतपा ऋतेजाः ॥ ६ ॥

नु । चित् । सः । भ्रेषते । जनः । न । रेषत् । मनः । यः । अस्य । घोरम् । आऽविवासात् ।
यज्ञैः । यः । इन्द्रे । दधते । दुवांसि । क्षयत् । सः । राये । ऋतऽपाः । ऋतेऽजाः ॥ ६ ॥

वेङ्कट० क्षिप्रम् सः भ्रंशयति शत्रुम् जनः, न च रिष्यति मनः, यः अस्य घोरम् परिचरति । यज्ञैः यः[8] जनः इन्द्रे परिचरणानि धारयति, सः जनः धनाय निवसति धनं प्राप्नोति यज्ञस्य रक्षकः यज्ञे जायमानः ॥ ६ ॥

यदिन्द्र पूर्वो अपराय शिक्षन्नयज्ज्यायान् कनीयसो देष्णम् ।
अमृत इत् पर्यासीत दूरमा चित्र चित्र्यं भरा रयिं नः ॥ ७ ॥

यत् । इन्द्र । पूर्वः । अपराय । शिक्षन् । अयत् । ज्यायान् । कनीयसः । देष्णम् ।
अमृतः । इत् । परि । आसीत । दूरम् । आ । चित्र । चित्र्यम् । भर । रयिम् । नः ॥ ७ ॥

वेङ्कट० यदि धनम् इन्द्र! पूर्वः पिता अपराय पुत्राय प्रयच्छन् भवति, गमयति ज्यायान्[9] कनीयसः धनम्, ततः[10] पुत्रः कनीयांश्च अमृतः एव परि आसीत चिरम् । तथा सति पूजनीयं धनम् आ हर अस्मभ्यं पूजनीय! इति ॥ ७ ॥

---

१. °थिव्यौ ल प्रस्तावः. २. वृद्धिं वि[2]. ३. नास्ति मूको. ४. °वक° मूको ५. बुद्धा° वि[2] ल; वृद्धा° लभ ६. °हितः वि[2]; °हित अ[1]. ७-७. नास्ति मूको ८. यो या लभ. ९. °यान् ततः वि[2] अ[1]. १०. नास्ति वि[2] अ[1].

यस्तं इन्द्र प्रियो जनो ददाशदसन्निरेके अद्रिवः सखा ते ।
वयं ते अस्यां सुमतौ चनिष्ठाः स्याम वरूथे अघ्नतो नृपीतौ ॥ ८ ॥

यः । ते । इन्द्र । प्रियः । जनः । ददाशत् । असत् । निरेके । अद्रिऽवः । सखा । ते ।
वयम् । ते । अस्याम् । सुऽमतौ । चनिष्ठाः । स्याम । वरूथे । अघ्नतः । नृऽपीतौ ॥ ८ ॥

**वेङ्कट०** यः तुभ्यम् इन्द्र! [1]प्रियः जनः[1] प्रयच्छति[2], सः सखा यजमानो जनः तव धनस्य निरेके निर्गमने भवति [3]वज्रिन्! पात्रम्[3] । वयम् ते अस्याम् सुमतौ चनिष्ठाः स्याम अतिशयेनान्नवन्तो[4] भवेम । स्याम च गृहे अहन्तुः तव स्वभूते त्वया वा[5] दत्ते[6] बहुधनत्वात् मनुष्याणां पालके ॥ ८ ॥

एष स्तोमो अचिक्रदद् वृषा त उत स्तामुर्मघवन्नक्रपिष्ट ।
रायस्कामो जरितारं त आगन् त्वमङ्ग शक्र वस्व आ शको नः ॥ ९ ॥

एषः । स्तोमः । अचिक्रदत् । वृषा । ते । उत । स्तामुः । मघऽवन् । अक्रपिष्ट ।
रायः । कामः । जरितारम् । ते । आ । अगन् । त्वम् । अङ्ग । शक्र । वस्वः । आ । शकः । नः ॥

**वेङ्कट०** अयं स्तोता वृषा वसिष्ठः त्वाम् अचिक्रदत् अस्तौत् । अपि च स्तामुः[7] । तमिर्ग्लानिकर्मा[8] सकार उपजनः । मघवन्! क्लृप्तो भवतु । धनस्य कामः[9] जरितारम् तव आ गच्छतु यद्यद् धनं कामयते तदागच्छतु । त्वम् अङ्ग शक्र! धनस्य प्रयच्छ अस्मभ्यम् ॥ ९ ॥

स नं इन्द्र त्वयताया इषे धास्त्मना च ये मघवानो जुनन्ति ।
वस्वी षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

सः । नः । इन्द्र । त्वऽयतायै । इषे । धाः । त्मना । च । ये । मघऽवानः । जुनन्ति ।
वस्वी । सु । ते । जरित्रे । अस्तु । शक्तिः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥१०॥

**वेङ्कट०** सः [10]अस्मान् इन्द्र![10] त्वया प्रदेयाय अन्नाय धेहि, ये अमी हविष्मन्तः स्वयमेव तुभ्यं हविः प्रेरयन्ति[11] । अथैकवदाह—[12]कल्याणम् तव दानं[12] स्तोत्रे मह्यं भवत्विति ॥ १० ॥

[13]इति पञ्चमाष्टके तृतीयाध्याये द्वितीयो वर्गः[13] ॥

## [ २१ ]

[13]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[13] ।

असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषु ॥ १ ॥

---

१-१. प्रयोजनम् वि[2] अ[1]. २. पृच्छति वि[2]. ३-३. वज्रे पात्रम् मूको; वज्रवन् ल प्रस्तावः. ४. °नान्तव° ल लअ. ५. न वि[2]; व अ[1]; व ल लअ. ६. धत्ते वि[2]. ७. स्तोतृनाम ( निघ ३,१६ [तु. वैप १,३४८१ d] ). ८. स्तमिर्ग्लान°(नि° अ[1].)मूको. ९. आमः मूको. १०-१०. नास्ति वि[2]; अस्मान्द्र अ[1] ल लअ. ११. °यति मूको. १२-१२. कल्याणाम् प दानाम् वि[2]; °ण तपदाना( न ल लअ. ) अ[1] ल लअ. १३-१३. नास्ति मूको.

असावि । देवम् । गोऽऋजीकम् । अन्धः । नि । अस्मिन् । इन्द्रः । जनुषा । ईम् । उवोच ।
बोधामसि । त्वा । हरिऽअश्व । यज्ञैः । बोध । नः । स्तोमम् । अन्धसः । मदेषु ॥ १ ॥

**वेङ्कट०** सुतम् देवनशीलम् ऋजुपयस्कम्[1] अन्धः । सुते च अस्मिन् [2]सोमे इन्द्रः स्वाभाव्येन[2] सेवाम् अकरोत् । बोधयामः त्वाम् हर्यश्व ! यज्ञैः । बुध्यस्व नः स्तोमम् सोमस्य मदेषु ॥ १ ॥

प्र यन्ति यज्ञं विपयन्ति बर्हिः सोममादो विदथे दुध्रवाचः ।
न्यु भ्रियन्ते यशसो गृभादा दूरउपब्दो वृषणो नृषाचः ॥ २ ॥

प्र । यन्ति । यज्ञम् । विपयन्ति । बर्हिः । सोमऽमादः । विदथे । दुध्रऽवाचः ।
नि । ऊँ इति । भ्रियन्ते । यशसः । गृभात् । आ । दूरेऽउपब्दः । वृषणः । नृऽसाचः ॥ २ ॥

**वेङ्कट०** प्र आरभन्ते[3] यज्ञम्, कम्पयन्ति बर्हिः सोमेन मादयन्तः ऋत्विजः यज्ञे[4] दुर्धरमन्त्रवाचः । आभिमुख्येन ह्रियन्ते सुतान्यन्नानि हविर्धानात् । किञ्च दूरेश्रूयमाणशब्दाः[5] भवन्ति ग्रावाणः नृभिः सेव्यमानाः[6] ॥ २ ॥

त्वमिन्द्र स्रवितवा अपस्कः परिष्ठिता अहिना शूर पूर्वीः ।
त्वद् वावक्रे रथ्यो३ न धेना रेजन्ते विश्वा कृत्रिमाणि भीषा ॥ ३ ॥

त्वम् । इन्द्र । स्रवितवै । अपः । करिति कः । परिऽस्थिताः । अहिना । शूर । पूर्वीः ।
त्वत् । वावक्रे । रथ्यः । न । धेनाः । रेजन्ते । विश्वा । कृत्रिमाणि । भीषा ॥ ३ ॥

**वेङ्कट०** त्वम् इन्द्र ! स्रवितुम् उदकानि करोषि[7] परिष्ठितानि अहिना शूर ! बहूनि । त्वत्तः निर्गच्छन्ति रथिन इव नद्यः । तथा सर्वाणि कृत्रिमाणि रक्षांसि[8] कम्पन्ते त्वद्भयेन ॥ ३ ॥

भीमो विवेषायुधेभिरेषामपांसि विश्वा नर्याणि विद्वान् ।
इन्द्रः पुरो जर्हृषाणो वि दूधोद् वि वज्रहस्तो महिना जघान ॥ ४ ॥

भीमः । विवेष । आयुधेभिः । एषाम् । अपांसि । विश्वा । नर्याणि । विद्वान् ।
इन्द्रः । पुरः । जर्हृषाणः । वि । दूधोत् । वि । वज्रऽहस्तः । महिना । जघान ॥ ४ ॥

**वेङ्कट०** भीमः व्याप्नोति आयुधैः कृत्रिमाणि एतानि कर्माणि विश्वानि नृहितानि जानन् वर्षादीनि । इन्द्रः शत्रुपुराणि हृष्यन् वि दोधवीति वि हन्ति च वज्रहस्तः महत्त्वेन पुराणीति ॥ ४ ॥

न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥ ५ ॥

---

१. ऋजु ( °जू अ[1] ) व° वि[2] अ[1]; मूत्रवयस्करम् ल लअ. २-२. सोमशरव्येन वि[2]; सोम इ शरव्येन अ[1]; °मे इ व्येन ल लअ. ३. प्राहरन्ते मूको. ४. यज्ञैः वि[2]. ५. °माणाः शब्दो मूको. ६. °नाः प्रवृत्ता एषा ( °ष लअ ) वै मूको. ७. परोषि मूको. ८. रक्षाणि मूको.

न । यातवः । इन्द्र । जूजुवुः । नः । न । वन्दना । शविष्ठ । वेद्याभिः ।
[1]सः । शर्धत् । अर्यः । विषुणस्य । जन्तोः । मा । शिश्नऽदेवाः । अपि । गुः । ऋतम् । नः ॥५॥[1]

**वेङ्कट०** न[2] राक्षसाः इन्द्र! अपिगच्छेयुः अस्मान्, न च वन्दना[3], बहुवचनस्याकारः, बलवत्तम! निवेद्याभिः स्तुतिभिः। सः उत्सहताम् स्वामी विषमस्य जन्तोः प्रशास्ता। मा शिश्नदेवाः शिश्नेन क्रीडन्तः अस्माकम् यज्ञम् अपि गच्छेयुः ॥ ५ ॥

[4]इति पञ्चमाष्टके तृतीयाध्याये तृतीयो वर्गः[4] ॥

अभि क्रत्वेन्द्र भूरध ज्मन् न ते विव्यङ् महिमानं रजांसि ।
स्वेना हि वृत्रं शवसा जघन्थ न शत्रुरन्तं विविदद् युधा ते ॥ ६ ॥

अभि । क्रत्वा । इन्द्र । भूः । अध । ज्मन् । न । ते । विव्यक् । महिमानम् । रजांसि ।
स्वेन । हि । वृत्रम् । शवसा । जघन्थ । न । शत्रुः । अन्तम् । विविदत् । युधा । ते ॥ ६ ॥

**वेङ्कट०** अभि अभूः[5] प्रज्ञया इन्द्र! पृथिव्यां सर्वाणि भूतानि। न ते[6] व्याप्नुवन्ति महिमानम् लोकाः। व्यचिः[7] व्याप्तिकर्मा। स्वेन हि बलेन वृत्रम् त्वं हतवानसि। न शत्रुः कश्चित् तव अन्तम् अविन्दद् योधनेन ॥ ६ ॥

देवाश्चित् ते असुर्याय पूर्वेऽनु क्षत्राय ममिरे सहांसि ।
इन्द्रो मघानि दयते विषह्येन्द्रं वाजस्य जोहुवन्त सातौ ॥ ७ ॥

देवाः । चित् । ते । असुर्याय । पूर्वे । अनु । क्षत्राय । ममिरे । सहांसि ।
इन्द्रः । मघानि । दयते । विऽसह्य । इन्द्रम् । वाजस्य । जोहुवन्त । सातौ ॥ ७ ॥

**वेङ्कट०** देवाः च तुभ्यम् असुराणां हन्त्रे पूर्वे अनु मेनिरे क्षतात त्रात्रे बलानि इन्द्रस्य बलकरणानि साहाय्यकरणेन अनुमन्यन्ते। इन्द्रः धनानि प्रयच्छति शत्रूनभिभूय। इन्द्रम् सङ्ग्रामस्य सम्भजने भृशम्[8] आह्वयन्ति ॥ ७ ॥

कीरिश्चिद्धि त्वामवसे जुहावेशानमिन्द्र सौभगस्य भूरेः ।
अवो बभूथ शतमूते अस्मे अभिक्षत्तुस्त्वावतो वरूता ॥ ८ ॥

कीरिः । चित् । हि । त्वाम् । अवसे । जुहाव । ईशानम् । इन्द्र । सौभगस्य । भूरेः ।
अवः । बभूथ । शतमऽऊते । अस्मे इति । अभिऽक्षत्तुः । त्वाऽवतः । वरूता ॥ ८ ॥

---

१-१. अर्धर्चं एष यास्केन व्याख्यातः (४,१९). २. नास्ति वि[२]. ३. तु. वैप १,२७४७f. ४-४. नास्ति मूको. ५. आह्यभूः वि[२] ल; अह्यभूः अ[१]; अहुः लअ. ६. तैः मूको. ७. व्यतिः मूको. ८. मृगम् मूको.

**वेङ्कट०** स्तोता चित् हि त्वाम् रक्षणाय आह्वयति[1] ईश्वरम् इन्द्र! भूरिणो धनस्य। हे बहुरक्षण! रक्षको भव अस्माकम्। क्षदिः शकलीभावकर्मा। शत्रूणाम् अभिहिंसितुः त्वावतः[2] सर्वो जनः वरीता[3] भवति ॥ ८ ॥

सखा॑यस्त इन्द्र वि॒श्वह॑ स्याम नमोवृ॒धासो॑ महि॒ना त॑रुत्र ।
व॒न्वन्तु॑ स्मा॒ तेऽव॑सा समी॒के॒३॒॑ऽभी॑तिम॒र्यो व॒नुषां॒ शवां॑सि ॥ ९ ॥

सखा॑यः । ते॒ । इ॒न्द्र॒ । वि॒श्वह॑ । स्या॒म॒ । न॒मः॒ऽवृ॒धासः॑ । म॒हि॒ना । त॒रु॒त्र॒ ।
व॒न्वन्तु॑ । स्म॒ । ते॒ । अव॑सा । स॒म्ऽई॒के । अ॒भिऽई॑तिम् । अ॒र्यः । व॒नुषा॑म् । शवां॑सि ॥ ९ ॥

**वेङ्कट०** सखायः ते इन्द्र! वयं सर्वदा भवेम हविषो वर्धयितारः महत्त्वेन हे तारक!। अभिभजन्ताम्[4] तव रक्षणेन सह सङ्ग्रामे अर्यः अरेः शत्रोः अभिगमनं तव सम्भक्तॄणाम् अस्माकं बलानि ॥ ९ ॥

स न॑ इन्द्र त्वय॑ताया इ॒षे धा॒स्त्मना॑ च॒ ये म॒घवा॑नो जु॒नन्ति॑ ।
व॒स्वी॒ षु ते॑ जरि॒त्रे अ॑स्तु श॒क्तिर्यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ १० ॥

सः । न॒ः । इ॒न्द्र॒ । त्वऽय॑तायै । इ॒षे । धा॒ः । त्मना॑ । च॒ । ये । म॒घऽवा॑नः । जु॒नन्ति॑ ।
व॒स्वी॑ । सु । ते॒ । ज॒रि॒त्रे । अ॒स्तु॒ । श॒क्तिः । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ॥ १० ॥

**वेङ्कट०** व्याख्याता पूर्वम् ( ऋ ७,२०,१० ) ॥ १० ॥

[5]इति पञ्चमाष्टके तृतीयाध्याये चतुर्थो वर्गः[5] ॥

## [ २२ ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः। इन्द्रो देवता। विराट् छन्दः, नवमी त्रिष्टुप्[5]।

पिबा॒ सोम॑मिन्द्र॒ मन्द॑तु त्वा॒ यं ते॑ सु॒षाव॑ हर्य॒श्वाद्रिः॑ ।
सो॒तुर्बा॒हुभ्यां॒ सुय॑तो॒ नार्वा॑ ॥ १ ॥

पिब॑ । सोम॑म् । इ॒न्द्र॒ । मन्द॑तु । त्वा॒ । यम् । ते॒ । सु॒साव॑ । ह॒रि॒ऽअ॒श्व॒ । अद्रिः॑ ।
सो॒तुः । बा॒हुऽभ्या॑म् । सुऽय॑तः । न । अर्वा॑ ॥ १ ॥

**वेङ्कट०** पिब सोमम् इन्द्र! । स त्वां[6] मादयतु, यम् तुभ्यम् सुषाव हर्यश्व! ग्रावा। सोतुः[7] प्रसवितुः अश्वारोहस्य बाहुभ्याम् सुसङ्गृहीतः इव अश्वः ॥ १ ॥

---

१. °यन्ति मूको. २. तावतः मूको. ३. परी° अ[1] लअ. ४. भवताम् वि[1]; भवन्ताम् अ[1]; °भवन्ताम् ल लअ. ५-५. नास्ति मूको. ६. त्वं वि[2]; त्व अ[1]. ७. सोऽनु मूको.

यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हंसि ।
स त्वामिन्द्र प्रभूवसो ममत्तु ॥ २ ॥

यः । ते । मदः । युज्यः । चारुः । अस्ति । येन । वृत्राणि । हरिऽअश्व । हंसि ।
सः । त्वाम् । इन्द्र । प्रभुवसो इति प्रभुऽवसो । ममत्तु ॥ २ ॥

**वेङ्कट०** यः ते[1] सोमः सहायः चारुः भवति, येन शत्रून् हर्यश्व! हंसि, सः त्वाम् इन्द्र! प्रभूतधन! मादयतु ॥ २ ॥

बोधा सु मे मघवन् वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥

बोध । सु । मे । मघऽवन् । वाचम् । आ । इमाम् । याम् । ते । वसिष्ठः । अर्चति । प्रऽशस्तिम् ।
इमा । ब्रह्म । सधऽमादे । जुषस्व ॥ ३ ॥

**वेङ्कट०** बुध्यस्व मघवन्! सुष्ठु आभिमुख्येन मदीयाम् इमाम् स्तुतिम्, याम्[2] ते वसिष्ठः उच्चारयति[3] प्रशस्ताम् । इमानि च हवींषि यज्ञे सेवस्व ॥ ३ ॥

श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।
कृष्वा दुवांस्यन्तमा सचेमा ॥ ४ ॥

श्रुधि । हवम् । विऽपिपानस्य । अद्रेः । बोध । विप्रस्य । अर्चतः । मनीषाम् ।
कृष्व । दुवांसि । अन्तमा । सचा । इमा ॥ ४ ॥

**वेङ्कट०** शृणु घोषम् सोमं विशेषेण पिबतः ग्राव्णः[4] । बुध्यस्व च मेधाविनः ब्रुवतः[5] स्तुतिम् । कुरु च परिचरणानि अन्तिकतमानि त्वया सहितानीति ॥ ४ ॥

न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।
सदा ते नाम स्वयशो विवक्मि ॥ ५ ॥

न । ते । गिरः । अपि । मृष्ये । तुरस्य । न । सुऽस्तुतिम् । असुर्यस्य । विद्वान् ।
सदा । ते । नाम । स्वऽयशः । विवक्मि ॥ ५ ॥

**वेङ्कट०** न त्वदीयाः स्तुतीः अहम् अपि मृष्ये सोढुम् न शक्नोमि क्षिप्रमुच्चारयामि क्षिप्रकारिणः,

---

१. ते मन्दः अ[1]; ते मद लभ. २. या मूको. ३. °रयन्ति मूको. ४. ग्राणो वि[2] अ[1]; ग्राणः ल; ग्राण लभ. ५. °वत मूको. ६. नास्ति वि[1] अ[1]; ग ल लभ.

तथा [1]सुष्टुतिम् च[1] न मृष्यामि असुराणां हन्तुः जानन्। सर्वदैव तव नाम हे स्वभूतयशः! ब्रवीमि ॥ ५ ॥

[2]इति पञ्चमाष्टके तृतीयाध्याये पञ्चमो वर्गः[2] ॥

भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित् ।
मारे अस्मन्मघवञ्ज्योक् कः ॥ ६ ॥

भूरि । हि । ते । सवना । मानुषेषु । भूरि । मनीषी । हवते । त्वाम् । इत् ।
मा । आरे । अस्मत् । मघऽवन् । ज्योक् । करिति कः ॥ ६ ॥

वेङ्कट० भूरीणि ते सवनानि सन्ति मनुष्येषु । भूयिष्ठं च हवते मेधावी त्वाम् एव । अस्माकं दूरे मघवन्! चिरम् मा[3] कार्षीः[4] ॥ ६ ॥

तुभ्येदिमा सवना शूर विश्वा तुभ्यं ब्रह्माणि वर्धना कृणोमि ।
त्वं नृभिर्हव्यो विश्वधासि ॥ ७ ॥

तुभ्य । इत् । इमा । सवना । शूर । विश्वा । तुभ्यम् । ब्रह्माणि । वर्धना । कृणोमि ।
त्वम् । नृऽभिः । हव्यः । विश्वधा । असि ॥ ७ ॥

वेङ्कट० तुभ्यम् एव इमानि सर्वाणि सवनानि शूर! करोमि, तुभ्यम् एव स्तोत्राणि च वर्धनानि। त्वम् हि मनुष्यैः[5] हव्यः भवसि सर्वदेति ॥ ७ ॥

नू चिन्नु ते मन्यमानस्य दस्मोदश्नुवन्ति महिमानमुग्र ।
न वीर्यमिन्द्र ते न राधः ॥ ८ ॥

नु । चित् । नु । ते । मन्यमानस्य । दस्म । उत् । अश्नुवन्ति । महिमानम् । उग्र ।
न । वीर्यम् । इन्द्र । ते । न । राधः ॥ ८ ॥

वेङ्कट० क्षिप्रम् एव तव स्तूयमानस्य हे दर्शनीय! महिमानम् उत् अश्नुवन्ति उग्र! । न त्वां साधयति[6] पुरुषस्य बलम् इन्द्र!, [7]न अपि धनम्[7] इति ॥ ८ ॥

ये च पूर्व ऋषयो ये च नूत्ना इन्द्र ब्रह्माणि जनयन्त विप्राः ।
अस्मे ते सन्तु सख्या शिवानि यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

ये । च । पूर्वे । ऋषयः । ये । च । नूत्नाः । इन्द्र । ब्रह्माणि । जनयन्त । विप्राः ।
अस्मे इति । ते । सन्तु । सख्या । शिवानि । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ९ ॥

---

१-१. सुष्ठु किं च वि[2] अ[1]; सुष्ठु° ल लभ. २-२. नास्ति मूको. ३. नास्ति मूको. ४. कार्षि वि[2] अ[1] ल; कार्षिम् लभ ५ मनुष्येषु अ[1]. ६. °यन्ति मूको. ७-७. नाभि धानम् मूको.

**वेङ्कट०** ये च पूर्वे ऋषयः ये च नूतनाः[1] इन्द्र! स्तोत्राणि तव अजनयन् मेधाविनः । स्वेषु इव अस्मास्वपि तव सख्यानि[2] शिवानि [3]भवन्तु इति[3] ॥ ९ ॥

[4]इति पञ्चमाष्टके तृतीयाध्याये षष्ठो वर्गः[4] ॥

## [ २३ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[4] ।

उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥ १ ॥

उत् । ऊँ इति । ब्रह्माणि । ऐरत । श्रवस्या । इन्द्रम् । सऽमर्ये । महय । वसिष्ठ ।
आ । यः । विश्वानि । शवसा । ततान । उपऽश्रोता । मे । ईवतः । वचांसि ॥ १ ॥

**वेङ्कट०** उत् ईरयति प्रेरयति अन्नानि श्रवणीयानि । तथा सति इन्द्रम् यज्ञे पूजयसि वसिष्ठ! । यः[5] सर्वाण्येव भूतानि बलेन[6] आ ततान, स [7]इन्द्रः उपश्रोता[7] भवतु मम अभिगमनवतः वचांसि ॥ १ ॥

अयामि घोष इन्द्र देवजामिरिरज्यन्त यच्छुरुधो विवाचि ।
नहि स्वमायुश्चिकिते जनेषु तानीदंहांस्यति पर्ष्यस्मान् ॥ २ ॥

अयामि । घोषः । इन्द्र । देवऽजामिः । इरज्यन्त । यत् । शुरुधः । विऽवाचि ।
नहि । स्वम् । आयुः । चिकिते । जनेषु । तानि । इत् । अंहांसि । अति । पर्षि । अस्मान् ॥२॥

**वेङ्कट०** अयामि नियतः स्तुतिशब्दः इन्द्र! [8]देवानां बन्धुः । उदीरयामि[8] इत्यर्थः । यस्मात्[9] विविधवाचि स्तोतरि शुचो[10] रोधयित्र्य ओषधयः वृद्धा भवन्ति[11] । स्तुतिहेतु[12] । नहि स्वजीवनम्[13] अस्मदीयेषु[14] केनचिदपि ज्ञायते[15] । तथा सति येन वयं दीर्घमायुः प्राप्नुयाम तथास्मदीयानि तानि उपद्रवाणि रोगभयादीनि अति पारयेति ॥ २ ॥

युजे रथं गवेषणं हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः ।
वि बाधिष्ट स्य रोदसी महित्वेन्द्रो वृत्राण्यप्रती जघन्वान् ॥ ३ ॥

युजे । रथम् । गोऽएषणम् । हरिऽभ्याम् । उप । ब्रह्माणि । जुजुषाणम् । अस्थुः ।
वि । बाधिष्ट । स्यः । रोदसी इति । महिऽत्वा । इन्द्रः । वृत्राणि । अप्रति । जघन्वान् ॥ ३ ॥

---

१. भूतना अ[1] लभ. २. संख्यानि मूको. ३-३. भवन्त्वानि मूको. ४-४. नास्ति मूको. ५. यः बलेन अ[1]. ६. नास्ति अ[1]. ७-७. इद्रुपश्रो (°श्रो वि[2] अ[1].) ता मूको. ८-८. देवश्च···दीर° वि[2] अ[1]; °नां देवश्च व° ल लभ ९. यस्याम् वि[2]; यस्मान् ल लभ. १०. त्रवो मूको. ११. °न्ति तत्र अ[1]. १२. °तुः वि[2] अ[1]. १३. °वनान् वि[2] अ[1] ल; °वान् लभ. १४. °स्मदेपु मूको. १५. °तं स वि[2] अ[1].

वेङ्कट० युनज्मि रथम् गवामेषणशीलम् अश्वाभ्याम्। उप अस्थुः च स्तोत्राणि रथसमीपं सेवमानं माम्। ततः अयम् इन्द्रः तं रथमधितिष्ठन् द्यावापृथिव्यौ [1]महत्त्वेन वि† बाधते। शत्रून्[1] इन्द्रः अप्रतिगतः अहिंसत्[2] ॥ ३ ॥

आप॑श्चित् पिप्युः स्त॒र्यो॒३ न गावो॒ नक्ष॑न्नृ॒तं ज॑रि॒तार॑स्त इन्द्र।
या॒हि वा॒युर्न नि॒युतो॑ नो॒ अच्छा॒ त्वं हि धी॒भिर्दय॑से॒ वि वाजा॑न् ॥ ४ ॥

आपः॑। चि॒त्। पि॒प्यु॒ः। स्त॒र्यः॑। न। गावः॑। नक्ष॑न्। ऋ॒तम्। ज॒रि॒तारः॑। ते॒। इ॒न्द्र॒।
या॒हि। वा॒युः। न। नि॒ऽयुतः॑। न॒ः। अच्छ॑। त्वम्। हि। धी॒भिः। दय॑से। वि। वाजा॑न् ॥ ४ ॥

वेङ्कट० आपः चित् पिप्युः प्रवृद्धा अभवन्, यथा सङ्गवकाले भुवं स्तृणन्त्यः गावः प्रवृद्धा भवन्ति। व्याप्नुवन् उदकम् स्तोतारः तव इन्द्र!। आ याहि अस्मान् अभि वायुः आत्मीयाः इव वडवाः[3]। त्वम् हि कर्मभिः विविधं प्रयच्छसि अन्नानि ॥ ४ ॥

ते त्वा॒ मदा॑ इन्द्र मादयन्तु शु॒ष्मिणं॑ तुवि॒राध॑सं जरि॒त्रे।
एको॑ देव॒त्रा दय॑से॒ हि मर्ता॑न॒स्मिञ्छू॑र॒ सव॑ने मादयस्व ॥ ५ ॥

ते। त्वा॒। मदाः॑। इ॒न्द्र॒। मा॒द॒य॒न्तु॒। शु॒ष्मिण॑म्। तु॒वि॒ऽराध॑सम्। ज॒रि॒त्रे।
एकः॑। दे॒व॒ऽत्रा। दय॑से। हि। मर्ता॑न्। अ॒स्मिन्। शू॒र॒। सव॑ने। मा॒द॒य॒स्व॒ ॥ ५ ॥

वेङ्कट० ते त्वा सोमाः इन्द्र! मादयन्तु बलिनम् स्तोत्रे ददतम्[4] बहुधनम्। त्वम् एकः एव देवान् मनुष्यांश्च विविधं गच्छसि। अस्मिन् इति स्पष्टम् ॥ ५ ॥

ए॒वेदिन्द्रं॒ वृष॑णं॒ वज्र॑बाहुं॒ वसि॑ष्ठासो अ॒भ्य॑र्चन्त्य॒र्कैः।
स नः॑ स्तु॒तो वी॒रव॑द् धातु॒ गोम॑द् यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ६ ॥

ए॒व। इत्। इन्द्र॑म्। वृष॑णम्। वज्र॑ऽबाहुम्। वसि॑ष्ठासः। अ॒भि। अ॒र्च॒न्ति॒। अ॒र्कैः।
सः। न॒ः। स्तु॒तः। वी॒रऽव॑त्। धा॒तु॒। गोऽम॑त्। यू॒यम्। पा॒त॒। स्व॒स्तिऽभिः॑। सदा॑। न॒ः ॥ ६ ॥

वेङ्कट० निगदसिद्धेति ॥ ६ ॥

[5]इति पञ्चमाष्टके तृतीयाध्याये सप्तमो वर्गः[5] ॥

[ २४ ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[5]।

योनि॑ष्ट इन्द्र॒ सद॑ने अकारि॒ तमा नृ॒भिः॑ पुरुहूत॒ प्र या॑हि।
अस॒ो यथा॑ नोऽवि॒ता वृ॒धे च॒ ददो॒ वसू॑नि म॒मद॑श्च॒ सोमैः॑ ॥ १ ॥

---

१-१. °त्वेन…श° वि[2] अ[1].　† पि ल लअ.　२. °सन् मूको.　३. विध्वा वि[2] अ[1] ल; विवधवा लअ.　४. ददित्त वि[2] अ[1] लअ.　५-५. नास्ति मूको.

योनिः । ते । इन्द्र । सदने । अकारि । तम् । आ । नृऽभिः । पुरुऽहूत । प्र । याहि ।
असः । यथा । नः । अविता । वृधे । च । ददः । वसूनि । ममदः । च । सोमैः ॥ १ ॥

**वेङ्कट०** आसनस्थानम् तव इन्द्र! सदनार्थम् कृतम् । तम्[१] योनिम् आ प्र याहि पुरुहूत! [२]मरुद्भिः। भवसि[२] यथा अस्माकं रक्षिता, वर्धनाय च ददासि धनानि, माद्यसि च[३] सोमैः ॥ १ ॥

गृभीतं ते मन इन्द्र द्विबर्हाः सुतः सोमः परिषिक्ता मधूनि ।
विसृष्टधेना भरते सुवृक्तिरियमिन्द्रं जोहुवती मनीषा ॥ २ ॥

गृभीतम् । ते । मनः । इन्द्र । द्विऽबर्हाः । सुतः । सोमः । परिऽसिक्ता । मधूनि ।
विसृष्टऽधेना । भरते । सुऽवृक्तिः । इयम् । इन्द्रम् । जोहुवती । मनीषा ॥ २ ॥

**वेङ्कट०** गृहीतम् अस्माभिः तव इन्द्र! मनः द्वयोः स्थानयोः परिवृढम् । सुतः च सोमः। ततः परितः पात्रेषु च सिक्तानि मधूनि । विसृष्टवाक्[४] इन्द्राय हविः विभक्त्री[५] सुप्रवृत्ता इयम् इन्द्रम् भृशमाह्वयन्ती स्तुतिः वाणी[६] देवेभ्यो हव्यं वहति ॥ २ ॥

आ नो दिव आ पृथिव्या ऋजीषिन्निदं बर्हिः सोमपेयाय याहि ।
वहन्तु त्वा हरयो मद्र्यञ्चमाङ्गूषमच्छा तवसं मदाय ॥ ३ ॥

आ । नः । दिवः । आ । पृथिव्याः । ऋजीषिन् । इदम् । बर्हिः । सोमऽपेयाय । याहि ।
वहन्तु । त्वा । हरयः । मद्र्यञ्चम् । आङ्गूषम् । अच्छ । तवसम् । मदाय ॥ ३ ॥

**वेङ्कट०** आ याहि अस्माकम् इदम् बर्हिः पृथिव्याः दिवः वा सोमपानाय तृतीयसवनस्थेन[७] [८]ऋजीषेण तद्वन्![८] । वहन्तु त्वा हरयः मदभिमुखं स्तोमं प्रति प्रवृद्धं तव मदार्थम् ॥ ३ ॥

आ नो विश्वाभिरूतिभिः सजोषा ब्रह्म जुषाणो हर्यश्व याहि ।
वरीवृजत् स्थविरेभिः सुशिप्रास्मे दधद् वृषणं शुष्ममिन्द्र ॥ ४ ॥

आ । नः । विश्वाभिः । ऊतिऽभिः । सऽजोषाः । ब्रह्म । जुषाणः । हरिऽअश्व । याहि ।
वरीवृजत् । स्थविरेभिः । सुऽशिप्र । अस्मे इति । दधत् । वृषणम् । शुष्मम् । इन्द्र ॥ ४ ॥

**वेङ्कट०** आ याहि अस्मान् विश्वैः मरुद्भिः सङ्गतः स्तुतिम् सेवमानः हर्यश्व! हिंसन् स्थविरैः मरुद्भिः शत्रून् हे सुहनो![९] अस्मासु दधत् कामानां वर्षितृ बलम् इन्द्र![१०] ॥ ४ ॥

---

१. तद् मूको. २. त्रुटितम् वि[२] अ[१]. ३. इव मूको. ४. °ष्टवान् वि[२]; विसपष्ट° अ[१]. ५. °भक्ती मूको; विभजति ल प्रस्तावः. ६. वापि मूको. ७. °नरथेव···ल लभ. ८-८. °ण··· वि[२] अ[१]; °जिषेण···द्वत् ल लभ. ९. सुमनो मूको. १०. इन्द्रः मूको.

एष स्तोमो मह उग्राय वाहे धुरीऽवात्यो न वाजयन्नधायि ।
इन्द्र त्वायमर्क ईट्टे वसूनां दिवीव द्यामधि नः श्रोमतं धाः ॥ ५ ॥

एषः । स्तोमः । महे । उग्राय । वाहे । धुरिऽइव । अत्यः । न । वाजयन् । अधायि ।
इन्द्र । त्वा । अयम् । अर्कः । ईट्टे । वसूनाम् । दिविऽइव । द्याम् । अधि । नः । श्रोमतम् । धाः ॥५॥

**वेङ्कट०** एषः स्तोमः महते [1]उद्गूर्णाय वहनार्थं[1] रथस्य धुरि इव अश्वः [2]वाजयन् जयं[2] कुर्वन् अधायि युक्तः । इन्द्र! त्वा अयम् स्तोता स्तौति धनानामर्थाय[3] । [4]दिवि इव[4] आदित्यम् अस्मान् अधि श्रयणीयमन्नं धेहि ॥ ५ ॥

एवा न इन्द्र वार्यस्य पूर्धि प्र ते महीं सुमतिं वेविदाम ।
इषं पिन्व मघवद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । नः । इन्द्र । वार्यस्य । पूर्धि । प्र । ते । महीम् । सुऽमतिम् । वेविदाम ।
इषम् । पिन्व । मघवत्ऽभ्यः । सुऽवीराम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

**वेङ्कट०** एवम् अस्माकम् इन्द्र! वरणीयं धनम् पूरय । प्रकर्षेण जानीमो वयं त्वदीयाम्[5] सुमतिम् । प्रयच्छ अन्नम् हविष्मद्भ्यः सुपुत्रमिति ॥ ६ ॥

[6]इति पञ्चमाष्टके तृतीयाध्याये अष्टमो वर्गः[6] ॥

## [ २५ ]

[6]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[6] ।

आ ते मह इन्द्रोत्युग्र समन्यवो यत् समरन्त सेनाः ।
पताति दिद्युन्नर्यस्य बाह्वोर्मा ते मनो विष्वद्र्यग्वि चारीत् ॥ १ ॥

आ । ते । महः । इन्द्र । ऊती । उग्र । सऽमन्यवः । यत् । सम्ऽअरन्त । सेनाः ।
पताति । दिद्युत् । नर्यस्य । बाह्वोः । मा । ते । मनः । विष्वद्र्यक् । वि । चारीत् ॥ १ ॥

**वेङ्कट०** आ समरन्त[7] । तव[8] महतः[8] । [9]मा तव[9] मनः शत्रुदर्शनेन विष्वगञ्चनम्[10] वि चरतु ॥ १ ॥

नि दुर्ग इन्द्र श्नथिह्यमित्रानभि ये नो मर्तासो अमन्ति ।
आरे तं शंसं कृणुहि निनित्सोरा नो भर संभरणं वसूनाम् ॥ २ ॥

---

१-१. °ये हना° वि[1] अ[1]; °र्णा वेह° ल लअ. २-२. °य स जयत् अ[1] लअ. ३. धनोना° मूको.
४. दिविव मूको. ५. तदी[1] अ[1]. ६-६. नास्ति मूको. ७. समरं तत अ[1]; समन्ततः वि[1].
८. नास्ति वि[1] अ[1]. ९. नास्ति ल लअ. १०. विश्वग° मूको.

नि । दुःऽगे । इन्द्र । श्नथिहि । अमित्रान् । अभि । ये । नः । मर्तासः । अमन्ति ।
आरे । तम् । शंसम् । कृणुहि । निनित्सोः । आ । नः । भर । सम्ऽभरणम् । वसूनाम् ॥ २ ॥

**वेङ्कट०** दुर्गे युद्धे नितराम् श्नथिहि अमित्रान् इन्द्र! अभि हिंसन्ति[1] ये अस्मान् मनुष्याः । दूरे तद् अभिशंसनम् कुरु[2] निन्दितुमिच्छतः । आ हर अस्मभ्यम् वसूनाम् सम्भर्तारम् ॥ २ ॥

शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु ।
जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि ॥ ३ ॥

शतम् । ते । शिप्रिन् । ऊतयः । सुऽदासे । सहस्रम् । शंसाः । उत । रातिः । अस्तु ।
जहि । वधः । वनुषः । मर्त्यस्य । अस्मे इति । द्युम्नम् । अधि । रत्नम् । च । धेहि ॥ ३ ॥

**वेङ्कट०** शतम् ते शिप्रिन्! ऊतयः शोभनदानाय, सहस्रम् च शंसनीयाः ऊतयः सन्तु, अपि च दानम् । जहि आयुधम् हन्तुः[3] मनुष्यस्य । अस्मासु अन्नम् रत्नम् च [4]अधि धेहि[4] ॥ ३ ॥

त्वावतो हीन्द्र क्रत्वे अस्मि त्वावतोऽवितुः शूर रातौ ।
विश्वेदहानि तविषीव उग्रँ ओकः कृणुष्व हरिवो न मर्धीः ॥ ४ ॥

त्वाऽवतः । हि । इन्द्र । क्रत्वै । अस्मि । त्वाऽवतः । अवितुः । शूर । रातौ ।
विश्वा । इत् । अहानि । तविषीऽवः । उग्र । ओकः । कृणुष्व । हरिऽवः । न । मर्धीः ॥४॥

**वेङ्कट०** त्वत्सदृशस्य हि इन्द्र! कर्मणे[5] भवामि, न न्यूनगुणस्य । तथा त्वावतः रक्षितुः शूर! दाने भवामि[6] । विश्वानि एव अहानि हे [7]बलवन्! उद्गूर्ण![7] सेवाम् कुरुष्व । हरिवः! मा अस्मान् हिंसीः[8] ॥ ४ ॥

कुत्सा एते हर्यश्वाय शूषमिन्द्रे सहो देवजूतमियानाः ।
सत्रा कृधि सुहना शूर वृत्रा वयं तरुत्राः सनुयाम वाजम् ॥ ५ ॥

कुत्साः । एते । हरिऽअश्वाय । शूषम् । इन्द्रे । सहः । देवऽजूतम् । इयानाः ।
सत्रा । कृधि । सुऽहना । शूर । वृत्रा । वयम् । तरुत्राः । सनुयाम । वाजम् ॥ ५ ॥

**वेङ्कट०** स्तोमानां[9] कर्तारः एते हर्यश्वाय इन्द्राय सुखकरम् स्तोममुच्चारयन्ति इन्द्रे बलं देवेन प्रेरितम् गच्छन्तः । बहूनि वृत्राणि सुहनानि कुरु हे शूर! । वयम् दुःखादुत्तीर्णाः[10] लभेमहि अन्नम् ॥ ५ ॥

---

१. °सति मूको. २. कुत्र मूको. ३. हर्तुः वि[2] अ[1]. ४-४. अनिरेहि मूको. ५. कर्मणो वि[2] अ[1] ल; कर्मणैः लअ. ६. ह्यामि मूको. ७-७. °वत्तदगू° वि[2]; °वँस्तद्गू° अ[1]; °वन्तूद्गू° ल लअ. ८. हिंसि मूको. ९. °ना अ[1] लअ. १०. °र्णा भवेम अ[1].

एवा नं इन्द्र वार्यस्य पूर्धि प्र ते मुहीं सुमतिं वेविदाम ।
इषं पिन्व मुघवंद्भ्यः सुवीरां यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । नः । इन्द्र । वार्यस्य । पूर्धि । प्र । ते । मुहीम् । सुऽमृतिम् । वेविदाम ।
इषम् । पिन्व । मुघवंत्ऽभ्यः । सुऽवीराम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

**वेङ्कट०** ऋ ७,२४,६ द्र. ॥ ६ ॥

[1]इति पञ्चमाष्टके तृतीयाध्याये नवमो वर्गः[1] ॥

[ २६ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः[1] ।

न सोम इन्द्रमसुतो ममाद नाब्रह्माणो मुघवानं सुतासः ।
तस्मा उक्थं जनये यज्जुजोषन्नृवन्नवीयः शृणवद् यथा नः ॥ १ ॥

न । सोमः । इन्द्रम् । असुतः । ममाद । न । अब्रह्माणः । मुघऽवानम् । सुतासः ।
तस्मै । उक्थम् । जनये । यत् । जुजोषत् । नृऽवत् । नवीयः । शृणवत् । यथा । नः ॥ १ ॥

**वेङ्कट०** न सोमः इन्द्रम् असुतः[2] तर्पयति[3] । न अमहान्तः[4] मघवानम् सुताः अपि मदयन्ति । तस्मै उक्थम् जनयामि, यदि सेवते, मनुष्यराजवत् नवतरम् उक्थम् शृणुयात् यथा अस्मदीयम् ॥ १ ॥

उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मुघवानं सुतासः ।
यदीं सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते ॥ २ ॥

उक्थेऽउक्थे । सोमः । इन्द्रम् । ममाद । नीथेऽनीथे । मुघऽवानम । सुतासः ।
यत् । ईम् । सऽबाधः । पितरम् । न । पुत्राः । समानऽदक्षाः । अवसे । हवन्ते ॥ २ ॥

**वेङ्कट०** शस्त्रेशस्त्रे सोमः इन्द्रम् मादयति[5], नयनेनयने[6] मघवानम् सुताः तर्पयन्ति, यदि[7] एनं बाधासहिताः ( तु. निघ ३,१८ )[8] पितरम् इव पुत्राः समानोत्साहाः सङ्गताः रक्षणाय हवन्ते[9] ॥ २ ॥

चकार ता कृणवन्नूनमन्या यानि ब्रुवन्ति वेधसः सुतेषु ।
जनीरिव पतिरेकः समानो नि मामृजे पुर इन्द्रः सु सर्वाः ॥ ३ ॥

चकार । ता । कृणवत् । नूनम् । अन्या । यानि । ब्रुवन्ति । वेधसः । सुतेषु ।
जनीःऽइव । पतिः । एकः । समानः । नि । ममृजे । पुरः । इन्द्रः । सु । सर्वाः ॥ ३ ॥

---

१-१. नास्ति मूको. २. असु वि[2] अ[1]; असुः ल लअ. ३. °यन्ति मूको. ४. °हन्तः मूको. ५. मा वि[2] अ[1]; मान्ति ल लअ. ६. नयनेन लअ; नयनेनयेन अन्यत्र. ७. यथा अ[1]. ८. तु. वैप १, ३२७६ h. ९. वहन्ते मूको.

**वेङ्कट०** चकार तानि कर्माणि वृत्रवधादीनि, करोति च सम्प्रति अन्यानि, यानि ब्रुवन्ति **विधातारः** सुतेषु सोमेषु। यथा एकः साधारणः पतिः बह्वीर्जायाः उपगच्छति, एवं सुष्ठु निः मार्ष्टि[1] विनाशयति[2] शत्रूणां पुरीः[3] एक एव सर्वाः इति ॥ ३ ॥

एवा तमाहुरुत शृण्व इन्द्र एको विभक्ता तरणिर्मघानाम् ।
मिथस्तुर ऊतयो यस्य पूर्वीरस्मे भद्राणि सश्चत प्रियाणि ॥ ४ ॥

एव । तम् । आहुः । उत । शृण्वे । इन्द्रः । एकः । विऽभक्ता । तरणिः । मघानाम् ।
मिथःऽतुरः । ऊतयः । यस्य । पूर्वीः । अस्मे इति । भद्राणि । सश्चत । प्रियाणि ॥ ४ ॥

**वेङ्कट०** एवम् तम् आहुः, अपि च श्रूयते — इन्द्रः एकः एव विभक्ता धनानाम् तारकः। मिथस्तुरः इतरेतरं बाधमानानि निबिडानि[4] ऊतयः पालनानि यस्य बहूनि, तस्य प्रियाणि[5] भद्राणि अस्मासु[6] सक्तानीति ॥ ४ ॥

एवा वसिष्ठ इन्द्रमूतये नॄन् कृष्टीनां वृषभं सुते गृणाति ।
सहस्रिण उप नो माहि वाजान् यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

एव । वसिष्ठः । इन्द्रम् । ऊतये । नॄन् । कृष्टीनाम् । वृषभम् । सुते । गृणाति ।
सहस्रिणः । उप । नः । माहि । वाजान् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** एवम् वसिष्ठः इन्द्रम् रक्षणाय नृणाम् मनुष्याणाम् वर्षितारम् सुते सोमे स्तौति। सहस्रसङ्ख्यानि अन्नानि अस्माकम् उप मिमीहि समीपे कुरु ॥ ५ ॥

[7]इति पञ्चमाष्टके तृतीयाध्याये दशमो वर्गः[7] ॥

## [ २७ ]

[7]वसिष्ठो मैत्रावरुणिर्ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[7]।

इन्द्रं नरो नेमधिता हवन्ते यत् पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥ १ ॥

इन्द्रम् । नरः । नेमऽधिता । हवन्ते । यत् । पार्याः । युनजते । धियः । ताः ।
शूरः । नृऽसाता । शवसः । चकानः । आ । गोऽमति । व्रजे । भज । त्वम् । नः ॥ १ ॥

**वेङ्कट०** इन्द्रम् मनुष्याः सङ्ग्रामे हवन्ते, यदा युद्धतरणनिमित्तानि कर्माणि युञ्जते तानितानि। शूरः नृषु सम्भक्ता[8] बलस्य तृप्तः प्रापय गोमति व्रजे अस्मान् त्वम् इति ॥ १ ॥

---

१. मावष्टि मूको. २. विन्दाश° वि[२] अ[१] लअ. ३. धुरी मूको. ४. बिडा मूको. ५. मित्राणि वि[२]. ६. °सुषु लअ. ७-७. नास्ति मूको. ८. संमर्ता वि[२] अ[१].

य इन्द्र शुष्मो मघवन् ते अस्ति शिक्षा सखिभ्यः पुरुहूत नृभ्यः ।
त्वं हि ळ्हा मघवन् विचेता अपा वृधि परिवृतं न राधः ॥ २ ॥

यः । इन्द्र । शुष्मः । मघऽवन् । ते । अस्ति । शिक्ष । सखिऽभ्यः । पुरुऽहूत । नृऽभ्यः ।
त्वम् । हि । दृळ्हा । मघऽवन् । विऽचेताः । अप । वृधि । परिऽवृतम् । न । राधः ॥ २ ॥

**वेङ्कट०** यत् इन्द्र! बलम् मघवन्! तव अस्ति[1], तत् प्रयच्छ सखिभ्यः नृभ्यः पुरुहूत! । त्वम् हि दृढान्यपि पुराणि शत्रूणां मृद्नासि[2] मघवन्! विचेताः । तथा सति अप वृधि विवृतद्वारं कुरु परिवृतम् इव अपवरकादिकं धनं शत्रुपुरेषु स्थितम् ॥ २ ॥

इन्द्रो राजा जगतश्चर्षणीनामधि क्षमि विषुरूपं यदस्ति ।
ततो ददाति दाशुषे वसूनि चोदद् राध उपस्तुतश्चिदर्वाक् ॥ ३ ॥

इन्द्रः । राजा । जगतः । चर्षणीनाम् । अधि । क्षमि । विषुऽरूपम् । यत् । अस्ति ।
ततः । ददाति । दाशुषे । वसूनि । चोदत् । राधः । उपऽस्तुतः । चित् । अर्वाक् ॥ ३ ॥

**वेङ्कट०** इन्द्रः राजा चतुष्पदः द्विपदां च, पृथिव्यां नानारूपम् यत् अस्ति तस्य च सर्वस्य राजा । ततः प्रयच्छति दाशुषे वसूनि । सम्प्रति च चोदयति धनम् उपस्तुतः[3] अस्मदभिमुखम् ॥ ३ ॥

नू चिन्न इन्द्रो मघवा सहूती दानो वाजं नि यमते न ऊती ।
अनूना यस्य दक्षिणा पीपाय वामं नृभ्यो अभिवीता सखिभ्यः ॥ ४ ॥

नु । चित् । नः । इन्द्रः । मघऽवा । सऽहूती । दानः । वाजम् । नि । यमते । नः । ऊती ।
अनूना । यस्य । दक्षिणा । पीपाय । वामम् । नृऽभ्यः । अभिऽवीता । सखिऽभ्यः ॥ ४ ॥

**वेङ्कट०** क्षिप्रम् अस्माकम् इन्द्रः धनवान्[4] मरुद्गणेन सहितः ददानः[5] अन्नं नियमेन प्रयच्छतु अस्माकम् रक्षणाय । अन्यूनम् यस्य दानम् वर्धयति वननीयं[6] कामम् नृभ्यः अभिकान्तम्[7] सखिभ्यः ॥ ४ ॥

नू इन्द्र राये वरिवस्कृधी न आ ते मनो ववृत्याम मघाय ।
गोमदश्वावद् रथवद् व्यन्तो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

नु । इन्द्र । राये । वरिवः । कृधि । नः । आ । ते । मनः । ववृत्याम । मघाय ।
गोऽमत् । अश्वऽवत् । रथऽवत् । व्यन्तः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

---

१. अस्मि ल लभ. २. मृत्नानि मूको. ३. उपस्थित वि[2] अ[1]. ४. °वन् वि[2] अ[1] ल; धनं लभ. ५. दधानः अ[1]. ६. वनीयं मूको. ७. अहिका° मूको.

वेङ्कट० क्षिप्रम् इन्द्र! अस्माकं परिचरणं धनाय कुरु। परिचरणेन प्रीतो धनं प्रयच्छ। तव मनः वयं धनाय आ वर्तयामः गोमत् अश्ववत् रथवत् च धनं कामयमानाः ॥ ५ ॥

[1]इति पञ्चमाष्टके तृतीयाध्याये एकादशो वर्गः[1] ॥

[ २८ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः। इन्द्रो देवता। त्रिष्टुप् छन्दः[1]।

ब्रह्मा॑ ण इन्द्रोप॑ याहि विद्वान॒र्वाञ्च॑स्ते॒ हर॑यः सन्तु यु॒क्ताः ।
विश्वे॑ चि॒द्धि त्वा॑ वि॒हव॑न्त॒ मर्ता॑ अ॒स्माक॒मिच्छृ॑णुहि विश्वमिन्व ॥ १ ॥

ब्रह्म॑ । नः॒ । इ॒न्द्र॒ । उप॑ । या॒हि॒ । वि॒द्वान् । अ॒र्वाञ्चः॑ । ते॒ । हर॑यः । स॒न्तु॒ । यु॒क्ताः ।
विश्वे॑ । चि॒त् । हि । त्वा॒ । वि॒ऽहव॑न्त । मर्ताः॑ । अ॒स्माक॑म् । इत् । शृ॒णु॒हि॒ । वि॒श्व॒म्ऽइ॒न्व॒ ॥१॥

वेङ्कट० स्तोत्रम् इन्द्र! अस्माकम् उप गच्छ जानन्। अभिमुखाः ते अश्वाः सन्तु रथे युक्ताः। सर्वे अपि त्वा विविधमाह्वयन्ति मनुष्याः। अस्माकम् एव स्तुतिम् शृणु हे विश्वस्य प्रीणयितः! ॥ १ ॥

हवं॑ त इन्द्र महि॒मा व्या॑न॒ड् ब्रह्म॒ यत् पासि॑ शवसिन्नृषी॑णाम् ।
आ यद् वज्रं॑ दधि॒षे हस्त॑ उग्र घो॒रः सन् क्रत्वा॑ जनिष्ठा॒ अषा॑ळ्हः ॥ २ ॥

हव॑म् । ते॒ । इ॒न्द्र॒ । म॒हि॒मा । वि । आ॒न॒ट् । ब्रह्म॑ । यत् । पासि॑ । श॒व॒सि॒न् । ऋषी॑णाम् ।
आ । यत् । वज्र॑म् । द॒धि॒षे । हस्ते॑ । उ॒ग्र॒ । घो॒रः । सन् । क्रत्वा॑ । ज॒नि॒ष्ठाः॒ । अषा॑ळ्हः ॥२॥

वेङ्कट० ह्वानम् ते इन्द्र! महिमा व्याप्नोति। स्तोता महिमानमेतीत्यर्थः। यस्मात् त्वं बलवन्! ऋषीणाम् स्तोत्रं धनप्रदानेन रक्षसि। यस्मात् च शत्रूणां हननाय वज्रम् धारयसि हस्ते [2]उद्गूर्ण! । स त्वम्[2] घोरः सन् कर्मणैव शत्रुभिः असोढा जातः ॥ २ ॥

तव॒ प्रणी॑तीन्द्र॒ जोहु॑वाना॒न्त्सं यन्नॄन् न रोद॑सी नि॒नेथ॑ ।
म॒हे क्ष॒त्राय॒ शव॑से॒ हि ज॒ज्ञेऽतू॑तुजिं चि॒त् तूतु॑जिरशिश्नत् ॥ ३ ॥

तव॑ । प्रऽनी॑ती । इ॒न्द्र॒ । जोहु॑वानान् । सम् । यत् । नॄन् । न । रोद॑सी॒ इति॑ । नि॒नेथ॑ ।
म॒हे । क्ष॒त्राय॑ । शव॑से । हि । ज॒ज्ञे । अतू॑तुजिम् । चि॒त् । तूतु॑जिः । अ॒शि॒श्न॒त् ॥ ३ ॥

वेङ्कट० तव प्रणयनेन इन्द्र! स्तोतॄन् सदा त्वम् सम् नयसि नरान् इव वृष्ट्यान्नप्रदानेन[3] द्यावापृथिव्यौ। तदानीं सोऽयमिन्द्रो महते बलाय वेगाय च प्रादुर्भूतश्च [4]अप्रयच्छन्तम् अयजमानम् श्नथयति[4] स्वयं स्तोतृभ्यः प्रयच्छन्निति ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. उत् ··· वि[2] अ[1]. ३. पृष्ठ्यान्न° लक्ष. ४-४. अप्रायच्छन्त ··· थ वि[2] अ[1].

ए॒भिर्न॑ इन्द्राह॑भिर्दशस्य दु॒र्मि॒त्रासो॒ हि क्षि॒तय॒: पव॑न्ते ।
प्रति॒ यच्चष्टे॒ अनृ॑तमने॒ना अव॑ द्वि॒ता वरु॑णो मा॒यी न॑: सात् ॥ ४ ॥

ए॒भिः । न॒ः । इ॒न्द्र॒ । अह॑ऽभिः । द॒श॒स्य॒ । दुः॒ऽमि॒त्रास॑ः । हि । क्षि॒तय॑ः । पव॑न्ते ।
प्रति॑ । यत् । चष्टे॑ । अनृ॑तम् । अ॒ने॒नाः । अव॑ । द्वि॒ता । वरु॑णः । मा॒यी । न॒ः । सा॒त् ॥ ४ ॥

**वेङ्कट०** एभिः अस्मभ्यम् इन्द्र! अहोभिः प्रीतः प्रयच्छ धनं विजयाय। बाधकाः हि मनुष्याः अभिगच्छन्ति अस्मान्। यत् अनृतम् अस्मासु इन्द्र! प्रति पश्यति, तद् अस्माकम् अनृतम् अनेनाः प्रज्ञावान् वरुणः द्वैधम्[1] [2]अव स्यतु[2] विश्रथयत्विति ॥ ४ ॥

वो॒चेमेदिन्द्रं॑ म॒घवा॑नमेनं म॒हो रा॒यो राध॑सो॒ यद् दद॑न्नः ।
यो अर्च॑तो॒ ब्रह्म॑कृति॒मवि॑ष्ठो यू॒यं पा॑त स्व॒स्तिभि॒: सदा॑ नः ॥ ५ ॥

वो॒चेम॑ । इत् । इन्द्र॑म् । म॒घऽवा॑नम् । ए॒न॒म् । म॒हः । रा॒यः । राध॑सः । यत् । दद॑त् । न॒ः ।
यः । अर्च॑तः । ब्रह्म॑ऽकृतिम् । अवि॑ष्ठः । यू॒यम् । पा॒त । स्व॒स्तिऽभि॑ः । सदा॑ । न॒ः ॥ ५ ॥

**वेङ्कट०** स्तुयाम एव[3] धनवन्तम् एनम् इन्द्रम्, महत् धनम् अन्नं च यस्माद् अस्मभ्यं प्रयच्छति, यः स्तुवतः[4] स्तोत्रकृतिम् अतिशयेन रक्षिता ॥ ५ ॥

[5]इति पञ्चमाष्टके तृतीयाध्याये द्वादशो वर्गः[5] ॥

## [ २९ ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[5] ।

अ॒यं सोम॑ इन्द्र॒ तुभ्यं॑ सुन्व॒ आ तु प्र या॑हि हरिव॒स्तदो॑काः ।
पिबा॒ त्व१॒॑स्य सुषु॑तस्य॒ चारो॒र्ददो॑ म॒घानि॑ मघवन्निया॒नः ॥ १ ॥

अ॒यम् । सोम॑ः । इ॒न्द्र॒ । तुभ्य॑म् । सु॒न्वे॒ । आ । तु । प्र । या॒हि॒ । ह॒रि॒ऽव॒ः । तत्ऽओ॑काः ।
पिब॑ । तु । अ॒स्य । सुऽसु॑तस्य । चारो॑ः । दद॑ः । म॒घानि॑ । म॒घ॒ऽव॒न् । इ॒या॒नः ॥ १ ॥

**वेङ्कट०** अयम् सोमः इन्द्र! तुभ्यम् सुन्वे। क्षिप्रम् आ प्र याहि हरिवः! सोमनिलयः। पिब क्षिप्रम् अमुं सुतम् चारुम्[6]। प्रयच्छ धनानि मघवन्! अभिगम्यमानः[7] ॥ १ ॥

ब्रह्म॑न् वीर॒ ब्रह्म॑कृतिं जुषा॒णो॑ऽर्वाची॒नो हरि॑भिर्याहि॒ तूय॑म् ।
अ॒स्मिन्नू॒ षु सव॑ने मादय॒स्वोप॒ ब्रह्मा॑णि शृणव इ॒मा न॑ः ॥ २ ॥

---

१. वैधवम् वि[2] अ[1]; वैधम् ल लअ. २-२. अस्यतु मूको. ३. वै वि[2] अ[1]; इव अन्यत्र. ४. स्तुवत मूको. ५-५. नास्ति मूको. ६. चारो वि[2]; चारोः ल; चारां अ[1] लअ. ७. °मान मूको.

ब्रह्मन् । वीर । ब्रह्मऽकृतिम् । जुषाणः । अर्वाचीनः । हरिऽभिः । याहि । तूयम् ।
अस्मिन् । ऊँ इति । सु । सवने । मादयस्व । उप । ब्रह्माणि । शृणवः । इमा । नः ॥ २ ॥

**वेङ्कट०** हे परिवृढ! वीर! स्तोत्रकृतिम् सेवमानः अभिमुखः[1] अश्वैः याहि क्षिप्रम् । अस्मिन् सवने सुष्ठु मादयस्व[2] । उप शृणु ब्रह्माणि च इमानि अस्माकम् ॥ २ ॥

**का ते अस्त्यरंकृतिः सूक्तैः कदा नूनं ते मघवन् दाशेम ।**
**विश्वा मतीरा ततने त्वायाधा म इन्द्र शृणवो हवेमा ॥ ३ ॥**

का । ते । अस्ति । अरम्ऽकृतिः । सुऽउक्तैः । कदा । नूनम् । ते । मघऽवन् । दाशेम ।
विश्वाः । मतीः । आ । ततने । त्वाऽया । अध । मे । इन्द्र । शृणवः । हवा । इमा ॥ ३ ॥

**वेङ्कट०** का ते भवति सूक्तैः अलङ्कृतिः । कदा क्षिप्रमेव मघवन्! तुभ्यम् हवींषि दाशेम । विश्वाः स्तुतीः विस्तारयामि[3] । [4]त्वत्कामनया अथ[4] मे इन्द्र! शृणु[5] हवानि इमानि ॥ ३ ॥

**उतो घा ते पुरुष्या३ इदासन् येषां पूर्वेषामशृणोर्ऋषीणाम् ।**
**अधाहं त्वा मघवञ्जोहवीमि त्वं न इन्द्रासि प्रमतिः पितेव ॥ ४ ॥**

उतो इति । घ । ते । पुरुष्याः । इत् । आसन् । येषाम् । पूर्वेषाम् । अशृणोः । ऋषीणाम् ।
अध । अहम् । त्वा । मघऽवन् । जोहवीमि । त्वम् । नः । इन्द्र । असि । प्रऽमतिः । पिताऽइव ॥

**वेङ्कट०** अपि च खलु ते पुरुषहिताः[6] एव[7] प्रवृत्तयः आसन्, येषाम् पूर्वेषाम्[8] ऋषीणाम् स्तुतीः अशृणोः । अथ अहम् [9]त्वाम् मघवन्![9] जोहवीमि । त्वम् अस्माकम् इन्द्र! भवसि प्रकृष्टमतिः पिता इव पुत्राणाम्[10] ॥ ४ ॥

**वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद् ददन्नः ।**
**यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥**

वोचेम । इत् । इन्द्रम् । मघवानम् । एनम् । महः । रायः । राधसः । यत् । ददत् । नः ।
यः । अर्चतः । ब्रह्मऽकृतिम् । अविष्ठः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** ऋ ७,२८,५ द्र. ॥ ५ ॥

[11]इति पञ्चमाष्टके तृतीयाध्याये त्रयोदशो वर्गः[11] ॥

---

१. °खं वि[२] अ[१] लभ. २. मादाय वि[२]; मादायस अ[१] ल लभ. ३. वितारयामि वि[२] अ[१]. ४-४. °मय था मूको. ५. °णु हि मूको. ६. हितं अ[१] वि[२]. ७. एवा अ[१] लभ. ८. सर्वेषाम् वि[२] अ[१] ल; आर्षेषाम् लभ. ९-९. त्वाम् मघवंश्च वि[२] अ[१]; त्वाम् अघवंश्च ल लभ. १०. °णाम् अग्नावेव वि[२]; °णाम् आग्नादेव अ[१] ११-११. नास्ति मूको.

[ ३० ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः[1] ।

आ नो देव शवसा याहि शुष्मिन् भवा वृध इन्द्र रायः अस्य ।
महे नृम्णाय नृपते सुवज्र महि क्षत्राय पौंस्याय शूर ॥ १ ॥

आ । नः । देव । शवसा । याहि । शुष्मिन् । भव । वृधः । इन्द्र । रायः । अस्य ।
महे । नृम्णाय । नृऽपते । सुऽवज्र । महि । क्षत्राय । पौंस्याय । शूर ॥ १ ॥

वेङ्कट० आ याहि देव! बलेन [2]सह अस्मान् बलवन्!† । भव[2] वर्धकः इन्द्र! धनस्य अस्य[3] महते धनाय हे नृणां पते! सुवज्र! महते बलाय वीर्यकरणाय च शूर! ॥ १ ॥

हवन्त उ त्वा हव्यं विवाचि तनूषु शूराः सूर्यस्य सातौ ।
त्वं विश्वेषु सेन्यो जनेषु त्वं वृत्राणि रन्धया सुहन्तु ॥ २ ॥

हवन्ते । ऊँ इति । त्वा । हव्यम् । विऽवाचि । तनूषु । शूराः । सूर्यस्य । सातौ ।
त्वम् । विश्वेषु । सेन्यः । जनेषु । त्वम् । वृत्राणि । रन्धय । सुऽहन्तु ॥ २ ॥

वेङ्कट० हवन्ते एव त्वा हवनीयम् विविधवाचि सङ्ग्रामे तनूनां रक्षणार्थं शूराः सूर्यस्य भजनार्थं च अमरणार्थं च । त्वम् विश्वेषु अपि जनेषु सेनार्हः । त्वम् शत्रून् वशीकुरु शोभनहननेन वज्रेण ॥ २ ॥

अहा यदिन्द्र सुदिना व्युच्छान् दधो यत् केतुमुपमं समत्सु ।
न्य१ग्निः सीददसुरो न होता हुवानो अत्र सुभगाय देवान् ॥ ३ ॥

अहा । यत् । इन्द्र । सुऽदिना । विऽउच्छान् । दधः । यत् । केतुम् । उपऽमम् । समत्ऽसु ।
नि । अग्निः । सीदत् । असुरः । न । होता । हुवानः । अत्र । सुऽभगाय । देवान् ॥ ३ ॥

वेङ्कट० अहानि यदा इन्द्र! सुदिनानि व्युच्छन्ति[4] । करोषि च यदा प्रज्ञानम् उदितः सन् स्वतेजसान्तिकं सङ्ग्रामेषु । उदित आदित्ये सङ्ग्रामाः प्रवर्तन्ते । तदानीं सङ्ग्रामे विजयार्थं कर्म कुर्वाणानां[5] यजमानानाम् अग्निः नि सीदति यज्ञेषु प्राज्ञः इव होता ह्वयन् अस्मिन् लोके सौभगत्वाय[6] युद्धे जयार्थम् च देवान् ॥ ३ ॥

वयं ते त इन्द्र ये च देव स्तवन्त शूर ददतो मघानि ।
यच्छा सूरिभ्य उपमं वरूथं स्वाभुवो जरणामश्नवन्त ॥ ४ ॥

---

१-१. नास्ति मूको. २-२. °ह स्म···भ° वि[2] अ[1]. † बलवान् ल लभ. ३. अय वि[2] अ[1]; अयं ल लभ. ४. °न्ती वि[2] अ[1]. ५. °र्वाणा मूको. ६. °गतित्वा° वि[2] अ[1] ल; सौगतित्वा° लभ.

वयम् । ते । ते । इन्द्र । ये । च । देव । स्तवन्त । शूर । दर्दतः । मघानि ।
यच्छ । सूरिऽभ्यः । उपऽमम् । वरूथम् । सुऽआभुवः । जरणाम् । अश्नवन्त ॥ ४ ॥

वेङ्कट० ते वयम् तव स्वभूताः इन्द्र!, ये च देव! स्तुवन्ति शूर! ददतः तव हवींषि, तेभ्योऽस्मभ्यमुभयेभ्यः प्र यच्छ स्तोतृभ्यः उपमानभूतम् गृहम्। शोभनभवनाः [1]तव स्तुतिं व्याप्नुवन्तु[1] ॥ ४ ॥

वोचेमेदिन्द्रं मघवानमेनं महो रायो राधसो यद् ददन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठो यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

वोचेम । इत् । इन्द्रम् । मघऽवानम् । एनम् । महः । रायः । राधसः । यत् । ददत् । नः ।
यः । अर्चतः । ब्रह्मऽकृतिम् । अविष्ठः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

वेङ्कट० ऋ ७,२८,५ द्र. ॥ ५ ॥

[2]इति पञ्चमाष्टके तृतीयाध्याये चतुर्दशो वर्गः[2] ॥

## [ ३१ ]

[2]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता । गायत्री छन्दः, दशम्यादिद्वादश्यन्ता विराजः[2] ।

प्र व इन्द्राय मादनं हर्यश्वाय गायत । सखायः सोमपाव्ने ॥ १ ॥

प्र । वः । इन्द्राय । मादनम् । हरिऽअश्वाय । गायत । सखायः । सोमऽपाव्ने ॥ १ ॥

वेङ्कट० प्र गायत यूयम् इन्द्राय मदकरं स्तोत्रम् हर्यश्वाय सखायः! सोमपाव्ने ॥ १ ॥

शंसेदुक्थं सुदानव उत द्युक्षं यथा नरः । चकृमा सत्यराधसे ॥ २ ॥

शंस । इत् । उक्थम् । सुऽदानवे । उत । द्युक्षम् । यथा । नरः । चकृम । सत्यऽराधसे ॥ २ ॥

वेङ्कट० [3]शंस एव उक्थम्[3] शोभनदानाय। अपि च[4] दीप्तं स्तोत्रम् यथा[5] अस्मै नरः कुर्वन्ति तथा[6] कुर्मः सत्यधनाय ॥ २ ॥

त्वं न इन्द्र वाजयुस्त्वं गव्युः शतक्रतो । त्वं हिरण्ययुर्वसो ॥ ३ ॥

त्वम् । नः । इन्द्र । वाजऽयुः । त्वम् । गव्युः । शतक्रतो इति शतऽक्रतो । त्वम् । हिरण्यऽयुः । वसो इति ॥

वेङ्कट० त्वम् अस्माकम् इन्द्र! अन्नकामः, त्वम् गोकामश्च शतक्रतो!, त्वम् हिरण्यकामश्च हे वासयितः![7] ॥ ३ ॥

---

१-१. तपस्तुवति व्याप्नुवन्ति वि[2]; तपस्तुवन्ति व्याप्नुवन्ति अ[1]. २-२. नास्ति मूको. ३-३. नास्ति वि[2] अ[1]. ४. यत् वि[2] अ[1]; य ल लअ, ५. यदि वा अ[1]. ६. तदा अ[1]. ७. यास° वि[2] अ[1] ल; या सहितो लअ.

वयमिन्द्र त्वायवोऽभि प्र णोनुमो वृषन् । विद्धी त्व१स्य नो वसो ॥ ४ ॥

वयम् । इन्द्र । त्वाऽयवः । अभि । प्र । नोनुमः । वृषन् । विद्धि । तु । अस्य । नः । वसो इति ॥४॥

**वेङ्कट०** वयम् इन्द्र! त्वत्कामाः त्वाम् अभि प्र स्तुमः [1]वर्षितः!। विद्धि क्षिप्रम्[1] वासयितः! तत् नः स्तोत्रम् ॥ ४ ॥

मा नो निदे च वक्तवेऽर्यो रन्धीरराव्णे । त्वे अपि क्रतुर्मम ॥ ५ ॥

मा । नः । निदे । च । वक्तवे । अर्यः । रन्धीः । अराव्णे । त्वे इति । अपि । क्रतुः । मम ॥ ५ ॥

**वेङ्कट०** मा अस्मान् निन्दित्रे पुरुषं[2] वक्त्रे च अर्यः त्वम् वशं नय[3] अदात्रे च। त्वय्येव च मम दानादिकं कर्म भवतु ॥ ५ ॥

त्वं वर्मासि सप्रथः पुरोयोधश्च वृत्रहन् । त्वया प्रति ब्रुवे युजा ॥ ६ ॥

त्वम् । वर्म । असि । सऽप्रथः । पुरःऽयोधः । च । वृत्रऽहन् । त्वया । प्रति । ब्रुवे । युजा ॥ ६ ॥

**वेङ्कट०** मम त्वम् कवचम् भवसि सर्वतः पृथुतमम् पुरोयोधः च हे शत्रुहन्!। त्वया सहायेन शत्रून् अहम् प्रति ब्रुवे ॥ ६ ॥

[4]इति पञ्चमाष्टके तृतीयाध्याये पञ्चदशो वर्गः[4] ॥

महाँ उतासि यस्य तेऽनु स्वधावरी सहः । मम्नाते इन्द्र रोदसी ॥ ७ ॥

महान् । उत । असि । यस्य । ते । अनु । स्वधावरी इति स्वधाऽवरी । सहः ।
मम्नाते इति । इन्द्र । रोदसी इति ॥ ७ ॥

**वेङ्कट०** अपि च त्वम् महान् भवसि, यस्य तव बलम् इन्द्र! बलवत्यौ द्यावापृथिव्यौ अनु मन्येते ॥ ७ ॥

तं त्वा मरुत्वती परि भुवद् वाणी सयावरी । नक्षमाणा सह द्युभिः ॥ ८ ॥

तम् । त्वा । मरुत्वती । परि । भुवत् । वाणी । सऽयावरी । नक्षमाणा । सह । द्युऽभिः ॥ ८ ॥

**वेङ्कट०** तम् त्वाम्[5] मरुद्भिः तद्वती परि अवसत्[6] स्तुतिः स्तोतृभ्यः सह निर्गच्छन्ती व्याप्नुवती दीप्तैः[7] मरुद्भिः सह ॥ ॥ ८ ॥

ऊर्ध्वासस्त्वान्विन्दवो भुवन् दस्ममुप द्यवि । सं ते नमन्त कृष्टयः ॥ ९ ॥

ऊर्ध्वासः । त्वा । अनु । इन्दवः । भुवन् । दस्मम् । उप । द्यवि । सम् । ते । नमन्त । कृष्टयः ॥

---

१-१. °र्षित ··· वि[१] अ[१]; 'र्षित द्वि क्षि° ल लअ. २. पुरुषं मूको. ३. तयो ल लअ; तयोः बि[१] अ[१]. ४-४. नास्ति मूको. ५. त्वा अ[१]. ६. °वसन् मूको. ७. त्वदीप्तैः मूको.

**वेङ्कट०** उन्मुखाः त्वां प्रति दस्मम् सोमाः [1]अभवन्। उप द्यवि[1] दीप्तस्याहवनीयस्य समीपे सम् नमन्ते तुभ्यम् मनुष्याः ॥ ९ ॥

प्र वो॑ म॒हे म॑हि॒वृधे॑ भरध्वं॒ प्रचे॑तसे॒ प्र सु॑म॒तिं कृ॑णुध्वम् ।
विशः॑ पू॒र्वीः प्र च॑रा चर्षणि॒प्राः ॥ १० ॥

प्र । वः॒ । म॒हे । म॒हि॒ऽवृधे॑ । भ॒र॒ध्व॒म् । प्रऽचे॑तसे । प्र । सु॒ऽम॒तिम् । कृ॒णु॒ध्व॒म् ।
विशः॑ । पू॒र्वीः । प्र । च॒र॒ । च॒र्ष॒णि॒ऽप्राः ॥ १० ॥

**वेङ्कट०** प्र भरध्वम् यूयं [2]हविः महते[2] महतां वर्धयित्रे। प्रकृष्टज्ञानाय यूयम् सुमतिम् प्र कृणुध्वम्। त्वं च हे इन्द्र! पूर्वीः अभ्यस्ताः विशः प्रति प्र चर गच्छ[3] मनुष्याणां कामैः पूरयिता ॥ १० ॥

उ॒रु॒व्यच॑से म॒हिने॑ सुवृ॒क्तिमिन्द्रा॑य॒ ब्रह्म॑ जनयन्त॒ विप्राः॑ ।
तस्य॑ व्र॒तानि॒ न मि॑नन्ति॒ धीराः॑ ॥ ११ ॥

उ॒रु॒ऽव्यच॑से । म॒हिने॑ । सु॒ऽवृ॒क्तिम् । इन्द्रा॑य । ब्रह्म॑ । ज॒न॒य॒न्त॒ । विप्राः॑ ।
तस्य॑ । व्र॒तानि॑ । न । मि॒न॒न्ति॒ । धीराः॑ ॥ ११ ॥

**वेङ्कट०** [4]बहुव्याप्तये महते स्तुतिम्[4] सुप्रवृत्ताम् इन्द्राय जनयन्ति मेधाविनः। तत्र कर्माणि न हिंसन्ति प्राज्ञाः अन्येऽपि देवाः ॥ ११ ॥

इन्द्रं॒ वाणी॒रनु॑त्तमन्युमे॒व स॒त्रा राजा॑नं दधिरे॒ सह॑ध्यै ।
हर्य॑श्वाय बर्हया॒ समा॒पीन् ॥ १२ ॥

इन्द्र॑म् । वाणीः॑ । अनु॑त्तऽमन्युम् । ए॒व । स॒त्रा । राजा॑नम् । द॒धि॒रे॒ । सह॑ध्यै ।
हरि॑ऽअश्वाय । ब॒र्ह॒य॒ । सम् । आ॒पीन् ॥ १२ ॥

**वेङ्कट०** इन्द्रम् [5]स्तुतयः अनुत्तक्रोधम्[5] सत्यम् एव राजानम् पुरः दधिरे शत्रूणां सहाय। त्वं च हर्यश्वाय ज्ञातीन् सम् प्रोत्साहय होतः! इति ॥ १२ ॥

[6]इति पञ्चमाष्टके तृतीयाध्याये षोडशो वर्गः[6] ॥

[ ३२ ]

[6]वसिष्ठो मैत्रावरुणिर्ऋषिः, षड्विंश्याः पूर्वार्धस्य शक्तिर्वसिष्ठो वा ऋषिः (शाट्यायने ब्राह्मणे), षड्विंशीसप्तविंश्योः शक्तिर्वसिष्ठो वा (ताण्डके ब्राह्मणे)। इन्द्रो देवता। प्रगाथः (बृहती, सतोबृहती) छन्दः, तृतीया द्विपदा विराट्[6]।

मो षु त्वा॑ वा॒घत॑श्च॒नारे अ॒स्मन्नि री॑रमन् ।
आ॒रात्ता॑च्चित् सध॒मादं॑ न॒ आ ग॑ही॒ह वा॒ सन्नुप॑ श्रुधि ॥ १ ॥

---

१-१. आभवन्तु यद्यपि वि[2]; अभवन्तु पद्यवि अ[1]. २-२. महते हविः अ[1]. ३. गन् मूको. ४-४. °व्याप्त ··· स्तु° वि[1] अ[1]. ५-५. °यो रक्तक्रो° अ[1]; °यः अनुत्तक्रो° वि[2] ल लभ. ६-६. नास्ति मूको.

मो इति । सु । त्वा । वाघतः । चन । आरे । अस्मत् । नि । रीरमन् ।
आरात्तात् । चित् । सधऽमादम् । नः । आ । गहि । इह । वा । सन् । उप । श्रुधि ॥ १ ॥

**वेङ्कट०** मैव त्वाम् अश्वाः दूरे अस्मत्तः[1] नि रमयन्तु । दूरात् अस्मत् अपि अस्माकं यज्ञम् आ गच्छ इह एव सन् स्तोत्रम् उप शृणु इति ॥ १ ॥

इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते ।
इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥ २ ॥

इमे । हि । ते । ब्रह्मऽकृतः । सुते । सचा । मधौ । न । मक्षः । आसते ।
इन्द्रे । कामम् । जरितारः । वसुऽयवः । रथे । न । पादम् । आ । दधुः ॥ २ ॥

**वेङ्कट०** इमे हि ते[2] स्तोत्रकृतः सुते सोमे सह मधुनि[3] इव[4] मक्षिकाः पर्युपविशन्ति[5] । इन्द्रे अभिलषितकामम् धनकामाः स्तोतारः रथे इव पादम् आ दधुः ॥ २ ॥

रायस्कामो वज्रहस्तं सुदक्षिणं पुत्रो न पितरं हुवे ॥ ३ ॥

रायःऽकामः । वज्रऽहस्तम् । सुऽदक्षिणम् । पुत्रः । न । पितरम् । हुवे ॥ ३ ॥

**वेङ्कट०** धनकामः सन् अहम् वज्रहस्तम् शोभनदक्षिणं शोभनदानम् पुत्रः इव पितरम् ह्वयामीति । 'सेयं द्विपदा'[6] विराडिति ॥ ३ ॥

इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।
ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥ ४ ॥

इमे । इन्द्राय । सुन्विरे । सोमासः । दधिऽआशिरः ।
तान् । आ । मदाय । वज्रऽहस्त । पीतये । हरिऽभ्याम् । याहि । ओकः । आ ॥ ४ ॥

**वेङ्कट०** इमे इन्द्राय सुताः सोमाः दधिमिश्रणाः । तान् आ याहि मदाय पातुम्[7] वज्रहस्त । अश्वाभ्यां यज्ञं प्रति ॥ ४ ॥

श्रवच्छ्रुत्कर्ण ईयते वसूनां नू चिन्नो मर्धिषद् गिरः ।
सद्यश्चिद् यः सहस्राणि शता ददन्नकिर्दित्सन्तमा मिनत् ॥ ५ ॥

श्रवत् । श्रुत्ऽकर्णः । ईयते । वसूनाम् । नु । चित् । नः । मर्धिषत् । गिरः ।
सद्यः । चित् । यः । सहस्राणि । शता । ददत् । नकिः । दित्सन्तम् । आ । मिनत् ॥ ५ ॥

---

१. °स्मत्ताः ल लभ. २. नास्ति वि[3] अ[1]. ३. °धू° मूको. ४. व मूको. ५. प्रवि° अ[1].
६-६. सेयत्त्विनदा वि[1] ल; सेयत्विवदा अ[1] लभ. ७. पातं वि[3].

**वेङ्कट०** श्रवत्[१] श्रृण्वत्कर्णः[२] आगच्छति वसूनाम् लाभाय। स क्षिप्रम् अस्माकं शत्रून् परुषस्य वक्तॄन् हिनस्तु। सद्यः एव यः सहस्राणि शतानि च प्रयच्छति। तं न कश्चित् दित्सन्तम् आ हिनस्तु निरुणद्ध्विति ॥ ५ ॥

[३]इति पञ्चमाष्टके तृतीयाध्याये सप्तदशो वर्गः[३] ॥

स वीरो अप्रतिष्कुत इन्द्रेण शूशुवे नृभिः।
यस्ते गभीरा सवनानि वृत्रहन्त्सुनोत्या च धावति ॥ ६ ॥

सः। वीरः। अप्रतिऽस्कुतः। इन्द्रेण। शूशुवे। नृऽभिः।
यः। ते। गभीरा। सवनानि। वृत्रऽहन्। सुनोति। आ। च। धावति ॥ ६ ॥

**वेङ्कट०** सः वीरः अप्रतिकृतः सन् इन्द्रप्रसादात् नृभिः पुत्रादिभिः वर्धते, यः ते गम्भीराणि सवनानि वृत्रहन्! अभि सुनोति, आ धावति च त्वामिति ॥ ६ ॥

भवा वरूथं मघवन् मघोनां यत् समजासि शर्धतः।
वि त्वाहतस्य वेदनं भजेमह्या दूणाशो भरा गयम् ॥ ७ ॥

भव। वरूथम्। मघऽवन्। मघोनाम्। यत्। सम्ऽअजासि। शर्धतः।
वि। त्वाऽहतस्य। वेदनम्। भजेमहि। आ। दुःऽनशः। भर। गयम् ॥ ७ ॥

**वेङ्कट०** भव कवचम् मघवन्! धनवतामस्माकम्, यदा वेगं कुर्वाणान् अस्मान् युद्धे सम्प्रेरयसि। वि भजेमहि वयं त्वया [४]हतस्य धनम्। आ हर केनचिदपि नाशयितुमशक्यः त्वम् गृहम्[४] अस्माकम् ॥ ७ ॥

सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे।
पचता पक्तीरवसे कृणुध्वमित् पृणन्नित् पृणते मयः ॥ ८ ॥

सुनोत। सोमऽपाव्ने। सोमम्। इन्द्राय। वज्रिणे।
पचत। पक्तीः। अवसे। कृणुध्वम्। इत्। पृणन्। इत्। पृणते। मयः ॥ ८ ॥

**वेङ्कट०** सुनुत सोमस्य पात्रे सोमम् इन्द्राय वज्रिणे। पचत पक्तव्यांश्चरून् पुरोडाशांश्च रक्षणाय। कृणुध्वम् एव एतत्। प्रयच्छन् एव इन्द्रः[५] प्रयच्छते सुखं भवति ॥ ८ ॥

मा स्रेधत सोमिनो दक्षता महे कृणुध्वं राय आतुजे।
तरणिरिज्जयति क्षेति पुष्यति न देवासः कवत्नवे ॥ ९ ॥

---

१. नास्ति अ[१]. २. श्रृण्व…क° वि[२] अ[१]. ३-३. नास्ति मूको. ४-४. °तस्य…गृह° वि[२] अ[१].
५. इन्द्र मूको.

मा । स्रेधत । सोमिनः । दक्षत । महे । कृणुध्वम् । राये । आऽतुजे ।
तरणिः । इत् । जयति । क्षेति । पुष्यति । न । देवासः । कवत्नवे ॥ ९ ॥

**वेङ्कट०** मा क्षीणा [1]भवत हे[1] सोमिनः!, अपि तर्हि उत्साहं कुरुत। महते धनाय कृणुध्वम् कर्म धनाय शत्रूणामाहन्त्रे[2]। क्षिप्रकारी एव पुरुषः शत्रून्[3] जयति, सुखं च निवसति, पुष्यति च प्रजया पशुभिः। यः कुत्सितं कर्म आतनोति स कवत्नुः[4] इत्याहुः। न तस्मै देवाः अभ्युदयम् आवहन्ति ॥ ९ ॥

नकिः सुदासो रथं पर्यास न रीरमत् ।
इन्द्रो यस्याविता यस्य मरुतो गमत् स गोमति व्रजे ॥ १० ॥

नकिः । सुऽदासः । रथम् । परि । आस । न । रीरमत् ।
इन्द्रः । यस्य । अविता । यस्य । मरुतः । गमत् । सः । गोऽमति । व्रजे ॥ १० ॥

**वेङ्कट०** [5]नकिः न[5] कश्चित् शोभनदानस्य पैजवनस्य राज्ञः रथम् परि अस्यति। न च रथं युद्धे प्रवृत्तं उपरमयति[6]। इन्द्रः यस्य रक्षिता भवति, यस्य च मरुतः, गच्छतु सः गोमन्तं व्रजं शत्रूणामिति ॥ १० ॥

[7]इति पञ्चमाष्टके तृतीयाध्याये अष्टादशो वर्गः[7] ॥

गमद् वाजं वाजयन्निन्द्र मर्त्यो यस्य त्वमविता भुवः ।
अस्माकं बोध्यविता रथानामस्माकं शूर नृणाम् ॥ ११ ॥

गमत् । वाजम् । वाजयन् । इन्द्र । मर्त्यः । यस्य । त्वम् । अविता । भुवः ।
अस्माकम् । बोधि । अविता । रथानाम् । अस्माकम् । शूर । नृणाम् ॥ ११ ॥

**वेङ्कट०** गच्छति अन्नम् युद्धं कुर्वन् इन्द्र! मर्त्यः, यस्य त्वम् रक्षिता अभवः। तथा सति अस्माकम् रथानाम् नृणाम् च अविता[8] भवामीति शूर! बुध्यस्व। बुधेरन्त्यस्य धकारस्य लोपश्छान्दसः ॥ ११ ॥

उदिन्न्वस्य रिच्यतेंऽशो धनं न जिग्युषः ।
य इन्द्रो हरिवान् न दभन्ति तं रिपो दक्षं दधाति सोमिनि ॥ १२ ॥

उत् । इत् । नु । अस्य । रिच्यते । अंशः । धनम् । न । जिग्युषः ।
यः । इन्द्रः । हरिऽवान् । न । दभन्ति । तम् । रिपः । दक्षम् । दधाति । सोमिनि ॥ १२ ॥

**वेङ्कट०** उत् रिच्यते इन्द्रस्य त्रिष्वपि सवनेष्वन्वितस्य[9] अंशः धनम् इव शत्रून्[10] जयतः। यः इन्द्रः हरिवान्, न[11] हिंसन्ति तम्[12] रिपवः। किं च अयं बलम् वि[13] दधाति यजमाने ॥ १२ ॥

---

१-१. °त महे मूको. २. °माहन्त्रिणे मूको. ३. शत्रुं वि[2] अ[1]. ४. कलर्तुः वि[2] अ[1]; कपर्तुः ल लभ. ५-५. नकिं ह वि[2] अ[1]; नकि ह ल लभ. ६. नुपर° वि[2] अ[1]; मुपर° ल लभ. ७-७. नास्ति मूको. ८. पिता वि[2] अ[1]; अपिता ल लभ. ९. °नेन्वित° मूको. १०. शत्रुं ल लभ. ११. नृ मूको. १२. कं अ[1]; किं वि[2]. १३. नि अ[1].

मन्त्रमखर्वं सुधितं सुपेशसं दधात युज्ञियेष्वा ।
पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवत् ॥ १३ ॥

मन्त्रम् । अखर्वम् । सुऽधितम् । सुऽपेशसम् । दधात । यज्ञियेषु । आ ।
पूर्वीः । चन । प्रऽसितयः । तरन्ति । तम् । यः । इन्द्रे । कर्मणा । भुवत् ॥ १३ ॥

वेङ्कट० स्तोत्रम् अन्यूनम् हृदये सुष्ठु निहितम् सुरूपम् आ धत्त 'स्तोतारः! देवेषु[1] इन्द्रे तदनुचरेषु । बह्वयोऽपि प्रसितयः[2] तम् न तरन्ति, यः इन्द्रे कर्मणा भवति । कर्म कुर्वन् इन्द्रसमीपं गच्छति । 'प्रसितिः[3] प्रसयनात्,[4] तन्तुर्वा जालं वा' ( या ६,१२ ) इत्युक्तमिति ॥ १३ ॥

कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति ।
श्रद्धा इत् ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ॥ १४ ॥

कः । तम् । इन्द्र । त्वाऽवसुम् । आ । मर्त्यः । दधर्षति ।
श्रद्धा । इत् । ते । मघऽवन् । पार्ये । दिवि । वाजी । वाजम् । सिसासति ॥ १४ ॥

वेङ्कट० त्वं वासयिता यस्य स त्वावसुः[5] तम् त्वावसुम् कः इन्द्र! आ धर्षयति मर्त्यः । श्रद्धया एव तुभ्यम् मघवन्! पारभवे[6] अह्नि यस्मिन्नहनि युद्धं सन्तिष्ठते तस्मिन् हविष्मान् अन्नं प्रदातुमिच्छति । यदहरेव शत्रुं जित्वा युद्धं संस्थापयति "तदहः पार्यमुच्यते" इति ॥ १४ ॥

मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥ १५ ॥

मघोनः । स्म । वृत्रऽहत्येषु । चोदय । ये । ददति । प्रिया । वसु ।
तव । प्रऽनीती । हरिऽअश्व । सूरिऽभिः । विश्वा । तरेम । दुःऽइता । १५ ॥

वेङ्कट० धनवतः युद्धेषु चोदय, ये प्रियाणि धनानि तेभ्यो युष्मभ्यं प्रयच्छन्ति । तव प्रणयनेन हर्यश्व! वयम् सूरिभिः पुत्रादिभिः सह विश्वानि दुरितानि[8] अति तरेम[9] ॥ १५ ॥

[10]इति पञ्चमाष्टके तृतीयाध्याये एकोनविंशो वर्गः[10] ॥

तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥ १६ ॥

तव । इत् । इन्द्र । अवमम् । वसु । त्वम् । पुष्यसि । मध्यमम् ।
सत्रा । विश्वस्य । परमस्य । राजसि । नकिः । त्वा । गोषु । वृण्वते ॥ १६ ॥

---

१-१. स्तोत··· वि[1] अ[1]. २. प्रसिद्धयः वि[1] अ[1] ल; प्रसिद्धतयः लभ. ३. °ति मूको. ४. प्रसयन्नात् वि[1] अ[1] ल; प्रसयन्ताक् लभ. ५. °वसु मूको. ६ परभ° मूको. ७-७. दहर्पार्य° वि[1] अ[1] ल; °दह वार्य° लभ. ८. °तान् अ[1] लभ. ९. अतरेमेति अ[1] लभ. १०-१०. नास्ति मूको.

**वेङ्कट०** तव एव इन्द्र! अवमम् धनं पार्थिवम्। त्वम् एव अन्तरिक्षम् वसु पुष्यसि। त्वमेव दिव्यस्य धनस्य ईशिषे सत्यमेव सर्वस्य। न केचित् त्वा शत्रूणाम् गोषु प्रवृत्तं वारयन्ति ॥ १६ ॥

त्वं विश्वस्य धनदा असि श्रुतो य ईं भवन्त्याजयः।
तवायं विश्वः पुरुहूत पार्थिवोऽवस्युर्नाम भिक्षते ॥ १७ ॥

त्वम्। विश्वस्य। धनऽदाः। असि। श्रुतः। ये। ईम्। भवन्ति। आजयः।
तव। अयम्। विश्वः। पुरुऽहूत। पार्थिवः। अवस्युः। नाम। भिक्षते ॥ १७ ॥

**वेङ्कट०** त्वम् सर्वस्य धनस्य दाता भवसि विश्रुतः। ये इमे सङ्ग्रामाः भवन्ति, तेषु प्रवृत्तस्य विश्वस्येति। तव अयम् विश्वः पुरुहूत! पार्थिवः जनः रक्षणमिच्छन् नमनम् याचते ॥ १७ ॥

यदिन्द्र यावतस्त्वमेतावदहमीशीय।
स्तोतारमिद् दिधिषेय रदावसो न पापत्वाय रासीय ॥ १८ ॥

यत्। इन्द्र। यावतः। त्वम्। एतावत्। अहम्। ईशीय।
स्तोतारम्। इत्। दिधिषेय। रदवसो इति रदऽवसो। न। पापऽत्वाय। रासीय ॥ १८ ॥

**वेङ्कट०** यदि अहम् इन्द्र!, यावतः धनस्य त्वम् ईशिषे, [1]तावतः ईशीय[1], ततो मां यः स्तौति, तमेव धनप्रदानेन अहं धारयेयम्। रदिः[2] विलेखनकर्मा। 'इन्द्रोऽस्मानरदद्वज्रबाहुः' (ऋ ३,३३,६) इति मन्त्रः। शत्रूणां धनानि यो विलिखति स [3]रदावसुः। न[3] पापत्वाय अहं दद्याम्[4] इति ॥ १८ ॥

शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे।
नहि त्वदन्यन्मघवन् न आप्यं वस्यो अस्ति पिता चन ॥ १९ ॥

शिक्षेयम्। इत्। महऽयते। दिवेऽदिवे। रायः। आ। कुहचित्ऽविदे।
नहि। त्वत्। अन्यत्। मघऽवन्। नः। आप्यम्। वस्यः। अस्ति। पिता। चन ॥ १९ ॥

**वेङ्कट०** प्रयच्छेयम् एव त्वां स्तुवते अन्वहं धनानि [5]क्वचिदपि ज्ञाताय†। नहि त्वत्तः अन्यत् मघवन्! अस्माकम् अस्ति बान्धवम्‡। त्वदतिरिक्तः प्रशस्यतरः[5] पिता च अस्माकं नास्ति। यस्मात्त्वमेव पालयसि ॥ १९ ॥

तरणिरित् सिषासति वाजं पुरंध्या युजा।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्र्वम् ॥ २० ॥

---

१-१. तापकमीशि वि[2] अ[1]. २. रुतिः मूको. ३-३. दरावसु तं वि[2] ल लभ; दवसु अ[1]. ४. दत्यम् अ[1] ल लभ; दत्तम् वि[2]. ५-५. कामास्त्वामभिष्टुमो वर्धितर्हि क्षिप्रं पितरः वि[2] अ[1] लभ (तु. ७,३१,४).
† °नाय मूको. ‡ बान्धवन् मूको.

मन्त्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा ।
पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवत् ॥ १३ ॥

मन्त्रम् । अखर्वम् । सुऽधितम् । सुऽपेशसम् । दधात । यज्ञियेषु । आ ।
पूर्वीः । चन । प्रऽसितयः । तरन्ति । तम् । यः । इन्द्रे । कर्मणा । भुवत् ॥ १३ ॥

वेङ्कट० स्तोत्रम् अन्यूनम् हृदये सुष्ठु निहितम् सुरूपम् आ धत्त 'स्तोतारः! देवेषु' इन्द्रे तदनुचरेषु। बह्व्योऽपि प्रसितयः[2] तम् न तरन्ति, यः इन्द्रे कर्मणा भवति। कर्म कुर्वन् इन्द्रसमीपं गच्छति। 'प्रसितिः[3] प्रसयनात्,[4] तन्तुर्वा जालं वा' ( या ६,१२ ) इत्युक्तमिति ॥ १३ ॥

कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति ।
श्रद्धा इत् ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ॥ १४ ॥

कः । तम् । इन्द्र । त्वाऽवसुम् । आ । मर्त्यः । दधर्षति ।
श्रद्धा । इत् । ते । मघऽवन् । पार्ये । दिवि । वाजी । वाजम् । सिसासति ॥ १४ ॥

वेङ्कट० त्वं वासयिता यस्य स त्वावसुः[5] तम् त्वावसुम् कः इन्द्र! आ धर्षयति मर्त्यः। श्रद्धया एव तुभ्यम् मघवन्! पारभवे[6] अह्नि यस्मिन्नहनि युद्धं सन्तिष्ठते तस्मिन् हविष्मान् अन्नं प्रदातुमिच्छति। यदहरेव शत्रुं जित्वा युद्धं संस्थापयति "तदहः पार्यमुच्यते" इति ॥ १४ ॥

मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥ १५ ॥

मघोनः । स्म । वृत्रऽहत्येषु । चोदय । ये । ददति । प्रिया । वसु ।
तव । प्रऽनीती । हरिऽअश्व । सूरिऽभिः । विश्वा । तरेम । दुःऽइता ॥ १५ ॥

वेङ्कट० धनवतः युद्धेषु चोदय, ये प्रियाणि धनानि तेभ्यो युष्मभ्यं प्रयच्छन्ति। तव प्रणयनेन हर्यश्व! वयम् सूरिभिः पुत्रादिभिः सह विश्वानि दुरितानि[8] अति तरेम[9] ॥ १५ ॥

[10]इति पञ्चमाष्टके तृतीयाध्याये एकोनविंशो वर्गः[10] ॥

तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥ १६ ॥

तव । इत् । इन्द्र । अवमम् । वसु । त्वम् । पुष्यसि । मध्यमम् ।
सत्रा । विश्वस्य । परमस्य । राजसि । नकिः । त्वा । गोषु । वृण्वते ॥ १६ ॥

---

१-१. स्तोत··· वि[1] अ[1]. २. प्रसिद्धयः वि[1] अ[1] ल; प्रसिद्धतयः लअ. ३. °ति मूको. ४. प्रसयन्नात् वि[2] अ[1] ल; प्रसयन्ताक् लअ. ५. °वसु मूको. ६ परभ° मूको. ७-७. दहर्पाय° वि[2] अ[1] ल; °दह वार्य° लअ. ८. °तान् अ[1] लअ. ९. अतरेमेति अ[1] लअ. १०-१०. नास्ति मूको.

वेङ्कट० तव एव इन्द्र! अवमम् धनं पार्थिवम्। त्वम् एव अन्तरिक्षम् वसु पुष्यसि। त्वमेव दिव्यस्य धनस्य ईशिषे सत्यमेव सर्वस्य। न केचित् त्वा शत्रूणाम् गोषु प्रवृत्तं वारयन्ति ॥ १६ ॥

त्वं विश्वस्य धनदा असि श्रुतो य ईं भवन्त्याजयः।
तवायं विश्वः पुरुहूत पार्थिवोऽवस्युर्नाम भिक्षते ॥ १७ ॥

त्वम्। विश्वस्य। धनऽदाः। असि। श्रुतः। ये। ईम्। भवन्ति। आजयः।
तव। अयम्। विश्वः। पुरुऽहूत। पार्थिवः। अवस्युः। नाम। भिक्षते ॥ १७ ॥

वेङ्कट० त्वम् सर्वस्य धनस्य दाता भवसि विश्रुतः। ये इमे सङ्ग्रामाः भवन्ति, तेषु प्रवृत्तस्य विश्वस्येति। तव अयम् विश्वः पुरुहूत! पार्थिवः जनः रक्षणमिच्छन् नमनम् याचते ॥ १७ ॥

यदिन्द्र यावतस्त्वमेतावदहमीशीय।
स्तोतारमिद् दिधिषेय रदावसो न पापत्वाय रासीय ॥ १८ ॥

यत्। इन्द्र। यावतः। त्वम्। एतावत्। अहम्। ईशीय।
स्तोतारम्। इत्। दिधिषेय। रदवसो इति रदऽवसो। न। पापऽत्वाय। रासीय ॥ १८ ॥

वेङ्कट० यदि अहम् इन्द्र!, यावतः धनस्य त्वम् ईशिषे, [1]तावतः ईशीय[1], ततो मां यः स्तौति, तमेव धनप्रदानेन अहं धारयेयम्। रदिः[2] विलेखनकर्मा। 'इन्द्रोऽस्मानरदद्वज्रबाहुः' (ऋ ३,३३,६) इति मन्त्रः। शत्रूणां धनानि यो विलिखति स [3]रदावसुः। न[3] पापत्वाय अहं दद्याम्[4] इति ॥ १८ ॥

शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे।
नहि त्वदन्यन्मघवन् न आप्यं वस्यो अस्ति पिता चन ॥ १९ ॥

शिक्षेयम्। इत्। महऽयते। दिवेऽदिवे। रायः। आ। कुहचित्ऽविदे।
नहि। त्वत्। अन्यत्। मघऽवन्। नः। आप्यम्। वस्यः। अस्ति। पिता। चन ॥ १९ ॥

वेङ्कट० प्रयच्छेयम् एव त्वां स्तुवते अन्वहं धनानि ^क्वचिदपि ज्ञाताय†। नहि त्वत्तः अन्यत् मघवन्! अस्माकम् अस्ति बान्धवम्‡। त्वदतिरिक्तः प्रशस्यतरः[5] पिता च अस्माकं नास्ति। यस्मात्त्वमेव पालयसि ॥ १९ ॥

तरणिरित् सिषासति वाजं पुरंध्या युजा।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्र्वम् ॥ २० ॥

---

१-१. तापकमीशि वि[2] अ[1]. २. रतिः मूको. ३-३. दरावसु तं वि[2] ल लभ; दवसु अ[1]. ४. दत्यम् अ[1] ल लभ; दत्तम् वि[2]. ५-५. कामास्त्वामभिष्टुमो वर्धितर्हि क्षिप्रं पितरः वि[2] अ[1] लभ (तु. ७,३१,४). † °नाय मूको. ‡ बान्धवन् मूको.

तरणिः । इत् । सिसासति । वाजम् । पुरम्ऽध्या । युजा ।
आ । वः । इन्द्रम् । पुरुऽहूतम् । नमे । गिरा । नेमिम् । तष्टाऽइव । सुऽद्र्वम् ॥ २० ॥

**वेङ्कट०** क्षिप्रकारी एव इन्द्रः सम्भक्तुमिच्छति सङ्ग्रामम् प्रज्ञया सहायभूतया। तथा सति युष्मदर्थम् अहम् आ नमामि पुरुहूतम् इन्द्रम् स्तुत्या, नेमिम् तक्षेव शोभनकाष्ठम् ॥ २० ॥

[1]इति पञ्चमाष्टके तृतीयाध्याये विंशो वर्गः[1] ॥

न दुष्टुती मर्त्यो विन्दते वसु न स्रेधन्तं रयिर्नशत् ।
सुशक्तिरिन्मघवन् तुभ्यं मावते देष्णं यत् पार्ये दिवि ॥ २१ ॥

न । दुःऽस्तुती । मर्त्यः । विन्दते । वसु । न । स्रेधन्तम । रयिः । नशत् ।
सुऽशक्तिः । इत् । मघऽवन् । तुभ्यम् । माऽवते । देष्णम् । यत् । पार्ये । दिवि ॥ २१ ॥

**वेङ्कट०** न दुष्टेन स्तोत्रेण मर्त्यः विन्दते धनम्। स्रेधतिरुपक्षयकर्मा। न उपक्षीयमाणम् अपहरन्तं[2] स्तोत्रं धनं व्याप्नोति। शोभनदानमेव मघवन्! मत्सदृशाय स्तोत्रे देष्णम् धनम् यत् पारभवे दिवि[3] भवति, अनायासेन त्वं देयं धनं स्तोत्रे प्रयच्छसीति ॥ २१ ॥

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ २२ ॥

अभि । त्वा । शूर । नोनुमः । अदुग्धाःऽइव । धेनवः ।
ईशानम् । अस्य । जगतः । स्वःऽदृशम् । ईशानम् । इन्द्र । तस्थुषः ॥ २२ ॥

**वेङ्कट०** अभि ष्टुमः त्वाम् शूर! यथा अदुग्धाः धेनूः दोहनार्थम् उपस्तुवन्ति। 'तस्मात्प्रादादिति उन्नीय वन्दमाना उपस्तुवन्तः पशून्दुहन्ति' (तैब्रा ३,२,३,७) इति ब्राह्मणम्। ईशानम् अस्य जङ्गमस्य सर्वस्य द्रष्टारम् ईशानम् इन्द्र! तस्थुषः च ॥ २२ ॥

न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ २३ ॥

न । त्वाऽवान् । अन्यः । दिव्यः । न । पार्थिवः । न । जातः । न । जनिष्यते ।
अश्वऽयन्तः । मघऽवन् । इन्द्र । वाजिनः । गव्यन्तः । त्वा । हवामहे ॥ २३ ॥

**वेङ्कट०** न त्वत्सदृशः अन्यः दिव्यः पार्थिवः वा सम्प्रत्यस्ति न अपि जातः न अपि जनिष्यते। अश्वादीनिच्छन्तः तम् त्वा मघवन् इन्द्र! वयम् हवामहे हविष्मन्तः ॥ २३ ॥

---

१-१. नास्ति मूको. २. उपह° मूको. ३. दिवि ल लभ; नास्ति वि[२] अ[१].

अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्त्सनादसि भरेभरे च हव्यः ॥ २४ ॥

अभि । सतः । तत् । आ । भर । इन्द्र । ज्यायः । कनीयसः ।
पुरुऽवसुः । हि । मघऽवन् । सनात् । असि । भरेऽभरे । च । हव्यः ॥ २४ ॥

**वेङ्कट०** अभि आ भर[1] सतः[2] प्रशस्तस्य वसिष्ठस्य तत् इन्द्र! धनं ज्यायन्![3] कनीयसः मम। बहुधनः हि मघवन्! चिरादारभ्य त्वं भवसि सङ्ग्रामेसङ्ग्रामे च ह्वातव्यः[4] ॥ २४ ॥

परा णुदस्व मघवन्नमित्रान्त्सुवेदा नो वसू कृधि ।
अस्माकं बोध्यविता महाधने भवा वृधः सखीनाम् ॥ २५ ॥

परा । नुदस्व । मघऽवन् । अमित्रान् । सुऽवेदा । नः । वसु । कृधि ।
अस्माकम् । बोधि । अविता । महाऽधने । भव । वृधः । सखीनाम् ॥ २५ ॥

**वेङ्कट०** परा नुदस्व मघवन्! शत्रून्। सुलभानि[5] अस्माकं धनानि कुरु। अस्माकम् बुध्यस्व रक्षिता भवामीति। सङ्ग्रामे भव वर्धकः[6] सखीनाम् ॥ २५ ॥

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ २६ ॥

इन्द्र । क्रतुम् । नः । आ । भर । पिता । पुत्रेभ्यः । यथा ।
शिक्ष । नः । अस्मिन् । पुरुऽहूत । यामनि । जीवाः । ज्योतिः । अशीमहि ॥ २६ ॥

**वेङ्कट०** अत्र शाट्यायनकम् — "शक्तिं ह वासिष्ठं सौदासा अग्नौ प्रासुः। स ह प्रास्यमानोऽनूवाच — 'इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा' इति। एतावद्धयेवास्य [7]व्याहृतमास। अथ हैनमग्नौ[7] प्रासुः। अथ ह वसिष्ठ आजगाम। स होवाच — किं मे पुत्रः प्रास्यमानोऽब्रवीदिति। तस्मै होचुः — 'इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा' इति एतावदेवास्य व्याहृतमासीत्। अथैनम् अग्नौ प्रास्यन्निति। स होवाच — 'शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि' इति। यन्म एतमुत्तरमर्धर्चं मे पुत्रः प्रास्यमानो वक्ष्यति न चैवैनमग्नौ प्रासिष्यन् सर्वमायुरैष्यत्" (जैमि २, ३९२) इति। **ताण्डके पुनः सर्व एव प्रगाथो वासिष्ठ उक्तः** (तु. तांब्रा ४, ७, २-४)। **तत्र कात्यायनः** — 'सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरन्त्यं प्रगाथमारेभे। सोऽर्धर्च उक्तेऽदह्यत[8]। तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकम्। वसिष्ठस्यैव हतपुत्रस्यार्षम् इति ताण्डकम्' (ऋअ २,७,३२) इति।

इन्द्र! **प्रज्ञानम् अस्मकम्** आ भर, यथा पिता पुत्रेभ्यः **धनं प्रयच्छति। प्रयच्छ अस्मभ्यम्** पुरुहूत! अस्मिन् **प्रयाणे**। जीवन्तो **वयं सूर्यम् अन्वहं प्राप्नुयाम** ॥ २६ ॥

---

१. हर वि[1]. २. सत ल अ[1] लअ; त वि[1]. ३. तु. वैप १,१३९३ m; ज्यायान् मूको.
४. °तव्य मूको. ५. सुलभान् मूको. ६. °क वि[1] अ[1] ल; र्धक् लअ. ७-७. °तमासापहृत° वि[2] अ[1].
८. °क्त्वेदं द° मूको.

मा नो अज्ञाता वृजना दुराध्योऽ माशिवासो अव क्रमुः ।
त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि ॥ २७ ॥

मा । नः । अज्ञाताः । वृजनाः । दुःऽआध्यः । मा । अशिवासः । अव । क्रमुः ।
त्वया । वयम् । प्रऽवतः । शश्वतीः । अपः । अति । शूर । तरामसि ॥ २७ ॥

**वेङ्कट०** मा अस्मान् अज्ञाताः[1] पापकृतः दुर्बुद्धयः मा च अशिवाः शत्रवः अव क्रमुः । अवक्रमणम् अभिभवः । त्वया वयम् प्रवणाभिमुखानि बहूनि उदकानि शूर! अति तराम ॥ २७ ॥

[1]इति पञ्चमाष्टके तृतीयाध्याये एकविंशो वर्गः[1] ॥

[ ३३ ]

[2]आद्यानां नवानां वसिष्ठो मैत्रावरुणिर्ऋषिः, अन्त्यानां पञ्चानां वसिष्ठपुत्राः । आद्यानां नवानां वसिष्ठपुत्रा इन्द्रो वा देवता, अन्त्यानां पञ्चानां वसिष्ठः । त्रिष्टुप् छन्दः[2] ।

श्वित्यञ्चो मा दक्षिणतस्कपर्दा धियंजिन्वासो अभि हि प्रमन्दुः ।
उत्तिष्ठन् वोचे परि बर्हिषो नॄन् न मे दूरादवितवे वसिष्ठाः ॥ १ ॥

श्वित्यञ्चः । मा । दक्षिणतःऽकपर्दाः । धियम्ऽजिन्वासः । अभि । हि । प्रऽमन्दुः ।
उत्ऽतिष्ठन् । वोचे । परि । बर्हिषः । नॄन् । न । मे । दूरात् । अवितवे । वसिष्ठाः ॥ १ ॥

**वेङ्कट०** कात्यायनः — 'संस्तवो वसिष्ठस्य सपुत्रस्येन्द्रेण वा संवादः' ( ऋअ २,७,३३ ) इति ।

शौनकः — 'वसिष्ठाय सपुत्राय श्वित्यञ्चो[3] मेति संस्तवः ।
ऐन्द्रं सूक्तमिदं चैषां[4] संवादमपरे विदुः' ॥ ( तु. बृदे ५,१६३ ) इति ॥

तत्रादितो नवभिर्वसिष्ठेन पुत्राः संस्तूयन्ते । तत्र नूनं वसिष्ठः सपुत्रो दाशराजं याजयाञ्चकार । ततो यज्ञान्ते गन्तुमुद्युक्तः पुत्रानिदमाह ।

श्वित्यञ्चः श्वेतिमानम् अञ्चन्तः श्वेतवर्णाः । काश्मीरजा हि तथावर्णा भवन्ति । माम् दक्षिणतस्कपर्दाः । अत्र चूडाकरणे लौगाक्षिगृह्यम्[5] — 'दक्षिणतो वसिष्ठानाम् ( तु. काग्र ४०,२ ) इति । कर्मणोऽस्य प्रीणयितारः अभि हि प्रमन्दुः । ततः प्रयाणाय यज्ञात् उत्तिष्ठन् अहं नेतॄन् पुत्रान् परितो ब्रवीमि — न[6] मत्तः दूरात् गन्तुमर्हन्ति वसिष्ठाः, अपि तु समीपे स्थिता वचनमिदं श्रोतुमर्हन्तीति ॥ १ ॥

दूरादिन्द्रमनयन्ना सुतेन तिरो वैशन्तमति पान्तमुग्रम् ।
पाशद्युम्नस्य वायतस्य सोमात् सुतादिन्द्रोऽवृणीता वसिष्ठान् ॥ २ ॥

दूरात् । इन्द्रम् । अनयन् । आ । सुतेन । तिरः । वैशन्तम् । अति । पान्तम् । उग्रम् ।
पाशऽद्युम्नस्य । वायतस्य । सोमात् । सुतात् । इन्द्रः । अवृणीत । वसिष्ठान् ॥ २ ॥

---

१-१. त्रुटितम् लअ. २-२. नास्ति मूको. ३. चित्यञ्चो अ[1]; श्वित्यञ्चो वि[2] लअ. ४. वै° अ[1].
५. लोकाक्षि° वि[2] ल; लोकाक्षिग्रह्य लअ; लोगाक्षि अ[1]. ६. न न मूको.

वेङ्कट० दाशराजस्य सुतेन दूरस्थितम् इन्द्रम् ततः आ अनयन्। यथा तत्रत्यानां तिरोहितो भवति तथा अति आनयन्। वैशन्तम् देशं तस्य गृहस्य स्वामिनं रक्षन्तम् उद्गूर्णम्। इन्द्रः च पाशद्युम्नाख्यस्य वयतः पुत्रस्य यज्ञाद् वसिष्ठान् दाशराजस्य याजकान् अवृणीत ॥ २ ॥

एवेन्नु कं सिन्धुमेभिस्ततारेवेन्नु कं भेदमेभिर्जघान ।
एवेन्नु कं दाशराज्ञे सुदासं प्रावदिन्द्रो ब्रह्मणा वो वसिष्ठाः ॥ ३ ॥

एव । इत् । नु । कम् । सिन्धुम् । एभिः । ततार । एव । इत् । नु । कम् । भेदम् । एभिः । जघान ।
एव । इत् । नु । कम् । दाशऽराज्ञे । सुऽदासम् । प्र । आवत् । इन्द्रः । ब्रह्मणा । वः । वसिष्ठाः ॥ ३ ॥

वेङ्कट० पूर्वार्धः परोक्षः। एवम् एव क्षिप्रम् एभिः वसिष्ठपुत्रैः स्तोतृभिः इन्द्रः पाशद्युम्नस्य यज्ञादागन्तुं नदीः ततार। अथैवम् एव भेदकम् एषां रक्षोवर्गम् जघान। एवम् एव दाशराजाय सुदासम् नाम रक्षणीयम् प्र आवत्। हे वसिष्ठाः! युष्माकं स्तोत्रेण दाशराजाय[1] सुदासः परिरक्षणाय च तत्र भेदकानि इन्द्रः जघानेति ॥ ३ ॥

जुष्टी नरो ब्रह्मणा वः पितॄणामक्षमव्ययं न किला रिषाथ ।
यच्छक्वरीषु बृहता रवेणेन्द्रे शुष्ममदधाता वसिष्ठाः ॥ ४ ॥

जुष्टी । नरः । ब्रह्मणा । वः । पितॄणाम् । अक्षम् । अव्ययम् । न । किल । रिषाथ ।
यत् । शक्वरीषु । बृहता । रवेण । इन्द्रे । शुष्मम् । अदधात । वसिष्ठाः ॥ ४ ॥

वेङ्कट० प्रीतिः भवति हे नेतारः! युष्माकं स्तोत्रेण पितॄणाम् इति, वसिष्ठः आत्मानम् परोक्षयन्नाह[2]— प्रीतो भवामीति। अथ [3]रथाक्षम् अव्ययम्[3] चलयामि। न किल यूयं कदाचित् रिष्यथ[4]। यस्माद् ऋक्षु प्रयुक्तेन[5] महता रवेण इन्द्रे[6] बलम् निहितवन्तो यूयं हे वसिष्ठाः! इति ॥ ४ ॥

उद् द्यामिवेत् तृष्णजो नाथितासोऽदीधयुर्दाशराज्ञे वृतासः ।
वसिष्ठस्य स्तुवत इन्द्रो अश्रोदुरुं तृत्सुभ्यो अकृणोदु लोकम् ॥ ५ ॥

उत । द्याम्ऽइव । इत् । तृष्णऽजः । नाथितासः । अदीधयुः । दाशऽराज्ञे । वृतासः ।
वसिष्ठस्य । स्तुवतः । इन्द्रः । अश्रोत् । उरुम् । तृत्सुऽभ्यः । अकृणोत् । ऊँ इति । लोकम् ॥५॥

वेङ्कट० उद्गीथैः अस्तुवन् आदित्यम् इव जाततृष्णाः वृष्टिं[7] याचमानाः दाशराजेन वृताः तस्मै इन्द्रम्। तथा वसिष्ठस्य च स्तुवतः स्तुतिम् इन्द्रः अश्रौषीत्। विस्तीर्णम् लोकम् शत्रुहननेन तृत्सुभ्यः[8] च अकरोत्। तृत्सवो दाशा इति ॥ ५ ॥

[9]इति पञ्चमाष्टके तृतीयाध्याये द्वाविंशो वर्गः[9] ॥

---

१. °राजः मूको. २. अपरोक्ष° मूको. ३-३. रथाक्षयव्ययमं वि[2] अ[1]; रथाक्षम्। अव्ययम् ल लक्ष. ४. इष्य° मूको. ५. नास्ति वि[2] अ[1]. ६. इन्द्र मूको. ७. वृष्णिं मूको. ८. त्रित्सु° मूको. ९-९. नास्ति मूको.

दण्डा इवेद् गोअजनास आसन् परिच्छिन्ना भरता अर्भकासः ।
अभवच्च पुरएता वसिष्ठ आदित् तृत्सूनां विशो अप्रथन्त ॥ ६ ॥

दण्डाःऽइव । इत् । गोऽअजनासः । आसन् । परिऽछिन्नाः । भरताः । अर्भकासः ।
अभवत् । च । पुरःएता । वसिष्ठः । आत् । इत् । तृत्सूनाम् । विशः । अप्रथन्त ॥ ६ ॥

वेङ्कट० यथा गोअजनाः दण्डाः परिच्छिन्नशाखा भवन्ति एवं निरस्तपरिचरणाः भरतकुलजाताः अर्भकाः विश्वामित्रा अस्माकं सपत्नाः अभवन् । तेषाम् एषाम् अभवत् च[१] पुरएता वसिष्ठः । अनन्तरमेव तृत्सूनाम् प्रजाः निहतशत्रुकाः प्रथिताः अभवन् इति ॥ ६ ॥

त्रयः कृण्वन्ति भुवनेषु रेतस्तिस्रः प्रजा आर्या ज्योतिरग्राः ।
त्रयो घर्मास उषसं सचन्ते सर्वाँ इत् ताँ अनु विदुर्वसिष्ठाः ॥ ७ ॥

त्रयः । कृण्वन्ति । भुवनेषु । रेतः । तिस्रः । प्रऽजाः । आर्याः । ज्योतिःऽअग्राः ।
त्रयः । घर्मासः । उषसम् । सचन्ते । सर्वान् । इत् । तान् । अनु । विदुः । वसिष्ठाः ॥ ७ ॥

वेङ्कट० अत्र शाट्यायनकम्—" 'त्रयः कृण्वन्ति हि भुवनेषु रेतः' इत्यग्निः पृथिव्यां रेतः कृणोति वायुरन्तरिक्षे आदित्यो दिवि । 'तिस्रः प्रजा आर्या ज्योतिरग्राः' इति वसवो रुद्रा[२] आदित्यास्तेषाम् एतज्ज्योतिर्यदसावादित्यः । 'त्रयो घर्मास उषसं सचन्ते' इत्यग्निरुषसं सचते वायुरुषसम् सचते आदित्य उषसं सचत इति । 'सर्वान् एव तान् अनु विदुः वसिष्ठाः' " ( जैमि २,१४१-२ ) ॥ ७ ॥

सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः ।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ॥ ८ ॥

सूर्यस्यऽइव । वक्षथः । ज्योतिः । एषाम् । समुद्रस्यऽइव । महिमा । गभीरः ।
वातस्यऽइव । प्रऽजवः । न । अन्येन । स्तोमः । वसिष्ठाः । अनुऽएतवे । वः ॥ ८ ॥

वेङ्कट० यथा सूर्यस्य अश्वः सञ्चरति एवम् एषाम् अपि ज्योतिः सर्वतोदिक्कं विसरति उदधेः इव महिमा गम्भीरः [३]वातस्य इव[३] प्रजवः अन्येन केनचिद् युष्माकम् स्तोमः हे वसिष्ठाः! न अन्वेतुं शक्यत इति । उत्तरोऽर्धर्चः[४] प्रत्यक्षः ॥ ८ ॥

त इन्निण्यं हृदयस्य प्रकेतैः सहस्रवल्शमभि सं चरन्ति ।
यमेन ततं परिधिं वयन्तोऽप्सरस उप सेदुर्वसिष्ठाः ॥ ९ ॥

---

१. नास्ति अ[१]. २. नास्ति वि[२] अ[१]. ३-३. °तस्यैव मूको. ४. °तरार्धः वि[२] ल; उक्ततारोऽर्धः लभ; °त्तरार्धः अ[१].

ते । इत् । निण्यम् । हृदयस्य । प्रऽकेतैः । सहस्रऽवल्शम् । अभि । सम् । चरन्ति ।
यमेन । ततम् । परिऽधिम् । वयन्तः । अप्सरसः । उप । सेदुः । वसिष्ठाः ॥ ९ ॥

**वेङ्कट०** ते एव अन्तर्हितम् हृदयस्य प्रज्ञानैः बहुशाखं कर्म अभि सम् चरन्ति । तऽस्मात् उर्वश्याः[१] पुत्रान् ईश्वरेण कृतम् परिधिम् कर्मतन्तुम् वयन्तः[२] उप सेदुः वसिष्ठपुत्रा इति ॥ ९ ॥

विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा ।
तत् ते जन्मोतैकं वसिष्ठागस्त्यो यत् त्वा विश आजभार ॥ १० ॥

विऽद्युतः । ज्योतिः । परि । सम्ऽजिहानम् । मित्रावरुणा । यत् । अपश्यताम् । त्वा ।
तत् । ते । जन्म । उत । एकम् । वसिष्ठ । अगस्त्यः । यत् । त्वा । विशः । आऽजभार ॥१०॥

**वेङ्कट०** वसिष्ठ! अन्तरिक्षे विद्युतः ज्योतिः भूत्वा सञ्चरन्तम् त्वाम् मित्रावरुणा यदा परि अपश्यताम्, तदानीं तव एकम् जन्म अभूत् । अगस्त्यः यदा त्वाम् मनुष्यान् प्रत्याहृतवान्[३] । अगस्त्यवसिष्ठौ नूनं सम्मत्यैव[४] मानुष्यकमास्थिताविति ॥ १० ॥

[५]इति पञ्चमाष्टके तृतीयाध्याये त्रयोविंशो वर्गः[५] ।

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधि जातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥ ११ ॥

उत । असि । मैत्रावरुणः । वसिष्ठ । उर्वश्याः । ब्रह्मन् । मनसः । अधि । जातः ।
द्रप्सम् । स्कन्नम् । ब्रह्मणा । दैव्येन । विश्वे । देवाः । पुष्करे । त्वा । अददन्त ॥ ११ ॥

**वेङ्कट०** अपि च भवसि मित्रावरुणयोः पुत्रस्त्वम् वसिष्ठ! उर्वश्याः ब्रह्मन्! मनसः अधि जातः । मित्रावरुणयोः दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे[६] कुम्भे रेतः स्कन्नम् आसीत् । ततोऽगस्त्यवसिष्ठौ समजायेताम् । उर्वशीतो[७] मित्रावरुणयोर्मनसोऽधिजात इत्युक्तो[८] भवति । मित्रावरुणयोः स्कन्नम् रेतः दैव्येन ब्रह्मणा मन्त्रेण विश्वे देवाः पुष्करे कुम्भस्यान्तरिक्षे त्वाम् अधारयन् ( तु. बृदे ५,१४९-१५५ ) ॥ ११ ॥

स प्रकेत उभयस्य प्रविद्वान्त्सहस्रदान उत वा सदानः ।
यमेन ततं परिधिं वयिष्यन्नप्सरसः परि जज्ञे वसिष्ठः ॥ १२ ॥

सः । प्रऽकेतः । उभयस्य । प्रऽविद्वान् । सहस्रऽदानः । उत । वा । सऽदानः ।
यमेन । ततम् । परिऽधिम् । वयिष्यन् । अप्सरसः । परि । जज्ञे । वसिष्ठः ॥ १२ ॥

**वेङ्कट०** वसिष्ठः प्रज्ञाता पार्थिवं दिव्यं च लोकं प्रजानन् गोसहस्रदानः, यद्वा सर्वदा दानयुक्तः, न सहस्रदानः एव । यमेन ततम् कर्मतन्तुम् वयिष्यन् अप्सरसः परि अजायत वसिष्ठः ॥ १२ ॥

---

१. °श्याम मूको. २. वमन्तः मूको. ३. °त्याहूत° मूको. ४. सम्मत्यै वि[१] अ[१]; °न्त्यं ल लभ. ५-५. नास्ति मूको. ६. °तीपरे वि[१] अ[१]; वास्तीपरे ल लभ. ७. °शीगता वि[१] अ[१]; °शीगतो ल लभ. ८. इत्यल्पो मूको.

सत्रे ह जाताविषिता नमोभिः कुम्भे रेतः सिषिचतुः समानम् ।
ततो ह मान उदियाय मध्यात् ततो जातमृषिमाहुर्वसिष्ठम् ॥ १३ ॥

सत्रे । ह । जातौ । इषिता । नमःऽभिः । कुम्भे । रेतः । सिसिचतुः । समानम् ।
ततः । ह । मानः । उत् । इयाय । मध्यात् । ततः । जातम् । ऋषिम् । आहुः । वसिष्ठम् ॥ १३ ॥

**वेङ्कट०** सत्रे प्रादुर्भूतौ मित्रावरुणौ यज्ञे प्रवृत्तौ हविर्भिः मानुषैः स्वेषुस्वेषु यज्ञेषु अध्येषितौ कुम्भे रेतः सिषिचतुः समानम् । ततः कुम्भस्य मध्यात् अगस्त्यः उत् इयाय । ततः[1] जातम् ऋषिम् आहुः वसिष्ठम् ॥ १३ ॥

उक्थभृतं सामभृतं बिभर्ति ग्रावाणं बिभ्रत् प्र वदात्यग्रे ।
उपैनमाध्वं सुमनस्यमाना आ वो गच्छाति प्रतृदो वसिष्ठः ॥ १४ ॥

उक्थऽभृतम् । सामऽभृतम् । बिभर्ति । ग्रावाणम् । बिभ्रत् । प्र । वदाति । अग्रे ।
उप । एनम् । आध्वम् । सुऽमनस्यमानाः । आ । वः । गच्छाति । प्रऽतृदः । वसिष्ठः ॥ १४ ॥

**वेङ्कट०** होता उक्थभृत्, उद्गाता सामभृत्[2] । तौ वसिष्ठोऽध्वर्युः सन्धारयति[3] । तथा[4] अभिषवणग्रावाणं धारयन् प्रथममेव यजूंषि [5]प्र वदति[5] । उप विशत एनम् सुमनसो भवन्तः । आ गच्छति[6] युष्मान्[7] हे [8]प्रतृदः ! तृत्सवः ![8] वसिष्ठः इति ॥ १४ ॥

[9]इति पञ्चमाष्टके तृतीयाध्याये चतुर्विंशो वर्गः[9] ।

## [ ३४ ]

[9]वसिष्ठो मैत्रावरुणिर्ऋषिः । विश्वे देवा देवता, षोडश्या अहिः, सप्तदश्या अहिर्बुध्न्यः ।
द्विपदा विराट् छन्दः, अन्त्याश्चतस्त्रस्त्रिष्टुभः[9] ।

प्र शुक्रैतु देवी मनीषा अस्मत् सुतष्टो रथो न वाजी ॥ १ ॥

प्र । शुक्रा । एतु । देवी । मनीषा । अस्मत् । सुऽतष्टः । रथः । न । वाजी ॥ १ ॥

**वेङ्कट०** वसिष्ठः । वैश्वदेवम् । प्र एतु ज्वलन्ती देवी स्तुतिर्वाग् अस्मत्तः सुतष्टः रथः इव वेगवानिति ॥ १ ॥

विदुः पृथिव्या दिवो जनित्रं शृण्वन्त्यापो अध क्षरन्तीः ॥ २ ॥

विदुः । पृथिव्याः । दिवः । जनित्रम् । शृण्वन्ति । आपः । अध । क्षरन्तीः ॥ २ ॥

**वेङ्कट०** ओषधीः पुष्यन्त्या अस्याः द्युलोकात् जनितम् उदकम् आगच्छतीति विदुः । एतदेवाह— तदनन्तरम् शृण्वन्ति [10]आपः स्वर्गात्[10] क्षरन्त्यः[11] ॥ २ ॥

---

१. तन्तवे वि[२]; ततवे अ[१] ल लभ. २. °महृत् मूको. ३. °रयन्ति मूको. ४. कथं वि[२]; कथा अ[१]. ५-५. प्रवति मूको. ६. °च्छन्ति मूको. ७ युष्मासु( °स लभ. ) वि[२] ल लभ; °ष्माकं स अ[१]. ८-८. प्रतूस्थूत्सवो वि[२]; प्रतुत्सूरथ अ[१]; पुत्रदस्तृनृत्सवः ल लभ. ९-९. नास्ति मूको. १०-१०. उपसर्गाव वि[२] अ[१]; अपः स्व° लभ. ११. क्षरन्ति मूको.

आप॑श्चिदस्मै॒ पिन्व॑न्त पृ॒थ्वीर्वृ॒त्रेषु॒ शूरा॒ मंस॑न्त उ॒ग्राः ॥ ३ ॥

आप॑ः । चि॒त् । अ॒स्मै॒ । पिन्व॑न्त । पृ॒थ्वीः । वृ॒त्रेषु॑ । शूरा॑ः । मंस॑न्ते । उ॒ग्राः ॥ ३ ॥

**वेङ्कट०** आपः चित् अस्मै इन्द्राय अक्षरन् विस्तीर्णाः । युद्धेषु चैनम्[1] शूराः स्तुवन्ति उग्राः ॥ ३ ॥

आ धू॒र्ष्व॑स्मै॒ दधा॒ताश्वा॒निन्द्रो॒ न व॒ज्री हिर॑ण्यबाहुः ॥ ४ ॥

आ । धूः॒ऽसु । अ॒स्मै॒ । दधा॑त । अश्वा॑न् । इन्द्र॑ः । न । व॒ज्री । हिर॑ण्यऽबाहुः ॥ ४ ॥

**वेङ्कट०** आ दधात इन्द्राय रथस्य धूर्षु अश्वान्, इन्द्रः इदानीं वज्रवान् हिरण्यपाणिः[2] आगच्छतु ॥ ४ ॥

अ॒भि प्र स्था॒ताहे॑व य॒ज्ञं याते॑व॒ पत्म॒न् त्मना॑ हिनोत ॥ ५ ॥

अ॒भि । प्र । स्था॒त॒ । अह॑ऽइव । य॒ज्ञम् । याता॑ऽइव । पत्म॑न् । त्मना॑ । हि॒नो॒त॒ ॥ ५ ॥

**वेङ्कट०** यथा अहानि सूर्यः अभिप्रतिष्ठते तथा यूयम् यज्ञम् अभि प्र तिष्ठत । याता अध्वगः[3] स यथा मार्गे पादं प्रेरयति, तथा[4] यज्ञं स्वयमेव प्रेरयतेति । अस्योत्तरा[5] भूयसे निर्वचनाय ॥ ५ ॥

त्मना॑ स॒मत्सु॑ हि॒नोत॑ य॒ज्ञं दधा॑त के॒तुं जना॑य वी॒रम् ॥ ६ ॥

त्मना॑ । स॒मत्ऽसु॑ । हि॒नोत॑ । य॒ज्ञम् । दधा॑त । के॒तुम् । जना॑य । वी॒रम् ॥ ६ ॥

**वेङ्कट०** स्वयम् एषु सङ्ग्रामेषु प्रवृत्तेषु निष्क्रमयत । यज्ञम् पुरोदधत । शत्रुजनाय युद्धेष्वारमनो[6] ज्ञापयितारम् वीरम् ॥ ६ ॥

उद॑स्य॒ शुष्मा॑द् भा॒नुर्नार्त॒ बिभ॑र्ति भा॒रं पृ॑थि॒वी न भूम॑ ॥ ७ ॥

उत् । अ॒स्य॒ । शुष्मा॑त् । भा॒नुः । न । आर्त॑ । बिभ॑र्ति । भा॒रम् । पृ॒थि॒वी । न । भूम॑ ॥ ७ ॥

**वेङ्कट०** [7]उत् गच्छतु[7] यज्ञस्य बलाद् आदित्य इव शत्रून् प्रति वीरः । सोऽयं यज्ञः बिभर्ति[8] भारम् यथा भूमिः[9] भूतजातमिति ॥ ७ ॥

ह्वया॑मि दे॒वाँ अया॑तुरग्ने॒ साध॑न्नृ॒तेन॒ धियं॑ दधामि ॥ ८ ॥

ह्वया॑मि । दे॒वान् । अया॑तुः । अ॒ग्ने॒ । साध॑न् । ऋ॒तेन॑ । धिय॑म् । द॒धा॒मि॒ ॥ ८ ॥

**वेङ्कट०** ह्वयामि[10] देवान् [11]अगच्छन् अहिंसको वा[11] अग्ने! । साधयन् यज्ञं सत्येन अहं कर्म धारयामि ॥ ८ ॥

अ॒भि वो॑ दे॒वीं धियं॑ दधिध्वं॒ प्र वो॑ देव॒त्रा वाचं॑ कृणुध्वम् ॥ ९ ॥

अ॒भि । वः॒ । दे॒वीम् । धिय॑म् । द॒धि॒ध्व॒म् । प्र । वः॒ । दे॒व॒ऽत्रा । वाच॑म् । कृ॒णु॒ध्व॒म् ॥ ९ ॥

---

१. चैवं अ[1]. २. °ण्यवान् बाहुः अ[1]; °ण्यबाहुः ल लअ. ३. °ध्वगेरा मूको. ४. यथा मूको. ५. अस्याः उत्तरा ल प्रस्तावः. ६. युद्धेनातम° मूको. ७-७. तुच्छस्य तु मूको; उदार्त ल प्रस्तावः. ८. विभक्ति मूको. ९. भूमि मूको. १०. ह्वयान मूको. ११-११. ष्यच्छन्न हिंसको वाम् मूको.

वेङ्कट० अभि धारयत यूयं देवनशीलम् कर्म । देवेषु च वाचम् यूयम् प्र धारयतेति ॥ ९ ॥

आ चष्ट आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः ॥ १० ॥

आ । चष्टे । आसाम् । पाथः । नदीनाम् । वरुणः । उग्रः । सहस्रऽचक्षाः ॥ १० ॥

वेङ्कट० आसाम् नदीनाम् उदकम् आ चष्टे अभिपश्यति वरुणः उग्रः सहस्रदर्शनः ॥ १० ॥

[1]इति पञ्चमाष्टके तृतीयाध्याये पञ्चविंशो वर्गः[1] ॥

राजा राष्ट्रानां पेशो नदीनामनुत्तमस्मै क्षत्रं विश्वायु ॥ ११ ॥

राजा । राष्ट्रानाम् । पेशः । नदीनाम् । अनुत्तम् । अस्मै । क्षत्रम् । विश्वऽआयु ॥ ११ ॥

वेङ्कट० राजमानानाम् अन्येषां प्रभूणामपि राजा । अपि वा जनपदा राष्ट्राणि । णत्वाभावश्छान्दसः[2] । रूपम् नदीनाम् । अनुन्नं शत्रुभिः अस्मै बलम् भवतु[3] सर्वगामि ॥ ११ ॥

अविष्टो अस्मान् विश्वासु विक्ष्वद्युं कृणोत शंसं निनित्सोः ॥ १२ ॥

अविष्टो इति । अस्मान् । विश्वासु । विक्षु । अद्युम् । कृणोत । शंसम् । निनित्सोः ॥ १२ ॥

वेङ्कट० रक्षति एव अस्मान् सर्वासु प्रजासु । स निन्दितुमिच्छतः शत्रोः शंसनम् अद्योतमानम् करोतु ॥ १२ ॥

व्येतु दिद्युद् द्विषामशेवा युयोत विष्वग्रपस्तनूनाम् ॥ १३ ॥

वि । एतु । दिद्युत् । द्विषाम् । अशेवा । युयोत । विष्वक् । रपः । तनूनाम् ॥ १३ ॥

वेङ्कट० अपगच्छतु[4] आयुधम् शत्रूणाम् असुखम् । पृथक् करोतु विष्वक् पापम् तनूनाम् ॥ १३ ॥

अवीन्नो अग्निर्हव्यान्नमोभिः प्रेष्ठो अस्मा अधायि स्तोमः ॥ १४ ॥

अवीत् । नः । अग्निः । हव्यऽअत् । नमःऽभिः । प्रेष्ठः । अस्मै । अधायि । स्तोमः ॥ १४ ॥

वेङ्कट० रक्षतु अस्मान् अग्निः हविषोऽत्ता[5] नमस्कारैः प्रियतमः । अस्मै अग्नये अस्माभिः स्तोमाः कृताः ॥ १४ ॥

सजूर्देवेभिरपां नपातं सखायं कृध्वं शिवो नो अस्तु ॥ १५ ॥

सऽजूः । देवेभिः । अपाम् । नपातम् । सखायम् । कृध्वम् । शिवः । नः । अस्तु ॥ १५ ॥

वेङ्कट० अपान्नपाद् देवैः सङ्गतो भवति । तम् अपाम् नपातम् सखायम् कुरुध्वम् । सः शिवः अस्माकम् अस्तु ॥ १५ ॥

---

१-१. नास्ति मूको. २. णमावच्छा° मूको. ३. भवति अ[1]. ४. भवग° अ[1] लक्ष. ५. °षोक्ता वि[1].

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ॥ १६ ॥

अप्ऽजाम् । उक्थैः । अहिम् । गृणीषे । बुध्ने । नदीनाम् । रजःऽसु । सीदन् ॥ १६ ॥

**वेङ्कट०** अप्सुजातम् शस्त्रैः अहिम्[1] गृणीषे नदीनाम् बुध्ने उदकेषु सीदन्तम्। निरुक्तं द्रष्टव्यम् ( या १०,४४ ) ॥ १६ ॥

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ॥ १७ ॥

मा । नः । अहिः । बुध्न्यः । रिषे । धात् । मा । यज्ञः । अस्य । स्रिधत् । ऋतऽयोः ॥ १७ ॥

**वेङ्कट०** मा अस्मान् [2]अहिः बुध्न्यः[2] देवो विनाशाय दधातु। मा च अस्य यज्ञोखा अवस्रवतु[3] यज्ञकामस्येति ॥ १७ ॥

उत न एषु नृषु श्रवो धुः प्र राये यन्तु शर्धन्तो अर्यः ॥ १८ ॥

उत । नः । एषु । नृषु । श्रवः । धुः । प्र । राये । यन्तु । शर्धन्तः । अर्यः ॥ १८ ॥

**वेङ्कट०** अपि च अस्माकम् एषां नृणां मध्ये अन्नम् ददतु। प्र यच्छन्तु च धनाय। शर्धतिरुत्साहकर्मा। शर्धन्तः गमनशीला देवाः ॥ १८ ॥

तपन्ति शत्रुं स्वर्ण भूमा महासेनासो अमेभिरेषाम् ॥ १९ ॥

तपन्ति । शत्रुम् । स्वः । न । भूम । महाऽसेनासः । अमेभिः । एषाम् ॥ १९ ॥

**वेङ्कट०** तपन्ति शत्रुम् आदित्य इव [4]भूमिम् महासेनाः[4] स्तोतारः बलैः देवानाम् ॥ १९ ॥

आ यन्नः पत्नीर्गमन्त्यच्छा त्वष्टा सुपाणिर्दधातु वीरान् ॥ २० ॥

आ । यत् । नः । पत्नीः । गमन्ति । अच्छ । त्वष्टा । सुऽपाणिः । दधातु । वीरान् ॥ २० ॥

**वेङ्कट०** यदि अस्मान् देवपत्न्यः आ गच्छन्ति। यदि च सुपाणिः त्वष्टा वीरान् धारयति। पूर्वत्र सम्बन्धः ॥ २० ॥

[5]इति पञ्चमाष्टके तृतीयाध्याये षड्विंशो वर्गः[5] ॥

प्रति नः स्तोमं त्वष्टा जुषेत स्यादस्मे अरमतिर्वसूयुः ॥ २१ ॥

प्रति । नः । स्तोमम् । त्वष्टा । जुषेत । स्यात् । अस्मे इति । अरमतिः । वसुऽयुः ॥ २१ ॥

**वेङ्कट०** प्रति सेवेत अस्माकम् स्तोमम्[6] त्वष्टा। भवतु अस्मासु पर्याप्तमतिः त्वष्टा धनकामः ॥ २१ ॥

---

१. अभि वि²; रहितम् ल लभ. २-२. अहिर्बुन्यः ल लभ. ३. °वन्तु ल लभ. ४-४. °मिस्थद्दा° वि²; °मिस्थभा° अ¹ लभ; °मिस्हा° ल. ५-५. नास्ति मूको. ६. सोमः वि² अ¹; स्तोमः ल लभ.

ता नो॑ रासन् राति॒षाचो॒ वसू॒न्या रोद॑सी वरुणा॒नी शृ॑णोतु ।
वरू॑त्रीभिः सुशर॒णो नो॑ अस्तु॒ त्वष्टा॑ सु॒दत्रो॒ वि द॑धातु॒ राय॑ः ॥ २२ ॥

ता । नः॒ । रा॒स॒न् । रा॒ति॒ऽसाचः॑ । वसू॑नि । आ । रोद॑सी॒ इति॑ । व॒रु॒णा॒नी । शृ॒णो॒तु॒ ।
वरू॑त्रीभिः । सु॒ऽश॒र॒णः । नः॒ । अ॒स्तु॒ । [१]त्वष्टा॑ । सु॒ऽदत्रः॑ । वि । द॒धा॒तु॒ । राय॑ः[१] ॥ २२ ॥

**वेङ्कट०** तानि अस्मभ्यं ददतु दानस्य सम्भक्तयः[२] धनानि[३]। द्यावापृथिव्यौ तदनुगच्छेताम्। तथा [४]आ श्रृणोतु[४] वरुणानी च स्तुतिम्[५]। देवपत्नीभिः सह सुगृहः अस्माकम् अस्तु। त्वष्टा सुधनः[६] करोतु चाभिमतं धनं हितम्[७] ॥ २२ ॥

तन्नो॑ रा॒यः पर्व॑ता॒स्तन्न॒ आप॒स्तद्रा॑ति॒षाच॒ ओष॑धीरु॒त द्यौः ।
वन॒स्पति॑भिः पृथि॒वी स॒जोषा॑ उ॒भे रोद॑सी॒ परि॑ पासतो नः ॥ २३ ॥

तत् । नः॒ । राय॑ः । पर्व॑ताः । तत् । नः॒ । आप॑ः । तत् । रा॒ति॒ऽसाचः॑ । ओष॑धीः । उ॒त । द्यौः ।
वन॒स्पति॑ऽभिः । पृ॒थि॒वी । स॒ऽजोषा॑ः । उ॒भे इति॑ । रोद॑सी॒ इति॑ । परि॑ । पा॒स॒तः॒ । नः॒ ॥ २३ ॥

**वेङ्कट०** [८]तत् इदं[८] स्तोत्रम् अस्माकं त्वष्टृप्रभृतयः परि रक्षन्त्विवति ॥ २३ ॥

अनु॒ तदु॒र्वी रोद॑सी जिहाता॒मनु॑ द्यु॒क्षो वरु॑ण॒ इन्द्र॑सखा ।
अनु॒ विश्वे॑ म॒रुतो॒ ये स॒हासो॑ रा॒यः स्या॑म ध॒रुणं॑ धि॒यध्यै॑ ॥ २४ ॥

अनु॑ । तत् । उ॒र्वी इति॑ । रोद॑सी॒ इति॑ । जि॒हा॒ता॒म् । अनु॑ । द्यु॒क्षः । वरु॑णः । इन्द्र॑ऽसखा ।
अनु॑ । विश्वे॑ । म॒रुतः॑ । ये । स॒हास॑ः । रा॒यः । स्या॒म॒ । ध॒रुण॑म् । धि॒यध्यै॑ ॥ २४ ॥

**वेङ्कट०** विस्तीर्णे द्यावापृथिव्यौ तत् अनु गच्छेताम्। तथा वरुणः च दीप्तः[९] अनु गच्छतु इन्द्रसखा[१०]। अनु गच्छन्तु विश्वे च मरुतः ये सहनशीलाः। धनस्य गृहम् वयं स्याम श्रितानां धारणार्थमिति ॥ २४ ॥

तन्न॒ इन्द्रो॒ वरु॑णो मि॒त्रो अ॒ग्निराप॒ ओष॑धीर्व॒निनो॑ जुषन्त ।
शर्म॑न्त्स्याम म॒रुता॑मु॒पस्थे॑ यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ २५ ॥

तत् । नः॒ । इन्द्र॑ः । वरु॑णः । मि॒त्रः । अ॒ग्निः । आप॑ः । ओष॑धीः । व॒निन॑ः । जु॒ष॒न्त॒ ।
शर्म॑न् । स्या॒म॒ । म॒रुता॑म् । उ॒पऽस्थे॑ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । नः॒ ॥ २५ ॥

---

१-१. या ६,१४ द्र. २. संभक्ता वि[२]; संभक्त्या अ[१]; सभक्तयः ल लभ. ३. °नि माशृणोतु मूको. ४-४. नास्ति मूको. ५. स्तुतिः वि[२] ल लभ; स्तुति अ[१]. ६. °धनम् वि[२] अ[१]; °धन ल लभ. ७. हितः लभ. ८-८. तदित् ल लभ. ९. दीप्तेः मूको. १०. °न्द्रसुखा मूको.

**वेङ्कट०** तत् इदम् अस्माकम् इन्द्रादयः सेवन्ताम्, [1]ओषध्यः वृक्षाश्च[1]। तथा वयम् मरुताम् उपस्थाने सति सुखे स्याम इति ॥ २५ ॥

[2]इति पञ्चमाष्टके तृतीयाध्याये सप्तविंशो वर्गः[2] ॥

## [ ३५ ]

[2]वसिष्ठो मैत्रावरुणिर्ऋषिः। विश्वेदेवा देवता। त्रिष्टुप् छन्दः[2]।

शं न॑ इन्द्रा॒ग्नी भ॑वता॒मवो॑भिः॒ शं न॒ इन्द्रा॒वरु॑णा रा॒तह॑व्या ।
शमिन्द्रा॒सोमा॑ सुवि॒ताय॒ शं योः शं न॒ इन्द्रा॑पू॒षणा॒ वाज॑सातौ ॥ १ ॥

शम् । न॒ः । इ॒न्द्रा॒ग्नी इति॑ । भ॒व॒ता॒म् । अव॑ःऽभिः । शम् । न॒ः । इन्द्रा॒वरु॑णा । रा॒तऽह॑व्या ।
शम् । इन्द्रा॒सोमा॑ । सु॒वि॒ताय॑ । शम् । योः । शम् । न॒ः । इन्द्रा॑पू॒षणा॑ । वाज॑ऽसातौ ॥ १ ॥

**वेङ्कट०** शमयितारावुपद्रवाणाम् इन्द्राग्नी भवताम् [3]रक्षणैः इति। इन्द्रस्य प्राधान्यात् सर्वेष्वनुषङ्गः। शम् अस्माकम् इन्द्रावरुणौ मनुष्यैर्दत्तहविष्कौ। शम् इन्द्रासोमौ अभ्युदयार्थम् अस्माकम्। शम् योः च भवताम्[3]। [4]शम् इति[4] पुनः[5] पूरणम्। शम् अस्माकम् इन्द्रापूषणौ युद्ध इति ॥ १ ॥

शं नो॒ भगः॒ शमु॑ न॒ः शंसो॑ अस्तु॒ शं न॒ः पुरं॑धिः॒ शमु॑ सन्तु॒ राय॑ः ।
शं न॑ः स॒त्यस्य॑ सु॒यम॑स्य॒ शंसः॒ शं नो॑ अर्य॒मा पु॑रुजा॒तो अ॑स्तु ॥ २ ॥

शम् । न॒ । भग॑ः । शम् । ऊँ इति॑ । न॒ः । शंस॑ः । अ॒स्तु॒ । शम् । न॒ः । पुर॑म्ऽधिः । शम् । ऊँ इति॑ ।
स॒न्तु॒ । राय॑ः ॥ शम् । न॒ः । स॒त्यस्य॑ । सु॒ऽयम॑स्य । शंस॑ः । शम् । न॒ः । अ॒र्य॒मा । पु॒रु॒ऽजा॒तः । अ॒स्तु॒ ॥ २ ॥

**वेङ्कट०** शम् अस्माकम् भगः देवः। शम् एव अस्माकं नराशंसः भवतु। शम् अस्माकं प्रज्ञा। शम् एव भवन्तु धनानि। शम् नः सत्यस्य सुयमस्य[6] शंसनम्। शम् नः अर्यमा बहुजनः भवतु ॥ २ ॥

शं नो॑ धा॒ता शमु॑ ध॒र्ता नो॑ अस्तु॒ शं न॑ उरू॒ची भ॑वतु स्व॒धाभि॑ः ।
शं रोद॑सी बृह॒ती शं नो॒ अद्रि॒ः शं नो॑ दे॒वानां॑ सु॒हवा॑नि सन्तु ॥ ३ ॥

शम् । न॒ः । धा॒ता । शम् । ऊँ इति॑ । ध॒र्ता । न॒ः । अ॒स्तु॒ । शम् । न॒ः । उ॒रू॒ची । भ॒व॒तु॒ । स्व॒धाभि॑ः ।
शम् । रोद॑सी इति॑ । बृ॒ह॒ती इति॑ । शम् । न॒ः । अद्रि॑ः । शम् । न॒ः । दे॒वाना॑म् ।
सु॒ऽहवा॑नि । स॒न्तु॒ ॥ ३ ॥

**वेङ्कट०** शम् नः धाता भवतु। शम् एव धर्ता। शम् नः विस्तीर्णा पृथिवी अन्नैः भवतु। शम् द्यावापृथिव्यौ महत्यौ। शम् पर्वतः। शम् नः देवानाम् स्वाह्वानानि स्तोत्राणि भवन्तु ॥ ३ ॥

---

१-१. तु. ऋ ७,३५,५ मस्य मन्त्रस्य भाष्यम्; वृक्षाः वनिनः मूको. 　२-२. नास्ति मूको.
३-३. नास्ति लभ. 　४-४. शमीति मूको. 　५. नास्ति अ[1]. 　६. सयम° मूको.

शं नो॑ अ॒ग्निर्ज्योति॑रनीको अस्तु॒ शं नो॑ मि॒त्राव॑रु॒णाव॒श्विना॒ शम् ।
शं नः॑ सु॒कृतां॑ सुकृ॒तानि॑ सन्तु॒ शं न॑ इषि॒रो अ॒भि वा॑तु॒ वातः॑ ॥ ४ ॥

शम् । नः॒ । अ॒ग्निः । ज्योतिः॑ऽअनीकः । अ॒स्तु॒ । शम् । नः॒ । मि॒त्रावरु॑णौ । अ॒श्विना॑ । शम् ।
शम् । नः॒ । सु॒ऽकृता॑म् । सु॒ऽकृ॒तानि॑ । स॒न्तु॒ । शम् । नः॒ । इ॒षि॒रः । अ॒भि । वा॒तु॒ । वातः॑ ॥४॥

**वेङ्कट०** शम् अस्माकम् अग्निः ज्योतिर्मुखो भवतु । शम् अस्माकम् मित्रावरुणौ[1] अश्विनौ च । शम् नः सुकृताम् सुकृतानि कर्माणि भवन्तु । तथा सुखम् अस्माकं गमनशीलः वातः आ वातु ॥ ४ ॥

शं नो॒ द्यावा॑पृथि॒वी पू॒र्वहू॑तौ॒ शम॒न्तरि॑क्षं दृ॒शये॑ नो अस्तु ।
शं न॒ ओष॑धीर्व॒निनो॑ भवन्तु॒ शं नो॒ रज॑स॒स्पति॑रस्तु जि॒ष्णुः ॥ ५ ॥

शम् । नः॒ । द्यावा॑पृथि॒वी इति॑ । पू॒र्वऽहू॑तौ । शम् । अ॒न्तरि॑क्षम् । दृ॒शये॑ । नः॒ । अ॒स्तु॒ ।
शम् । नः॒ । ओष॑धीः । व॒निनः॑ । भ॒व॒न्तु॒ । शम् । नः॒ । रज॑सः । पतिः॑ । अ॒स्तु॒ । जि॒ष्णुः ॥५॥

**वेङ्कट०** शम् अस्माकं द्यावापृथिव्यौ प्रथमाह्वाने । सुखम् अन्तरिक्षम् दर्शनाय अस्माकं भवतु । शम् नः ओषध्यः वृक्षाः च भवन्तु । शम् नः लोकस्य पतिः अस्तु जिष्णुः आदित्यः ॥ ५ ॥

[2]इति पञ्चमाष्टके तृतीयाध्याये अष्टाविंशो वर्गः[2] ॥

शं न॒ इन्द्रो॒ वसु॑भिर्दे॒वो अ॑स्तु॒ शमा॑दि॒त्येभि॒र्वरु॑णः सु॒शंसः॑ ।
शं नो॑ रु॒द्रो रु॒द्रेभि॒र्जला॑षः॒ शं न॒स्त्वष्टा॒ ग्नाभि॑रि॒ह शृ॑णोतु ॥ ६ ॥

शम् । नः॒ । इन्द्रः॑ । वसु॑ऽभिः । दे॒वः । अ॒स्तु॒ । शम् । आ॒दि॒त्येभिः॑ । वरु॑णः । सु॒ऽशंसः॑ ।
शम् । नः॒ । रु॒द्रः । रु॒द्रेभिः॑ । जला॑षः । शम् । नः॒ । त्वष्टा॑ । ग्नाभिः॑ । इ॒ह । शृ॒णो॒तु॒ ॥ ६ ॥

**वेङ्कट०** शम् नः इन्द्रः वसुभिः सह देवः भवतु । तथा आदित्यैः [3]वरुणः च[3] शम् भवतु सुष्टुतिः[4] । शम् नः रुद्रः रुद्रैः सुखकरः । 'जलाषः' ( निघ ३,६ ) इति सुखनाम[5] । शम् नः त्वष्टा देवपत्नीभिः सह स्तोत्रम् इह शृणोतु ॥ ६ ॥

शं नः॒ सोमो॑ भवतु॒ ब्रह्म॒ शं नः॒ शं नो॒ ग्रावा॑णः॒ शमु॑ सन्तु य॒ज्ञाः ।
शं नः॒ स्वरू॑णां मि॒तयो॑ भवन्तु॒ शं नः॑ प्र॒स्व१ः शम्व॑स्तु॒ वेदिः॑ ॥ ७ ॥

शम् । नः॒ । सोमः॑ । भ॒व॒तु॒ । ब्रह्म॑ । शम् । नः॒ । शम् । नः॒ । ग्रावा॑णः । शम् । ऊँ इति॑ । स॒न्तु॒ । य॒ज्ञाः ।
शम् । नः॒ । स्वरू॑णाम् । मि॒तयः॑ । भ॒व॒न्तु॒ । शम् । नः॒ । प्र॒ऽस्वः॑ । शम् । ऊँ इति॑ ।
अ॒स्तु॒ । वेदिः॑ ॥ ७ ॥

---

१. इन्द्रावरु० मूको. २-२. नास्ति मूको. ३-३. °रुणस्य मूको. ४. सुष्ठ्विति वि[२] अ[१].
५. °खमावः मूको.

वेङ्कट० शम् नः सोमः भवतु । ब्रह्म च अस्माकं शङ्करम् । शम् नः ग्रावाणः । शम् एव सन्तु यज्ञाः । शम् नः यूपानां मानानि भवन्तु । शम् नः बर्हींषि । शम् एव अस्तु वेदिः[1] ॥ ७ ॥

शं नः सूर्य उरुचक्षा उदेतु शं नश्चतस्रः प्रदिशो भवन्तु ।
शं नः पर्वता ध्रुवयो भवन्तु शं नः सिन्धवः शमु सन्त्वापः ॥ ८ ॥

शम् । नः । सूर्यः । उरुऽचक्षाः । उत् । एतु । शम् । नः । चतस्रः प्रऽदिशः । भवन्तु ।
शम् । नः । पर्वताः । ध्रुवयः । भवन्तु । शम् । नः । सिन्धवः । शम् । ऊँ इति । सन्तु । आपः ॥

वेङ्कट० कल्याणम् अस्माकम् सूर्यः उत् एतु बहूनां द्रष्टा । शम् नः चतस्रः मुख्या दिशः भवन्तु । शम् नः पर्वताः निश्चलं[2] तिष्ठन्तः भवन्तु । शम् नः सिन्धवः । शम् एव सन्तु आपः इति ॥ ८ ॥

शं नो अदितिर्भवतु व्रतेभिः शं नो भवन्तु मरुतः स्वर्काः ।
शं नो विष्णुः शमु पूषा नो अस्तु शं नो भवित्रं शम्वस्तु वायुः ॥ ९ ॥

शम् । नः । अदितिः । भवतु । व्रतेभिः । शम् । नः । भवन्तु । मरुतः । सुऽअर्काः ।
शम् । नः । विष्णुः । शम् । ऊँ इति । पूषा । नः । अस्तु । शम् । नः । भवित्रम् । शम् । ऊँ इति । अस्तु । वायुः ॥ ९ ॥

वेङ्कट० शम् अस्माकम् अदितिः भवतु कर्मभिः । शम् नः भवन्तु मरुतः स्वर्चनाः । शम् नः विष्णुः । शम् एव पूषा नः अस्तु । शम् अस्माकम् अस्तु भवित्रम् यत्किञ्चन पृथिव्यां भवति । शम् एव अस्तु वायुः ॥ ९ ॥

शं नो देवः सविता त्रायमाणः शं नो भवन्तूषसो विभातीः ।
शं नः पर्जन्यो भवतु प्रजाभ्यः शं नः क्षेत्रस्य पतिरस्तु शंभुः ॥ १० ॥

शम् । नः । देवः । सविता । तायमाणः । शम् । नः । भवन्तु । उषसः । विऽभातीः ।
शम् । नः । पर्जन्यः । भवतु । प्रऽजाभ्यः । शम् । नः । क्षेत्रस्य । पतिः । अस्तु । शम्ऽभुः ॥

वेङ्कट० शम् नः देवः सविता रक्षन्[3] । शम्[4] नः भवन्तु उषसः व्युच्छन्त्यः । शम् नः पर्जन्यः भवतु प्रजाभ्यः । शम् अस्माकम् अस्तु क्षेत्रस्य पतिः सुखस्य भावयिता ॥ १० ॥

[5]इति पञ्चमाष्टके तृतीयाध्याये एकोनत्रिंशो वर्गः[5] ॥

शं नो देवा विश्वदेवा भवन्तु शं सरस्वती सह धीभिरस्तु ।
शमभिषाचः शमु रातिषाचः शं नो दिव्याः पार्थिवाः शं नो अप्याः ॥ ११ ॥

---

१. वेदिम् अ' लअ. २. निश्चलाः अ' ल लअ. ३. रक्ष मूको. ४. ज मूको. ५-५. नास्ति मूको.

शम् । नः । देवाः । विश्वऽदेवाः । भवन्तु । शम् । सरस्वती । सह । धीभिः । अस्तु ।
शम् । अभिऽसाचः । शम् । ऊँ इति । रातिऽसाचः । शम् । नः । दिव्याः । पार्थिवाः । शम् ।
नः । अप्याः ॥ ११ ॥

**वेङ्कट०** विश्वे देवाः नाम देवताः अस्माकम् शम् भवन्तु । शम् सरस्वती सह कर्मभिः अस्तु । शम् अभिगन्तारः । शम् एव धनस्य सेवितारः । शम् नः दिवि भवाः । शम् नः[१] पार्थिवाः अन्तरिक्ष्याः[२] च[१] ॥ ११ ॥

**शं नः सत्यस्य पतयो भवन्तु शं नो अर्वन्तः शमु सन्तु गावः ।**
**शं न ऋभवः सुकृतः सुहस्ताः शं नो भवन्तु पितरो हवेषु ॥ १२ ॥**

शम् । नः । सत्यस्य । पतयः । भवन्तु । शम् । नः । अर्वन्तः । शम् । ऊँ इति । सन्तु । गावः ।
शम् । नः । ऋभवः । सुऽकृतः । सुऽहस्ताः । शम् । नः । भवन्तु । पितरः । हवेषु ॥ १२ ॥

**वेङ्कट०** अग्निर्यमो वरुण इति सत्यस्य पतयः अस्माकम् शम् भवन्तु । शम् नः अश्वाः । शम् एव भवन्तु गावः । शम् नः ऋभवः सुकर्माणः[३] कुशलहस्ताः । शम् अस्माकम् भवन्तु पितरः ह्वानेषु ॥ १२ ॥

**शं नो अज एकपाद् देवो अस्तु शं नोऽहिर्बुध्न्यः शं समुद्रः ।**
**शं नो अपां नपात् पेरुरस्तु शं नः पृश्निर्भवतु देवगोपा ॥ १३ ॥**

शम् । नः । अजः । एकऽपात् । देवः । अस्तु । शम् । नः । अहिः । बुध्न्यः । शम् । समुद्रः ।
शम् । नः । अपाम् । नपात् । पेरुः । अस्तु । शम् । नः । पृश्निः । भवतु । देवऽगोपा ॥१३॥

**वेङ्कट०** शम् अस्माकम् अजः एकपात् नाम देवः भवतु । शम् अस्माकम् अहिः बुध्न्यः । शम् अन्तरिक्षम् । शम् अस्माकम् अपाम् नपात् रक्षको भवतु । शम् नः पृश्निः भवतु देवाः गोपनीयाः [४]गोपायितारो वा यस्याः सा[४] ॥ १३ ॥

**आदित्या रुद्रा वसवो जुषन्तेदं ब्रह्म क्रियमाणं नवीयः ।**
**शृण्वन्तु नो दिव्याः पार्थिवासो गोजाता उत ये यज्ञियासः ॥ १४ ॥**

आदित्याः । रुद्राः । वसवः । जुषन्त । इदम् । ब्रह्म । क्रियमाणम् । नवीयः ।
शृण्वन्तु । नः । दिव्याः । पार्थिवासः । गोऽजाताः । उत । ये । यज्ञियासः ॥ १४ ॥

**वेङ्कट०** आदित्यादयो वसिष्ठेन इदम्[१] क्रियमाणम् नवतरम् स्तोत्रम् सेवन्ताम् । शृण्वन्तु अस्माकम् दिव्याः देवाः पार्थिवाश्च, अपि च [५]ये अपि[५] गोजाताः[६] मरुतो यज्ञियाश्च आदित्याः ॥ १४ ॥

---

१. नास्ति मूको. २. अन्त° मूको. ३. सुवर्मा° मूको. ४-४. यस्या गोपयितारो वा मूको.
५-५. येऽति मूको. ६. गाजाता ल लभ.

ये देवानां यज्ञिया यज्ञियानां मनोर्यजत्रा अमृता ऋतज्ञाः ।
ते नो रासन्तामुरुगायमद्य यूयं पात स्वस्तिभिः सदा नः ॥ १५ ॥

ये । देवानाम् । यज्ञियाः । यज्ञियानाम् । मनोः । यजत्राः । अमृताः । ऋतऽज्ञाः ।
ते । नः । रासन्ताम् । उरुऽगायम् । अद्य । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १५ ॥

वेङ्कट० ये देवानाम् अपि यज्ञियानाम् यज्ञियाः भवन्ति इति प्राणान् आह इन्द्रादीन् वा मनुष्यस्य यष्टव्याः अमृताः सत्यज्ञाः, ते नः प्रयच्छन्तु बहूनां गेयं धनम्। अद्य यूयम् पात स्वस्तिभिः सदा नः ॥ १५ ॥

[1]इति पञ्चमाष्टके तृतीयाध्याये त्रिंशो वर्गः[1] ॥

व्याख्यत्तृतीयमध्यायं पञ्चमस्याष्टकस्य सः ।
विश्वामित्रकुले जातो माधवः सुन्दरीसुतः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने पञ्चमाष्टके तृतीयोऽध्यायः ।

—*—

इति ऋग्वेदे सभाष्ये पञ्चमाष्टके तृतीयोऽध्यायः ॥



---

१-१. नास्ति मूको.

अथ चतुर्थोऽध्यायः ।

वेङ्कट०

'प्र ब्रह्मैतु(तु' इ)त्यथाध्यायं[1] व्याचिख्यासति माधवः ।
अनेकर्षिषु[2] सूक्तेषु[3] वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

ऋषयः[4] सूक्तमेकं [5]सद् अपश्यन्[5] बहवः कथम् ।
सङ्घीभूय तपस्तप्त्वा सर्व एव सहाऽपठन् ॥ २ ॥

इति केचन मन्यन्ते माधवस्य न तन्मतम् ।
नाम्नि सूक्ते श्रूयमाणे [6]शक्यमेवं प्रभाषितुम्[6] ॥ ३ ॥

'एना वयं पर्यसे(सा'[7] इ)ति संवादे यन्नदीवचः ।
तत्रैवं शक्यते वक्तुं नाम [8]ह्यत्र निवेशितम्[8] ॥ ४ ॥

'यमग्ने वाजसातम[9]-सूक्ते [10]नाम च कीर्त्यते[10] ।
'प्रयस्वन्तो हवामहे[11]' शक्यं [12]तत्रापि भाषितुम्[12] ॥ ५ ॥

'एवाँ अग्निं वसूयवः[13]-सूक्ते सामान्यतः कृतः ।
वसूयुनामनिर्देशः[14] सन्त्यन्येऽपि च तादृशाः ॥ ६ ॥

'अबोध्यग्निः समिधे(धा'[15] इ)ति सूक्तं बुधगविष्ठिरौ ।
सहैकं द्वौ [16]ददृशतुरेकः सूक्ते[16] तु कीर्त्यते ॥ ७ ॥

'गविष्ठिरो नमसे(सा'[17] इ)ति बुधस्तत्र[18] न कीर्तितः ।
'यदिन्द्राहं यथा त्वम्[19]' च सूक्तमार्षं द्वयोर्मतम् ॥ ८ ॥

'अहं यथा त्वमीशीय × × × स्तोता मे[19]' इति दृश्यते ।
एकवत्तत्र निर्देशो न त्वावामिति दृश्यते ॥ ९ ॥

'आ यदिन्द्रश्च दद्वहे सहस्रं वसुरोचिषः[20] ।
एकवत्तत्र निर्देशः 'तिष्ठं वनस्य मध्य आ[21]' ॥ १० ॥

---

१. °ह्मैतु सदध्यायं वेंकश. २. अनेकर्षीषु वि[2] अ[1]; अनेक° लश; °र्षीषु वेंकश. ३. सूक्तेषु लश. ४. नास्ति वि[2] अ[1]. ५-५. सपदश्यन् वि[2] अ[1] लश. ६-६. वाक्यमेवं प्रभाषत वि[2] अ[1]; वाक्यमेव प्र° लश. ७. ऋ ३,३३,४. ८-८. ह्यत्रानिवेशनम् वि[2] अ[1]. ९. ऋ ५,२०,१. १०-१०. नामावकी° वि[2] अ[1]. ११. ऋ ५,२०,३. १२-१२. तत्राभिभा° वि[2] अ[1]. १३. ऋ ५,२५,९. १४. वसुयुगामनिर्देशः वि[2] अ[1] लश. १५. ऋ ५, १,१. १६-१६. °रेकसू° वि[2] अ[1] लश. १७. ऋ ५,१,१२. १८. °धस्तवत्र वेंकश. १९. ऋ ८, १४,१. २०. ऋ ८, ३४,१६. २१. ऋ ८,३४,१८.

मत्स्यानां जालबद्धानां [1]'त्यान्' इत्यार्षं[1] विदुर्बुधाः ।
तत्रापि दृष्टो निर्देशः 'उत त्वार्मदिते महि'[2] ॥ ११ ॥

एवंविधेषु सूक्तेषु तस्मादेक ऋषिर्मतः ।
प्रधानोऽन्ये त्वप्रधाना इति मन्यामहे वयम् ॥ १२ ॥

स च प्रधानो निर्देशाद् अस्माभिर्ज्ञायते क्वचित् ।
'गविंष्ठिरो नर्मसे( सा'[3] इ )ति प्राधान्यं ह्यवगम्यते ॥ १३ ॥

'यदिन्द्राहं यथे( थां'[4] इ )त्यत्र न विशेषः प्रतीयते ।
गोपूक्ती[5] वाश्वसूक्ती वा नैकोऽपि ह्यत्र[6] कीर्त्यते ॥ १४ ॥

'तं प्रत्नथे( थां' इ )त्यवत्सारः[7] काश्यपोऽन्यैः सहर्षिभिः ।
तस्मिन् सूक्ते समुद्दिष्टैर्ददर्शेत्यवगम्यते[8] ॥ १५ ॥

'ऋज्राश्वः प्रष्टिभिरि( भिः'[9] इ )ति विस्पष्टमृषिराह च ।
कर्तृत्वमात्मनो[10] दृष्टौ भ्रातॄणां चाप्रमाणताम्[11] ॥ १६ ॥

प्रह्वाः प्राञ्जलयस्सर्वे इन्द्रं तुष्टूषवः स्थिताः ।
उपश्र्ण्वन् सुतेष्विन्द्रम् ऋज्राश्वः स्तुतवान् स्वयम् ॥ १७ ॥

ऋषिरेकां ददर्शर्चम् ऋषिरेकामथापरः ।
इति केचन मन्यन्ते तदयुक्तमिति स्थितिः ॥ १८ ॥

शतं वैखानसान् प्राहुः सहस्रं वसुरोचिषः ।
न तावत्य ऋचस्तेषां वृद्धेष्वस्तु विनिर्णयः ॥ १९ ॥ इति[12] ॥

## [ ३६ ]

[13]वसिष्ठो मैत्रावरुणिर्ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[13] ।

प्र ब्रह्मैतु सर्दनादृतस्य वि रश्मिभिः ससृजे सूर्यो गाः ।
वि सानुना पृथिवी संस्र उर्वी पृथु प्रतीकमध्येधे अग्निः ॥ १ ॥

---

१-१. ऋ ८,६७,१; त्यान्वित्या° वि[2] अ[1] ल लअ. २. ऋ ८,६७,१०. ३. ऋ ५,१,१२. ४. ऋ ८,१४,१. ५. गोसू° वि[2] अ[1] ल; गोष्ठू° लअ. ६. ऋ ८,१४. ७. ऋ ५,४४,१. ८. °द्दिष्टो° वेंऋअ; °द्दिष्टे° अ[1] लअ. ९. ऋ १,१००,१७. १०. कर्तृ···स्मनो वि[2] अ[1]; कर्तृमात्मनौ ल लअ; प्राधान्यश्चात्मनो वेंऋअ. ११. चाप्रधानताम् वेंऋअ. १२. नास्ति वि[2] अ[1] लअ. १३-१३. नास्ति मूको.

प्र । ब्रह्म । एतु । सदनात् । ऋतस्य । वि । रश्मिऽभिः । ससृजे । सूर्यः । गाः ।
वि । सानुना । पृथिवी । सस्रे । उर्वी । पृथु । प्रतीकम् । अधि । आ । ईधे । अग्निः ॥१॥

**वेङ्कट०** वासिष्ठं[1] वैश्वदेवम् । प्र एतु स्तुतिं श्रौतीम्[2] ब्रह्म आदित्यः उदकस्य सदनात् दिवः । [3]वि सृजति[3] उदकानि सूर्यः रश्मिभिः । ततः उच्छ्रितेनौषधिवनस्पतिसन्नाहेन[4] वि-स्तृताऽस्ति[5] पृथिवी महती । सञ्जातेषु चौषधिषु वनस्पतिषु प्रथितम्[6] प्रतीकम् उत्तरवेदिलक्षणमङ्गम् अधि प्रज्वाल्यते अग्निः ॥ १ ॥

इमां वां मित्रावरुणा सुवृक्तिमिषं न कृण्वे असुरा नवीयः ।
इनो वामन्यः पदवीरदब्धो जनं च मित्रो यतति ब्रुवाणः ॥ २ ॥

इमाम् । वाम् । मित्रावरुणा । सुऽवृक्तिम् । इषम् । न । कृण्वे । असुरा । नवीयः ।
इनः । वाम् । अन्यः । पदऽवीः । अदब्धः । जनम् । च । मित्रः । यतति । ब्रुवाणः ॥ २ ॥

**वेङ्कट०** इमाम् वाम् हे मित्रावरुणौ! स्तुतिम् अन्नम् इव करोमि हे बलिनौ! नवतराम्[7] । ईश्वरः युवयोः अन्यः पदानां[8] सर्वाऽऽवासानां ज्ञाता वरुणः अहिंसितः [9]मित्रः च[9] जनम् यातयति कार्येषु[10] व्यापारयति स्तूयमानः ( तु. ऋ ३,५९,१ ) ॥ २ ॥

आ वातस्य ध्रजतो रन्त इत्या अपीपयन्त धेनवो न सूदाः ।
महो दिवः सदने जायमानोऽचिक्रदद् वृषभः सस्मिन्नूधन् ॥ ३ ॥

आ । वातस्य । ध्रजतः । रन्ते । इत्याः । अपीपयन्त । धेनवः । न । सूदाः ।
महः । दिवः । सदने । जायमानः । अचिक्रदत् । वृषभः । सस्मिन् । ऊधन् ॥ ३ ॥

**वेङ्कट०** आ रमन्ते वायोः गच्छतः[11] इत्याः गमनानि, वायोर्विविधा गतय इतस्ततः प्रादुर्भवन्ति । वर्धन्ते च धेनवः इव[12] सूदाः 'सूदः' ( निघ ३,२३ ) इति कूपनाम । महतः दिवः सदने अन्तरिक्षे जायमानः न्यक्रन्दीत्[13] पर्जन्यः सर्वस्मिन् ऊधनि । यत उदकं निर्गच्छति तदूधो[14] मेघसङ्घः ॥ ३ ॥

गिरा य एता युनजद्धरी त इन्द्र प्रिया सुरथा शूर धायू ।
प्र यो मन्युं रिरिक्षतो मिनात्या सुक्रतुमर्यमणं ववृत्याम् ॥ ४ ॥

गिरा । यः । एता । युनजत् । हरी इति । ते । इन्द्र । प्रिया । सुऽरथा । शूर । धायू इति ।
प्र । यः । मन्युम् । रिरिक्षतः । मिनाति । आ । सुऽक्रतुम् । अर्यमणम् । ववृत्याम् ॥ ४ ॥

---

१. वसि° मूको. २. श्रोत्यं मूको; स्तोत्रं ल प्रस्तावः. ३-३. विहृति मूको. ४. °स्पतिसन्नद्दन मूको. ५. °तासि मूको. ६. पतितं वि[2]; प्रतितं अ[1]; प्रतीतं ल लअ. ७. नै( ने अ[1]. )वतराम् वि[2] अ[1]; नैवतरम् ल; नेवतारम् लअ. ८. पादा° मूको. ९-९. मित्रस्य मूको; मित्रः वा ल प्रस्तावः. १०. राय्येषु वि[2] अ[1]; रायेंषु ल लअ. ११. °च्छन्तः मूको. १२. च वि[2] अ[1]. १३. न्यक्रन्दि मूको. १४. दूतः मूको.

वेङ्कट० हे इन्द्र! स्तोत्रेण यः एतौ हरी युनक्ति तव प्रियौ शोभनरंहणौ हे शूर! धारकौ, सोऽहम्[1]। प्र हिनस्ति यः मन्युम्[2] मां हिंसितुमिच्छतः शत्रोः, तं त्वाम् आ वृत्रघ्नाम् सुकर्माणम् अर्यमणम् उदारम् ॥ ४ ॥

यजन्ते अस्य सख्यं वयश्च नमस्विनः स्व ऋतस्य धामन् ।
वि पृक्षो बाबधे नृभिः स्तवान इदं नमो रुद्राय प्रेष्ठम् ॥ ५ ॥

यजन्ते । अस्य । सख्यम् । वयः । च । नमस्विनः । स्वे । ऋतस्य । धामन् ।
वि । पृक्षः । बाबधे । नृऽभिः । स्तवानः । इदम् । नमः । रुद्राय । प्रेष्ठम् ॥ ५ ॥

वेङ्कट० पूजयन्ति इन्द्रस्य सख्यम् पक्षिणः च अन्नवतः स्वस्मिन् उदकस्य स्थानेऽन्तरिक्षे वर्तमानस्य। [3]वि बाधते[3] च शत्रूणामन्नं मनुष्यैः स्तूयमानः, यद्वा [4]वि बध्नाति[4] स्तोतृषदनम्। तस्मै रुद्राय[5] मेधाविने इदम् हविः प्रियतमम् क्रियत इति ॥ ५ ॥

[6]इति पञ्चमाष्टके चतुर्थाध्याये प्रथमो वर्गः[6] ॥

आ यत् साकं यशसो वावशानाः सरस्वती सप्तथी सिन्धुमाता ।
याः सुष्वयन्त सुदुघाः सुधारा अभि स्वेन पयसा पीप्यानाः ॥ ६ ॥

आ । यत् । साकम् । यशसः । वावशानाः । सरस्वती । सप्तथी । सिन्धुऽमाता ।
याः । सुस्वयन्त[7] । सुऽदुघाः । सुऽधाराः । अभि । स्वेन । पयसा । पीप्यानाः ॥ ६ ॥

वेङ्कट० आ-नयामास या सह कीर्तिं कामयमानाः सरस्वती षण्णां नदीनां सप्तमी सिन्धूनां माता। याः नद्यो [8]हि सुष्वयन्त स्वयिः ष्वञ्जिपर्यायः[8], अभ्यष्वजन्त[9] सरस्वतीम् सुदुघाः शोभन-धाराः स्वेन पयसा प्यायमानाः। यद्वा[10] यदिति यदेत्यर्थः। उत्तरत्र सम्बन्धः ॥ ६ ॥

उत त्ये नो मरुतो मन्दसाना धियं तोकं च वाजिनोऽवन्तु ।
मा नः परि ख्यदक्षरा चरन्त्यवीवृधन् युज्यं ते रयिं नः ॥ ७ ॥

उत । त्ये । नः । मरुतः । मन्दसानाः । धियम् । तोकम् । च । वाजिनः । अवन्तु ।
मा । नः । परि । ख्यत् । अक्षरा । चरन्ती । अवीवृधन् । युज्यम् । ते । रयिम् । नः ॥ ७ ॥

वेङ्कट० अपि च तथा सरस्वत्या सह अमी च मरुतः मोदमानाः अस्माकं कर्म[11] पुत्रम् च बलवन्तः रक्षन्तु। मा अस्मान् वर्जयतु[12] माता[13] चरन्ती[14] सरस्वती च। वर्धयन्तु योग्यम् रयिम् अस्माकं मरुतः सरस्वती चेति ॥ ७ ॥

---

१. सोऽयम् ल प्रस्तावः. २. मन्युर्मा( °र्मा अ[1]) मूको. ३-३. पिबभने वि[2] अ[1] ल; विब्बधने लभ. ४. पिबध्नाति वि[2] अ[1]; पिब ल लभ. ५. इन्द्रा मूको. ६-६. नास्ति मूको. ७. <√सुष्वि <सुष्वि-(<√सू '°गतौ, °वहने') इति द्र. ८-८. हि ⋯ तस्य वि ष्वजि° वि[2] अ[1]; °स्वविः ष्वजि° ल; °स्ववि ष्वजजि° लभ. ९. °भ्यषज° मूको. १०. य वा मूको. ११. नास्ति मूको. १२. वर्जयध्वं वि[2]; पर्जयजयध्वं अ[1]; वर्जय त्वं ल लभ. १३. मा वि[2]. १४. चरन्ति मूको.

प्र वो महीमरमतिं कृणुध्वं प्र पूषणं विदथ्यं१ न वीरम् ।
भगं धियोऽवितारं नो अस्याः सातौ वाजं रातिषाचं पुरंधिम् ॥ ८ ॥

प्र । वः । महीम् । अरमतिम् । कृणुध्वम् । प्र । पूषणम् । विदथ्यम् । न । वीरम् ।
भगम् । धियः । अवितारम् । नः । अस्याः । सातौ । वाजम् । रातिऽसाचम् । पुरम्ऽधिम् ॥८॥

**वेङ्कट०** प्र[1] कृणुध्वम् यूयं पृथिवीं पर्याप्तमतिम्[2], अपि वा विरामो रमतिः, अपर्यन्ताम् । प्र कृणुध्वम् पूषणम् च गृहार्हम् इव वीरम्, भगम् चास्माकम् अस्य कर्मणो रक्षितारम् । [3]अथ तं[3] धनस्य दातारं बहुप्रज्ञं भगम् अन्नम् याचध्वम् सातौ सत्यां भजते यदा[4] युष्मान् भगस्तदेति[5] । यद्वा सात्यर्थम्[6] वाजम् बलिनं भगं च प्रकृणुध्वमिति[7] ॥ ८ ॥

अच्छायं वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः ।
उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

अच्छ । अयम् । वः । मरुतः । श्लोकः । एतु । अच्छ । विष्णुम् । निसिक्तऽपाम् । अवःऽभिः ।
उत । प्रऽजायै । गृणते । वयः । धुः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ९ ॥

**वेङ्कट०** अभिगच्छतु अयम् युष्मान् मरुतः! श्लोकः । तथा निषिक्तस्य सोमस्य पातारम् विष्णुम् चाभिगच्छतु रक्षणार्थम् । अपि च मरुतः सर्वे वा देवाः प्रजायै गृणते च मह्यम् अन्नम् प्रयच्छन्तु ॥ ९ ॥

[8]इति पञ्चमाष्टके चतुर्थाध्याये द्वितीयो वर्गः[8] ॥

## [ ३७ ]

[8]वसिष्ठो मैत्रावरुणिर्ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[8] ।

आ वो वाहिष्ठो वहतु स्तवध्यै रथो वाजा ऋभुक्षणो अमृक्तः ।
अभि त्रिपृष्ठैः सवनेषु सोमैर्मदे सुशिप्रा महभिः पृणध्वम् ॥ १ ॥

आ । वः । वाहिष्ठः । वहतु । स्तवध्यै । रथः । वाजाः । ऋभुक्षणः । अमृक्तः ।
अभि । त्रिऽपृष्ठैः । सवनेषु । सोमैः । मदे । सुऽशिप्राः । महऽभिः । पृणध्वम् ॥ १ ॥

**वेङ्कट०** आ वहतु युष्मान् अत्यन्तं वोढा[9] स्तोतुम्[10] रथः हे सौधन्वनाः! [11]वाजाः! । ऋभुक्षणः![11] इत्यृभूणां[12] अज्येष्ठकनिष्ठाभ्यां व्यपदेशः । शत्रुभिरपरिमृष्टः । अभिप्रयच्छत धनानि त्रयाणां देवगणानां पृष्ठभूतैः[13] सवनेषु सोमैः जनिते[14] मदे[15] हे सुहनवः! महद्भिः ॥ १ ॥

---

१. नास्ति मूको. २. °मतिमर्ताम् वि[2] अ[1]. ३-३. रथमथ तं ल लअ; नास्ति वि[2] अ[1]. ४. यथा अ[1]. ५. स्तथेति वि[2] अ[1]. ६. सत्य° मूको. ७. प्राकृ° ल लअ. ८-८. नास्ति मूको. ९. वोढुः वि[2]; वोढ अ[1] ल लअ. १०. स्तोतुः (°तु वि[2] अ[1]) मूको. ११-११. तु. ऋ ४,३७,३; ७,४८,१ प्रभृ. १२. °त्यृभूवा मूको. १३. प्रष्ठभू° वि[2]; प्रकृष्टभू° अ[1]; °तैः लअ. १४. जनीते मूको. १५. मद वि[2] अ[1] ल; मदं लअ.

यूयं ह रत्नं मघवत्सु धत्थ स्वर्दृश ऋभुक्षणो अमृक्तम् ।
सं यज्ञेषु स्वधावन्तः पिबध्वं वि नो राधांसि मतिभिर्दयध्वम् ॥ २ ॥

यूयम् । ह । रत्नम् । मघवत्ऽसु । धत्थ । स्वःऽदृशः । ऋभुक्षणः । अमृक्तम् ।
सम् । यज्ञेषु । स्वधाऽवन्तः । पिबध्वम् । वि । नः । राधांसि । मतिऽभिः । दयध्वम् ॥ २ ॥

**वेङ्कट०** यूयम् ह रत्नम् हविष्मत्सु[1] दत्थ सर्वस्य द्रष्टारः हे ऋभवः! अहिंसितम् । सम् पिबध्वम् यज्ञेषु हे अन्नवन्तः!, विविधं प्रयच्छत चास्मभ्यम् धनानि स्तुतिभिः ॥ २ ॥

उवोचिथ हि मघवन् देष्णं महो अर्भस्य वसुनो विभागे ।
उभा ते पूर्णा वसुना गभस्ती न सूनृता नि यमते वसव्या ॥ ३ ॥

उवोचिथ । हि । मघऽवन् । देष्णम् । महः । अर्भस्य । वसुनः । विऽभागे ।
उभा । ते । पूर्णा । वसुना । गभस्ती इति । न । सूनृता । नि । यमते । वसव्या ॥ ३ ॥

**वेङ्कट०** सेवसे हि मघवन्! धनम्[2] वृद्धस्य बालस्य च वसुनः विभागार्थम् । उभौ ते पूर्णौ धनेन बाहू । न तव वाक् नि यच्छति वसुसमूहान्[3] । किं तर्हि । भूयोभूयो विसृजति ॥ ३ ॥

त्वमिन्द्र स्वयशा ऋभुक्षा वाजो न साधुरस्तमेष्यृक्वा ।
वयं नु ते दाश्वांसः स्याम ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः ॥ ४ ॥

त्वम् । इन्द्र । स्वऽयशाः । ऋभुक्षाः । वाजः । न । साधुः । अस्तम् । एषि । ऋक्वा ।
वयम् । नु । ते । दाश्वांसः । स्याम । ब्रह्म । कृण्वन्तः । हरिऽवः । वसिष्ठाः ॥ ४ ॥

**वेङ्कट०** त्वम् इन्द्र! स्वभूतकीर्तिः[4] महान् अश्वः इव साधयिता गृहम् एषि स्तोत्रवान् । वयम् इति स्पष्टम् ॥ ४ ॥

सनितासि प्रवतो दाशुषे चिद् याभिर्विवेषो हर्यश्व धीभिः ।
ववन्मा नु ते युज्याभिरूती कदा न इन्द्र राय आ दशस्येः ॥ ५ ॥

सनिता । असि । प्रऽवतः । दाशुषे । चित् । याभिः । विवेषः । हरिऽअश्व । धीभिः ।
ववन्म । नु । ते । युज्याभिः । ऊती । कदा । नः । इन्द्र । रायः । आ । दशस्येः ॥ ५ ॥

**वेङ्कट०** प्रदानशीलः भवसि मुख्यस्य धनस्य[5] यजमानाय यादृशीभिः बुद्धिभिः । व्याप्नोषि त्वं यजमानान्[6] हर्यश्व! । सम्भक्तारो भूयास्म क्षिप्रं तव योग्यैः रक्षणैः । कदा अस्मभ्यम् इन्द्र! धनानि आ प्रयच्छेः ॥ ५ ॥

[7]इति पञ्चमाष्टके चतुर्थाध्याये तृतीयो वर्गः[7] ॥

---

१. °ष्मन् सु मूको. २. नास्ति ल लभ. ३-३. वसुत समूहानहि वि[2] अ' ल; वसुसमूहान् वसुत मूहानहि लभ. ४. स्वभू° मूको. ५. नास्ति मूको. ६. °नात् मूको. ७-७. नास्ति मूको.

वासयसीव वेधसस्त्वं नः कुदा न इन्द्र वचसो बुबोधः ।
अस्तं तात्या धिया रयिं सुवीरं पृक्षो नो अर्वा न्युहीत वाजी ॥ ६ ॥

वासयसिऽइव । वेधसः । त्वम् । नः । कदा । नः । इन्द्र । वचसः । बुबोधः ।
अस्तम् । तात्या । धिया । रयिम् । सुऽवीरम् । पृक्षः । नः । अर्वा । नि । उहीत । वाजी ॥६॥

**वेङ्कट०** वासयसि इदानीं परिचरतः त्वम् अस्मान् । कदा अस्माकम् इन्द्र! वचनं बुध्येथाः[1] । [2]गृहम् तन्यमानेन[2] कर्मणा ततया वा स्तुत्या रयिम् सुवीरम् अन्नं च प्रति वेगवान् अश्वः अस्मान् [3]नि उहीत इतीन्द्रम्[3] परोक्षेणाह — गृहादिष्वस्मान् प्रापयत्विति[4] ॥ ६ ॥

अभि यं देवी निर्ऋतिश्चिदीशे नक्षन्त इन्द्रं शरदः सुपृक्षः ।
उप त्रिबन्धुर्जरदष्टिमेत्यस्ववेशं यं कृणवन्त मर्ताः ॥ ७ ॥

अभि । यम् । देवी । निःऽऋतिः । चित् । ईशे । नक्षन्ते । इन्द्रम् । शरदः । सुऽपृक्षः ।
उप । त्रिऽबन्धुः । जरत्ऽअष्टिम् । एति । अस्वऽवेशम् । यम् । कृणवन्त । मर्ताः ॥ ७ ॥

**वेङ्कट०** यम् इन्द्रम् अभि देवी पृथिवी प्राणिनाम् ईष्टे, व्याप्नुवन्ति इन्द्रम् शरदः [5]शोभनान्नाः, सः[5] उप एति त्रयाणां लोकानां बन्धुः जरदष्टिम् । यो देवैर्दत्तमशनं जरयति यज्ञेन स जरदष्टिरिति । यम्[6] इन्द्रम्[7] मर्ताः कुर्वन्ति[8] अस्ववेशम्[9] स्वस्मिन्नायतने यः कदाचिदपि नास्ति सोऽस्ववेशः[10] । [11]तथाकरणम् इतस्तत[11] आह्वानमिति ॥ ७ ॥

आ नो राधांसि सवितः स्तवध्या आ रायो यन्तु पर्वतस्य रातौ ।
सदा नो दिव्यः पायुः सिषक्तु यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

आ । नः । राधांसि । सवितरिति । स्तवध्यै । आ । रायः । यन्तु । पर्वतस्य । रातौ ।
सदा । नः । दिव्यः । पायुः । सिसक्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

**वेङ्कट०** आ यन्तु[12] अस्मान् अन्नानि त्वां स्तोतुम् हे सवितः! । आ यन्तु च धनानि मेघस्य दाने । सदा अस्मान्[13] दिव्यः[14] रक्षकः पर्जन्यः सिषक्तु इति ॥ ८ ॥

[15]इति पञ्चमाष्टके चतुर्थाध्याये चतुर्थो वर्गः[15] ॥

---

१. बुद्धे वि[2] अ[1]; बुध्ये ल लअ. २-२. गृह्यमाणेन वि[2]; गृहन्तमनिन अ[1]; ग्रहं तमानेन ल लअ; गृहं ततमानेन ल प्रस्तावः. ३-३. निहितेतीन्द्रं वि[2] अ[1] ल; निहितीन्द्रं लअ; °न्द्र ल प्रस्तावः. ४. °यस्त्विति मूको. ५-५. °नान्नासः मूको. ६. यत् मूको. ७. इन्द्र वि[2] ल लअ. ८. नास्ति मूको. ९. अ (आ वि[2]) स्ववेगम् मूको. १०. स्वावेशः वि[2] अ[1]. ११-११. तथाकारयितस्तत वि[2] ल. १२. नयन्तु मूको. १३. अस्यान् मूको. १४. दिवः मूको. १५-१५. नास्ति मूको.

[ ३८ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । आद्यादिषष्ठ्यन्तानां सविता देवता, षष्ठ्या उत्तरार्धस्य भगो वा, सप्तम्यष्टम्योर्वाजिनः । त्रिष्टुप् छन्दः[1] ।

उदु ष्य देवः सविता ययाम हिरण्ययीममतिं यामशिश्रेत् ।
नूनं भगो हव्यो मानुषेभिर्वि यो रत्ना पुरूवसुर्दधाति ॥ १ ॥

उत् । ऊँ इति । स्यः । देवः । सविता । ययाम । हिरण्ययीम् । अमतिम् । याम् । अशिश्रेत् ।
नूनम् । भगः । हव्यः । मानुषेभिः । वि । यः । रत्ना । पुरुऽवसुः । दधाति ॥ १ ॥

वेङ्कट० सोऽयम् सविता देवः उत् ययाम हिरण्मयम्[2] रूपम्, यद् रूपम् अयं श्रयति । प्रादुरभूदित्यर्थः । सम्प्रति भजनीयः ह्वातव्यः मनुष्यैः भवति । वि दधाति यः रत्नानि बहुधनः ॥ १ ॥

उदु तिष्ठ सवितः श्रुध्य१स्य हिरण्यपाणे प्रभृतावृतस्य ।
व्यु१र्वीं पृथ्वीममतिं सृजान आ नृभ्यो मर्तभोजनं सुवानः ॥ २ ॥

उत् । ऊँ इति । तिष्ठ । सवितरिति । श्रुधि । अस्य । हिरण्यऽपाणे । प्रऽभृतौ । ऋतस्य ।
वि । उर्वीम् । पृथ्वीम् । अमतिम् । सृजानः । आ । नृऽभ्यः । मर्तऽभोजनम् । सुवानः ॥ २ ॥

वेङ्कट० उत् तिष्ठ सवितः!, [3]तदनु च[3] [4]श्रृणु च[4] स्तोत्रमिदं हे हिरण्यपाणे! सोमस्य हरणे उरुतमं पृथुतमम् रूपम् वि सृजन् आ सुवानः इव मनुष्येभ्यः मनुष्ययोग्यमशनम् ॥ २ ॥

अपि ष्टुतः सविता देवो अस्तु यमा चिद् विश्वे वसवो गृणन्ति ।
स नः स्तोमान् नमस्य१श्चनो धाद् विश्वेभिः पातु पायुभिर्नि सूरीन् ॥ ३ ॥

अपि । स्तुतः । सविता । देवः । अस्तु । यम् । आ । चित् । विश्वे । वसवः । गृणन्ति ।
सः । नः । स्तोमान् । नमस्यः । चनः । धात् । विश्वेभिः । पातु । पायुऽभिः । नि । सूरीन् ॥

वेङ्कट० अपि अस्तु सङ्गच्छताम्[5] स्तुतः सविता [6]देवः, यम्[6] विश्वे अपि[7] वसवः[8] आ स्तुवन्ति, सः अस्माकम् स्तोमान् हविश्च धारयतु नमस्यः । विश्वैश्च रक्षणैः नितरां रक्षतु स्तोतॄन् ॥ ३ ॥

अभि यं देव्यदितिर्गृणाति सवं देवस्य सवितुर्जुषाणा ।
अभि सम्राजो वरुणो गृणन्त्यभि मित्रासो अर्यमा सजोषाः ॥ ४ ॥

अभि । यम् । देवी । अदितिः । गृणाति । सवम् । देवस्य । सवितुः । जुषाणा ।
अभि । सम्ऽराजः । वरुणः । गृणन्ति । अभि । मित्रासः । अर्यमा । सऽजोषाः ॥ ४ ॥

---

१-१. नास्ति मूको. २. रण्यम° ल; °रण्यम् लभ. ३-३. तदनूचः वि[2] अ[1]. ४-४. शृण्वत वि[2] अ[1]. ५. स गच्छ° मूको. ६-६. अयं वि[2]. ७. अवि मूको. ८. वत्सपः लभ; वत्सवः वि[2] अ[1] ल.

वेङ्कट० अभि ष्टौति यम् देवी अदितिः प्रसवम् देवस्य सवितुः सेवमाना । अभि गृणन्ति ततः सम्राजः वरुणः च । अभि गृणन्ति मित्रासः मित्रो देवः तदनुचराश्च अर्यमा च सङ्गताः ॥ ४ ॥

अभि ये मिथो वनुषः सपन्ते रातिं दिवो रातिषाचः पृथिव्याः ।
अहिर्बुध्न्य उत नः शृणोतु वरूत्र्येकधेनुभिर्नि पातु ॥ ५ ॥

अभि । ये । मिथः । वनुषः । सपन्ते । रातिम् । दिवः । रातिऽसाचः । पृथिव्याः ।
अहिः । बुध्न्यः । उत । नः । शृणोतु । वरूत्री । एकधेनुऽभिः । नि । पातु ॥ ५ ॥

वेङ्कट० अभि स्पृशन्ति ये सम्भक्तारः इतरेतरजीवाः[1] रातिम् दातारम् देवलोकस्य रातिं भजन्तः पृथिव्याः मनुष्याणामभिलषितानि प्रयच्छन्तो देवाः ते सर्वेऽस्माकं स्तोत्रं शृण्वन्ति । शृणोतु[2] अपि च अहिः बुध्न्यः[3] । वरुत्री[4] च एकधेनुभिः नाम स्वानुचरीभिः अस्मान् नि पातु ॥ ५ ॥

अनु तन्नो जास्पतिर्मंसीष्ट रत्नं देवस्य सवितुरियानः ।
भगमुग्रोऽवसे जोहवीति भगमनुग्रो अध याति रत्नम् ॥ ६ ॥

अनु । तत् । नः । जाःपतिः । मंसीष्ट । रत्नम् । देवस्य । सवितुः । इयानः ।
भगम् । उग्रः । अवसे । जोहवीति । भगम् । अनुग्रः । अध । याति । रत्नम् ॥ ६ ॥

वेङ्कट० अनु मन्यताम् तत् अस्माकम् जास्पतिः[5] त्वष्टा रत्नम् देवस्य सवितुः स्वभूतम् तेन प्रत्तम्[6] इहागच्छन् सवित्रा । भजनीयं सवितारम्[7] [8]उद्गूर्णः आपद्भ्यो[8] रक्षणाय आह्वयति । भगम् अनुद्गूर्णो याचते[9] रत्नम् । भागो[10] वाऽयमर्धच इति ( तु. ऋअ २,७,३८ ) ॥ ६ ॥

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद् युयवन्नमीवाः ॥ ७ ॥

शम् । नः । भवन्तु । वाजिनः । हवेषु । देवऽताता । मितऽद्रवः । सुऽअर्काः ।
जम्भयन्तः । अहिम् । वृकम् । रक्षांसि । सनेमि । अस्मत् । युयवन् । अमीवाः ॥ ७ ॥

वेङ्कट० सुखाः भवन्तु नः वाजिनः ह्वानेषु देवतातौ यज्ञे मितद्रवः मितगमनाः, अध्वानं विमाय गच्छन्तः, स्वञ्चनाः । हिंसन्तः अहिम् च वृकम्[11] च रक्षांसि च क्षिप्रम् अस्मत्तः यावयन्तु अमीवाः ॥ ७ ॥

वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥ ८ ॥

---

१. जीवः मूको. २-२. °क श्रृणोतु गृणन्ति वि[2] अ[1]; °कं स्तोत्र श्रृ° लअ. ३. °र्बुध्नः वि[2] अ[1]; °र्बुध्नः ल; अहि व बुध्नो लअ. ४. प्रकृति मूको. ५. जनां पतिः अ[1]; जानां पतिः लअ. ६. प्रत्नम् मूको. ७. नास्ति मूको. ८. °र्णा आभ्यो मूको. ९. °तो मूको. १०. भगो मूको. ११. भक्तम् वि[2] अ[1].

वाजेऽवाजे । अवत । वाजिनः । नः । धनेषु । विप्राः । अमृताः । ऋतऽज्ञाः ।
अस्य । मध्वः । पिबत । मादयध्वम् । तृप्ताः । यात । पथिऽभिः । देवऽयानैः ॥ ८ ॥

**वेङ्कट०** सङ्ग्रामेसङ्ग्रामे रक्षत हे अश्वाः! अस्मान् धनेषु शत्रुभ्यः आजिहीर्षितेषु मेधाविनः! अमृताः!। वाजिनोऽश्वरूपाः[1] केचन[2] देवाः। सत्यज्ञाः!। अमुं सोमम् पिबत माद्यत च। अथ तृप्ताः गच्छत पथिभिः देवयानैः ॥ ८ ॥

[3]इति पञ्चमाष्टके चतुर्थाध्याये पञ्चमो वर्गः[3]।

## [ ३९ ]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः। विश्वे देवा देवता। त्रिष्टुप् छन्दः[3]।

**ऊर्ध्वो अग्निः सुमतिं वस्वो अश्रेत् प्रतीची जूर्णिर्देवतातिमेति ।**
**भेजाते अद्री रथ्येव पन्थामृतं होता न इषितो यजाति ॥ १ ॥**

ऊर्ध्वः । अग्निः । सुऽमतिम् । वस्वः । अश्रेत् । प्रतीची । जूर्णिः । देवऽतातिम् । एति ।
भेजाते इति । अद्री इति । रथ्याऽइव । पन्थाम् । ऋतम् । होता । नः । इषितः । यजाति ॥१॥

**वेङ्कट०** ऊर्ध्वः अग्निः सुष्टुतिम् अस्माकम् वस्वः दानाय श्रयति। प्रतीची[4] क्षिप्रा[5] उषा यज्ञम् एति। भेजाते शत्रूणामाहर्तारौ [6]अद्री युवाम् आजिं[6] रथ्ये इव पन्थानं महान्तम्। अस्मिन्काले यज्ञं होता अस्माकं प्रेषितो यजति ॥ १ ॥

**प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते ।**
**विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥ २ ॥**

प्र । ववृजे । सुऽप्रयाः । बर्हिः । एषाम् । आ । विश्पती इवेति विश्पतीऽइव । बीरिटे । इयाते इति ।
विशाम् । अक्तोः । उषसः । पूर्वऽहूतौ । वायुः । पूषा । स्वस्तये । नियुत्वान् ॥ २ ॥

**वेङ्कट०** प्रवृक्तम्[7] आसीत् सुप्रयाणम्[8] एषाम् बर्हिः। आ गच्छतः वायुः पूषा च अन्तरिक्षे राजानाविव गणे[9]। मनुष्याणाम् राज्याः [10]विवासे उषसः च[10] पूर्वस्यामभिहूतौ[11] वायुः नियुत्वान् पूषा च अस्माकम् स्वस्तये। निरुक्तम् ( ५,२८ ) द्रष्टव्यम् ॥ २ ॥

**ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः ।**
**अर्वाक् पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥ ३ ॥**

ज्मयाः । अत्र । वसवः । रन्त । देवाः । उरौ । अन्तरिक्षे । मर्जयन्त । शुभ्राः ।
अर्वाक् । पथः । उरुऽज्रयः । कृणुध्वम् । श्रोत । दूतस्य । जग्मुषः । नः । अस्य ॥ ३ ॥

---

१. वाजिनोभ्यश्च रूपं मूको. २. केन च वि[2] अ[1]. ३-३. नास्ति मूको. ४. पृथिवी मूको. ५. क्षिप्ता मूको. ६-६. °तारः विद्रवा यूयं आजुं मूको. ७. प्रवृत्तम् मूको. ८. सु प्राय° लभ. ९. त्रुटितम् वि[2] अ[1]; णे ल लभ. १०-१०. विवषवासेश्च मूको. ११. °भिभू° मूको.

वेङ्कट० पृथिव्याः अस्मिन् देवयजने अरमयन्त पार्थिवाः देवाः । उरौ अन्तरिक्षे च तत्रत्याः गच्छन्ति शोभनाः । मार्ष्टिर्गतिकर्मसु[1] पठितः (तु. निघ २,१४; या १,२०) । अर्वाचीनान् अधोमुखान् कुरुध्वं युष्माकं मार्गान् तैः[2] इत आगच्छत हे महावेगाः! । शृणुत च युष्माकम् जग्मुषः अस्माकम् अस्य दूतस्य अग्नेः वचः[3] ॥ ३ ॥

ते हि य॒ज्ञेषु॑ य॒ज्ञिया॑स॒ ऊमा॑ः स॒धस्थं॒ विश्वे॑ अ॒भि सन्ति॑ दे॒वाः ।
ताँ अ॑ध्व॒र उ॑श॒तो य॑क्ष्यग्ने श्रु॒ष्टी भगं॒ नास॑त्या पुर॑न्धिम् ॥ ४ ॥

ते । हि । य॒ज्ञेषु॑ । य॒ज्ञिया॑सः । ऊमा॑ः । स॒ध॒ऽस्थ॑म् । विश्वे॑ । अ॒भि । सन्ति॑ । दे॒वाः ।
तान् । अ॒ध्व॒रे । उ॒श॒तः । य॒क्षि॒ । अ॒ग्ने॒ । श्रु॒ष्टी । भग॑म् । नास॑त्या । पुर॑म्ऽधिम् ॥ ४ ॥

वेङ्कट० ते हि यज्ञेषु यज्ञार्हाः अवितारः[4] आसनम् अभि भवन्ति सर्वे देवाः । तान् यज्ञे कामयमानान् यज अग्ने! क्षिप्रम् भगम्[5] बहुप्रज्ञम् अश्विनौ च ॥ ४ ॥

आग्ने॒ गिरो॑ दि॒व आ पृ॑थि॒व्या मि॒त्रं व॑ह॒ वरु॑ण॒मिन्द्र॑म॒ग्निम् ।
आर्य॒मण॒मदि॑तिं॒ विष्णु॑मेषां॒ सर॑स्वती म॒रुतो॑ मादयन्ताम् ॥ ५ ॥

आ । अ॒ग्ने॒ । गिरः॑ । दि॒वः । आ । पृ॒थि॒व्याः । मि॒त्रम् । व॒ह॒ । वरु॑णम् । इन्द्र॑म् । अ॒ग्निम् ।
आ । अ॒र्य॒मण॑म् । अदि॑तिम् । विष्णु॑म् । ए॒षा॒म् । सर॑स्वती । म॒रुतः॑ । मा॒द॒य॒न्ता॒म् ॥ ५ ॥

वेङ्कट० अग्ने! दिवः पृथिव्याः च [6]आ वह[6] अस्माकं स्तुतीः[7] प्रति देवताः[8] मित्रादिकाम्[9] एषां वसिष्ठानाम् । तथा सरस्वती मरुतः च माद्यन्तु च ॥ ५ ॥

र॒रे ह॒व्यं म॒तिभि॑र्य॒ज्ञिया॑नां॒ नक्ष॒त् कामं॒ मर्त्या॑ना॒मसि॑न्वन् ।
धाता॑ र॒यिम॑वि॒दस्यं॑ स॒दासां॑ स॒क्षीम॑हि॒ युज्ये॑भि॒र्नु दे॒वैः ॥ ६ ॥

र॒रे । ह॒व्यम् । म॒तिऽभिः॑ । य॒ज्ञिया॑नाम् । नक्ष॑त् । काम॑म् । मर्त्या॑नाम् । असि॑न्वन् ।
धात॑ । र॒यिम् । अ॒वि॒ऽद॒स्यम् । स॒दा॒ऽसाम् । स॒क्षीम॒हि॒ । युज्ये॑भिः । नु । दे॒वैः ॥ ६ ॥

वेङ्कट० दीयते[10] हविः स्तुतिभिः सह देवानाम् । व्याप्नोतु अभिलषितं[11] मनुष्याणां मध्ये स्वं धनम् अबध्नन्[12] यजमानः । प्रयच्छत धनम् अक्षयम् सदा दीयमानमपि अविदस्यम्[13] । सङ्गता भवाम सहायैः[14] क्षिप्रम् देवैः ॥ ६ ॥

नू रोद॑सी अ॒भिष्टु॑ते॒ वसि॑ष्ठैर्ऋ॒तावा॑नो॒ वरु॑णो मि॒त्रो अ॒ग्निः ।
यच्छ॑न्तु च॒न्द्रा उ॑प॒मं नो॑ अ॒र्कं यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ७ ॥

---

१. र्षीन् वि[2]; र्षीन् गति° अ[1] ल; र्षीन् गति° लअ. २. नास्ति मूको. ३. वच मूको.
४. अविकारं मूको. ५. भगवन् वि[2] अ[1]; भगवम् ल लअ. ६-६. आह मूको. ७. स्तुतिः वि[2] अ[1]; स्तुति लअ. ८. °ता मूको. ९. मित्रादिकाः ल प्रस्तावः. १०. दीरयते मूको. ११. °षितानां मूको. १२. अबुधन् वि[2]; अविधन् अ[1]; अबुध्यन् ल लअ. १३. अविदासं मूको. १४. भवायै मूको.

नु । रोदसी इति । अभिस्तुते इत्यभिऽस्तुते । वसिष्ठैः । ऋतऽवानः । वरुणः । मित्रः । अग्निः ।
यच्छन्तु । चन्द्राः । उपऽमम् । नः । अर्कम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**वेङ्कट०** क्षिप्रं द्यावापृथिव्यौ अभिष्टुते[1] वसिष्ठैः, यज्ञवन्तः वरुणादयश्च प्र यच्छन्तु उषसः उपमानभूतम्[2] नः[3] अन्नम्, यद्वा आह्लादका देवा इति ॥ ७ ॥

[4]इति पञ्चमाष्टके चतुर्थाध्याये षष्ठो वर्गः[4] ॥

## [ ४० ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[4] ।

**ओ श्रुष्टिर्विदथ्याइ समेतु प्रति स्तोमं दधीमहि तुराणाम् ।**
**यदद्य देवः सविता सुवाति स्यामास्य रत्निनो विभागे ॥ १ ॥**

ओ इति । श्रुष्टिः । विदथ्या । सम् । एतु । प्रति । स्तोमम् । दधीमहि । तुराणाम् ।
यत् । अद्य । देवः । सविता । सुवाति । स्याम । अस्य । रत्निनः । विऽभागे ॥ १ ॥

**वेङ्कट०** सम् आयातु क्षिप्रं विदथहिता[5] प्रति दधीमहि[6] स्तोमम् आगतायां त्वयि देवानाम् । यदि अद्य देवः सविता उषा अस्मान्[7] प्रसौति, तत्[8] स्तुतया युक्ता वयं धनिनः भवेम अस्य सवितुः धनविभाजने[9] ॥ १ ॥

**मित्रस्तन्नो वरुणो रोदसी च द्युभक्तमिन्द्रो अर्यमा ददातु ।**
**दिदेष्टु देव्यदिती रेक्णो वायुश्च यन्नियुवैते भगश्च ॥ २ ॥**

मित्रः । तत् । नः । वरुणः । रोदसी इति । च । द्युऽभक्तम् । इन्द्रः । अर्यमा । ददातु ।
दिदेष्टु । देवी । अदितिः । रेक्णः । वायुः । च । यत् । नियुवैते इति निऽयुवैते । भगः । च ॥

**वेङ्कट०** मित्रः तत् अस्मभ्यं वरुणादिश्च दीप्तान्नं धनं प्रयच्छतु । दिशतु देवी[10] अदितिः धनम्, वायुः भगः च यत् धनम् पृथक् कुरुतः[11] ॥ २ ॥

**सेदुग्रो अस्तु मरुतः स शुष्मी यं मर्त्यं पृषदश्वा अवाथ ।**
**उतेमग्निः सरस्वती जुनन्ति न तस्य रायः पर्येतास्ति ॥ ३ ॥**

सः । इत् । उग्रः । अस्तु । मरुतः । सः । शुष्मी । यम् । मर्त्यम् । पृषत्ऽअश्वाः । अवाथ ।
उत । ईम् । अग्निः । सरस्वती । जुनन्ति । न । तस्य । रायः । परिऽएता । अस्ति ॥ ३ ॥

---

१. °ष्टुतो मूको. २. उपवासभृ° मूको. ३. नास्ति अ[1]; अन्नः लअ. ४-४. नास्ति मूको.
५. °धर्हि° वि[2] अ[1]; °थर्हि° ल लअ. ६. धीमहि वि[2] अ[1]; दनीडी धीमहि लअ. ७. °स्मात् मूको.
८. नास्ति वि[1]. ९ °जनैः मूको. १०. तेऽपि मूको. ११. °रुतम् मूको.

वेङ्कट० सः एव उद्गूर्णः भवतु हे मरुतः!, सः [1]बलवान्, यम्[1] मर्त्यम् हे पृषदश्वाः! रक्षथ। अपि च एनम् अग्निः[2] सरस्वती च तदनुचराश्च प्रीणयन्ति धनेन। न च तस्य धनस्य परिगन्ता अस्ति कश्चिदिति ॥ ३ ॥

अयं हि नेता वरुण ऋतस्य मित्रो राजानो अर्यमापो धुः ।
सुहवा देव्यदितिरनर्वा ते नो अंहो अति पर्षन्नरिष्टान् ॥ ४ ॥

अयम् । हि । नेता । वरुणः । ऋतस्य । मित्रः । राजानः । अर्यमा । अपः । धुरिति धुः ।
सुऽहवा । देवी । अदितिः । अनर्वा । ते । नः । अंहः । अति । पर्षन् । अरिष्टान् ॥ ४ ॥

वेङ्कट० अयम् हि नेता[3] वरुणः सत्यस्य मित्रः अर्यमा च राजानः कर्म धारयन्ति, तथा[4] स्वाह्वाना देवी अदितिः च अप्रत्युद्गता[5] अन्यस्मिन्। ते सर्वे अस्मान् अंहसः [6]अति पारयन्तु[6] अहिंसितानिति[7] ॥ ४ ॥

अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।
विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत् ॥ ५ ॥

अस्य । देवस्य । मीळ्हुषः । वयाः । विष्णोः । एषस्य । प्रऽभृथे । हविःऽभिः ।
विदे । हि । रुद्रः । रुद्रियम् । महिऽत्वम् । यासिष्टम् । वर्तिः । अश्विनौ । इराऽवत् ॥ ५ ॥

वेङ्कट० अस्य देवस्य सेक्तुः शाखाभूताः अन्ये देवाः विष्णोः हविर्भिः एषणीयस्य यज्ञे। तथा रुद्रः स्तोता स्तुत्यं[8] महत्त्वम् अश्विनोः हि जानाति। [9]हे अश्विनौ![9] तथा सति अन्नयुक्तं मार्गम् यासिष्टम् इति ॥ ५ ॥

मात्र पूषन्नाघृण इरस्यो वरूत्री यद् रातिषाचश्च रासन् ।
मयोभुवो नो अर्वन्तो नि पान्तु वृष्टिं परिज्मा वातो ददातु ॥ ६ ॥

मा । अत्र । पूषन् । आघृणे । इरस्यः । वरूत्री । यत् । रातिऽसाचः । च । रासन् ।
मयःऽभुवः । नः । अर्वन्तः । नि । पान्तु । वृष्टिम् । परिऽज्मा । वातः । ददातु ॥ ६ ॥

वेङ्कट० मा अत्र हे पूषन्! आगतदीप्ते! (तु. निघ ५,९) [10]इरामिच्छेः, वरुत्री[10] वारयित्र्यस्माकं[11] प्रजा तथा रातिषाचः[12] रातिं भजन्तः अस्मदीयं धनमपहरन्तश्च यत्र तुभ्यं प्रयच्छन्ति। सुखस्य भावयितारः अस्मान् अश्वाः[13] रक्षन्तु। वृष्टिम् परितो गन्ता वायुः ददातु ॥ ६ ॥

---

१-१ °वान वि[2]; °वान् न अ[1] ल लअ. २. अग्निम् मूको. ३. नेतारः मूको. ४. नास्ति वि[2]. ५. च प्रत्युता वि[1] ल; अप्रत्युता अ[1]; अप्रत्युस्तुता लअ. ६-६. अतिचार° वि[2]. ७. °सितानि° ल लअ. ८. तुभ्यं वि[2] अ[1] ल; स्तुभ्यं लअ. ९-९. नास्ति मूको. १०-१०. जरामिच्छे कृत्रि वि; जरामिच्छेर्वात्रि अ[1]; जरामिच्छो कृत् ल लअ. ११. विवार° मूको. १२. रात्रि° मूको. १३. तु. ऋ ७,३५,१२; ३८,७ प्रभृ. अश्वक्षराः लअ; अनश्वराः अ[1] वि[2] ल.

नू रोद॑सी अ॒भिष्टु॑ते वसि॑ष्ठैर्ऋ॒तावा॑नो॒ वरु॑णो मि॒त्रो अ॒ग्निः ।
यच्छ॑न्तु च॒न्द्रा उ॑प॒मं नो॑ अ॒र्कं यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ७ ॥

नु । रोद॑सी॒ इति॑ । अ॒भिस्तु॑ते॒ इत्य॒भिऽस्तु॑ते । वसि॑ष्ठैः । ऋ॒तऽवा॑नः । वरु॑णः । मि॒त्रः । अ॒ग्निः ।
यच्छ॑न्तु । च॒न्द्राः । उ॒प॒ऽमम् । न॒ः । अ॒र्कम् । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । न॒ः ॥६॥

**वेङ्कट०** पूर्वं व्याख्याता ( ऋ ७,३९,७ द्र. ) ॥ ७ ॥

[1]इति पञ्चमाष्टके चतुर्थाध्याये सप्तमो वर्गः[1] ॥

[ ४१ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । आद्याया अग्नीन्द्रमित्रावरुणाश्विभगपूषब्रह्मणस्पतिसोमरुद्रा देवता, द्वितीयादिषष्ठ्यन्तानां भगः, सप्तम्या उषसः । त्रिष्टुप् छन्दः, आद्या जगती[1] ।

प्रा॒तर॒ग्निं प्रा॒तरिन्द्रं॑ हवामहे प्रा॒तर्मि॒त्रावरु॑णा प्रा॒तर॒श्विना॑ ।
प्रा॒तर्भगं॑ पू॒षणं॒ ब्रह्म॑ण॒स्पतिं॑ प्रा॒तः सोम॑मु॒त रु॒द्रं हु॑वेम ॥ १ ॥

प्रा॒तः । अ॒ग्निम् । प्रा॒तः । इन्द्र॑म् । ह॒वा॒म॒हे॒ । प्रा॒तः । मि॒त्रावरु॑णा । प्रा॒तः । अ॒श्विना॑ ।
प्रा॒तः । भग॑म् । पू॒षण॑म् । ब्रह्म॑णः । पति॑म् । प्रा॒तरिति॑ । सोम॑म् । उ॒त । रु॒द्रम् । हु॒वे॒म॒ ॥ १ ॥

**वेङ्कट०** 'प्रातर्भागं जगत्याद्या[2] लिङ्गोक्तदेवताऽन्त्योषस्या' इति कात्यायनः ( ऋअ २, ७, ४१ )। सेयं[3] निगदसिद्धा[4] ॥ १ ॥

प्रा॒त॒र्जितं॒ भग॑मु॒ग्रं हु॑वेम व॒यं पु॒त्रमदि॑ते॒र्यो वि॑ध॒र्ता ।
आ॒ध्रश्चि॒द् यं मन्य॑मानस्तु॒रश्चि॒द् राजा॑ चि॒द् यं भगं॑ भ॒क्षीत्याह॑ ॥ २ ॥

प्रा॒त॒ःऽजित॑म् । भग॑म् । उ॒ग्रम् । हु॒वे॒म॒ । व॒यम् । पु॒त्रम् । अदि॑तेः । यः । वि॒ऽध॒र्ता ।
आ॒ध्रः । चि॒त् । यम् । मन्य॑मानः । तु॒रः । चि॒त् । राजा॑ । चि॒त् । यम् । भग॑म् । भ॒क्षि । इति॑ । आह॑ ॥२॥

**वेङ्कट०** प्रातर्जयिनम् भगम् उग्रम्[5] हुवेम वयम् पुत्रम् अदितेः, यः विधारयिता सर्वस्य। [6]आध्रः चित यम् मन्यमानः[6] । आध्रः[7] आढयालुः[8] दरिद्रः (तु. या १२, १४) स[9] यं स्तुवन् भक्षि इति आह । तथा तुरः चित् तुरः प्रेरको धनस्य आढयः राजा चित् यम् भगम् अहं भजेयम् इति वदति ॥ २ ॥

भग॒ प्रणे॑त॒र्भग॒ सत्य॑राधो॒ भगे॒मां धिय॒मुद॑वा॒ दद॑न्नः ।
भग॒ प्र णो॑ जनय॒ गोभि॒रश्वै॒र्भग॒ प्र नृभि॑र्नृ॒वन्त॑ः स्याम ॥ ३ ॥

---

१-१. नास्ति मूको. २. आद्या मूको. ३. सोऽयं वि[2] अ[1]. ४. °सिद्धः वि[2] अ[1]. ५. °ग्रं वयम् मूको. ६-६. आवृद्धि···मन्यमानः वि[2] अ[3]; आवृद्धिश्चमन्यद्यामानः ल; आव्रद्धिद्यमुन्यमा लअ. ७. आर्द्रं अ[1]; आर्धं लअ. ८. आलुः ल लअ. ९. सद् अ[1]; सन् ल लअ.

भग। प्रनैतरिति प्रऽनैतः। भग। सत्यऽराधः। भग। इमाम्। धियम्। उत्। अव। ददत्। नः।
भग। प्र। नः। जनय। गोभिः। अश्वैः। भग। प्र। नृऽभिः। नृऽवन्तः। स्याम ॥ ३ ॥

**वेङ्कट०** भग! प्रणेतः! स्तोतॄणाम् भग! सत्यधन! भग! इदं कर्म उत अव रक्ष प्रयच्छन् धनम् अस्माकम्। भग! प्र जनय अस्मान् गोभिः अश्वैः च। भग! प्र भवेम नृभिः नृवन्तः[1] ॥ ३ ॥

उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम्।
उतोदिता मघवन्त्सूर्यस्य वयं देवानां सुमतौ स्याम ॥ ४ ॥

उत। इदानीम्। भगऽवन्तः। स्याम। उत। प्रऽपित्वे। उत। मध्ये। अह्नाम्।
उत। उत्ऽइता। मघऽवन्। सूर्यस्य। वयम्। देवानाम्। सुऽमतौ। स्याम ॥ ४ ॥

**वेङ्कट०** अपि च इदानीम् वयं भगेन देवेन युक्ताः स्याम, अपि च अह्नाम् प्रपित्वे प्राह्णे प्रातः मध्ये च। अपि च उदये सूर्यस्य [2]मघवन्! इन्द्र![2]। भगस्यैव वा सम्बोधनम्। वयम् सर्वेषामेव देवानाम् सुमनसः स्याम ॥ ४ ॥

भग एव भगवाँ अस्तु देवास्तेन वयं भगवन्तः स्याम।
तं त्वा भग सर्व इज्जोहवीति स नो भग पुरएता भवेह ॥ ५ ॥

भगः। एव। भगऽवान्। अस्तु। देवाः। तेन। वयम्। भगऽवन्तः। स्याम।
तम्। त्वा। भग। सर्वः। इत्। जोहवीति। सः। नः। भग। पुरःऽएता। भव। इह ॥ ५ ॥

**वेङ्कट०** भगः एव देवोऽस्मदर्थं भाग्ययुक्तः भवतु प्रापयतु [3]अस्मान् भाग्यम्[3] हे देवाः!। तेन वयम् भगवन्तः स्याम। तम् त्वा भग! सर्वः एव आह्वयति[4]। सः नः भग! पुरएता भव अत्र[5] ॥ ५ ॥

समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय।
अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन आ वहन्तु ॥ ६ ॥

सम्। अध्वराय। उषसः। नमन्त। दधिक्रावाऽइव। शुचये। पदाय।
अर्वाचीनम्। वसुऽविदम्। भगम्। नः। रथम्ऽइव। अश्वाः। वाजिनः। आ। वहन्तु ॥ ६ ॥

**वेङ्कट०** सम् नमन्त यज्ञार्थम् उषसः अश्व इव प्रतिष्ठिताय युद्धदेशाय। अभिमुखं धनस्य लम्भयितारम् भगम् नः रथमिव अश्वाः वेगवन्तः आ [6]वहन्तु उषसः[6] ॥ ६ ॥

अश्वावतीर्गोमतीर्न उषासो वीरवतीः सदमुच्छन्तु भद्राः।
घृतं दुहाना विश्वतः प्रपीता यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

१. नृपते मूको. २-२. मघवन्तीन्द्र वि[२] अ[१]; मघवन्ति त्रिन्द्र ल लक्ष. ३-३. अस्माद् भाग्यं ल लक्ष; अस्मद्भाग्यं ल प्रस्तावः. ४. °यन्ति मूको. ५. अतः मूको. ६-६. °हरुप° मूको.

अश्वऽवतीः । गोऽमतीः । नः । उषसः । वीरऽवतीः । सदम् । उच्छन्तु । भद्राः ।
घृतम् । दुहानाः । विश्वतः । प्रऽपीताः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**वेङ्कट०** अश्ववत्यः गोमत्यः अस्माकम् उषसः वीरवत्यश्च सदैव उच्छन्तु भजनीयाः[1] उदकम् दुहानाः विश्वतः एव पुष्टाः ॥ ७ ॥

[2]इति पञ्चमाष्टके चतुर्थाध्याये अष्टमो वर्गः[2] ॥

[ ४२ ]

[2]वसिष्ठो मैत्रावरुणिर्ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[2] ।

प्र ब्रह्माणो अङ्गिरसो नक्षन्त प्र क्रन्दनुर्नभन्यस्य वेतु ।
प्र धेनव उदप्रुतो नवन्त युज्यातामद्री अध्वरस्य पेशः ॥ १ ॥

प्र । ब्रह्माणः । अङ्गिरसः । नक्षन्त । प्र । क्रन्दनुः । नभन्यस्य । वेतु ।
प्र । धेनवः । उदऽप्रुतः । नवन्त । युज्याताम् । अद्री इति । अध्वरस्य । पेशः ॥ १ ॥

**वेङ्कट०** वैश्वदेवम् । प्र व्याप्नुवन्तु ब्राह्मणाः, अङ्गिरसः आगच्छन्तु । प्र कामयतां पर्जन्यः वायुदेशार्थम् । सङ्गच्छन्तां च उदप्रुतः धेनवः इति मेघान् आह । आयुज्यातां रथेऽश्वान् आगमार्थम्[3] आदर्तारौ[4] शत्रूणां वातपर्जन्यौ अध्वरस्य रूपभूतौ ॥ १ ॥

सुगस्ते अग्ने सनवित्तो अध्वा युक्ष्वा सुते हरितो रोहितश्च ।
ये वा सद्मन्नरुषा वीरवाहो हुवे देवानां जनिमानि सत्तः ॥ २ ॥

सुऽगः । ते । अग्ने । सनऽवित्तः । अध्वा । युक्ष्व । सुते । हरितः । रोहितः । च ।
ये । वा । सद्मन् । अरुषाः । वीरऽवाहः । हुवे । देवानाम् । जनिमानि । सत्तः ॥ २ ॥

**वेङ्कट०** शोभनगमनः[5] तव अग्ने! सम्भक्तधनः मार्गः । योजय सुते सोमे हरितः रोहितः च अश्वान्[6] । ये[7] वा तव सदने आरोचमानाः वीरस्य तव वोढारः तान् वा युक्ष्व[8] । ह्वयामि[9] अहम् देवानाम् जनिमानि । देवानित्यर्थः । सत्तः निषण्णः ॥ २ ॥

समु वो यज्ञं महयन् नमोभिः प्र होता मन्द्रो रिरिच उपाके ।
यजस्व सु पुर्वणीक देवाना यज्ञियामरमतिं ववृत्याः ॥ ३ ॥

---

१. भृज° वि[2]; भुज° अ[1] ल लभ. २-२. नास्ति मूको. ३. आगमना° ल प्रस्तावः. ४. आहर्ता° ल वि[1]; आदत्ता° अ[1] लभ. ५. °मनं मूको. ६. चान् मूको. ७. यत् मूको. ८. युक्ष्य मूको. ९. धया° मूको.

सम् । ॐ इति । वः । यज्ञम् । महयन् । नमःऽभिः । प्र । होता । मन्द्रः । रिरिचे । उपाके ।
यजस्व । सु । पुरुऽअनीक । देवान् । आ । यज्ञियाम् । अरमतिम् । ववृत्याः ॥ ३ ॥

**वेङ्कट०** सम् अपूजयन् युष्माकं हविः नमस्कारैः सह, प्र रिरिचे अत्यन्तमुज्ज्वलो[1] [2]भवति अन्तिके[2] होता मोदनः इति अग्निमुक्त्वा तं प्रत्यक्षमाह — यजस्व सुष्ठु हे बहुज्वालानीक! देवान्, आ वर्तय च [3]यज्ञार्हां सन्ततां ज्वालाम्[3] ॥ ३ ॥

यदा वीरस्य रेवतो दुरोणे स्योनशीरतिथिराचिकेतत् ।
सुप्रीतो अग्निः सुधितो दम आ स विशे दाति वार्यमियत्यै ॥ ४ ॥

यदा । वीरस्य । रेवतः । दुरोणे । स्योनऽशीः । अतिथिः । आऽचिकेतत् ।
सुऽप्रीतः । अग्निः । सुऽधितः । दमे । आ । सः । विशे । दाति । वार्यम् । इयत्यै ॥ ४ ॥

**वेङ्कट०** यदा वीरस्य आढ्यस्य गृहे सुखशायी अतिथिः आभिमुख्येन स्तोत्रं बुध्यते । सुप्रीतः अग्निः सुनिहितः दमे स्वे आयतने, सः वीरो मनुष्यः विशे प्रयच्छति धनम् आत्मानमभिगच्छन्त्यै ॥ ४ ॥

इमं नो अग्ने अध्वरं जुषस्व मरुत्स्विन्द्रे यशसं कृधी नः ।
आ नक्ता बर्हिः सदतामुषासोशन्ता मित्रावरुणा यजेह ॥ ५ ॥

इमम् । नः । अग्ने । अध्वरम् । जुषस्व । मरुत्ऽसु । इन्द्रे । यशसम् । कृधि । नः ।
आ । नक्ता । बर्हिः । सदताम् । उषसा । उशन्ता । मित्रावरुणा । यज । इह ॥ ५ ॥

**वेङ्कट०** इमम् नः अग्ने! यज्ञं सेवस्व[4] । मरुत्सु इन्द्रे च अस्माकं यशस्विनं पुत्रं कुरु । [5]आ सीदताम्[5] नक्ता उषासा बर्हिः । कामयमानौ मित्रावरुणौ यज अत्र[6] ॥ ५ ॥

एवाग्निं सहस्यं१ वसिष्ठो रायस्कामो विश्वप्स्न्यस्य स्तौत् ।
इषं रयिं पप्रथद् वाजमस्मे यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

एव । अग्निम् । सहस्यम् । वसिष्ठः । रायःऽकामः । विश्वऽप्स्न्यस्य । स्तौत् ।
इषम् । रयिम् । पप्रथत् । वाजम् । अस्मे इति । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

**वेङ्कट०** एवम् अग्निम् सबलम्[7] वसिष्ठः धनकामः विश्वप्स्न्यस्य राज्ञः अस्तौत् । सोऽग्निः अन्नं धनं बलं च अस्मासु प्रथयतु ॥ ६ ॥

[8]इति पञ्चमाष्टके चतुर्थाध्याये नवमो वर्गः[8] ॥

---

१. °ज्ज्वले मूको. २-२. भवदन्तिके ल प्रस्तावः. ३-३. यज्ञार्हं सन्ततज्वालम् मूको. ४. °यस्व वि[2] अ[1]. ५-५. असिदाता वि[2] अ[1]; असीदाताम् ल लभ. ६. अत्तम् मूको. ७. सकुशलं वि[2] अ[1] ल; सहकुशलं लभ. ८-८. नास्ति मूको.

[ ४३ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । विश्वे देवा देवता । त्रिष्टुप् छन्दः[1] ।

प्र वो॑ य॒ज्ञेषु॑ देव॒यन्तो॑ अर्च॒न् द्यावा॒ नमो॑भिः पृथि॒वी इ॒षध्यै॑ ।
येषा॒ं ब्रह्मा॒ण्यस॑मानि॒ विप्रा॒ विष्व॑ग्वि॒यन्ति॑ व॒निनो॒ न शाखा॑ः ॥ १ ॥

प्र । व॒ः । य॒ज्ञेषु॑ । दे॒व॒ऽयन्त॑ः । अ॒र्च॒न् । द्यावा॑ । नम॑ःऽभिः । पृ॒थि॒वी इति॑ । इ॒षध्यै॑ ।
येषा॑म् । ब्रह्मा॑णि । अस॑मानि । विप्रा॑ः । विष्व॑क् । वि॒ऽयन्ति॑ । व॒निन॑ः । न । शाखा॑ः ॥१ ॥

**वेङ्कट०** प्र अर्चन् युष्मान् हे देवाः! यज्ञेषु देवकामाः विप्राः, द्यावापृथिव्यौ च नमस्कारैः इषध्यै याचितुम् अन्नम् । येषाम् विप्राणां स्तोत्राणि असमानि विष्वक् विविधं गच्छन्ति वृक्षस्य इव शाखाः ॥ १ ॥

प्र य॒ज्ञ ए॑तु॒ हेत्वो॒ न सप्ति॒रुद्य॑च्छध्व॒ं सम॑नसो घृ॒ताची॑ः ।
स्तृ॒णी॒त ब॒र्हिर॑ध्व॒राय॑ सा॒धूर्ध्वा शो॒चींषि॑ देव॒यून्य॑स्थुः ॥ २ ॥

प्र । य॒ज्ञः । ए॒तु॒ । हेत्व॑ः । न । सप्ति॑ः । उत् । य॒च्छ॒ध्व॒म् । सऽम॑नसः । घृ॒ताची॑ः ।
स्तृ॒णी॒त । ब॒र्हिः । अ॒ध्व॒राय॑ । सा॒धु । ऊ॒र्ध्वा । शो॒चींषि॑ । दे॒व॒ऽयूनि॑ । अ॒स्थु॒ः ॥ २ ॥

**वेङ्कट०** प्र एतु यज्ञः गमनकुशलः इव[2] अश्वः[3] । उत् यच्छध्वम् समनस्काः सन्तः स्रुचः[4] । स्तृणीत बर्हिः यज्ञार्थं कल्याणम् । उत्तिष्ठन्तु[5] देवकामानि शोचींषि, ज्वलयत[6] इत्यर्थः ॥ २ ॥

आ पु॒त्रासो॒ न मा॒तर॒ं विभृ॑त्रा॒ः सानौ॑ दे॒वासो॑ ब॒र्हिष॑ः सदन्तु ।
आ वि॒श्वाची॑ विद॒थ्या॑मनक्त्वग्ने॒ मा नो॑ दे॒वता॑ता॒ मृध॑स्कः ॥ ३ ॥

आ । पु॒त्रास॑ः । न । मा॒तर॑म् । विऽभृ॑त्राः । सानौ॑ । दे॒वास॑ः । ब॒र्हिष॑ः । स॒द॒न्तु॒ ।
आ । वि॒श्वाची॑ । वि॒द॒थ्या॑म् । अ॒न॒क्तु॒ । अग्ने॑ । मा । न॒ः । दे॒वऽता॑ता । मृध॑ः । कु॒रिति॑ कः ॥३॥

**वेङ्कट०** आ सीदन्तु मातरम्[7] इव विशेषेण भरणीयाः बालाः पुत्राः बर्हिषः समुच्छ्रिते देशे देवाः । आभिमुख्येन अनक्तु विश्वाची गौः यज्ञे वर्तमानां तव ज्वालाम् । जुहूरेव वा विश्वाची । अग्ने![8] अस्माकम् यज्ञे मा कार्षीः हिंसाम् ॥ ३ ॥

ते सी॑षपन्त॒ जोष॒मा यज॑त्रा ऋ॒तस्य॒ धारा॑ः सु॒दुघा॒ दुहा॑नाः ।
ज्येष्ठं॑ वो अ॒द्य मह॒ आ वसू॑ना॒मा ग॑न्तन॒ सम॑नसो॒ यति॑ ष्ठ ॥ ४ ॥

ते । सी॒ष॒प॒न्त॒ । जोष॑म् । आ । यज॑त्राः । ऋ॒तस्य॑ । धारा॑ः । सु॒ऽदुघा॑ः । दु॒हा॑नाः ।
ज्येष्ठ॑म् । व॒ः । अ॒द्य । मह॑ः । आ । वसू॑नाम् । आ । ग॒न्त॒न॒ । सऽम॑नसः । यति॑ । स्थ ॥ ४ ॥

---

१-१. नास्ति मूको. २. नास्ति ल वि[2]. ३. अश्वश्च मूको. ४. तृचः मूको. ५. °ष्ठन्त वि[2] ल; °ठु लभ. ६. ज्वल त्वं नय मूको. ७. °तर मूको. ८. भग्ने मूको.

**वेङ्कट०** ते आ स्पृशन्तु प्रीतिं यष्टव्याः उदकस्य धाराः सुदोहाः दुहानाः। प्रशस्ततमम् अद्य युष्माकम् वसूनाम् महत्त्वम् अस्मान् आ गच्छन्तु। हे देवाः! आ गच्छत समानमनस्काः यावन्तः भवथ ॥ ४ ॥

एवा नो अग्ने विक्ष्वा दशस्य त्वया वयं सहसावन्नास्क्राः ।
राया युजा सधमादो अरिष्टा यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

एव । नः । अग्ने । विक्षु । आ । दशस्य । त्वया । वयम् । सहसाऽवन् । आस्क्राः ।
राया । युजा । सधऽमादः । अरिष्टाः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** एवम् अस्मभ्यम् अग्ने! प्रजासु आभिमुख्येन देहि। त्वया वयम् बलवन्! आस्कन्दितारः धनेन सहायेन सह माद्यन्तः अहिंसिताः ॥ ५ ॥

[१]इति पञ्चमाष्टके चतुर्थाध्याये दशमो वर्गः[१] ॥

## [ ४४ ]

[१]वसिष्ठो मैत्रावरुणिर्ऋषिः । दधिक्रा देवता, प्रथमाया दधिक्राश्व्युषोऽग्निभगेन्द्रविष्णुपूषब्रह्मणस्पत्यादित्यद्यावापृथिव्यापः । त्रिष्टुप् छन्दः, आद्या जगती[१] ।

दधिक्रां वः प्रथममश्विनोषसमग्निं समिद्धं भगमूतये हुवे ।
इन्द्रं विष्णुं पूषणं ब्रह्मणस्पतिमादित्यान् द्यावापृथिवी अपः स्वः ॥ १ ॥

दधिऽक्राम् । वः । प्रथमम् । अश्विना । उषसम् । अग्निम् । समऽइद्धम् । भगम् । ऊतये । हुवे ।
इन्द्रम् । विष्णुम् । पूषणम् । ब्रह्मणः । पतिम् । आदित्यान् । द्यावापृथिवी इति । अपः । स्व१रिति स्वः ॥ १ ॥

**वेङ्कट०** एता देवताः युष्माकम् रक्षणाय प्रथमम् ह्वयामि । त्रींश्च लोकान् आदित्यान्[२] च ॥ १ ॥

दधिक्रामु नमसा बोधयन्त उदीराणा यज्ञमुपप्रयन्तः ।
इळां देवीं बर्हिषि सादयन्तोऽश्विना विप्रा सुहवा हुवेम ॥ २ ॥

दधिऽक्राम् । ऊँ इति । नमसा । बोधयन्तः । उत्ऽईराणाः । यज्ञम् । उपऽप्रयन्तः ।
इळाम् । देवीम् । बर्हिषि । सादयन्तः । अश्विना । विप्रा । सुऽहवा । हुवेम ॥ २ ॥

**वेङ्कट०** दधिक्राम् एव हविषा बोधयन्तः उद्यच्छन्तः यज्ञम् उपप्रयन्तः इळाम् देवीम् हविः बर्हिषि सादयन्तः अश्विनौ मेधाविनौ स्वाह्वानौ हुवेम । दाधिक्रं सूक्तं साहचर्यादन्येषां स्तुतिः ॥ २ ॥

दधिक्रावाणं बुबुधानो अग्निमुप ब्रुव उषसं सूर्यं गाम् ।
ब्रध्नं मँश्चतोर्वरुणस्य बभ्रुं ते विश्वास्मद् दुरिता यावयन्तु ॥ ३ ॥

---

१-१. नास्ति मूको, २. °त्यम् मूको,

दधिऽक्रावाणम् । बुबुधानः । अग्निम् । उप । ब्रुवे । उषसम् । सूर्यम् । गाम् ।
ब्रध्नम् । मंश्चतोः । वरुणस्य । बभ्रुम् । ते । विश्वा । अस्मत् । दुःऽइता । यवयन्तु ॥ ३ ॥

**वेङ्कट०** बुबुधानः अश्वम्[1] उप ब्रुवे अग्निम् उषसम् सूर्यम् गाम् च । मंश्चतुरित्यश्वनाम, मन्यमानानभिगच्छतीति[2], इह[3] तु वरुणविशेषणम् । मंश्चतोः वरुणस्य महान्तम् बभ्रुम् अश्वम् । ते सर्वे विश्वानि अस्मत्तो दुरितानि पृथक् कुर्वन्तु ॥ ३ ॥

दधिक्रावा प्रथमो वाज्यर्वाग्रे रथानां भवति प्रजानन् ।
संविदान उषसा सूर्येणादित्येभिर्वसुभिरङ्गिरोभिः ॥ ४ ॥

दधिऽक्रावा । प्रथमः । वाजी । अर्वा । अग्रे । रथानाम् । भवति । प्रऽजानन् ।
सम्ऽविदानः । उषसा । सूर्येण । आदित्येभिः । वसुऽभिः । अङ्गिरःऽभिः ॥ ४ ॥

**वेङ्कट०** दधिक्रावा प्रथमः बलवान् गन्ता रथानाम् अग्रे भवति गन्तव्यं देशम् प्रजानन् उषःप्रभृतिभिः संविदानः ऐकमत्यं गतः ॥ ४ ॥

आ नो दधिक्राः पथ्यामनक्त्वृतस्य पन्थामन्वेतवा उ ।
शृणोतु नो दैव्यं शर्धो अग्निः शृण्वन्तु विश्वे महिषा अमूराः ॥ ५ ॥

आ । नः । दधिऽक्राः । पथ्याम् । अनक्तु । ऋतस्य । पन्थाम् । अनुऽएतवै । ऊँ इति ।
शृणोतु । नः । दैव्यम् । शर्धः । अग्निः । शृण्वन्तु । विश्वे । महिषाः । अमूराः ॥ ५ ॥

**वेङ्कट०** आभिमुख्येन अनक्तु अस्माकम् दधिक्राः पन्थानम् उदकेन, यज्ञस्य पन्थानम् अविच्छेदेनानुष्ठातुम् । शृणोतु अस्मान् दैव्यम् बलम् अग्निः । शृण्वन्तु विश्वे महान्तः अमूढा देवाः अस्मानिति ॥ ५ ॥

[4]इति पञ्चमाष्टके चतुर्थाध्याये एकादशो वर्गः[4] ॥

[ ४५ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । सविता देवता । त्रिष्टुप् छन्दः[4] ।

आ देवो यातु सविता सुरत्नोऽन्तरिक्षप्रा वहमानो अश्वैः ।
हस्ते दधानो नर्या पुरूणि निवेशयञ्च प्रसुवञ्च भूम ॥ १ ॥

आ । देवः । यातु । सविता । सुऽरत्नः । अन्तरिक्षऽप्राः । वहमानः । अश्वैः ।
हस्ते । दधानः । नर्या । पुरूणि । निऽवेशयन् । च । प्रऽसुवन् । च । भूम ॥ १ ॥

**वेङ्कट०** आ यातु देवः सविता[5] शोभनरत्नः अन्तरिक्षस्य पूरयिता अश्वैः उह्यमानः हस्ते प्रयच्छन् धारयन् वा बहूनि धनानि रात्रौ निवेशयन् प्रातः प्रसुवन् च भूतजातम् ॥ १ ॥

---

१. अग्निम् मूको. २. °मानामनभि° मूको. ३. इ मूको. ४-४. नास्ति मूको. ५. °ता रथेन अ°.

उदस्य बाहू शिथिरा बृहन्ता हिरण्यया दिवो अन्ताँ अनष्टाम् ।
नूनं सो अस्य महिमा पनिष्ट सूरश्चिदस्मा अनु दादपस्याम् ॥ २ ॥

उत् । अस्य । बाहू इति । शिथिरा । बृहन्ता । हिरण्यया । दिवः । अन्तान् । अनष्टाम ।
नूनम् । सः । अस्य । महिमा । पनिष्ट । सूरः । चित् । अस्मै । अनु । दात् । अपस्याम् ॥२॥

**वेङ्कट०** उत् व्याप्नुतः[1] अस्य बाहू शिथिलौ प्रेर्यमाणौ महान्तौ हिरण्मयौ दिवः पर्यन्तान्[2] । नूनम् सः अस्य महिमा स्तूयते सवितुः यत् सूर्योऽपि अस्मै सवित्रे अनु ददाति अपस्याम् कर्मेच्छाम्, उपबृंहयतीत्यर्थः । सविता कर्माणि लौकिकानि चिकीर्षति, साहाय्यं सूर्यः करोति ॥ २ ॥

स घा नो देवः सविता सहावा साविषद् वसुपतिर्वसूनि ।
विश्रयमाणो अमतिमुरूचीं मर्तभोजनमध रासते नः ॥ ३ ॥

सः । घ । नः । देवः । सविता । सहऽवा । आ । साविषत् । वसुऽपतिः । वसूनि ।
विऽश्रयमाणः । अमतिम् । उरूचीम् । मर्तऽभोजनम् । अध । रासते । नः ॥ ३ ॥

**वेङ्कट०** सः खलु अस्मभ्यम् देवः सविता सहनवान् आभिमुख्येन सुवतु वसुपतिः वसूनि । विविधं श्रयमाणः रूपम् बह्वञ्चनम् मनुष्यभोजनमन्नम् इदानीं प्रयच्छतु अस्मभ्यम् ॥ ३ ॥

इमा गिरः सवितारं सुजिह्वं पूर्णगभस्तिमीळते सुपाणिम् ।
चित्रं वयो बृहदस्मे दधातु यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

इमाः । गिरः । सवितारम् । सुऽजिह्वम् । पूर्णऽगभस्तिम् । ईळते । सुऽपाणिम् ।
चित्रम् । वयः । बृहत् । अस्मे इति । दधातु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ४ ॥

**वेङ्कट०** इमाः गिरः सवितारम् शोभनवाचम् धनपूर्णबाहुम्[3] स्तुवन्ति शोभनपाणिम् । सञ्चितम् अन्नम् बृहत् अस्मासु दधातु ॥ ४ ॥

[4]इति पञ्चमाष्टके चतुर्थाध्याये द्वादशो वर्गः[4] ।

## [ ४६ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । रुद्रो देवता । जगती छन्दः, चतुर्थी त्रिष्टुप्[4] ।

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥ १ ॥

---

१. °प्नुवतः मूको. २. °न्तान्मिना वि[२]; °न्तान्मिनाम्मीं अ[१]; °न्तानि ल लभ. ३. °र्णमाहुः मूको.
४-४. नास्ति मूको.

इमाः । रुद्राय । स्थिरऽधन्वने । गिरः । क्षिप्रऽइषवे । देवाय । स्वधाऽव्ने ।
अषाळ्हाय । सहमानाय । वेधसे । तिग्मऽआयुधाय । भरत । शृणोतु । नः ॥ १ ॥[1]

**वेङ्कट०** इमाः रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय अन्नवते शत्रुभिरसोढाय तत्सहमानाय विधात्रे तिग्मधनुष्काय भरत [2]हे मनुष्याः! । सः[2] शृणोतु अस्मानिति ॥ १ ॥

**स हि क्षयेण क्षम्यस्य जन्मनः साम्राज्येन दिव्यस्य चेतति ।**
**अवन्नवन्तीरुप नो दुरश्चराऽनमीवो रुद्र जासु नो भव ॥ २ ॥**

सः । हि । क्षयेण । क्षम्यस्य । जन्मनः । साम्ऽराज्येन । दिव्यस्य । चेतति ।
अवन् । अवन्तीः । उप । नः । दुरः । चर । अनमीवः । रुद्र । जासु । नः । भव ॥ २ ॥

**वेङ्कट०** सः हि क्षयेण निवासत्वेन पार्थिवस्य भूतजातस्य ज्ञायते, साम्राज्येन च दिवि भवस्य देवगणस्य चेति । अथ प्रत्यक्षः — रक्षन्[3] चास्माकं [4]रक्षन्तीः दुरः उप चर अमीवारहितः[4] रुद्र! प्रजासु भव अस्माकम् ॥ २ ॥

**या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः ।**
**सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ॥ ३ ॥**[1]

या । ते । दिद्युत् । अवऽसृष्टा । दिवः । परि । क्ष्मया । चरति । परि । सा । वृणक्तु । नः ।
सहस्रम् । ते । सुऽअपिवात । भेषजा । मा । नः । तोकेषु । तनयेषु । रिरिषः ॥ ३ ॥

**वेङ्कट०** यत् ते[5] आयुधम् त्वयावसृष्टम् अन्तरिक्षात् पृथिवीं लक्षीकृत्य चरति, तत् परि वर्जयतु अस्मान् । 'सहस्रम् ते स्वाप्तवचन![6] भैषज्यानि' इति यास्कः[7] (१०,७)। मा अस्माकं पुत्रेषु पौत्रेषु च हिंसीः[8] ॥३॥

**मा नो वधी रुद्र मा परा दा मा ते भूम प्रसितौ हीळितस्य ।**
**आ नो भज बर्हिषि जीवशंसे यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥**

मा । नः । वधीः । रुद्र । मा । परा । दाः । मा । ते । भूम । प्रऽसितौ । हीळितस्य ।
आ । नः । भज । बर्हिषि । जीवऽशंसे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ४ ॥

**वेङ्कट०** मा अस्मान् वधीः रुद्र! । मा च शत्रुभ्यः परा दाः । मा ते भूम बन्धने क्रुद्धस्य । 'प्रसितिः [9]प्रसयनात् तन्तुर्वा जालं[9] वा' ( या ६,१२ ) इत्युक्तम् । [10]आ भज[10] प्रापय अस्मान्[11] यज्ञे जीवानां शंसनीये ॥ ४ ॥

[12]इति पञ्चमाष्टके चतुर्थाध्याये त्रयोदशो वर्गः[12] ॥

---

१. ऋचाविमे ( १,३ ) यथाक्रमं यास्केन व्याख्याते ( १०,६;७ ). २-२. °ष्याय वि[१]. ३. रक्ष मूको. ४-४. रक्षन् दुर् उर अमिवारहितौ वि[२] अ[१]; रक्ष दुर् उर अमिवारहितौ ल; रक्ष दुर् उर अमिवहितौ लअ. ५. तव अ[१]. ६. °वन अ[१] ल लअ. ७. रारको वि[१]; रास्को ल लअ; रारस्को अ[१]. ८. हिंसि मूको. ९. प्रसन्नाकृतिर्वा जालं अ[१]; प्रसयनात् कति वा जालं वि[२]; प्रसयनाक् तन्तिर्वा जालं ल; प्रसयनात्तन्तिर्वा जाल लअ. १०-१०. आइजा मूको ११. अस्मिन वि[२] ल लअ. १२-१२. नास्ति मूको.

[ ४७ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । आपो देवता । त्रिष्टुप् छन्दः[1] ।

आपो यं वः प्रथमं देवयन्त इन्द्रपानमूर्मिमकृण्वतेळः ।
तं वो वयं शुचिमरिप्रमद्य घृतप्रुषं मधुमन्तं वनेम ॥ १ ॥

आपः । यम् । वः । प्रथमम् । देवऽयन्तः । इन्द्रऽपानम् । ऊर्मिम् । अकृण्वत । इळः ।
तम् । वः । वयम् । शुचिम् । अरिप्रम् । अद्य । घृतऽप्रुषम् । मधुऽमन्तम् । वनेम ॥ १ ॥

**वेङ्कट०** हे आपः! यम् युष्माकम् प्रथमम् यजमानाः इन्द्रस्य पानम् ऊर्मिम् अकृण्वत स्तोतारः इति वसतीवर्यभिप्रायम् । तम् वः वयम् शुचिम् अपापम् अद्य घृतस्य स्रष्टारम् मधुमन्तम् भजेम ॥ १ ॥

तमूर्मिमापो मधुमत्तमं वोऽपां नपादवत्वाशुहेमा ।
यस्मिन्निन्द्रो वसुभिर्मादयाते तमश्याम देवयन्तो वो अद्य ॥ २ ॥

तम् । ऊर्मिम् । आपः । मधुमत्ऽतमम् । वः । अपाम् । नपात् । अवतु । आशुऽहेमा ।
यस्मिन् । इन्द्रः । वसुऽभिः । मादयाते । तम् । अश्याम । देवऽयन्तः । वः । अद्य ॥ २ ॥

**वेङ्कट०** तम् ऊर्मिम् हे आपः! मधुमत्तमम् युष्माकम् अपाम् नपात् देवो रक्षतु आशुगमनः । यस्मिन् इन्द्रः वसुभिः देवैः सह माद्यति, तम् युष्माकम् ऊर्मिम् अद्य वयम् अश्याम देवकामाः ॥ २ ॥

शतपवित्राः स्वधया मदन्तीर्देवीर्देवानामपि यन्ति पाथः ।
ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं घृतवज्जुहोत ॥ ३ ॥

[2]शतऽपवित्राः । स्वधया । मदन्तीः ।[2] देवीः । देवानाम् । अपि । यन्ति । पाथः ।
ताः । इन्द्रस्य । न । मिनन्ति । व्रतानि । सिन्धुऽभ्यः । हव्यम् । घृतऽवत् । जुहोत ॥ ३ ॥

**वेङ्कट०** अनेकपवनसाधनाः[3] स्वधया मनुष्यान् तर्पयन्त्यः देव्यः देवानाम् अभिगच्छन्ति स्थानम् । ताः इन्द्रस्य न हिंसन्ति कर्माणि । ताभ्यः सिन्धुभ्यः हव्यम् घृतवत् जुहुत[4] ॥ ३ ॥

याः सूर्यो रश्मिभिराततान याभ्य इन्द्रो अरदद् गातुमूर्मिम् ।
ते सिन्धवो वरिवो धातना नो यूयं पात स्वस्तिभिः सदा नः ॥ ४ ॥

याः । सूर्यः । रश्मिऽभिः । आऽततान । याभ्यः । इन्द्रः । अरदत् । गातुम् । ऊर्मिम् ।
ते । सिन्धवः । वरिवः । धातन । नः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ४ ॥

---

१-१. नास्ति मूको. २-२. या (५,६) द्र. ३. °नेकभवन° मूको. ४. जुहोत वि[2].

**वेङ्कट०** याः सूर्यः रश्मिभिः अन्तरिक्षे विस्तारयति । याभ्यः च इन्द्रः व्यलिखत्[1] गमनशीलम् ऊर्मिम् । गमनकामः[2] मार्गं चकारेत्यर्थः । 'इन्द्रो अस्माँ[3] अरदद्वज्रबाहुः' ( ऋ ३,३३,६ ) इति मन्त्रः । ते[4] यूयम् हे सिन्धवः ! धनम् अस्मभ्यं धत्त । सिन्धुसामानाधिकरण्यात्[5] तच्छब्दस्य लिङ्गभेदः ॥ ४ ॥

[6]इति पञ्चमाष्टके चतुर्थाध्याये चतुर्दशो वर्गः[6] ॥

## [ ४८ ]

[6]वसिष्ठो मैत्रावरुणिर्ऋषिः । ऋभवो देवता, चतुर्थ्या विश्वे देवा वा । त्रिष्टुप् छन्दः[6] ।

ऋभुक्षणो वाजा मादयध्वमस्मे नरो मघवानः सुतस्य ।
आ वोऽर्वाचः क्रतवो न यातां विभ्वो रथं नर्यं वर्तयन्तु ॥ १ ॥

ऋभुक्षणः । वाजाः । मादयध्वम् । अस्मे इति । नरः । मघऽवानः । सुतस्य ।
आ । वः । अर्वाचः । क्रतवः । न । याताम् । विऽभ्वः । रथम् । नर्यम् । वर्तयन्तु ॥ १ ॥

**वेङ्कट०** हे ऋभवः ! वाजाः ! इति ज्येष्ठकनिष्ठाभ्यां व्यपदेशः, मादयध्वम् अस्मासु हे नरः ! मघवन्तः ! सोमेन । गच्छतां युष्माकम् अभितोमुखाः[7] अश्वाः रथम् आ वर्तयन्तु नृहितम्, यथा मनुष्याणां कर्माणि भवतां रथम् आवर्तयन्ति[8] हे महान्तः ! ॥ १ ॥

ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि ।
वाजो अस्माँ अवतु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम् ॥ २ ॥

ऋभुः । ऋभुऽभिः । अभि । वः । स्याम । विऽभ्वः । विभुऽभिः । शवसा । शवांसि ।
वाजः । अस्मान् । अवतु । वाजऽसातौ । [9]इन्द्रेण । युजा । तरुषेम । वृत्रम्[9] ॥ २ ॥

**वेङ्कट०** ऋभुभिः युष्माभिः [10]वयमपि ऋभवः[10] शत्रून् अभि भवेम । तृतीयायामपि 'बहुवचनस्य वस्नसौ' ( पा ८,१,२१ ) इति दृष्टम् । ऋभुरिति जसः स्वादेशः । तथा विभुभिः भवद्भिर्वयं च विभ्वः महान्तः बलेन बलानि अभिभवेम । [11]वाजः कनीयान्[11] युष्माकम् अस्मान् सङ्ग्रामे रक्षतु । तेषां सहायभूतेन इन्द्रेण तरेम शत्रुम् ॥ २ ॥

ते चिद्धि पूर्वीरभि सन्ति शासा विश्वाँ अर्य उपरताति वन्वन् ।
इन्द्रो विभ्वाँ ऋभुक्षा वाजो अर्यः शत्रोर्मिथत्या कृणवन् वि नृम्णम् ॥ ३ ॥

ते । चित् । हि । पूर्वीः । अभि । सन्ति । शासा । विश्वान् । अर्यः । उपरऽताति । वन्वन् ।
इन्द्रः । विऽभ्वा । ऋभुक्षाः । वाजः । अर्यः । शत्रोः । मिथत्या । कृणवन् । वि । नृम्णम् ॥३॥

---

१. विलि° मूको. २. गमनकामार्गे अ[1] ल लअ; गमनिकामार्गे वि[2]. ३. अस्माकम् वि[2] अ[1] ल; अस्मान् लअ. ४-४. ते हे यूयं सि° वि[2] अ[1]. ५. °समाना° ल. ६-६. नास्ति मूको. ७. अमितो° मूको. ८. °यति मूको. ९-९. तु. या (५,२). १०-१०. यमभिभवः वि[2]; ययमप्तृभवः ल लअ; वयमृभवः ल प्रस्तावः. ११-११. वाजजनी वि[2] अ[1]; वाजो वाजनीयान् ल; वाजनीया लअ.

**वेङ्कट०** ते हि खलु बह्वीः सेनाः अभि भवन्ति [1]शासेन असिना[1]। अपि च सर्वानेव अरीन् उपरतातिघ्नन्ति। स्वार्थिकस्तातिल् प्रत्ययः। मूलत एव घ्नन्तीति। इन्द्रः विभ्वा मध्यमः[2] ऋभुक्षाः[3] च ज्येष्ठः कनीयान् वाजः च ईश्वरः शत्रोः धनम् वि कृण्वन्तु। मिथत्या इति [4]निपातो मिथःपर्यायः[4]। सङ्गता इति ॥ ३ ॥

नू दे॒वा॑सो॒ वरि॑वः कर्तना नो भू॒त नो॒ विश्वेऽव॑से स॒जोषा॑ः ।
सम॒स्मे इ॒षं वस॑वो ददीरन् यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ४ ॥

नु । दे॒वा॒स॒ः । वरि॑वः । क॒र्त॒न॒ । न॒ः । भू॒त । न॒ः । विश्वे॑ । अव॑से । स॒ऽजोषा॑ः ।
सम् । अ॒स्मे इति॑ । इष॑म् । वस॑वः । द॒दी॒र॒न् । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । न॒ः ॥ ४ ॥

**वेङ्कट०** क्षिप्रं हे[5] देवाः! धनं कुरुत अस्मभ्यम्। भवत च सर्वे अस्माकं रक्षणाय सङ्गताः। [6]सम् ददीरन्[6] सम्प्रयच्छन्तु अस्मभ्यम् अन्नम् वसवः देवाः ॥ ४ ॥

[7]इति पञ्चमाष्टके चतुर्थाध्याये पञ्चदशो वर्गः[7] ॥

[ ४९ ]

[7]वसिष्ठो मैत्रावरुणिर्ऋषिः। आपो देवता। त्रिष्टुप् छन्दः[7]।

स॒मु॒द्रज्ये॑ष्ठाः सलि॒लस्य॒ मध्या॑त् पुना॒ना य॒न्त्यनि॑विशमानाः ।
इन्द्रो॒ या व॒ज्री वृ॑ष॒भो र॒राद॒ ता आपो॑ दे॒वीरि॒ह माम॑वन्तु ॥ १ ॥

स॒मु॒द्रऽज्ये॑ष्ठाः । स॒लि॒लस्य॑ । मध्या॑त् । पु॒ना॒नाः । य॒न्ति॒ । अनि॑ऽविशमानाः ।
इन्द्र॑ः । याः । व॒ज्री । वृ॒ष॒भः । र॒राद॑ । ताः । आप॑ः । दे॒वीः । इ॒ह । माम् । अ॒व॒न्तु॒ ॥ १ ॥

**वेङ्कट०** समुद्रप्रथमाः अन्तरिक्षस्य मध्यात् शोधयन्त्यः[8] गच्छन्ति[9] अनिविशमानाः[10]। इन्द्रः याः अपः[11] वज्री वर्षिता व्यलिखद् वज्रेण भित्त्वा निरगमयत्, ताः आपः देवीः इह माम् रक्षन्तु ॥ १ ॥

या आपो॑ दि॒व्या उ॒त वा॒ स्रव॑न्ति ख॒नित्रि॑मा उ॒त वा॒ याः स्व॑यं॒जाः ।
स॒मु॒द्रार्था॒ याः शुच॑यः पाव॒कास्ता आपो॑ दे॒वीरि॒ह माम॑वन्तु ॥ २ ॥

याः । आप॑ः । दि॒व्याः । उ॒त । वा॒ । स्रव॑न्ति । ख॒नित्रि॑माः । उ॒त । वा॒ । याः । स्व॒य॒म्ऽजाः ।
स॒मु॒द्रऽअ॑र्थाः । याः । शुच॑यः । पा॒व॒काः । ताः । आप॑ः । दे॒वीः । इ॒ह । माम् । अ॒व॒न्तु॒ ॥ २ ॥

---

१-१. शोभनासीना वि[2]; शासेनासीना ल अ[1] लभ; शासनेनापि ल प्रस्तावः. २. °ध्यमाः मूको. ३. °क्षा मूको. ४-४. निवातोमिथाप·° मूको. ५. त्रुटितम् वि[2]; भे अ[1] ल लभ. ६-६. सन्नदी° मूको. ७-७. नास्ति मूको. ८. शोदयन्त्यौ अ[1] लभ; शोदयन्त्यः वि[2] ल. ९. गच्छन्त्यः वि[2]; गच्छन्त अ[1]. १०. विशमा° वि[1] अ[1]. ११. आपः वि[2] ल लभ.

**वेङ्कट०** याः आपः अन्तरिक्ष्याः[1], याश्च ततः स्रवन्ति, खनित्रिमाः कूप्याः[2], उत वा याः स्वयंजाताः[3] निम्नेषु देशेषु। समुद्रो गन्तव्यो यासां ताः[4] समुद्रार्थाः नादेयाः ज्वलन्त्यः[5] शोधयित्र्यः ॥ २ ॥

यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।
मधुश्चुतः शुचयो याः पावकास्ता आपो देवीरिह मामवन्तु ॥ ३ ॥

यासाम् । राजा । वरुणः । याति । मध्ये । सत्यानृते इति । अवऽपश्यन् । जनानाम् ।
मधुऽश्चुतः । शुचयः । याः । पावकाः । ताः । आपः । देवीः । इह । माम् । अवन्तु ॥ ३ ॥

**वेङ्कट०** निगदसिद्धा ॥ ३ ॥

यासु राजा वरुणो यासु सोमो विश्वे देवा यासूर्जं मदन्ति ।
वैश्वानरो यास्वग्निः प्रविष्टस्ता आपो देवीरिह मामवन्तु ॥ ४ ॥

यासु । राजा । वरुणः । यासु । सोमः । विश्वे । देवाः । यासु । ऊर्जम् । मदन्ति ।
वैश्वानरः । यासु । अग्निः । प्रऽविष्टः । ताः । आपः । देवीः । इह । माम् । अवन्तु ॥ ४ ॥

**वेङ्कट०** यासु राजा वरुणः यासु च सोमः विश्वे एव च देवाः [6]स्थिताः यासु ऊर्जम्[6] प्रति माद्यन्ति। वैश्वानरः यासु अग्निः प्रविष्टः ॥ ४ ॥

[7]इति पञ्चमाष्टके चतुर्थाध्याये षोडशो वर्गः[7] ॥

[ ५० ]

[7]वसिष्ठो मैत्रावरुणिर्ऋषिः। मित्रावरुणौ देवता, द्वितीयस्या अग्निः, तृतीयस्या विश्वे देवाः, चतुर्थ्या नद्यः। जगती छन्दः, चतुर्थी अतिजगती शक्करी वा[7] ।

आ मां मित्रावरुणेह रक्षतं कुलाययद् विश्वयन्मा न आ गन् ।
अजकावं दुर्दृशीकं तिरो दधे मा मां पद्येन रपसा विदत् त्सरुः ॥ १ ॥

आ । माम् । मित्रावरुणा । इह । रक्षतम् । कुलाययत् । विऽश्वयत् । मा । नः । आ । गन् ।
अजकाऽवम् । दुःऽदृशीकम् । तिरः । दधे । मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥१॥

**वेङ्कट०** आभिमुख्येन माम् इह हे मित्रावरुणौ![8] रक्षतम्[9]। कुलायं[10] [11]कुर्वत् विविधं[11] वर्धमानं विविधं वा भषमाणं[12] भूतम्[13] मा अस्मान् आ गच्छत्विति श्वाभिप्रायम्। [14]श्वा हि भूम्यां कुलायं[14] करोति। अजकावम् अजशब्दयुक्तं दुर्दर्शनं[15] तिरः भवतु। मा माम् पद भवेन[16] शब्देन जानातु छद्मगतिश्चेति ॥१॥

---

१. आन्त° वि[2]. २. कुप्याः वि[2] ल; आप्याः लभ. ३. यास्तु अयज्ञाज्जाता ल लभ; या स्वयज्ञं नज्ञाता वि[2] अ[1]. ४. नास्ति मूको. ५. नादेयों मूको. ६-६. स्थितामूर्जे वि[2] अ[1]; °ताः यामु ऊर्जम् क; ताः यामु उव्जम् लभ. ७-७. नास्ति मूको. ८. °रुणे मूको. ९. रक्षितम् मूको. १०. कुलाय मूको. ११-११. कुर्वन्त्विदं वि[2]; कुर्वत्विदं अ[1]. १२. भाष° मूको. १३. विषम् इति सायणः. १४-१४. श्वाभिभूम्यां कुलानां मूको; श्वाधि भू° वा श्वापि भू° वा ल प्रस्तावः. १५. दर्शयन् मूको. १६. भवने मूको.

यद् विजामन् परुषि वन्दनं भुवदष्ठीवन्तौ परि कुल्फौ च देहत् ।
अग्निष्टच्छोचन्नप बाधतामितो मा मां पद्येन रपसा विदत् त्सरुः ॥ २ ॥

यत् । विऽजामन् । परुषि । वन्दनम् । भुवत् । अष्ठीवन्तौ । परि । कुल्फौ । च । देहत् ।
अग्निः । तत् । शोचन् । अप । बाधताम् । इतः । मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥ २ ॥

**वेङ्कट०** यद् विविधजन्मनि सन्धौ भवति वन्दननामकं[1] विषमविषम्, अष्ठीवन्तौ गुल्फौ च परितः उपचितं करोति, अग्निः तत् विषं ज्वलन् अप बाधताम् इतः ॥ २ ॥

यच्छल्मलौ भवति यन्नदीषु यदोषधीभ्यः परि जायते विषम् ।
विश्वे देवा निरितस्तत् सुवन्तु मा मां पद्येन रपसा विदत् त्सरुः ॥ ३ ॥

यत् । शल्मलौ । भवति । यत् । नदीषु । यत् । ओषधीभ्यः । परि । जायते । विषम् ।
विश्वे । देवाः । निः । इतः । तत् । सुवन्तु । मा । माम् । पद्येन । रपसा । विदत् । त्सरुः ॥३॥

**वेङ्कट०** निगदसिद्धा ॥ ३ ॥

याः प्रवतो निवत उद्वत उदन्वतीरनुदकाश्च याः ।
ता अस्मभ्यं पयसा पिन्वमानाः शिवा देवीरशिपदा भवन्तु सर्वा नद्यो अशिमिदा भवन्तु ।४।

याः । प्रऽवतः । निऽवतः । उत्ऽवतः । उदनऽवतीः । अनुदकाः । च । याः । ताः । अस्मभ्यम् ।
पयसा । पिन्वमानाः । शिवाः । देवीः । अशिपदाः । भवन्तु । सर्वाः । नद्यः । अशिमिदाः । भवन्तु ॥४॥

**वेङ्कट०** याः नद्यः विस्तारवत्यः विस्तृतेन देशेन गच्छन्त्यः, याश्च निवतः, याश्च उद्वत्यः, याश्च उदन्वत्यः, अनुदकाः च याः, ताः[2] अस्मभ्यम् पयसा[3] वर्धमानाः शिवाः देव्यः अशिपदाः अन्नस्य स्थानभूताः भवन्तु, ताः सर्वाः नद्यः अशिमिदाः अन्नस्य वर्धयित्र्यः भवन्तु ॥ ४ ॥

[4]इति पञ्चमाष्टके चतुर्थाध्याये सप्तदशो वर्गः[4] ॥

[ ५१ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । आदित्या देवता । त्रिष्टुप् छन्दः[4] ।

आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शंतमेन ।
अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः ॥ १ ॥

आदित्यानाम् । अवसा । नूतनेन । सक्षीमहि । शर्मणा । शम्ऽतमेन ।
अनागाःऽत्वे । अदितिऽत्वे । तुरासः । इमम् । यज्ञम् । दधतु । श्रोषमाणाः ॥ १ ॥

---

१. °नं नाम° मूको. २. नास्ति वि°. ३. वयसा मूको. ४-४. नास्ति मूको.

वेङ्कट० आदित्यानाम् रक्षणेन नवतरेण[1] सङ्गता भवेम [2]सुखे च[2] [3]सुखतमे अपि । अपापत्वे[3] अखण्डत्वे च क्षिप्राः इमम् यज्ञम् स्थापयन्तु यज्ञम् अपापम् अखण्डितं च कुर्वन्तु स्तुतीः शृण्वन्तः ॥ १ ॥

आदित्यासो अदितिर्मादयन्तां मित्रो अर्यमा वरुणो रजिष्ठाः ।
अस्माकं सन्तु भुवनस्य गोपाः पिबन्तु सोममवसे नो अद्य ॥ २ ॥

आदित्यासः । अदितिः । मादयन्ताम् । मित्रः । अर्यमा । वरुणः । रजिष्ठाः ।
अस्माकम् । सन्तु । भुवनस्य । गोपाः । पिबन्तु । सोमम् । अवसे । नः । अद्य ॥ २ ॥

वेङ्कट० आदित्याः अदितिः च माता माद्यन्तु[4] मित्रः अर्यमा च वरुणः च अत्यन्तमृजवः । अस्माकम् भवन्तु भुवनस्य[5] गोपायितारः[6] । पिबन्तु सोमम् रक्षणाय अस्माकम् अद्य ॥ २ ॥

आदित्या विश्वे मरुतश्च विश्वे देवाश्च विश्वे ऋभवश्च विश्वे ।
इन्द्रो अग्निरश्विना तुष्टुवाना यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

आदित्याः । विश्वे । मरुतः । च । विश्वे । देवाः । च । विश्वे । ऋभवः । च । विश्वे ।
इन्द्रः । अग्निः । अश्विना । तुस्तुवानाः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥

वेङ्कट० एते सर्वे स्तूयमाना भवन्त्वस्माभिरिति ॥ ३ ॥

[7]इति पञ्चमाष्टके चतुर्थाध्याये अष्टादशो वर्गः[7] ॥

[ ५२ ]

[7]वसिष्ठो मैत्रावरुणिर्ऋषिः । आदित्या देवता । त्रिष्टुप् छन्दः[7] ।

आदित्यासो अदितयः स्याम पूर्देवत्रा वसवो मर्त्यत्रा ।
सनेम मित्रावरुणा सनन्तो भवेम द्यावापृथिवी भवन्तः ॥ १ ॥

आदित्यासः । अदितयः । स्याम । पूः । देवऽत्रा । वसवः । मर्त्यऽत्रा ।
सनेम । मित्रावरुणा । सनन्तः । भवेम । द्यावापृथिवी इति । भवन्तः ॥ १ ॥

वेङ्कट० आदित्यानां [8]स्वभूतावयवाः अखण्डनीयाः[8] भवेम । हे वसवः! अस्माकं देवेषु मर्त्येषु च निवासस्थानं भवतु । हे मित्रावरुणौ! भजेमहि धनम् भजमानाः अप्युपर्युपरि तथा भवेम, द्यावापृथिवी! भवन्तः अप्युपर्युपरि प्रजाभिः पशुभिरन्यैश्चाभिलषितैः ॥ १ ॥

मित्रस्तन्नो वरुणो मामहन्त शर्म तोकाय तनयाय गोपाः ।
मा वो भुजेमान्यजातमेनो मा तत् कर्म वसवो यच्चयध्वे ॥ २ ॥

---

१. नवतित° मूको. २-२. सुखेन ल प्रस्तावः. ३-३. °मेऽन्त्यपाप° वि[2] अ[1]; अपाप° ल लअ.
४. नास्ति वि[2] अ[1]; न्तु ल लअ. ५. भवनस्य अ[1] ल. ६. गोपयि° ल. ७-७. नास्ति मूको.
८-८. °तावयव मण्डनी° मूको.

मित्रः । तत् । नः । वरुणः । ममहन्त । शर्म । तोकाय । तनयाय । गोपाः ।
मा । वः । भुजेम । अन्यऽजातम् । एनः । मा । तत् । कर्म । वसवः । यत् । चयध्वे ॥ २ ॥

**वेङ्कट०** मित्रः तत् अस्मभ्यम् वरुणः अन्ये च आदित्याः प्रयच्छन्तु सुखं पुत्राय पौत्राय च गोपायितारः[1] । युष्माकम् अन्येषु [2]जातम् एनः[2] यद् यूयम् अन्येषु जनयथ तद् वयम् मा भुजेम । भोगः[3] प्राप्तिः । मा च तत् कुर्मः वसवः!, यत् यूयम् चयध्वे हृदये स्थापयत ॥ २ ॥

तुरण्यवोऽङ्गिरसो नक्षन्त रत्नं देवस्य सवितुरियानाः ।
पिता च तन्नो महान् यजत्रो विश्वे देवाः समनसो जुषन्त ॥ ३ ॥

तुरण्यवः । अङ्गिरसः । नक्षन्त । रत्नम् । देवस्य । सवितुः । इयानाः ।
पिता । च । तत् । नः । महान् । यजत्रः । विश्वे । देवाः । सऽमनसः । जुषन्त ॥ ३ ॥

**वेङ्कट०** त्वरमाणाः अङ्गिरसः प्राप्नुवन् रत्नम् देवस्य सवितुः याचमानाः । पिता च तत् अस्माकं वरुणः महान् यष्टव्यः विश्वे च देवाः सङ्गताः प्रायच्छन्, 'अङ्गिरसः आदित्यान् अयाजयन्[4], तेभ्य आदित्या दक्षिणामनयन्'[5] ( तु. माश ३,५,१,१७;१८; ऐब्रा ६,३५ प्रभृ. )। तामङ्गिरोभ्यः[6] सविता प्रायच्छत्' । तदिदमत्रोक्तमिति ॥३॥

[7]इति पञ्चमाष्टके चतुर्थाध्याये एकोनविंशो वर्गः[7] ॥

## [ ५३ ]

[7]वसिष्ठो मैत्रावरुणिर्ऋषिः । द्यावापृथिवी देवता । त्रिष्टुप् छन्दः[7] ।

प्र द्यावा यज्ञैः पृथिवी नमोभिः सबाध ईळे बृहती यजत्रे ।
ते चिद्धि पूर्वे कवयो गृणन्तः पुरो मही दधिरे देवपुत्रे ॥ १ ॥

प्र । द्यावा । यज्ञैः । पृथिवी इति । नमःऽभिः । सऽबाधः । ईळे । बृहती इति । यजत्रे इति ।
ते इति । चित् । हि । पूर्वे । कवयः । गृणन्तः । पुरः । मही इति । दधिरे । देवपुत्रे इति देवऽपुत्रे ॥

**वेङ्कट०** प्रकर्षेण स्तौमि द्यावापृथिव्यौ यज्ञैः नमस्कारैश्च बाधया[8] सहितः महत्यौ[9] यष्टव्ये । ते[10] चित् हि पूर्वे कवयः गृणन्तः पुरः दधिरे महत्यौ ययोर्देवाः पुत्राः ॥ १ ॥

प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य ।
आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथम् ॥ २ ॥

---

१. गोप° लभ. २-२. जायमानां वि[2]; जायमाना अ[1]; जातं एना ल लभ. ३. भोगं मूको.
४. अजायम मूको. ५. °णामानयन् माश. ६. °ङ्गिरोयः मूको. ७-७. नास्ति मूको. ८. बाधाय मूको.
९. नास्ति वि[2]. १०. ति मूको.

प्र । पूर्वजे इति पूर्वऽजे । पितरा । नव्यसीभिः । गीःऽभिः । कृणुध्वम् । सदने इति । ऋतस्य ।
आ । नः । द्यावापृथिवी इति । दैव्येन । जनेन । यातम् । महि । वाम् । वरूथम् ॥ २ ॥

**वेङ्कट०** प्र कृणुध्वम् पूर्वजे[1] पितरौ[2] नवतराभिः स्तुतिभिः यज्ञस्य आधारभूते । आ यातम् अस्मान् हे द्यावापृथिव्यौ! दैव्येन जनेन सह । महद्धि युवयोः वरणीयं धनम् ॥ २ ॥

उतो हि वां रत्नधेयानि सन्ति पुरूणि द्यावापृथिवी सुदासे ।
अस्मे धत्तं यदसदस्कृधोयु यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

उतो इति । हि । वाम् । रत्नऽधेयानि । सन्ति । पुरूणि । द्यावापृथिवी इति । सुऽदासे ।
अस्मे इति । धत्तम् । यत् । असत् । अस्कृधोयु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥३॥

**वेङ्कट०** अपि च युवयोः धनदानानि[3] विद्यन्ते बहूनि हे द्यावापृथिव्यौ! सुदासे पैजवनाय राज्ञे[4] । अस्मभ्यं च धत्तम् तत्, यत् [5]अनल्पं भवेत्[5] ॥ ३ ॥

[5]इति पञ्चमाष्टके चतुर्थाध्याये विंशो वर्गः[5] ॥

[ ५४ ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः । वास्तोष्पतिर्देवता । त्रिष्टुप् छन्दः[5] ।

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः ।
यत् त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ १ ॥

वास्तोः । पते । प्रति । जानीहि । अस्मान् । सुऽआवेशः । अनमीवः । भव । नः ।
यत् । त्वा । ईमहे । प्रति । तत् । नः । जुषस्व । शम् । नः । भव । द्विऽपदे । शम् । चतुःऽपदे ॥

**वेङ्कट०** [6]हे वास्तोः पते![6] यत् त्वां याचामहे तत् अस्मभ्यं प्रयच्छ[7] । शङ्करः भव अस्माकम् द्विपदे चतुष्पदे च ॥ १ ॥

वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो ।
अजरासस्ते सख्ये स्याम पितेव पुत्रान् प्रति नो जुषस्व ॥ २ ॥

वास्तोः । पते । प्रऽतरणः । नः । एधि । गयऽस्फानः । गोभिः । अश्वेभिः । इन्दो इति ।
अजरासः । ते । सख्ये । स्याम । पिताऽइव । पुत्रान् । प्रति । नः । जुषस्व ॥ २ ॥

---

१. °जे बा वि[2] अ[1] ल; °जे ··· लअ.　२. पित्र्यो मूको.　३. °दानादि मूको.　४. राज्ञो ल वि[2].
५-५. नास्ति मूको.　६-६. ··· मूको.　७. प्रतिय° वि[2] अ[1].

**वेङ्कट०** वास्तोः पते! प्रणेता[1] भव अस्माकं गृहाणां वर्धयिता गोभिः अश्वैश्च इन्दो!। अजरासः[2] इति स्पष्टम् ॥ २ ॥

वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या ।
पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥ ३ ॥

वास्तोः । पते । शग्मया । सम्ऽसदा । ते । सक्षीमहि । रण्वया । गातुऽमत्या ।
पाहि । क्षेमे । उत । योगे । वरम् । नः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ३ ॥

**वेङ्कट०** वास्तोः पते! सुखकरेण [3]तव उपसदनेन[3] रमणीयेन गतिमता संसक्ता भवेम। रक्ष अस्मान् योगक्षेमयोः कल्याणम् ॥ ३ ॥

[4]इति पञ्चमाष्टके चतुर्थाध्याये एकविंशो वर्गः[4] ॥

[ ५५ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । प्रथमाया वास्तोष्पतिर्देवता, शिष्टानामिन्द्रः । आद्याया गायत्री छन्दः, द्वितीयादिचतुर्थ्यन्ता उपरिष्टाद् बृहत्यः, पञ्चम्याद्यष्टम्यन्ता अनुष्टुभः[4] ।

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् । सखा सुशेव एधि नः ॥ १ ॥[5]

अमीवऽहा । वास्तोः । पते । विश्वा । रूपाणि । आऽविशन् । सखा । सुऽशेवः । एधि । नः ॥ १ ॥

**वेङ्कट०** रक्षोहा वास्तोः पते! विश्वानि रूपाणि आविशन् सखा सुसुखः भव अस्माकम् ॥ १ ॥

यदर्जुन सारमेय दतः पिशङ्ग यच्छसे ।
वीव भ्राजन्त ऋष्टय उप स्रक्वेषु बप्सतो नि षु स्वप ॥ २ ॥

यत् । अर्जुन । सारमेय । दतः । पिशङ्ग । यच्छसे ।
विऽइव । भ्राजन्ते । ऋष्टयः । उप । स्रक्वेषु । बप्सतः । नि । सु । स्वप ॥ २ ॥

**वेङ्कट०** यदा त्वम् अर्जुनवर्ण! सारमेय! पिशङ्गवर्ण! दन्तान् यच्छसि विवृतान् करोषि, तदानीं वि भ्राजन्ते इव '[6]तत्र ऋष्टयः[6]' ऋष्टिसदृशा[7] भवन्ति दन्ताः सृक्वयोः उप बप्सतः लेलिहानस्य । स त्वं सुष्ठु नि स्वापय ।

शौनकः— वरुणस्य गृहान् रात्रौ वसिष्ठः[8] '[9]स्वप्न आचरत्[9]' ।
प्रविवेशाथ तं[10] तत्र श्वा [11]नदन् अभ्यधावत[11] ॥

---

१. प्रनेता अ[1] लअ. २. ईश्वरासः मूको. ३. तप उवस° मूको. ४-४. नास्ति मूको. ५. यास्केन व्याख्याता ( १०,१७ ). ६-६. तत्रष्टयः ल लअ; तत्र य वि[2] अ[1]. ७. इष्टि° वि[2] अ[1]. ८. वसिष्ठाः मूको. ९-९. स्वप्नमाचरन् मूको. १०. तान् वि[2] अ[1]; तां ल लअ. ११-११. नेदन्नभ्यभाषत मूको.

क्रन्दन्तं सारमेयं तं धावन्तं दष्टुमुद्यतम्[1]।
'यदर्जुने(न'[2] इ)ति च द्वाभ्यां [3]सान्त्वयित्वा न्यसूषुपत्[3] ॥
[4]स तं प्रस्वापयामास[4] जनमन्यं च वारुणम् ।
ततस्तु वरुणो राजा [5]स्वैः पाशैः प्रत्यबध्यत[5] ॥
[6]बद्धः स वारुणैः पाशैर् 'ध्रुवासु त्वे(त्वा'† इ)ति दृश्यते[6]।
स बद्धः[7] पितरं सूक्तैश्चतुर्भिरथ उत्तरैः ॥
अभितुष्टाव 'धीरे(रा'[8] इ)ति मुमोचैनं ततः पिता'
( बृदे ६, ११-१५ )। इति ॥ २ ॥

स्तेनं राय सारमेय तस्करं वा पुनःसर ।
स्तोतॄनिन्द्रस्य रायसि किमस्मान् दुच्छुनायसे नि षु स्वप ॥ ३ ॥

स्तेनम् । राय । सारमेय । तस्करम् । वा । पुनःऽसर ।
स्तोतॄन् । इन्द्रस्य । रायसि । किम् । अस्मान् । दुच्छुनऽयसे । नि । सु । स्वप ॥ ३ ॥

**वेङ्कट०** स्तेनम् प्रति सम्भष' सारमेय। तस्करम् वा । पुनः तत् प्रति [10]सरतीति पुनःसरः[10]। [11]तस्कर-स्तेनयोरल्पो[11] भेदः । स्तोतॄन् इन्द्रस्य अस्मान् भषसि[12]। तच्चायुक्तमिति वदति — किम् अस्मान् बाधसे ॥ ३ ॥

त्वं सूकरस्य दर्दृहि तव दर्दर्तु सूकरः ।
स्तोतॄनिन्द्रस्य रायसि किमस्मान् दुच्छुनायसे नि षु स्वप ॥ ४ ॥

त्वम् । सूकरस्य । दर्दृहि । तव । दर्दर्तु । सूकरः ।
स्तोतॄन् । इन्द्रस्य । रायसि । किम् । अस्मान् । दुच्छुनऽयसे । नि । सु । स्वप ॥ ४ ॥

**वेङ्कट०** जहि सूकरम् । त्वाम् सूकरः हन्तु । स्तोतॄन् इन्द्रस्य अहिंसकान् तव किम् अस्मान् बाधस इति ॥४॥

सस्तु माता सस्तु पिता सस्तु श्वा सस्तु विश्पतिः ।
ससन्तु सर्वे ज्ञातयः सस्त्वयमभितो जनः ॥ ५ ॥

सस्तु । माता । सस्तु । पिता । सस्तु । श्वा । सस्तु । विश्पतिः ।
ससन्तु । सर्वे । ज्ञातयः । सस्तु । अयम् । अभितः । जनः ॥ ५ ॥

**वेङ्कट०** सर्वो जनः स्वपित्विति यथाकाममात्मनः प्रवेशार्थं प्रस्वापयति ॥ ५ ॥

---

१. द्रष्टु° मूको. २. ऋ ७,५५,२-३. ३-३. सां च पीत्वा न्यवुष्टुवत् मूको. ४-४. एवं प्रस्थाप° मूको. ५-५. स्वांन् पाशान् प्रत्यमुञ्चत मूको. ६-६. नास्ति बृदे. † ऋ ७,८८,७. ७. बुध्वा मूको. ८. ऋ ७,८६-८९. ९. नास्ति वि[1] अ[1]. १०-१०. प्रति सर मूको. ११-११. स्तेन° वि[2]; तस्तेन° अ[1]; तस्तरस्तेन° लअ. १२. भवसि वि[1] अ[1].

य आस्ते यश्च चरति यश्च पश्यति नो जनः ।
तेषां सं हन्मो अक्षाणि यथेदं हर्म्यं तथा ॥ ६ ॥

यः । आस्ते । यः । च । चरति । यः । च । पश्यति । नः । जनः ।
तेषाम् । सम् । हन्मः । अक्षाणि । यथा । इदम् । हर्म्यम् । तथा ॥ ६ ॥

**वेङ्कट०** तेषाम्[1] सर्वेषाम् अक्षाणि सम् हन्मः । संहननं[2] सर्वेषां हिंसनं दण्डादिना मथनम् । तथा कृते यथा इदम् हर्म्यम् [3]अविचलत् तिष्ठति[3] तथा[4] सर्वः जनः अविचलस्तिष्ठतु[5] सुप्तः ॥ ६ ॥

सहस्रशृङ्गो वृषभो यः समुद्रादुदाचरत् ।
तेना सहस्येना वयं नि जनान्त्स्वापयामसि ॥ ७ ॥

सहस्रऽशृङ्गः । वृषभः । यः । समुद्रात् । उत्ऽआचरत् ।
तेन । सहस्येन । वयम् । नि । जनान् । स्वापयामसि ॥ ७ ॥

**वेङ्कट०** सहस्रतेजाः वर्षिता यः अयम् समुद्रात् उत्तिष्ठति तेन अभिभवनकुशलेन नि स्वापयामः वयम् इमान् जनान्[6] इति ॥ ७ ॥

प्रोष्ठेशया वह्येशया नारीर्यास्तल्पशीवरीः ।
स्त्रियो याः पुण्यगन्धास्ताः सर्वाः स्वापयामसि ॥ ८ ॥

प्रोष्ठेऽशयाः । वह्येऽशयाः । नारीः । याः । तल्पऽशीवरीः ।
स्त्रियः । याः । पुण्यऽगन्धाः । ताः । सर्वाः । स्वापयामसि ॥ ८ ॥

**वेङ्कट०** खट्वाशयाः वह्येशयाः[7] । वह्यं शिबिकादि । याः च नार्यः तल्पशायिन्यः, स्त्रियः याः च पुण्यगन्धाः, ताः सर्वाः प्रस्वापयामः ॥ ८ ॥

[8]इति पञ्चमाष्टके चतुर्थाध्याये द्वाविंशो वर्गः[8] ॥

[ ५६ ]

[8]वसिष्ठो मैत्रावरुणिर्ऋषिः । मरुतो देवता । त्रिष्टुप् छन्दः, आद्या एकादश द्विपदा विराजः[8] ।

क ईं व्यक्ता नरः सनीळा रुद्रस्य मर्या अधा स्वश्वाः ॥ १ ॥

के । ईम् । विऽअक्ताः । नरः । सऽनीळाः । रुद्रस्य । मर्याः । अध । सुऽअश्वाः ॥ १ ॥

**वेङ्कट०** के इमे व्यक्ताः भवन्ति मनुष्याः सरथाः रुद्रस्य पुत्राः अपि च स्वश्वाः इति मरुतो दृष्ट्वा विस्मितो वदति ॥ १ ॥

---

१. एषां वि[2] अ[1]; येषां लअ. २. सहन° ल लअ. ३-३. अपिचलत्तिष्ठतु इति वि[2] अ[1]. ४. यथा वि[2] अ[1]. ५. चलंस्ति° वि[2] अ[1]. ६. नास्ति अ[1] वि[2]. ७. नास्ति वि[2]. ८-८. नास्ति मूको.

नकि॒र्ह्ये॑षां ज॒नूंषि॒ वेद॒ ते अ॒ङ्ग वि॒द्रे मि॒थो ज॒नित्र॑म् ॥ २ ॥

नकिः॑ । हि । ए॒षा॒म् । ज॒नूंषि॑ । वेद॑ । ते । अ॒ङ्ग । वि॒द्रे । मि॒थः । ज॒नित्र॑म् ॥ २ ॥

**वेङ्कट०** न कश्चित् हि एषाम् जन्मानि वेत्ति । ते एव परस्परस्य जन्मभूमीः जानन्ति ॥ २ ॥

अ॒भि स्व॒पूभि॑र्मि॒थो व॑पन्त॒ वात॑स्वनसः श्ये॒ना अ॑स्पृध्रन् ॥ ३ ॥

अ॒भि । स्व॒ऽपूभिः॑ । मि॒थः । व॒प॒न्त॒ । वात॑ऽस्वनसः । श्ये॒नाः । अ॒स्पृ॒ध्र॒न् ॥ ३ ॥

**वेङ्कट०** स्वभूतैरुदकैः परस्परं सर्वे एव पृथिव्याम् अभिवपनं[1] कुर्वन्ति [2]वपन्ति उदकानि[2]। निर्गच्छत्स्वनाः[3] गमनशीलाः स्पर्धन्ते निबिडा भवन्ति ॥ ३ ॥

ए॒ता॒नि॒ धीरो॑ नि॒ण्या चि॑केत॒ पृश्नि॒र्यदूधो॑ म॒ही ज॒भार॑ ॥ ४ ॥

ए॒तानि॑ । धीरः॑ । नि॒ण्या । चि॒के॒त॒ । पृश्निः॑ । यत् । ऊधः॑ । म॒ही । ज॒भार॑ ॥ ४ ॥

**वेङ्कट०** एतानि भूतानि प्राज्ञः[4] अन्तर्हितानि जानाति[5], पृश्निः महती यानि आत्मीय ऊधसि जभार[6]। 'पृश्निये वै पयसो मरुतो जाताः' ( तै २,२,११,४ ) इति ब्राह्मणम् ॥ ४ ॥

सा विट् सु॒वीरा॑ म॒रुद्भि॑रस्तु स॒नात् सह॑न्ती॒ पुष्य॑न्ती नृ॒म्णम् ॥ ५ ॥

सा । विट् । सु॒ऽवीरा॑ । म॒रुत्ऽभिः॑ । अ॒स्तु॒ । स॒नात् । सह॑न्ती । पुष्य॑न्ती । नृ॒म्णम् ॥ ५ ॥

**वेङ्कट०** सा विट् सुप्रजा मरुद्भिः भवतु चिरम् अभिभवन्ती[7] शत्रून् पुष्यन्ती[8] च[9] धनम्। याऽपि[10] वैतानि[11] निण्यानि[12] वेदेति ॥ ५ ॥

याम॒न् येष्ठाः॑ शु॒भा शोभि॑ष्ठाः श्रि॒या संमि॑श्ला॒ ओजो॑भिरु॒ग्राः ॥ ६ ॥

याम॑न् । येष्ठाः॑ । शु॒भा । शोभि॑ष्ठाः । श्रि॒या । सम्ऽमि॑श्लाः । ओजः॑ऽभिः । उ॒ग्राः ॥ ६ ॥

**वेङ्कट०** नियातव्यम् अत्यन्तं यान्तः उदकेन अत्यन्तं शोभितारः अलङ्कारैर्वा शोभमानाः[13] श्रिया सङ्गताः[14] बलैः उद्गूर्णाः ॥ ६ ॥

उ॒ग्रं व॒ ओजः॑ स्थि॒रा शवां॒स्यधा॑ म॒रुद्भि॑र्ग॒णस्तुवि॑ष्मान् ॥ ७ ॥

---

१. °भिवचनं° मूको. २-२. पपन्ति उदकान् वि[2] ल लभ; बपन्ति उदकान् अ[1]. ३. °च्छन्स्व° मूको. ४. प्राज्ञे मूको. ५. °नन्ति ल लभ अ[1]; जानन्ती वि[2]. ६. जहार मूको. ७. °भवन्तु वि[2] ल लभ; °भवन्ति अ[1]. ८. °ष्यन्ति मूको. ९. चेत् मूको. १०. यावि मूको. ११. वेतानि वि[2] ल; पेतानि अ[1] लभ. १२. नित्यानि वि[2]; निग्यानि ल लभ. १३. °भमान मूको. १४. °ङ्गतैर्व° वि[2] अ[1].

उग्रम् । वः । ओजः । स्थिरा । शवांसि । अध । मरुत्ऽभिः । गणः । तुविष्मान् ॥ ७ ॥

**वेङ्कट०** उग्रम् युष्माकम् ओजः । स्थिराणि च बलानि । अपि च सोऽयम् मरुद्भिः आरब्धः[1] सङ्घः[2] वृद्धिमान् ॥ ७ ॥

शुभ्रो वः शुष्मः क्रुध्मी मनांसि धुनिर्मुनिरिव शर्धस्य धृष्णोः ॥ ८ ॥

शुभ्रः । वः । शुष्मः । क्रुध्मी । मनांसि । धुनिः । मुनिःऽइव । शर्धस्य । धृष्णोः ॥ ८ ॥

**वेङ्कट०** शोभनशीलः युष्माकम् शुष्मः क्रोधनशीलानि मनांसि । कम्पयिता मरुद्गणः, मुनिः इव वेगस्य शारीरस्य[4], धृष्णोः[5] ध्रुवस्य स्थावरादेः । यथा मुनिरुत्थितं वेगमुन्मूलयति तद्वद् वृक्षादीनिति ॥ ८ ॥

सनेम्यस्मद् युयोत दिद्युं मा वो दुर्मतिरिह प्रणङ् नः ॥ ९ ॥

सनेमि । अस्मत् । युयोत । दिद्युम् । मा । वः । दुःऽमतिः । इह । प्रणक् । नः ॥ ९ ॥

**वेङ्कट०** पुराणं भवताम् आयुधम् अस्मत्तः पृथक् कुरुत । मा वः युष्माकम् दुर्मतिः इह अस्मान् प्रणक्[6] ॥ ९ ॥

प्रिया वो नाम हुवे तुराणामा यत् तृपन्मरुतो वावशानाः ॥ १० ॥

प्रिया । वः । नाम । हुवे । तुराणाम् । आ । यत् । तृपत् । मरुतः । वावशानाः ॥ १० ॥

**वेङ्कट०** त्वरमाणानां युष्माकं [7]प्रियम् नाम[7] ह्वयामि हे मरुतः ! यत् नाम[8] कामयमानाः प्रजाः आभिमुख्येन तर्पयति ॥ १० ॥

[9]इति पञ्चमाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः[9] ॥

स्वायुधास इष्मिणः सुनिष्का उत स्वयं तन्वः शुम्भमानाः ॥ ११ ॥

सुऽआयुधासः । इष्मिणः । सुऽनिष्काः । उत । स्वयम् । तन्वः । शुम्भमानाः ॥ ११ ॥

**वेङ्कट०** स्वायुधाः एषणशीलाः शोभनाभरणाः[10], अपि च स्वयम् एव अङ्गानि शोभमानाः[11] भवन्ति मरुत आभरणैः ॥ ११ ॥

शुची वो हव्या मरुतः शुचीनां शुचिं हिनोम्यध्वरं शुचिभ्यः ।
ऋतेन सत्यमृतसाप आयञ्छुचिजन्मानः शुचयः पावकाः ॥ १२ ॥

---

१. नास्ति वि[2] अ[1]; °रव्यः ल लभ; °रव्य वि[1] अ. २. सङ्घा वि[2] अ[1]; सङ्घा वा ल लभ. ३. मनांसि मनांसि ल वि[2]. ४. शरी° वि[2] अ[1]. ५. नास्ति वि[2] अ[1]. ६. प्रणक्तुः वि[2]; °णकुः अ[1] लभ; °णक्तुः ल लभ. ७-७. प्रियमाणा वि[2] अ[1]; प्रियमाणाम् ल लभ. ८. नामानः वि[2] अ[1]; मान ल लभ. ९-९. नास्ति मूको. १०. °नहर° वि[2]; °नगर° अ[1] ल लभ. ११. शोभनाः मूको.

शुची । वः । हव्या । मरुतः । शुचीनाम् । शुचिम् । हिनोमि । अध्वरम् । शुचिऽभ्यः ।
ऋतेन । सत्यम् । ऋतऽसापः । आयन् । शुचिऽजन्मानः । शुचयः । पावकाः ॥ १२ ॥

**वेङ्कट०** शुचीनि युष्माकं हव्यानि हे मरुतः! । शुचीनाम् शुचिम् प्रेरयामि यज्ञम्[1] शुचिभ्यः भवद्भ्यः। सत्येनैव सत्यम् सत्यस्पृशः मरुतः आयन् शुचिजन्मानः शुचयः शोधकाः ॥ १२ ॥

**अंसेष्वा मरुतः खादयो वो वक्षःसु रुक्मा उपशिश्रियाणाः ।**
**वि विद्युतो न वृष्टिभी रुचाना अनु स्वधामायुधैर्यच्छमानाः ॥ १३ ॥**

अंसेषु । आ । मरुतः । खादयः । वः । वक्षःऽसु । रुक्माः । उपऽशिश्रियाणाः ।
वि । विऽद्युतः । न । वृष्टिऽभिः । रुचानाः । अनु । स्वधाम् । आयुधैः । यच्छमानाः ॥ १३॥

**वेङ्कट०** हे मरुतः! युष्माकम् अंसेषु खादयः भवन्ति। वक्षस्सु च रुक्माः उपश्रीयमाणाः भवन्ति। विद्युत इव वृष्टिभिः वि रोचमानाः मरुतो भवन्त्यलङ्कृताः । ते स्वधाम् उदकम् आयुधैः अनु नियच्छन्ति ॥ १३ ॥

**प्र बुध्न्या व ईरते महांसि प्र नामानि प्रयज्यवस्तिरध्वम् ।**
**सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम् ॥ १४ ॥**

प्र । बुध्न्या । वः । ईरते । महांसि । प्र । नामानि । प्रऽयज्यवः । तिरध्वम् ।
सहस्रियम् । दम्यम् । भागम् । एतम् । गृहऽमेधीयम् । मरुतः । जुषध्वम् ॥ १४ ॥

**वेङ्कट०** प्रेरयन्ति अन्तरिक्षभवानि भवतां बलानि। ते यूयं हे प्रकर्षेण यष्टव्याः! उदकानि वर्धयत[2]। सहस्रसम्मितम् गृहभवम् भागम् एतम् गृहमेधीयाख्यम् जुषध्वम् मरुतः! ॥ १४ ॥

**यदि स्तुतस्य मरुतो अधीथेत्था विप्रस्य वाजिनो हवीमन् ।**
**मक्षू रायः सुवीर्यस्य दात नू चिद् यमन्य आदभदरावा ॥ १५ ॥**

यदि । स्तुतस्य । मरुतः । अधिऽइथ । इत्था । विप्रस्य । वाजिनः । हवीमन् ।
मक्षु । रायः । सुऽवीर्यस्य । दात । नु । चित् । यम् । अन्यः । आऽदभत् । अरावा ॥ १५ ॥

**वेङ्कट०** यदि स्तुतं हे मरुतः! जानीथ, इत्थं मेधाविनः हविष्मतः आह्वाने शीघ्रं धनं सुवीर्यं दत्त क्षिप्रम्, यम् रयिम् अन्यः [3]आदभत् अदाता[3]। अरातीनां[4] धनमाहृत्यास्मभ्यं दत्तेत्यर्थो भवति ॥ १५ ॥

[5]इति पञ्चमाष्टके चतुर्थाध्याये चतुर्विंशो वर्गः[5] ॥

---

१. °ज्ञमशु° मूको.　२. °यन्तः मूको.　३. आरणशुदात वि[2] अ[1].　४. अरावणीनां मूको, ५-५. नास्ति मूको.

अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः ।
ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीळिनः पयोधाः ॥ १६ ॥

अत्यासः । न । ये । मरुतः । सुऽअञ्चः । यक्षऽदृशः । न । शुभयन्त । मर्याः ।
ते । हर्म्येऽस्थाः । शिशवः । न । शुभ्राः । वत्सासः । न । प्रऽक्रीळिनः । पयःऽधाः ॥ १६ ॥

वेङ्कट० अश्वाः इव ये मरुतः स्वञ्चनाः यक्षदृशः यक्षा इव दृश्यमाना यक्षा इव अलङ्कारैरङ्गानि ये शुभयन्त मर्याः, ते प्रासादस्थाः इव शिशवः रथस्थाः शोभमानाः वत्साः इव च प्रकर्षेण क्रीडिनः उदकस्य दातारः ॥ १६ ॥

दशस्यन्तो नो मरुतो मृळन्तु वरिवस्यन्तो रोदसी सुमेके ।
आरे गोहा नृहा वधो वो अस्तु सुम्नेभिरस्मे वसवो नमध्वम् ॥ १७ ॥

दशस्यन्तः । नः । मरुतः । मृळन्तु । वरिवस्यन्तः । रोदसी इति । सुमेके इति सुऽमेके ।
आरे । गोऽहा । नृऽहा । वधः । वः । अस्तु । सुम्नेभिः । अस्मे इति । वसवः । नमध्वम् ॥ १७ ॥

वेङ्कट० प्रयच्छन्तः अस्माकम् मरुतः सुखयन्तु परिचरन्तः द्यावापृथिव्यौ शोभमाने । दूरे गोर्हन्ता मनुष्यस्य हन्ता च वधः युष्माकं भवतु । सुखैः अस्मासु हे वासयितारः! नमध्वम् ॥ १७ ॥

आ वो होता जोहवीति सत्तः सत्राचीं रातिं मरुतो गृणानः ।
य ईवतो वृषणो अस्ति गोपाः सो अद्वयावी हवते व उक्थैः ॥ १८ ॥

आ । वः । होता । जोहवीति । सत्तः । सत्राचीम् । रातिम् । मरुतः । गृणानः ।
यः । ईवतः । वृषणः । अस्ति । गोपाः । सः । अद्वयावी । हवते । वः । उक्थैः ॥ १८ ॥

वेङ्कट० आभिमुख्येन भृशं ह्वयति होता होतृषदने निषण्णः युष्मान् बहुत्वमञ्चन्तीम् भवताम् रातिम् दानम् हे मरुतः! ब्रुवाणः । यः यजमानो गमनवतः जङ्गमस्य हे वर्षितारः! भवति गोपायिता । यज्ञेन हि[1] जगद्वर्धते । सः होता अद्वयावी युष्मान् उक्थैः[2] द्वयरहितोऽद्वयान्[3] मरुत एव आह्वयति ॥ १८ ॥

इमे तुरं मरुतो रामयन्तीमे सहः सहस आ नमन्ति ।
इमे शंसं वनुष्यतो नि पान्ति गुरु द्वेषो अररुषे दधन्ति ॥ १९ ॥

इमे । तुरम् । मरुतः । रमयन्ति । इमे । सहः । सहसः । आ । नमन्ति ।
इमे । शंसम् । वनुष्यतः । नि । पान्ति । गुरु । द्वेषः । अररुषे । दधन्ति ॥ १९ ॥

---

१. नास्ति वि[२] अ[१]. २. नास्ति वि[२] अ[१]. ३. °द्वया वि° अ[१].

**वेङ्कट०** इमे त्वरमाणं स्तोतारम् मरुतः रमयन्ति। इमे[1] हि[2] बलवताम्[3] अभिभवितारः विधेयीकुर्वन्ति। इमे[4] आशंसकं[5] [6]भजमानस्य परिरक्षन्ति। गुरुः च द्वेषः अयजमानाय[6] कुर्वन्ति ॥ १९ ॥

इमे रध्रं चिन्मरुतो जुनन्ति भृमिं चिद् यथा वसवो जुषन्त ।
अप बाधध्वं वृषणस्तमांसि धत्त विश्वं तनयं तोकमस्मे ॥ २० ॥

इमे । रध्रम् । चित् । मरुतः । जुनन्ति । भृमिम् । चित् । यथा । वसवः । जुषन्त ।
अप । बाधध्वम् । वृषणः । तमांसि । धत्त । विश्वम् । तनयम् । तोकम् । अस्मे इति ॥ २० ॥

**वेङ्कट०** यथा अस्मान् धनानि सेवन्ते तथा इमे मरुतः प्रेरयन्ति बाधकं भ्रमणशीलम् च रक्षः[7]। प्रत्यक्षशिष्टः। अप बाधध्वम् हे वृषणः! तमांसि। धत्त विश्वम् धनम् तनयम् तोकम् च अस्मासु ॥ २० ॥

[8]इति पञ्चमाष्टके चतुर्थाध्याये पञ्चविंशो वर्गः[8] ॥

मा वो दात्रान्मरुतो निररा॑म मा पश्चाद् दघ्म रथ्यो विभागे ।
आ नः स्पार्हे भजतना वसव्ये यदीं सुजातं वृषणो वो अस्ति ॥ २१ ॥

मा । वः । दात्रात् । मरुतः । निः । अराम । मा । पश्चात् । दघ्म । रथ्यः । विऽभागे ।
आ । नः । स्पार्हे । भजतन । वसव्ये । यत् । ईम् । सुऽजातम् । वृषणः । वः । अस्ति ॥ २१ ॥

**वेङ्कट०** मा वः दानात्[9] हे मरुतः! निः अराम निर्गमाम। मा च पश्चात् गच्छेम हे रथवन्तः! भवतां धनविभागे। आ भजत अस्मान् स्पृहणीये धनसमूहे, यत् शोभनजननम् हे वृषणः! युष्माकं विद्यते वसव्यम्[10] ॥ २१ ॥

सं यद्धनन्त मन्युभिर्जनासः शूरा यह्वीष्वोषधीषु विक्षु ।
अध स्मा नो मरुतो रुद्रियासस्त्रातारो भूत पृतनास्वर्यः ॥ २२ ॥

सम् । यत् । हनन्त । मन्युऽभिः । जनासः । शूराः । यह्वीषु । ओषधीषु । विक्षु ।
अध । स्म । नः । मरुतः । रुद्रियासः । त्रातारः । भूत । पृतनासु । अर्यः ॥ २२ ॥

**वेङ्कट०** सम् गच्छन्ते यदा क्रोधैः जनाः शूराः महतीषु ओषधीषु निवेशयित्रीषु। ओषधीनां हि पक्वानां[11] लाभार्थं युध्यन्ते। अध[12] स्म नः हे मरुतः! रुद्रपुत्राः! रक्षितारः भवत सङ्ग्रामेषु अभिगन्तारः ॥ २२ ॥

---

१. नास्ति वि[2] अ[1]. २. हे वि[2] अ[1]. ३. भवताम् वि[2] ल; भवतारम् अ[1] लभ. ४. इमे कुर्वन्तीमे मूको. ५. °सतं मूको. ६-६. °नस्य ... नाय वि[2] अ[1]. ७. रक्ष वि[2] ल लभ. ८-८. नास्ति मूको. ९. मानात् मूको. १०. पस° मूको. ११. पक्षाणां वि[2] अ[1]; पक्षानां लभ. १२. स मूको.

भूरि॑ चक्र मरुतः पित्र्या॑ण्यु॒क्थानि॒ या वः॑ शस्यन्ते॑ पु॒रा चि॑त् ।
म॒रुद्भि॑रु॒ग्रः पृत॑नासु॒ साळ्हा॑ म॒रुद्भि॒रित् सनि॑ता॒ वाज॒मर्वा॑ ॥ २३ ॥

भूरि॑ । च॒क्र॒ । म॒रु॒तः॒ । पित्र्या॑णि । उ॒क्थानि॑ । या । वः॒ । श॒स्यन्ते॑ । पु॒रा । चि॒त् ।
म॒रुत्ऽभिः॑ । उ॒ग्रः । पृत॑नासु । साळ्हा॑ । म॒रुत्ऽभिः॑ । इत् । सनि॑ता । वाज॑म् । अर्वा॑ ॥ २३ ॥

**वेङ्कट०** भूरीणि अहं कृतवान् पितृभिः कृतानि उक्थानि हे मरुतः!, यानि वः[1] शस्यन्ते गतेऽपि काले। मरुद्भिः उद्गूर्णो[2] वीरः पृतनासु शत्रूणां सोढा भवति। मरुद्भिः एव सम्भक्ता सङ्ग्रामम् अश्वः स्तोतुः ॥ २३ ॥

अ॒स्मे वी॒रो म॑रुतः शु॒ष्म्य॑स्तु॒ जना॑नां॒ यो असु॑रो वि॒धर्ता॑ ।
अ॒पो येन॑ सुक्षि॒तये॒ तरे॒माध॒ स्वमोको॑ अ॒भि वः॑ स्याम ॥ २४ ॥

अ॒स्मे इति॑ । वी॒रः । म॒रु॒तः॒ । शु॒ष्मी । अ॒स्तु॒ । जना॑नाम् । यः । असु॑रः । वि॒ऽध॒र्ता ।
अ॒पः । येन॑ । सु॒ऽक्षि॒तये॑ । तरे॑म । अध॑ । स्वम् । ओकः॑ । अ॒भि । व॒ः । स्या॒म॒ ॥ २४ ॥

**वेङ्कट०** अस्माकम् वीरः हे मरुतः! बलवान् अस्तु, जनानाम् यः बलवान् विभर्ता भवति व्याप्तः। येन शोभनाय निवासाय वीरेण तरेम युद्धम्। अथ युष्माकं स्वभूतम् ओकः वयम् अभि भवेम। यज्ञगृहं प्राप्नुयामेति ॥ २४ ॥

तन्न॒ इन्द्रो॒ वरु॑णो मि॒त्रो अ॒ग्निराप॒ ओष॑धीर्व॒निनो॑ जुषन्त ।
शर्म॑न्त्स्याम म॒रुता॑मु॒पस्थे॑ यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ २५ ॥

तत् । न॒ः । इन्द्रः॑ । वरु॑णः । मि॒त्रः । अ॒ग्निः । आपः॑ । ओष॑धीः । व॒निनः॑ । जु॒ष॒न्त॒ ।
शर्म॑न् । स्या॒म॒ । म॒रुता॑म् । उ॒पऽस्थे॑ । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । न॒ः ॥ २५ ॥

**वेङ्कट०** पूर्वं व्याख्यातेयम् ऋक् ( ७,३४,२५ ) ॥ २५ ॥

[3]इति पञ्चमाष्टके चतुर्थाध्याये षड्विंशो वर्गः[3] ॥

[५७]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः । मरुतो देवता । त्रिष्टुप् छन्दः[3] ।

मध्वो॑ वो॒ नाम॒ मारु॑तं यजत्राः॒ प्र य॒ज्ञेषु॒ शव॑सा मदन्ति ।
ये रे॒जय॑न्ति॒ रोद॑सी चिदु॒र्वी पिन्व॒न्त्युत्सं॒ यदया॑सुरु॒ग्राः ॥ १ ॥

मध्वः॑ । व॒ः । नाम॑ । मारु॑तम् । य॒ज॒त्राः॒ । प्र । य॒ज्ञेषु॑ । शव॑सा । म॒द॒न्ति॒ ।
ये । रे॒जय॑न्ति । रोद॑सी॒ इति॑ । चि॒त् । उ॒र्वी इति॑ । पिन्व॑न्ति । उत्स॑म् । यत् । अया॑सुः । उ॒ग्राः ॥ १ ॥

---

१. नास्ति वि[1]. २. उद्गीर्णः वि[1] अ[1]. ३-३. नास्ति मूको.

**वेङ्कट०** स्तोतारो युष्माकम् मारुतम्[1] नाम, मरुच्छब्दमित्यर्थः, हे यष्टव्याः! प्र मदन्ति यज्ञेषु बलेन सह स्तुवन्ति। ये कम्पयन्ति द्यावापृथिव्यौ अपि विस्तीर्णे। पिन्वन्ति[2] च मेघम् यदा[3] गच्छन्ति उद्गूर्णाः। उत्तरोऽर्धः[4] परोक्षः ॥ १ ॥

निचेतारो हि मरुतो गृणन्तं प्रणेतारो यजमानस्य मन्म ।
अस्माकमद्य विदथेषु बर्हिरा वीतये सदत पिप्रियाणाः ॥ २ ॥

निऽचेतारः । हि । मरुतः । गृणन्तम् । प्रऽनेतारः । यजमानस्य । मन्म ।
अस्माकम् । अद्य । विदथेषु । बर्हिः । आ । वीतये । सदत । पिप्रियाणाः ॥ २ ॥

**वेङ्कट०** स्वस्मिन्नायतने स्थापयितारः हि मरुतः स्तुवन्तम्[5]। द्वितीया च द्रष्टा[6]। प्रणेतारः[7] यजमानस्य अभिलषितम्। अस्माकम् अद्य यज्ञेषु बर्हिः आ सीदत[8] सोमपानाय प्रीयमाणाः ॥ २ ॥

नैतावदन्ये मरुतो यथेमे भ्राजन्ते रुक्मैरायुधैस्तनूभिः ।
आ रोदसी विश्वपिशः पिशानाः समानमञ्ज्यञ्जते शुभे कम् ॥ ३ ॥

न । एतावत् । अन्ये । मरुतः । यथा । इमे । भ्राजन्ते । रुक्मैः । आयुधैः । तनूभिः ।
आ । रोदसी इति । विश्वऽपिशः । पिशानाः । समानम् । अञ्जि । अञ्जते । शुभे । कम् ॥३॥

**वेङ्कट०** न एतावत् ये केचन राजन्ते मरुतः यथा इमे भ्राजन्ते रुक्मैः आभरणैः अङ्गैश्च। द्यावापृथिव्यौ 'विश्वान् पिशः'[9] आभिमुख्येन पिशानाः। पिशिः[10] आश्लेषकर्मा। द्यावापृथिव्यौ सर्वे एव व्याप्नुवाना इत्यर्थः। त इमे समानम् आभरणम्[11] आत्मशरीरेषु अञ्जते[12] शोभनार्थम् ॥ ३ ॥

ऋधक् सा वो मरुतो दिद्युदस्तु यद् व आगः पुरुषता कराम ।
मा वस्तस्यामपि भूमा यजत्रा अस्मे वो अस्तु सुमतिश्चनिष्ठा ॥ ४ ॥

ऋधक् । सा । वः । मरुतः । दिद्युत् । अस्तु । यत् । वः । आगः । पुरुषता । कराम ।
मा । वः । तस्याम् । अपि । भूम । यजत्राः । अस्मे इति । वः । अस्तु । सुऽमतिः । चनिष्ठा ॥४॥

**वेङ्कट०** पृथग् अस्मत्तो दूरे तद् वः हे मरुतः! दिद्युत् आयुधं भवतु, यद्यपि वयं युष्माकं पुरुषत्वेन बालिशत्वेन[13] [14]आगः कुर्मः[14]। मा [15]युष्माकम् तस्याम् दिद्युति अपि भूम[15]। अभिभवोऽप्ययः। हे यष्टव्याः! अस्मासु युष्माकम् अस्तु सुमतिः[16] अतिशयेनान्नवती ॥ ४ ॥

---

१. मरुतम् अ[1]. २. विद्वन्ति अ[1]; विदन्ति वि[2]. ३. यथा अ[1]. ४. °रोऽर्धर्चः ल प्रस्तावः. ५. स्तुवन्तः मूको. ६. भ्रष्टा वि[2] क्ष[1]; द्रष्टा ल लअ. ७. प्रणेता मूको. ८. सीद मूको. ९-९. विश्वान् विशः वि[2] ल; विशन् विश्वः अ[1]; विश्वविशः लअ. १०. पिपिशिः वि[2] ल; विविशिः अ[1] लअ. ११. आहर° अ[1] लअ. १२. अञ्जन्ते मूको. १३. बलानिश्चिन वि[2] ल; वलानिश्येन अ[1]; बलानिश्चेन लअ; बलानिश्चयेन ल प्रस्तावः. १४-१४. आगकूर्मः मूको. १५-१५. °कं भिभू° वि[2] अ[1]; °पि भिभू° ल. १६. सुमतुम् मूको.

कृते चिदत्र मरुतो रणन्तानवद्यासः शुचयः पावकाः ।
प्र णोऽवत सुमतिभिर्यजत्राः प्र वाजेभिस्तिरत पुष्यसे नः ॥ ५ ॥

कृते । चित् । अत्र । मरुतः । रणन्त । अनवद्यासः । शुचयः । पावकाः ।
प्र । नः । अवत । सुमतिऽभिः । यजत्राः । प्र । वाजेभिः । तिरत । पुष्यसे । नः ॥ ५ ॥

**वेङ्कट०** कृते चित् अत्र स्तोमे मरुतः अरमन्त[1] अनवद्याः शुचयः पावकाः । प्र अवत अस्मान् सुमतिभिः हे यष्टव्याः! । प्र वर्धयत अस्मान् अन्नैः पोषणाय ॥ ५ ॥

उत स्तुतासो मरुतो व्यन्तु विश्वेभिर्नामभिर्नरो हवींषि ।
ददात नो अमृतस्य प्रजायै जिगृत रायः सूनृता मघानि ॥ ६ ॥

उत । स्तुतासः । मरुतः । व्यन्तु । विश्वेभिः । नामऽभिः । नरः । हवींषि ।
ददात । नः । अमृतस्य । प्रऽजायै । जिगृत । रायः । सूनृता । मघानि ॥ ६ ॥

**वेङ्कट०** अपि च स्तुताः मरुतः भक्षयन्तु सर्वैः नामभिः 'ईदृङ् चान्यादृङ्[2] च' (तै १,८,१३, ५-६) इत्यादिभिः स्तुताः नेतारः हवींषि । दत्त अस्माकम् अन्नं प्रजार्थम् । उच्चारयत[3] सूनृतानि च वचनानि मंहनीयानि ॥ ६ ॥

आ स्तुतासो मरुतो विश्व ऊती अच्छा सूरीन्त्सर्वताता जिगात ।
ये नस्त्मना शतिनो वर्धयन्ति यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

आ । स्तुतासः । मरुतः । विश्वे । ऊती । अच्छ । सूरीन् । सर्वऽताता । जिगात ।
ये । नः । त्मना । शतिनः । वर्धयन्ति । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**वेङ्कट०** आ गच्छत स्तुताः हे मरुतः! सर्वेऽपि यूयं रक्षणार्थम् स्तोतॄन् प्रति सर्वस्मिन्नपि काले । ये अस्मान् आत्मना एव बहुधनाः वर्धयन्ति, त इति ॥ ७ ॥

[4]इति पञ्चमाष्टके चतुर्थाध्याये सप्तविंशो वर्गः[4] ॥

[ ५८ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । मरुतो देवता । त्रिष्टुप् छन्दः[4] ।

प्र साकमुक्षे अर्चता गणाय यो दैव्यस्य धाम्नस्तुविष्मान् ।
उत क्षोदन्ति रोदसी महित्वा नक्षन्ते नाकं निर्ऋतेरवंशात् ॥ १ ॥

प्र । साकम्ऽउक्षे । अर्चत । गणाय । यः । दैव्यस्य । धाम्नः । तुविष्मान् ।
उत । क्षोदन्ति । रोदसी इति । महिऽत्वा । नक्षन्ते । नाकम् । निःऽऋतेः । अवंशात् ॥ १ ॥

---

१. रमन्त अ[1] ल लभ. २. न चान्यां दृष्टे मूको. ३. °यतः मूको. ४-४. नास्ति मूको.

**वेङ्कट०** प्र उच्चारयत स्तुतीः सहोक्षणं कुर्वते गणाय, यः दैव्यस्य स्थानस्य बलवान् सर्वेभ्यो देवेभ्यो बलवत्तरः। अपि च शकलीकुर्वन्ति द्यावापृथिव्यौ महत्त्वेन। व्याप्नुवन्ति च नाकम् लोकम् अस्याः पृथिव्याः आरभ्य वंशरहितेनाऽन्तरिक्षेण ॥ १ ॥

जनूश्चिद् वो मरुतस्त्वेष्येण भीमासस्तुविमन्यवोऽयासः ।
प्र ये महोभिरोजसोत सन्ति विश्वो वो यामन् भयते स्वर्दृक् ॥ २ ॥

जनूः । चित् । वः । मरुतः । त्वेष्येण । भीमासः । तुविऽमन्यवः । अयासः ।
प्र । ये । महःऽभिः । ओजसा । उत । सन्ति । विश्वः । वः । यामन् । भयते । स्वःऽदृक् ॥२॥

**वेङ्कट०** जन्मानि युष्माकम् मरुतः! दीप्तेन रुद्रेण हे भीमाः! बहुक्रोधाः! गमनशीलाः!। प्र भवन्ति ये महद्भिस्तेजोभिः बलेन च सह, तेषां युष्माकं गमने सर्वोऽपि स्वर्दृग्[1] बिभेति। दिवो दर्शनात् [2]वनस्पतिः स्वर्दृक्। वनस्पतयो ह्यूर्ध्वं[2] पश्यन्ति उत्तिष्ठन्तः[3] ॥ २ ॥

बृहद् वयो मघवद्भ्यो दधात जुजोषन्निन्मरुतः सुष्टुतिं नः ।
गतो नाध्वा वि तिराति जन्तुं प्र णः स्पार्हाभिरूतिभिस्तिरेत ॥ ३ ॥

बृहत् । वयः । मघवत्ऽभ्यः । दधात । जुजोषन् । इत् । मरुतः । सुऽस्तुतिम् । नः ।
गतः । न । अध्वा । वि । तिराति । जन्तुम् । प्र । नः । स्पार्हाभिः । ऊतिऽभिः । तिरेत ॥३॥

**वेङ्कट०** बृहत् अन्नम् हविष्मद्भ्यः[4] प्रयच्छत हे ऋत्विजः!। सेवन्ते एव अस्माकम् मरुतः सुष्टुतिम्। सोऽयं मरुद्गणो यथा गतः अध्वा विरमयति जन्तुम् एवम् वि रमयति लब्धकामम् अजिगमिषुं करोति। सोऽस्मान्[5] स्पृहणीयैः रक्षणैः प्र वर्धयेदिति ॥ ३ ॥

युष्मोतो विप्रो मरुतः शतस्वी युष्मोतो अर्वा सहुरिः सहस्री ।
युष्मोतः सम्राळुत हन्ति वृत्रं प्र तद् वो अस्तु धूतयो देष्णम् ॥ ४ ॥

युष्माऽऊतः । विप्रः । मरुतः । शतस्वी । युष्माऽऊतः । अर्वा । सहुरिः । सहस्री ।
युष्माऽऊतः । सम्ऽराट् । उत । हन्ति । वृत्रम् । प्र । तत् । वः । अस्तु । धूतयः । देष्णम् ॥४॥

**वेङ्कट०** युष्माभी रक्षितः हे मरुतः! स्तोता बहुधनः भवति। युष्मोतः अश्वः[6] सहनशीलः सहस्रम् आहरति शत्रुभ्यः। [7]युष्मोतः अनश्वो राजा[7] अपि च हन्ति[8] शत्रुम् सम्राट् भवन्। प्र अस्तु तत्[9] युष्माकं दानम् अस्मासु हे कम्पयितारः! ॥ ४ ॥

---

१. स्वदृक् मूको. २-२. °स्पति स्वगृह्णन् वनस्पते याह्य° ल लभ; °स्पति स्रग्वन्वनस्पते याह्यू° वि[२]; °स्पति स्रुग्वन् वनस्पते यां ह्यू° अ[१]. ३. °ष्ठतः मूको. ४. °द्स्यां मूको. ५. °स्मात् मूको. ६. अश्व वि[२] अ[१]; अश्व अ[१]; अश्व लभ. ७-७. °तो नशीरता वि[२] अ[१]; युष्मातो नशी रजा ल लभ. ८. भवन्ति मूको. ९. त मूको.

ताँ आ रुद्रस्यं मीळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः ।
यत् सस्वर्ता जिहीळिरे यदाविरव तदेनं ईमहे तुराणाम् ॥ ५ ॥

तान् । आ । रुद्रस्यं । मीळ्हुषः । विवासे । कुवित् । नंसन्ते । मरुतः । पुनः । नः ।
यत् । सस्वर्ता । जिहीळिरे । यत् । आविः । अवं । तत् । एनः । ईमहे । तुराणाम् ॥ ५ ॥

**वेङ्कट०** तान् परिचरामि रुद्रस्य सूनून् सेक्तॄन् । बहु अस्माकं नमयन्ति मरुतः पुनः । [1]"सस्वः" ( निघ ३,२४ ) इत्यन्तर्हितनाम । अत्र तु सस्वर्तेति दृष्टम्[1] । यत् अन्तर्हितं पापं क्रुध्यन्ति मरुतः, यत् च आविर्भूतम्, अव ईमहे तत् एनः मरुतां क्षिप्राणां हृद्गतम् अपगच्छत्विति[2] याचामहे ॥ ५ ॥

प्र सा वाचि सुष्टुतिर्मघोनामिदं सूक्तं मरुतो जुषन्त ।
आराच्चिद् द्वेषो वृषणो युयोत यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

प्र । सा । वाचि । सुऽस्तुतिः । मघोनाम् । इदम् । सुऽउक्तम् । मरुतः । जुषन्त ।
आरात् । चित् । द्वेषः । वृषणः । युयोत । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

**वेङ्कट०** प्रोक्ता[3] सा इयम् सुष्टुतिः । हविष्मताम् इदम् सूक्तम् मरुतः सेवन्ताम् । अस्मत्तो दूरे हे वृषणः! पापं पृथक् कुरुत ॥ ६ ॥

[4]इति पञ्चमाष्टके चतुर्थाध्याये अष्टाविंशो वर्गः[4] ॥

## [ ५९ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । मरुतो देवता, द्वादश्या रुद्रः । प्रगाथश्छन्दः ( विषमा बृहत्यः, समाः सतोबृहत्यः ), सप्तम्यष्टम्यौ त्रिष्टुभौ, नवमीदशम्येकादश्यो गायत्र्यः, द्वादश्यनुष्टुप्[4] ।

यं त्रायध्व इदमिदं देवासो यं च नयथ ।
तस्मा अग्ने वरुण मित्रार्यमन् मरुतः शर्म यच्छत ॥ १ ॥

यम् । त्रायध्वे । इदम्ऽइदम् । देवासः । यम् । च । नयथ ।
तस्मै । अग्ने । वरुण । मित्र । अर्यमन् । मरुतः । शर्म । यच्छत ॥ १ ॥

**वेङ्कट०** यम् रक्षत इत्थमित्थम् देवासः!, यम् च नयथ, तस्मै मह्यम् हे अग्न्यादयः! सुखं प्र यच्छत । मारुतं सूक्तम् ॥ १ ॥

---

१-१. सस्वरितामित्यन्तर्हितनामात्रतुसुरवर्तेत्रिदष्टम् मूको. २. भवग° मूको. ३. प्र सा प्रो° वि° अ°. ४-४. नास्ति मूको.

युष्माकं देवा अवसाहनि प्रिय ईजानस्तरति द्विषः ।
प्र स क्षयं तिरते वि महीरिषो यो वो वराय दाशति ॥ २ ॥

युष्माकम् । देवाः । अवसा । अहनि । प्रिये । ईजानः । तरति । द्विषः ।
प्र । सः । क्षयम् । तिरते । वि । महीः । इषः । यः । वः । वराय । दाशति ॥ २ ॥

**वेङ्कट०** युष्माकम् हे देवाः! रक्षणेन प्रिये दिवसे ईजानः तरति शत्रून् । प्र वर्धयति च सः गृहम्, विविधं च वर्धयति महान्ति अन्नानि, यः युष्मभ्यं प्रयच्छति आत्मीयमभिलषितम् उद्दिश्य ॥ २ ॥

नहि वश्चरमं चन वसिष्ठः परिमंसते ।
अस्माकमद्य मरुतः सुते सचा विश्वे पिबत कामिनः ॥ ३ ॥

नहि । वः । चरमम् । चन । वसिष्ठः । परिऽमंसते ।
अस्माकम् । अद्य । मरुतः । सुते । सचा । विश्वे । पिबत । कामिनः ॥ ३ ॥

**वेङ्कट०** नहि वः चरमम् अपि यो भवतां जघन्यम् आगच्छति, तमप्ययं वसिष्ठः परिबुध्यते परिवर्जयति । तथा सति अस्माकम् अद्य हे मरुतः! सुते सहिताः विश्वे पिबत कामिनः ॥ ३ ॥

नहि व ऊतिः पृतनासु मर्धति यस्मा अराध्वं नरः ।
अभि व आवर्त् सुमतिर्नवीयसी तूयं यात पिपीषवः ॥ ४ ॥

नहि । वः । ऊतिः । पृतनासु । मर्धति । यस्मै । अराध्वम् । नरः ।
अभि । वः । आ । अवर्त् । सुऽमतिः । नवीयसी । तूयम् । यात । पिपीषवः ॥ ४ ॥

**वेङ्कट०** नहि युष्माकं रक्षणम् पृतनासु बाध्यते । अस्मै यजमानाय तामूतिम् अराध्वम् नरः! । रातिर्दानकर्मा । तथा सति युष्माकं 'नवतरा सुमतिः[1] अस्मान् अभि आ वृणोतु । क्षिप्रम् आगच्छत हे सोमं पातुकामाः![2] ॥ ४ ॥

ओ षु घृष्विराधसो यातनान्धांसि पीतये ।
इमा वो हव्या मरुतो ररे हि कं मो ष्वन्यत्र गन्तन ॥ ५ ॥

ओ इति । सु । घृष्विऽराधसः । यातन । अन्धांसि । पीतये ।
इमा । वः । हव्या । मरुतः । ररे । हि । कम् । मो इति । सु । अन्यत्र । गन्तन ॥ ५ ॥

**वेङ्कट०** आ यात ये घृष्विराधसः! इतरेतरं संहन्यमानधनाः![3] सोमान् पातुम् । इमानि युष्मभ्यं हवींषि मरुतः! अहम् हि प्रयच्छामि । मा गच्छत अन्यत्र तथा सति । सु पूरणे ॥ ५ ॥

---

१-१. °तरोतिः मूको. २. °कामः वि[२] ल; °कामान् अ[१]; °कामात् लअ. ३. °धनान् मूको.

आ च॑ नो ब॒र्हिः सद॑ताववि॒ता च॑ नः स्पा॒र्हाणि॒ दात॑वे॒ वसु॑ ।
अस्रे॑धन्तो मरुतः सो॒म्ये मधौ॒ स्वाहे॒ह माद॑याध्वै ॥ ६ ॥

आ । च॒ । न॒ः । ब॒र्हिः । सद॑त । अ॒वि॒त । च॒ । न॒ः । स्पा॒र्हाणि॑ । दात॑वे । वसु॑ ।
अस्रे॑धन्तः । म॒रु॒तः॒ । सो॒म्ये । मधौ॑ । स्वाहा॑ । इ॒ह । मा॒द॒या॒ध्वै॒ ॥ ६ ॥

**वेङ्कट०** आ सीदत च अस्माकम् बर्हिः । रक्षत च[1] अस्मान् । वर्णान्यत्वं छान्दसम् । स्पृहणीयानि धनानि दातुम् । अक्षीणाः भवन्तः मरुतः ! सोममये मधुनि स्वाहाकारेण इह माद्यत ॥ ६ ॥

[2]इति पञ्चमाष्टके चतुर्थाध्याये एकोनत्रिंशो वर्गः[2] ॥

स॒स्वश्चि॒द्धि त॒न्व१॒ः शुम्भ॑माना॒ आ हं॒सासो॒ नील॑पृष्ठा अपप्तन् ।
विश्वं॒ शर्धो॑ अ॒भितो॑ मा॒ नि षे॑द॒ नरो॒ न र॒ण्वाः सव॑ने॒ मद॑न्तः ॥ ७ ॥

स॒स्वरिति॑ । चि॒त् । हि । त॒न्वः॑ । शुम्भ॑मानाः । आ । हं॒सासः॑ । नील॑ऽपृष्ठाः । अ॒प॒प्त॒न् ।
विश्व॑म् । शर्धः॑ । अ॒भितः॑ । मा॒ । नि । से॒द॒ । नरः॑ । न । र॒ण्वाः । सव॑ने । मद॑न्तः ॥ ७ ॥

**वेङ्कट०** अन्तर्हिताः ( तु. निघ ३,२४ ) अङ्गानि शोभयन्त आभरणैः नीलपृष्ठाः केचन हंसाः आ अपप्तन् इति मरुदभिप्रायम् । ते नूनं नीलपृष्ठा भवन्ति । माम् अभितः[3] विश्वम् शर्धः[4] नि सीदतु इति मारुतं शर्धोऽभिप्रेत्याह । मनुष्याः इव रमणीयाः यज्ञे मदन्तः भवन्ति मरुतः ॥ ७ ॥

यो नो॑ मरुतो अ॒भि दु॑र्हृणा॒युस्ति॒रश्चि॒त्तानि॑ वसवो॒ जिघां॑सति ।
द्रु॒हः पाशा॒न् प्रति॒ स मु॑चीष्ट॒ तपि॑ष्ठेन॒ हन्म॑ना हन्त॒ना तम् ॥ ८ ॥

यः । न॒ः । म॒रु॒तः॒ । अ॒भि । दुः॒ऽहृ॒णा॒युः । ति॒रः । चि॒त्तानि॑ । व॒स॒वः॒ । जिघां॑सति ।
द्रु॒हः । पाशा॑न् । प्रति॑ । सः । मु॒ची॒ष्ट॒ । तपि॑ष्ठेन । हन्म॑ना । ह॒न्त॒न॒ । तम् ॥ ८ ॥

**वेङ्कट०** यः अस्मान् हे मरुतः! जिघांसति दुर्हृणायुः दुष्टभावो हृणायुः क्रुध्यन् तिरः कुर्वन् बुद्धीः[5] हे वासयितारः![6], [7]सः द्रोग्धुः[7] पाशान् युष्मदीयान् प्रति मुञ्चतु । तप्तृतमेन आयुधेन तम् हत ॥ ८ ॥

सांत॑पना इ॒दं ह॒विर्मरु॑त॒स्तज्जु॑जुष्टन । यु॒ष्माको॒ती रि॑शादसः ॥ ९ ॥

साम्ऽत॑पनाः । इ॒दम् । ह॒विः । मरु॑तः । तत् । जु॒जु॒ष्ट॒न॒ । यु॒ष्माक॑ । ऊ॒ती । रि॒शा॒द॒सः॒ ॥ ९ ॥

**वेङ्कट०** हे सन्तपनकुशलाः! शत्रूणाम् तत् इदम् हविः मरुतः! सेवध्वम् यौष्माकीणेन रक्षणेन सह हे हिंसितॄणां[8] निरसितारः! ॥ ९ ॥

---

१. नास्ति अ[1]. २-२. नास्ति मूको. ३. अह्नितः मूको. ४. शर्धोमा वि[2]; शद्धोथा अ[1]; शर्धा लअ. ५. बुद्धिः मूको. ६. °सिता मूको. ७-७. समुद्रोऽद्धन् वि[2]; सः मुद्रोद्धन् अ[1]; सः मुद्रोद्धन् लअ; अस्मद्द्रोग्धुः ( पक्षे ) ल प्रस्तावः. ८. °सितॄणाम् ल.

गृहमेधास आ गत मरुतो माप भूतन । युष्माकोती सुदानवः ॥ १० ॥

गृहऽमेधासः । आ । गत । मरुतः । मा । अप । भूतन । युष्माक । ऊती । सुऽदानवः ॥१०॥

वेङ्कट० हे गृहमेधाः! गृहे विद्यमानयज्ञाः! आ गच्छत मरुतः! । मा च अप भवत युष्माक ऊती सुदानाः! ॥ १० ॥

इहेह वः स्वतवसः कवयः सूर्यत्वचः । यज्ञं मरुत आ वृणे ॥ ११ ॥

इहऽइह । वः । स्वऽतवसः । कवयः । सूर्यऽत्वचः । यज्ञम् । मरुतः । आ । वृणे ॥ ११ ॥

वेङ्कट० इह चेह च युष्माकं हे स्वभूतबलाः! कवयः! सूर्यसदृशरूपाः! यज्ञम् मरुतः! आभिमुख्येन सम्भजे ॥ ११ ॥

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ १२ ॥

त्रिऽअम्बकम् । यजामहे । सुऽगन्धिम् । पुष्टिऽवर्धनम् ।
उर्वारुकम्ऽइव । बन्धनात् । मृत्योः । मुक्षीय । मा । अमृतात् ॥ १२ ॥

वेङ्कट० अत्र वाजसनेयकम्—"'एष ते रुद्र भागः सह [1]स्वसाऽम्बिकया तं[1] जुषस्व स्वाहा' इत्यम्बिका ह वै नामास्य स्वसा तयास्यैष सह[2] भागस्तद् यदस्यैष[3] स्त्रिया सह भागस्तस्मात् त्र्यम्बको नाम" ( माश २, ६, २, ९ ) इति । तं वयम् यजामहे शोभनगन्धम् पुष्टेर्वर्धयितारम् । अथैकवदाह— यथा उर्वारुकम् पक्त्वा बन्धनात् स्वयमेवाऽनायासेन मुक्तं भवति एवम् अहम् मृत्योः मुक्षीय, मा अमृतात् । जीवितम् अमृतमिति ॥ १२ ॥

[4]इति पञ्चमाष्टके चतुर्थाध्याये त्रिंशो वर्गः[4] ॥

व्याख्यात्[5] तुरीयमध्यायं पञ्चमस्याष्टकस्य सः ।
अष्टकस्य कुले जातो माधवो वेङ्कटात्मजः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने पञ्चमाष्टके चतुर्थोऽध्यायः ।

—*—

इति ऋग्वेदे सभाष्ये पञ्चमाष्टके चतुर्थोऽध्यायः ॥



1-1. स्वविकया ते मूको. 2. स मूको. 3. सदस्यैष मूको. 4-4. नास्ति मूको. 5. व्याख्यद वि[2] अ[1].

## अथ पञ्चमोऽध्यायः ।

वेङ्कट० 'यदद्य सूर्ये('र्य' इ)त्यध्यायं व्याचिख्यासति माधवः ।
अष्टकादिषु वक्तव्यम् आदितः सम्प्रदर्शयन् ॥ १ ॥

अष्टकाध्यायविच्छेदः पुराणैर्ऋषिभिः कृतः ।
उद्ग्राहार्थं प्रदेशानाम् इति मन्यामहे वयम् ॥ २ ॥

वर्गाणामपि विच्छेद आर्ष एवेति निश्चयः ।
'ब्राह्मणेष्वपि दृश्यन्ते' वर्गसंशब्दनादयः[2] ॥ ३ ॥

'विभज्यन्ते च[3] सूक्तानि समधा तत्र वर्गशः ।
अन्ताल्लोपोऽपि वृद्धिश्च क्रियेतेऽनुगुणाविति[4] ॥ ४ ॥

अध्यापनाय शिष्याणां विभागो वर्गशः कृतः ।
सुग्रहो हि भवत्यल्पः शक्यो धारयितुं ततः ॥ ५ ॥

सङ्घीभूयाभवत् सर्वमेकं[5] मण्डलमादितः ।
आसीदृषिर्मधुच्छन्दा मधुरोत्तममन्त्रदृक्[6] ॥ ६ ॥

तस्मादग्रे प्रादुरभूत् काण्वो मेधातिथिस्ततः ।
शौनश्शेपानि छन्दांसि मधुराणि ततोऽभवन् ॥ ७ ॥
हैरण्यस्तूपच्छन्दांसि काण्वानि च ततः परम् ।

[8]अत्र शाट्यायनकम्—'वैश्वामित्रो मधुच्छन्दा अकामयत [7]मुख्ये ब्रह्मवर्चसि[7] स्यामिति'[8] ॥ ८ ॥

अमहान्ति निवेश्याऽन्तर्मण्डलानि महर्षिभिः ।
कृतो महद्भ्यां रक्षार्थम् अथ तेषां परिग्रहः ॥ ९ ॥

समानमेतद्यज्ञस्य 'एव तद्वसेने द्यतीति'[9] ।
सामिधेनीप्रभृतिषु ब्राह्मणैस्तद्विधीयते[9] ॥ १० ॥
भूयिष्ठं[10] यज्ञसंयुक्तम् उत्तमं मण्डलं विदुः ।
पितृमेधादिकं तस्माद् अन्ततस्तन्निवेशितम्[11] ॥ ११ ॥
मध्यस्थानां मण्डलानां क्रमो योऽयं व्यवस्थितः ।
तस्य कारणमन्वेष्टुं सङ्ख्याऽस्माभिः प्रदर्श्यते ॥ १२ ॥

---

१-१. °ष्वभिदृ° वि[2] अ[1] ल लअ. २. वर्गसंशब्दनादि च मूको. ३-३. °न्तेऽथ वि[2] अ[1]. ४. क्रियेते तु गुणाविति वि[1] अ[1] ल लअ. ५. सर्वं ए° वि[2] अ[1]. ६. मधुमत्तमम° त्रि[1] अ[1] ल. ७-७. मुख्यौ ब्रह्मवर्चसी वि[2] अ[1] लअ. ८-८. नास्ति वेंऋअ. ९. °णेर्येद्वि° वेंऋअ. १०. भूयिष्ठा लअ. ११. सम्यक् अन्तत° वि[2] अ'; °तश्च निवे वेंऋअ.

आद्यन्तयोर्मण्डलयोर्नवोने द्वे शते विदुः ।
त्रिचत्वारिंशद्[1] द्विषष्टिर्द्व्यूना षष्टिरनन्तरम् ॥ ११ ॥

सप्ताध्यशीतिः[2] पञ्चाधिसप्ततिस्तदनन्तरम्[3] ।
चतुरधिकं च शतम् अष्टोनं च शतं ततः ॥ १२ ॥

[4]चतुर्दशकं च शतं[4] सूक्तानां क्रमशो विदुः ।
मध्यस्थानां मण्डलानाम् इतिसङ्ख्या यथाक्रमम् ॥ १३ ॥

रक्षार्थमथ वाक्यानि [5]कळायो लवनं[5] ततः ।
रातिनाश्च[6] दमूनाश्च सदनं मथनं तथा ॥ १४ ॥

वनाय क्रोधतो[7] द्वे च भयकृद् युद्धकृत् तथा ।
क्रमेण दशवाक्यानि सायाह्नः[8] स्यात् समन्वये ॥ १५ ॥

वामदेवस्तृतीयश्चेद्[9] भरद्वाजश्च पञ्चमः ।
कण्वश्च सप्तमः सूक्तैः क्रमवृद्धेर्भवेत् क्रमः ॥ १६ ॥

न च क्रमेण वर्धन्त ऋचो गार्त्समदादिषु ।
तस्माद् ऋक्तोऽपि नैतेषाम् अष्टानां सिध्यति क्रमः ॥ १७ ॥

वाक्यैरेतैर्विजानीयाद् मण्डलानामृचः क्रमात् ।
दशानां दशभिः प्राज्ञः तथाधेयो[10] धरावनिः ॥ १८ ॥

साध्यं च नो धेहि मेऽन्नं शूरसूनुर्मतोऽसिनः ।
गुरुदाने युगान्तस्य[11] सिद्धान्नस्य[12] निशीथके ॥ १९ ॥

शतैश्चतुर्भिरधिकम् अयुतं गणितं मया ।
द्वे चर्चावतिरिच्येते[13] द्विपदाश्चात्र सङ्गताः ॥ २० ॥

पृथक्पदा[14] तु गणनं द्विपदानां[15] तदाधिका ।
चतुश्शतादशीतिश्च वाक्यं च ग्रहवानयम् ॥ २१ ॥

---

१. द्विच° वि[2] अ[1] ल लअ. २. सप्ताशीतिः वेंऋअ; सप्ताधिशी ··· वि[2] अ[1]. ३. पञ्चाधिकस° वेंऋअ. ४-४. चतुर्दशं च शतकं अ[1] वेंऋअ. ५-५. काल योगवनं वि[2] अ[1]; कानयोगवनं लअ. ६. ॰तिनश्च वेंऋअ. ७. °धनो वेंऋअ; च्छन्न अ[1] लअ ल; प्रच्छन्नं वि[2]. ८. सायाह्नं वेंऋअ. ९. °तीयश्च वेंऋअ. १०. तदाधे° वि[2] अ[1]; तथा देयः वेंऋअ. ११. युगं तस्य वि[2]. १२. सिद्धान्यस्य वेंऋअ. १३. च यान्यति° वेंऋअ; च यावति° वि[2] अ[1]. १४. °थक्तदा वि[2] अ[1]; °थग्यदा वेंऋअ. १५. द्विपादा° वेंऋअ.

एकर्चे[1] एकवर्गः [2]स्याद् द्वृचौ[2] द्वौ नवकावुभौ ।
एकोनं स्यात् त्रिकशतं चतुष्कं पञ्चसप्ततिः ॥ २२ ॥

अधिकं च शतं तस्याः[3] चतुःपञ्चाशदष्टकाः ।
एकविंशशतं प्राहुः सप्तकानां च वैदिकाः ॥ २३ ॥

शतानि त्रीणि षट्कानां चत्वारिंशत्त्रयस्तथा ।
पञ्चकानां सहस्रं च द्वे शते नवकं तथा ॥ २४ ॥

ऋचां दश सहस्राणि ऋचां पञ्चशतानि च[4] ।
ऋचामशीतिपादश्च[5] पाठोऽयं न समञ्जसः ॥ २५ ॥

अपहायाथ पादस्याक्षराण्यादाय[6] पण्डितः ।
ऋचः कालेन गणयेत् तत्तु[7] शुद्धिर्भविष्यति ॥ २६ ॥

मण्डलं वामदेवस्य तृतीयं चेत्तथाष्टमम्[8] ।
स्यान्मण्डलं पावमानं [9]क्रमाद् वृद्धेः[9] क्रमो भवेत् ॥ २७ ॥

विश्वामित्रो वामदेवात् सम्पन्नो व्यतिरिच्यते ।
अतिरेकश्च विज्ञेयो गायत्रीकरणाद् बुधैः ॥ २८ ॥

अत्र ब्रूमो गृत्समदः क्षत्रियो ब्राह्मणोऽभवत् ।
इन्द्रप्रसादाद् अस्यासन् वाचश्च हृदयङ्गमाः ॥ २९ ॥

अग्ने तस्मात्[10] प्रादुरभूद् विश्वामित्रस्ततोऽभवत् ।
तस्यापि मधुरा मन्त्रा ब्राह्मण्यमपि लब्धवान् ॥ ३० ॥

दृष्टवेदस्ततोऽपश्यत्[11] पुनश्च तपसाऽन्वितः[12] ।
मण्डलं नवमं तेन तदन्ते सन्निवेशितम् ॥ ३१ ॥

प्रगाथे[13] मण्डले बह्व्यो नाराशंस्य[14] ऋचस्ततः ।
सन्निवेशोऽन्ततस्तस्य मध्यस्थेष्विति मन्यते ॥ ३२ ॥

---

१. एतच्च वि[2] अ[1]. २-२. स्याद्गृचौ वेंऋअ. ३. वर्गाः वेंऋअ. ४. वै वेंऋअ. ५. °तिः पाद° वेंऋअ. ६. पापस्य क्षादनाय च मूको. ७. तन्तु वेंऋअ. ८. च तथा° वेंऋअ. ९-९. क्रमवृद्धे वेंऋअ; क्रमावृद्धे वि[2] अ[1] लअ. १०-१०. अग्नेरस्मात् वि[2] अ[1] लअ. ११. °वेदेनतो° वि[2] अ[1] ल लअ; °वेदास्ततोऽपश्यन् वेंऋअ. १२. °न्विताः मूको. १३. प्रागा° अ[1] लअ. १४. नरा° वि[2] अ[1].

अन्येषां क्रमवृद्धानां सन्निवेशः क्रमादभूत् ।
चतुर्णां वामदेवादेर्मण्डलानामिति स्थितिः ॥ ३३ ॥

अथानुवाकविच्छेदो बहुभिर्हेतुभिः कृतः ।
'सुरूपकृत्नुम्'[1] इत्यैन्द्रात् प्रागेकः कल्पितो बुधैः ॥ ३४ ॥

ऐन्द्राण्यथाष्टौ सूक्तानि विभक्तानि समन्वितैः[2] ।
षट्सूक्तावनुवाकौ द्वौ समौ मेधातिथेरपि ॥ ३५ ॥

शौनश्शेपोऽनुवाकस्तु शुनश्शेपेन कल्पितः ।
हैरण्यस्तूपकाण्वौ च प्रास्कण्वाद्याश्च सप्तकाः ॥ ३६ ॥

गोतमस्यो(स्य 'उ)प॒प्रयन्तं'[3]-सूक्तानां विंशतिं विदुः ।
एकादशकनवकावनुवाकौ च कल्पितौ ॥ ३७ ॥

ऐन्द्रमेकादशं सूक्तम् ऐन्द्रैः पूर्वसमन्वितम्[4] ।
इति सर्वानुवाकेषु कार्या सूक्ष्मेक्षिका बुधैः ॥ ३८ ॥ इति ।

[ ६० ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः । प्रथमायाः सूर्यो देवता, शिष्टानां मित्रावरुणौ । त्रिष्टुप् छन्दः[5] ।

यद॒द्य सू॑र्य॒ ब्रवोऽना॑गा उ॒द्यन् मि॒त्राय॒ वरु॑णाय स॒त्यम् ।
व॒यं दे॑व॒त्रादि॑ते स्याम॒ तव॑ प्रि॒यासो॑ अर्यमन् गृ॒णन्त॑ः ॥ १ ॥

यत् । अ॒द्य । सू॒र्य॒ । ब्रव॑ः । अना॑गाः । उ॒त्ऽयन् । मि॒त्राय॑ । वरु॑णाय । स॒त्यम् ।
व॒यम् । दे॒व॒ऽत्रा । अ॒दि॒ते॒ । स्या॒म॒ । तव॑ । प्रि॒यास॑ः । अ॒र्य॒म॒न् । गृ॒णन्त॑ः ॥ १ ॥

वेङ्कट० वसिष्ठः । मैत्रावरुणं सूक्तम् । आद्या सौर्या[6] । यत् अद्य सूर्य! ब्रूयाः[7] अस्मान् अनागसः उद्यन् मित्रावरुणयोः सत्यम् एव, नैतैः[8] पापं कृतमिति ब्रवीषि । ततः वयम् हे अदीन! सूर्य! देवेषु स्याम तव प्रियासः अर्यमन्! त्वां स्तुवन्तः ॥ १ ॥

ए॒ष स्य मि॑त्रावरुणा नृ॒चक्षा॑ उ॒भे उदे॑ति॒ सूर्यो॑ अ॒भि ज्मन् ।
विश्व॑स्य स्था॒तुर्जग॑तश्च गो॒पा ऋ॒जु मर्ते॑षु वृजि॒ना च॒ पश्य॑न् ॥ २ ॥

ए॒षः । स्यः । मि॒त्रा॒व॒रु॒णा । नृ॒ऽचक्षा॑ः । उ॒भे इति॑ । उत् । ए॒ति॒ । सूर्य॑ः । अ॒भि । ज्मन् ।
विश्व॑स्य । स्था॒तुः । जग॑तः । च॒ । गो॒पाः । ऋ॒जु । मर्ते॑षु । वृ॒जि॒ना । च॒ । पश्य॑न् ॥ २ ॥

---

१. ऋ १,४,१. २. समं द्विधा वेंऋअ. ३. ऋ १,७४,१; गौतमस्यां व प्रियन्त वि[१]. ४. पूर्वैः स° वेंऋअ. ५-५. नास्ति मूको. ६. सौ मूको. ७. ब्रूवाः ल; ब्रुवा वि[२]; ब्रवो अ[१]. ८. नैते मूको.

वेङ्कट० सः एषः मित्रावरुणौ! मनुष्याणां द्रष्टा द्यावापृथिवी लक्षीकृत्य उत् एति सूर्यः गच्छन् विश्वस्य स्थावरस्य जङ्गमस्य च गोपायिता ऋजूनि मनुष्येषु कुटिलानि च कर्माणि पश्यन्[1] ॥ २ ॥

अयु॑क्त स॒प्त ह॒रितः॑ स॒धस्था॒द् या ईं॒ वह॑न्ति॒ सूर्यं॑ घृ॒ताचीः॑ ।
धामा॑नि मित्रावरुणा यु॒वाकुः॒ सं यो यू॒थेव॒ जनि॑मानि॒ चष्टे॑ ॥ ३ ॥

अयु॑क्त । स॒प्त । ह॒रितः॑ । स॒धऽस्था॑त् । याः । ई॒म् । वह॑न्ति । सूर्य॑म् । घृ॒ताचीः॑ ।
धामा॑नि । मि॒त्रा॒व॒रु॒णा॒ । यु॒वाकुः॑ । सम् । यः । यू॒थाऽइ॑व । जनि॑मानि । चष्टे॑ ॥ ३ ॥

वेङ्कट० रथे युक्तवान् सप्त वडवाः सहस्थाने[2], याः एनम् वहन्ति सूर्यम् उदकमञ्चन्त्यो वृष्टिमुत्पादयन्त्यः । धामानि स्थानानि त्रीन् लोकान् हे मित्रावरुणौ! यः युवां कामयमानः सम् पश्यति तेषु जातानि च भूतानि यूथानीव गवां गोपालः ॥ ३ ॥

उद् वां॑ पृ॒क्षासो॒ मधु॑मन्तो अस्थु॒रा सूर्यो॑ अरुहच्छु॒क्रमर्णः॑ ।
यस्मा॑ आदि॒त्या अध्व॑नो॒ रद॑न्ति मि॒त्रो अ॑र्य॒मा वरु॑णः स॒जोषाः॑ ॥ ४ ॥

उत् । वा॒म् । पृ॒क्षासः॑ । मधु॑ऽमन्तः । अ॒स्थुः॒ । आ । सूर्यः॑ । अ॒रु॒ह॒त् । शु॒क्रम् । अर्णः॑ ।
यस्मै॑ । आ॒दि॒त्याः । अध्व॑नः । रद॑न्ति । मि॒त्रः । अ॒र्य॒मा । वरु॑णः । स॒ऽजोषाः॑ ॥ ४ ॥

वेङ्कट० उत् अस्थुः युवाभ्याम् अन्नानि आज्यवन्ति । [3]आ अरुहत् अन्तरिक्षम् तत्स्थम्[3] शुक्रम् उदकम् सूर्यः । तत्रस्थानां ह्युदकानां मध्येन सूर्यो गच्छत्यत एव आप[4] इत्यन्तरिक्षनाम ( तु. निघ १,३ ) भवति । यस्मै सूर्याय अन्ये आदित्याः मार्गान्[5] विलिखन्ति, मित्रः अर्यमा वरुणः च ताभ्यां सङ्गतः सूर्यः । आदित्या रदन्तीति ॥ ४ ॥

इ॒मे चेता॑रो॒ अनृ॑तस्य॒ भूरे॒र्मि॒त्रो अ॑र्य॒मा वरु॑णो॒ हि सन्ति॑ ।
इ॒म ऋ॒तस्य॑ वावृधुर्दुरो॒णे श॒ग्मासः॑ पु॒त्रा अदि॑ते॒रद॑ब्धाः ॥ ५ ॥

इ॒मे । चेता॑रः । अनृ॑तस्य । भूरेः॑ । मि॒त्रः । अ॒र्य॒मा । वरु॑णः । हि । सन्ति॑ ।
इ॒मे । ऋ॒तस्य॑ । व॒वृ॒धुः॒ । दु॒रो॒णे । श॒ग्मासः॑ । पु॒त्राः । अदि॑तेः । अद॑ब्धाः ॥ ५ ॥

वेङ्कट० इमे ज्ञातारः पापस्य बहुनः[6] मित्रः अर्यमा वरुणः हि भवन्ति । [7]इमे एव[7] च यज्ञस्य गृहे वर्धन्ते शक्ताः अदितेः पुत्राः अहिंसिताः ॥ ५ ॥

इ॒मे मि॒त्रो वरु॑णो दू॒ळभा॑सोऽचे॒तसं॑ चिच्चितयन्ति॒ दक्षैः॑ ।
अपि॒ क्रतुं॑ सु॒चेत॑सं॒ वत॑न्तस्ति॒रश्चि॒दंहः॑ सु॒पथा॑ नयन्ति ॥ ६ ॥

---

१. पश्यत् ल लभ. २. स्यस्थानो मूको. ३-३. अन्तरिक्षम् आ अरुहत् तत्थं मूको. ४. अप मूको. ५. मार्गात् मूको. ६. °हिनों वि[2] अ[1]; °हिनो ल लभ. ७-७. म ए° ल लभ अ[1]; स ए° वि[2].

इ॒मे । मि॒त्रः । वरु॑णः । दुः॒ऽदभा॑सः । अ॒चे॒तस॑म् । चि॒त् । चि॒त॒य॒न्ति॒ । दक्षैः॑ ।
अपि॑ । क्रतु॑म् । सु॒ऽचेत॑सम् । वत॑न्तः । ति॒रः । चि॒त् । अंहः॑ । सु॒ऽपथा॑ । न॒य॒न्ति॒ ॥ ६ ॥

**वेङ्कट०** इमे मित्रः वरुणः च अर्यमा च दम्भितुमशक्याः[1] अज्ञमपि पुरुषं चेतयन्ति[2] स्वसामर्थ्यैः। अपि च कर्म सुप्रज्ञानम् भजमानाः तिरः नयन्ति च पापम्, स्तोतॄन् शोभनेन मार्गेण ॥ ६ ॥

[3]इति पञ्चमाष्टके पञ्चमाध्याये प्रथमो वर्गः[3] ॥

इ॒मे दि॒वो अनि॑मिषा पृथि॒व्याश्चि॑कि॒त्वांसो॑ अचे॒तसं॑ नयन्ति ।
प्र॒व्रा॒जे चि॑न्न॒द्यो॑ गा॒धम॑स्ति पा॒रं नो॑ अ॒स्य वि॑ष्पि॒तस्य॑ पर्ष॑न् ॥ ७ ॥

इ॒मे । दि॒वः । अनि॑ऽमिषा । पृ॒थि॒व्याः । चि॒कि॒त्वांसः॑ । अ॒चे॒तस॑म् । न॒य॒न्ति॒ ।
प्र॒ऽव्रा॒जे । चि॒त् । न॒द्यः॑ । गा॒धम् । अ॒स्ति॒ । पा॒रम् । नः॒ । अ॒स्य । वि॒ष्पि॒तस्य॑ । प॒र्ष॒न् ॥ ७ ॥

**वेङ्कट०** इमे[4] द्युलोकस्य अनिमेषेण पश्यन्तः अस्याश्च पृथिव्याः ज्ञातारः अज्ञं मनुष्यं स्तोतारं नयन्ति[5]। प्रव्राजो गमनमार्गः उदकस्य, तत्र चास्याः नद्याः स्थलं विद्यते। तस्मात् 'सुतरेयं नदी' भवताम्। तथा सति पारम् अस्य प्रवृद्धस्योदकस्य (तु. या ६,२०) नयन्त्विति[7] काञ्चन नदीमुत्तितीर्षुराहेति ॥७॥

यद् गो॒पाव॒दिति॒ः शर्म॑ भ॒द्रं मि॒त्रो यच्छ॑न्ति॒ वरु॑णः सु॒दासे॑ ।
तस्मि॒न्ना तो॒कं तन॑यं॒ दधा॑ना॒ मा क॑र्म देव॒हेळ॑नं तुरासः ॥ ८ ॥

यत् । गो॒पाव॑त् । अदि॑तिः । शर्म॑ । भ॒द्रम् । मि॒त्रः । यच्छ॑न्ति । वरु॑णः । सु॒ऽदासे॑ ।
तस्मि॑न् । आ । तो॒कम् । तन॑यम् । दधा॑नाः । मा । क॒र्म॒ । दे॒व॒ऽहेळ॑नम् । तु॒रा॒सः॒ ॥ ८ ॥

**वेङ्कट०** यदि गोपनवत् पृथिवी गृहम् भजनीयम् मित्रः वरुणः च प्रयच्छन्ति सुदासे राज्ञे, तस्मिन् वयं पुत्रं तत्पुत्रं च धारयन्तो निदधाना वा[8] लब्धधनाः चौर्यादिकं देवानां 'क्रोधनम् मा करवाम' हे त्वरमाणाः! इति। उत्तरोऽर्धः[10] प्रत्यक्षः ॥ ८ ॥

अव॒ वेदिं॒ होत्रा॑भिर्यजेत॒ रिपः॒ काश्चि॑द् वरुण॒ध्रुतः॒ सः ।
परि॒ द्वेषो॑भिरर्य॒मा वृ॑णक्तू॒रुं सु॒दासे॑ वृषणा उ लो॒कम् ॥ ९ ॥

अव॑ । वेदि॑म् । होत्रा॑भिः । य॒जे॒त॒ । रिपः॑ । काः । चि॒त् । व॒रु॒ण॒ऽध्रुतः॑ । सः ।
परि॑ । द्वेषः॑ऽभिः । अ॒र्य॒मा । वृ॒ण॒क्तु॒ । उ॒रुम् । सु॒ऽदासे॑ । वृ॒ष॒णौ॒ । ऊँ॒ इति॑ । लो॒कम् ॥ ९ ॥

**वेङ्कट०** याः काः चित् दिवो रिपुभूताः वरुणस्य द्रोग्ध्र्यः[11] प्रजाः भवन्ति, तासाम् वेदिम् सः वरुणः

---

१. तदङ्कितम° मूको. २. चोदयन्ति अ' लअ. ३-३. नास्ति मूको. ४. °मे दिवः अ'. ५. °यति मूको. ६-६. °रेऽदीं मूको. ७. नयन्ति ऋत्विति वि' अ'; नयन्त्युन्विति ल लअ. ८. नास्ति वि'. ९-९. तधनं··· वि' अ'; तधन मा कुर्म ल लअ. १०. °रोऽर्धर्चः ल प्रस्तावः. ११. दोग्ध्र्यः मूको.

ऋत्विग्भिः पृथक् करोतु यज्ञोन्मुखान् असुरान् विश्लथयतु वा[1], अर्यमा च परि वृणक्तु द्वेषोभिः क्रोधैः। विस्तीर्णं स्थानं पैजवनाय हे वर्षितारौ! मित्रावरुणौ! कुरुतमिति ॥ ९ ॥

सस्वश्चिद्धि समृतिस्त्वेष्येषामपीच्येन सहसा सहन्ते ।
युष्मद् भिया वृषणो रेजमाना दक्षस्य चिन्महिना मृळता नः ॥ १० ॥

सस्वरिति । चित् । हि । सम्ऽऋतिः । त्वेषी । एषाम् । अपीच्येन । सहसा । सहन्ते ।
युष्मत् । भिया । वृषणः । रेजमानाः । दक्षस्य । चित् । महिना । मृळत । नः ॥१० ॥

वेङ्कट० एषाम् असुराणां जलैः पुरैर्वा तिरोहिता (तु. निघ ३,२५) समृतिः सङ्गतिः सङ्घः त्वेषी दीप्तिमती भवति। तथा अन्तर्हितेन (तु. निघ ३,२५) बलेन अभिभवन्ति सर्वाः प्रजाः। युष्मत् भयेन[2] हे वर्षितारः! कम्पमानाः अपि छिद्रेषु प्रहरन्ति बलस्य महत्त्वेन। तत्र अस्मान् सुखयतेति ॥ १० ॥

यो ब्रह्मणे सुमतिमायजाते वाजस्य सातौ परमस्य रायः ।
सीक्षन्त मन्युं मघवानो अर्य उरु क्षयाय चक्रिरे सुधातु ॥ ११ ॥

यः । ब्रह्मणे । सुऽमतिम् । आऽयजाते । वाजस्य । सातौ । परमस्य । रायः ।
सीक्षन्त । मन्युम् । मघऽवानः । अर्यः । उरु । क्षयाय । चक्रिरे । सुऽधातु ॥ ११ ॥

वेङ्कट० यः ब्राह्मणाय मह्यम् सुमतिम् अन्नस्य परमस्य च धनस्य लाभार्थम् आप्रयच्छति[3] सुदाः[4] पैजवनः, तस्य शत्रोः क्रोधम्[5] तस्य भगाः सहन्ताम् धनवन्तः। तथा विस्तीर्णं शोभनसन्धानं[6] च स्थानम् आवासाय कुर्वन्त्विति ॥ ११ ॥

इयं देव पुरोहितिर्युवभ्यां यज्ञेषु मित्रावरुणावकारि ।
विश्वानि दुर्गा पिपृतं तिरो नो यूयं पात स्वस्तिभिः सदा नः ॥ १२ ॥

इयम् । देवा । पुरःऽहितिः । युवऽभ्याम् । यज्ञेषु । मित्रावरुणौ । अकारि ।
विश्वानि । दुःऽगा । पिपृतम् । तिरः । नः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥१२॥

वेङ्कट० हे देवौ! मित्रावरुणौ! युवाभ्याम् इयम् पुरोहितिः पुरोनिधानयोग्या स्तुतिः यज्ञेषु अकारि। विश्वानि दुर्गाणि अतिपारयतम्[7] अस्मान्[8] ॥ १२ ॥

[9]इति पञ्चमाष्टके पञ्चमाध्याये द्वितीयो वर्गः[9] ॥

१. ना मूको. २. बलेन अ[1]. ३. °च्छन्ति मूको. ४. सुदा मूको. ५. क्रोधः अ[1].
६. °भनं स° वि[2] ल; °भना स° अ[1] लभ. ७. °वारयतम् ल लभ; °वारयत अ[1]; °वारयतः वि[2].
८. तस्माद् मूको. ९-९. नास्ति मूको.

[ ६१ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । मित्रावरुणौ देवता । त्रिष्टुप् छन्दः[1] ।

उद् वां चक्षुर्वरुण सुप्रतीकं देवयोरेति सूर्यस्ततन्वान् ।
अभि यो विश्वा भुवनानि चष्टे स मन्युं मर्त्येष्वा चिकेत ॥ १ ॥

उत् । वाम् । चक्षुः । वरुणा । सुऽप्रतीकम् । देवयोः । एति । सूर्यः । ततन्वान् ।
अभि । यः । विश्वा । भुवनानि । चष्टे । सः । मन्युम् । मर्त्येषु । आ । चिकेत ॥ १ ॥

**वेङ्कट०** उत् एति युवयोः देवयोः तेजः सुखमन्तरिक्षे विस्तारयन् सूर्यः हे मित्रावरुणौ! । यः सूर्यः सर्वाणि भुवनानि अभि पश्यति, [2]सः मरणशीलेषु[2] मनः आ चिकेत तेजसा प्रज्ञापयति ॥ १ ॥

प्र वां स मित्रावरुणावृतावा विप्रो मन्मानि दीर्घश्रुदियर्ति ।
यस्य ब्रह्माणि सुक्रतू अवाथ आ यत् क्रत्वा न शरदः पृणैथे ॥ २ ॥

प्र । वाम् । सः । मित्रावरुणौ । ऋतऽवा । विप्रः । मन्मानि । दीर्घऽश्रुत् । इयर्ति ।
यस्य । ब्रह्माणि । सुक्रतू इति सुऽक्रतू । अवाथः । आ । यत् । क्रत्वा । न । शरदः । पृणैथे इति ॥२॥

**वेङ्कट०** प्र ईरयति[3] [4]वाम् सः[4] मेधावी बहुश्रुतः वसिष्ठः यज्ञवान् हे मित्रावरुणौ! स्तोत्राणि, यस्य स्तोत्राणि हे सुप्रज्ञानौ! रक्षथः, यानि च स्तोत्राणि कृष्यादिना कर्मणा शरदः इव ओषधीभिः कामैः आ पूरयथः[5] ॥ २ ॥

प्रोरोर्मित्रावरुणा पृथिव्याः प्र दिव ऋष्वाद् बृहतः सुदानू ।
स्पशो दधाथे ओषधीषु विक्ष्वृधग्यतो अनिमिषं रक्षमाणा ॥ ३ ॥

प्र । उरोः । मित्रावरुणा । पृथिव्याः । प्र । दिवः । ऋष्वात् । बृहतः । सुदानू इति सुऽदानू ।
स्पशः । दधाथे इति । ओषधीषु । विक्षु । ऋधक् । यतः । अनिऽमिषम् । रक्षमाणा ॥ ३ ॥

**वेङ्कट०** प्रकर्षेण दधाथे हे मित्रावरुणौ! सुदानौ! विस्तीर्णायाः पृथिव्याः दिवः च महतः दर्शनीयाद् उदितौ तेजांसि ओषधीषु मनुष्येषु च पृथक्पृथक्, स्तुतिभिः अभिगच्छतो मनुष्यान् अनिमेषम् रक्षमाणाविति ॥ ३ ॥

शंसा मित्रस्य वरुणस्य धाम शुष्मो रोदसी बद्बधे महित्वा ।
अयन् मासा अयज्वनामवीराः प्र यज्ञमन्मा वृजनं तिराते ॥ ४ ॥

---

१-१. नास्ति मूको. २-२. समानशीलस्थं वि[2]; सः मनशीलस्थम् अ[1] ल लभ. ३. °ति प्रेरयति ल लभ. ४-४. वां सः वां सः लभ; वां सः प्रेरयति वि[2] अ[2]. ५. °रयथ मूको.

शंसं । मित्रस्य । वरुणस्य । धाम । शुष्मः । रोदसी इति । बद्बधे । महिऽत्वा ।
अयन् । मासाः । अयज्वनाम् । अवीराः । प्र । यज्ञऽमन्मा । वृजनम् । तिराते ॥ ४ ॥

वेङ्कट० स्तुहि मित्रावरुणयोः [1]तेजः । बलम् एतयोर्महत्त्वेन[1] द्यावापृथिव्यौ बाधते । गच्छन्तु मासाः अयज्वनाम् अनुत्पादितपुत्राः । प्र वर्धयतु [2]यज्ञबुद्धिः बलमिति[2] ॥ ४ ॥

अमूरा विश्वा वृषणाविमा वां न यासु चित्रं ददृशे न यक्षम् ।
द्रुहः सचन्ते अनृता जनानां न वां निण्यान्यचिते अभूवन् ॥ ५ ॥

अमूरा । विश्वा । वृषणौ । इमाः । वाम् । न । यासु । चित्रम् । ददृशे । न । यक्षम् ।
द्रुहः । सचन्ते । अनृता । जनानाम् । न । वाम् । निण्यानि । अचिते । अभूवन् ॥ ५ ॥

वेङ्कट० युवयोः इमानि विश्वानि भूतानि अमूढानि हे वृषणौ !, इमाः च दिशः, यासु दिक्षु स्थितम् चित्रम् नानारूपम् अद्भुतं[3] च भूतं मनुष्यैर्न दृश्यते । जनानाम् द्रोग्धारः पापानि सेवन्ते । तत्र न युवयोः अन्तर्हितानि कानिचित् पापानि अभवन् अप्रज्ञाते देशे ॥ ५ ॥

समु वां यज्ञं महयं नमोभिर्हुवे वां मित्रावरुणा सबाधः ।
प्र वां मन्मान्यृचसे नवानि कृतानि ब्रह्म जुजुषन्निमानि ॥ ६ ॥

सम् । ॐ इति । वाम् । यज्ञम् । महयम् । नमःऽभिः । हुवे । वाम् । मित्रावरुणा । सऽबाधः ।
प्र । वाम् । मन्मानि । ऋचसे । नवानि । कृतानि । ब्रह्म । जुजुषन् । इमानि ॥ ६ ॥

वेङ्कट० सम् पूजयामि युवयोः यज्ञम् अहं हविर्भिः । हुवे च वाम् हे मित्रावरुणौ ! बाधासहितः । प्र सेवन्ताम् वाम् मननीयानि अर्चनार्थम् नवानि कृतानि स्तोत्राणि इमानि ॥ ६ ॥

इयं देव पुरोहितिर्युवभ्यां यज्ञेषु मित्रावरुणावकारि ।
विश्वानि दुर्गा पिपृतं तिरो नो यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

इयम् । देवा । पुरःऽहितिः । युवऽभ्याम् । यज्ञेषु । मित्रावरुणौ । अकारि ।
विश्वानि । दुःऽगा । पिपृतम् । तिरः । नः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

वेङ्कट० पूर्वं व्याख्याता ( ऋ ७,६०,१२ द्र. ) ॥ ७ ॥

[4]इति पञ्चमाष्टके पञ्चमाध्याये तृतीयो वर्गः[4] ॥

---

१-१. °जयोर्ब° मूको; °जः ययोर्ब° ल प्रस्तावः. २. यज्ञबलबुद्धि° वि[२] अ[१]. ३. उद्भूतं ल लभ.
४-४. नास्ति मूको.

[ ६२ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । आद्यानां तिसृणां सूर्यो देवता, शिष्टानां मित्रावरुणौ । त्रिष्टुप् छन्दः[1] ।

उत् सूर्यो बृहदर्चींष्यश्रेत् पुरु विश्वा जनिम मानुषाणाम् ।
समो दिवा ददृशे रोचमानः क्रत्वा कृतः सुकृतः कर्तृभिर्भूत् ॥ १ ॥

उत् । सूर्यः । बृहत् । अर्चींषि । अश्रेत् । पुरु । विश्वा । जनिम । मानुषाणाम् ।
समः । दिवा । ददृशे । रोचमानः । क्रत्वा । कृतः । सुऽकृतः । कर्तृऽभिः । भूत् ॥ १ ॥

**वेङ्कट०** उत् अश्रेत् प्राप सूर्यः महान्ति अर्चींषि पुरूणि च जातानि सर्वाणि मानुषाणाम् । समः[2] एव दिवा दृश्यते दीप्यमानः । 'तस्मात् सर्व एव मन्यते मां प्रति उदगात्' ( तै ६,५,४,२ ) इति ब्राह्मणम् । उदिते च सूर्ये कर्तृभिः कृतः अथ[3] प्रज्ञानेन तेजसा वा प्रादुर्भूतेन सुकृतः भवति । रात्रौ हि कृतं दुष्कृतं भवति ॥ १ ॥

स सूर्य प्रति पुरो न उद् गा एभिः स्तोमेभिरेतशेभिरेवैः ।
प्र नो मित्राय वरुणाय वोचोऽनागसो अर्यम्णे अग्नये च ॥ २ ॥

सः । सूर्य । प्रति । पुरः । नः । उत् । गाः । एभिः । स्तोमेभिः । एतशेभिः । एवैः ।
प्र । नः । मित्राय । वरुणाय । वोचः । अनागसः । अर्यम्णे । अग्नये । च ॥ २ ॥

**वेङ्कट०** सः हे सूर्य ! त्वम् अस्माकम् पुरः[4] प्रति उत् अगाः[5] एभिः स्तोमेभिः मया क्रियमाणैः [6]एतशैः च अश्वैः[6] गन्तृभिः सह । उदितः[7] च सन् अस्मान् मित्रादिभ्यः प्र ब्रूहि अपापान् ॥ २ ॥

वि नः सहस्रं शुरुधो रदन्त्वृतावानो वरुणो मित्रो अग्निः ।
यच्छन्तु चन्द्रा उपमं नो अर्कमा नः कामं पूपुरन्तु स्तवानाः ॥ ३ ॥

वि । नः । सहस्रम् । शुरुधः । रदन्तु । ऋतऽवानः । वरुणः । मित्रः । अग्निः ।
यच्छन्तु । चन्द्राः । उपऽमम् । नः । अर्कम् । आ । नः । कामम् । पूपुरन्तु । स्तवानाः ॥ ३ ॥

**वेङ्कट०** वि लिखन्तु भिन्नाग्राः कुर्वन्तु अस्माकं बह्वीः, ओषधीः शुचो रोधयित्रीः, यज्ञवन्तः वरुणः मित्रः अग्निः । प्र यच्छन्तु च ह्लादकाः अस्मभ्यम् उपमानभूतम् अन्नम् । आ पूरयन्तु च अस्माकं स्तूयमानाः कामम् ॥ ३ ॥

द्यावाभूमी अदिते त्रासीथां नो ये वां जज्ञुः सुजनिमान ऋष्वे ।
मा हेळे भूम वरुणस्य वायोर्मा मित्रस्य प्रियतमस्य नृणाम् ॥ ४ ॥

---

१-१. नास्ति मूको. २. समा मूको. ३. अत्थ मूको. ४. पुनः मूको. ५. °गात् मूको.
६-६. एतशोश्वाभि वि[2]; 'शैः ··· अ'; °शैः श्वाश्वैः ल लभ. ७. अदितिः ल लभ.

द्यावाभूमी इति । अदिते । त्रासीथाम् । नः । ये । वाम् । जज्ञुः । सुऽजनिमानः । ऋष्वे इति ।
मा । हेळे । भूम । वरुणस्य । वायोः । मा । मित्रस्य । प्रियऽतमस्य । नृणाम् ॥ ४ ॥

**वेङ्कट०** उभे द्यावाभूमी रक्षेथाम् अस्मान्। तत्र विशेषेण 'भूमिः मां' त्रायते । अदिते! इति त्वं विशेषेण त्रायस्व इति। ये वाम् ज्ञातवन्तः शोभनजन्मानः हे दर्शनीये!। मा क्रोधे भूम वरुणस्य वायोः च मित्रस्य नृणाम् प्रियतमस्य इति ॥ ४ ॥

प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा ॥ ५ ॥

प्र । बाहवा । सिसृतम् । जीवसे । नः । आ । नः । गव्यूतिम् । उक्षतम् । घृतेन ।
आ । नः । जने । श्रवयतम् । युवाना । श्रुतम् । मे । मित्रावरुणा । हवा । इमा ॥ ५ ॥

**वेङ्कट०** प्र सारयतम् बाहू जीवनाय अस्माकम्। गोमार्गम् च अस्माकम् उदकेन आ सिञ्चतम्। आ श्रावयतम् च अस्मान् जनेषु हे युवानौ!। शृणुतम् च हे मित्रावरुणौ! मम इमानि स्तोत्राणि ॥ ५ ॥

नू मित्रो वरुणो अर्यमा नस्त्मने तोकाय वरिवो दधन्तु ।
सुगा नो विश्वा सुपथानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

नु । मित्रः । वरुणः । अर्यमा । नः । त्मने । तोकाय । वरिवः । दधन्तु ।
सुऽगा । नः । विश्वा । सुऽपथानि । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

**वेङ्कट०** क्षिप्रम् मित्रः वरुणः अर्यमा च अस्माकं आत्मने[2] पुत्राय च धनं प्रयच्छन्तु। सुगानि अस्माकं विश्वानि स्थानानि भवन्तु ॥ ६ ॥

[1]इति पञ्चमाष्टके पञ्चमाध्याये चतुर्थो वर्गः[1] ॥

[ ६३ ]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः। आद्यादिचतुर्थ्यन्तानां सूर्यो देवता, पञ्चम्याः सूर्य-मित्रावरुणाः, षष्ठ्या मित्रावरुणौ अर्यमा च। त्रिष्टुप् छन्दः[3]।

उद्वेति सुभगो विश्वचक्षाः साधारणः सूर्यो मानुषाणाम् ।
चक्षुर्मित्रस्य वरुणस्य देवश्चर्मेव यः समविव्यक् तमांसि ॥ १ ॥

उत् । ऊँ इति । एति । सुऽभगः । विश्वऽचक्षाः । साधारणः । सूर्यः । मानुषाणाम् ।
चक्षुः । मित्रस्य । वरुणस्य । देवः । चर्मऽइव । यः । सम्ऽअविव्यक् । तमांसि ॥ १ ॥

---

१-१. भूमिमा मूको. २. 'त्मनः अ' ३-३. नास्ति मूको.

**वेङ्कट०** उत् एति एव सुभगः विश्वस्य द्रष्टा समानः सूर्यः मनुष्याणाम्। मित्रावरुणयोः चक्षुः देवः। यः चर्म इव[1] पृथिव्यां[2] [3]विस्तृतानि अन्तरिक्ष्याणि[3] [4]च तमांसि[4] संपिण्डयति ॥ १ ॥

उद्वे॑ति प्रस॒वीता जना॑नां म॒हान् के॒तुर॑र्ण॒वः सूर्य॑स्य ।
स॒मा॒नं च॒क्रं प॑र्या॒विवृ॑त्स॒न् यदे॑त॒शो वह॑ति धू॒र्षु यु॒क्तः ॥ २ ॥

उत्। ॐ इति॑। ए॒ति॒। प्र॒ऽस॒वि॒ता। जना॑नाम्। म॒हान्। के॒तुः। अ॒र्ण॒वः। सूर्य॑स्य।
स॒मा॒नम्। च॒क्रम्। प॒रि॒ऽआ॒वि॒वृ॑त्सन्। यत्। ए॒त॒शः। वह॑ति। धूः॒ऽसु। यु॒क्तः ॥ २ ॥

**वेङ्कट०** उत् एति प्रेरयिता जनानाम् महान् प्रज्ञापयिता रश्मिः उदकवान् सूर्यस्य। समवृत्तम् चक्रम् पर्यावर्तयितुमिच्छन् यस्मिन् काले[5] एतशः[6] वहति रथस्य धूर्षु[7] युक्तः ॥ २ ॥

वि॒भ्राज॑मान उ॒षसा॑मु॒पस्था॑द् रे॒भैरुदे॑त्यनु॒म॒द्यमा॑नः ।
ए॒ष मे॑ दे॒वः स॑वि॒ता च॑च्छन्द॒ यः स॑मा॒नं न प्र॑मि॒नाति॒ धाम॑ ॥ ३ ॥

वि॒ऽभ्राज॑मानः। उ॒षसा॑म्। उ॒पऽस्था॑त्। रे॒भैः। उत्। ए॒ति॒। अ॒नु॒ऽम॒द्यमा॑नः।
ए॒षः। मे॒। दे॒वः। स॒वि॒ता। च॒च्छ॒न्द॒। यः। स॒मा॒नम्। न। प्र॒ऽमि॒नाति॑। धाम॑ ॥ ३ ॥

**वेङ्कट०** विभ्राजमानः उषसाम् उत्सङ्गात् स्तोतृभिः उत् एति अनुमाद्यमानः। एषः मे देवः सविता उपच्छन्दनं करोति, यः समानम् सर्वेषां तेजः न हिनस्ति[8] ॥ ३ ॥

दि॒वो रु॒क्म उ॑रु॒चक्षा॒ उदे॑ति दू॒रेअ॑र्थस्त॒रणि॒र्भ्राज॑मानः ।
नू॒नं जनाः॒ सूर्ये॑ण॒ प्रसू॑ता॒ अय॒न्नर्था॑नि कृ॒णव॒न्नपां॑सि ॥ ४ ॥

दि॒वः। रु॒क्मः। उ॒रु॒ऽचक्षाः॑। उत्। ए॒ति॒। दू॒रेऽअ॑र्थः। त॒रणिः॑। भ्राज॑मानः।
नू॒नम्। जनाः॑। सूर्ये॑ण। प्र॒ऽसू॑ताः। अय॑न्। अर्था॑नि। कृ॒णव॑न्। अपां॑सि ॥ ४ ॥

**वेङ्कट०** दिवः रोचमानः महातेजाः उत् एति दूरे गमनं यस्य भवत्युदितमात्रस्य क्षिप्रगतिः भ्राजमानः। इदानीम् जनाः सूर्येण प्रसूताः प्राप्नुवन्ति गन्तव्यानि स्थानानि, कुर्वन्ति च कर्माणि ॥ ४ ॥

यत्रा॑ च॒क्रुर॒मृता॑ गा॒तुम॑स्मै श्ये॒नो न दीय॒न्नन्वे॑ति॒ पाथः॑ ।
प्रति॑ वां॒ सूर॒ उदि॑ते विधेम॒ नमो॑भिर्मित्रावरु॒णोत ह॒व्यैः ॥ ५ ॥

यत्र॑। च॒क्रुः। अ॒मृताः॑। गा॒तुम्। अ॒स्मै॒। श्ये॒नः। न। दीय॑न्। अनु॑। ए॒ति॒। पाथः॑।
प्रति॑। वा॒म्। सूरे॑। उत्ऽइ॑ते। वि॒धे॒म॒। नमः॑ऽभिः। मि॒त्रा॒व॒रु॒णा॒। उ॒त। ह॒व्यैः ॥ ५ ॥

---

१. इव मेव वि॰; इममेव अ॰; चमेव ल. २. नास्ति ल लभ. ३-३. विस्तृतान्तरी॰ मूको; विस्तृतान्यान्तरी॰ ल प्रस्तावः. ४-४. तत् पि॰ मूको; मम तमां॰ मूको. ५. काल मूको. ६. विनाशो वि॰ अ॰; विनश ल लभ. ७. सुष्ठु वि॰ अ॰; सक्षु ल लभ. ८. ॰रित मिव वि॰ अ॰ लभ.

वेङ्कट० यत्र चक्रुः देवाः मार्गम् अस्मै तत् अन्तरिक्षम् ( तु. या ६,७ ) श्येनः इव गच्छन् अनुगच्छति । प्रति विधेम युवयोः सूर्येऽस्मिन् उदिते नमोभिः, अपि च हव्यैः च मित्रावरुणौ! इति ॥ ५ ॥

नू मित्रो वरुणो अर्यमा नस्त्मने तोकाय वरिवो दधन्तु ।
सुगा नो विश्वा सुपथानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

नु । मित्रः । वरुणः । अर्यमा । नः । त्मने । तोकाय । वरिवः । दधन्तु ।
सुऽगा । नः । विश्वा । सुऽपथानि । सन्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

वेङ्कट० पूर्वं व्याख्याता ( ऋ ७,६२,६ ) ॥ ६ ॥

[1]इति पञ्चमाष्टके पञ्चमाध्याये पञ्चमो वर्गः[1] ॥

[ ६४ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । मित्रावरुणौ देवता । त्रिष्टुप् छन्दः[1] ।

दिवि क्षयन्ता रजसः पृथिव्यां प्र वां घृतस्य निर्णिजो ददीरन् ।
हव्यं नो मित्रो अर्यमा सुजातो राजा सुक्षत्रो वरुणो जुषन्त ॥ १ ॥

दिवि । क्षयन्ता । रजसः । पृथिव्याम् । प्र । वाम् । घृतस्य । निःऽनिजः । ददीरन् ।
हव्यम् । नः । मित्रः । अर्यमा । सुऽजातः । राजा । सुऽक्षत्रः । वरुणः । जुषन्त ॥ १ ॥

वेङ्कट० दिवि निवसन्तौ [2]उदकस्य अर्थम्[2] पृथिव्याम् च वाम् आज्यस्य हूयमानस्य [3]निर्णिजः स्तोकाः[3] प्रकर्षेण धारयेयुः । हव्यम् अस्माकम् मित्रः अर्यमा च शोभनजननः राजा सुधनः वरुणः च सेवन्ताम् ॥ १ ॥

आ राजाना मह ऋतस्य गोपा सिन्धुपती क्षत्रिया यातमर्वाक् ।
इळां नो मित्रावरुणोत वृष्टिमव दिव इन्वतं जीरदानू ॥ २ ॥

आ । राजाना । महः । ऋतस्य । गोपा । सिन्धुपती इति सिन्धुऽपती । क्षत्रिया । यातम् । अर्वाक् ।
इळाम् । नः । मित्रावरुणा । उत । वृष्टिम् । अव । दिवः । इन्वतम् । जीरदानू इति जीरऽदानू ॥ २ ॥

वेङ्कट० आ यातम् हे राजानौ! महतः सत्यस्य गोपायितारौ! सिन्धूनां स्वामिनौ! जातितः क्षत्रियौ![4] अभिमुखम् । अन्नम् नः [5]मित्रावरुणौ! अपि च वृष्टिम्[5] द्युलोकाद् अपक्षारयतं[6] क्षिप्रदानौ! ॥ २ ॥

मित्रस्तन्नो वरुणो देवो अर्यः प्र साधिष्ठेभिः पथिभिर्नयन्तु ।
ब्रवद् यथा न आदरिः सुदास इषा मदेम सह देवगोपाः ॥ ३ ॥

---

१-१. नास्ति मूको. २. °कार्थ अ°. ३-३. °र्णीजस्तो° मूको. ४. क्षत्रियात् मूको. ५-५. °रुणे वचि च विष्टि वि° अ° ल; °रुणे वचि चि विष्टि लभ. ६. °रयितं मूको.

मित्रः । तत् । नः । वरुणः । देवः । अर्यः । प्र । साधिष्ठेभिः । पथिऽभिः । नयन्तु ।
ब्रवत् । यथा । नः । आत् । अरिः । सुऽदासे । इषा । मदेम । सह । देवऽगोपाः ॥ ३ ॥

**वेङ्कट०** मित्रादयः अस्मान् साधुतमैः मार्गैः तथा प्र नयन्तु, ब्रूयात् यथा अस्मान् अभिगमनानन्तरम् [1]एव अरिः गन्ता[1] द्वाराधिकृतः अन्तःपुरस्थिताय[2] सुदासे प्राप्तान्। अन्नेन मदेम पुत्रपौत्रैः सह देवैः रक्ष्यमाणाः ॥ ३ ॥

यो वां गर्तं मनसा तक्षदेतमूर्ध्वां धीतिं कृणवद् धारयच्च ।
उक्षेथां मित्रावरुणा घृतेन ता राजाना सुक्षितीस्तर्पयेथाम् ॥ ४ ॥

यः । वाम् । गर्तम् । मनसा । तक्षत् । एतम् । ऊर्ध्वाम् । धीतिम् । कृणवत् । धारयत् । च ।
उक्षेथाम् । मित्रावरुणा । घृतेन । ता । राजाना । सुऽक्षितीः । तर्पयेथाम् ॥ ४ ॥

**वेङ्कट०** यः वाम् रथम् ( तु. या ३,५ ) एतम्[3] मनसा स्तोत्रपरेण [4]संतक्ष्णोति स्तौतीत्यर्थः[4]। उन्मुखां बुद्धिं करोति स्तुत्यर्थम्, धारयति च निश्चलां करोति। तस्य स्वभूताः सुनिवासाः प्रजाः उदकेन मित्रावरुणा![5] उक्षेथाम्, तौ हे राजानौ! तर्पयेथाम् च ॥ ४ ॥

एष स्तोमो वरुण मित्र तुभ्यं सोमः शुक्रो न वायवेऽयामि ।
अविष्टं धियो जिगृतं पुरंधीर्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

एषः । स्तोमः । वरुण । मित्र । तुभ्यम् । सोमः । शुक्रः । न । वायवे । अयामि ।
अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** अयम् स्तोमः वरुण! मित्र! तुभ्यम् अहर्मुखे सोमः इव[6] दीप्तः[7] वायवे अस्माभिः अयामि यतः[8] कृतः। अविष्टम्[9] [10]धियः, जिगृतम्[10] पुरंधीः[9] ॥ ५ ॥

[11]इति पञ्चमाष्टके पञ्चमाध्याये षष्ठो वर्गः[11] ॥

## [ ६५ ]

[11]वसिष्ठो मैत्रावरुणिर्ऋषिः। मित्रावरुणौ देवता। त्रिष्टुप् छन्दः[11]।

प्रति वां सूर उदिते सूक्तैर्मित्रं हुवे वरुणं पूतदक्षम् ।
ययोरसुर्य१मक्षितं ज्येष्ठं विश्वस्य यामन्नाचिता जिगत्नु ॥ १ ॥

प्रति । वाम् । सूरे । उत्ऽइते । सुऽउक्तैः । मित्रम् । हुवे । वरुणम् । पूतऽदक्षम् ।
ययोः । असुर्यम् । अक्षितम् । ज्येष्ठम् । विश्वस्य । यामन् । आऽचिता । जिगत्नु ॥ १ ॥

---

१. एव…वि[1] अ[1]; एव…गं° ल लअ.　२. पुरस्थाय वि[2].　३. एत वि[2] अ[1] ल; एतः लअ.
४. संस्तौति स्तौतीत्यर्थः वि[2]; संस्तरोति स्तौतीत्यर्थः अ[1].　५. नास्ति मूको.　६. न वि[2] अ[1].
७. नास्ति वि[2] अ[1].　८. इत वि[2] अ[1].　९. अत्रशिष्ट ल लअ.　१०-१०. इति कृतम् वि[2] अ[1]; तिकृतम् लअ; मियः° ल.　११-११. नास्ति मूको.

वेङ्कट० प्रति हुवे[1] वाम् उदिते सूर्ये सूक्तैः मित्रम् वरुणम् च शुद्धबलम्, [2]ययोः असुराणां हन्तृ बलम् अक्षीणम् प्रशस्तम् विश्वस्य अपि अभिगमने सङ्ख्ये च जयशीलं भवति[2] ॥ १ ॥

ता हि देवानामसुरा तावर्या ता नः क्षितीः करतमूर्जयन्तीः ।
अश्याम मित्रावरुणा वयं वां द्यावा च यत्र पीपयन्नहा च ॥ २ ॥

ता । हि । देवानाम् । असुरा । तौ । अर्या । ता । नः । क्षितीः । करतम् । ऊर्जयन्तीः ।
अश्याम । मित्रावरुणा । वयम् । वाम् । द्यावा । च । यत्र । पीपयन् । अहा । च ॥ २ ॥

वेङ्कट० तौ हि देवानाम् बलिनौ । तौ ईश्वरौ [2]तौ नः प्रजाः कुरुतम् बलं[2] कुर्वाणाः । प्राप्नुयाम हे मित्रावरुणौ! वयम् वाम्, यस्यां प्राप्तौ सत्याम् अस्मान् द्यावापृथिव्यौ अहानि च वर्धयन्ति ॥ २ ॥

ता भूरिपाशावनृतस्य सेतू दुरत्येतू रिपवे मर्त्याय ।
ऋतस्य मित्रावरुणा पथा वामपो न नावा दुरिता तरेम ॥ ३ ॥

ता । भूरिऽपाशौ । अनृतस्य । सेतू इति । दुरत्येतू इति दुःऽअत्येतू । रिपवे । मर्त्याय ।
ऋतस्य । मित्रावरुणा । पथा । वाम् । अपः । न । नावा । दुःऽइता । तरेम ॥ ३ ॥

वेङ्कट० तौ बहुतन्ती पापस्य बन्धकौ[3] हिंसितुः[4] मर्त्यानां मनुष्यस्य आक्रमितुम् अशक्यौ सर्वथा बध्नीथ इत्यर्थः । तथाविधौ हे मित्रावरुणौ! युवयोः सत्यस्य मार्गेण उदकानि नावा इव तरेम दुरितानि ॥ ३ ॥

आ नो मित्रावरुणा हव्यजुष्टिं घृतैर्गव्यूतिमुक्षतमिळाभिः ।
प्रति वामत्र वरमा जनाय पृणीतमुद्नो दिव्यस्य चारोः ॥ ४ ॥

आ । नः । मित्रावरुणा । हव्यऽजुष्टिम् । घृतैः । गव्यूतिम् । उक्षतम् । इळाभिः ।
प्रति । वाम् । अत्र । वरम् । आ । जनाय । पृणीतम् । उद्नः । दिव्यस्य । चारोः ॥ ४ ॥

वेङ्कट० आ सिञ्चतम् अस्माकं हे मित्रावरुणौ! युवाभ्यां यत्र हव्यानि सेव्यन्ते तम् इति । एतदेव आह— उदकैः गोमार्गम् इळाभिः अन्नैः घासैः[5] । प्रति यच्छतम् च युवां वरणीयम् उदकम् जनाय । तदेव आह—प्रयच्छतम् उदकं दिव्यं चारु इति । प्रतिभवति युवयोः स्वभूतम्[6] उदकं जनायेति वा ॥ ४ ॥

एष स्तोमो वरुण मित्र तुभ्यं सोमः शुक्रो न वायवेऽयामि ।
अविष्टं धियो जिगृतं पुरंधीर्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

---

१. प्रतिभुव वि[2]; प्रतिभुवे अ[1] ल लअ. २-२. नास्ति वि[2] अ[1]. ३. बलन्ध° मूको. ४. °सितुं मूको. ५. घातैः मूको; घृतैः लप्रस्तावः. ६. स्वस्वभू° मूको.

एषः । स्तोमः । वरुण । मित्र । तुभ्यम् । सोमः । शुक्रः । न । वायवे । अयामि ।
अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** पूर्वं व्याख्याता ( ऋ ७,६४,५ द्र. ) ॥ ५ ॥

'इति पञ्चमाष्टके पञ्चमाध्याये सप्तमो वर्गः' ॥

## [ ६६ ]

'वसिष्ठो मैत्रावरुणिर्ऋषिः । मित्रावरुणौ देवता, चतुर्थ्यादित्रयोदश्यन्तानाम् आदित्याः, चतुर्दश्यादिषोडश्यन्तानां सूर्यः । गायत्री छन्दः, दशम्यादिपञ्चदश्यन्तानां प्रगाथः ( समा बृहत्यः, विषमाः सतोबृहत्यः ), षोडश्याः पुरउष्णिक्' ।

**प्र मित्रयोर्वरुणयोः स्तोमो न एतु शूष्यः । नमस्वान् तुविजातयोः ॥ १ ॥**

प्र । मित्रयोः । वरुणयोः । स्तोमः । नः । एतु । शूष्यः । नमस्वान् । तुविऽजातयोः ॥ १ ॥

**वेङ्कट०** प्र एतु मित्रावरुणयोः अस्मदीयः स्तोमः सुखावहः हविष्मान् बहुजननयोः[2] ॥ १ ॥

**या धारयन्त देवाः सुदक्षा दक्षपितरा । असुर्याय प्रमहसा ॥ २ ॥**

या । धारयन्त । देवाः । सुऽदक्षा । दक्षऽपितरा । असुर्याय । प्रऽमहसा ॥ २ ॥

**वेङ्कट०** यौ[3] अधारयन्[4] देवाः शोभनबलौ दक्षपितरौ बलं रक्षकं ययोः तौ असुर्याय असुराणां स्वभूताय बलाय तत् प्रतिहन्तुं प्रकृष्टतेजसौ इति ॥ २ ॥

**ता नः स्तिपा तनूपा वरुण जरितॄणाम् । मित्र साधयतं धियः ॥ ३ ॥**

ता । नः । स्तिऽपा । तनूऽपा । वरुण । जरितॄणाम् । मित्र । साधयतम् । धियः ॥ ३ ॥

**वेङ्कट०** तौ अस्माकं[6] तनूनां[6] गृहाणां च रक्षकौ हे वरुण ! स्तोतॄणाम् मित्र ! च साधयतम् कर्माणि ॥३॥

**यदद्य सूर उदितेऽनागा मित्रो अर्यमा । सुवाति सविता भगः ॥ ४ ॥**

यत् । अद्य । सूरे । उत्ऽइते । अनागाः । मित्रः । अर्यमा । सुवाति । सविता । भगः ॥ ४ ॥

**वेङ्कट०** यत् अद्य [7]उदिते सूर्ये[7] अनागसः अस्मान् मित्रादयः प्रेरयन्ति । ततः सुखं जीवाम इति वाक्यशेषः ॥ ४ ॥

**सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः । ये नो अंहोऽतिपिप्रति ॥ ५ ॥**

---

१-१. नास्ति मूको. २. बहून् जननयः वि[२]; बहून् जननयोग्यान् अ[१]. ३. या वि[२] अ[१]. ४. अवाधा° वि[२]; अवधा° अ[१] ल; अद्धार° लभ. ५. स्वभूतये वि[२] अ[१]; स्वभूतया ल लभ. ६. …तूनां वि[१]; तूनां अ[१] ल; नां लभ. ७-७. सूर्ये द्योतिते अ[१].

सुप्रऽअवीः । अस्तु । सः । क्षयः । प्र । नु । यामन् ।
सुऽदानवः । ये । नः । अंहः । अतिऽपिप्रति ॥ ५ ॥

वेङ्कट० शोभनरक्षणम् प्र भवतु तत् गृहम् हे शोभनदानाः! भवतां गमने, [1]ये भवन्तः[1] अस्माकम् [2]अंहसः अवृत्तेः[2] अतिपारयन्ति ॥ ५ ॥

[1]इति पञ्चमाष्टके पञ्चमाध्याये अष्टमो वर्गः[1] ॥

उत स्वराजो अदितिरदब्धस्य व्रतस्य ये । महो राजान ईशते ॥ ६ ॥

उत । स्वऽराजः । अदितिः । अदब्धस्य । व्रतस्य । ये । महः । राजानः । ईशते ॥ ६ ॥

वेङ्कट० अपि च स्वराजः मित्रादयः अदितिः[3] च अहिंसितस्य व्रतस्य वर्षणादेः प्रणेतारः ते महान्तः राजानः सर्वेषाम् ईश्वरा भवन्ति ॥ ६ ॥

प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणं रिशादसम् ॥ ७ ॥

प्रति । वाम् । सूरे । उत्ऽइते । मित्रम् । गृणीषे । वरुणम् । अर्यमणम् । रिशादसम् ॥ ७ ॥

वेङ्कट० प्रति स्तौमि । द्विविकरणानां[4] छान्दसी वृत्तिः । वाम् उदिते सूर्ये मित्रावरुणौ अर्यमणम् च हिंसितॄणाम् असितारम् ॥ ७ ॥

राया हिरण्यया मतिरियमवृकाय शवसे । इयं विप्रा मेधसातये ॥ ८ ॥

राया । हिरण्यऽया । मतिः । इयम् । अवृकाय । शवसे । इयम् । विप्रा[5] । मेधऽसातये ॥ ८ ॥

वेङ्कट० धनेन हेतुना हिरण्येच्छया च इयम् स्तुतिः स्तेनवर्जिताय बलाय च । इयम् प्राज्ञयोः मित्रावरुणयोः यज्ञभजनाय च इति ॥ ८ ॥

ते स्याम देव वरुण ते मित्र सूरिभिः सह । इषं स्वश्च धीमहि ॥ ९ ॥

ते । स्याम । देव । वरुण । ते । मित्र । सूरिऽभिः । सह । इषम् । स्व१रिति स्वः । च । धीमहि ॥९॥

वेङ्कट० ते वयं भवाम समृद्धाः हे देव! वरुण! । ते मित्र! स्तोतृभिः पुत्रैः सह स्याम । अन्नम् च सर्वं धारयेम[6] ॥ ९ ॥

बहवः सूरचक्षसोऽग्निजिह्वा ऋतावृधः ।
त्रीणि ये येमुर्विदथानि धीतिभिर्विश्वानि परिभूतिभिः ॥ १० ॥

---

१-१. नास्ति मूको. २-२. अंहसोवृतेः वि[१] अ[१]; °सो वृत्तेः ल लअ. ३. अमितिः ल लअ.
४. °करणाना अ[१]. ५. तु. वैप १,२८७५ d. ६. धारयामः वि[२].

बहवः । सूरऽचक्षसः । अग्निऽजिह्वाः । ऋतऽवृधः ।
त्रीणि । ये । येमुः । विदथानि । धीतिऽभिः । विश्वानि । परिभूतिऽभिः ॥ १० ॥

**वेङ्कट०** बहवः सूर्यदर्शनाः मित्रादयः, तेषां हि सूर्यश्चक्षुः, अग्निजिह्वाः[1] यज्ञस्य वर्धयितारः, ये त्रीणि विदथानि त्रीँल्लोकान् यच्छन्ति कर्मभिः विश्वानि च भूतानि च परिभवनैः ॥ १० ॥

[2]इति पञ्चमाष्टके पञ्चमाध्याये नवमो वर्गः[2] ॥

वि ये दधुः शरदं मासमादहर्यज्ञमक्तुं चादृचम् ।
अनाप्यं वरुणो मित्रो अर्यमा क्षत्रं राजान आशत ॥ ११ ॥

वि । ये । दधुः । शरदम् । मासम् । आत् । अहः । यज्ञम् । अक्तुम् । च । आत् । ऋचम् ।
अनाप्यम् । वरुणः । मित्रः । अर्यमा । क्षत्रम् । राजानः । आशत ॥ ११ ॥

**वेङ्कट०** अकुर्वन्[3] ये अत्र संवत्सरम् मासम् अहः च आवृत्तिभिः यज्ञम् आज्यं स्तुतिम् च । तथा अन्यैः आप्तुमशक्यं धनं च सोमात्मकं मित्रादयः राजानः व्याप्नुवन् ॥ ११ ॥

तद् वो अद्य मनामहे सूक्तैः सूर उदिते ।
यदोहते वरुणो मित्रो अर्यमा यूयमृतस्य रथ्यः ॥ १२ ॥

तत् । वः । अद्य । मनामहे । सुऽउक्तैः । सूरे । उत्ऽइते ।
यत् । ओहते । वरुणः । मित्रः । अर्यमा । यूयम् । ऋतस्य । रथ्यः ॥ १२ ॥

**वेङ्कट०** तत् वः अद्य स्तुमः सूक्तैः उदिते सूर्ये[4] । यत् धनं प्रापयति वरुणः[5] मित्रः अयर्मा इति पादः परोक्षः । यूयम् सत्यभूतस्य मनुष्यस्य प्रापयथ हे नेतारः ! रथवन्तः ! वेति ॥ १२ ॥

ऋतावान ऋतजाता ऋतावृधो घोरासो अनृतद्विषः ।
तेषां वः सुम्ने सुच्छर्दिष्टमे नरः स्याम ये च सूरयः ॥ १३ ॥

ऋतऽवानः । ऋतऽजाताः । ऋतऽवृधः । घोरासः । अनृतऽद्विषः ।
तेषाम् । वः । सुम्ने । सुच्छर्दिःऽतमे । नरः । स्याम । ये । च । सूरयः ॥ १३ ॥

**वेङ्कट०** सत्यवन्तः सत्याज्जाताः सत्यस्य वर्धयितारः घोराः अनृतस्य द्रोग्धारः । तेषाम् युष्माकं सुखे अतिशयेन शोभनगृहयुक्ते हे नेतारः ! स्याम वयम् । सन्तु च ये च अन्ये स्तोतारः ॥ १३ ॥

---

१. अग्निर्जि° मूको. २-२. नास्ति मूको. ३. आकु° मूको. ४. नास्ति वि[2] अ[1]. ५ वरुणे वि[2] ल लभ.

उदु त्यद् दर्शतं वपुर्दिव एति प्रतिह्वरे ।
यदीमाशुर्वहति देव एतशो विश्वस्मै चक्षसे अरम् ॥ १४ ॥

उत् । ऊँ इति । त्यत् । दर्शतम् । वपुः । दिवः । एति । प्रतिऽह्वरे ।
यत् । ईम् । आशुः । वहति । देवः । एतशः । विश्वस्मै । चक्षसे । अरम् ॥ १४ ॥

**वेङ्कट०** दिवः उत् एति तदिदं दर्शनीयं रूपम् आदित्याख्यम् अस्मत्समीपे । यत् एनम् अश्वः वहति देवनशीलः[1] एतशवर्णः विश्वस्मै चक्षसे सर्वेषां दर्शनाय पर्याप्तम् इति ॥ १४ ॥

शीर्ष्णःशीर्ष्णो जगतस्तस्थुषस्पतिं समया विश्वमा रजः ।
सप्त स्वसारः सुविताय सूर्यं वहन्ति हरितो रथे ॥ १५ ॥

शीर्ष्णःऽशीर्ष्णः । जगतः । तस्थुषः । पतिम् । समया । विश्वम् । आ । रजः ।
सप्त । स्वसारः । सुविताय । सूर्यम् । वहन्ति । हरितः । रथे ॥ १५ ॥

**वेङ्कट०** उच्छ्रिताद् उच्छ्रिताद् देशात् जगतः[2] स्थावरस्य च[3] स्वामिनं सर्वस्य[4] लोकस्य समीपे सप्त स्वयं सारिण्यः अभ्युदयाय सूर्यम् आ वहन्ति हरितः रथे ॥ १५ ॥

[5]इति पञ्चमाष्टके पञ्चमाध्याये दशमो वर्गः[5] ॥

तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥ १६ ॥

तत् । चक्षुः । देवऽहितम् । शुक्रम् । उत्ऽचरत् । पश्येम । शरदः । शतम् । जीवेम । शरदः । शतम् ॥

**वेङ्कट०** तत् प्रकाशकं देवैर्निहितं ज्वलत् उद्यत्[6] पश्येम शरदः शतम्[7] । पश्यन्तश्च जीवेम शरदः शतम् ॥ १६ ॥

काव्येभिरदाभ्या यातं वरुण द्युमत् । मित्रश्च सोमपीतये ॥ १७ ॥

काव्येभिः । अदाभ्या । आ । यातम् । वरुण । द्युऽमत् । मित्रः । च । सोमऽपीतये ॥ १७ ॥

**वेङ्कट०** स्तोत्रैः हे अहिंसितौ! आ गच्छतम् दीप्तियुक्तम्[8] वरुण![9] मित्रः च सोमपानाय ॥ १७ ॥

दिवो धामभिर्वरुण मित्रश्चा यातमद्रुहा । पिबतं सोममातुजी ॥ १८ ॥

दिवः । धामऽभिः । वरुण । मित्रः । च । आ । यातम् । अद्रुहा ।
पिबतम् । सोमम् । आतुजी इत्याऽतुजी ॥ १८ ॥

**वेङ्कट०** दिवः स्थानेभ्यः हे मित्रावरुणौ! आ गच्छतम् अद्रोग्धारौ । पिबतम् च सोमम् आहन्तारौ[10] शत्रूणाम् ॥ १८ ॥

---

१. °लम् वि[2] अ[1]. २. जगतीतः वि[2] ल; जगतीति अ[1]; जजदिति लभ. ३. नास्ति वि[2] अ[1]. ४. सप्तस्य वि[2]. ५-५. नास्ति मूको. ६. उत् वि[2]; उदुयत् ल लभ. ७. नास्ति ल लभ. ८. °युक्तः ल प्रस्तावः. ९. °रुणम् वि[2] अ[1]. १०. आवह° वि[2] अ[1].

आ यातं मित्रावरुणा जुषाणावाहुतिं नरा । पातं सोममृतावृधा ॥ १९ ॥

आ । यातम् । मित्रावरुणा । जुषाणौ । आऽहुतिम् । नरा । पातम् । सोमम् । ऋतऽवृधा ॥१९॥

वेङ्कट० निगदसिद्धा ॥ १९ ॥

[1]इति पञ्चमाष्टके पञ्चमाध्याये एकादशो वर्गः[1] ॥

[ ६७ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[1] ।

प्रति वां रथं नृपती जरध्यै हविष्मता मनसा यज्ञियेन ।
यो वां दूतो न धिष्ण्यावजीगरच्छा सूनुर्न पितरा विवक्मि ॥ १ ॥

प्रति । वाम् । रथम् । नृपती इति नृऽपती । जरध्यै । हविष्मता । मनसा । यज्ञियेन ।
यः । वाम् । दूतः । न । धिष्ण्यौ । अजीगः । अच्छ । सूनुः । न । पितरा । विवक्मि ॥ १ ॥

वेङ्कट० प्रति गच्छामि युवयोः रथम् हे नृपती! स्तोतुम् हविष्मता मनसा यज्ञोद्युक्तेन, यः रथः वाम् दूतः[2] इव[2] धिषणार्हौ! अपि(?)[4] इमं लोकं प्रापयति । किञ्च पुत्रः इव पितरौ, अश्विनौ अहम् अभिष्टौमि ॥ १ ॥

अशोच्यग्निः समिधानो अस्मे उपो अदृश्रन् तमसश्चिदन्ताः ।
अचेति केतुरुषसः पुरस्ताच्छ्रिये दिवो दुहितुर्जायमानः ॥ २ ॥

अशोचि । अग्निः । सम्ऽइधानः । अस्मे इति । उपो इति । अदृश्रन् । तमसः । चित् । अन्ताः ।
अचेति । केतुः । उषसः । पुरस्तात् । श्रिये । दिवः । दुहितुः । जायमानः ॥ २ ॥

वेङ्कट० प्रजज्वाल अग्निः समिध्यमानः अस्मासु उषसि । तथा उप दृश्यन्ते औषसैः तेजोभिः अन्धकारस्य अन्ताः[5] । अचेति च तेजः उषसः प्राच्यां दिशि । अन्तरिक्षे श्रयणाय दिवः दुहितुः प्रादुर्भवति ॥ २ ॥

अभि वां नूनमश्विना सुहोता स्तोमैः सिषक्ति नासत्या विवक्वान् ।
पूर्वीभिर्यातं पथ्याभिरर्वाक् स्वर्विदा वसुमता रथेन ॥ ३ ॥

अभि । वाम् । नूनम् । अश्विना । सुऽहोता । स्तोमैः । सिसक्ति । नासत्या । विवक्वान् ।
पूर्वीभिः । यातम् । पथ्याभिः । अर्वाक् । स्वःऽविदा । वसुऽमता । रथेन ॥ ३ ॥

---

१-१. नास्ति मूको. २. नास्ति ल लअ, ३. इति वा मूको. ४. =अभि, ५. अन्तान् मूको.

वेङ्कट० अभि सेवते अस्मिन् काले इमौ हे अश्विनौ! कल्याणस्तोता स्तोमैः वचनकुशलः। पुरातनैः[1] यातम्[2] मार्गैः अभिमुखं सर्वज्ञौ युवां धनवता रथेन ॥ ३ ॥

अवोर्वां नूनमश्विना युवाकुर्हुवे यद् वां सुते माध्वी वसूयुः ।
आ वां वहन्तु स्थविरासो अश्वाः पिबाथो अस्मे सुषुता मधूनि ॥ ४ ॥

अवोः । वाम् । नूनम् । अश्विना । युवाकुः । हुवे । यत् । वाम् । सुते । माध्वी इति । वसुऽयुः ।
आ । वाम् । वहन्तु । स्थविरासः । अश्वाः । पिबाथः । अस्मे इति । सुऽसुता । मधूनि ॥ ४ ॥

वेङ्कट० रक्षकयोः युवयोः इदानीम् अश्विनौ! युवां कामयमानः अहम् अस्मि, ततः ह्वयामि, यदा वाम् सुतसोमे मधुमन्तौ! वसुकामः। तदानीम् आ वहन्तु वाम् दृढाः अश्वाः। पिबतम् अस्मासु सुष्टु सुतान्[3] सोमान् ॥ ४ ॥

प्राचीमु देवाश्विना धियं मेऽमृध्रां सातये कृतं वसूयुम् ।
विश्वा अविष्टं वाज आ पुरंधीस्ता नः शक्तं शचीपती शचीभिः ॥ ५ ॥

प्राचीम् । ऊँ इति । देवा । अश्विना । धियम् । मे । अमृध्राम् । सातये । कृतम् । वसुऽयुम् ।
विश्वाः । अविष्टम् । वाजे । आ । पुरम्ऽधीः । ताः । नः । शक्तम् । शचीपती इति शचीऽपती ।
शचीभिः ॥ ५ ॥

वेङ्कट० उन्मुखम् एव हे देवौ! अश्विनौ! मदीयं कर्म रक्षोभिः अहिंसितम् भजनाय[4] कुरुतम् धनकामं मदीयं कर्म भजतम्[5]। विश्वाः च रक्षतम् अस्माकम् अन्ने प्रवृत्ता बुद्धीः[6]। तौ अस्मान् शक्तान् कुरुतम् हे प्रज्ञापती![7] प्रज्ञाभिः ॥ ५ ॥

[8]इति पञ्चमाष्टके पञ्चमाध्याये द्वादशो वर्गः[8] ॥

अविष्टं धीष्वश्विना न आसु प्रजावद् रेतो अह्रयं नो अस्तु ।
आ वां तोके तनये तूतुजानाः सुरत्नासो देववीतिं गमेम ॥ ६ ॥

अविष्टम् । धीषु । अश्विना । नः । आसु । प्रजाऽवत् । रेतः । अह्रयम् । नः । अस्तु ।
आ । वाम् । तोके । तनये । तूतुजानाः । सुऽरत्नासः । देवऽवीतिम् । गमेम ॥ ६ ॥

वेङ्कट० रक्षतम्[9] कर्मसु अश्विनौ! अस्मान् एषु। प्रजायुक्तम् रेतः अह्रयम्[10] उन्मुखम् अस्माकम् अस्तु। आ गमेम[11] युवयोः यज्ञम् पुत्रे तत्पुत्रे च तयोः लाभाय[12] त्वरमाणाः शोभनधनाः। प्रजार्थम् उपगच्छाम इत्यर्थः ॥ ६ ॥

---

१. पुनरा° मूको. २. यात मूको. ३. तान् मूको. ४. भजमानाय मूको. ५. भजत मूको. ६. बुद्धिः मूको. ७. प्रज्ञावती मूको. ८-८. नास्ति मूको. ९. रक्षत अ[1] ल लअ. १०. अभूयम् मूको. ११. गं मे वि[3] अ[1]; गमे ल; गन्मे लअ. १२. लोभा° मूको.

एष स्य वां पूर्वगत्वेव सख्ये निधिर्हितो माध्वी रातो अस्मे ।
अहेळता मनसा यातमर्वागश्नन्ता हव्यं मानुषीषु विक्षु ॥ ७ ॥

एषः । स्यः । वाम् । पूर्वगत्वाऽइव । सख्ये । निऽधिः । हितः । माध्वी इति । रातः । अस्मे इति ।
अहेळता । मनसा । आ । यातम् । अर्वाक् । अश्नन्ता । हव्यम् । मानुषीषु । विक्षु ॥ ७ ॥

**वेङ्कट०** सः [1]एषः वाम् पूर्वगत्वा इव युवयोः[1] सन्धानाय प्रथमं गच्छति स्वसख्यसिद्ध्यर्थं सोममयः[2] निधिः निहितः अस्माकम् अभिप्रत्तः[3] हे मधुमन्तौ!। अहेळता[4] इति स्पष्टम् ॥ ७ ॥

एकस्मिन् योगे भुरणा समाने परि वां सप्त स्रवतो रथो गात् ।
न वायन्ति सुभ्वो देवयुक्ता ये वां धूर्षु तरणयो वहन्ति ॥ ८ ॥

एकस्मिन् । योगे । भुरणा । समाने । परि । वाम् । सप्त । स्रवतः । रथः । गात् ।
न । वायन्ति । सुऽभ्वः । देवऽयुक्ताः । ये । वाम् । धूःऽसु । तरणयः । वहन्ति ॥ ८ ॥

**वेङ्कट०** युवयोः द्वयोः समाने एकस्मिन् उद्योगे हे क्षिप्रकारिणौ! वाम् परि गमयति सप्त नदीः रथः। सप्त हि नदीः अतिक्रम्य अश्विनौ आगच्छतः। न शुष्यन्ति शोभनभवनाः[5], देवैः युक्ताः ये वाम् धूर्षु युक्ता अश्वाः वहन्ति ॥ ८ ॥

असश्चता मघवद्भ्यो हि भूतं ये राया मघदेयं जुनन्ति ।
प्र ये बन्धुं सूनृताभिस्तिरन्ते गव्या पृञ्चन्तो अश्व्या मघानि ॥ ९ ॥

असश्चता । मघवत्ऽभ्यः । हि । भूतम् । ये । राया । मघऽदेयम् । जुनन्ति ।
प्र । ये । बन्धुम् । सूनृताभिः । तिरन्ते । गव्या । पृञ्चन्तः । अश्व्या । मघानि ॥ ९ ॥

**वेङ्कट०** आसंगवर्जितौ[6] हविष्मद्भ्यः हि युवां भवतम्, ये धनेन मंहनीयं देयम्[7] अन्नं प्रेरयन्ति, ये च बन्धुम् आगतं दरिद्रं वाग्भिः प्र वर्धयन्ति मंहनीयानि गवाश्ववृन्दानि[8] सम्पर्चयन्तः इति ॥ ९ ॥

नू मे हवमा शृणुतं युवाना यासिष्टं वर्तिरश्विनाविरावत् ।
धत्तं रत्नानि जरतं च सूरीन् यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

नु । मे । हवम् । आ । शृणुतम् । युवाना । यासिष्टम् । वर्तिः । अश्विनौ । इराऽवत् ।
धत्तम् । रत्नानि । जरतम् । च । सूरीन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १० ॥

---

१-१. °गत्स्वेत्रयोः वि[1]; °गत्वेत्रयोर्वयोः अ[1]; °गत्वेत्रयो षयोः ल लअ; °यो द्वयोः ल प्रस्तावः. २. सोमयोः वि[2] अ[1]. ३. अभिप्रेतो वि[2] अ[1]; अभिप्रक्तः ल लअ. ४. अहे मूको. ५. °नद्व° वि[1]. ६. तु. ऋ २,२५,४ भाष्यम् ( वैतु. ल प्रस्तावः असंवर्जितौ ); असमवर्जितौ मूको. ७. देवम् मूको. ८. गवामश्व° मूको.

वेङ्कट० क्षिप्रं मम आह्वानम् आ श्रृणुतम् हे युवानौ[1]! । प्राप्नुतम्[2] मार्गम् अन्नयुक्तम्[3] अश्विनौ! । धत्तम् रत्नानि, वयसा जरयतम् च स्तोतॄन् ॥ १० ॥

[4]इति पञ्चमाष्टके पञ्चमाध्याये त्रयोदशो वर्गः[4] ॥

## [ ६८ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । विराट् छन्दः, अष्टमीनवम्यौ त्रिष्टुभौ[4] ।

आ शु॒भ्रा या॑तमश्विना॒ स्वश्वा॒ गिरो॑ दस्रा जुजुषा॒णा यु॒वाकोः॑ ।
ह॒व्यानि॑ च॒ प्रति॑भृता वी॒तं नः॑ ॥ १ ॥

आ । शु॒भ्रा । या॒त॒म् । अ॒श्वि॒ना॒ । सु॒ऽअश्वा॑ । गिरः॑ । द॒स्रा॒ । जु॒जु॒षा॒णा । यु॒वाकोः॑ ।
ह॒व्यानि॑ । च॒ । प्रति॑ऽभृता । वी॒तम् । नः॒ ॥ १ ॥

वेङ्कट० आ यातम् हे शोभनौ! अश्विनौ! शोभनाश्वौ स्तुतीः[5] दर्शनीयौ! सेवमानौ युष्मत्कामस्य । हव्यानि च प्रतिसम्भृतानि खादतम् नः ॥ १ ॥

प्र वा॒मन्धां॑सि॒ मद्या॒न्यस्थु॒ररं॑ गन्तं ह॒विषो॑ वी॒तये॑ मे ।
ति॒रो अ॒र्यो हव॑नानि श्रु॒तं नः॑ ॥ २ ॥

प्र । वा॒म् । अन्धां॑सि । मद्या॑नि । अ॒स्थुः॒ । अर॑म् । ग॒न्त॒म् । ह॒विषः॑ । वी॒तये॑ । मे॒ ।
ति॒रः । अ॒र्यः । हव॑नानि । श्रु॒तम् । नः॒ ॥ २ ॥

वेङ्कट० प्रस्थितानि युवयोः मदकराणि अन्नानि हविर्धानात् । पर्याप्तम् गच्छतम् मम हविषः पानाय । तिरस्कृत्य शत्रून् हवनानि श्रुतम् अस्माकम् ॥ २ ॥

प्र वां॒ रथो॒ मनो॑जवा इयर्ति ति॒रो रजां॑स्यश्विना श॒तोतिः॑ ।
अ॒स्मभ्यं॑ सूर्यावसू इया॒नः ॥ ३ ॥

प्र । वा॒म् । रथः॑ । मनः॑ऽजवाः । इ॒य॒र्ति॒ । ति॒रः । रजां॑सि । अ॒श्वि॒ना॒ । श॒तऽऊ॑तिः ।
अ॒स्मभ्य॑म् । सू॒र्या॒व॒सू॒ इति॑ । इ॒या॒नः ॥ ३ ॥

वेङ्कट० प्र ईरयति वाम् मनोवेगः रथः तिरस्कुर्वन् लोकान् अश्विनौ! शतरक्षणः अस्मदर्थं हे सूर्याया वासयितारौ! गच्छन् ॥ ३ ॥

अ॒यं ह॒ यद् वां॑ देव॒या उ॒ अद्रि॑रू॒र्ध्वो विव॑क्ति सोम॒सुद् यु॒वभ्या॑म् ।
आ व॒ल्गू विप्रो॑ ववृतीत ह॒व्यैः ॥ ४ ॥

---

१. युवां तौ वि[2]; युवा तौ अ[2] लअ. २. °प्नुत वि[2] अ[2]. ३. °क्तं तम् मूको ४-४. नास्ति मूको. ५. स्तुतिः मूको.

अयम् । ह । यत् । वाम् । देवऽयाः । ऊँ इति । अद्रिः । ऊर्ध्वः । विवक्ति । सोमऽसुत् । युवऽभ्याम् ।
आ । वल्गू इति । विप्रः । ववृतीत । हव्यैः ॥ ४ ॥

वेङ्कट० अयम् यदा वाम् देवौ[1] कामयमानः ग्रावा [2]उन्मुखः शब्दं[2] करोति सोमसुत् युवाभ्याम् । तदानीं वल्गनशीलौ मेधावी स्तोता आ ववृत्यात् युवां[3] हविर्भिः ॥ ४ ॥

चित्रं ह यद् वां भोजनं न्वस्ति न्यत्रये महिष्वन्तं युयोतम् ।
यो वामोमानं दधते प्रियः सन् ॥ ५ ॥

चित्रम् । ह । यत् । वाम् । भोजनम् । नु । अस्ति । नि । अत्रये । महिष्वन्तम् । युयोतम् ।
यः । वाम् । ओमानम् । दधते । प्रियः । सन् ॥ ५ ॥

वेङ्कट० पूजनीयम् ह यत् युवयोः अन्नम् अस्ति, तत् सर्वं महत्त्वयुक्तम्[4] अत्रये ऋषये नि युयोतम् प्रायच्छतम्, यः वाम्[5] रक्षणम् अधारयत् प्रियः भवन् अत्रिः ॥ ५ ॥

[6]इति पञ्चमाष्टके पञ्चमाध्याये चतुर्दशो वर्गः[6] ॥

उत त्यद् वां जुरते अश्विना भूच्च्यवानाय प्रतीत्यं हविर्दे ।
अधि यद् वर्प इतऊति धत्थः ॥ ६ ॥

उत । त्यत् । वाम् । जुरते । अश्विना । भूत् । च्यवानाय । प्रतीत्यम् । हविःऽदे ।
अधि । यत् । वर्पः । इतःऽऊति । धत्थः ॥ ६ ॥

वेङ्कट० अपि च तत् वाम् स्तुवते अश्विनौ! अभवत् च्यवानाय प्रतीत्यम् प्रतिगमनम्, वृद्धस्य पुनर्युवत्वं प्रतिगमनम्, हविषः दात्रे । [7]अधि धत्थः[7] यस्मात्[8] रूपम् जीर्णस्य इतोमुखम्[9] ॥ ६ ॥

उत त्यं भुज्युमश्विना सखायो मध्ये जहुर्दुरेवासः समुद्रे ।
निरीं पर्षदरावा यो युवाकुः ॥ ७ ॥

उत । त्यम् । भुज्युम् । अश्विना । सखायः । मध्ये । जहुः । दुःऽएवासः । समुद्रे ।
निः । ईम् । पर्षत् । अरावा । यः । युवाकुः ॥ ७ ॥

वेङ्कट० अपि च तम् भुज्युम् अश्विनौ! सखायः समुद्रमध्ये त्यक्तवन्तः दुर्गमनाः । तम् एनं पारं प्रति निः पर्षत् अरावा अरणं गमनं तद्वान् अरावेति अश्वः, गमनवान् रथो वा, यः[10] युष्मत्कामः ॥ ७ ॥

---

१. देवाः वि[2] अ[1]. २-२. °ख श° मूको. ३. युष्मन् मूको. ४. ममत्त्वयु° वि[2] ल; ममहत्वयु° अ[1] लअ. ५. वामं मूको. ६-६. नास्ति मूको. ७-७. धत्थः मूको. ८. अयमस्मात् मूको. ९ तु. ऋ १,१५१,९ भाष्यम्; अधोमु° वि[2]; इधोमु° अ[1] ल लअ. १०. नास्ति वि[2].

वृकाय चिज्जसमानाय शक्तमुत श्रुतं शयवे हूयमाना ।
यावघ्न्यामपिन्वतमपो न स्तर्यं चिच्छक्त्यश्विना शचीभिः ॥ ८ ॥

वृकाय । चित् । जसमानाय । शक्तम् । उत । श्रुतम् । शयवे । हूयमाना ।
यौ । अघ्न्याम् । अपिन्वतम् । अपः । न । स्तर्यम् । चित् । शक्ती । अश्विना । शचीभिः ॥८॥

वेङ्कट० वृकाय अपि जसमानाय विमोचने शक्तौ अभवतम् । अपि च अश्रुणुतम्[1] शयवे हूयमानौ[2] । शयोः गाम् अपिन्वतम् अक्षारयतम् पयः उदकानि इव निवृत्तप्रसवाम्[3] अपि आत्मीयया शक्त्या प्रज्ञाभिः च ॥ ८ ॥

एष स्य कारुर्जरते सूक्तैरग्रे बुधान उषसां सुमन्मा ।
इषा तं वर्धदघ्न्या पयोभिर्यूयं पात स्वस्तिभिः सदा नः ॥ ९ ॥

एषः । स्यः । कारुः । जरते । सुऽउक्तैः । अग्रे । बुधानः । उषसाम् । सुऽमन्मा ।
इषा । तम् । वर्धत् । अघ्न्या । पयःऽभिः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ९ ॥

वेङ्कट० एषः स्तोता स्तौति[4] सूक्तैः उषसाम् अग्रे बुध्यमानः शोभनमननः । तम् शयुम् आत्मीया गौः पयसा अवर्धयत् इति ॥ ९ ॥

[5]इति पञ्चमाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[5] ॥

## [ ६९ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[4] ।

आ वां रथो रोदसी बद्बधानो हिरण्ययो वृषभिर्यात्वश्वैः ।
घृतवर्तनिः पविभी रुचान इषां वोळ्हा नृपतिर्वाजिनीवान् ॥ १ ॥

आ । वाम् । रथः । रोदसी इति । बद्बधानः । हिरण्ययः । वृषऽभिः । यातु । अश्वैः ।
घृतऽवर्तनिः । पविऽभिः । रुचानः । इषाम् । वोळ्हा । नृऽपतिः । वाजिनीऽवान् ॥ १ ॥

वेङ्कट० आ यातु युवयोः रथः द्यावापृथिव्यौ बाधमानः हिरण्ययः पुंभिः अश्वैः उदकयुक्तमार्गः पविभिः दीप्यमानः अन्नानाम् वोळ्हा नृणां पालयिता बलवान् इति ॥ १ ॥

स पप्रथानो अभि पञ्च भूमा त्रिवन्धुरो मनसा यातु युक्तः ।
विशो येन गच्छथो देवयन्तीः कुत्रा चिद् याममश्विना दधाना ॥ २ ॥

---

१. अश्रुणु° वि[२] ल; श्रुणु° अ[१] लभ. २. °मानः मूको. ३ °सवा मूको. ४. स्तौतिः मूको.
५-५. नास्ति मूको.

सः । पप्रथानः । अभि । पञ्च । भूमं । त्रिऽवन्धुरः । मनसा । आ । यातु । युक्तः ।
विशः । येन । गच्छथः । देवऽयन्तीः । कुत्र । चित् । यामम् । अश्विना । दधाना ॥ २ ॥

**वेङ्कट०** सः रथः पञ्च जनान् धनप्रदानेन विस्तारयन् त्रिवन्धुरः मनसा युक्तः अभि आ यातु । मनुष्यान् येन अभि गच्छथः[1] देवकामान् यत्र कुत्र चित् अपि गमनम् अश्विनौ! कुर्वन्तौ ॥ २ ॥

**स्वश्वा यशसा यातमर्वाग् दस्रा निधिं मधुमन्तं पिबाथः ।**
**वि वां रथो वध्वा३ यादमानोऽन्तान् दिवो बाधते वर्तनिभ्याम् ॥ ३ ॥**

सुऽअश्वा । यशसा । आ । यातम् । अर्वाक् । दस्रा । निऽधिम् । मधुऽमन्तम् । पिबाथः ।
वि । वाम् । रथः । वध्वा । यादमानः । अन्तान् । दिवः । बाधते । वर्तनिऽभ्याम् ॥ ३ ॥

**वेङ्कट०** शोभनाश्वौ यशस्विनौ आ गच्छतम् अभिमुखम् । हे दस्रौ! सोमवन्तम् निधिम् प्राग्रम् पिबतम् । वि बाधते युवयोः रथः उषसा सह[2] अभिगच्छन् । यदिरभिक्रमणकर्मा । दिवः पर्यन्तान् चक्रपविभ्याम् ॥ ३ ॥

**युवोः श्रियं परि योषावृणीत सूरो दुहिता परितक्म्यायाम् ।**
**यद् देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ॥ ४ ॥**

युवोः । श्रियम् । परि । योषा । अवृणीत । सूरः । दुहिता । परिऽतक्म्यायाम् ।
यत् । देवऽयन्तम् । अवथः । शचीभिः । परि । घ्रंसम् । ओमना । वाम् । वयः । गात् ॥ ४ ॥

**वेङ्कट०** युवयोः श्रियम्[3] परि अवृणीत सूर्यदुहिता युवतिः परितकम्येति[4] रात्रिनाम, तस्याः पश्चिमे भागे युवयोः काले । यत् देवकामं रक्षथः[5] प्रज्ञाभिः । अत्र यास्कः—"पर्यगात् वां घ्रंसम् अहरवनायान्नम्"[6] ( या ६,४ ) इति । यजमानानां रक्षणार्थम् अहः[7] हविर्भूतमन्नम्[8] वाम् अश्विनौ! परि गच्छति इति ॥ ४ ॥

**यो ह स्य वां रथिरा वस्त उस्रा रथो युजानः परियाति वर्तिः ।**
**तेन नः शं योरुषसो व्युष्टौ न्यश्विना वहतं यज्ञे अस्मिन् ॥ ५ ॥**

यः । ह । स्यः । वाम् । रथिरा । वस्ते । उस्राः । रथः । युजानः । परिऽयाति । वर्तिः ।
तेन । नः । शम् । योः । उषसः । विऽउष्टौ । नि । अश्विना । वहतम् । यज्ञे । अस्मिन् ॥ ५ ॥

**वेङ्कट०** यः खलु एषः युवयोः हे रथवन्तौ! वस्ते तेजांसि रथः युज्यमानः, परिगच्छति[9] च मार्गम्, तेन अस्माकम् शम् च योः च उषसः व्युच्छने[10] नि वहतम् अश्विनौ![11] अस्मिन्[12] यज्ञे ॥ ५ ॥

---

१. अनाभि° वि[2]; अनभि° अ[1]. २. हस मूको. ३. श्रियतं ल लभ; श्रयतं वि[1] अ[1]. ४. °तक्ये° मूको. ५. रक्षत वि[1] अ[1]; रक्षथ ल लभ. ६. पर्यागाद्वा ध्रंस हरवसानेऽन्नम् मूको. ७. अग्निः वि[1] अ[1] ल; अनि लभ. ८. °तमनम् तं ल लभ; °तं नम् वि[1]. ९. °च्छन्ति मूको. १०. °च्छन्ने वि[1]; °च्छन अ[1]. ११. °श्विना वि[2] अ[1]. १२. नास्ति वि[1] अ[1].

नरा॑ गौ॒रेव॑ वि॒द्युतं॑ तृषा॒णास्माक॑म॒द्य सव॒नोप॑ यातम् ।
पु॒रु॒त्रा हि वां॑ म॒तिभि॒र्हव॑न्ते॒ मा वा॑म॒न्ये नि य॑मन् देव॒यन्तः॑ ॥ ६ ॥

नरा॑ । गौ॒राऽई॑व । वि॒ऽद्युत॑म् । तृ॒षा॒णा । अ॒स्माक॑म् । अ॒द्य । सव॑ना । उप॑ । या॒त॒म् ।
पु॒रु॒ऽत्रा । हि । वा॒म् । म॒तिऽभिः॑ । हव॑न्ते । मा । वा॒म् । अ॒न्ये । नि । य॒म॒न् । दे॒व॒ऽयन्तः॑ ॥ ६ ॥

वेङ्कट० हे नेतारौ! गौरौ इव मृगौ विद्युतम्, मृगतृष्णावन्तौ अस्माकम् अद्य सवनानि[1] उप गच्छतम्। बहुषु हि देशेषु वाम्[2] स्तुतिभिः हवन्ते[3]। तत्र मा वाम् अन्ये नि यच्छन्तु देवकामाः ॥ ६ ॥

यु॒वं भु॒ज्युमव॑विद्धं समु॒द्र उदू॑हथु॒रर्ण॑सो॒ अस्रि॑धानैः ।
प॒त॒त्रिभि॑रश्र॒मैर॑व्य॒थिभि॑र्दं॒सना॑भिरश्विना पा॒रय॑न्ता ॥ ७ ॥

यु॒वम् । भु॒ज्युम् । अव॑ऽविद्धम् । स॒मु॒द्रे । उत् । ऊ॒ह॒थुः॒ । अर्ण॑सः । अस्रि॑धानैः ।
प॒त॒त्रिऽभिः॑ । अ॒श्र॒मैः । अ॒व्य॒थिऽभिः॑ । दं॒सना॑भिः । अ॒श्वि॒ना॒ । पा॒रय॑न्ता ॥ ७ ॥

वेङ्कट० युवम् भुज्युम्[4] सखिभिः समुद्रमध्ये अवविद्धम्[5] पारं प्रति उत् ऊहथुः उदकात् अक्षीणैः[6] अश्वैः व्यथारहितैः श्रमवर्जितैः कर्मभिः अश्विनौ! तं पारयन्तौ[7] ॥ ७ ॥

नू मे॒ हव॒मा शृ॑णुतं युवाना यासि॒ष्टं व॒र्तिर॑श्विना॒विरा॑वत् ।
ध॒त्तं रत्ना॑नि॒ जर॑तं च सू॒रीन् यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ८ ॥

नु । मे॒ । हव॑म् । आ । शृ॒णु॒त॒म् । यु॒वा॒ना॒ । या॒सि॒ष्टम् । व॒र्तिः । अ॒श्वि॒नौ॒ । इरा॑ऽवत् ।
ध॒त्तम् । रत्ना॑नि । जर॑तम् । च॒ । सू॒रीन् । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ८ ॥

वेङ्कट० पूर्वं व्याख्याता ( ऋ ७,६७,१० द्र. ) ॥ ८ ॥

[8]इति पञ्चमाष्टके पञ्चमाध्याये षोडशो वर्गः[8] ॥

## [ ७० ]

[8]वसिष्ठो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[8] ।

आ वि॑श्ववाराश्विना गतं नः॒ प्र तत् स्थान॑मवाचि वां पृथि॒व्याम् ।
अश्वो॒ न वा॒जी शु॒नपृ॑ष्ठो अस्था॒दा यत् से॒दथु॑र्ध्रु॒वसे॒ न योनि॑म् ॥ १ ॥

---

१. °नादि मूको. २. वा मूको. ३. भवन्ति अ[१]. ४. भुज्युः मूको. ५. अपवि° वि[२] अ[१]. ६. क्षिणैः मूको. ७. वार° मूको. ८-८. नास्ति मूको.

आ । विश्वऽवारा । अश्विना । गतम् । नः । प्र । तत् । स्थानम् । अवाचि । वाम् । पृथिव्याम् ।
अश्वः । न । वाजी । शुनऽपृष्ठः । अस्थात् । आ । यत् । सेदथुः । ध्रुवसे । न । योनिम् ॥१॥

**वेङ्कट०** हे विश्वैः वरणीयौ! अश्विनौ! आ गच्छतम् अस्मान्। प्र अवाचि प्रोक्तं अस्माभिः तत् स्थानम् अस्याम् पृथिव्याम् युवयोः। अस्माभिः तत् च स्थानं स्तीर्णबर्हिः, वाम् [1]अन्वीक्ष्य अश्व[1] इव बलवान् सुखपृष्ठः, तिष्ठति, आ सीदथः[2] यत् स्थानम्, यथा मनुष्यः ध्रुवावस्थानाय[3] योग्यम्[4] आसीदति ॥ १ ॥

सिषक्ति सा वां सुमतिश्चनिष्ठातापि घर्मो मनुषो दुरोणे ।
यो वां समुद्रान्त्सरितः पिपर्त्येतग्वा चिन्न सुयुजा युजानः ॥ २ ॥

सिसक्ति । सा । वाम् । सुऽमतिः । चनिष्ठा । अतापि । घर्मः । मनुषः । दुरोणे ।
यः । वाम् । समुद्रान् । सरितः । पिपर्ति । एतऽग्वा । चित् । न । सुऽयुजा । युजानः ॥ २ ॥

**वेङ्कट०** सेवते सा वाम् सुमतिः[5] अतिशयेन अन्नवती। तप्तः च घर्मः[6] मनुष्यस्य गृहे। यः घर्मः वाम् समुद्रान् [7]सरितः च[7] पारयति, गमयति[8] इत्यर्थः, अश्वौ इव सुयुक्तौ यज्ञे युज्यमानः[9] ॥ २ ॥

यानि स्थानान्यश्विना दधाथे दिवो यह्वीष्वोषधीषु विक्षु ।
नि पर्वतस्य मूर्धनि सदन्तेषं जनाय दाशुषे वहन्ता ॥ ३ ॥

यानि । स्थानानि । अश्विना । दधाथे इति । दिवः । यह्वीषु । ओषधीषु । विक्षु ।
नि । पर्वतस्य । मूर्धनि । सदन्ता । इषम् । जनाय । दाशुषे । वहन्ता ॥ ३ ॥

**वेङ्कट०** यानि आवासस्थानानि आत्मनः अश्विनौ![10] कुरुतः दिवः आगतौ महतीषु[11] ओषधीषु प्रजासु च पर्वतस्य मूर्ध्नि नि वसन्तौ[12] यजमानाय अन्नं च [13]वहन्तौ। उत्तरत्र सम्बन्धः[13] ॥ ३ ॥

चनिष्टं देवा ओषधीष्वप्सु यद् योग्या अश्नवैथे ऋषीणाम् ।
पुरूणि रत्ना दधतौ न्य१स्मे अनु पूर्वाणि चख्यथुर्युगानि ॥ ४ ॥

चनिष्टम् । देवौ । ओषधीषु । अप्ऽसु । यत् । योग्याः । अश्नवैथे इति । ऋषीणाम् ।
पुरूणि । रत्ना । दधतौ । नि । अस्मे इति । अनु । पूर्वाणि । चख्यथुः । युगानि ॥ ४ ॥

**वेङ्कट०** चनिष्टम्[14] इच्छतं हे देवौ! तासु ओषधीषु अप्सु च, यदा[15] व्याप्नुथः योग्याः स्तुतीः

---

१-१. अन्विक्षाश्वश्व वि[2]; अन्विक्ष अश्व अ[1] ल लभ. २. सिदधः वि[2] अ[1]; सिदथः ल लभ. ३. ध्रुवा° मूको. ४. युग्महम् मूको. ५. °मतीः बि[2] ल लभ. ६. घर्मे मूको. ७. °त··· वि[2] अ[1]. ८. °यन्ति मूको. ९. °मानाः वि[2] अ[1]. १०. °श्विनः वि[2]. ११. महीषु मूको. १२. °सन्तो मूको. १३-१३. °हन्ता···सं° वि[2] अ[1]. १४. चन मूको. १५. यथा वि[2] अ[1].

ऋषीणाम्। बहूनि रत्नानि अस्मासु नि दधानौ अनु चख्यथुः[1] गतान् दिवसान्। अनुख्यानम् अनुमननम्[2]। दिवसा गता निरर्थका इति बुद्धिम् अधुना धनं प्रयच्छन्तौ कुरुतः[3] ॥ ४ ॥

शुश्रुवांसा चिदश्विना पुरूण्यभि ब्रह्माणि चक्षाथे ऋषीणाम्।
प्रति प्र यातं वरमा जनायास्मे वामस्तु सुमतिश्चनिष्ठा ॥ ५ ॥

शुश्रुऽवांसा। चित्। अश्विना। पुरूणि। अभि। ब्रह्माणि। चक्षाथे इति। ऋषीणाम्।
प्रति। प्र। यातम्। वरम्। आ। जनाय। अस्मे इति। वाम्। अस्तु। सुऽमतिः। चनिष्ठा ॥

**वेङ्कट०** शुश्रूषमाणौ एव अश्विनौ![4] ⋯ ⋯ ⋯ ॥ ५ ॥

यो वां यज्ञो नासत्या हविष्मान् कृतब्रह्मा समर्यो३ भवाति।
उप प्र यातं वरमा वसिष्ठमिमा ब्रह्माण्यृच्यन्ते युवभ्याम् ॥ ६ ॥

यः। वाम्। यज्ञः। नासत्या। हविष्मान्। कृतऽब्रह्मा। सऽमर्यः। भवाति।
उप। प्र। यातम्। वरम्। आ। वसिष्ठम्। इमा। ब्रह्माणि। ऋच्यन्ते। युवऽभ्याम् ॥ ६ ॥

**वेङ्कट०** यः वाम् यज्ञः ⋯ ⋯ ⋯ ॥ ६ ॥

इयं मनीषा इयमश्विना गीरिमां सुवृक्तिं वृषणा जुषेथाम्।
इमा ब्रह्माणि युवयून्यग्मन् यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

इयम्। मनीषा। इयम्। अश्विना। गीः। इमाम्। सुऽवृक्तिम्। वृषणा। जुषेथाम्।
इमा। ब्रह्माणि। युवऽयूनि। अग्मन्। यूयम्। पात। स्वस्तिऽभिः। सदा। नः ॥ ७ ॥

**वेङ्कट०** ⋯ ⋯ स्तुतिः। इमाम् च स्तुतिम् वर्षितारौ! सेवेथाम्। इमानि च हवींषि युवां कामयमानानि गच्छन्तु वामिति ॥ ७ ॥

[5]इति पञ्चमाष्टके पञ्चमाध्याये सप्तदशो वर्गः[5] ॥

## [ ७१ ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः। अश्विनौ देवता। त्रिष्टुप् छन्दः[5]।

अप स्वसुरुषसो नग्जिहीते रिणक्ति कृष्णीररुषाय पन्थाम्।
अश्वामघा गोमघा वां हुवेम दिवा नक्तं शरुमस्मद् युयोतम् ॥ १ ॥

अप। स्वसुः। उषसः। नक्। जिहीते। रिणक्ति। कृष्णीः। अरुषाय। पन्थाम्।
अश्वऽमघा। गोऽमघा। वाम्। हुवेम। दिवा। नक्तम्। शरुम्। अस्मत्। युयोतम् ॥ १ ॥

---

१. °ख्यपृथुः मूको. २. °मनुनम् मूको. ३. °तः इति वि[2] अ[1]. ४. °नौ⋯ मूको.
५-५. नास्ति मूको.

**वेङ्कट०** स्वसुः उषसः आगमनाय नक्[1] नगिति रात्रिम् आह । सा अप गच्छति[2] । 'रुशद्वत्सा रुशती श्वेत्यागात्' ( ऋ १,११३,२ ) इत्युक्तम्[3] । रेचयति पन्थानं रात्रिः आरोचमानाय आदित्याय । अस्मिन् काले वयम् हे अश्वधनौ![4] गोधनौ![5] वाम् हुवेम[6] । दिवा नक्तम् च अस्मत्तः हिंसकं पृथक् कुरुतम् । ॥ १ ॥

उपायातं दाशुषे मर्त्याय रथेन वाममश्विना वहन्ता ।
युयुतमस्मदनिराममीवां दिवा नक्तं माध्वी त्रासीथां नः ॥ २ ॥

उपऽआयातम् । दाशुषे । मर्त्याय । रथेन । वामम् । अश्विना । वहन्ता ।
युयुतम् । अस्मत् । अनिराम् । अमीवाम् । दिवा । नक्तम् । माध्वी इति । त्रासीथाम् । नः ॥२॥

**वेङ्कट०** उपागच्छतम्[7] दाशुषे यजमानाय रथेन धनम् अश्विनौ! वहन्तौ । पृथक् कुरुतम् अस्मत्तः अनिराम् अनतिः प्राणनकर्मा[8] । श्वासकारिण्यशक्तिरनिरा । अमीवा च रोगविशेषः औदरः । दिवा नक्तम् च हे मधुमन्तौ![9] अस्मान् रक्षतम् ॥ २ ॥

आ वां रथमवमस्यां व्युष्टौ सुम्नायवो वृषणो वर्तयन्तु ।
स्यूमगभस्तिमृतयुग्भिरश्वैराश्विना वसुमन्तं वहेथाम् ॥ ३ ॥

आ । वाम् । रथम् । अवमस्याम् । विऽउष्टौ । सुम्नऽयवः । वृषणः । वर्तयन्तु ।
स्यूमऽगभस्तिम् । ऋतयुक्ऽभिः । अश्वैः । आ । अश्विना । वसुऽमन्तम् । वहेथाम् ॥ ३ ॥

**वेङ्कट०** आ वर्तयन्तु वाम् रथम् अवमस्याम् उषसि । अवमाऽद्यतनी[10] । सुखम् इच्छन्तः पुमांसः ऋत्विजः । अनुस्यूतरश्मिं यज्ञयोगिभिः[11] अश्वैः आ वहेथाम्[12] अश्विनौ! वसुमन्तम् रथम् ॥ ३ ॥

यो वां रथो नृपती अस्ति वोळ्हा त्रिवन्धुरो वसुमाँ उस्रयामा ।
आ न एना नासत्योप यातमभि यद् वां विश्वप्स्न्यो जिगाति ॥ ४ ॥

यः । वाम् । रथः । नृपती इति नृऽपती । अस्ति । वोळ्हा । त्रिऽवन्धुरः । वसुऽमान् । उस्रऽयामा ।
आ । नः । एना । नासत्या । उप । यातम् । अभि । यत् । वाम् । विश्वऽप्स्न्यः । जिगाति ॥४॥

**वेङ्कट०** यः वाम् रथः नृपती! भवति[13] वोळहा । वन्धुरं फलकासङ्घाटः । त्रिवन्धुरः वसुमान् उत्सरणशीलगमनः । तेन अनेन अस्मान् उप आ यातम् नासत्यौ! । अभि गच्छति यस्मात् वाम् वसिष्ठः विश्वरूपः । नानाविधस्तुतिकरणात् वैश्वरूप्यम् । यद् वा विश्वप्स्न्यः व्यापकः[14] [15]विश्वस्य इति[15] ॥४॥

---

१. नन् मूको; नक्तम् ल प्रस्तावः. २. अवग° मूको. ३. °त्युक्तः वि² अ¹. ४. अश्विध° वि² अ¹ ल; अश्विनौ लअ. ५. °नो मूको. ६. हवे° मूको. ७. उपग° मूको. ८. °प्राणान° लअ. ९ वसुम्° मूको. १०. आव° वि². ११. यजुयो° मूको. १२. °वहेथौ मूको. १३. भवन्ति मूको. १४. °कः भवति अ¹. १५. °स्येति वि² ल लअ; °स्योपीति अ¹.

युवं च्यवा॑नं ज॒रसो॑ऽमुमुक्तं॒ नि पे॒दव॑ ऊहथुरा॒शुमश्व॑म् ।
निरंह॑स॒स्तम॑सः स्पर्तमत्रिं॒ नि जा॑हु॒षं शि॑थि॒रे धा॑तम॒न्तः ॥ ५ ॥

यु॒वम् । च्यवा॑नम् । ज॒रसः॑ । अ॒मु॒मु॒क्त॒म् । नि । पे॒दवे॑ । ऊ॒ह॒थुः॒ । आ॒शुम् । अश्व॑म् ।
निः । अंह॑सः । तम॑सः । स्प॒र्त॒म् । अत्रि॑म् । नि । जा॒हु॒षम् । शि॒थि॒रे । धा॒त॒म् । अ॒न्तरिति॑ ॥५॥

वेङ्कट० युवम् च्यवानम् [1]जरया मोचितवन्तौ[1] । पेदवे[2] च राज्ञे शीघ्रगन्तारम् अश्वम् आत्मीयम् [3]नि ऊहथुः । निपतितम् उत्थापितवन्तौ[3] आहन्तुः[4] तमसः अत्रिम् शतद्वरेषु यन्त्रगृहेषु असुरैः[5] प्रक्षिप्तम् । जाहुषम् च राजानं शिथिले तस्य राष्ट्रे पुनः निहितवन्तौ[6] ॥ ५ ॥

इ॒यं म॑नी॒षा इ॒यम॑श्विना॒ गीरि॒मां सु॑वृ॒क्तिं वृ॑षणा जुषेथाम् ।
इ॒मा ब्रह्मा॑णि युव॒यून्य॑ग्मन् यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ६ ॥

इ॒यम् । म॒नी॒षा । इ॒यम् । अ॒श्वि॒ना॒ । गीः । इ॒माम् । सु॒ऽवृ॒क्तिम् । वृ॒ष॒णा॒ । जु॒षे॒था॒म् ।
इ॒मा । ब्रह्मा॑णि । यु॒व॒ऽयूनि॑ । अ॒ग्म॒न् । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ६ ॥

वेङ्कट० पूर्वं व्याख्याता ( ऋ ७,७०,७ द्र. ) ॥ ६ ॥

[7]इति पञ्चमाष्टके पञ्चमाध्याये अष्टादशो वर्गः[7] ॥

## [ ७२ ]

[7]वसिष्ठो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[7] ।

आ गोम॑ता नासत्या॒ रथे॒नाश्वा॑वता पुरुश्च॒न्द्रेण॑ यातम् ।
अ॒भि वां॒ विश्वा॑ नि॒युतः॑ सचन्ते स्पा॒र्हया॑ श्रि॒या त॒न्वा॑ शु॒भाना ॥ १ ॥

आ । गोऽम॑ता । ना॒स॒त्या॒ । रथे॑न । अश्व॑ऽवता । पु॒रु॒ऽच॒न्द्रेण॑ । या॒त॒म् ।
अ॒भि । वा॒म् । विश्वाः॑ । नि॒ऽयुतः॑ । स॒च॒न्ते॒ । स्पा॒र्हया॑ । श्रि॒या । त॒न्वा॑ । शु॒भाना॒ ॥ १ ॥

वेङ्कट० आ यातम् गोमता हे नासत्यौ! रथेन अश्ववता बहुसुवर्णेन । अभि सचन्ते वाम् विश्वाः वडवाः[8] स्पृहणीयया श्रिया अङ्गेन च शोभमानौ ॥ १ ॥

आ नो॑ दे॒वेभि॒रुप॑ यातम॒र्वाक् स॒जोष॑सा नासत्या॒ रथे॑न ।
यु॒वोर्हि नः॑ स॒ख्या पित्र्या॑णि समा॒नो बन्धु॑रु॒त तस्य॑ वित्तम् ॥ २ ॥

---

१-१. °रयामोऽच्युत° वि[2] अ[1]; °वन्तो ल लभ. २. एव वि[2] अ[1]; वेवे ल लभ. ३-३. °थुः... उत्था° वि[1] अ[1]; °थुः निष्पम् उत्था ल लभ. ४. अह° मूको. ५. अश्वैः सुरैः वि[2] अ[1]; असुरे ल लभ. ६. °वन्तः वि[2] अ[1]; °वन्तो ल लभ. ७-७. नास्ति मूको. ८. विधवाः मूको.

आ । नः । देवेभिः । उप । यातम् । अर्वाक् । सऽजोषसा । नासत्या । रथेन ।
युवोः । हि । नः । सख्या । पित्र्याणि । समानः । बन्धुः । उत । तस्य । वित्तम् ॥ २ ॥

**वेङ्कट०** उप आ यातम् अर्वाक् अस्मान् देवैः सह सङ्गतौ हे नासत्यौ! रथेन । युवोः हि[1] [2]नः सख्यानि[2] पित्र्याणि क्रमागतानि । तथा बन्धुः च समानस्तुतिः । बन्धुः पितरः च वां स्तुवन्ति, वयं चेत्यर्थः । तं बन्धुम् वित्तम् इति ॥ २ ॥

उदु स्तोमासो अश्विनोरबुध्रञ्जामि ब्रह्माण्युषसश्च देवीः ।
आविवासन् रोदसी धिष्ण्येमे अच्छा विप्रो नासत्या विवक्ति ॥ ३ ॥

उत् । ऊँ इति । स्तोमासः । अश्विनोः । अबुध्रन् । जामि । ब्रह्माणि । उषसः । च । देवीः ।
आऽविवासन् । रोदसी इति । धिष्ण्ये इति । इमे इति । अच्छ । विप्रः । नासत्या । विवक्ति ॥

**वेङ्कट०** उत् अबुध्यत अश्विनोः स्तोमाः । भवति[3] (?) इमे अश्विनौ इति ॥ ३ ॥

वि चेदुच्छन्त्यश्विना उषासः प्र वां ब्रह्माणि कारवो भरन्ते ।
ऊर्ध्वं भानुं सविता देवो अश्रेद् बृहदग्नयः समिधा जरन्ते ॥ ४ ॥

वि । च । इत् । उच्छन्ति । अश्विनौ । उषसः । प्र । वाम् । ब्रह्माणि । कारवः । भरन्ते ।
ऊर्ध्वम् । भानुम् । सविता । देवः । अश्रेत् । बृहत् । अग्नयः । समऽइधा । जरन्ते ॥ ४ ॥

**वेङ्कट०** वि उच्छन्ति च इत् अश्विनौ! उषसः । प्र भरन्ते[4] युवयोः स्तोत्राणि स्तोतारः । ऊर्ध्वम् रश्मिम् देवः सविता श्रयति । महान्तः अग्नयः समिन्धनेन सह अस्मिन् काले युवयोः यागे स्तूयन्ते ॥ ४ ॥

आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

आ । पश्चातात् । नासत्या । आ । पुरस्तात् । आ । अश्विना । यातम् । अधरात् । उदक्तात् ।
आ । विश्वतः । पाञ्चऽजन्येन । राया । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** निगदसिद्धा ॥ ५ ॥

[5]इति पञ्चमाष्टके पञ्चमाध्याये एकोनविंशो वर्गः[5] ॥

[ ७३ ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । त्रिष्टुप् छन्दः[5] ।

अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः ।
पुरुदंसा पुरुतमा पुराजामर्त्या हवते अश्विना गीः ॥ १ ॥

---

१. ही मूको. २-२. नः…स° वि[2] अ[1]. ३. विवक्ति ल प्रस्तावः. ४. हर° मूको.
५-५. नास्ति मूको.

अतारिष्म । तमसः । पारम् । अस्य । प्रति । स्तोमम् । देवऽयन्तः । दधानाः ।
पुरुऽदंसा । पुरुऽतमा । पुराऽजा । अमर्त्या । हवते । अश्विना । गीः ॥ १ ॥

**वेङ्कट०** नैशस्य अस्य तमसः पारम् तीर्णवन्तः[1] प्रति दधानाः स्तोमम् देवकामाः । अस्मिन् काले पुरुकर्माणौ[2] बहुक्षपणौ शत्रूणां पुराणजातौ अमर्त्यौ ह्वयति वाक् अश्विनौ ॥ १ ॥

न्यु प्रियो मनुषः सादि होता नासत्या यो यजते वन्दते च ।
अश्नीतं मध्वो अश्विना उपाक आ वां वोचे विदथेषु प्रयस्वान् ॥ २ ॥

नि । ऊँ इति । प्रियः । मनुषः । सादि । होता । नासत्या । यः । यजते । वन्दते । च ।
अश्नीतम् । मध्वः । अश्विनौ । उपाके । आ । वाम् । वोचे । विदथेषु । प्रयस्वान् ॥ २ ॥

**वेङ्कट०** निषण्णो होतृषदने प्रियः होता मनुष्यस्य नासत्यौ यः यजति[3] स्तौति च । पिबतम् सोमम् अश्विनौ ! । अन्तिके आभिमुख्येन ब्रवीमि वाम् अहं यज्ञेषु हविष्मान् ॥ २ ॥

अहेम यज्ञं पथामुराणा इमां सुवृक्तिं वृषणा जुषेथाम् ।
श्रुष्टीवेव प्रेषितो वामबोधि प्रति स्तोमैर्जरमाणो वसिष्ठः ॥ ३ ॥

अहेम । यज्ञम् । पथाम् । उराणाः । इमाम् । सुऽवृक्तिम् । वृषणा । जुषेथाम् ।
श्रुष्टीवाऽइव । प्रऽइषितः । वाम् । अबोधि । प्रति । स्तोमैः । जरमाणः । वसिष्ठः ॥ ३ ॥

**वेङ्कट०** प्रेरयामः यज्ञम् उषसि पतताम् आगच्छतां देवानाम् उरुकर्माणः[4] उरु कर्म कुर्वाणाः । इमाम् स्तुतिं वृषणौ सेवेथाम् । क्षिप्रवान् इव प्रेषितः[5] दूतः वाम् प्रति अबोधि स्तोमैः स्तुवन्[6] वसिष्ठः ॥ ३ ॥

उप त्या वह्नी गमतो विशं नो रक्षोहणा संभृता वीळुपाणी ।
समन्धांस्यग्मत मत्सराणि मा नो मर्धिष्टमा गतं शिवेन ॥ ४ ॥

उप । त्या । वह्नी इति । गमतः । विशम् । नः । रक्षःऽहना । सम्ऽभृता । वीळुपाणी इति वीळुऽपाणी ।
सम् । अन्धांसि । अग्मत । मत्सराणि । मा । नः । मर्धिष्टम् । आ । गतम् । शिवेन ॥ ४ ॥

**वेङ्कट०** तौ वोढारौ अस्माकं प्रजाम् उप गच्छतः रक्षोहणौ हविर्भिः सम्भृतौ[7] दृढपाणी । सम् अगच्छन्त युवयोः मादकानि सोमान्नानि । मा अस्मान् हिंसिष्टम् । आ गच्छतम् सुखेन प्रदित्सितेन सह इति ॥ ४ ॥

---

१. °वन्तं मूको. २. उरु° वि[२] अ[१]. ३. °ति ते मूको. ४. °कर्मणा वि[२] ल लअ; °कर्माणा अ[१]. ५. प्रेरितः वि[२]. ६. स्तुव मूको. ७. °म्भूतौ मूको.

आ पश्चातान्नासत्या पुरस्तादाश्विना यातमधरादुदक्तात् ।
आ विश्वतः पाञ्चजन्येन राया यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

आ । पश्चातात् । नासत्या । आ । पुरस्तात् । आ । अश्विना । यातम् । अधरात् । उदक्तात् ।
आ । विश्वतः । पाञ्चऽजन्येन । राया । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** ऋ ७,७२,५ द्र. ॥ ५ ॥

[1]इति पञ्चमाष्टके पञ्चमाध्याये विंशो वर्गः[1] ॥

[ ७४ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । अश्विनौ देवता । प्रगाथः छन्दः ( विषमा बृहत्यः, समाः सतोबृहत्यः )[1] ।

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ १ ॥

इमाः । ऊँ इति । वाम् । दिविष्टयः । उस्रा । हवन्ते । अश्विना ।
अयम् । वाम् । अह्वे । अवसे । शचीवसू इति शचीऽवसू । विशम्ऽविशम् । हि । गच्छथः ॥१॥

**वेङ्कट०** इमाः उ[2] वाम् दिविष्टयः उषसो दिवम् इच्छन्ति इति उत्सरणशीलौ[3] हवन्ते हे अश्विनौ! । अयम् च वाम् ह्वयामि रक्षणाय प्रज्ञावसू! । युवाम् हि विशंविशम् गच्छथः, सर्वाः प्रजाः अभिगच्छतम्[4] ॥ १ ॥

युवं चित्रं ददथुर्भोजनं नरा चोदेथां सूनृतावते ।
अर्वाग् रथं समनसा नि यच्छतं पिबतं सोम्यं मधु ॥ २ ॥

युवम् । चित्रम् । ददथुः । भोजनम् । नरा । चोदेथाम् । सूनृताऽवते ।
अर्वाक् । रथम् । सऽमनसा । नि । यच्छतम् । पिबतम् । सोम्यम् । मधु ॥ २ ॥

**वेङ्कट०** युवां पूजनीयम् ददथुः[5] अन्नम् हे नरौ!, मह्यं च चोदयतम्[6] स्तुतिमते । अर्वाग् इति स्पष्टम् ॥ २ ॥

आ यातमुप भूषतं मध्वः पिबतमश्विना ।
दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमा गतम् ॥ ३ ॥

आ । यातम् । उप । भूषतम् । मध्वः । पिबतम् । अश्विना ।
दुग्धम् । पयः । वृषणा । जेन्यावसू इति । मा । नः । मर्धिष्टम् । आ । गतम् ॥ ३ ॥

---

१-१. नास्ति मूको. २. नास्ति वि[२]. ३. °शीलो मूको. ४. °च्छत वि[२] ल लभ; °च्छथ अ[१].
५. ददतुः मूको. ६. °दयं वि[१] ल लभ; °दयन् अ[१].

वेङ्कट० आ गच्छतम्, उप च भवतम्[1], सोमम् [2]च पिबतम्[2] अश्विनौ![3] दुग्धम् पयः च हे वृषणौ! जेतव्यशत्रुधनौ![4], मा अस्मान् हिंसिष्टम्, आ गच्छतम् ॥ ३ ॥

अश्वासो ये वामुप दाशुषो गृहं युवां दीयन्ति बिभ्रतः ।
मक्षूयुभिर्नरा हयेभिरश्विना देवा यातमस्मयू ॥ ४ ॥

अश्वासः । ये । वाम् । उप । दाशुषः । गृहम् । युवाम् । दीयन्ति । बिभ्रतः ।
मक्षुयुऽभिः । नरा । हयेभिः । अश्विना । आ । देवा । यातम् । अस्मयू इत्यस्मऽयू ॥ ४ ॥

वेङ्कट० अश्वासः ये युवयोः उप गच्छन्ति यजमानस्य गृहम् प्रति युवाम् रथे धारयन्तः । तैः क्षिप्रगमनकारिभिः हे नरौ! अश्वैः अश्विनौ! देवौ! आ यातम् अस्मत्कामौ[5] ॥ ४ ॥

अधा ह यन्तो अश्विना पृक्षः सचन्त सूरयः ।
ता यंसतो मघवद्भ्यो ध्रुवं यशश्छर्दिरस्मभ्यं नासत्या ॥ ५ ॥

अध । ह । यन्तः । अश्विना । पृक्षः । सचन्त । सूरयः ।
ता । यंसतः । मघवत्ऽभ्यः । ध्रुवम् । यशः । छर्दिः । अस्मभ्यम् । नासत्या ॥ ५ ॥

वेङ्कट० अथ खलु अभिगच्छन्तः अश्विनौ अन्नं सचन्ते स्तोतारः । तौ प्रयच्छतः हविष्मद्भ्यः ध्रुवम् अन्नम्, अस्मभ्यम् च गृहम् प्रयच्छतम् हे नासत्या! इति ॥ ५ ॥

प्र ये ययुरवृकासो रथा इव नृपातारो जनानाम् ।
उत स्वेन शवसा शूशुवुर्नर उत क्षियन्ति सुक्षितिम् ॥ ६ ॥

प्र । ये । ययुः । अवृकासः । रथाःऽइव । नृऽपातारः । जनानाम् ।
उत । स्वेन । शवसा । शूशुवुः । नरः । उत । क्षियन्ति । सुऽक्षितिम् ॥ ६ ॥

वेङ्कट० प्र यच्छन्ति ये वृकवर्जिताः शीघ्रम् रथाः इव नृणां रक्षितारः जनानाम् मध्ये अश्विनोः[6] स्तोतारः । [7]ते च[7] ‘स्वेन बलेन[8]’ वृद्धा भवन्ति, अपि च निवसन्ति सुनिवासम् ॥ ६ ॥

[9]इति पञ्चमाष्टके पञ्चमाध्याये एकविंशो वर्गः[9] ॥

## [ ७५ ]

‘वसिष्ठो मैत्रावरुणिर्ऋषिः । उषा देवता । त्रिष्टुप् छन्दः’ ।

व्युषा आवो दिविजा ऋतेनाविष्कृण्वाना महिमानमागात् ।
अप द्रुहस्तम आवरजुष्टमङ्गिरस्तमा पथ्या अजीगः ॥ १ ॥

---

१. हव° वि[2]. २-२. चवितम् वि[1]; चर्वितम् अ[1]; च पितम् ल लभ. ३. अश्विना वि[2] अ[1]. ४. जेतव्यं शत्रुधनो मूको. ५. °कामम अ[1]. ६. अश्विनौ मूको. ७-७. स्तेन मूको; स्वेन ल प्रस्तावः. ८. स्वबलेन अ[1]; स्वन व° लभ. ९-९. नास्ति मूको.

वि । उषाः । आवः । दिविऽजाः । ऋतेन । आविःऽकृण्वाना । महिमानम् । आ । अगात् ।
अप । द्रुहः । तमः । आवः । अजुष्टम् । अङ्गिरःऽतमा । पथ्याः । अजीगः । इति ॥ १ ॥

**वेङ्कट०** उषाः विविधं गच्छति दिवि जाता सत्येन प्रकाश्येन सह । अन्धकाराऽपनयनात् सत्यस्य प्रकाशनम् । प्रकाशयन्ती महिमानम् आ जगाम । आगता[1] च रक्षांसि तमः च आत्मनः अपर्याप्तम् अप गमयति । सा इयम्[2] अङ्गिरस्तमा । पुरा उषाः अङ्गिरःसु जज्ञे । मार्गान् तमसा तिरोहितान् तदपनयनेन उज्जहारेति । तेजांसि वा पथ्याः इति ॥ १ ॥

महे नो अद्य सुवितायं बोध्युषो महे सौभंगाय प्र यन्धि ।
चित्रं रयिं यशसं धेह्यस्मे देवि मर्तेषु मानुषि श्रवस्युम् ॥ २ ॥

महे । नः । अद्य । सुवितायं । बोधि । उषः । महे । सौभंगाय । प्र । यन्धि ।
चित्रम् । रयिम् । यशसम् । धेहि । अस्मे इति । देवि । मर्तेषु । मानुषि । श्रवस्युम् ॥ २ ॥

**वेङ्कट०** महते अस्माकम् अद्य अभ्युदयाय प्रबुद्धा भव[3] । तथा उषः! महते सौभाग्याय धनम् अस्मभ्यम् प्र यच्छ । चित्रम् रयिम् यशस्विनम् प्रयच्छ अस्मभ्यम् । देवि! मर्त्येषु मां प्रथितं कुरु धनप्रदानेन [4]मनुष्यहिते! कीर्तिमिच्छन्तम्[4] ॥ २ ॥

एते त्ये भानवो दर्शतायाश्चित्रा उषसो अमृतास आगुः ।
जनयन्तो दैव्यानि व्रतान्यापृणन्तो अन्तरिक्षा व्यस्थुः ॥ ३ ॥

एते । त्ये । भानवः । दर्शतायाः । चित्राः । उषसः । अमृतासः । आ । अगुः ।
जनयन्तः । दैव्यानि । व्रतानि । आऽपृणन्तः । अन्तरिक्षा । वि । अस्थुः ॥ ३ ॥

**वेङ्कट०** ते[5] इमे रश्मयः दर्शनीयायाः उषसः चित्राः मरणवर्जिताः प्रादुरभवन् । जनयन्तः यज्ञान् आपूरयन्तः[6] च अन्तरिक्षम् वि तिष्ठन्ते ॥ ३ ॥

एषा स्या युजाना पराकात् पञ्च क्षितीः परि सद्यो जिगाति ।
अभिपश्यन्ती वयुना जनानां दिवो दुहिता भुवनस्य पत्नी ॥ ४ ॥

एषा । स्या । युजाना । पराकात् । पञ्च । क्षितीः । परि । सद्यः । जिगाति ।
अभिऽपश्यन्ती । वयुना । जनानाम् । दिवः । दुहिता । भुवनस्य । पत्नी ॥ ४ ॥

**वेङ्कट०** सा एषा उषाः युञ्जाना दूरात् पञ्च जनान् सद्यः एव [7]परि गच्छति[7] दर्शयन्ती[8] मार्गान् जनानाम् दिवः दुहिता भुवनस्य पालयित्री ॥ ४ ॥

---

१. °तानि वि[1] अ[1]; °तां ल लभ. २. एवम् अ[1]. ३. भवत वि[1] अ[1]. ४-४. °ते…गच्छतं वि[1] अ[1].
५. नास्ति वि[1]; एते अ[1] ल लभ. ६. पूर° ल लभ. ७-७. परीच्छ° वि[1] ल; परिच्छ° अ[1] लभ.
८. नास्ति वि[1] अ[1]; दर्शनीय ल लभ.

वाजिनीवती सूर्यस्य योषा चित्रामघा राय ईशे वसूनाम् ।
ऋषिष्टुता जरयन्ती मघोन्युषा उच्छति वह्निभिर्गृणाना ॥ ५ ॥

वाजिनीऽवती । सूर्यस्य । योषा । चित्रऽमघा । रायः । ईशे । वसूनाम् ।
ऋषिऽस्तुता । जरयन्ती । मघोनी । उषाः । उच्छति । वह्निऽभिः । गृणाना ॥ ५ ॥

**वेङ्कट०** अन्नवती सूर्यस्य योषा चित्रधना धनस्य ईशे वसूनाम् च । वसूनि वासयन्ति[1] इति रश्मयः । ऋषिष्टुता[2] सर्वं भूतजातम् जरयन्ती[3] धनवती उषाः उच्छति वोढृभिः स्तोतृभिः स्तूयमाना ॥ ५ ॥

प्रति द्युतानामरुषासो अश्वाश्चित्रा अदृश्रन्नुषसं वहन्तः ।
याति शुभ्रा विश्वपिशा रथेन दधाति रत्नं विधते जनाय ॥ ६ ॥

प्रति । द्युतानाम् । अरुषासः । अश्वाः । चित्राः । अदृश्रन् । उषसम् । वहन्तः ।
याति । शुभ्रा । विश्वऽपिशा । रथेन । दधाति । रत्नम् । विधते । जनाय ॥ ६ ॥

**वेङ्कट०** प्रति अदृश्रन्[4] द्योतमानाम् आरोचमानाः अश्वाः चित्राः उषसम् वहन्तः । याति शोभमाना विश्वरूपा[5] रथेन । दधाति रत्नम् परिचरते जनाय ॥ ६ ॥

सत्या सत्येभिर्महती महद्भिर्देवी देवेभिर्यजता यजत्रैः ।
रुजद् दृळ्हानि ददद्रुस्रियाणां प्रति गाव उषसं वावशन्त ॥ ७ ॥

सत्या । सत्येभिः । महती । महत्ऽभिः । देवी । देवेभिः । यजता । यजत्रैः ।
रुजत् । दृळ्हानि । ददत् । उस्रियाणाम् । प्रति । गावः । उषसम् । वावशन्त ॥ ७ ॥

**वेङ्कट०** सत्या सत्यैः महती च महद्भिः देवी देवैः यष्टव्या यष्टव्यैः सह विनाशयति दृढानि[6] तमांसि, ददाति च[7] रश्मीन् । रश्मयश्च उषसम्[8] अत्यन्तम् प्रति कामयन्ते ॥

नू नो गोमद् वीरवद् धेहि रत्नमुषो अश्वावत् पुरुभोजो अस्मे ।
मा नो बर्हिः पुरुषता निदे कर्यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

नु । नः । गोऽमत् । वीरऽवत् । धेहि । रत्नम् । उषः । अश्वऽवत् । पुरुऽभोजः । अस्मे इति ।
मा । नः । बर्हिः । पुरुषता । निदे । कः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

**वेङ्कट०** क्षिप्रम् अस्मभ्यम् गोमत् वीरवत् च धेहि रत्नम् उषः! अश्ववत् बहुप्रकारं भोक्तव्यम् अस्माभिः । मा अस्माकं यज्ञम् जनतायाम् निन्दायै कार्षीः[9] ॥ ८ ॥

[10]इति पञ्चमाष्टके पञ्चमाध्याये द्वाविंशो वर्गः[10] ॥

---

१. वोस॰ मूको. २. ॰ष्ठुताः ल. ३. जनयन्ती मूको. ४. नास्ति वि[२] अ[१]. ५. ॰पा धनेन अ[१].
६. दृढानि अ[१]. ७. नास्ति वि[२]. ८. औपुसम् ल. ९. षी वि[२]; षीव अ[१]; काषी ल लक्ष.
१०-१०. नास्ति मूको.

[ ७६ ]

[१]वसिष्ठो मैत्रावरुणिर्ऋषिः । उषा देवता । त्रिष्टुप् छन्दः[१] ।

उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ।
क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः ॥ १ ॥

उत् । ऊँ इति । ज्योतिः । अमृतम् । विश्वऽजन्यम् । विश्वानरः । सविता । देवः । अश्रेत् ।
क्रत्वा । देवानाम् । अजनिष्ट । चक्षुः । आविः । अकः । भुवनम् । विश्वम् । उषाः ॥ १ ॥

**वेङ्कट०** यास्कः—'उत् अशिश्रियत् ज्योतिः अमृतम् सर्वजन्यम् विश्वानरः सविता देवः' ( या ११,१० )। क्रत्वा रश्मिना उषआख्यम् देवानाम् चक्षुः अजनिष्ट। आविः करोति भुवनम्[२] सर्वम् उषाः इति ॥ १ ॥

प्र मे पन्था देवयाना अदृश्रन्नमर्धन्तो वसुभिरिष्कृतासः ।
अभूदु केतुरुषसः पुरस्तात् प्रतीच्यागादधि हर्म्येभ्यः ॥ २ ॥

प्र । मे । पन्थाः । देवऽयानाः । अदृश्रन् । अमर्धन्तः । वसुऽभिः । इष्कृतासः ।
अभूत् । ऊँ इति । केतुः । उषसः । पुरस्तात् । प्रतीची । आ । अगात् । अधि । हर्म्येभ्यः ॥

**वेङ्कट०** प्र अदृश्यन्त मम अग्रे पन्थानः देवयानाः रश्मयः अहिंसन्तः वसुभिः देवैः इष्कृताः[३] । भवति केतुः प्रज्ञानं रश्मिः उषसः पुरस्तात् । अभिमुखम् आ गच्छति उषा उच्छ्रितेभ्यो देशेभ्यः ॥ २ ॥

तानीदहानि बहुलान्यासन् या प्राचीनमुदिता सूर्यस्य ।
यतः परि जार इवाचरन्त्युषो ददृक्षे न पुनर्यतीव ॥ ३ ॥

तानि । इत् । अहानि । बहुलानि । आसन् । या । प्राचीनम् । उत्ऽइता । सूर्यस्य ।
यतः । परि । जारःऽइव । आऽचरन्ती । उषः । ददृक्षे । न । पुनः । यतीऽइव ॥ ३ ॥

**वेङ्कट०** तानि एव अहानि विस्तृतानि भवन्ति, यानि अहानि सूर्यस्य उद्यतः[४] प्रागेव उदितानि आसन्। यस्मात् त्वम् जारः इव आचरन्ती उषः! न परि दृश्यसे न क्षणमात्रं तिष्ठसि, यथा यती[५] देशान्तरं गच्छन्ती काचिद्, आगता तदानीम् एव गच्छति। यथा वा जारः तद्वत् त्वं च गता ततोऽपि[६] प्रादुर्भवन्ती[७] इति। ॥ ३ ॥

त इद् देवानां सधमाद आसन्नृतावानः कवयः पूर्व्यासः ।
गूळ्हं ज्योतिः पितरो अन्वविन्दन्त्सत्यमन्त्रा अजनयन्नुषासम् ॥ ४ ॥

---

१-१. नास्ति मूको. २. हवनम् वि[२]; भवनम् अ[१] ल लभ. ३. इवष्कृताः अ[१] लभ. ४. उद्योतः वि[१] ल लभ. ५. यतीति ल लभ; यसीति वि[२] अ[१] ल प्रस्तावः. ६. °तो नि मूको. ७. °भवसि ल प्रस्तावः

ते । इत् । देवानाम् । सधऽमादः । आसन् । ऋतऽवानः । कवयः । पूर्व्यासः ।
गूळ्हम् । ज्योतिः । पितरः । अनु । अविन्दन् । सत्यऽमन्त्राः । अजनयन् । उषसम् ॥ ४ ॥

**वेङ्कट०** ते खलु देवानाम् सधमादः अभवन् । यज्ञवन्तः कवयः पुराणाः कर्माणि अनुतिष्ठन्ति । गूढम् ज्योतिः उषआख्यं पालयितारः देवाः अनु अविन्दन् । सत्यमन्त्राः सत्यस्तुतयः जनयन्तु उषसम् । यद् वा वसिष्ठस्य पितरः स्तुतिभिः उषसम् अविन्दन् अजनयन् चेति ॥ ४ ॥

समान ऊर्वे अधि संगतासः सं जानते न यतन्ते मिथस्ते ।
ते देवानां न मिनन्ति व्रतान्यमर्धन्तो वसुभिर्यादमानाः ॥ ५ ॥

समाने । ऊर्वे । अधि । समऽगतासः । सम् । जानते । न । यतन्ते । मिथः । ते ।
ते । देवानाम् । न । मिनन्ति । व्रतानि । अमर्धन्तः । वसुऽभिः । यादमानाः ॥ ५ ॥

**वेङ्कट०** समाने साधारणे ऊर्वे वाडवे अग्नौ उषसः निदानभूते[1] सङ्गताः सम् जानते । न च मिथः यतन्ते संयत्ताः[2] ते रश्मयः । ते देवानाम् यज्ञाख्यानि कर्माणि न हिंसन्ति अहिंसन्तः वसुभिः देवैः प्रेर्यमाणाः ॥ ५ ॥

प्रति त्वा स्तोमैरीळते वसिष्ठा उषर्बुधः सुभगे तुष्टुवांसः ।
गवां नेत्री वाजपत्नी न उच्छोषः सुजाते प्रथमा जरस्व ॥ ६ ॥

प्रति । त्वा । स्तोमैः । ईळते । वसिष्ठाः । उषःऽबुधः । सुऽभगे । तुस्तुऽवांसः ।
गवाम् । नेत्री । वाजऽपत्नी । नः । उच्छ । उषः । सुऽजाते । प्रथमा । जरस्व ॥ ६ ॥

**वेङ्कट०** प्रति स्तुवन्ति त्वाम् स्तोमैः वसिष्ठाः उषसि प्रबुध्यमानाः हे सुधने![3] स्तुवन्तः । पशूनाम् नेत्री अन्नस्य पालयित्री अन्नपतिका[4] वा अस्मदर्थं वि उच्छ । उषः! शोभनजनने! मुख्या स्तूयस्व स्तुता भवेति ॥ ६ ॥

एषा नेत्री राधसः सूनृतानामुषा उच्छन्ती रिभ्यते वसिष्ठैः ।
दीर्घश्रुतं रयिमस्मे दधाना यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

एषा । नेत्री । राधसः । सूनृतानाम् । उषाः । उच्छन्ती । रिभ्यते । वसिष्ठैः ।
दीर्घऽश्रुतम् । रयिम् । अस्मे इति । दधाना । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**वेङ्कट०** एषा अन्नस्य वाचां च [5]नेत्री उषाः[5] व्युच्छन्ती स्तूयते वसिष्ठैः दीर्घकालं श्रूयमाणम् धनम् अस्मभ्यम् दधाना इति ॥ ७ ॥

[6]इति पञ्चमाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः[6] ॥

---

१. निद्रान° मूको. २. न संय° वि². ३. सुधनैः वि². ४. °वतीका मूको. ५-५. नेत्रभ्युषा मूको. ६-६. नास्ति मूको.

[ ७७ ]

[१]वसिष्ठो मैत्रावरुणिर्ऋषिः । उषा देवता । त्रिष्टुप् छन्दः[१] ।

उपो॑ रुरुचे युव॒तिर्न योषा॒ विश्वं॑ जी॒वं प्र॑सु॒वन्ती॑ च॒रायै॑ ।
अभू॑द॒ग्निः स॒मिधे॒ मानु॑षाणा॒मक॒र्ज्योति॒र्बाध॑माना॒ तमां॑सि ॥ १ ॥

उपो॒ इति॑ । रु॒रु॒चे॒ । यु॒व॒तिः । न । योषा॑ । विश्व॑म् । जी॒वम् । प्र॒ऽसु॒वन्ती॑ । च॒रायै॑ ।
अभू॑त् । अ॒ग्निः । स॒म्ऽइधे॑ । मानु॑षाणाम् । अक॑: । ज्योति॑: । बाध॑माना । तमां॑सि ॥ १ ॥

वेङ्कट० उप एव रुरुचे युवतिः इव स्त्री विश्वम् जीवम् प्रेरयन्ती चरणार्थम् । तस्मिन् काले अभूत् अग्निः समिन्धनाय मानुषाणाम् । करोति ज्योतिः बाधमाना[२] तमांसि ॥ १ ॥

विश्वं॑ प्र॒तीची॑ स॒प्रथा॒ उद॑स्था॒द् रुश॒द् वासो॒ बिभ्र॑ती शु॒क्रम॑श्वैत् ।
हिर॑ण्यवर्णा सु॒दृशी॑कसंदृ॒ग् गवां॑ मा॒ता ने॒त्र्यह्ना॒मरो॑चि ॥ २ ॥

विश्व॑म् । प्र॒तीची॑ । स॒ऽप्रथा॑: । उत् । अ॒स्था॒त् । रुश॑त् । वास॑: । बिभ्र॑ती । शु॒क्रम् । अ॒श्वै॒त् ।
हिर॑ण्यऽवर्णा । सु॒दृशी॑कऽसंदृक् । गवा॑म् । मा॒ता । ने॒त्री । अह्ना॑म् । अ॒रो॒चि॒ ॥ २ ॥

वेङ्कट० विश्वम् भूतम् अभिमुखी सर्वतः पृथुतमा उत् अतिष्ठत् । श्वेतम् वासः बिभ्रती दीप्तिमत्[३] ज्योतिः आवर्धयते[४] । हिरण्यवर्णा सुदृशीकसन्दर्शना ज्योतिषाम् माता अह्नाम् नेत्री दीप्यते ॥ २ ॥

दे॒वानां॒ चक्षु॑: सु॒भगा॒ वह॑न्ती श्वे॒तं नय॑न्ती सु॒दृशी॑क॒मश्व॑म् ।
उ॒षा अ॑दर्शि र॒श्मिभि॒र्व्य॑क्ता चि॒त्राम॑घा॒ विश्व॒मनु॒ प्रभू॑ता ॥ ३ ॥

दे॒वाना॑म् । चक्षु॑: । सु॒ऽभगा॑ । वह॑न्ती । श्वे॒तम् । नय॑न्ती । सु॒ऽदृशी॑कम् । अश्व॑म् ।
उ॒षाः । अ॒द॒र्शि॒ । र॒श्मिऽभि॑: । विऽअ॑क्ता । चि॒त्रऽम॑घा । विश्व॑म् । अनु॑ । प्रऽभू॑ता ॥ ३ ॥

वेङ्कट० देवानाम् चक्षुः आदित्यम् आह्निकं वा तेजः वहन्ती सुधना श्वेतम् सुदर्शनम् आत्मीयम् अश्वम् नयन्ती उषाः अदर्शि रश्मिभिः व्यज्यमाना चित्रधना सर्वं भूतजातं लक्ष्यीकृत्य[५] प्रादुर्भूतेति ॥ ३ ॥

अन्ति॑वामा दू॒रे अ॒मित्र॑मुच्छो॒र्वीं गव्यू॑ति॒मभ॑यं कृधी नः ।
या॒वय॒ द्वेष॒ आ भ॑रा॒ वसू॑नि चो॒दय॒ राधो॑ गृण॒ते म॑घोनि ॥ ४ ॥

---

१-१. नास्ति मूको. २. बासमाना मूको; बाधमानम ल प्रस्तावः ३. दीप्तमिति ल वि[२]; दीप्तिमिति अ[१] लअ. ४. आवर्तय° वि[१]. ५. लक्षीकृ° वि[१] अ[१].

अन्तिऽवामा । दूरे । अमित्रम् । उच्छ । उर्वीम् । गव्यूतिम् । अभयम् । कृधि । नः ।
यवय । द्वेषः । आ । भर । वसूनि । चोदय । राधः । गृणते । मघोनि ॥ ४ ॥

**वेङ्कट०** सन्निकृष्टधना अमित्रम् दूरे अस्माकं वि उच्छ । यथा अमित्रो दूरे भवति तथा व्युच्छेत्यर्थः । विस्तीर्णं गोमार्गम् अभयम् च अस्माकम् कुरु । पृथक् कुरु च शत्रुम्, आ भर धनानि, चोदय अन्नं स्तुवते मह्यम् हे उषः! ॥ ४ ॥

अस्मे श्रेष्ठेभिर्भानुभिर्वि भाह्युषो देवि प्रतिरन्ती न आयुः ।
इषं च नो दधती विश्ववारे गोमदश्वावद्रथवच्च राधः ॥ ५ ॥

अस्मे इति । श्रेष्ठेभिः । भानुऽभिः । वि । भाहि । उषः । देवि । प्रऽतिरन्ती । नः । आयुः ।
इषम् । च । नः । दधती । विश्वऽवारे । गोऽमत् । अश्वऽवत् । रथऽवत् । च । राधः ॥ ५ ॥

**वेङ्कट०** अस्माकं श्रेष्ठैः भानुभिः व्युष्टा भव उषः! देवि! वर्धयन्ती[1] अस्माकम् आयुः, अन्नम् च नः प्रयच्छन्ती[2] हे विश्वैर्वरणीये![3] गवादियुक्तं धनम् च ॥ ५ ॥

यां त्वा दिवो दुहितर्वर्धयन्त्युषः सुजाते मतिभिर्वसिष्ठाः ।
सास्मासु धा रयिमृष्वं बृहन्तं यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

याम् । त्वा । दिवः । दुहितः । वर्धयन्ति । उषः । सुऽजाते । मतिऽभिः । वसिष्ठाः ।
सा । अस्मासु । धाः । रयिम् । ऋष्वम् । बृहन्तम् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥

**वेङ्कट०** निगदसिद्धेति ॥ ६ ॥

[4]इति पञ्चमाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः[4] ॥

## [ ७८ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । उषा देवता । त्रिष्टुप् छन्दः[4] ।

प्रति केतवः प्रथमा अदृश्रन्नूर्ध्वा अस्या अञ्जयो वि श्रयन्ते ।
उषो अर्वाचा बृहता रथेन ज्योतिष्मता वाममस्मभ्यं वक्षि ॥ १ ॥

प्रति । केतवः । प्रथमाः । अदृश्रन् । ऊर्ध्वाः । अस्याः । अञ्जयः । वि । श्रयन्ते ।
उषः । अर्वाचा । बृहता । रथेन । ज्योतिष्मता । वामम् । अस्मभ्यम् । वक्षि ॥ १ ॥

**वेङ्कट०** [5]प्रति अदृश्यन्त[5] मुख्याः रश्मयः । ऊर्ध्वाः उषसः अञ्जयः विविधं सेवन्ते जनाः(?) । अञ्जयः रश्मयः । हे उषः! अभिमुखेन[6] महता रथेन ज्योतिष्मता धनम् अस्मभ्यम् वह ॥ १ ॥

---

१. °यन्ति वि[2]. २. °च्छन्ति मूको. ३. विश्वैरणीये वि[2] अ[1]; विश्वैवैरणीये ल लभ.
४-४. नास्ति मूको. ५-५ प्रति दृश्यन्त वि[2] अ[1]; प्रत्यदृश्यन् ल लभ. ६. आभिमुख्येन ल लभ.

प्रति षीमग्निर्जरते समिद्धः प्रति विप्रासो मतिभिर्गृणन्तः ।
उषा याति ज्योतिषा बाधमाना विश्वा तमांसि दुरिताप देवी ॥ २ ॥

प्रति । सीम् । अग्निः । जरते । सम्ऽइद्धः । प्रति । विप्रासः । मतिऽभिः । गृणन्तः ।
उषाः । याति । ज्योतिषा । बाधमाना । विश्वा । तमांसि । दुःऽइता । अप । देवी ॥ २ ॥

**वेङ्कट०** सर्वतः समिद्धः अग्निः प्रति स्तूयते । [1]तथा विप्राश्च[1] स्तुतिभिः उषसः स्तुवन्तो जनैः प्रति स्तूयन्ते । उषाः गच्छति विश्वानि तमांसि दुरितानि च ज्योतिषा अप बाधमाना देवी इति ॥ २ ॥

एता उ त्याः प्रत्यदृश्रन् पुरस्ताज्ज्योतिर्यच्छन्तीरुषसो विभातीः ।
अजीजनन्त्सूर्यं यज्ञमग्निमपाचीनं तमो अगादजुष्टम् ॥ ३ ॥

एताः । ऊँ इति । त्याः । प्रति । अदृश्रन् । पुरस्तात् । ज्योतिः । यच्छन्तीः । उषसः । विऽभातीः ।
अजीजनन् । सूर्यम् । यज्ञम् । अग्निम् । अपाचीनम् । तमः । अगात् । अजुष्टम् ॥ ३ ॥

**वेङ्कट०** ताः एताः पुरस्तात् प्रति दृश्यन्ते ज्योतिः यच्छन्त्यः[2] उषसः व्युच्छन्त्यः । ताः इमाः अजीजनन् सूर्यम् यज्ञम् अग्निम् च । अवाचीनम्[3] तमः अगच्छत् आगतायाम् उषसि अशोभनम् ॥ ३ ॥

अचेति दिवो दुहिता मघोनी विश्वे पश्यन्त्युषसं विभातीम् ।
आस्थाद् रथं स्वधया युज्यमानमा यमश्वासः सुयुजो वहन्ति ॥ ४ ॥

अचेति । दिवः । दुहिता । मघोनी । विश्वे । पश्यन्ति । उषसम् । विऽभातीम् ।
आ । अस्थात् । रथम् । स्वधया । युज्यमानम् । आ । यम् । अश्वासः । सुऽयुजः । वहन्ति ॥

**वेङ्कट०** ज्ञायते दिवः दुहिता उषाः । विश्वे पश्यन्ति उषसम् व्युच्छन्तीम्[4] । सा इयम् आ तिष्ठति रथम् बलेन युज्यमानम्, यम्[5] रथम् आ वहन्ति अश्वाः सुयुक्ताः ॥ ४ ॥

प्रति त्वाद्य सुमनसो बुधन्तास्माकासो मघवानो वयं च ।
तिल्विलायध्वमुषसो विभातीर्यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

प्रति । त्वा । अद्य । सुऽमनसः । बुधन्त । अस्माकासः । मघऽवानः । वयम् । च ।
तिल्विलायध्वम् । उषसः । विऽभातीः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** प्रति अबुध्यन्त[6] अद्य त्वाम् आगताम् सुमनसः स्तोतारः अस्मदीयाः हविष्मन्तः वयम्

---

१-१. तथापि प्राञ्चः वि[2] अ[1]. २. इच्छ° वि[2]. ३. अपाचीनम् ल प्रस्तावः. ४. अभ्युच्छन्तीम् वि[2] ल लभ; भ्युच्छतीम् अ[1]. ५. नास्ति मूको. ६. अनुबुध्यन्त अ[1]; बुध्यन्त (°न्त्व लभ.) ल लभ.

च। हे उषसः! तिल्विलेवाऽऽचरत[1] व्युच्छन्त्यः। यथा भद्रे क्षेत्रे निमिता[2] तिल्विला प्ररोहति तथा बहुशाखाः प्रादुर्भवतेति ॥ ५ ॥

[3]इति पञ्चमाष्टके पञ्चमाध्याये पञ्चविंशो वर्गः[3] ॥

[ ७९ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः। उषा देवता। त्रिष्टुप् छन्दः[1]।

व्यु१षा आवः पथ्या३ जनानां पञ्च क्षितीर्मानुषीर्बोधयन्ती ।
सुसंदृग्भिरुक्षभिर्भानुमश्रेद् वि सूर्यो रोदसी चक्षसावः ॥ १ ॥

वि। उषाः। आवः। पथ्या। जनानाम्। पञ्च। क्षितीः। मानुषीः। बोधयन्ती।
सुसंदृक्ऽभिः। उक्षऽभिः। भानुम्। अश्रेत्। वि। सूर्यः। रोदसी इति। चक्षसा। आवरित्यावः ॥

वेङ्कट० वि गमयति उषाः मार्गान् जनानाम् रश्मीन् वा[4] पञ्च क्षितीः मानुषीः बोधयन्ती[5]। सुसन्दर्शनैः सेक्तृभिः रश्मिभिः दीप्तं श्रयति। वि आवृणोति सूर्यः द्यावापृथिव्यौ तेजसा ॥१॥

व्यञ्जते दिवो अन्तेष्वक्तून् विशो न युक्ता उषसो यतन्ते ।
सं ते गावस्तम आ वर्तयन्ति ज्योतिर्यच्छन्ति सवितेव बाहू ॥ २ ॥

वि। अञ्जते। दिवः। अन्तेषु। अक्तून्। विशः। न। युक्ताः। उषसः। यतन्ते।
सम्। ते। गावः। तमः। आ। वर्तयन्ति। ज्योतिः। यच्छन्ति। सविताऽइव। बाहू इति ॥२॥

वेङ्कट० प्रकाशयन्ति अन्तरिक्षस्य पर्यन्तेषु अञ्जनसाधनान् रश्मीन्। मनुष्याः इव युक्ताः कार्येषु उषसः[6] प्रयत्नं कुर्वन्ति। सम् आ वर्तयन्ति पिण्डीकुर्वन्ति तव रश्मयः तमः। ज्योतिः च यच्छन्ति। यथा सविता उद्यन् आत्मीयौ [7]बाहू यच्छति[7] ॥ २ ॥

अभूदुषा इन्द्रतमा मघोन्यजीजनत् सुविताय श्रवांसि ।
वि दिवो देवी दुहिता दधात्यङ्गिरस्तमा सुकृते वसूनि ॥ ३ ॥

अभूत्। उषाः। इन्द्रऽतमा। मघोनी। अजीजनत्। सुविताय। श्रवांसि।
वि। दिवः। देवी। दुहिता। दधाति। अङ्गिरःऽतमा। सुऽकृते। वसूनि ॥ ३ ॥

वेङ्कट० अभूत् उषाः ईश्वरतमा धनवती। अजीजनत् अभ्युदयाय अन्नानि। दिवः दुहिता देवी वि दधाति अङ्गिरसां वरिष्ठा[8] सुकर्मणे धनानि ॥ ३ ॥

तावदुषो राधो अस्मभ्यं रास्व यावत् स्तोतृभ्यो अरदो गृणाना ।
यां त्वा जज्ञुर्वृषभस्या रवेण वि दृळ्हस्य दुरो अद्रेरौर्णोः ॥ ४ ॥

---

१. °लेपापक्त मूको. २. न्युप्ता ल प्रस्तावः. ३-३. नास्ति मूको. ४. पा मूको. ५. °यति मूको. ६. उषसं मूको. ७-७. बाहु(°ह लअ.)भ्यां यमिति मूको. ८. वसिष्ठाः मूको.

तावत् । उषः । राधः । अस्मभ्यम् । रास्व । यावत् । स्तोतृऽभ्यः । अरदः । गृणाना ।
याम् । त्वा । जज्ञुः । वृषभस्य । रवेण । वि । दृळहस्य । दुरः । अद्रेः । और्णोः ॥ ४ ॥

**वेङ्कट०** तावत् उषः! अन्नम् अस्मभ्यम् देहि, यावत् स्तोतृभ्यः प्रादाः स्तूयमाना। याम्[1] त्वाम् आगतां जानन्ति वृषभस्य उषसि शब्दयतः[2] रवेण, सा [3]वि और्णोः[3] दृळहस्य[4] शिलोच्चयस्य द्वाराणि पणिभिः अपहृतानां गवाम् आनयनाय ॥ ४ ॥

देवंदेवं राधसे चोदयन्त्यस्मद्र्यक् सूनृता ईरयन्ती ।
व्युच्छन्ती नः सनये धियो धा यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

देवम्ऽदेवम् । राधसे । चोदयन्ती । अस्मद्र्यक् । सूनृताः । ईरयन्ती ।
विऽउच्छन्ती । नः । सनये । धियः । धाः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥५॥

**वेङ्कट०** सर्वं[5] देवं[6] धनाय चोदयन्ती अस्मदभिमुखं वाचः च प्रेरयन्ती व्युच्छन्ती अस्माकं लाभाय[7] बुद्धिं देहि ॥ ५ ॥

[8]इति पञ्चमाष्टके पञ्चमाध्याये षड्विंशो वर्गः[8] ॥

[ ८० ]

[8]वसिष्ठो मैत्रावरुणिर्ऋषिः । उषा देवता । त्रिष्टुप् छन्दः[8] ।

प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा अबुध्रन् ।
विवर्तयन्तीं रजसी समन्ते आविष्कृण्वतीं भुवनानि विश्वा ॥ १ ॥

प्रति । स्तोमेभिः । उषसम् । वसिष्ठाः । गीःऽभिः । विप्रासः । प्रथमाः । अबुध्रन् ।
विऽवर्तयन्तीम । रजसी इति । समन्ते इति समऽअन्ते । आविःऽकृण्वतीम् । भुवनानि । विश्वा ॥ १ ॥

**वेङ्कट०** प्रति अबोधयन् स्तोमैः उषसम् वसिष्ठाः[9] गीर्भिः च मेधाविनः अन्येभ्यः स्तोतृभ्यः पूर्वम् एव अन्धकारापनयनेन पृथक् कुर्वतीम्[10] द्यावापृथिव्यौ सङ्गतान्ते सर्वाणि भुवनानि प्रकाशयन्तीम् ॥ १ ॥

एषा स्या नव्यमायुर्दधाना गूढ्वी तमो ज्योतिषोषा अबोधि ।
अग्र एति युवतिरह्रयाणा प्राचिकितत् सूर्यं यज्ञमग्निम् ॥ २ ॥

एषा । स्या । नव्यम् । आयुः । दधाना । गूढ्वी । तमः । ज्योतिषा । उषाः । अबोधि ।
अग्रे । एति । युवतिः । अह्रयाणा । प्र । अचिकितत् । सूर्यम् । यज्ञम् । अग्निम् ॥ २ ॥

---

१. या मूको. २. शब्दायन्तः वि[2] ल; शब्दं यन्तः अ[1] लभ. ३-३. प्यौर्णो वि[2]; व्यौर्णो अ[1] ल लभ. ४. दृढस्य वि[1]. ५. देवं अ[1]. ६. देव मूको. ७ लानायम् ल लभ. ८-८. नास्ति मूको. ९. वरिष्ठाः वि[2] ल लभ. १०. °र्वन्तीम् मूको.

**वेङ्कट०** **सा** एषा **नवतरम्** आयुः दधाना **तिरोहितं** कृत्वा तमः ज्योतिषा उषाः **प्रबुद्धा** **भवति**। अग्रे च सर्वेषां देवानाम् युवतिः एति अह्णीभूतयाना[1] ( तु. या ५,१५ )। प्र ज्ञापयति च सूर्यम् यज्ञम् अग्निम् ॥ २ ॥

अश्वा॑वती॒र्गोम॑तीर्न उ॒षासो॑ वी॒रव॑ती॒ः सद॑मुच्छन्तु भ॒द्राः ।
घृ॒तं दुहा॑ना वि॒श्वत॒ः प्रपी॑ता यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥ ३ ॥

अश्व॑ऽवतीः । गोऽम॑तीः । न॒ः । उ॒षस॑ः । वी॒रऽव॑तीः । सद॑म् । उ॒च्छ॒न्तु॒ । भ॒द्राः ।
घृ॒तम् । दुहा॑नाः । वि॒श्वत॑ः । प्रऽपी॑ताः । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभि॑ः । सदा॑ । न॒ः ॥ ३ ॥

**वेङ्कट०** पूर्वं व्याख्याता ( ऋ ७,४१,७ ) ॥ ३ ॥

[2]इति पञ्चमाष्टके पञ्चमाध्याये सप्तविंशो वर्गः[2] ॥

व्याख्यत् पञ्चममध्यायं पञ्चमस्याष्टकस्य सः ।
लोहितस्य कुले जातो माधवः सुन्दरीसुतः ॥

इति श्रीवेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने पञ्चमाष्टके पञ्चमोऽध्यायः ॥

—*—

## इति ऋग्वेदे सभाष्ये पञ्चमाष्टके पञ्चमोऽध्यायः ॥



१. भणीभू° मूको. २-२. नास्ति मूको.

अथ षष्ठोऽध्यायः ।

वेङ्कट०

'प्रत्यु अदर्श्यायती( ति' इ )ति[1] न्याचिख्यासति माधवः ।
कारणं[2] सूक्तभेदस्य मुखतः सम्प्रदर्शयन् ॥ १ ॥

ऋषिच्छन्दोदेवतार्थाः[3] सूक्तभेदस्य हेतवः ।
मन्यन्ते बह्वृचाः केचिद् अर्थमेव विभेदकम् ॥ २ ॥

नवमे मण्डले भेदः सूक्तानामृषिभिः कृतः ।
'स्वादिष्ठया मदिष्ठया'[4] चत्वार्याहुर्निदर्शनम् ॥ ३ ॥

गायत्राण्येव चत्वारि सोम एव च देवता ।
मधुच्छन्दःप्रभृतयः चत्वार ऋषयोऽभवन् ॥ ४ ॥

छन्दोदेवतयोः[5] साम्ये सन्ति सूक्तानि मण्डले ।
ऋषिभेदेन भिन्नानि पावमानाभिशब्दिते ॥ ५ ॥

'इन्द्रं विश्वा अवीवृधन्'[6] छन्दोभेदेन भिद्यते ।
देवताभेदभिन्नानि 'वायवा याहि दर्शत'[7] ॥ ६ ॥

आत्मदृष्टेषु सूक्तेषु क्वचित् संयोजयन्ति च ।
दृष्टानन्येन ऋषिणा मन्त्रानिह महर्षयः ॥ ७ ॥

आङ्गिरसेन घोरेण दृष्टामेकामिमामृचम् ।
'अस्मे [8]प्र यन्धि[8] मघवन्'[9] विश्वामित्रस्तथाऽकरोत् ॥ ८ ॥

अन्त्यं[10] तृचं मण्डलस्य [11]जामदग्न्यं वदन्ति हि[11] ।
'आ नो मित्रावरुणे (°णा'[12] इ)ति [13]सूक्तान्ते च न्यवेदयत्[13] ॥ ९ ॥

सहासनकृतां[14] तत्र सम्प्रीतिं कारणं विदुः ।
आत्ममन्त्रसमाश्रैते[15] मन्त्रान् पश्यन्ति सङ्गताः ॥ १० ॥

बहवः सन्ति ननु च द्रष्टारो[16] द्वैपदस्य ये ।
बन्धुः सुबन्धुरित्येते सत्यं ते भ्रातरोऽभवन् ॥ ११ ॥

---

१. °र्शी आयती वेंऋअ. २. करणं वि[2] अ[1] लअ ३. ऋषिश्छन्दोदेवतार्थः वि[2]; ऋषिच्छन्दोदेवतार्थः ल. ४. ऋ ९,१,१. ५. °दैव° वि[2] अ[1]. ६. ऋ १,११,२. ७. ऋ १,२,१. ८-८. प्रवृद्ध वि[2] अ[1]; प्र···न्ध लअ. ९. ऋ ३,३६,१०. १०. आन्त्यं वि[2] अ[1] ल; आन्त्यं च लअ ११-११. सूक्तान्ते च न्यवेदयत् वि[2] अ[1] ल लअ. १२. ऋ ३,६२,१६. १३-१३. जामदग्न्यं वदन्ति हि वि[2] अ[1] ल लअ; °न्यवेशयत् वेंऋअ. १४. °सन(°न्न अ[1] लअ.)कृतं वि[2] अ[1] लअ. १५ °न्त्रतमां° वि[2] अ[1] लअ. १६. द्रष्टारौ वि[2] अ[1].

द्विपदाश्च समानीताः सूक्तमेकमतोऽभवत्[1] ।
ददृशुः काल एकस्मिन् सर्वे च सह सङ्गताः ॥ १२ ॥

तदेतच्छाट्यायनके[2] विस्पष्टं प्रतिपादितम् ।
यथा दृष्टमिदं सूक्तं तत्तत्रैवावधार्यताम् ॥ १३ ॥

ऋष्यादिभेदः प्रायेण सूक्तभेदस्य कारणम् ।
कारणान्तरमप्यस्ति दृश्यते यत् क्वचित्क्वचित् ॥ १४ ॥

कर्मानुरोधादपि[3] च सूक्तानां भेद इष्यते ।
ऋषिच्छन्दोदैवतेषु समानेष्वपि च क्वचित् ॥ १५ ॥

तत्रोदाहरणान्याहुर्नवमे मण्डले बुधाः ।
एकर्षिकाणि सूक्तानि 'म॒न्द्रया॑ सोम॒ धार॑या'[4] ॥ १६ ॥

'सु॒रू॒प॒कृ॒त्नुमू॒तये॑'[5] इति सूक्तेषु सप्तसु ।
देवतेन्द्र ऋषिश्चैको भिद्यते[6] केन हेतुना ॥ १७ ॥

छन्दश्च षण्णां गायत्री सप्तमेऽनुष्टुबागता ।
'गाय॑न्ति त्वा गाय॒त्रिण॑ः'[7] कामं तत्तेन भिद्यताम् ॥ १८ ॥

नोपपादयितुं शक्यं मनुष्यैरत्र कारणम् ।
'अथापि वासनां कांचित् कथ्यमानामिमां[8] शृणु ॥ १९ ॥

सुरूपकृत्नु-सूक्तेन[9] यज्ञ[10] आगन्तुमिच्छति ।
आगते सति कर्तव्यम् 'आ त्वेते(ता॑'[11] इ)ति च भाषते ॥ २० ॥

'यु॒ञ्जन्ति॑ ब्र॒ध्नम्'[12] इत्यस्मिन् यथा वै सहकारिभिः ।
यस्मिंश्च काल आयाति तत्सर्वं कथितं विदुः ॥ २१ ॥

'इन्द्र॒मिद्गा॒थिनो॑ बृ॒हत्'[13] इति सूक्तेन भाषते ।
अनेकाह्वातृसद्भावम् इन्द्रमाहात्म्यमेव च ॥ २२ ॥

बहवो यद्यपीन्द्र त्वां विह्वयन्त इमे जनाः ।
तान् सर्वानपहाय त्वम् अस्माकं भव केवलः[14] ॥ २३ ॥

---

१. °मेकतमोभवत् वि[1] अ[1] लअ. २. तु जैत्रा ३,१६८-१७०. ३. अर्थानु° वेंऋअ. ४. ऋ ९,६,१. ५. ऋ १,४,१. ६ भिद्यन्ते वि[1] लअ. ७. ऋ १,१०,१. ८-८. तथापि कारणं किंचित् कथ्यमानमिमं वेंऋअ. ९. °सूक्तेषु ल लअ. १०. यजुः वि[2] अ[1]. ११. ऋ १,५,१. १२. ऋ १,६,१. १३. ऋ १,७,१. १४. केवलम् वि[1] अ[1] ल लअ.

'एन्द्र सानसिम्[1]' इत्यत्र स्तुतादिन्द्रात् '[2]स हीच्छति[2]'।
धनमात्माभिलषितं सञ्जिहीर्षति च स्तुतिम्[3] ॥ २४ ॥

स्तुतमिन्द्रं जिगमिषुम् ऋषिस्त्यक्तुमशक्नुवन्।
'इन्द्रेही(°हिं'[4] इ)ति पुनः स्तौति याचते च धनं पुनः ॥ २५ ॥

उक्तमर्थमिमं सर्वं सप्तमेनानुभाषते।
आनुष्टुभेन सूक्तेन 'गायन्ति त्वे (त्वा'[5] इ) त्यृषिः पुनः ॥ २६ ॥

कवित्वस्यानुरोधाय[6] तमेवार्थं पुनः क्वचित्।
अन्यं प्रकारमाश्रित्य पश्यन्ति च महर्षयः ॥ २७ ॥

भेदस्तत्रापि सूक्तानां भवतीति विनिश्चयः।
'नासत्याभ्यां बर्हिरिव'[7] सूक्तान्याहुर्निदर्शनम् ॥ २८ ॥

स्तौत्यश्विनावृषिस्तेषु[8] सङ्गृह्य च विगृह्य च।
कक्षीवान् दैर्घतमसः[9] कवित्वं सम्प्रदर्शयन् ॥ २९ ॥

पश्यन्ति तांस्तानुद्दिश्य कामानपि[10] महर्षयः।
ये ये सूक्तेषु दृश्यन्ते ते च भेदस्य हेतवः ॥ ३० ॥

तथा दर्शनकालस्य भेदश्चैषां विभेदकः।
स च भेदो ब्राह्मणेषु मन्त्रेष्वपि च दृश्यते ॥ ३१ ॥

महावाक्यानुसारेण[11] सैषा सूक्ष्मेक्षिका बुधैः।
कार्या भिन्नेषु सूक्तेषु शुद्धमर्थमभीप्सुभिः ॥ ३२ ॥ इति[12] ॥

## [ ८१ ]

[13]वसिष्ठो मैत्रावरुणिर्ऋषिः। उषा देवता। प्रगाथश्छन्दः (विषमा बृहत्यः, समाः सतोबृहत्यः)[13]।

प्रत्यु॑ अदर्श्याय॒त्यु१॒॑च्छन्ती॑ दुहि॒ता दि॒वः।
अपो॒ महि॑ व्ययति॒ चक्ष॑से॒ तमो॒ ज्योति॑ष्कृणोति सू॒नरी॑ ॥ १ ॥

प्रति॑। ऊँ इति॑। अ॒दर्शि॒। आऽय॒ती। उ॒च्छन्ती॑। दु॒हि॒ता। दि॒वः।
अपो॒ इति॑। महि॑। व्य॒य॒ति॒। चक्ष॑से। तमः॑। ज्योतिः॑। कृ॒णोति॒। सू॒नरी॑ ॥ १ ॥

१. ऋ १,८,१. २-२. अभीप्सति वेंऋअ. ३. स्वयम् अ[1]. ४. ऋ १,९,१. ५ ऋ १,१०,१. ६. क्वापि तस्यानु° वि[2]; क्वचित्तस्यानु° अ[1] लअ. ७. ऋ १,११६,१. ८. सोऽश्विनौ च ऋषि° वि[2] अ[1]; सोश्विनौ वृषि° लअ. ९. दैवत° वि[2] अ[1] लअ. १०. कामानिह वेंऋअ. ११. °क्यानुरोधेन वेंऋअ. १२. नास्ति वि[2] अ[1] लअ. १३-१३. नास्ति मूको.

वेङ्कट० वसिष्ठः[1]। प्रति एव दृश्यते आगच्छन्ती[2] व्युच्छन्ती दिवः दुहिता। [3]अप नयति[3] महत् तमः[4] दर्शनाय[5], ज्योतिः च कृणोति उषाः ॥ १ ॥

उदुस्रियाः सृजते सूर्यः सचाँ उद्यन्नक्षत्रमर्चिवत् ।
तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि ॥ २ ॥

उत् । उस्रियाः । सृजते । सूर्यः । सचा । उत्ऽयत् । नक्षत्रम् । अर्चिऽवत् ।
तव । इत् । उषः । विऽउषि । सूर्यस्य । च । सम् । भक्तेन । गमेमहि ॥ २ ॥

वेङ्कट० उत् एव सृजते सूर्यः रश्मीन् । [6]तथैव सह उद्यत्[6] नक्षत्रम् अपि तेजस्वि[7] भवति। तव इत् हे उषः! व्युच्छने सूर्यस्य च [8]सम् गमेमहि अन्नेन[8] ॥ २ ॥

प्रति त्वा दुहितर्दिव उषो जीरा अभुत्स्महि ।
या वहसि पुरु स्पार्हं वनन्वति रत्नं न दाशुषे मयः ॥ ३ ॥

प्रति । त्वा । दुहितः । दिवः । उषः । जीराः । अभुत्स्महि ।
या । वहसि । पुरु । स्पार्हम् । वनन्ऽवति । रत्नम् । न । दाशुषे । मयः ॥ ३ ॥

वेङ्कट० प्रति बोधयामः त्वाम् हे दिवः दुहितः! उषः! क्षिप्राः । या त्वम् वहसि बहु स्पृहणीयं धनवति! रत्नम्, यजमानाय[9] [10]मयः सुखं[10] प्रयच्छसि इति ॥ ३ ॥

उच्छन्ती या कृणोषि मंहना महि प्रख्यै देवि स्वर्दृशे ।
तस्यास्ते रत्नभाज ईमहे वयं स्याम मातुर्न सूनवः ॥ ४ ॥

उच्छन्ती । या । कृणोषि । मंहना । महि । प्रऽख्यै । देवि । स्वः । दृशे ।
तस्याः । ते । रत्नऽभाजः । ईमहे । वयम् । स्याम । मातुः । न । सूनवः ॥ ४ ॥

वेङ्कट० व्युच्छन्ती या करोषि महत्त्वेन महति! देवि![11] [12]सर्वं भूतं दर्शनाय[12] प्रकथनाय च तमसः अपनयनाय। तस्याः तव रत्नप्रापणानि याचामहे। तथा कुर्वाणाः वयम् स्याम मातुः इव पुत्राः तव प्रियाः ॥ ४ ॥

तच्चित्रं राध आ भरोषो यद् दीर्घश्रुत्तमम् ।
यत् ते दिवो दुहितर्मर्तभोजनं तद् रास्व भुनजामहै ॥ ५ ॥

---

१. सिष्ठः ल लअ; नास्ति वि[2]. २. °च्छन्ति मूको. ३-३. वशन° वि[2]; अवन° अ[1]; इव न° ल लअ. ४. तयोः वि[2] अ[1]; तयः ल लअ. ५. °र्शना…वि[2] अ[1]; °र्शना ल लअ. ६-६. सह एव तथा उद्यत् वि[2] ल लअ. ७. °स्वी मूको. ८-८. सङ्गतेमभिहि अने मूको. ९. °माना मूको. १०-१०. सुखभयं मूको ११. नास्ति मूको. १२-१२. °भूतदर्श° मूको; सर्वभूतदर्श° ल प्रस्तावः.

तत् । चित्रम् । राधः । आ । भर । उषः । यत् । दीर्घश्रुत्ऽतमम् ।
यत् । ते । दिवः । दुहितः । मर्तऽभोजनम् । तत् । रास्व । भुनजामहै ॥ ५ ॥

**वेङ्कट०** तत् चायनीयम्[1] धनम् आ हर उषः![2], यत् अत्यन्तं दीर्घकालं श्रूयते । यत् च ते हे दिवः दुहितः ! मनुष्याणां भोजनसाधनं भवति, तत् अस्मभ्यं प्रयच्छ, तत् वयम् भुनजामहै ॥ ५ ॥

श्रवः सूरिभ्यो अमृतं वसुत्वनं वाजाँ अस्मभ्यं गोमतः ।
चोदयित्री मघोनः सूनृतावत्युषा उच्छदप स्रिधः ॥ ६ ॥

श्रवः । सूरिऽभ्यः । अमृतम् । वसुऽत्वनम् । वाजान् । अस्मभ्यम् । गोऽमतः ।
चोदयित्री । मघोनः । सूनृताऽवती । उषाः । उच्छत् । अप । स्रिधः ॥ ६ ॥

**वेङ्कट०** श्रवणीयम् स्तोतृभ्यः अन्नम् वसुमत्त्वम्[3] च अस्मभ्यम् च अन्नानि गोयुक्तानि चोदयित्री धनवतः शब्दवती उषाः [4]अप उच्छतु[4] शत्रून् । प्रदापयतु आढ्यान् अस्माकं[5] धनम्, विनाशयतु च शत्रून् इति ॥ ६ ॥

[6]इति पञ्चमाष्टके षष्ठाध्याये प्रथमो वर्गः[6] ॥

## [८२]

[6]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रावरुणौ देवता । जगती छन्दः[6] ।

इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥ १ ॥

इन्द्रावरुणा । युवम् । अध्वराय । नः । विशे । जनाय । महि । शर्म । यच्छतम् ।
[7]दीर्घऽप्रयज्युम् । अति । यः । वनुष्यति । वयम् । जयेम । पृतनासु । दुःऽध्यः[7] ॥ १ ॥

**वेङ्कट०** इन्द्रावरुणौ! युवाम्[8] अस्माकं यज्ञाय विशे दासभूतायै[9] जनाय च पुत्राय च महत् सुखम् दत्तम्[10] । दीर्घप्रततयज्ञम् अति हिनस्ति यः, तादृशान् दुर्बुद्धीन् वयम् सङ्ग्रामेषु जयेम ॥ १ ॥

सम्राळन्यः स्वराळन्य उच्यते वां महान्ताविन्द्रावरुणा महावसू ।
विश्वे देवासः परमे व्योमनि सं वामोजो वृषणा सं बलं दधुः ॥ २ ॥

सम्ऽराट् । अन्यः । स्वऽराट् । अन्यः । उच्यते । वाम् । महान्तौ । इन्द्रावरुणा । महावसू इति महाऽवसू ।
विश्वे । देवासः । परमे । विऽओमनि । सम् । वाम् । ओजः । वृषणा । सम् । बलम् । दधुः ॥ २ ॥

**वेङ्कट०** सम्राट् इति अन्यः, स्वराट् अन्यः उच्यते युवयोः । सर्वेषां राजा[11] सम्राट् [1]इति वरुणमाह[1] ।

---

१. चापनीयम् वि[2] ल; वननीयम् अ[1]; चावनीयम् ल लभ. २. ओ मूको. ३. °मस्य वि[2] अ[1].
४-४. अवे च्छ° मूको. ५. 'स्मान् अ[1]. ६-६. नास्ति मूको. ७-७. यास्केन (५,२) व्याख्यातः.
८. युवं अ[1]. ९. °ताय ल प्रस्तावः. १०. दत्त ल लभ ११. राज्ञां वि[2]; राज्ञा अ[1].

स्वयमेव राजन् स्वराड् इति इन्द्रम्[1] आह। महान्तौ इन्द्रावरुणौ महाधनौ[2]। विश्वे देवाः परमे स्थाने स्थितयोः युवयोः बलम्[3] ओजः च सम् दधुः हे वृषणौ! इति ॥ २ ॥

अन्वपां खान्यतृन्तमोजसा सूर्यमैरयतं दिवि प्रभुम् ।
इन्द्रावरुणा मदे अस्य मायिनोऽपिन्वतमपितः पिन्वतं धियः ॥ ३ ॥

अनु । अपाम् । खानि । अतृन्तम् । ओजसा । आ । सूर्यम् । ऐरयतम् । दिवि । प्रऽभुम् ।
इन्द्रावरुणा । मदे । अस्य । मायिनः । अपिन्वतम् । अपितः । पिन्वतम् । धियः ॥ ३ ॥

**वेङ्कट०** मेघस्थानाम् अपाम् द्वाराणि बलेन अनु अतृन्तम्[4]। दिवि च सूर्यम् आ रोहयतं प्रापयतम् प्रभुम्। हे इन्द्रावरुणौ! मदे अस्य सोमस्य[5] प्रज्ञावतः परितः उदकानि अपिन्वतम्[6], पिन्वतम् च कर्माणि। [7]अपिशब्दः परिपर्यायः[7] ॥ ३ ॥

युवामिद् युत्सु पृतनासु वह्नयो युवां क्षेमस्य प्रसवे मितज्ञवः ।
ईशाना वस्व उभयस्य कारव इन्द्रावरुणा सुहवा हवामहे ॥ ४ ॥

युवाम् । इत् । युत्ऽसु । पृतनासु । वह्नयः । युवाम् । क्षेमस्य । प्रऽसवे । मितऽज्ञवः ।
ईशाना । वस्वः । उभयस्य । कारवः । इन्द्रावरुणा । सुऽहवा । हवामहे ॥ ४ ॥

**वेङ्कट०** युवाम् एव युद्धेषु सेनासु च वोढारः हवामहे । युवाम् एव क्षेमस्य [8]प्रसवनिमित्तं मितजानुकाः[8] अभिगच्छन्तः हवामहे। ईशाना वस्वः[9] उभयस्य[9] दिव्यस्य च पार्थिवस्य च स्तोतारः इन्द्रावरुणौ! स्वाह्वानौ[10] हवामहे ॥ ४ ॥

इन्द्रावरुणा यदिमानि चक्रथुर्विश्वा जातानि भुवनस्य मज्मना ।
क्षेमेण मित्रो वरुणं दुवस्यति मरुद्भिरुग्रः शुभमन्य ईयते ॥ ५ ॥

इन्द्रावरुणा । यत् । इमानि । चक्रथुः । विश्वा । जातानि । भुवनस्य । मज्मना ।
क्षेमेण । मित्रः । वरुणम् । दुवस्यति । मरुत्ऽभिः । उग्रः । शुभम् । अन्यः । ईयते ॥ ५ ॥

**वेङ्कट०** हे इन्द्रावरुणौ! यत् इमानि चक्रथुः विश्वानि अपि जातानि भुवनस्य अस्य बलेन। तयोः एकः वरुणस्य क्षेमार्थम् मित्रः देवः तं परिचरति। मरुद्भिः उद्गूर्णः कल्याणम् अन्यः इन्द्रः गच्छति ॥ ५ ॥

[11]इति पञ्चमाष्टके षष्ठाध्याये द्वितीयो वर्गः[11] ॥

---

१. वरुणम् मूको. २. °धना मूको. ३. सर्वे देवाः ब° मूको. ४. °तृप्तम् मूको. ५ सोम अ[1] ल लभ; स्तोमः वि[2]. ६. अपिबतं वि[2] अ[1]. ७-७. अपि शब्दपरिचर्याय मूको. ८-८. °मित्तमवजा° मूको. ९. नास्ति मूको. १०. °ना मूको. ११-११. नास्ति मूको.

महे शुल्काय वरुणस्य नु त्विष ओजो मिमाते ध्रुवमस्य यत् स्वम् ।
अजामिमन्यः श्नथयन्तमातिरद् दभ्रेभिरन्यः प्र वृणोति भूयसः ॥ ६ ॥

महे । शुल्काय । वरुणस्य । नु । त्विषे । ओजः । मिमाते इति । ध्रुवम् । अस्य । यत् । स्वम् ।
अजामिम् । अन्यः । श्नथयन्तम् । आ । अतिरत् । दभ्रेभिः । अन्यः । प्र । वृणोति । भूयसः ॥६॥

वेङ्कट० महते बन्धनाय वरुणस्य क्षिप्रं दीप्ताय बलम् उपबृंहितं कुरुतः[1] इन्द्रावरुणौ, यत् अस्य वरुणस्य ध्रुवम् स्वभूतं भवति बलम्। पापकृतां बन्धनाय वरुणबलम् इन्द्रः च उपबृंहयतीत्यर्थः। इन्द्रावरुणयोः एकः[2] अजामिम् अबन्धुं व्रतानि श्नथयन्तम् [3]आ तिरति[3]। तिरतिः[4] विनाशकर्मा। विनाशयति। स्वल्पैरुपायैः अन्यः [5]प्र वारयति बहून् शत्रून्[5]। 'दभ्रेभिश्चित्समृता हंसि भूयसः' ( ऋ १,३१,६ ) इत्युक्तम् ॥ ६ ॥

न तमंहो न दुरितानि मर्त्यमिन्द्रावरुणा न तपः कुतश्चन ।
यस्य देवा गच्छथो वीथो अध्वरं न तं मर्तस्य नशते परिह्वृतिः ॥ ७ ॥

न । तम् । अंहः । न । दुःऽइतानि । मर्त्यम् । इन्द्रावरुणा । न । तपः । कुतः । चन ।
यस्य । देवा । गच्छथः । वीथः । अध्वरम् । न । तम् । मर्तस्य । नशते । परिऽह्वृतिः ॥७॥

वेङ्कट० न तम् अंहः न च दुरितानि मर्त्यम् हे इन्द्रावरुणौ! [6]न अपि तापकम्[6] अन्यत् कुतः चित् आगच्छति। यस्य देवौ! अभि गच्छथः[7], कामयेथे च यज्ञम्, न तम् मनुष्यस्य व्याप्नोति परिबाधा ॥ ७ ॥

अर्वाङ्नरा दैव्येनावसा गतं शृणुतं हवं यदि मे जुजोषथः ।
युवोर्हि सख्यमुत वा यदाप्यं मार्डीकमिन्द्रावरुणा नि यच्छतम् ॥ ८ ॥

अर्वाक् । नरा । दैव्येन । अवसा । आ । गतम् । शृणुतम् । हवम् । यदि । मे । जुजोषथः ।
युवोः । हि । सख्यम् । उत । वा । यत् । आप्यम् । मार्डीकम् । इन्द्रावरुणा । नि । यच्छतम् ॥

वेङ्कट० अभिमुखम् आ गच्छतम् नरौ! देवयोः युवयोः उचितेन रक्षणेन। शृणुतम् च ह्वानम् यदि मे प्रीयेथे[8]। युवयोः हि सख्यम् अपि च यत् ज्ञातेयं सह भवतः। तथा सति सुखकरम् इन्द्रावरुणौ! तदुभयम् अस्मासु कुरुतमिति ॥ ८ ॥

अस्माकमिन्द्रावरुणा भरेभरे पुरोयोधा भवतं कृष्ट्योजसा ।
यद् वां हवन्त उभये अध स्पृधि नरस्तोकस्य तनयस्य सातिषु ॥ ९ ॥

---

१. कुरुत वि[2] अ[1]; कुरु कुरुतम् ल लभ. २. एते मूको. ३-३. आति मूको. ४. तरतिः मूको. ५-५. त्रुटितम् वि[2] अ[1]. ६-६. नाबि ताव° मूको. ७. °थ वि[2] अ[1] ल; °थं लभ. ८. प्रिये° वि[2] अ[1].

अस्माकम् । इन्द्रावरुणा । भरेऽभरे । पुरःऽयोधा । भवतम् । कृष्टिऽओजसा ।
यत् । वाम् । हवन्ते । उभये । अध । स्पृधि । नरः । तोकस्य । तनयस्य । सातिषु ॥ ९ ॥

**वेङ्कट०** अस्माकम् इन्द्रावरुणौ! सङ्ग्रामे पुरोयोद्धारौ भवतम् हे कर्षणशीलबलौ!। यदा[1] वाम् हवन्ते उभये सैनिकाः सङ्ग्रामे मनुष्याः पुत्रस्य तत्पुत्रस्य च लाभेषु इति ॥ ९ ॥

अस्मे इन्द्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥

अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् । यच्छन्तु । महि । शर्म । सऽप्रथः ।
अवध्रम् । ज्योतिः । अदितेः । ऋतऽवृधः । देवस्य । श्लोकम् । सवितुः । मनामहे ॥ १० ॥

**वेङ्कट०** अस्मभ्यम् इन्द्रादयः अन्नम् यच्छन्तु महत् च सुखं सर्वतः पृथुतमम्। बाधकरहितम् ज्योतिः अदितेः यज्ञस्य वर्धयित्र्याः भवतु । देवस्य च सवितुः श्लोकम् अन्वहं ब्रूमः युवयोः प्रसादादिति ॥ १० ॥

[2]इति पञ्चमाष्टके षष्ठाध्याये तृतीयो वर्गः[2] ॥

## [ ८३ ]

[2]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रावरुणौ देवता । जगती छन्दः[2] ।

युवां नरा पश्यमानास आप्यं प्राचा गव्यन्तः पृथुपर्शवो ययुः ।
दासा च वृत्रा हतमार्याणि च सुदासमिन्द्रावरुणावसावतम् ॥ १ ॥

युवाम् । नरा । पश्यमानासः । आप्यम् । प्राचा । गव्यन्तः । पृथुऽपर्शवः । ययुः ।
दासा । च । वृत्रा । हतम् । आर्याणि । च । सुऽदासम् । इन्द्रावरुणा । अवसा । अवतम् ॥१॥

**वेङ्कट०** युवाम् नरौ! पश्यमानाः[3] ज्ञातेयम्[4] युवयोः यज्ञार्थं प्राङ्मुखं बर्हिः आहर्तुं [5]गा इच्छन्तः[5] [6]पृथुपर्शवः आत्तपृथ्वश्वपर्शवः[6] यान्ति । दासान् उपक्षपयितॄन् वृत्राणि उपद्रवान्[7] च आर्यैरपि कृतान् विनाशयतम् । पैजवनम् सुदासम् इन्द्रावरुणौ! रक्षतम् ॥ १ ॥

यत्रा नरः समयन्ते कृतध्वजो यस्मिन्नाजा भवति किं चन प्रियम् ।
यत्रा भयन्ते भुवना स्वर्दृशस्तत्रा न इन्द्रावरुणाधि वोचतम् ॥ २ ॥

---

१. तदा वि[1] ल लअ. २-२. नास्ति मूको. ३. पश्यन्तः ल प्रस्तावः. ४. °तेय मूको.
५-५. अगा इच्छन्तः ल लअ अ[1]; आगच्छन्तः वि[2]. ६-६. पृथु पथु पशवः आत्तपृथवः च पशवः वि[2] अ[1] ल; प्रथु प्रगिव पशत्र आक्त प्रथश्च पश्वो लअ. ७. °द्रवावान् मूको.

यत्र । नरः । सम्ऽअयन्ते । कृतऽध्वजः । यस्मिन् । आजा । भवति । किम् । चन । प्रियम् ।
यत्र । भयन्ते । भुवना । स्वःऽदृशः । तत्र । नः । इन्द्रावरुणा । अधि । वोचतम् ॥ २ ॥

वेङ्कट० यत्र मनुष्याः सङ्गच्छन्ते उच्छ्रितपताकाः । ध्वजतेः उच्छ्रयतिकर्मणः[1] । यस्मिन् सङ्ग्रामे भवति यत् किञ्चिदपि मनुष्यस्य अभिमतम् अन्नादिकम् । यत्र बिभ्यति भूतानि स्वर्दृशः च देवाः । हिंसासम्भवाद्[2] भयम् । तत्र अस्माकम् इन्द्रावरुणौ! अधि वोचतम् [3]एत एव परान्†[3] जयन्तु इति ॥ २ ॥

सं भूम्या अन्ता ध्वसिरा अदृक्षतेन्द्रावरुणा दिवि घोष आरुहत् ।
अस्थुर्जनानामुप मामरातयोऽर्वागवसा हवनश्रुता गतम् ॥ ३ ॥

सम् । भूम्याः । अन्ताः । ध्वसिराः । अदृक्षत । इन्द्रावरुणा । दिवि । घोषः । आ । अरुहत् ।
अस्थुः । जनानाम् । उप । माम् । अरातयः । अर्वाक् । अवसा । हवनऽश्रुता । आ । गतम् ॥३॥

वेङ्कट० भूम्याः अन्ताः ध्वंसनशीलाः सम् दृश्यन्ते । ध्वंसयन्ति चतस्रः दिशः सैनिका अधिष्ठिताः । तथा [4]इन्द्रावरुणौ! दिवि सैनिकानां[4] शब्दः आरोहणं करोति । जनानाम् अरातयः च माम् [5]उप तिष्ठन्ति[5] । अभिमुखं रक्षणार्थं हे हवनश्रुतौ! आ गच्छतम् ॥ ३ ॥

इन्द्रावरुणा वधनाभिरप्रति भेदं वन्वन्ता प्र सुदासमावतम् ।
ब्रह्माण्येषां शृणुतं हवीमनि सत्या तृत्सूनामभवत् पुरोहितिः ॥ ४ ॥

इन्द्रावरुणा । वधनाभिः । अप्रति । भेदम् । वन्वन्ता । प्र । सुऽदासम् । आवतम् ।
ब्रह्माणि । एषाम् । शृणुतम् । हवीमनि । सत्या । तृत्सूनाम् । अभवत् । पुरःऽहितिः ॥ ४ ॥

वेङ्कट० हे इन्द्रावरुणौ! वधैः अप्रतिगतशत्रुकं भेत्तारं कुलस्य चायमानं[6] हिंसन्तौ प्र आवतम् सुदासम् । ब्रह्माणि च एषाम् शृणुतम् हवने । सत्यभरा भवतु तृत्सूनाम् पुरोहितिः इति च । यत् अस्मान् एते पुरो दधुः तृत्सवः, तत् फलतु एषाम् इति ॥ ४ ॥

इन्द्रावरुणावभ्या तपन्ति माघान्यर्यो वनुषामरातयः ।
युवं हि वस्व उभयस्य राजथोऽध स्मा नोऽवतं पार्ये दिवि ॥ ५ ॥

इन्द्रावरुणौ । अभि । आ । तपन्ति । मा । अघानि । अर्यः । वनुषाम् । अरातयः ।
युवम् । हि । वस्वः । उभयस्य । राजथः । अध । स्म । नः । अवतम् । पार्ये । दिवि ॥ ५ ॥

वेङ्कट० हे इन्द्रावरुणौ! माम् अभि आ तपन्ति शत्रोः अघानि आहन्तॄणि प्रहरणानि हिंसतां[7] शत्रूणां

---

१. °च्छ्रयक° वि[२] ल; °च्छ्रायतक° अ[१]; °च्छ्रयतक° लभ. २. °संभावा° मूको. ३-३. °त एव राजं ल लभ; एतमेवपराजं वि[२] अ[१]. † राजानं ल प्रस्तावः. ४-४. °रुणो…सै° वि[२] अ[१]; °णौ दिव ल लभ. ५-५. उ अवति° मूको. ६. चाषप्रा° ल लभ; तु. ऋ (७,१८,१९ प्रभृ.) भाष्यम्. ७. त्रुटितम् वि[२] अ[१]; हिंसितां ल लभ.

करादीनाम् अप्रदानानि । युवाम् हि उभयस्य दिव्यस्य च पार्थिवस्य च धनस्य राजथः । तथा सति अस्मान् रक्षतम्[1] [2]पार्ये दिवसे अन्तिमे[2] सङ्ग्रामस्य अह्नि ॥ ५ ॥

[3]इति पञ्चमाष्टके षष्ठाध्याये चतुर्थो वर्गः[3] ॥

युवां हवन्त उभयास आजिष्विन्द्रं च वस्वो वरुणं च सातये ।
यत्र राजभिर्दशभिर्निबाधितं प्र सुदासमावतं तृत्सुभिः सह ॥ ६ ॥

युवाम् । हवन्ते । उभयासः । आजिषु । इन्द्रम् । च । वस्वः । वरुणम् । च । सातये ।
यत्र । राजऽभिः । दशऽभिः । निऽबाधितम् । प्र । सुऽदासम् । आवतम् । तृत्सुऽभिः । सह ॥६॥

वेङ्कट० युवाम् हवन्ते उभये सैनिकाः सङ्ग्रामेषु इन्द्रम् [4]वरुणम् च धनस्य भजनाय[4] । यस्मिन् सङ्ग्रामे [5]शत्रुभिः दशभिः† राजभिः नितरां बाधितम्[5] प्र आवतम् सुदासम् राजानं सर्वैः तृत्सुभिः सह ॥६॥

दश राजानः समिता अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः ।
सत्या नृणामद्मसदामुपस्तुतिर्देवा एषामभवन् देवहूतिषु ॥ ७ ॥

दश । राजानः । सम्ऽइताः । अयज्यवः । सुऽदासम् । इन्द्रावरुणा । न । युयुधुः ।
सत्या । नृणाम् । अद्मऽसदाम् । उपऽस्तुतिः । देवाः । एषाम् । अभवन् । देवऽहूतिषु ॥ ७ ॥

वेङ्कट० दश राजानः सङ्गताः अयष्टारः सुदासम् इन्द्रावरुणौ! न युयुधुः भवद्भ्यां परिगृहीतम् । सत्या नृणाम् हविषि सीदताम् उपस्तुतिः, फलं प्रयच्छति । एषाम् प्रादुर्भवन्ति देवानामाह्वानेषु[6] देवाः च आहूताः ताम् उपगच्छन्ति ॥ ७ ॥

दाशराज्ञे परियत्ताय विश्वतः सुदास इन्द्रावरुणावशिक्षतम् ।
श्वित्यञ्चो यत्र नमसा कपर्दिनो धिया धीवन्तो असपन्त तृत्सवः ॥ ८ ॥

दाशऽराज्ञे । परिऽयत्ताय । विश्वतः । सुऽदासे । इन्द्रावरुणौ । अशिक्षतम् ।
श्वित्यञ्चः । यत्र । नमसा । कपर्दिनः । धिया । धीऽवन्तः । असपन्त । तृत्सवः ॥ ८ ॥

वेङ्कट० दाशराज्ञे परितो युद्धार्थं यतमानाय सर्वतः एव सुदासे हे इन्द्रावरुणौ! बलं प्रायच्छतम्, श्वेतिमानम्[7] अञ्चन्तः यत्र हविषा सह कपर्दिनः कर्मणा कर्मवन्तः देवान् अस्पृशन् तृत्सवः च । 'श्वित्यञ्चो मा दक्षिणतःकपर्दाः ( ऋ ७ ३३,१ ) इत्युक्तम् ॥ ८ ॥

वृत्राण्यन्यः समिथेषु जिघ्नते व्रतान्यन्यो अभि रक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभिरस्मे इन्द्रावरुणा शर्म यच्छतम् ॥ ९ ॥

---

१. रक्षत मूको. २-२. त्रुटितम् वि[2] अ[1]. ३-३ नास्ति मूको. ४. वर…भज° वि[2]; वरुणोयं भज अ[1]. ५-५. °त्रुभि…बाधि° वि[2] अ[1]. † दर्शनी ल लअ. ६. देवानाह्वा° वि[2] अ[1]; देवानमाह्वा° लअ. ७. श्वेतिमा° वि[2] अ[1] ल; श्वेतिमानां लअ.

वृत्राणि । अन्यः । सम्ऽइथेषु । जिघ्नते । व्रतानि । अन्यः । अभि । रक्षते । सदा ।
हवामहे । वाम् । वृषणा । सुवृक्तिऽभिः । अस्मे इति । इन्द्रावरुणा । शर्म । यच्छतम् ॥ ९ ॥

वेङ्कट० निगदसिद्धेति ॥ ९ ॥

अस्मे इन्द्रो वरुणो मित्रो अर्यमा द्युम्नं यच्छन्तु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधो देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥

अस्मे इति । इन्द्रः । वरुणः । मित्रः । अर्यमा । द्युम्नम् । यच्छन्तु । महि । शर्म । सऽप्रथः ।
अवध्रम् । ज्योतिः । अदितेः । ऋतऽवृधः । देवस्य । श्लोकम् । सवितुः । मनामहे ॥ १० ॥

वेङ्कट० पूर्वं व्याख्याता ( ऋ ७,८२,१० द्र. ) ॥ १० ॥

[1]इति पञ्चमाष्टके षष्ठाध्याये पञ्चमो वर्गः[1] ॥

## [ ८४ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रावरुणौ देवता । त्रिष्टुप् छन्दः[1] ।

आ वां राजानावध्वरे ववृत्यां हव्येभिरिन्द्रावरुणा नमोभिः ।
प्र वां घृताची बाह्वोर्दधाना परि त्मना विषुरूपा जिगाति ॥ १ ॥

आ । वाम् । राजानौ । अध्वरे । ववृत्याम् । हव्येभिः । इन्द्रावरुणा । नमःऽभिः ।
प्र । वाम् । घृताची । बाह्वोः । दधाना । परि । त्मना । विषुऽरूपा । जिगाति ॥ १ ॥

वेङ्कट० आ वर्तयामि वाम् राजानौ ! यज्ञे हव्यैः नमस्कारैः च इन्द्रावरुणौ ! । परि गच्छति वाम् जुहूः बाह्वोः ध्रियमाणा स्वयमेव नानाविधैः हविर्भिः नानारूपा ॥ १ ॥

युवो राष्ट्रं बृहदिन्वति द्यौर्यौ सेतृभिररज्जुभिः सिनीथः ।
परि नो हेळो वरुणस्य वृज्या उरुं न इन्द्रः कृणवदु लोकम् ॥ २ ॥

युवोः । राष्ट्रम् । बृहत् । इन्वति । द्यौः । यौ । सेतृऽभिः । अरज्जुऽभिः । सिनीथः ।
परि । नः । हेळः । वरुणस्य । वृज्याः । उरुम् । नः । इन्द्रः । कृणवत् । ऊँ इति । लोकम् ॥ २ ॥

वेङ्कट० युवयोः महत् राष्ट्रम् द्यौः वर्षेण प्रीणयति । यौ युवां रज्जुवर्जितैः सेतृभिः[2] बन्धकैः बध्नीथः पापकृतः । ते हि रोगादिना अभिभूयन्ते । वरुणस्य क्रोधः अस्मान् परि वर्जयतु । विस्तीर्णं लोकम् अस्माकम् इन्द्रः च करोतु ॥ २ ॥

---

१-१. नास्ति मूको. २. सेतुभिः मूको.

कृतं नो यज्ञं विदथेषु चारुं कृतं ब्रह्माणि सूरिषु प्रशस्ता ।
उपो रयिर्देवजूतो न एतु प्र णः स्पार्हाभिरूतिभिस्तिरेतम् ॥ ३ ॥

कृतम् । नः । यज्ञम् । विदथेषु । चारुम् । कृतम् । ब्रह्माणि । सूरिषु । प्रऽशस्ता ।
उपो इति । रयिः । देवऽजूतः । नः । एतु । प्र । नः । स्पार्हाभिः । ऊतिऽभिः । तिरेतम् ॥ ३ ॥

**वेङ्कट०** कुरुतम् अस्माकम् यज्ञम् गृहेषु चारुम् । कुरुतम् च स्तोत्राणि स्तोतृषु प्रशस्तानि[1] । उप[2] गच्छतु अस्मान् रयिः देवप्रेरितः । प्रवर्धयतम् अस्मान् स्पृहणीयैः रक्षणैः ॥ ३ ॥

अस्मे इन्द्रावरुणा विश्ववारं रयिं धत्तं वसुमन्तं पुरुक्षुम् ।
प्र य आदित्यो अनृता मिनात्यमिता शूरो दयते वसूनि ॥ ४ ॥

अस्मे इति । इन्द्रावरुणा । विश्वऽवारम् । रयिम् । धत्तम् । वसुऽमन्तम् । पुरुऽक्षुम् ।
प्र । यः । आदित्यः । अनृता । मिनाति । अमिता । शूरः । दयते । वसूनि ॥ ४ ॥

**वेङ्कट०** अस्मासु इन्द्रावरुणौ! विश्वैः वरणीयम् रयिम् धत्तम् वासयितृभिः पुरुषैः तद्वन्तं बहूनां शब्दनीयम् । प्र मिनाति यः अदितेः पुत्रः अनृतानि[3] भूतानि सर्वतः[4] । अस्मभ्यं धनानि प्रयच्छतु[5] इति वाक्यशेषः । एवम् अमितानि धनानि शूरः इन्द्रः च प्रयच्छतीति ॥ ४ ॥

इयमिन्द्रं वरुणमष्ट मे गीः प्रावत् तोके तनये तूतुजाना ।
सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

इयम् । इन्द्रम् । वरुणम् । अष्ट । मे । गीः । प्र । आवत् । तोके । तनये । तूतुजाना ।
सुऽरत्नासः । देवऽवीतिम् । गमेम । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** इयम् मदीया स्तुतिः इन्द्रावरुणौ अश्नुते । [6]प्र आगच्छत्[6] पुत्रार्थं पौत्रार्थं[7] च त्वरमाणा । शोभनधनाः यज्ञं वयं प्राप्नुयामेति ॥ ५ ॥

[8]इति पञ्चमाष्टके षष्ठाध्याये षष्ठो वर्गः[8] ॥

[ ८५ ]

[8]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रावरुणौ देवता । त्रिष्टुप् छन्दः[8] ।

पुनीषे वामरक्षसं मनीषां सोममिन्द्राय वरुणाय जुह्वत् ।
घृतप्रतीकामुषसं न देवीं ता नो यामन्नुरुष्यतामभीके ॥ १ ॥

---

१. प्रशस्ता वि[1] ल लअ. २. हि उप मूको. ३. अनतानि मूको. ४. त्रुटितम् वि[2] अ[1]; सवजः ल लअ. ५. °च्छन्तु वि[2] अ[1]. ६-६. प्रगच्छन् वि[1]; प्रागच्छन् ल लअ. ७. तु. ऋ ७,६७,६ भाष्यम्; पौत्रं मूको. ८-८. नास्ति मूको.

पुनीषे । वाम् । अरक्षसम् । मनीषाम् । सोमम् । इन्द्राय । वरुणाय । जुह्वत् ।
घृतऽप्रतीकाम् । उषसम् । न । देवीम् । ता । नः । यामन् । उरुष्यताम् । अभीके ॥ १ ॥

वेङ्कट० शोधयामि अहं युवयोः बाधकरहिताम् स्तुतिम् । न हि अनयोः स्तोतारं कश्चित् बाधते । सोमम् इन्द्रावरुणाभ्याम् जुह्वत्[1] । घृतावयवां घृतसहिताम् स्तुतिम् उषसम् इव देवनशीलाम्[2] । तौ[3] अस्मान्[4] गमने रक्षताम् सङ्ग्रामे[5] ॥ १ ॥

स्पर्धन्ते वा उ देवहूये अत्र येषु ध्वजेषु दिद्यवः पतन्ति ।
युवं ताँ इन्द्रावरुणावमित्रान् हतं पराचः शर्वा विषूचः ॥ २ ॥

स्पर्धन्ते । वै । ऊँ इति । देवऽहूये । अत्र । येषु । ध्वजेषु । दिद्यवः । पतन्ति ।
युवम् । तान् । इन्द्रावरुणौ । अमित्रान् । हतम् । पराचः । शर्वा । विषूचः ॥ २ ॥

वेङ्कट० अस्मिन् देवह्वाने जनाः स्पर्धन्ते, अहमहमिकया वां ह्वयन्ते । येषु जनेषु साङ्ग्रामिकेषु ध्वजेषु आयुधानि पतन्ति । येषां सङ्ग्रामः प्रादुर्भवतीत्यर्थः । युवाम् तान् हे इन्द्रावरुणौ! अमित्रान् हतम् प्राङ्मुखान्[6] आयुधेन नानादिक्कान् ॥ २ ॥

आपश्चिद्धि स्वयशसः सदःसु देवीरिन्द्रं वरुणं देवता धुः ।
कृष्टीरन्यो धारयति प्रविक्ता वृत्राण्यन्यो अप्रतीनि हन्ति ॥ ३ ॥

आपः । चित् । हि । स्वऽयशसः । सदःऽसु । देवीः । इन्द्रम् । वरुणम् । देवता । धुरिति धुः ।
कृष्टीः । अन्यः । धारयति । प्रऽविक्ताः । वृत्राणि । अन्यः । अप्रतीनि । हन्ति ॥ ३ ॥

वेङ्कट० आपः चित् च अन्तरिक्ष्याः स्वभूतयशसः स्वेषु स्थानेषु देवीः इन्द्रावरुणौ देवते धारयन्ति । मध्यमे स्थाने पठितौ इन्द्रावरुणौ अन्तरिक्षम् धारयति इत्यर्थः । अन्तरिक्षनाम च भवति 'आपः' ( निघ १,३ ) इति । मनुष्यान् एकः वरुणः धारयति प्रकर्षेण व्याप्तान् । शत्रून् अन्यः अप्रतिगतान् इन्द्रः हन्ति ॥ ३ ॥

स सुक्रतुर्ऋतचिदस्तु होता य आदित्य शवसा वां नमस्वान् ।
आववर्तदवसे वां हविष्मानसदित् स सुविताय प्रयस्वान् ॥ ४ ॥

सः । सुऽक्रतुः । ऋतऽचित् । अस्तु । होता । यः । आदित्या । शवसा । वाम् । नमस्वान् ।
आऽववर्तत् । अवसे । वाम् । हविष्मान् । असत् । इत् । सः । सुविताय । प्रयस्वान् ॥ ४ ॥

वेङ्कट० सः सुप्रज्ञः भवतु सुकर्मा वा सत्यज्ञः होता, यः हे आदित्यौ! वेगेन नमस्कारयुक्तः[7] आवर्तयति वाम् रक्षणार्थम् । पुनः वाम् इति पूरणम् । हविष्मान् भवति एव सः अभ्युदयाय अन्नवान् हविष्मान् इति ॥ ४ ॥

---

१. जुह्वन् मूको. २. °शीलं मूको. ३. तव वि[2] ल लभ; सह अ[2]. ४. अस्माद् वि[2] ल लभ. ५. °ङ्ग्रामैः मूको. ६. पराङ्मुखान् वि[2]. ७. °युक्तम् मूको.

इयमिन्द्रं वरुणमष्ट मे गीः प्रावत् तोके तनये तूतुंजाना ।
सुरत्नासो देववीतिं गमेम यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

इयम् । इन्द्रम् । वरुणम् । अष्ट । मे । गीः । प्र । आवत् । तोके । तनये । तूतुंजाना ।
सुऽरत्नासः । देवऽवीतिम् । गमेम । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

वेङ्कट० पूर्वं व्याख्याता ( ऋ ७,८४,५ द्र. ) ॥ ५ ॥

[1]इति पञ्चमाष्टके षष्ठाध्याये सप्तमो वर्गः[1] ॥

[ ८६ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । वरुणो देवता । त्रिष्टुप् छन्दः[1] ।

धीरा त्वस्य महिना जनूंषि वि यस्तस्तम्भ रोदसी चिदुर्वी ।
प्र नाकमृष्वं नुनुदे बृहन्तं द्विता नक्षत्रं पप्रथच्च भूम ॥ १ ॥[2]

धीरा । तु । अस्य । महिना । जनूंषि । वि । यः । तस्तम्भ । रोदसी इति । चित् । उर्वी इति ।
प्र । नाकम् । ऋष्वम् । नुनुदे । बृहन्तम् । द्विता । नक्षत्रम् । पप्रथत् । च । भूम ॥ १ ॥

वेङ्कट० स्थिराणि अविचालीनि[3] वरुणस्य महत्त्वेन सर्वाणि जातानि भूतानि, यो विस्तीर्णे द्यावापृथिव्यौ वि अस्तभ्नात्[4] । प्र नुनुदे तृतीयं लोकम्, आदित्यं वा दर्शनीयं महान्तं सोमं वरुणः । दिवा नक्षत्रं पृथिव्यां च भूतजातं[5] द्वैधम् पप्रथत उभयत्र प्रथितं करोति ॥ १ ॥

उत स्वया तन्वा३ सं वदे तत् कदा न्व१न्तर्वरुणे भुवानि ।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम् ॥ २ ॥

उत । स्वया । तन्वा । सम् । वदे । तत् । कदा । नु । अन्तः । वरुणे । भुवानि ।
किम् । मे । हव्यम् । अहृणानः । जुषेत । कदा । मृळीकम् । सुऽमनाः । अभि । ख्यम् ॥ २ ॥

वेङ्कट० अपि च आत्मीयेन पुत्रेण सह अहम् एतत् वदामि । कदा अहं वरुणस्य अन्तः भवानीति । किम् च मे हव्यम् वरुणः अक्रुद्धः[6] जुषेत[7] । कदा च अहं सुखयितारम्[8] सुमनाः अभि पश्यामि ॥ २ ॥

पृच्छे तदेनो वरुण दिदृक्षूपो एमि चिकितुषो विपृच्छम् ।
समानमिन्मे कवयश्चिदाहुरयं ह तुभ्यं वरुणो हृणीते ॥ ३ ॥

---

१-१. नास्ति मूको. २. तु. ऋ ७,९९,२; १०,६२,३. ३. अविचलानि ल वि[1]. ४. °स्तद्विध्मान् मूको. ५. °जात मूको. ६. °क्रुद्ध मूको. ७. जुषे च वि[2] अ[1] ल; जजृषेत लभ. ८. सुखशयि° वि[2] अ; खशयिता° ल लभ; °तारं चाहं च वि[2] अ[1]; °तारम् अहं च ल लभ.

पृच्छे । तत् । एनः । वरुण । दिदृक्षु[1] । उपो इति । एमि । चिकितुषः । विऽपृच्छम् ।
समानम् । इत् । मे । कवयः । चित् । आहुः । अयम् । ह । तुभ्यम् । वरुणः । हृणीते ॥ ३ ॥

वेङ्कट० पृच्छामि वरुण ! तत् पापम् अहम् दिदृक्षुः[1] सर्वं भूतम् । यो मां[2] मद्दिदृक्षयाऽऽगच्छति तं पृच्छामि । तथा अहम् एव अन्यान् चिकितुषः जनान् उप[3] गच्छामि, विविधं च पृच्छामि । तत्र च सर्वे एव कवयः समानम् एव मम आहुः—अयं ह तुभ्यम् वरुणः क्रुध्यति इति ॥ ३ ॥

किमाग आस वरुण ज्येष्ठं यत् स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥ ४ ॥

किम् । आगः । आस । वरुण । ज्येष्ठम् । यत् । स्तोतारम् । जिघांससि । सखायम् ।
प्र । तत् । मे । वोचः । दुःऽदभ । स्वधाऽवः । अव । त्वा । अनेनाः । नमसा । तुरः । इयाम् ॥

वेङ्कट० किम् मम प्रवृद्धतरम् पापम् आस वरुण ! यत् त्वम् स्तोतारम् जिघांससि पाशैर्बध्नन् सखायम् । प्र ब्रूहि तत् पापं मम हे दुर्दम्भ ! बलवन् ! । उक्ते तस्मिन् पापे प्रायश्चित्तं [4]कृत्वा अनेनाः सन् त्वाम्[4] अभिमुखं गच्छामि हविषा सह त्वरमाणः । अत्र शौनकः—

"वरुणस्य गृहान् रात्रौ वसिष्ठः [5]स्वप्न आचरत्[5] ।
प्रविवेशाथ तं तत्र श्वा नदन्[6] अभ्यधावत[7] ॥

स तं प्रस्वापयामास जनमन्यं च वारुणम् ।
ततस्तु वरुणो राजा स्वैः पाशैः प्रत्यबध्यत[8] ॥

स बद्धः[9] पितरं सूक्तैश्चतुर्भिरथ उत्तरैः ।
अभितुष्टाव 'धीरे(रा'[10] इ)ति मुमोचैनं ततः पिता[11] ॥

'ध्रुवासु[12] त्वे(त्वा'[13] इ)ति चोक्तायां[14] पाशाः[15] [16]मुमुचिरे सुतम्[16] ॥"
( बृदे ६, ११-१५ ) इति ॥[17]

अव द्रुग्धानि पित्र्या सृजा नोऽव या वयं चकृमा तनूभिः ।
अव राजन् पशुतृपं न तायुं सृजा वत्सं न दाम्नो वसिष्ठम् ॥ ५ ॥

अव । द्रुग्धानि । पित्र्या । सृज । नः । अव । या । वयम् । चकृम । तनूभिः ।
अव । राजन् । पशुऽतृपम् । न । तायुम् । सृज । वत्सम् । न । दाम्नः । वसिष्ठम् ॥ ५ ॥

---

१. वैप १,१५६८ j द्र. २. मा मूको. ३. अप मूको. ४-४. कृतवानेन सं त्वं मूको. ५-५. स्वप्नमाचरन् मूको. ६. नन्दन् वि[2] अ[1]. ७. अभ्यभाषत मूको. ८. °त्यबुध्य° वि[2] अ[1]. ९. बुध्वा वि[2] अ[1]; बुद्धा ल लअ. १०. ऋ ७,८६,१. ११. कचित् मूको. १२. ध्रवासं मूको. १३. ऋ ७,८८,७. १४. चोक्ताभ्यां मूको. १५. पाशान् मूको. १६-१६. अस्मात्प्रमोचिरे बृदे. १७. तु. ऋ ७,५५,२ भाष्यम्.

वेङ्कट० पितुरागतान् अस्माकं द्रोहान्[1] गर्भस्थेषु अस्मासु यदेनः[2] पिता चकार, ततः अस्मासु सङ्क्रान्तानि पापानि अव सृज। तथा अव सृज वयम् यानि कृतवन्तः शरीरैः। यथा राजन्! स्तेनः प्रायश्चित्तं कुर्वाणः तृप्तपशुकः[3] अवसृज्यते[4], यवसे प्रदर्शिते यदि पशवो भक्षयन्ति ततः अवसृज्यते। तथा अव सृज वत्सम् इव च दाम्नः वसिष्ठम् ॥ ५ ॥

न स स्वो दक्षो वरुण ध्रुतिः सा सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान् कनीयस उपारे स्वप्नश्चनेदनृतस्य प्रयोता ॥ ६ ॥

न । सः । स्वः । दक्षः । वरुण । ध्रुतिः । सा । सुरा । मन्युः । विऽभीदकः । अचित्तिः ।
अस्ति । ज्यायान् । कनीयसः । उपऽअरे । स्वप्नः । चन । इत् । अनृतस्य । प्रऽयोता ॥ ६ ॥

वेङ्कट० न तत् स्वं बलं वरुण!, अपि तर्हि ध्रुतिः सा भवति। ध्रुतिः इति ध्रुवां नियतिम् आह। न पुरुषः स्वैरं तदनुतिष्ठति, दैवाभिपन्नः अनुतिष्ठतीत्यर्थः। सुरा मन्युः च ब्राह्मणादीनां हनननिमित्तभूतः, विभे (? भी) दकः च देवनहेतुः, अचित्तिः[5] च मान्यामान्यहेतुः, अस्ति ज्यायान् देवः[6] नाम कनीयसः[7] समीपे, तथा स्वप्नः अपि पुरुषस्य निरर्थकस्य[8] मिश्रयिता भवति ॥ ६ ॥

अरं दासो न मीळ्हुषे कराण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो गृत्सं राये कवितरो जुनाति ॥ ७ ॥

अरम् । दासः । न । मीळ्हुषे । कराणि । अहम् । देवाय । भूर्णये । अनागाः ।
अचेतयत् । अचितः । देवः । अर्यः । गृत्सम् । राये । कविऽतरः । जुनाति ॥ ७ ॥

वेङ्कट० पर्याप्तं कर्म दासः[9] इव स्वामिने अहम्[10] सेक्त्रे वरुणाय करोमि देवाय क्षिप्रकारिणे अपापः। ज्ञापयतु[11] अज्ञान् देवः। स्वामी[12] स्तोतारं धनाय अत्यन्तं प्राज्ञः प्रेरयति ॥ ७ ॥

अयं सु तुभ्यं वरुण स्वधावो हृदि स्तोम उपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो अस्तु यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

अयम् । सु । तुभ्यम् । वरुण । स्वधाऽवः । हृदि । स्तोमः । उपऽश्रितः । चित् । अस्तु ।
शम् । नः । क्षेमे । शम् । ऊँ इति । योगे । नः । अस्तु । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ८ ॥

---

१. द्रोहात् गर्भस्तेषु मूको. २. यदेनं वि[1] अ[1]; यदेन ल लभ. ३. द्यु. अर्थस्य च कृते वैप १, १९७८C द्र. ४. °र्वाणः…को° वि[2] अ[1]. ५. अनिवक्तिः मूको. ६. देवम् मूको. ७. कमनीयः मूको. ८. अनि° वि[2] अ[1] ल; अनिनर्थ लभ. ९. दासं वि[1] ल लभ; दासं अ[1]. १०. ह मूको. ११. ज्ञपय° वि[2] अ[1]. १२. स्वामिस् वि[2]; स्वामिन् अ[1]; °मिम् ल लभ.

वेङ्कट० अयम् तुभ्यम् वरुण! बलवन्![1] हृदि स्तोमः सुष्ठु उपश्रितः[2] भवतु । शङ्करः च अयम् अस्माकम् क्षेमे भवतु शम् एव अस्मदीये योगे ॥ ८ ॥

[3]इति पञ्चमाष्टके षष्ठाध्याये अष्टमो वर्गः[3] ॥

## [ ८७ ]

[3]वसिष्ठो मैत्रावरुणिर्ऋषिः । वरुणो देवता । त्रिष्टुप् छन्दः[3] ।

रदत् पथो वरुणः सूर्याय प्राणांसि समुद्रिया नदीनाम् ।
सर्गो न सृष्टो अर्वतीर्ऋतायञ्चकार महीरवनीरहभ्यः ॥ १ ॥

रदत् । पथः । वरुणः । सूर्याय । प्र । अर्णांसि । समुद्रिया । नदीनाम् ।
सर्गः । न । सृष्टः । अर्वतीः । ऋतऽयन् । चकार । महीः । अवनीः । अहऽभ्यः ॥ १ ॥

वेङ्कट० व्यलिखद्[4] अन्तरिक्षे मार्गान् वरुणः सूर्याय । 'उरुं हि राजा वरुणश्चकार' ( ऋ १, २४,८ ) इत्युक्तम् । प्र असृजत् च उदकानि अन्तरिक्ष्याणि नदीः पूरयितुम् । उत्सृष्टः इव अश्वः [5]उद्युक्तो वडवां[5] गन्तुमिच्छन् करोति महतीः गतीः वरुणः अहोभ्यः । अन्वहम् उदितः शीघ्रं गच्छतीत्यर्थः ॥ १ ॥

आत्मा ते वातो रज आ नवीनोत् पशुर्न भूर्णिर्यवसे ससवान् ।
अन्तर्मही बृहती रोदसीमे विश्वा ते धाम वरुण प्रियाणि ॥ २ ॥

आत्मा । ते । वातः । रजः । आ । नवीनोत् । पशुः । न । भूर्णिः । यवसे । ससऽवान् ।
अन्तः । मही इति । बृहती इति । रोदसी इति । इमे इति । विश्वा । ते । धाम । वरुण । प्रियाणि ॥ २ ॥

वेङ्कट० शरीरम् ते गच्छत्[6] सर्वलोकं नवं करोति पशुः इव भर्ता यवसे सम्भजनवान्, भक्षितसस्य[7] इत्यर्थः । अन्तः महती बृंहिते द्यावापृथिव्यौ इमे यानि भवन्ति[8] स्थानानि तानि[9] सर्वाणि तव प्रियाणि वरुण! इति ॥ २ ॥

परि स्पशो वरुणस्य स्मदिष्टा उभे पश्यन्ति रोदसी सुमेके ।
ऋतावानः कवयो यज्ञधीराः प्रचेतसो य इषयन्त मन्म ॥ ३ ॥

परि । स्पशः । वरुणस्य । स्मत्ऽइष्टाः । उभे इति । पश्यन्ति । रोदसी इति । सुऽमेके इति सुऽमेके ।
ऋतऽवानः । कवयः । यज्ञऽधीराः । प्रऽचेतसः । ये । इषयन्त । मन्म ॥ ३ ॥

---

१. °वत् मूको. २. उपस्थितः अ[1]. ३-३. नास्ति मूको. ४. बलिरिव (°रवा लभ) मूको. ५-५. °क्तो बडवा अ[1]. ६. अवगच्छन् ल लभ; गच्छन् वि[2] अ[1]. ७. मक्षितः स° मूको. ८. भवानि मूको; धामानि भवनानि ल प्रस्तावः. ९. त्रुटितम् लभ.

वेङ्कट० परि पश्यन्ति चाराः वरुणस्य शोभनगमनाः उभे द्यावापृथिव्यौ शोभमाने सत्यवन्तः क्रान्तकर्माणः सम्पूजनीयधैर्याः, ये वरुणस्य पूजां[1] मनुष्यैः क्रियमाणाम् ऐच्छन् इति ॥ ३ ॥

उवाच मे वरुणो मेधिराय त्रिः सप्त नामाघ्न्या बिभर्ति ।
विद्वान् पदस्य गुह्या न वोचद् युगाय विप्र उपराय शिक्षन् ॥ ४ ॥

उवाच । मे । वरुणः । मेधिराय । त्रिः । सप्त । नाम । अघ्न्या । बिभर्ति ।
विद्वान् । पदस्य । गुह्या । न । वोचत् । युगाय । विप्रः । उपराय । शिक्षन् ॥ ४ ॥

वेङ्कट० उवाच मह्यम् वरुणः मेधाविने त्रिः सप्त एकविंशतिः नामानि काचित् गौः बिभर्ति इति पृथिवीम् आह । तस्या हि यास्कपठितानि एकविंशतिर्नामानि ( निघ १,१ ) । किञ्च विद्वान् वरुणः पदस्य गुह्यानि च मह्यम् अवोचत् युक्ताय मेधावी आप्तुम्[2] उत्काय दृढमवस्थिताय शिक्षणं कुर्वन् । नकारः समुच्चयार्थीयः । पदानां गुह्यान् अर्थांश्च व्याकरोत् इत्यर्थः ॥ ४ ॥

तिस्रो द्यावो निहिता अन्तरस्मिन् तिस्रो भूमीरुपराः षड्विधानाः ।
गृत्सो राजा वरुणश्चक्र एतं दिवि प्रेङ्खं हिरण्ययं शुभे कम् ॥ ५ ॥

तिस्रः । द्यावः । निऽहिताः । अन्तः । अस्मिन् । तिस्रः । भूमीः । उपराः । षट्ऽविधानाः ।
गृत्सः । राजा । वरुणः । चक्रे । एतम् । दिवि । प्रऽईङ्खम् । हिरण्ययम् । शुभे । कम् ॥ ५ ॥

वेङ्कट० तिस्रः द्यावः भवन्ति इति । तिस्रः च भूमयः 'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' ( ऋ २,२७,८ ) इत्युक्तम् । तिस्रः द्यावः अस्मिन् वरुणे अन्तः निहिताः । तथा तिस्रः च भूम्यः अस्मिन् एव उप्ताः[3] । तथा षड्विधानाः षड्विधाः षट् कार्याणि येषां ऋतूनां ते शोभार्थम् । मेधावी राजा वरुणः चक्रे एतम् दिवि प्रेङ्खम् इत्यादित्यम् आह । हिरण्ययम् कम् इति पूरणम् ॥ ५ ॥

अव सिन्धुं वरुणो द्यौरिव स्थाद् द्रप्सो न श्वेतो मृगस्तुविष्मान् ।
गम्भीरशंसो रजसो विमानः सुपारक्षत्रः सतो अस्य राजा ॥ ६ ॥

अव । सिन्धुम् । वरुणः । द्यौःऽइव । स्थात् । द्रप्सः । न । श्वेतः । मृगः । तुविष्मान् ।
गम्भीरऽशंसः । रजसः । विऽमानः । सुपारऽक्षत्रः । सतः । अस्य । राजा ॥ ६ ॥

वेङ्कट० समुद्रम् वरुणः [4]अव स्थापयति[4], यथा वेलां न अतिक्रामति, यथा द्यौः सर्वाणि भूतानि अवस्थापयति, द्रवणशीलः[5] श्वेतवर्णः गौरः इव मृगः तुविष्मान् प्रवृद्धिमान् वेगवान्

---

१. पूजा वि[२] ल; प्रजां लभ. २. आप्नुहि वि[२] अ[१] ल; आप्नुनि लभ. ३. उक्ताः वि[२] अ[१] ल; उक्तः लभ ४-४. अधः स्था° वि[२] ल; अथ स्था° लभ, ५. द्रवि° मूको.

गम्भीरस्तोत्रः[1] अन्तरिक्षस्य परिच्छेत्ता सुपारबलः[2] अस्य बलं सुष्ठु पारयति । सतः[3] अस्य सर्वस्य लोकस्य राजा ॥ ६ ॥

यो मृळयाति चक्रुषे चिदागो वयं स्याम वरुणे अनागाः ।
अनु व्रतान्यदितेर्ऋधन्तो यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

यः । मृळयाति । चक्रुषे । चित् । आगः । वयम् । स्याम । वरुणे । अनागाः ।
अनु । व्रतानि । अदितेः । ऋधन्तः । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**वेङ्कट०** यः सुखयति पापं चक्रुषे अपि स्तोत्रे, तस्मिन् वरुणे वयम् स्याम अनागसः[4] अनुक्रमेण अदीनस्य वरुणस्य सन्ध्यावन्दनादीनि वर्धयन्तः[5] ॥ ७ ॥

[6]इति पञ्चमाष्टके षष्ठाध्याये नवमो वर्गः[6] ॥

[ ८८ ]

[7]वसिष्ठो मैत्रावरुणिर्ऋषिः । वरुणो देवता । त्रिष्टुप् छन्दः[7] ।

प्र शुन्ध्युवं वरुणाय प्रेष्ठां मतिं वसिष्ठ मीळ्हुषे भरस्व ।
य ईमर्वाञ्चं करते यजत्रं सहस्रामघं वृषणं बृहन्तम् ॥ १ ॥

प्र । शुन्ध्युवम् । वरुणाय । प्रेष्ठाम् । मतिम् । वसिष्ठ । मीळ्हुषे । भरस्व ।
यः । ईम् । अर्वाञ्चम् । करते । यजत्रम् । सहस्रऽमघम् । वृषणम् । बृहन्तम् ॥ १ ॥

**वेङ्कट०** प्र भरस्व शोधयित्रीं पापकृताम् वरुणाय प्रियतमाम् स्तुतिम् हे वसिष्ठ! सेक्त्रे, यः एनम् आदित्यम् अभिमुखम् कुरुते यष्टव्यम् बहुधनम् वृषणम् महान्तम्। 'दिवि सूर्यमदधात्' ( ऋ ५,८५,२ ) इत्युक्तम् ॥ १ ॥

अधा न्वस्य संदृशं जगन्वानग्नेरनीकं वरुणस्य मंसि ।
स्वर्यदश्मन्नधिपा उ अन्धोऽभि मा वपुर्दृशये निनीयात् ॥ २ ॥

अध । नु । अस्य । सम्ऽदृशम् । जगन्वान् । अग्नेः । अनीकम् । वरुणस्य । मंसि ।
स्वः । यत् । अश्मन् । अधिऽपाः । ऊँ इति । अन्धः । अभि । मा । वपुः । दृशये । निनीयात् ॥

**वेङ्कट०** अस्य सन्दर्शनम् "प्राप्तोऽहम्", अथ क्षिप्रं तस्य यागार्थम् वरुणस्य अग्नेः ज्वालालक्षणम् अनीकम् सामिधेनीभिः स्तौमि । कल्याणम् अभिषवग्राव्णि निधीयमानं यदा अन्धः सोमलक्षणम् वरुणः अधिपाता भवति, तदानीम् आत्मीयं रूपं मां प्रति नयतु मम दर्शनाय ॥ २ ॥

---

१. °रः स्तोता वि[2] अ[1] ल; °रस्तोत्रा लभ. २. सुद्वार° मूको. ३. सत्ये वि[2] ल लभ; समेत्य अ[1]. ४. नान्यस वि[2]; भनान्यस अ[1] ल लभ. ५. °यन्तम् मूको. ६-६. नास्ति मूको. ७-७. प्राप्योनु अ[1].

आ यद् रुहाव वरुणश्च नावं प्र यत् समुद्रमीरयाव मध्यम् ।
अधि यदपां स्नुभिश्चराव प्र प्रेङ्ख ईङ्खयावहै शुभे कम् ॥ ३ ॥

आ । यत् । रुहाव । वरुणः । च । नावम् । प्र । यत् । समुद्रम् । ईरयाव । मध्यम् ।
अधि । यत् । अपाम् । स्नुऽभिः । चराव । प्र । प्रऽइङ्खे । ईङ्खयावहै । शुभे । कम् ॥ ३ ॥

वेङ्कट० आ रुहाव यदि अहम् वरुणः च नावम् । आरोहानन्तरं च तां मध्यस्थितं समुद्रम् प्रति यदि प्र ईरयाव । समुद्रमध्यस्थानाम् अपाम् उपरि स्थितैः समुत्थितैः ऊर्मिभिः यदि चराव तां ततो वरुणगृहं प्रति नेतुम् ॥ ३ ॥

वसिष्ठं ह वरुणो नाव्याधादृषिं चकार स्वपा महोभिः ।
स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नु द्यावस्ततनन् यादुषासः ॥ ४ ॥

वसिष्ठम् । ह । वरुणः । नावि । आ । अधात् । ऋषिम् । चकार । सुऽअपाः । महःऽभिः ।
स्तोतारम् । विप्रः । सुदिनऽत्वे । अह्नाम् । यात् । नु । द्यावः । ततनन् । यात् । उषसः ॥४॥

वेङ्कट० …[1] । ऋषिम् चकार शोभनकर्मा तेजोभिः स्तोतारम् मेधावी अह्नाम् सुदिनत्वे । सुदिनानि अहानि अस्मै चकार इत्यर्थः । यानि अहानि द्यावः ततनन् यानि च उषसः, तेषाम् इति । 'अह्नां नेत्री जनित्री प्रजानाम्' ( तै ४,३,११,५ ) इति औषसो मन्त्रः । द्यावो दीप्तो देवः । यादिति द्वितीयाबहुवचनस्यादादेशः[2] ॥ ४ ॥

क्व१त्यानि नौ सख्या बभूवुः सचावहे यदवृकं पुरा चित् ।
बृहन्तं मानं वरुण स्वधावः सहस्रद्वारं जगमा गृहं ते ॥ ५ ॥

क्व । त्यानि । नौ । सख्या । बभूवुः । सचावहे इति । यत् । अवृकम् । पुरा । चित् ।
बृहन्तम् । मानम् । वरुण । स्वधाऽवः । सहस्रऽद्वारम् । जगम । गृहम् । ते ॥ ५ ॥

वेङ्कट० हे वरुण! क्व तानि आवयोः सख्यानि अभवन् इति वरुणम् अपश्यन् आह[3] । अभिगच्छेवहि 'यत् आवां'[4] स्तेनवर्जितं यथा पुरा । चित् इत्युपमार्थे । बृहन्तम् बहून् अर्थान् सम्भवन्तम् वरुण! बलवन्! सहस्रद्वारम् गच्छाव गृहम् तव ॥ ५ ॥

य आपिर्नित्यो वरुण प्रियः सन् त्वामागांसि कृणवत् सखा ते ।
मा त एनस्वन्तो यक्षिन् भुजेम यन्धि ष्मा विप्रः स्तुवते वरूथम् ॥ ६ ॥

यः । आपिः । नित्यः । वरुण । प्रियः । सन् । त्वाम् । आगांसि । कृणवत् । सखा । ते ।
मा । ते । एनस्वन्तः । यक्षिन् । भुजेम । यन्धि । स्म । विप्रः । स्तुवते । वरूथम् ॥ ६ ॥

---

१. मूको. प्रथमपादस्य व्याख्यानं त्रुटितम्. २. वैप १, २५८९ c,d द्र.; °स्यादेशः मूको.
३. नास्ति मूको. ४-४. यथावां मूको.

वेङ्कट० यः ज्ञातिः नित्यः[1] औरसः[2] वरुण! प्रियः सन् च त्वाम् आगांसि करोति। तव अनिष्टानि करोतीत्यर्थः। समानख्यानः ते। अथ बहुवदाह। तेऽनागसः[3] वयं तव स्वभूताः मा एनस्वन्तः भुजेम पापफलम् हे पूजावन्![4] प्रयच्छ मेधावी त्वम् स्तुवते मह्यम् ध्रुवं गृहम् ॥ ६ ॥

ध्रुवासु त्वासु क्षितिषु क्षियन्तो व्य१स्मत् पाशं वरुणो मुमोचत् ।
अवो वन्वाना अदितेरुपस्थाद् यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

ध्रुवासु । त्वा । आसु । क्षितिषु । क्षियन्तः । वि । अस्मत् । पाशम् । वरुणः । मुमोचत् ।
अवः । वन्वानाः । अदितेः । उपऽस्थात् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

वेङ्कट० आसु ध्रुवासु निर्गन्तुम् अशक्यासु। त्वेति सप्तमीबहुवचनस्याकारः[5]। क्षितिषु[6] कासुचित् निवसन्तो वयम् इदानीं भवामः। वि मुमोक्तु[7] अस्मत्तः पाशम् वरुणः। वयं गमनम् याचमानाः अदितेः उपस्थात्[8] इदानीम्। बद्धोऽदितेः[9] उपस्थे तिष्ठति, विमुक्तः स्वैरं गच्छतीति ॥ ७ ॥

[10]इति पञ्चमाष्टके षष्ठाध्याये दशमो वर्गः[10] ॥

[ ८९ ]

[10]वसिष्ठो मैत्रावरुणिर्ऋषिः। वरुणो देवता। गायत्री छन्दः, पञ्चमी जगती[10]।

मो षु वरुण मृन्मयं गृहं राजन्नहं गमम् । मृळा सुक्षत्र मृळय ॥ १ ॥

मो इति । सु । वरुण । मृत्ऽमयम् । गृहम् । राजन् । अहम् । गमम् । मृळ । सुऽक्षत्र । मृळय ॥

वेङ्कट० मा एव मृन्मयम् गृहम् वरुण![1] राजन्! अहम् गच्छेयम्। किं तर्हि। सौवर्णम् एव। सु इति पूरणम्। सुखितः भव, अस्मान् च हे सुबल! मृळय ॥ १ ॥

यदेमि प्रस्फुरन्निव दृतिर्न ध्मातो अद्रिवः । मृळा सुक्षत्र मृळय ॥ २ ॥

यत् । एमि । प्रस्फुरन्ऽइव । दृतिः । न । ध्मातः । अद्रिऽवः । मृळ । सुऽक्षत्र । मृळय ॥ २ ॥

वेङ्कट० यत्र गच्छामि प्रस्फुरन् इव चोरः सभादर्शने, दृतिः[11] इव च उदकेन भयेन आध्मातः[12] हे आयुधवन्![13] ॥ २ ॥

क्रत्वः समह दीनता प्रतीपं जगमा शुचे । मृळा सुक्षत्र मृळय ॥ ३ ॥

क्रत्वः । समह । दीनता । प्रतिऽईपम् । जगम । शुचे । मृळ । सुऽक्षत्र । मृळय ॥ ३ ॥

वेङ्कट० हे पूजासहित! कर्मणः दीनतायाम् प्रतीपम् गच्छेम शुचे![14]। दीनं कर्म मा अस्मान् उपतिष्ठतु इत्यर्थः ॥ ३ ॥

---

१. नित्यम् मूको. २. °रसे मूको. ३. °गसा मूको. ४. °वन् मूको. ५. °स्यचाकारः वि[1]; °नस्याकार अ[1] ल लभ. ६. नास्ति मूको. ७. नास्ति लभ. ८. °स्थान् मूको. ९. वध्वो° मूको. १०-१०. नास्ति मूको. ११. धृतिम् वि[2]; दृतिम् अ[1] ल लभ. १२. स्मातः वि[2] अ[1]; आस्मातः ल लभ. १३. °वत् वि[2] अ[1]; °वान् ल लभ. १४. चिचें वि[2] अ[1]; श्चिचे ल लभ.

अपां मध्ये तस्थिवांसं तृष्णाविदज्जरितारम् । मृळा सुक्षत्र मृळय ॥ ४ ॥

अपाम् । मध्ये । तस्थिऽवांसम् । तृष्णा । अविदत् । जरितारम् । मृळ । सुऽक्षत्र । मृळय ॥४॥

**वेङ्कट०** समुद्रमध्यस्थानाम् अपाम् मध्ये तस्थिवांसम् स्तोतारम् माम् अविन्दत् तृष्णा । तथा सति मृळ, हे सुक्षत्र! मृळय इति ॥ ४ ॥

यत् किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ ५ ॥

यत् । किम् । च । इदम् । वरुण । दैव्ये । जने । अभिऽद्रोहम् । मनुष्याः । चरामसि ।
अचित्ती । यत् । तव । धर्म । युयोपिम । मा । नः । तस्मात् । एनसः । देव । रिरिषः ॥ ५ ॥

**वेङ्कट०** यत् किम् च इदम् हे वरुण! दैव्ये जने मनुष्याः सन्तो वयम् अभिद्रोहम् चरामः । देवदृष्टानि व्रतानि न तथा कुर्म इत्यर्थः । अज्ञानेन[1] यत् च तव धर्माणि युयोपिम । शुभानाम् अशुभानां च समीकरणं योपनम् । मा अस्मान् तस्मात् पापादेः[2] देव! हिंसीः ॥ ५ ॥

[3]इति पञ्चमाष्टके षष्ठाध्याये एकादशो वर्गः[3] ॥

## [ ९० ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । वायुर्देवता, अन्त्यानां तिसृणाम् इन्द्रवायू । त्रिष्टुप् छन्दः[1] ।

प्र वीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमन्तः सुतासः ।
वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ॥ १ ॥

प्र । वीरऽया । शुचयः । दद्रिरे । वाम् । अध्वर्युऽभिः । मधुऽमन्तः । सुतासः ।
वह । वायो इति । निऽयुतः । याहि । अच्छ । पिब । सुतस्य । अन्धसः । मदाय ॥ १ ॥

**वेङ्कट०** प्रकर्षेण आद्रियन्ते युवयोः वीर्यकरणेच्छया शुचयः अध्वर्युभिः मधुमन्तः सुताः सोमाः । वह वायो! त्वम् । प्रापय आत्मानं तदर्थम् । नियुतः अभि याहि । पिब सुतं सोमं मदार्थम् इन्द्रेण सहेति ॥ १ ॥

ईशानाय प्रहुतिं यस्त आनट् शुचिं सोमं शुचिपास्तुभ्यं वायो ।
कृणोषि तं मर्त्येषु प्रशस्तं जातोजातो जायते वाज्यस्य ॥ २ ॥

ईशानाय । प्रऽहुतिम् । यः । ते । आनट् । शुचिम् । सोमम् । शुचिऽपाः । तुभ्यम् । वायो इति ।
कृणोषि । तम् । मर्त्येषु । प्रऽशस्तम् । जातःऽजातः । जायते । वाजी । अस्य ॥ २ ॥

---

१. ज्ञानेन वि[2] अ[1]. २. पापैः वि[2]; पादेः ल; पादैः अ[1]. ३-३. नास्ति मूको.

**वेङ्कट०** ईशानाय प्रकर्षेण होतव्यं प्रमुखे वा होतव्यम् यः तुभ्यं प्रापयति शुचिम् सोमम् हे शुद्धस्य सोमस्य पातः! तुभ्यम् वायो!, करोषि तम् मनुष्येषु प्रशस्तम्। जातोजातः पुत्रः अस्य बलवान् जायते। सर्वः पुत्रः बलवान् भवति ॥ २ ॥

राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् ।
अध वायुं नियुतः सश्चत स्वा उत श्वेतं वसुधितिं निरेके ॥ ३ ॥

राये । नु । यम् । जज्ञतुः । रोदसी इति । इमे इति । राये । देवी । धिषणा । धाति । देवम् ।
अध । वायुम् । निऽयुतः । सश्चत । स्वाः । उत । श्वेतम् । वसुऽधितिम् । निरेके ॥ ३ ॥

**वेङ्कट०** धनार्थम् यम् जनयतः इमे द्यावापृथिव्यौ, तम् देवम् धनार्थम् देवी मदीया बुद्धिः धारयति। तदनन्तरम् एव ममागमनार्थम्[1] वायुम् नियुतः सेवन्ते स्वाः अपि श्वेतवर्णं दत्तधनं निर्गमने दारिद्र्ये वा स्तोतॄणामिति ॥ ३ ॥

उच्छन्नुषसः सुदिना अरिप्रा उरु ज्योतिर्विविदुर्दीध्यानाः ।
गव्यं चिदूर्वमुशिजो वि वव्रुस्तेषामनु प्रदिवः सस्रुरापः ॥ ४ ॥

उच्छन् । उषसः । सुऽदिनाः । अरिप्राः । उरु । ज्योतिः । विविदुः । दीध्यानाः ।
गव्यम् । चित् । ऊर्वम् । उशिजः । वि । वव्रुः । तेषाम् । अनु । प्रऽदिवः । सस्रुः । आपः ॥४॥

**वेङ्कट०** व्युच्छन्ति उषसः सुदिनाः अपापाः[2] । उरु ज्योतिः च लेभिरे दीप्यमानाः अग्नयः। गव्यम् च सङ्घातम् कामयमानाः देवाः विवृतद्वारमकुर्वन् । तान् आपः च दीप्ताः पुरातनाः वा अनु सस्रुः ॥ ४ ॥

ते सत्येन मनसा दीध्यानाः स्वेन युक्तासः क्रतुना वहन्ति ।
इन्द्रवायू वीरवाहं रथं वामीशानयोरभि पृक्षः सचन्ते ॥ ५ ॥

ते । सत्येन । मनसा । दीध्यानाः । स्वेन । युक्तासः । क्रतुना । वहन्ति ।
इन्द्रवायू इति । वीरऽवाहम् । रथम् । वाम् । ईशानयोः । अभि । पृक्षः । सचन्ते ॥ ५ ॥

**वेङ्कट०** ते सत्येन मनसा दीप्यमानाः अमुग्धमनसः स्वेन प्रज्ञानेन युक्ताः वहन्ति। हे इन्द्रवायू! वीरयोः युवयोः वोढारम् रथम्[3] पणीन्[4] जेतुं तथा ईश्वरयोः भवतोः सतोः पणिभ्यः गोलक्षणम् अन्नं च सचन्ते ॥ ५ ॥

ईशानासो ये दधते स्वर्णो गोभिरश्वेभिर्वसुभिर्हिरण्यैः ।
इन्द्रवायू सूरयो विश्वमायुरर्वद्भिर्वीरैः पृतनासु सह्युः ॥ ६ ॥

१. मय्या ग° अ[१]; मयाग° वि[२] अ[१].   २. अपापाः मूको.   ३. नास्ति वि[१] अ[१].   ४. बणीन् अ[१]; पणिं वि[२] ल.

ईशानासः । ये । दधते । स्वः । नः । गोभिः । अश्वेभिः । वसुऽभिः । हिरण्यैः ।
इन्द्रवायू इति । सूरयः । विश्वम् । आयुः । अर्वत्ऽभिः । वीरैः । पृतनासु । सह्युः ॥ ६ ॥

**वेङ्कट०** हे इन्द्रवायू ! शक्ताः ये धारयन्ति सर्वम् अस्माकं गवादिभिः सह धनम्, ते सूरयः स्तोतारः अस्मदीयाः शत्रूणाम् विश्वम् अन्नम् अश्वैः वीरैः च सङ्ग्रामेषु अभिभवन्तु ॥ ६ ॥

अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः ।
वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

अर्वन्तः । न । श्रवसः । भिक्षमाणाः । इन्द्रवायू इति । सुस्तुतिऽभिः । वसिष्ठाः ।
वाजऽयन्तः । सु । अवसे । हुवेम । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**वेङ्कट०** अश्वाः इव घासम् अन्नम् भिक्षमाणाः इन्द्रवायू शोभनाभिः स्तुतिभिः वसिष्ठाः अन्नम् इच्छन्तः 'सुष्ठु आह्वयेम' रक्षणार्थम् इति ॥ ७ ॥

[2]इति पञ्चमाष्टके षष्ठाध्याये द्वादशो वर्गः[2] ॥

## [ ९१ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । प्रथमातृतीययोर्वायुर्देवता, शिष्टानाम् इन्द्रवायू । त्रिष्टुप् छन्दः[1] ।

कुविदङ्ग नमसा ये वृधासः पुरा देवा अनवद्यास आसन् ।
ते वायवे मनवे बाधितायावासयन्नुषसं सूर्येण ॥ १ ॥

कुवित् । अङ्ग । नमसा । ये । वृधासः । पुरा । देवाः । अनवद्यासः । आसन् ।
ते । वायवे । मनवे । बाधिताय । अवासयन् । उषसम् । सूर्येण ॥ १ ॥

**वेङ्कट०** बहु क्षिप्रं हविषा वृद्धाः पुरा ये देवाः अनवद्याः अभवन्, ते शत्रुभिः बाधिताय मनवे राज्ञे तद्धविर्भिः प्रीता यज्ञमुखे वायुमयं यजतु इति मन्यमानाः यागार्थम् सूर्येण सह उषसम् अवासयन् इति ॥ १ ॥

उशन्ता दूता न दभाय गोपा मासश्च पाथः शरदश्च पूर्वीः ।
इन्द्रवायू सुष्टुतिर्वामियाना मार्डीकमीट्टे सुवितं च नव्यम् ॥ २ ॥

उशन्ता । दूता । न । दभाय । गोपा । मासः । च । पाथः । शरदः । च । पूर्वीः ।
इन्द्रवायू इति । सुऽस्तुतिः । वाम् । इयाना । मार्डीकम् । ईट्टे । सुवितम् । च । नव्यम् ॥ २ ॥

**वेङ्कट०** कामयमानौ[3] दूतौ न हिंसायै भवथः । गोपायितारौ[4] मासान् च रक्षथः शरदः च बह्वीः ।

---

१. सुष्टवतां(पां)ह्वये° वि[2]; सुष्टु वां ह्वये° अ[1]. २-२. नास्ति मूको. ३. माना° मूको.
४. गोपयि° मूको.

हे इन्द्रवायू! सुष्टुतिः वाम् गच्छन्ती सुखम् इच्छति शोभनं च गमनम् नवतरम्। पुत्रो वा सुवितः[1] इति ॥ २ ॥

पीवोअन्नाँ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ।
ते वायवे समनसो वि तस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः ॥ ३ ॥

पीवःऽअन्नान् । रयिऽवृधः । सुऽमेधाः । श्वेतः । सिसक्ति । निऽयुताम् । अभिऽश्रीः ।
ते । वायवे । सऽमनसः । वि । तस्थुः । विश्वा । इत् । नरः । सुऽअपत्यानि । चक्रुः ॥ ३ ॥

**वेङ्कट०** स्थूलान्नान् रय्या[2] वृद्धान् सुप्रज्ञः श्वेतवर्णः सेवते वायुः नियुताम् अभिगन्ता। ते च अयम् एव यष्टव्य इति सङ्गतमनसः[3] वायवे तिष्ठन्ति विविधम्। विश्वानि एव मनुष्याः कर्माणि वायवे चक्रुः। [4]शोभनान्यपतननिमित्तानि[4] येषु तानि स्वपत्यानि इति ॥ ३ ॥

यावत् तरस्तन्वो३ यावदोजो यावन्नरश्चक्षसा दीध्यानाः ।
शुचिं सोमं शुचिपा पातमस्मे इन्द्रवायू सदतं बर्हिरेदम् ॥ ४ ॥

यावत् । तरः । तन्वः । यावत् । ओजः । यावत् । नरः । चक्षसा । दीध्यानाः ।
शुचिम् । सोमम् । शुचिऽपा । पातम् । अस्मे इति । इन्द्रवायू इति । सदतम् । बर्हिः । आ । इदम् ॥

**वेङ्कट०** यावत्प्रमाणः वेगः शरीरस्य यावत् ओजः यावत् च मनुष्याः चक्षुषा पश्यन्ति युवयोः शरीरं दीप्यमाना युवानः, [5]तावता शरीरेण आगतौ[5]। शिष्टं स्पष्टम् इति ॥ ४ ॥

नियुत्वाना नियुतः स्पार्हवीरा इन्द्रवायू सरथं यातमर्वाक् ।
इदं हि वां प्रभृतं मध्वो अग्रमध प्रीणाना वि मुमुक्तमस्मे ॥ ५ ॥

निऽयुत्वाना । निऽयुतः । स्पार्हऽवीराः । इन्द्रवायू इति । सऽरथम् । यातम् । अर्वाक् ।
इदम् । हि । वाम् । प्रऽभृतम् । मध्वः । अग्रम् । अध । प्रीणाना । वि । मुमुक्तम् । अस्मे इति ॥

**वेङ्कट०** निमिश्रयन्तौ[6] नियुतः स्पृहणीयबलाः[7] हे इन्द्रवायू! समानरथम् आगच्छतम् अभिमुखम्। इदम् हि[8] वाम् प्रभृतम् [9]ऐन्द्रवायवाख्यम् मध्वः[9] अग्रम्। अथ प्रीयमाणौ अस्मान् पाशबन्धाद् वि-मुञ्चतम् ॥ ५ ॥

या वां शतं नियुतो याः सहस्रमिन्द्रवायू विश्ववाराः सचन्ते ।
आभिर्यातं सुविदत्राभिरर्वाक् पातं नरा प्रतिभृतस्य मध्वः ॥ ६ ॥

---

१. सुपित मूको. २. नया मूको. ३. सङ्कल्पित अ[१]. ४-४. शोभना° मूको. ५. ताः वात वि[२] ल; ताः मवता लभ. ६. °यन्तो मूको. ७. °णीयं ··· बि[२] अ[१]; °णीयं ब° ल लभ. ८. नि मूको. ९-९. °ख्यमुक्थो वि[२] अ[१].

याः । वाम् । शतम् । निऽयुतः । याः । सहस्रम् । इन्द्रवायू इति । विश्वऽवाराः । सचन्ते ।
आ । आभिः । यातम् । सुऽविदत्राभिः । अर्वाक् । पातम् । नरा । प्रतिऽभृतस्य । मध्वः ॥६॥

वेङ्कट० याः वाम् सेवन्ते शतम् नियुतः याः च सहस्रम् इन्द्रवायू! सर्वेषां वारयिभ्यः । आ यातम् आभिः सुधनाभिः अभिमुखम्, पातम् च नरेण(?) सम्भृतम् सोमम् ॥ ६ ॥

अर्वन्तो न श्रवसो भिक्षमाणा इन्द्रवायू सुष्टुतिभिर्वसिष्ठाः ।
वाजयन्तः स्ववसे हुवेम यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

अर्वन्तः । न । श्रवसः । भिक्षमाणाः । इन्द्रवायू इति । सुस्तुतिऽभिः । वसिष्ठाः ।
वाजऽयन्तः । सु । अवसे । हुवेम । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

वेङ्कट० पूर्वं व्याख्याता ( ऋ ७,९०,७ द्र. ) ॥ ७ ॥

[1]इति पञ्चमाष्टके षष्ठाध्याये त्रयोदशो वर्गः[1] ॥

[ ९२ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । वायुर्देवता, द्वितीयाचतुर्थ्योरिन्द्रवायू । त्रिष्टुप् छन्दः[1] ।

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥ १ ॥

आ । वायो इति । भूष । शुचिऽपाः । उप । नः । सहस्रम् । ते । निऽयुतः । विश्वऽवार ।
उपो इति । ते । अन्धः । मद्यम् । अयामि । यस्य । देव । दधिषे । पूर्वऽपेयम् ॥ १ ॥

वेङ्कट० उप आ गच्छ अस्मान् वायो! सोमस्य पातः! । सहस्रम् हि ते सन्ति नियुतः हे विश्वैर्वरणीय! । तुभ्यम् उप गमयामि मदकरम् सोमम्, यस्य देव! करोषि पूर्वपानम्[2] ॥ १ ॥

प्र सोता जीरो अध्वरेष्वस्थात् सोममिन्द्राय वायवे पिबध्यै ।
प्र यद् वां मध्वो अग्रियं भरन्त्यध्वर्यवो देवयन्तः शचीभिः ॥ २ ॥

प्र । सोता । जीरः । अध्वरेषु । अस्थात् । सोमम् । इन्द्राय । वायवे । पिबध्यै ।
प्र । यत् । वाम् । मध्वः । अग्रियम् । भरन्ति । अध्वर्यवः । देवऽयन्तः । शचीभिः ॥ २ ॥

वेङ्कट० प्र अस्थात् अभिषोताऽध्वर्युः क्षिप्रः यज्ञेषु प्रागेव यम् सोमम् इन्द्राय वायवे च पानाय ; प्र हरन्ति यत् मुख्यम् सोमस्य वाम् अध्वर्यवः देवकामाः कर्मभिः ॥ २ ॥

---

१-१. नास्ति मूको. २. पूर्वयानम् मूको.

प्र याभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे ।
नि नो रयिं सुभोजसं युवस्व नि वीरं गव्यमश्व्यं च राधः ॥ ३ ॥

प्र । याभिः । यासि । दाश्वांसम् । अच्छ । नियुत्ऽभिः । वायो इति । इष्टये । दुरोणे ।
नि । नः । रयिम् । सुऽभोजसम् । युवस्व । नि । वीरम् । गव्यम् । अश्व्यम् । च । राधः ॥३॥

**वेङ्कट०** प्र गच्छसि[1] याभिः यजमानं प्रति नियुद्भिः हे वायो! यज्ञार्थम् गृहे, ताभिः नि युवस्व अस्माकम् रयिम् शोभनभोजनम् । वीरम् गव्यम् अश्व्यम्[2] च धनम् नि मिश्रयेति ॥ ३ ॥

ये वायव इन्द्रमादनास आदेवासो नितोशनासो अर्यः ।
घ्नन्तो वृत्राणि सूरिभिः ष्याम सासह्वांसो युधा नृभिरमित्रान् ॥ ४ ॥

ये । वायवे । इन्द्रऽमादनासः । आऽदेवासः । निऽतोशनासः । अर्यः ।
घ्नन्तः । वृत्राणि । सूरिऽभिः । स्याम । ससह्वांसः । युधा । नृऽभिः । अमित्रान् ॥ ४ ॥

**वेङ्कट०** ये अश्वाः[3] इन्द्रवायुभ्यां मदहेतवः इन्द्रवायू देवावभिमुखाः हन्तारः शत्रोः, तैः सूरिभिः प्राज्ञैः अश्वैः इन्द्रवायू गमयद्भिः शत्रून् घ्नन्तः वयम् स्याम अभिभवन्तः युद्धेन भटैः[4] च अमित्रान् ॥ ४ ॥

आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि यज्ञम् ।
वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ ५ ॥

आ । नः । नियुत्ऽभिः । शतिनीभिः । अध्वरम् । सहस्रिणीभिः । उप । याहि । यज्ञम् ।
वायो इति । अस्मिन् । सवने । मादयस्व । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ५ ॥

**वेङ्कट०** निगदसिद्धा ॥ ५ ॥

[5]इति पञ्चमाष्टके षष्ठाध्याये चतुर्दशो वर्गः[5] ॥

[ ९३ ]

[6]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्राग्नी देवता । त्रिष्टुप् छन्दः[6] ।

शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् ।
उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा ॥ १ ॥

---

१. प्रयच्छ[3] वि[1] ल लभ; प्रयच्छति अ[1] २. अगव्यम् मूको. ३. नास्ति वि[2] ४. तु. ऋ (१,१००,६) भाव्यम्; भगैः मूको. ५-५. नास्ति मूको.

शुचिम् । नु । स्तोमम् । नवऽजातम् । अद्य । इन्द्राग्नी इति । वृत्रऽहना । जुषेथाम् ।
उभा । हि । वाम् । सुऽहवा । जोहवीमि । ता । वाजम् । सद्यः । उशते । धेष्ठा ॥ १ ॥

वेङ्कट० निरवद्यम् क्षिप्रम् स्तोमम् नवजननम् अद्य हे इन्द्राग्नी! शत्रूणां हन्तारौ! सेवेथाम्[1]। उभा हि वाम् अहं स्वाह्वानौ भृशम् आह्वयामि। तौ युवाम् अन्नम् सद्यः एव कामयमानाय मह्यं दातृतमौ ॥ १ ॥

ता सानसी शवसाना हि भूतं साकंवृधा शवसा शूशुवांसा ।
क्षयन्तौ रायो यवसस्य भूरेः पृङ्क्तं वाजस्य स्थविरस्य घृष्वेः ॥ २ ॥

ता । सानसी इति । शवसाना । हि । भूतम् । साकम्ऽवृधा । शवसा । शूशुऽवांसा ।
क्षयन्तौ । रायः । यवसस्य । भूरेः । पृङ्क्तम् । वाजस्य । स्थविरस्य । घृष्वेः ॥ २ ॥

वेङ्कट० तौ सम्भजनीयौ हे बलम् आचरन्तौ! हि भवतम् सहवृद्धौ बलेन वर्धमानौ ईश्वरौ भवन्तौ धनस्य यवसस्य च बहुनः। तथा सति सम्पर्चयतं प्रयच्छतं वा अन्नं वृद्धम् घर्षणशीलम्[2] शत्रूणाम् इति ॥ २ ॥

उपो ह यद् विदथं वाजिनो गुर्धीभिर्विप्राः प्रमतिमिच्छमानाः ।
अर्वन्तो न काष्ठां नक्षमाणा इन्द्राग्नी जोहुवतो नरस्ते ॥ ३ ॥

उपो इति । ह । यत् । विदथम् । वाजिनः । गुः । धीभिः । विप्राः । प्रऽमतिम् । इच्छमानाः ।
अर्वन्तः । न । काष्ठाम् । नक्षमाणाः । इन्द्राग्नी इति । जोहुवतः । नरः । ते ॥ ३ ॥

वेङ्कट० उप गच्छन्ति यदा गृहं हविष्मन्तः कर्मभिः मेधाविनः इन्द्राग्न्योः प्रमतिम्[3] इच्छमानाः अश्वाः इव काष्ठाम् व्याप्नुवानाः, तदानीम् इन्द्राग्नी भृशम् आह्वयन्तः भवन्ति ते मनुष्याः इति ॥ ३ ॥

गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजम् ।
इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैः ॥ ४ ॥

गीःऽभिः । विप्रः । प्रऽमतिम् । इच्छमानः । ईट्टे । रयिम् । यशसम् । पूर्वऽभाजम् ।
इन्द्राग्नी इति । वृत्रऽहना । सुऽवज्रा । प्र । नः । नव्येभिः । तिरतम् । देष्णैः ॥ ४ ॥

वेङ्कट० गीर्भिः विप्रः प्रमतिम् इच्छमानः याचते धनम् इच्छति वा यशसा युक्तम् पूर्वमेव भजनीयम्। हे इन्द्राग्नी! शत्रूणां हन्तारौ! स्वायुधौ! प्र वर्धयतम् अस्मान् नवतरैः[4] धनैः ॥ ४ ॥

---

१. भवेथाम् वि[2] अ[1]; वेथाम् ल लभ. २. वर्षण° मूको. ३. प्रमितिम् वि[2] अ[1]. ४. नेतरैः वि[2] अ[1]; नोतरैः ल लभ.

सं यन्मही मिथती स्पर्धमाने तनूरुचा शूरसाता यतैते ।
अदेवयुं विदथे देवयुभिः सत्रा हतं सोमसुता जनेन ॥ ५ ॥

सम् । यत् । मही इति । मिथती इति । स्पर्धमाने इति । तनूऽरुचा । शूरऽसाता । यतैते इति ।
अदेवऽयुम् । विदथे । देवयुऽभिः । सत्रा । हतम् । सोमऽसुता । जनेन ॥ ५ ॥

वेङ्कट० 'सम् गच्छेते'[1] महत्यौ संयुज्यमाने स्पर्धमाने दीप्तशरीरे सेने सङ्ग्रामे । तदानीम् अयजमानम् देवयुभिः हतम् सङ्ग्रामगृहे । तदेव आह—सत्यम् एव हतम् यजमानेन जनेन च इति ॥ ५ ॥

[2]इति पञ्चमाष्टके षष्ठाध्याये पञ्चदशो वर्गः[2] ॥

इमामु षु सोमसुतिमुप न एन्द्राग्नी सौमनसाय यातम् ।
नू चिद्धि परिमम्नाथे अस्माना वां शश्वद्भिर्ववृतीय वाजैः ॥ ६ ॥

इमाम् । ऊँ इति । सु । सोमऽसुतिम् । उप । नः । आ । इन्द्राग्नी इति । सौमनसाय । यातम् ।
नु । चित् । हि । परिमम्नाथे इति परिऽमम्नाथे । अस्मान् । आ । वाम् । शश्वत्ऽभिः । ववृतीय । वाजैः ॥

वेङ्कट० इमाम् एव अस्मदीयाम् सोमसुतिम् हे इन्द्राग्नी! अस्मासु सौमनसं कर्तुं सुष्ठु उप आ गच्छतम् । क्षिप्रम् अस्मान् परिमम्नाथे । आत्मीयाः एते इति बुद्धिः परिमननम् । तथा सति बहुभिः अन्नैः वाम् आ वर्तयेयम् ॥ ६ ॥

सो अग्न एना नमसा समिद्धोऽच्छा मित्रं वरुणमिन्द्रं वोचेः ।
यत् सीमागश्चकृमा तत् सु मृळ तदर्यमादितिः शिश्रथन्तु ॥ ७ ॥

सः । अग्ने । एना । नमसा । सम्ऽइद्धः । अच्छ । मित्रम् । वरुणम् । इन्द्रम् । वोचेः ।
यत् । सीम् । आगः । चकृम । तत् । सु । मृळ । तत् । अर्यमा । अदितिः । शिश्रथन्तु ॥ ७ ॥

वेङ्कट० सः त्वम् अग्ने! अनेन हविषा समिद्धः मित्रादीन् अभिब्रूहि यत् अस्माकम् अभिलषितम् । यत् वयं सर्वतः पापं कृतवन्तः, तत् पापं सुष्ठु सुखय । तत्[3] अर्यमा अदितिः च अन्ये च मित्रादयः श्रथयन्तु ॥ ७ ॥

एता अग्न आशुषाणास इष्टीर्युवोः सचाभ्यश्याम वाजान् ।
मेन्द्रो नो विष्णुर्मरुतः परि ख्यन् यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

एताः । अग्ने । आशुषाणासः । इष्टीः । युवोः । सचा । अभि । अश्याम । वाजान् ।
मा । इन्द्रः । नः । विष्णुः । मरुतः । परि । ख्यन् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥८॥

---

१-१. सङ्गच्छते मूको. २-२. नास्ति मूको. ३. तयत् मूको.

वेङ्कट० एताः इष्टीः अग्ने! व्यापयन्तः अपि च स्वभूतानि अन्नानि सह प्राप्नुयाम। युवयोः[1] स्वभूतान् अस्मान् इन्द्रादयः मा परि ख्यन्। परिख्यानं त्यागः ॥ ८ ॥

[2]इति पञ्चमाष्टके षष्ठाध्याये षोडशो वर्गः[2] ॥

## [ ९४ ]

[१]वसिष्ठो मैत्रावरुणिर्ऋषिः। इन्द्राग्नी देवता। गायत्री छन्दः, अन्त्याऽनुष्टुप्[१]।

इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः। अभ्राद् वृष्टिरिवाजनि ॥ १ ॥

इयम्। वाम्। अस्य। मन्मनः। इन्द्राग्नी इति। पूर्व्यऽस्तुतिः। अभ्रात्। वृष्टिःऽइव। अजनि ॥ १ ॥

वेङ्कट० इयम् युवयोः अस्य स्तोतुः[3] हे इन्द्राग्नी! पूर्व्यस्तुतिः मुख्ये काले प्रादुर्भूता स्तुतिः अभ्रात् वृष्टिरिव अजनि ॥ १ ॥

शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः। ईशाना पिप्यतं धियः ॥ २ ॥

शृणुतम्। जरितुः। हवम्। इन्द्राग्नी इति। वनतम्। गिरः। ईशाना। पिप्यतम्। धियः ॥ २ ॥

वेङ्कट० शृणुतम् स्तोत्राह्वानम् हे इन्द्राग्नी!। भजतम् स्तुतीः[4]। [5]ईश्वरौ पूरयतम् कर्माणि[5] ॥ २ ॥

मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये। मा नो रीरधतं निदे ॥ ३ ॥

मा। पापऽत्वाय। नः। नरा। इन्द्राग्नी इति। मा। अभिऽशस्तये। मा। नः। रीरधतम्। निदे ॥ ३ ॥

वेङ्कट० हे नरा![6] हे नेतारौ! [7]अस्मान् न पापत्वाय[7] विधेयान् कुरुतम् इन्द्राग्नी!, मा च अभिशस्तये, मा च निन्दित्रे शत्रवे ॥ ३ ॥

इन्द्रे अग्ना नमो बृहत् सुवृक्तिमेरयामहे। धिया धेना अवस्यवः ॥ ४ ॥

इन्द्रे। अग्ना। नमः। बृहत्। सुऽवृक्तिम्। आ। ईरयामहे। धिया। धेनाः। अवस्यवः ॥ ४ ॥

वेङ्कट० वयम् इन्द्राग्न्योः महत् हविः सुप्रवृत्तम् आभिमुख्येन प्रापयामः कर्मणा स्तुतीः च रक्षणम् इच्छन्तः ॥ ४ ॥

ता हि शश्वन्त ईळत इत्था विप्रास ऊतये। सबाधो वाजसातये ॥ ५ ॥

ता। हि। शश्वन्तः। ईळते। इत्था। विप्रासः। ऊतये। सऽबाधः। वाजऽसातये ॥ ५ ॥

---

१. युवायो मूको. २-२. नास्ति मूको. ३. स्तोतृ मूको. ४. स्तुतिः मूको. ५-५. ईश्वरौ पूजायां कर्मणि वि[2] अ[1]; ईश्वरो पूजयन क° ल लक्ष. ६. नास्ति लक्ष अ[1]. ७-७. °स्मानपाप° वि[2] अ[1].

वेङ्कट० तौ हि बहवः स्तुवन्ति यथा वयम्, इत्थं मेधाविनः रक्षणाय, बाधासहिताः[1] युद्धप्राप्तये च ॥ ५ ॥

ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे । मेधसाता सनिष्यवः ॥ ६ ॥

ता । वाम् । गीःऽभिः । विपन्यवः । प्रयस्वन्तः । हवामहे । मेधऽसाता । सनिऽष्यवः ॥ ६ ॥

वेङ्कट० तौ वाम् गीर्भिः स्तोतारः हविष्मन्तः हवामहे यज्ञे धनकामाः ॥ ६ ॥

[2]इति पञ्चमाष्टके षष्ठाध्याये सप्तदशो वर्गः[2] ॥

इन्द्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशत ॥ ७ ॥

इन्द्राग्नी इति । अवसा । आ । गतम् । अस्मभ्यम् । चर्षणिऽसहा । मा । नः । दुःऽशंसः । ईशत ॥७॥

वेङ्कट० इन्द्राग्नी! रक्षणेन आ गच्छतम् अस्मदर्थं हे शत्रूणां सोढारौ! । मा अस्माकं शत्रुः ईशिष्ट ॥ ७ ॥

मा कस्य नो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । इन्द्राग्नी शर्म यच्छतम् ॥ ८ ॥

मा । कस्य । नः । अररुषः । धूर्तिः । प्र । नक् । मर्त्यस्य । इन्द्राग्नी इति । शर्म । यच्छतम् ॥८॥

वेङ्कट० मा कस्य चित्[3] अपि अदातुः हिंसा अस्मान् प्र आप्नोतु मनुष्यस्य । तथा अस्माकं सुखं प्र यच्छतम् इन्द्राग्नी! ॥ ८ ॥

गोमद्धिरण्यवद् वसु यद् वामश्वावदीमहे । इन्द्राग्नी तद् वनेमहि ॥ ९ ॥

गोऽमत् । हिरण्यऽवत् । वसु । यत् । वाम् । अश्वऽवत् । ईमहे । इन्द्राग्नी इति । तत् । वनेमहि ॥

वेङ्कट० निगदसिद्धेति ॥ ९ ॥

यत् सोम आ सुते नर इन्द्राग्नी अजोहवुः । सप्तीवन्ता सपर्यवः ॥ १० ॥

यत् । सोमे । आ । सुते । नरः । इन्द्राग्नी इति । अजोहवुः । सप्तिऽवन्ता । सपर्यवः ॥ १० ॥

वेङ्कट० यदा सोमे अभिषुते मनुष्याः इन्द्राग्नी भृशम् आ ह्वयन्ति अश्ववन्तौ[4] पूजाकामाः । पूर्वत्र वाक्यसमाप्तिः ॥ १० ॥

उक्थेभिर्वृत्रहन्तमा या मन्दाना चिदा गिरा । आङ्गूषैराविवासतः ॥ ११ ॥

उक्थेभिः । वृत्रहन्ऽतमा । या । मन्दाना । चित् । आ । गिरा । आङ्गूषैः । आऽविवासतः ॥११॥

---

१. बाधास॰ मूको. २-२. नास्ति मूको. ३. कस्यकामस्यचित् अ[1]. ४. अश्ववन्तः वि[2] ल; श्नवन्तो अ[1]; अश्मवन्तो लभ.

वेङ्कट० शस्त्रैः वृत्राणां हन्तारौ यौ स्तुत्यौ मोदमानौ आङ्गूषैः आघोषैः उच्चैः शब्दितैः शस्त्रैः ( तु. या ५,११ ) आभिमुख्येन वसतः[1] यजमानेषु । उत्तरत्र सम्बन्धः ॥ ११ ॥

तावि॒द् दु॒ःशंस॒ं मर्त्य॒ं दुर्वि॑द्वांसं रक्ष॒स्विन॑म् ।
आ॒भो॒गं हन्म॑ना ह॒तमु॒द॒धिं हन्म॑ना ह॒तम् ॥ १२ ॥

तौ । इत् । दु॒ःऽशंस॑म् । मर्त्य॑म् । दुःऽवि॑द्वांसम् । र॒क्ष॒स्विन॑म् ।
आ॒ऽभो॒गम् । हन्म॑ना । ह॒तम् । उ॒द॒ऽधिम् । हन्म॑ना । ह॒तम् ॥ १२ ॥

वेङ्कट० तौ एव युवाम् दुश्शंसम् मनुष्यम् दुर्विद्वांसम् दुर्बुद्धिमित्यर्थः[2] । रक्षः बलं तद्वन्तम् अभिभूय भोक्तारम् इमम् आयुधेन हतम् । उदधिम् इव [3]घटम् अनायासेन[3] हतम् इति ॥ १२ ॥

[4]इति पञ्चमाष्टके षष्ठाध्याये अष्टादशो वर्गः[4] ॥

[ ९५ ]

[5]वसिष्ठो मैत्रावरुणिर्ऋषिः । सरस्वती देवता, तृतीयायाः सरस्वान् । त्रिष्टुप् छन्दः[4] ।

प्र क्षोद॑सा धाय॑सा सस्र ए॒षा सर॑स्वती ध॒रुण॒माय॑सी॒ पूः ।
प्र॒बाब॑धाना र॒थ्ये॑व याति॒ विश्वा॑ अ॒पो म॑हि॒ना सिन्धु॑र॒न्याः ॥ १ ॥

प्र । क्षोद॑सा । धाय॑सा । स॒स्रे॒ । ए॒षा । सर॑स्वती । ध॒रुण॑म् । आय॑सी । पूः ।
प्र॒ऽबाब॑धाना । र॒थ्या॑ऽइव । या॒ति॒ । विश्वाः॑ । अ॒पः । म॒हि॒ना । सिन्धुः॑ । अ॒न्याः ॥ १ ॥

वेङ्कट० प्र सरति[5] उदकेन वा पानार्हेण सहिता एषा सरस्वती धारयन्ती[6] लोकस्य लोहमयी च नगरी इति औपमिकम्, प्रकर्षेण बध्नती आत्मनि एकीकुर्वती[7] । राजमार्गः इव गच्छति सर्वाणि एव अन्यानि उदकानि महत्त्वेन प्रबाबधाना सिन्धुः इति ॥ १ ॥

एका॑चेतत् सर॑स्वती न॒दीनां॒ शुचि॑र्य॒ती गि॒रिभ्य॒ आ स॑मु॒द्रात् ।
रा॒यश्चेत॑न्ती॒ भुव॑नस्य॒ भूरे॑र्घृ॒तं पयो॑ दुदुहे॒ नाहु॑षाय ॥ २ ॥

एका॑ । अ॒चे॒त॒त् । सर॑स्वती । न॒दीना॑म् । शुचिः॑ । य॒ती । गि॒रिऽभ्यः॑ । आ । स॒मु॒द्रात् ।
रा॒यः । चेत॑न्ती । भुव॑नस्य । भूरेः॑ । घृ॒तम् । पयः॑ । दु॒दु॒हे॒ । नाहु॑षाय ॥ २ ॥

वेङ्कट० एका बुबुधे सरस्वती एव नदीनाम् मध्ये शुचिः गच्छन्ती पर्वतेभ्यो निस्सृता यावत् पश्चिमं समुद्रम् । धनं बहु प्रज्ञापयन्ती भुवनस्य गौः भूत्वा घृतम् पयः च दुदुहे नहुषपुत्राय । नाहुषोक्तं वचनं न अन्याः शुश्रुवुः नद्यः, सरस्वती तु शुश्रावेति

---

१. वसतोः मूको. २. अत्यर्थः वि[2]; अत्यन्तः अ[1]. ३-३. याम् एनाया° मूको. ४-४. नास्ति मूको ५, प्रसरस्यति मूको. ६. °यती मूको. ७. कुर्वन्ति वि[2] अ[1] ल; °र्वन्तीति लभ,

शौनकः—

राजा वर्षसहस्राय दीक्षिष्यन्नाहुषः[1] पुरा ।
चचारैकरथेनेमां ब्रुवन्[2] सर्वाः समुद्रगाः ॥

यक्ष्ये वहत [5]मा सर्वाः[1] द्वन्द्वशो वाऽथवैकशः ।
प्रत्यूचुस्तं नृपं नद्यः स्वल्पवीर्याः कथं वयम् ॥

वहेम सर्वान् भोगांस्ते सत्रे वार्षसहस्रिके ।
सरस्वतीं प्रपद्यस्व सा ते[3] वक्ष्यति नाहुष ! ॥

तथेत्युक्त्वा [5]जगामाशु आपगां[5] च सरस्वतीम् ।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम् ॥

एतदत्यद्भुतं कर्म सरस्वत्या नृपं प्रति ।
वारुणिः कीर्तयामास प्रथमस्य द्वितीयया ॥ (बृदे ६,२०-२४) इति ॥२॥

स वा॑वृधे॒ नर्यो॒ योष॑णासु॒ वृषा॒ शिशु॑र्वृष॒भो य॒ज्ञिया॑सु ।
स वा॒जिनं॑ म॒घव॑द्भ्यो दधाति॒ वि सा॒तये॑ त॒न्वं॑ मामृजीत ॥ ३ ॥

सः । व॒वृ॒धे॒ । नर्यः॑ । योष॑णासु । वृषा॑ । शिशुः॑ । वृ॒ष॒भः । य॒ज्ञिया॑सु ।
सः । वा॒जिन॑म् । म॒घव॑त्ऽभ्यः । द॒धा॒ति॒ । वि । सा॒तये॑ । त॒न्व॑म् । म॒मृ॒जी॒त ॥ ३ ॥

वेङ्कट० सः सरस्वान् वावृधे नृहितः नदीषु पुमान् शिशुः सेक्ता यज्ञार्हासु । सः बलिनं हविष्मद्भ्यः[6] प्रयच्छति । वि शोधयतु सोऽस्मदीयां तनुम् लाभाय संश्यतु ॥ ३ ॥

उ॒त स्या नः॒ सर॑स्वती जुषा॒णोप॑ श्रवत् सु॒भगा॑ य॒ज्ञे अ॒स्मिन् ।
मि॒तज्ञु॑भिर्न॒मस्यै॑रिया॒ना रा॒या यु॒जा चि॒दुत्त॑रा॒ सखि॑भ्यः ॥ ४ ॥

उ॒त । स्या । नः॒ । सर॑स्वती । जु॒षा॒णा । उप॑ । श्र॒व॒त् । सु॒ऽभगा॑ । य॒ज्ञे । अ॒स्मिन् ।
मि॒तज्ञु॑ऽभिः । न॒म॒स्यैः॑ । इ॒या॒ना । रा॒या । यु॒जा । चि॒त् । उत्ऽत॑रा । सखि॑ऽभ्यः ॥ ४ ॥

वेङ्कट० अपि च सा सरस्वती अस्मान् सेवमाना स्तुतीः उप शृणोतु सुधना अस्मिन् यज्ञे प्रमाणार्थं मितजानुकैः नमस्कारं कुर्वद्भिः अभिगम्यमाना धनेन सहायवर्गेण[7] च अन्याभ्यो नदीभ्यः सखिभ्यः उत्कृष्टा[8] स्तोतृभ्यः वा सुप्रशस्तेति ॥ ४ ॥

---

१. वीक्षि° मूको. २. वदन् मूको. ३. भागान् मे बृदे. ४. त्वा मूको. ५-५. जगामाश्वामापगां मूको. ६. हविष्मभ्यम् मूको. ७. °र्गेण सहायवर्षेण वि[२] ल; °र्गेण सहायवर्गय लभ. ८. उत्कृष्टः वि[२] ल लभ.

इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वति जुषस्व ।
तव शर्मन् प्रियतमे दधाना उप स्थेयाम शरणं न वृक्षम् ॥ ५ ॥

इमा । जुह्वानाः । युष्मत् । आ । नमःऽभिः । प्रति । स्तोमम् । सरस्वति । जुषस्व ।
तव । शर्मन् । प्रियऽतमे । दधानाः । उप । स्थेयाम । शरणम् । न । वृक्षम् ॥ ५ ॥

**वेङ्कट०** इमानि हवींषि जुह्वानाः वयं भवाम नमस्कारैः । प्रति सेवस्व त्वम् स्तोमम् सरस्वति ! । तव सुखे प्रिये निधीयमानाः त्वाम् उप स्थेयाम प्रतिश्रयभूतं महान्तम् इव वृक्षम् ॥ ५ ॥

अयमु ते सरस्वति वसिष्ठो द्वारावृतस्य सुभगे व्यावः ।
वर्ध शुभ्रे स्तुवते रासि वाजान् यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

अयम् । ऊँ इति । ते । सरस्वति । वसिष्ठः । द्वारौ । ऋतस्य । सुऽभगे । वि । आवरित्यावः ।
वर्ध । शुभ्रे । स्तुवते । रासि । वाजान् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ६ ॥

**वेङ्कट०** अयम् उ ते सरस्वति ! वसिष्ठः ऋतस्य यज्ञस्य पूर्वापरौ वि आवः द्वारौ संस्तवयागार्थम्[1] सुभगे ! । वर्ध शोभमाने !, स्तुवते च प्रयच्छ अन्नानि इति ॥ ६ ॥

[2]इति पञ्चमाष्टके षष्ठाध्याये एकोनविंशो वर्गः[2] ॥

[ ९६ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । सरस्वती देवता, चतुर्थ्यादिषष्ठ्यन्तानां सरस्वान् । आद्याद्वितीययोः प्रगाथश्छन्दः ( =प्रथमा बृहती, द्वितीया सतोबृहती ), तृतीया प्रस्तारपङ्क्तिः, शिष्टा गायत्र्यः[2] ।

बृहदु गायिषे वचोऽसुर्या नदीनाम् ।
सरस्वतीमिन्महया सुवृक्तिभिः स्तोमैर्वसिष्ठ रोदसी ॥ १ ॥

बृहत् । ऊँ इति । गायिषे । वचः । असुर्या । नदीनाम् ।
सरस्वतीम् । इत् । महय । सुवृक्तिऽभिः । स्तोमैः । वसिष्ठ । रोदसी इति ॥ १ ॥

**वेङ्कट०** हे वसिष्ठ! महत् वचः[3] त्वं ब्रवीषि बलवती नदीनाम् सरस्वती इति । ताम् एव सरस्वतीम् पूजय स्तुतिभिः सुप्रवृत्ताभिः वसिष्ठ! द्यावापृथिव्योः उपशृण्वत्योः[4] ॥ १ ॥

उभे यत् ते महिना शुभ्रे अन्धसी अधिक्षियन्ति पूरवः ।
सा नो बोध्यवित्री मरुत्सखा चोद राधो मघोनाम् ॥ २ ॥

---

१. संस्तपया° वि[2] अ[1]; संस्तपया° ल; सप्तपया° लअ. २-२. नास्ति मूको. ३. वर्चः मूको. ४. °ण्वतोः मूको.

उभे इति । यत् । ते । महिना । शुभ्रे । अन्धसी इति । अधिऽक्षियन्ति । पूरवः ।
सा । नः । बोधि । अवित्री । मरुत्ऽसखा । चोद । राधः । मघोनाम् ॥ २ ॥

**वेङ्कट०** उभे यस्याः ते महत्त्वेन हे शोभमाने! अन्ने दिव्यं पार्थिवं च, यद्वा कृष्टपच्यं च अकृष्टपच्यं च, अभिगच्छन्ति मनुष्याः। सा अस्माकं बुध्यस्व अवित्री भवामीति, यस्याः ते मरुतः सखायः। चोदय धनं हविष्मताम् ॥ २ ॥

भद्रमिद् भद्रा कृणवत् सरस्वत्यकवारी चेतति वाजिनीवती ।
गृणाना जमदग्निवत् स्तुवाना च वसिष्ठवत् ॥ ३ ॥

भद्रम् । इत् । भद्रा । कृणवत् । सरस्वती । अकवऽअरी । चेतति । वाजिनीऽवती ।
गृणाना । जमदग्निऽवत् । स्तुवाना । च । वसिष्ठऽवत् ॥ ३ ॥

**वेङ्कट०** भद्रम् एव भद्रा कृणोतु सरस्वती। अकुत्सितगमना बुध्यताम्[1] अन्नवती स्तूयमाना जमदग्निना इव ऋषिणा, तथा, यथा वसिष्ठः स्तौति तद्वत् च स्तूयमानेत्यात्मानं परोक्षम् आह ॥ ३ ॥

जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः । सरस्वन्तं हवामहे ॥ ४ ॥

जनिऽयन्तः । नु । अग्रवः । पुत्रिऽयन्तः । सुऽदानवः । सरस्वन्तम् । हवामहे ॥ ४ ॥

**वेङ्कट०** जायाम् आत्मनः इच्छन्तः क्षिप्रं गमनशीलाः पुत्रीयन्तः च वयं शोभनदानाः सरस्वन्तम् हवामहे ॥ ४ ॥

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव ॥ ५ ॥

ये । ते । सरस्वः । ऊर्मयः । मधुऽमन्तः । घृतऽश्चुतः । तेभिः । नः । अविता । भव ॥५॥

**वेङ्कट०** ये ते हे सरस्वः! ऊर्मयः सिन्धुरूपस्य मधुरसवन्तः उदकच्युतः, तेभिः नः अविता भव ॥५॥

पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः । भक्षीमहि प्रजामिषम् ॥ ६ ॥

पीपिवांसम् । सरस्वतः । स्तनम् । यः । विश्वऽदर्शतः । भक्षीमहि । प्रऽजाम् । इषम् ॥ ६ ॥

**वेङ्कट०** वर्धमानम् सरस्वतः स्तनम् भजामहे प्रजाम् अन्नं च। ततः धुक्षीमहि इत्यर्थः। यः स्तनः विश्वेषां दर्शनीयः ॥ ६ ॥

[2]इति पञ्चमाष्टके षष्ठाध्याये विंशो वर्गः[2] ॥

---

१. बुध्यन्तां मूको. २-२. नास्ति मूको.

[ ९७ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । आद्याया इन्द्रो देवता; द्वितीयस्याश्चतुर्थ्याद्यष्टम्यन्तानां च बृहस्पतिः, तृतीयानवम्योरिन्द्राब्रह्मणस्पती, दशम्या इन्द्राबृहस्पती । त्रिष्टुप् छन्दः[1] ।

यज्ञे दिवो नृषदने पृथिव्या नरो यत्र देवयवो मदन्ति ।
इन्द्राय यत्र सवनानि सुन्वे गमन्मदाय प्रथमं वयश्च ॥ १ ॥

यज्ञे । दिवः । नृऽसदने । पृथिव्याः । नरः । यत्र । देवऽयवः । मदन्ति ।
इन्द्राय । यत्र । सवनानि । सुन्वे । गमत् । मदाय । प्रथमम् । वयः । च ॥ १ ॥

वेङ्कट० ऐन्द्रयाद्या[2] । सूक्तं बार्हस्पत्यम् । अन्त्यैन्द्री ( तु. ऋअ २,७,९७ ) च । यज्ञे दिवः आगत्य निषीदतु पृथिव्याः नृषदने मनुष्याणां सदनस्थाने । तदेव आह — नरः ऋत्विजः यस्मिन् यज्ञे देवकामाः मदन्ति, इन्द्राय यस्मिन् यज्ञे त्रीणि सवनानि सुषुविरे । तत्र इन्द्रः मदाय गच्छतु, प्रथमम् एव [3]तस्य च अश्वाः[3] गच्छन्तु[4] ॥ १ ॥

आ दैव्या वृणीमहेऽवांसि बृहस्पतिर्नो मह आ सखायः ।
यथा भवेम मीळ्हुषे अनागा यो नो दाता परावतः पितेव ॥ २ ॥

आ । दैव्या । वृणीमहे । अवांसि । बृहस्पतिः । नः । महे । आ । सखायः ।
यथा । भवेम । मीळ्हुषे । अनागाः । यः । नः । दाता । पराऽवतः । पिताऽइव ॥ २ ॥

वेङ्कट० आ वृणीमहे दैव्यानि रक्षणानि । बृहस्पतिः अस्मान् आ पूजयति हे सखायः! । यथा भवेम वयं कामानां सेक्त्रे अनागसः । यः अस्मान् दाता परावतः दूरात् पिता इव आगच्छति ॥ २ ॥

तमु ज्येष्ठं नमसा हविर्भिः सुशेवं ब्रह्मणस्पतिं गृणीषे ।
इन्द्रं श्लोको महि दैव्यः सिषक्तु यो ब्रह्मणो देवकृतस्य राजा ॥ ३ ॥

तम् । ऊँ इति । ज्येष्ठम् । नमसा । हविःऽभिः । सुऽशेवम् । ब्रह्मणः । पतिम् । गृणीषे ।
इन्द्रम् । श्लोकः । महि । दैव्यः । सिसक्तु । यः । ब्रह्मणः । देवऽकृतस्य । राजा ॥ ३ ॥

वेङ्कट० तम् एव ज्येष्ठम् नमस्कारेण हविर्भिः च सुसुखम् ब्रह्मणः पतिम्[5] स्तुहि । इन्द्रम् च श्लोकः महान्तं देवार्हः सेवताम्, यः अन्नस्य देवैः उत्पादितस्य सर्वस्य राजा ॥ ३ ॥

स आ नो योनिं सदतु प्रेष्ठो बृहस्पतिर्विश्ववारो यो अस्ति ।
कामो रायः सुवीर्यस्य तं दात् पर्षन्नो अति सश्चतो अरिष्टान् ॥ ४ ॥

---

१-१. नास्ति मूको २. ऐन्द्राग्न्याद्या मूको. ३-३. तस्याश्चाश्वा वि[२] अ[१]; तस्याश्चाः बा ल; तस्याश्चाः व लभ. ४. °न्तु इत्यर्थः अ[१]. ५. बृहस्पतिं वि[२] अ[१].

सः । आ । नः । योनिम् । सदतु । प्रेष्ठः । बृहस्पतिः । विश्वऽवारः । यः । अस्ति ।
कामः । रायः । सुऽवीर्यस्य । तम् । दात् । पर्षत् । नः । अति । सश्चतः । अरिष्टान् ॥ ४ ॥

**वेङ्कट०** सः अस्माकं बर्हिः आ सीदतु प्रियतमः बृहस्पतिः, विश्वैः वरणीयः यः भवति। सुवीर्यस्य धनस्य यः अस्माकम् कामः तम् प्रयच्छतु । अति पारयतु नः शत्रुभिः संसक्तान् अहिंसितान् एव ॥ ४ ॥

तमा नो अर्कममृताय जुष्टमिमे धासुरमृतासः पुराजाः ।
शुचिक्रन्दं यजतं पस्त्यानां बृहस्पतिमनर्वाणं हुवेम ॥ ५ ॥

तम् । आ । नः । अर्कम् । अमृताय । जुष्टम् । इमे । धासुः । अमृतासः । पुराऽजाः ।
शुचिऽक्रन्दम् । यजतम् । पस्त्यानाम् । बृहस्पतिम् । अनर्वाणम् । हुवेम ॥ ५ ॥

**वेङ्कट०** तत् अन्नम् अस्मभ्यम् आ प्रयच्छन्तु अमरणाय पर्याप्तम् इमे देवाः पुराणाः। शुद्धस्तोत्रं यष्टव्यं गृहाणाम् । [1]“विशः पस्त्याः”[1] ( तु. माश ५,३,५,१९ ) इति च ब्राह्मणम् । [2]बृहस्पतिम् अप्रत्यृतम्[2] अन्यस्मिन् ( तु. या ६,२३ ) हुवेम[3] ॥ ५ ॥

[4]इति पञ्चमाष्टके षष्ठाध्याये एकविंशो वर्गः[4] ॥

तं शग्मासो अरुषासो अश्वा बृहस्पतिं सहवाहो वहन्ति ।
सहश्चिद् यस्य नीलवत् सधस्थं नभो न रूपमरुषं वसानाः ॥ ६ ॥

तम् । शग्मासः । अरुषासः । अश्वाः । बृहस्पतिम् । सहऽवाहः । वहन्ति ।
सहः । चित् । यस्य । नीलऽवत् । सधऽस्थम् । नभः । न । रूपम् । अरुषम् । वसानाः ॥ ६ ॥

**वेङ्कट०** तम् शक्ताः आरोचमानाः अश्वाः बृहस्पतिम् सहवहन्तः वहन्तु। सहः शरीरम्, सहनात्। शरीरम् यस्य नीलवर्णयुक्तम्। 'आ वेधसं नीलपृष्ठम्' ( ऋ ५,४३,१२ ) इति उक्तम्। रथे सहस्थितम् [5]नभः न[5] आदित्य इव रूपम् [6]आरोचमानम् आच्छादयन्तः[6] ॥ ६ ॥

स हि शुचिः शतपत्रः स शुन्ध्युर्हिरण्यवाशीरिषिरः स्वर्षाः ।
बृहस्पतिः स स्वावेश ऋष्वः पुरू सखिभ्य आसुतिं करिष्ठः ॥ ७ ॥

सः । हि । शुचिः । शतऽपत्रः । सः । शुन्ध्युः । हिरण्यऽवाशीः । इषिरः । स्वःऽसाः ।
बृहस्पतिः । सः । सुऽआवेशः । ऋष्वः । पुरु । सखिऽभ्यः । आऽसुतिम् । करिष्ठः ॥ ७ ॥

---

१. विंश प° ल लभ; विंशत्या प° वि[2] लभ; विंशप° अ[1]. २-२. °तिम् आ प्रत्यु° ल लभ; °तिरप्रत्यु° अ[1]; °तिरप्रयु° वि[2]. ३. भूमयः मूको. ४-४. नास्ति मूको. ५-५. वहन्त वि[2] अ[1]. ६. °चमानाच्छा° वि[2] अ[1]; °चमानामाच्छा° ल लभ.

वेङ्कट० सः हि शुचिः शतपतनः। सः हि शोधकः ह्वितरमणीयवचनः[1], आयुधं वा[2] वाशी[3], गमनशीलः[4] स्वर्गस्य सम्भक्ता । बृहस्पतिः सः शोभनावेशः दर्शनीयः स्तोतृभ्यः महतीम् आसुतिम् धनस्य प्रसवम् अत्यन्तं तत्कर्ता ॥ ७ ॥

देवी देवस्य रोदसी जनित्री बृहस्पतिं वावृधतुर्महित्वा ।
दक्षाय्याय दक्षता सखायः करद् ब्रह्मणे सुतरा सुगाधा ॥ ८ ॥

देवी इति । देवस्य । रोदसी इति । जनित्री इति । बृहस्पतिम् । ववृधतुः । महिऽत्वा ।
दक्षाय्याय । दक्षत । सखायः । करत् । ब्रह्मणे । सुऽतरा । सुऽगाधा ॥ ८ ॥

वेङ्कट० देव्यौ देवस्य जनयित्र्यौ द्यावापृथिव्यौ बृहस्पतिम् वर्धयामासतुः महत्त्वेन । पूज्याय पूजां कुरुत हे सखायः! । करोतु ब्राह्मणाय मह्यं सुतराणि सुगाधानि च उदकानि ॥ ८ ॥

इयं वां ब्रह्मणस्पते सुवृक्तिर्ब्रह्मेन्द्राय वज्रिणे अकारि ।
अविष्टं धियो जिगृतं पुरंधीर्जजस्तमर्यो वनुषामरातीः ॥ ९ ॥

इयम् । वाम् । ब्रह्मणः । पते । सुऽवृक्तिः । ब्रह्म । इन्द्राय । वज्रिणे । अकारि ।
अविष्टम् । धियः । जिगृतम् । पुरम्ऽधीः । जजस्तम् । अर्यः । वनुषाम् । अरातीः ॥ ९ ॥

वेङ्कट० इयम् वाम् ब्रह्मणः पते! सुवृक्तिः इन्द्राय वज्रिणे तुभ्यं च अकारि हविः च । अविष्टम् इति गतम् ( ऋ ४,५०,११ द्र. ) ॥ ९ ॥

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद् यूयं पात स्वस्तिभिः सदा नः ॥ १० ॥

बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति । उत । पार्थिवस्य ।
धत्तम् । रयिम् । स्तुवते । कीरये । चित् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ १० ॥

वेङ्कट० [5]बृहस्पते! त्वं च[5] इन्द्रः च युवां धनस्य दिव्यस्य पार्थिवस्य[6] च उभयस्य ईश्वरौ भवतः । तथा सति प्रयच्छतं[8] तद्[6] धनम् स्तुवते स्तोत्रे ॥ १० ॥

[9]इति पञ्चमाष्टके षष्ठाध्याये द्वाविंशो वर्गः[9] ॥

[ ९८ ]

[7]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रो देवता, अन्त्याया इन्द्राबृहस्पती । त्रिष्टुप् छन्दः[7] ।

अध्वर्यवोऽरुणं दुग्धमंशुं जुहोतन वृषभाय क्षितीनाम् ।
गौराद् वेदीयाँ अवपानमिन्द्रो विश्वाहेद् याति सुतसोममिच्छन् ॥ १ ॥

---

१. °णीयं वचनम् ल लअ. २. नास्ति वि[1] अ[1]. ३. पावनी मूको. ४. °शील मूको. ५-५. नास्ति मूको. ६-६. ततश्च वि[1] अ[1]. ७. नास्ति मूको. ८. °च्छत यत् मूको. ९-९. नास्ति मूको.

अध्वर्यवः । अरुणम् । दुग्धम् । अंशुम् । जुहोतन । वृषभाय । क्षितीनाम् ।
गौरात् । वेदीयान् । अवऽपानम् । इन्द्रः । विश्वाहा । इत् । याति । सुतऽसोमम् । इच्छन् ॥१॥

वेङ्कट० अध्वर्यवः ! आरोचमानम् दुग्धम् अंशुम् जुहुत क्षितीनाम् वर्षित्रे । गौरात् अपि मृगाद् अतिशयेन दूरस्थं विन्दन् अधोमुखेन पातव्यम् इन्द्रः सर्वदैव गच्छति सुतसोमम् यजमानम् इच्छन् ॥ १ ॥

यद् दधिषे प्रदिवि चार्वन्नं दिवेदिवे पीतिमिदस्य वक्षि ।
उत हृदोत मनसा जुषाण उशन्निन्द्र प्रस्थितान् पाहि सोमान् ॥ २ ॥

यत् । दधिषे । प्रऽदिवि । चारु । अन्नम् । दिवेऽदिवे । पीतिम् । इत् । अस्य । वक्षि ।
उत । हृदा । उत । मनसा । जुषाणः । उशन् । इन्द्र । प्रऽस्थितान् । पाहि । सोमान् ॥ २ ॥

वेङ्कट० यत् धारयसि 'गते काले'[1] चारु त्वम् अन्नम्, तस्य इदानीम् अपि अन्वहं पानं वह, पिब तम् । अधुना अपि च हृदयेन मनसा अपि च सेवमानः कामयमानः इन्द्र! प्रस्थितान् पिब सोमान् ॥ २ ॥

जज्ञानः सोमं सहसे पपाथ प्र ते माता महिमानमुवाच ।
एन्द्र पप्राथोर्वन्तरिक्षं युधा देवेभ्यो वरिवश्चकर्थ ॥ ३ ॥

जज्ञानः । सोमम् । सहसे । पपाथ । प्र । ते । माता । महिमानम् । उवाच ।
आ । इन्द्र । पप्राथ । उरु । अन्तरिक्षम् । युधा । देवेभ्यः । वरिवः । चकर्थ ॥ ३ ॥

वेङ्कट० प्रादुर्भवन् त्वम् सोमम् पपाथ बलाय[2] । प्र उवाच ते महिमानम् माता पृथिवी त्वया पाल्यमाना । आ पप्राथ च विस्तीर्णम् अन्तरिक्षम् इन्द्र! । युधा देवेभ्यः त्वं धनम् चकर्थ ॥ ३ ॥

यद् योधया महतो मन्यमानान्त्साक्षाम तान् बाहुभिः शाशदानान् ।
यद् वा नृभिर्वृत इन्द्राभियुध्यास्तं त्वयाजिं सौश्रवसं जयेम ॥ ४ ॥

यत् । योधयाः । महतः । मन्यमानान् । साक्षाम । तान् । बाहुऽभिः । शाशदानान् ।
यत् । वा । नृऽभिः । वृतः । इन्द्र । अभिऽयुध्याः । तम् । त्वया । आजिम् । सौश्रवसम् । जयेम ॥

वेङ्कट० यान्[3] अयोधयः 'त्वम् अस्मान् महतः अभिमन्यमानान्[4]' । सहेमहि तान् बाहुभिः 'हिंसतः शत्रून्[5]' । शदिः शातनकर्मा । यद् वा त्वं मरुद्भिः परिवृतः इन्द्र! अभियुध्याः । ततः त्वया तम् वयं सङ्ग्रामं कीर्तिनिमित्तम् जयेम ॥ ४ ॥

---

१. काले गते वि[2] अ[1]. २. पालय मूको. ३. यम् मूको. ४. त्वं महतोऽस्मानभि° मूको.
५. हिंसितशत्रून् मूको.

प्रेन्द्रस्य वोचं प्रथमा कृतानि प्र नूतना मघवा या चकार ।
यदेददेवीरसहिष्ट माया अथाभवत् केवलः सोमो अस्य ॥ ५ ॥

प्र । इन्द्रस्य । वोचम् । प्रथमा । कृतानि । प्र । नूतना । मघऽवा । या । चकार ।
यदा । इत् । अदेवीः । असहिष्ट । मायाः । अथ । अभवत् । केवलः । सोमः । अस्य ॥ ५ ॥

**वेङ्कट०** प्र अवोचम् इन्द्रस्य पुरातनानि कर्माणि । प्र अवोचम् नूतनानि मघवा यानि चक्रे । यदा [1]एवेन्द्रः आसुरीः[1] मायाः असहिष्ट । अनन्तरम् एव अस्य अभवत् असाधारणः सोमः[2] ॥ ५ ॥

तवेदं विश्वमभितः पशव्यं१ यत् पश्यसि चक्षसा सूर्यस्य ।
गवामसि गोपतिरेक इन्द्र भक्षीमहि ते प्रयतस्य वस्वः ॥ ६ ॥

तव । इदम् । विश्वम् । अभितः । पशव्यम् । यत् । पश्यसि । चक्षसा । सूर्यस्य ।
गवाम् । असि । गोऽपतिः । एकः । इन्द्र । भक्षीमहि । ते । प्रऽयतस्य । वस्वः ॥ ६ ॥

**वेङ्कट०** तव एव इदम् सर्वम् अभितः दृश्यमानम् पशव्यम् पशूनां सुसुखं[3] भवति । यदा त्वम् सूर्यस्य तेजसा पशून् पश्यसि । ततः च गवाम् असि गोपतिः त्वम् एकः एव इन्द्र! । भजेमहि त्वया प्रत्तं धनम् ॥ ६ ॥

बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य ।
धत्तं रयिं स्तुवते कीरये चिद् यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

बृहस्पते । युवम् । इन्द्रः । च । वस्वः । दिव्यस्य । ईशाथे इति । उत । पार्थिवस्य ।
धत्तम् । रयिम् । स्तुवते । कीरये । चित् । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**वेङ्कट०** पूर्वं व्याख्याता ( ऋ ७,९७,१० द्र. ) ॥ ७ ॥

[4]इति पञ्चमाष्टके षष्ठाध्याये त्रयोविंशो वर्गः[4] ॥

[ ९९ ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । विष्णुर्देवता, चतुर्थ्यादिषष्ठ्यन्तानाम् इन्द्राविष्णू । त्रिष्टुप् छन्दः[4] ।

परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।
उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ १ ॥

परः । मात्रया । तन्वा । वृधान । न । ते । महिऽत्वम् । अनु । अश्नुवन्ति ।
उभे इति । ते । विद्म । रजसी इति । पृथिव्याः । विष्णो इति । देव । त्वम् । परमस्य । वित्से ॥ १ ॥

---

१. इवेन्द्राः सुरिः मूको. २. स्तोमः वि[2]. ३. सुखरवं वि[2] ल लभ; सखरवं अ[1].
४-४. नास्ति मूको.

**वेङ्कट०** [1]अपीपरः त्वं[1] मानसाधनेन[2] शरीरेण त्रीन् लोकान् हे वर्धमान! । वामनो हि भूत्वा ववृधे विष्णुः । तव शरीरस्य महत्त्वम् न अन्ये केचन [3]व्याप्नुवन्ति । तव स्वभूतौ[3] द्वौ एव लोकौ वयं जानीमः पृथिवीम् अन्तरिक्षं च । हे देव! विष्णो! त्वम् एव तृतीयं लोकं जानासि ॥ १ ॥

न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप ।
उदस्तभ्ना नाकमृष्वं बृहन्तं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ २ ॥

न । ते । विष्णो इति । जायमानः । न । जातः । देव । महिम्नः । परम् । अन्तम् । आप ।
उत् । अस्तभ्नाः । नाकम् । ऋष्वम् । बृहन्तम् । दाधर्थ । प्राचीम् । ककुभम् । पृथिव्याः ॥२॥

**वेङ्कट०** न ते विष्णो! जायमानः न अपि जातः देव! महिम्नः परम् अन्तम् [4]प्र आप । उत्तम्भितवान्[4] असि तृतीयं लोकं दर्शनीयं महान्तम् । धारयः च पृथिव्याः प्राचीम् दिशम् ॥ २ ॥

इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या ।
व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥ ३ ॥

इरावती इतीराऽवती । धेनुमती इति धेनुऽमती । हि । भूतम् । सुयवसिनी इति सुऽयवसिनी ।
मनुषे । दशस्या । वि । अस्तभ्नाः । रोदसी इति । विष्णो इति । एते इति । दाधर्थ ।
पृथिवीम् । अभितः । मयूखैः ॥ ३ ॥

**वेङ्कट०** अन्नवत्यौ पशुमत्यौ च हि अभवतं शोभनयवसे सर्वस्मै मनुष्याय[5] मनवे राज्ञे वा दानम्[6] इच्छन्त्यौ । त्वं च एते रोदसी[7] हे विष्णो! वि अस्तभ्नाः । दाधर्थ च इमाम् पृथिवीम् परितः तेजोभिः शङ्कुभिः ॥ ३ ॥

उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् ।
दासस्य चिद् वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ ४ ॥

उरुम् । यज्ञाय । चक्रथुः । ऊँ इति । लोकम् । जनयन्ता सूर्यम् । उषसम् । अग्निम् ।
दासस्य । चित् । वृषऽशिप्रस्य । मायाः । जघ्नथुः । नरा । पृतनाज्येषु ॥ ४ ॥

**वेङ्कट०** उरुम् [8]यज्ञाय चक्रथुः उ[8] लोकम् स्थानं जनयन्तौ हे इन्द्राविष्णू! सूर्यम् उषसम् अग्निम् च दासस्य [9]चित् वृषशिप्राख्यस्य[9] युवाम् जघ्नथुः मायाः सङ्ग्रामेषु[10] नेतारौ! ॥ ४ ॥

---

१-१. अवीपरस्त्वं वि[2] अ[1]; परस्त्वम् ल लभ. २. मानसाधारणेन अ[1]. ३-३. °वन्तः वि[2] अ[1]; °वन्तः तव ल लभ. ४-४. प्रापोत्तमभिवान् वि[2]; प्रावोभिवान् अ[1]; प्राप । ऊत्तमभिवान् ल; प्राव ऊप्रमभिवान् लभ; °ऊर्ध्वम् अभि° ल प्रस्तावः. ५. मनुष्या मूको. ६. दासीं वि[2]; दानीं अ[1] ल लभ. ७. नास्ति अ[1]. ८-८. कुरुत यज्ञाय अ[1]. ९-९. चिकित्तुषेचिप्राख्यस्य अ[1]; चिद् वृषशिप्रस्य वि[2]. १०. °षु हे वि[2] अ[1].

इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।
शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥ ५ ॥

इन्द्राविष्णू इति । दृंहिताः । शम्बरस्य । नव । पुरः । नवतिम् । च । श्नथिष्टम् ।
शतम् । वर्चिनः । सहस्रम् । च । साकम् । हथः । अप्रति । असुरस्य । वीरान् ॥ ५ ॥

**वेङ्कट०** हे इन्द्राविष्णू! शिलाभिः दृंहिताः शम्बरासुरस्य नव पुरः नवतिम् च श्नथिष्टम् । तथा वर्चिनः असुरस्य शतम् सहस्रम् च पुरः साकम् हथः, शत्रुभिः अप्रतिहतान् असुरस्य वीरान् च ॥ ५ ॥

इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्धयन्ती ।
ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥ ६ ॥

इयम् । मनीषा । बृहती । बृहन्ता । उरुऽक्रमा । तवसा । वर्धयन्ती ।
ररे । वाम् । स्तोमम् । विदथेषु । विष्णो इति । पिन्वतम् । इषः । वृजनेषु । इन्द्र ॥ ६ ॥

**वेङ्कट०** इयम् स्तुतिः महती महान्तौ उरुक्रमणौ इति विष्णुसाहचर्यात् उभावाह[1], वर्धनेन वर्धयन्ती भवति । तथा प्रयच्छामि च स्तोमम् युवाभ्यां यज्ञेषु विष्णो! । तथा सति इन्द्र! त्वं च विष्णुः च अन्नानि अस्मभ्यम् पिन्वतम्[2] सङ्ग्रामे ॥ ६ ॥

वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

वषट् । ते । विष्णो इति । आसः । आ । कृणोमि । तत् । मे । जुषस्व । शिपिऽविष्ट । हव्यम् ।
वर्धन्तु । त्वा । सुऽस्तुतयः । गिरः । मे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

**वेङ्कट०** वषट्कारं तव हे विष्णो! आसः आस्यात्[3] आभिमुख्येन करोमि । तथा वषट्कृतं मम हव्यम् हे शिपिविष्ट! सेवस्व । शिपिविष्टः यज्ञः इति द्वे यज्ञनामनी इत्युक्तम् ( तु. या ५,७ )। वर्धन्तु इति स्पष्टम् ॥ ७ ॥

[4]इति पञ्चमाष्टके षष्ठाध्याये चतुर्विंशो वर्गः[4] ॥

## [ १०० ]

[4]वसिष्ठो मैत्रावरुणिर्ऋषिः । विष्णुर्देवता । त्रिष्टुप् छन्दः[4] ।

नू मर्तो दयते सनिष्यन् यो विष्णव उरुगायाय दाशत् ।
प्र यः सत्राचा मनसा यजात एतावन्तं नर्यमाविवासात् ॥ १ ॥

---

१. उपावह वि[1] अ[1]; उपावाह ल लअ. २. पिबतम् वि[1] अ[1] लअ. ३. आस्यादि मूको.
४-४. नास्ति मूको.

नु । मर्तः । दयते । सनिष्यन् । यः । विष्णवे । उरुऽगायाय । दाशत् ।
प्र । यः । सत्राचा । मनसा । यजाते । एतावन्तम् । नर्यम् । आऽविवासात् ॥ १ ॥

**वेङ्कट०** क्षिप्रं मनुष्यः प्रयच्छति हविः, धनं तद्द्वारेण सः सनिष्यन्, यः विष्णवे उरुकीर्तये हविः प्रयच्छति । न अन्येभ्यः च देवेभ्यः विडम्बते । यः महत्त्वम् अञ्चता मनसा विष्णुम् प्र यजते । यः च एतावन्तम् नर्यम् आविवासति अधितिष्ठति । एतावन्तम् इति महान्तमित्यर्थः ॥ १ ॥

त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः ।
पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः ॥ २ ॥

त्वम् । विष्णो इति । सुऽमतिम् । विश्वऽजन्याम् । अप्रऽयुताम् । एवऽयावः । मतिम् । दाः ।
पर्चः । यथा । नः । सुवितस्य । भूरेः । अश्वऽवतः । पुरुऽचन्द्रस्य । रायः ॥ २ ॥

**वेङ्कट०** त्वम् विष्णो! सुमतिम् विश्वजनहिताम् अप्रमत्ताम् हे एवयावः!, एवान्[1] गच्छति, देहि । पर्चः यथा नः शोभनगमनस्य बहोः अश्वावतः बहुसुवर्णस्य धनस्य भवेत् । पर्चः[2] सम्पर्क इति ॥ २ ॥

त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा ।
प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम ॥ ३ ॥

त्रिः । देवः । पृथिवीम् । एषः । एताम् । वि । चक्रमे । शतऽअर्चसम् । महिऽत्वा ।
प्र । विष्णुः । अस्तु । तवसः । तवीयान् । त्वेषम् । हि । अस्य । स्थविरस्य । नाम ॥ ३ ॥

**वेङ्कट०** त्रिः देवः पृथिवीम् एषः एताम् वि चक्रमे बहुस्तुतिकाम् महत्त्वेन । प्र भवतु विष्णुः वृद्धादपि[3] [4]वृद्धतरः । त्वेषम्† हि अस्य[4] स्थविरस्य नाम विष्णुः इति ॥ ३ ॥

वि चक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ।
ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥ ४ ॥

वि । चक्रमे । पृथिवीम् । एषः । एताम् । क्षेत्राय । विष्णुः । मनुषे । दशस्यन् ।
ध्रुवासः । अस्य । कीरयः । जनासः । उरुऽक्षितिम् । सुऽजनिमा । चकार ॥ ४ ॥

**वेङ्कट०** वि चक्रमे पृथिवीम् एषः विष्णुः एनाम् असुरैः आक्रान्तां[5] निवासार्थम् असुरान् अवजित्य[6] पृथिवीं

१. एवन् ल लभ; एव नू वि[2] अ[1] मूको. २. वर्चः मूको. ३. वृद्धोदपि अ[1] ल लभ; वृद्धोऽपि वि[2]. ४-४. वृद्धोवान्यस्य वि[2] अ[1]. † नास्ति मूको. ५. आक्रमन्तात् वि[2] ल; माक्रमन्तान् लभ; आक्रान्तान् ल प्रस्तावः. ६. अपजित्य अ[1].

मनुष्याय दातुमिच्छन् । स्थिताः अस्य स्तोतारः जनाः अयम् एव स्तोतव्य इति एकमनसः तिष्ठन्ति । सोऽयं शोभनजन्मा विस्तीर्णनिवासाम्[१] असुरापनयनेन चकार ॥ ४ ॥

प्र तत् ते॑ अ॒द्य शि॑पिविष्ट॒ नामा॒र्यः शं॑सामि व॒युना॑नि वि॒द्वान् ।
तं त्वा॑ गृणामि त॒वस॒मत॑व्या॒न् क्षय॑न्तम॒स्य रज॑सः परा॒के ॥ ५ ॥[२]

प्र । तत् । ते॒ । अ॒द्य । शि॒पि॒ऽवि॒ष्ट॒ । नाम॑ । अ॒र्यः । शं॒सा॒मि॒ । व॒युना॑नि । वि॒द्वान् ।
तम् । त्वा॒ । गृ॒णा॒मि॒ । त॒वस॑म् । अत॑व्यान् । क्षय॑न्तम् । अ॒स्य । रज॑सः । प॒रा॒के ॥ ५ ॥

वेङ्कट० प्र शंसामि तत्[३] ते अद्य शिपिविष्ट! नाम अर्यः स्तोमानाम् ईश्वरः । [४]महेश्वरः[४] त्वम् असि [५]इति वा । प्रज्ञानानि जानन्[६] । त्वां स्तौमि तवसम् अतव्यान् । 'तवसः' ( निघ ३,३ ) इति महतो नामधेयं भवति । निवसन्तम् अस्य लोकस्य पराक्रान्ते दूरे देशे ॥ ५ ॥

किमित् ते॑ विष्णो परि॒चक्ष्यं॑ भूत् प्र यद् व॑व॒क्षे शि॑पिवि॒ष्टो अ॑स्मि ।
मा वर्पो॑ अ॒स्मदप॑ गूह ए॒तद् यद॒न्यरू॑पः समि॒थे ब॒भूथ॑ ॥ ६ ॥

किम् । इत् । ते॒ । वि॒ष्णो॒ इति॑ । प॒रि॒ऽचक्ष्य॑म् । भू॒त् । प्र । यत् । व॒व॒क्षे । शि॒पि॒ऽवि॒ष्टः । अ॒स्मि॒ ।
मा । वर्पः॑ । अ॒स्मत् । अप॑ । गू॒ह॒ः । ए॒तत् । यत् । अ॒न्यऽरू॑पः । स॒म्ऽइ॒थे । ब॒भूथ॑ ॥ ६ ॥

वेङ्कट० यास्कः — 'शिपिविष्टो विष्णुरिति विष्णोर्द्वे[७] नामनी भवतः । कुत्सितार्थीयं पूर्वं भवतीति[८] औपमन्यवः । किं ते विष्णोऽप्रख्यातम्[९] एतद् भवत्यप्रख्यापनीयं यन् नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिः । अपि वा प्रशंसानामैवाभिप्रेतं स्यात् । किं ते विष्णो! प्रख्यातमेतद् भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः । शिपयोऽत्र[१०] रश्मय उच्यन्ते, तैराविष्टो भवति । मा वर्पो अस्मद् अप गूह एतत्[११] । वर्पः इति[१२] रूपनाम, वृणोतीति सतः । यदन्यरूपः समिथे सङ्ग्रामे भवसि संयतरश्मिः ( या ५,७;८ ) इति ।

औपमन्यवपक्षे अयमर्थः — प्रच्छन्नरूपः सन् युद्धे वसिष्ठस्य विष्णुः साहाय्यम् अकरोत् । तं वसिष्ठः प्रच्छन्नरूपम् आह — [१३]किम् इत् ते[१३] इति । यद्यपि त्वं परित्यक्तरश्मिः प्रच्छादनार्थम् इह वर्तमानः तत् तव व्रीडाम्[१४] आवहति महतः । तथा सति मा वर्पो अस्मत् अपगूहनाय तद् यत् त्वम् इदम् अस्मिन् सङ्ग्रामे अन्यरूपः भवसि इति । प्रशंसानामपक्षे तु — मानुषे युद्धे समागतस्य स्वरूपप्रच्छादनार्थम् आत्मीयं तेजः अपगूहितुम् इच्छतः विष्णोः अनुशासनम् किम् इत् ते इति ॥ ६ ॥

---

१. विस्तीर्णमन्त्रिवा° मूको. २. यास्केन ( ५,९ ) व्याख्याता. ३. तं वि[१] अ[१]. ४-४. महीश्वरः मूको; हविषामीश्वरः ल प्रस्तावः. ५. भस्ति मूको. ६. जानानः वि[२]; जाननं अ[१]. ७. °णोर्धपना° मूको. ८. °ति नास्ति अ[१]. ९. प्रख्यापनीयम् मूको. १०. शिवयो° मूको. ११. एतदित् मूको. १२. °ति व मूको. १३-१३. किंमित्थ वि[१] अ[१]; °मित्ताम् लभ. १४. व्रीलं मूको.

वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

वषट् । ते । विष्णो इति । आसः । आ । कृणोमि । तत् । मे । जुषस्व । शिपिऽविष्ट । हव्यम् ।
वर्धन्तु । त्वा । सुऽस्तुतयः । गिरः । मे । यूयम् । पात । स्वस्तिऽभिः । सदा । नः ॥ ७ ॥

वेङ्कट० पूर्वं व्याख्याता ( ऋ ७,९९,७ द्र. ) ॥ ७ ॥

[1]इति पञ्चमाष्टके षष्ठाध्याये पञ्चविंशो वर्गः[1] ॥

व्याकरोत् षष्ठमध्यायं पञ्चमस्याष्टकस्य सः ।
भरतस्य कुले जातो माधवो वेङ्कटात्मजः ॥ २ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने पञ्चमाष्टके षष्ठोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये पञ्चमाष्टके षष्ठोऽध्यायः ॥



---

१-१. नास्ति मूको.

## अथ सप्तमोऽध्यायः ।

वेङ्कट०

'तिस्रो वाचो' ऽधुनाऽध्यायं व्याचिख्यासति माधवः ।
[1]ऋषौ चार्षे[1] च वक्तव्यं प्रागनुक्तं प्रदर्शयन् ॥ १ ॥

मनुष्यत्वे मन्त्रकृत ऋषयः परिकीर्तिताः ।
आर्षेयवरणं तेषां[2] तथा च ब्राह्मणं शृणु ॥ २ ॥

'न देवैर्न मनुष्यैरार्षेयं वृणीत ऋषिभिरेवार्षेयं वृणीत' ( आपश्रौ २४,५,३ ) इति ।

न मन्त्रदर्शनात्पूर्वम् ऋषित्वं प्रत्यपद्यत ।
श्यावाश्व इत्यवोचाम पञ्चमे मण्डले वयम् ॥ ३ ॥

तेषामृषीणां ज्ञातव्यं गोत्रमित्याह शौनकः ।
देवा देव्योऽप्सरोनद्यो गन्धर्वाश्च स्वयम्भुवः ॥ ४ ॥

कार्याण्युद्दिश्य[3] जायन्ते यदि देवादयोऽपि च ।
मानुषेषु कुलेष्वंशैर्गोत्रं ज्ञेयमिति स्थितिः ॥ ५ ॥

विपाट्छुतुद्र्योरिन्द्रस्य[4] मरुतामदितेस्तथा ।
नोवाच[5] शौनको गोत्रम् इति तत्र निदर्शनम् ॥ ६ ॥

इच्छन्निन्द्रसमं पुत्रम् अभ्यधादङ्गिरा ऋषिः ।
अभूदिन्द्रः[6] स्वयं तस्य तनयः सव्यनामकः ॥ ७ ॥

इच्छन्निन्द्रसमं पुत्रं चचार कुशिकः पुरा ।
ऐषीरथिर्ब्रह्मचर्यं[7] गाधिनोऽस्य सुतोऽभवत् ॥ ८ ॥

ज्ञातव्यमनयोर्गोत्रं विद्यमानमिति स्थितिः ।
नामार्षेयोस्तु विज्ञानं कार्यं सर्वत्र पण्डितैः ॥ ९ ॥

ऋषिः शाक्त्यो गौरिवीतिरत्रीणां मण्डले कथम् ।
आजगाम परित्यज्य वासिष्ठं मण्डलं स्वकम् ॥ १० ॥

---

१. ऋषिर्वार्षे वि[2] अ[1]. २. येषां वि[2] अ[1] ल लभ. ३. रायां निर्दिश्य वि[2]; रायान्निर्दिश्य अ[1]; रायां° लभ. ४. द्विपाश्नुतुद्यो° वि[2]; द्विपाश्नुतुद्यौ° अ[1]. ५, प्रोवाच ल प्रस्तावः. ६. भागोदिन्द्र अ[1]; भपोदिन्द्र वि[2]. ७. रथी ब्र° वि[2] अ[1] लभ; गाधीन्द्रोस्य वि[2] अ[1]; गाधीन्द्रोस्य लभ.

‘समिद्धो अग्निर्दिवी(वि’[1] इ)ति विश्ववारार्षमुच्यते ।
तस्याः पतिर्गौरिवीतिरपश्यत् सूक्तमुत्तरम् ॥ ११ ॥

‘सञ्जास्पत्यम्[2]’ इति ब्रूते विश्वावारा ततो वयम् ।
मन्यामहे पतिं तस्या गौरिवीतिमिहागतम् ॥ १२ ॥

मध्येऽत्रीणामाङ्गिरसो धरुणो नाम कश्चन ।
सूक्तं ‘प्र वेधसे[3]’ इति प्रसङ्गाद् दृष्टवानृषिः ॥ १३ ॥

तेनाभिषज्यत्[4] सूक्तेन धरुणोऽत्रिमृषिं पुरा ।
तथैव तत्रात्रिम् ‘अस्पर्[5]’ इति सूक्तान्ततः[6] श्रुतम् ॥ १४ ॥

वर्तमाना मातृकुले तत्रत्यैर्ऋषिभिः सह ।
तादृशान्[7] ददृशुर्मन्त्रान् इति केचिदवस्थिताः ॥ १५ ॥

समानोदकसामान्याच्छ्यावाश्वः[8] कण्वमण्डले ।
अग्निनेन्द्रेण[9] सूक्तानि ददर्श पुनरागतः ॥ १६ ॥

ऊह्यानि[10] कारणान्येवं मण्डलान्तरसङ्क्रमे ।
अन्येषामपि दृष्टानामिति वृद्धेभ्य आगमः ॥ १७ ॥

ऋषयो बह्वृचैरित्थं स्मर्यन्ते सामगैरपि[11] ।
स्मरन्त्यध्वर्यवः[12] नैवं[13] तत्र किं कारणं भवेत्[14] ॥ १८ ॥

प्रजापतिश्च सोमश्च तृतीयोऽग्निस्तथैव च ।
विश्वेदेवाः स्वयम्भूश्च तेषां काण्डर्षयो मताः[15] ॥ १९ ॥

यजूंष्यृचश्च[16] बहुभिः दृष्टा ह्येतैर्महर्षिभिः[17] ।
काण्डान्यकुर्वन्नृषयः स्मर्यन्तेऽध्वर्युभिश्च ते ॥ २० ॥

पठन्त्यवान्तरानादौ ब्राह्मणानां कठाः[18] पुनः ।
ऋषीन् व्याख्यानभूतानाम् अनेकान् यजुषामपि ॥ २१ ॥

---

१. ऋ ५,२८,१.  २. ऋ ५,२८,३.  ३. ऋ ५,१५,१.  ४. अभिषज्य वि$^{2}$ अ$^{1}$ ल लभ.  ५. ऋ ५,१५,५.  ६. सूक्तं तथा वि$^{2}$ अ$^{1}$; सूक्तं तता लभ.  ७. °शा वि$^{2}$ अ$^{1}$ ल लभ.  ८. °दर्कं° वि$^{2}$ अ$^{1}$.  ९. ऋ ८,३५,१.  १०. औह्या° वि$^{2}$ अ$^{1}$.  ११. सागमै° वि$^{2}$ अ$^{1}$; सागमे° लभ  १२. °रत्न्याध्वर्यवः वेंऋअ; °रन्त्यध्वर्यवे वि$^{2}$ अ$^{1}$ ल; °रन्तर्ध्वये लभ.  १३. नैव वि$^{2}$ अ$^{1}$.  १४. वदेत् वेंऋअ.  १५. विदुः वेंऋअ.  १६. यजुष्यृ° वि$^{2}$ अ$^{1}$ वेंऋअ ल; यजूष्यृ च लभ.  १७. नेते म° वि$^{2}$ अ$^{1}$ लभ; सन्ति म° वेंऋअ.  १८. कथाः वि$^{2}$ अ$^{1}$ ल लभ.

काण्डर्षिस्मरणादेव भवत्यभ्युदयस्ततः[1] ।
स्मरन्त्यवान्तराण्येत इति वृद्धेभ्य आगमः ॥ २२ ॥

ब्राह्मणान्नामधेयाच्च शाखास्वन्यास्वपि द्विजाः ।
तानेवर्षीन् विजानन्ति य ऋग्वेदे व्यवस्थिताः ॥ २३ ॥

साम्नां रथन्तरादीनां भिन्नैवात्यन्तमाकृतिः[2] ।
ताण्डके शाट्यायनके भिद्यन्त ऋषयो न तु ॥ २४ ॥

भरद्वाजोऽकामयत वसिष्ठोऽकामयतेति ।
उभयत्रार्थवादानां पश्यामो ह्येकरूपताम् ॥ २५ ॥

अध्वर्यूणां ब्राह्मणानि—'कृणुष्व पाजः'[3] इत्यत्र वामदेवस्यर्चो याज्यानुवाक्या भवन्तीत्युक्तम्। 'दिवस्परि प्रथमम्'[4] इत्यत्रैतेन वै वत्सप्रीर्भालन्दन इत्युक्तम्। 'अयं सो अग्निः'[5] इति विश्वामित्रस्य सूक्तं भवतीत्युक्तम्। ऋषेर्ऋषेर्वा एता निर्मिता यत् सामिधेन्य इत्युक्तम्।

एवमैक्ये रूपभेदः पाठभेदश्च किंकृतः ।
साम्नामृचां च विविधः कथयन्त्यत्र वैदिकाः ॥ २६ ॥

भूयोभूयस्तपस्तप्त्वा वेदान्नानाविधानिति ।
ऋषयो ददृशुः पूर्वे तंतमर्थमभीप्सवः ॥ २७ ॥

यजुःष्वृक्षु च वैरूप्ये रूपस्वरकृते बुधाः ।
अर्थद्वैरूप्यमपि च कारणं प्रतिजानते ॥ २८ ॥

ऋग् 'विश्वो देवस्य नेतुः'[6] भवेत्तत्र निदर्शनम् ।
'विश्वे' बहुवचनान्तं पठन्त्यध्वर्यवः[7] पदम् ॥ २९ ॥ इति ॥

## [ १०१ ]

[8]वसिष्ठो मैत्रावरुणिः ( वृष्टिकामः ) ऋषिः, कुमार आग्नेयो वा । पर्जन्यो देवता । त्रिष्टुप् छन्दः[8] ।

तिस्रो वाचः प्र वद ज्योतिरग्रा या एतद् दुह्रे मधुदोघमूधः ।
स वत्सं कृण्वन् गर्भमोषधीनां सद्यो जातो वृषभो रोरवीति ॥ १ ॥

तिस्रः । वाचः । प्र । वद । ज्योतिःऽअग्राः । याः । एतत् । दुह्रे । मधुऽदोघम् । ऊधः ।
सः । वत्सम् । कृण्वन् । गर्भम् । ओषधीनाम् । सद्यः । जातः । वृषभः । रोरवीति ॥ १ ॥

---

१. °स्तथा अ[1] ल लभ. २. भिन्नेहात्यन्त° वि[1] अ[1]. ३. ऋ ४,४,१. ४. ऋ १०,४५,१. ५. ऋ ३,२२,१. ६. ऋ ५,५१,१. ७. °न्त्याध्व° वेंऋभ. ८-८. नास्ति मूको.

**वेङ्कट०** आग्नेयः कुमारो नाम सूक्तयोः, वसिष्ठ एव वा वृष्टिकामः। तिस्रः वाचः [1]प्र वद विद्युन्मुखाः[1]। ‘तस्यैते वषट्कारा यत् स्तनयति यद्विद्योतति ततो यदवस्फूर्जते[2] यद्वातो वाति’[3] (तु. माश ११,५,६,९) इति ब्राह्मणम्। याः[4] एतत्[5] दुहते मधुक्षारि मेघस्योधः। यः सः[6] आत्मीयम् वत्सम् उदकम्[6] ओषधीनाम् गर्भम् कृण्वन्, अपि वाग्निर्वत्सः पर्जन्यस्य तमोषधीनां[7] गर्भम् कृण्वन्, सद्यः जातः वृषभः शब्दायते ॥ १ ॥

यो वर्धन ओषधीनां यो अपां यो विश्वस्य जगतो देव ईशे।
स त्रिधातु शरणं शर्म यंसत् त्रिवर्तु ज्योतिः स्वभिष्ट्य१स्मे ॥ २ ॥

यः। वर्धनः। ओषधीनाम्। यः। अपाम्। यः। विश्वस्य। जगतः। देवः। ईशे।
सः। त्रिऽधातु। शरणम्। शर्म। यंसत्। त्रिऽवर्तु। ज्योतिः। सुऽअभिष्टि। अस्मे इति ॥ २ ॥

**वेङ्कट०** यः ओषधीनाम् अपाम् च वर्धनः, यः च देवः विश्वस्य जगतः ईष्टे, सः त्रिबन्धनं गृहं च सुखं च यच्छतु। ‘त्रिवर्तु च ज्योतिः’ स्वभ्येषणम्[9] अस्मभ्यं प्रयच्छतु। त्रिवर्तनं भवत्यादित्यात् ज्योतिर्वा ‘वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरदपराह्णे’ (तै २१,२,५) त्रिप्रकारं तप्यमानमिति ॥ २ ॥

स्तरीरु त्वद् भवति सूत उ त्वद् यथावशं तन्वं चक्र एषः।
पितुः पयः प्रति गृभ्णाति माता तेन पिता वर्धते तेन पुत्रः ॥ ३ ॥

स्तरीः। ऊँ इति। त्वत्। भवति। सूते। ऊँ इति। त्वत्। यथाऽवशम्। तन्वम्। चक्रे। एषः।
पितुः। पयः। प्रति। गृभ्णाति। माता। तेन। पिता। वर्धते। तेन। पुत्रः ॥ ३ ॥

**वेङ्कट०** निवृत्तप्रसवम्[10] एकम् भवति। सूते अन्यत्। यथाकामम् आत्मीयं शरीरम् उभयोः करोति एषः देवः पर्जन्यः। दिवि च पृथिव्यां चात्मीयमुदकं विस्तारयति, तत्र पृथिव्योषधीः[11] जनयतीत्यर्थः। पितुः पयः प्रति गृह्णाति माता द्युलोकात् पृथिवी उदकम्। तेन उदकेन पिता च वर्धते पुत्रः चायं लोकः। पितृप्रदानं हि देवाश्च उपजीवन्तीति ॥ ३ ॥

यस्मिन् विश्वानि भुवनानि तस्थुस्तिस्रो द्यावस्त्रेधा सस्रुरापः।
त्रयः कोशास उपसेचनासो मध्वः श्चोतन्त्यभितो विरप्शम् ॥ ४ ॥

यस्मिन्। विश्वानि। भुवनानि। तस्थुः। तिस्रः। द्यावः। त्रेधा। सस्रुः। आपः।
त्रयः। कोशासः। उपऽसेचनासः। मध्वः। श्चोतन्ति। अभितः। विऽरप्शम् ॥ ४ ॥

---

१-१. प्रावदद्यन्मु° वि[2]. २. यदः प्रस्पूर्जे° वि[1]; यदपस्फू° अ[1]. ३. वायति मूको. ४. नास्ति वि[2]. ५. एत मूको. ६. उदतम् मूको. ७. तमौष° मूको. ८-८. ज्योतिस्त्रयस्य कृते तु. शौ ९,५,८;१०,७,१२;४०; मा ८,३६; माश ११,५,८,२; शांश्रौ १६,२१,२. ९. अभ्ये° वि[2]. १०. त्रिवृतः प्र° वि[1]; त्रिवृत प्र° अ[1]; तृवृतप्र° ल लभ. ११. °व्यौषधी मूको.

वेङ्कट० यस्मिन् विश्वानि भूतानि तिष्ठन्ति, त्रयश्च लोकाः। यस्माच्च त्रेधा स्रवन्ति आपः आज्यौषधिसोमरूपाः। त्रयः कोशाः अग्निवायुसूर्याख्याः पर्जन्यस्य उपसेचनाः उदकानि क्षरन्ति परितो महान्तं पर्जन्यम् ॥ ४ ॥

इ॒दं वचः॑ प॒र्जन्या॑य स्व॒राजे॑ हृ॒दो अ॒स्त्वन्त॑रं॒ तज्जु॑जोषत् ।
म॒यो॒भुवो॑ वृ॒ष्टयः॑ सन्त्व॒स्मे सु॑पिप्प॒ला ओष॑धीर्दे॒वगो॑पाः ॥ ५ ॥

इ॒दम् । वचः॑ । प॒र्जन्या॑य । स्व॒ऽराजे॑ । हृ॒दः । अ॒स्तु॒ । अन्त॑रम् । तत् । जु॒जो॒ष॒त् ।
म॒यः॒ऽभुवः॑ । वृ॒ष्टयः॑ । स॒न्तु॒ । अ॒स्मे इति॑ । सु॒ऽपि॒प्प॒लाः । ओष॑धीः । दे॒वऽगो॑पाः ॥ ५ ॥

वेङ्कट० इदम् वचः पर्जन्याय स्वराजे हृदयस्य अन्तरङ्गम् अस्तु । तत् स सेवताम् । सुखस्य भावयित्र्यः वृष्टयः [1]अस्मासु सन्तु सुफलाः ओषधयः†[1] च देवेन पर्जन्येन गुप्ताः ॥ ५ ॥

स रे॑तो॒धा वृ॑ष॒भः शश्व॑तीनां॒ तस्मि॑न्ना॒त्मा जग॑तस्त॒स्थुष॑श्च ।
तन्म॑ ऋ॒तं पा॑तु श॒तशा॑रदाय यू॒यं पा॑त स्व॒स्तिभिः॒ सदा॑ नः ॥ ६ ॥

सः । रे॒तः॒ऽधाः । वृ॒ष॒भः । शश्व॑तीनाम् । तस्मि॑न् । आ॒त्मा । जग॑तः । त॒स्थुषः॑ । च॒ ।
तत् । मा॒ । ऋ॒तम् । पा॒तु॒ । श॒तऽशा॑रदाय । यू॒यम् । पा॒त॒ । स्व॒स्तिऽभिः॑ । सदा॑ । नः॒ ॥ ६ ॥

वेङ्कट० पर्जन्यः रेतसो निधाता वर्षिता च बह्वीनामपाम् । तस्मिन् आत्मा जङ्गमस्य स्थावरस्य च । यद्वा बह्वीनामोषधीनां पर्जन्यः । तत् उदकम् अस्मान् रक्षतु शतशारदाय[2] जीविताय ॥ ६ ॥

[3]इति पञ्चमाष्टके सप्तमाध्याये प्रथमो वर्गः[3] ॥

[ १०२ ]

[1]वसिष्ठो मैत्रावरुणिः ( वृष्टिकामः ) ऋषिः, कुमार आग्नेयो वा । पर्जन्यो देवता ।
गायत्री छन्दः, द्वितीया पादनिचृत्[1] ।

प॒र्जन्या॑य॒ प्र गा॑यत दि॒वस्पु॒त्राय॑ मी॒ळ्हुषे॑ । स नो॒ यव॑समिच्छतु ॥ १ ॥

प॒र्जन्या॑य । प्र । गा॒य॒त॒ । दि॒वः । पु॒त्राय॑ । मी॒ळ्हुषे॑ । सः । नः॒ । यव॑सम् । इ॒च्छ॒तु॒ ॥ १ ॥

वेङ्कट० पर्जन्याय प्र गायत अन्तरिक्षे प्रादुर्भूताय सेक्त्रे । सः अस्माकम् यवसम् इच्छतु ॥ १ ॥

यो गर्भ॒मोष॑धीनां॒ गवां॑ कृ॒णोत्यर्व॑ताम् । प॒र्जन्यः॑ पुरु॒षीणा॑म् ॥ २ ॥

यः । गर्भ॑म् । ओष॑धीनाम् । गवा॑म् । कृ॒णोति॑ । अर्व॑ताम् । प॒र्जन्यः॑ । पु॒रु॒षीणा॑म् ॥ २ ॥

वेङ्कट० निगदसिद्धा ॥ २ ॥

---

१. °स्मासु बलाज्यौषध्यः वि[1]; °स्मासु बलाज्योषध्यः अ[1]; °स्मासु सुबलाज्यौषध्यः ल; °स्मासु लभलाज्योषध्यः लक्ष. † आज्यौषध्यः ल प्रस्तावः. २. 'शर' ल लक्ष. ३-३. नास्ति मूको.

तस्मा इदास्ये हविर्जुहोता मधुमत्तमम् । इळां नः संयतं करत् ॥ ३ ॥

तस्मै । इत् । आस्ये । हविः । जुहोत । मधुमत्ऽतमम् । इळाम् । नः । सम्ऽयतम् । करत् ॥ ३ ॥

वेङ्कट० ··· अन्नं[1] सम्यग्गतं करोत्विति ॥ ३ ॥

[2]इति पञ्चमाष्टके सप्तमाध्याये द्वितीयो वर्गः[2] ॥

[ १०३ ]

[2]वसिष्ठो मैत्रावरुणिर्ऋषिः । मण्डूका देवता । त्रिष्टुप् छन्दः, आद्यानुष्टुप्[2] ।

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥ १ ॥

संवत्सरम् । शशयानाः । ब्राह्मणाः । व्रतऽचारिणः ।
वाचम् । पर्जन्यऽजिन्विताम् । प्र । मण्डूकाः । अवादिषुः ॥ १ ॥

वेङ्कट० संवत्सरम् शिशयानाः ब्राह्मणाः व्रतचारिणः अनश्नन्तः वाचम् पर्जन्यप्रीताम् प्र अवादिषुः मण्डूकाः । अत्र यास्कः (९, ६)—'ब्राह्मणा ब्रुवाणाः[3] । अपि वोपमार्थे स्यात् । ब्राह्मणा इव व्रतचारिण इति' ॥ १ ॥

दिव्या आपो अभि यदेनमायन् दृतिं न शुष्कं सरसी शयानम् ।
गवामह न मायुर्वत्सिनीनां मण्डूकानां वग्नुरत्रा समेति ॥ २ ॥

दिव्याः । आपः । अभि । यत् । एनम् । आयन् । दृतिम् । न । शुष्कम् । सरसी इति । शयानम् ।
गवाम् । अह । न । मायुः । वत्सिनीनाम् । मण्डूकानाम् । वग्नुः । अत्र । सम् । एति ॥ २ ॥

वेङ्कट० दिव्याः आपः अभि आयन् यत् एनम् मण्डूकम् दृतिम् इव शुष्कम् सलिले महति सरसि शयानम् । गवाम् इव शब्दः वत्सयुक्तानाम् मण्डूकानाम् शब्दः अत्र पर्जन्ये वर्षासु वा सम् गच्छते । अह इति पूरणम् ॥ २ ॥

यदीमेनाँ उशतो अभ्यवर्षीत् तृष्यावतः प्रावृष्यागतायाम् ।
अख्खलीकृत्या पितरं न पुत्रो अन्यो अन्यमुप वदन्तमेति ॥ ३ ॥

यत् । ईम् । एनान् । उशतः । अभि । अवर्षीत् । तृष्याऽवतः । प्रावृषि । आऽगतायाम् ।
अख्खलीकृत्य । पितरम् । न । पुत्रः । अन्यः । अन्यम् । उप । वदन्तम् । एति ॥ ३ ॥

---

१. अनस् वि[1] अ[1]. २-२. नास्ति मूको. ३. प्रवणात् मूको.

वेङ्कट० यदि एनान् कामयमानान् उदकम् अभि वर्षति पर्जन्यः तृष्णायुक्तान् प्रावृषि आगतायाम्। अख्खलीकृत्य इति शब्दानुकरणमाहुः। पितरम् इव पुत्रः अन्यः अन्यम् उप गच्छति वदन्तम् शब्दायमानमिति ॥ ३ ॥

अ॒न्यो अ॒न्यमनु॑ गृ॒भ्णात्ये॑नोर॒पां प्र॑स॒र्गे यदम॑न्दिषाताम् ।
म॒ण्डूको॒ यद॒भिवृ॑ष्टः॒ कनि॑ष्कन् पृश्नि॑ः सं॒पृङ्क्ते॒ हरि॑तेन॒ वाच॑म् ॥ ४ ॥

अ॒न्यः । अ॒न्यम् । अनु॑ । गृ॒भ्णा॒ति । ए॒नोः॒ । अ॒पाम् । प्र॒ऽस॒र्गे । यत् । अम॑न्दिषाताम् ।
म॒ण्डूकः॑ । यत् । अ॒भिऽवृ॑ष्टः । कनि॑स्कन् । पृश्नि॑ः । स॒म्ऽपृ॒ङ्क्ते । हरि॑तेन । वाच॑म् ॥ ४ ॥

वेङ्कट० अन्यः अन्यम् अनयोर्मण्डूकयोः अनुगम्य गृह्णाति, अपाम् प्रसर्गे[1] यदा अमन्दिषाताम् मण्डूकौ[2]। यदा मण्डूकः अभिवृष्टः शब्दं कुर्वन् पृश्निवर्णः सम्पृङ्क्ते हरितवर्णेनान्येन आत्मीयाम् वाचम् संमिश्रयति ॥ ४ ॥

यदे॑षाम॒न्यो अ॒न्यस्य॒ वाचं॑ शा॒क्तस्ये॑व॒ वद॑ति॒ शिक्ष॑माणः ।
सर्वं॒ तदे॑षां स॒मृधे॑व॒ पर्व॒ यत् सु॒वाचो॒ वद॑थ॒नाध्य॒प्सु ॥ ५ ॥

यत् । ए॒षा॒म् । अ॒न्यः । अ॒न्यस्य॑ । वाच॑म् । शा॒क्तस्य॑ऽइव । वद॑ति । शिक्ष॑माणः ।
सर्व॑म् । तत् । ए॒षा॒म् । स॒मृधा॑ऽइव । पर्व॑ । यत् । सु॒ऽवाच॑ः । वद॑थन । अधि॑ । अ॒प्ऽसु ॥ ५ ॥

वेङ्कट० यत् एषाम्[3] अन्यः अन्यस्य वाचम् वदति शक्तियुक्तस्येव [4]शिष्यः शिक्षन् आचार्यस्य[4]। सर्वम् तत् एषाम् भवतां समृद्धमिव पर्व अङ्गानाम् उदकाप्यायितानाम्[5], यत् सुवाचः यूयम् अप्सु स्थिताः शब्दं[6] कुरुतेति ॥ ५ ॥

[7]इति पञ्चमाष्टके सप्तमाध्याये तृतीयो वर्गः[7] ॥

गोमा॑युरेको॑ अ॒जमा॑युरेकः॒ पृश्नि॑रेको॒ हरि॑त॒ एक॑ एषाम् ।
स॒मा॒नं नाम॒ बिभ्र॑तो॒ विरू॑पाः पुरु॒त्रा वाचं॑ पिपिशु॒र्वद॑न्तः ॥ ६ ॥

गोऽमा॑युः । एक॑ः । अ॒जऽमा॑युः । एक॑ः । पृश्नि॑ः । एक॑ः । हरि॑तः । एक॑ः । ए॒षा॒म् ।
स॒मा॒नम् । नाम॑ । बिभ्र॑तः । वि॒ऽरू॑पाः । पु॒रु॒ऽत्रा । वाच॑म् । पि॒पि॒शुः॒ । वद॑न्तः ॥ ६ ॥

वेङ्कट० गोशब्दः एकः, अजशब्दः एकः, पृश्निवर्णः एकः, हरितवर्णः एकः एषाम् मण्डूकानाम्। समानम् मण्डूकाख्यम् नाम बिभ्रतः नानारूपाः बहुदेशेषु वाचम् मिश्रयन्ति शब्दयन्तः[8] ॥ ६ ॥

---

१. प्रसङ्गे अ[1]. २. °को मूको. ३. येषाम् ल लक्ष. ४. शिष्यस्य शिक्षन्नाचार्यः मूको. ५. उदकाप्यायितम् मूको. ६. शं मूको. ७-७. नास्ति मूको. ८. °ब्दा° मूको.

ब्राह्मणासो अतिरात्रे न सोमे सरो न पूर्णमभितो वदन्तः ।
संवत्सरस्य तदहः परि ष्ठ यन्मण्डूकाः प्रावृषीणं बभूव ॥ ७ ॥

ब्राह्मणासः । अतिऽरात्रे । न । सोमे । सरः । न । पूर्णम् । अभितः । वदन्तः ।
संवत्सरस्य । तत् । अहरिति । परि । स्थ । यत् । मण्डूकाः । प्रावृषीणम् । बभूव ॥ ७ ॥

**वेङ्कट०** ब्राह्मणाः इव अतिरात्रे सोमे भूयिष्ठस्तोत्रशस्त्रे सरः इव पूर्णम् अभितः स्तोत्रशस्त्राणि वदन्तः । सरःशब्दः सोमवचनः[1] । संवत्सरस्य तत् दिनं परितो भवथ, यत् दिनं हे मण्डूकाः! प्रावृषेण्यं भवति प्रादुर्भवति चेति ॥ ७ ॥

ब्राह्मणासः सोमिनो वाचमक्रत ब्रह्म कृण्वन्तः परिवत्सरीणम् ।
अध्वर्यवो घर्मिणः सिष्विदाना आविर्भवन्ति गुह्या न के चित् ॥ ८ ॥

ब्राह्मणासः । सोमिनः । वाचम् । अक्रत । ब्रह्म । कृण्वन्तः । परिवत्सरीणम् ।
अध्वर्यवः । घर्मिणः । सिस्विदानाः । आविः । भवन्ति । गुह्याः । न । के । चित् ॥ ८ ॥

**वेङ्कट०** ब्राह्मणासः सोमिनः इत्यौपमिकम् । कर्म कृण्वन्तः संवत्सरान्तर्भवम् वाचम् अकुर्वन्[2] । अध्वर्यवः घर्मेण चरन्तः स्विद्यच्छरीराः आविः भवन्ति गुह्याः इदानीम् के चित् बिलादुत्थिता मण्डूकाः । न इति सम्प्रत्यर्थः ॥ ८ ॥

देवहितिं जुगुपुर्द्वादशस्य ऋतुं नरो न प्र मिनन्त्येते ।
संवत्सरे प्रावृष्यागतायां तप्ता घर्मा अश्नुवते विसर्गम् ॥ ९ ॥

देवऽहितिम् । जुगुपुः । द्वादशस्य । ऋतुम् । नरः । न । प्र । मिनन्ति । एते ।
संवत्सरे । प्रावृषि । आऽगतायाम् । तप्ताः । घर्माः । अश्नुवते । विऽसर्गम् ॥ ९ ॥

**वेङ्कट०** द्वादशमासस्य संवत्सरस्य देवहितिम् हवीरूपम् जुगुपुः एते । तदेवाह — न हिंसन्ति वार्षिकम् ऋतुम् नेतार इति । प्रकाशीभवन्तः ऋतुं प्रकाशयन्तीत्यर्थः । संवत्सरे प्रावृषि आगतायाम् तप्ताः केचन घर्माः बिलात् विसर्गम् प्राप्नुवन्ति । तप्ता घर्मा इत्यौपमिकम् ॥ ९ ॥

गोमायुरदादजमायुरदात् पृश्निरदाद्धरितो नो वसूनि ।
गवां मण्डूका ददतः शतानि सहस्रसावे प्र तिरन्त आयुः ॥ १० ॥

गोऽमायुः । अदात् । अजऽमायुः । अदात् । पृश्निः । अदात् । हरितः । नः । वसूनि ।
गवाम् । मण्डूकाः । ददतः । शतानि । सहस्रऽसावे । प्र । तिरन्ते । आयुः ॥ १० ॥

---

१. स्तोम° मूको. २. अक्रत वि[2]; मकुर्व अ[1] लभ; अकृषत ल प्रस्तावः.

**वेङ्कट०** गोमायुः अदात् । एवमन्ये च धनानि अस्मभ्यम् गवाम् शतानि प्रयच्छन्तः मण्डूकाः सहस्रसावे बहूनां प्रसवे वर्षद्धनम् प्र वर्धयन्ति आयुः अन्नम् इति ॥ १० ॥

[1]इति पञ्चमाष्टके सप्तमाध्याये चतुर्थो वर्गः[1] ॥

## [ १०४ ]

[1]वसिष्ठो मैत्रावरुणिर्ऋषिः । इन्द्रासोमौ देवता, अष्टमीषोडश्योः एकोनविंश्यादिद्वाविंश्यन्तानां च इन्द्रः, नवमीद्वादशीत्रयोदशीनां सोमः, दशमीचतुर्दश्योरग्निः, एकादश्या देवाः, सप्तदश्या ग्रावाणः, अष्टादश्या मरुतः, त्रयोविंश्याः ( पूर्वार्धस्य ) वसिष्ठाशीः, ( उत्तरार्धस्य ) पृथिव्यन्तरिक्षे । त्रिष्टुब् छन्दः, आद्यादिषड्यन्ताः अष्टादश्येकविंशीत्रयोविंश्यश्च जगत्यः, सप्तमी जगती त्रिष्टुब् वा, पञ्चविंशी अनुष्टुप्[1] ।

**इन्द्रा॑सोमा॒ तप॑तं॒ रक्ष॑ उ॒ब्जतं॒ न्य॑र्पयतं वृषणा त॒मो॒वृधः॑ ।**
**परा॑ शृणीतम॒चितो॒ न्यो॑षतं ह॒तं नु॒देथां॒ नि शि॑शीतम॒त्रिण॑ः ॥ १ ॥**

इन्द्रा॑सोमा । तप॑तम् । रक्षः॑ । उ॒ब्जत॑म् । नि । अ॒र्प॒य॒त॒म् । वृ॒ष॒णा॒ । त॒मः॒ऽवृधः॑ ।
परा॑ । शृ॒णी॒त॒म् । अ॒चित॑ः । नि । ओ॒ष॒त॒म् । ह॒तम् । नु॒देथा॑म् । नि । शि॒शी॒त॒म् । अ॒त्रिण॑ः ॥१॥

**वेङ्कट०** शौनकः— संवत्सरं तु मण्डूकम् ऐन्द्रासोमं परं तु यत् ।
ऋषिर्ददर्श राक्षोघ्नं पुत्रशोकपरिप्लुतः ॥
'ये पा॑कशं॒सम् [९]'[2] ऋक् सौम्या[3] आग्नेयी तत उत्तरा ।
एकादशी वैश्वदेवी सौम्यस्तस्याः[4] परो द्वयृचः ॥
'यदि॑ वा॒हम् [१४]' ऋगाग्नेयी ऐन्द्री[5] 'यो मे(मा [१६]' इ) ति तु स्मृता[6] ।
ग्राव्णी 'प्र या जिगा॑ती' (ति [१७]' इ)ति 'वि ति॑ष्ठध्वम् [१८]' तु मारुती ॥
'प्र व॑र्तये' (य [१९]' इ) ति पञ्चैन्द्रय [7]ऐन्द्रासोमी त्वृगुत्तरा[7] ।
ऋषिस्त्वाशिषमाशास्ते 'मा नो॒ रक्षः॑ [२३]' इति त्वृचि ॥
पञ्चदश्यां तु सूक्तस्य अष्टम्यां चैव वारुणिः[8] ।
दुःखशोकपरीतात्मा शपते[9] विलपन्निव ॥ ( बृदे ६,२७-३१;३३ ) इति ॥

हे इन्द्रासोमौ! तेजोभिः तपतम् रक्षः उब्जतम् च । उब्जतिर्वधकर्मा । नि अर्पयतम् अधो नयतं वर्षितारौ! तमसा वर्धयितॄन् राक्षसान् । परा शृणीतम् पराङ्मुखं नीत्वा विशीर्णान् कुरुतम् । अज्ञान् निर्दहतं च । हतम् । नुदेथाम् । नितरां च तनूकुरुतम् अदनशीलानिति ॥ १ ॥

---

१-१. नास्ति मूको. २. ये वा ··· कशं समृद्धौम्या वि[2] अ[1] लभ. ३. ऋग्धौम्या मूको. ४. °यस्तस्माद मूको. ५. ऐन्द्रयौ मूको. ६. स्मृतौ मूको. ७-७. त्यृगु° मूको. ८. °णि अ[3]; °णी वि[2] लभ; वरुणी लभ °णीः लु प्रस्तावः. ९. शपथे मूको.

इन्द्रा॑सोमा॒ सम॒घशं॑सम॒भ्य१॒॑घं तपु॒र्य॑यस्तु च॒रुर॑ग्नि॒वाँ इ॑व ।
ब्र॒ह्म॒द्विषे॑ क्र॒व्यादे॑ घो॒रच॑क्षसे॒ द्वेषो॑ धत्तमन॒वा॒यं कि॑मी॒दिने॑ ॥ २ ॥

इन्द्रा॑सोमा । सम् । अ॒घऽशं॑सम् । अ॒भि । अ॒घम् । तपुः॑ । य॒य॒स्तु॒ । च॒रुः । अ॒ग्नि॒वान्ऽइ॑व ।
ब्र॒ह्म॒ऽद्विषे॑ । क्र॒व्य॒ऽअदे॑ । घो॒रऽच॑क्षसे । द्वेषः॑ । ध॒त्त॒म् । अ॒न॒वा॒यम् । कि॒मी॒दिने॑ ॥ २ ॥

वेङ्कट० इन्द्रासोमौ! अघस्य शंसितारम् सम् अभि भवतम् अघम् आहत्य तापकः राक्षसः युवयोस्तेजसा आयस्तो भवतु, यथाऽग्निना तप्यमानः[1] चरुः। ब्राह्मणद्वेषिणे क्रव्यादे घोरख्यानाय द्वेषः धत्तम्। अव्यपेयम् अनवयवं वा यदन्ये न न्यवेयुः[2]। 'किमीदिने किमिदानीमिति चरते[3] किम्[4] इदं[5] किमिदमिति वा पिशुनाय चरते' इति यास्कः (६,११) ॥ २ ॥

इन्द्रा॑सोमा दु॒ष्कृतो॑ व॒व्रे अ॒न्तर॑नारम्भ॒णे तम॑सि॒ प्र वि॑ध्यतम् ।
यथा॒ नातः॒ पुन॒रेक॑श्च॒नोद॒यत् तद् वा॑मस्तु॒ सह॑से मन्यु॒मच्छवः॑ ॥ ३ ॥

इन्द्रा॑सोमा । दुः॒ऽकृतः॑ । व॒व्रे । अ॒न्तः । अ॒ना॒र॒म्भ॒णे । तम॑सि । प्र । वि॒ध्य॒त॒म् ।
यथा॑ । न । अतः॑ । पुनः॑ । एकः॑ । च॒न । उ॒त्ऽअय॑त् । तत् । वा॒म् । अ॒स्तु॒ । सह॑से । म॒न्यु॒ऽमत् । शवः॑ ॥

वेङ्कट० इन्द्रासोमौ! दुष्टस्य कर्मणः कर्तॄन् वारके[6] अन्तः अनालम्बने तमसि [7]प्र विध्यतम्[7] प्रक्षिपतम्, यथा न अतः तमसः पुनः एकः अपि 'राक्षस उद्गच्छेत्[8]। तत् युवयोः[9] अस्तु अभिभवाय रक्षसां[10] क्रोधयुक्तम्[11] बलम् ॥ ३ ॥

इन्द्रा॑सोमा व॒र्तय॑तं दि॒वो व॒धं सं पृ॑थि॒व्या अ॒घशं॑साय॒ तर्ह॑णम् ।
उत् त॑क्षतं स्व॒र्य१॒॑ पर्व॑तेभ्यो॒ येन॒ रक्षो॑ वावृधा॒नं नि॒जूर्व॑थः ॥ ४ ॥

इन्द्रा॑सोमा । व॒र्तय॑तम् । दि॒वः । व॒धम् । सम् । पृ॒थि॒व्याः । अ॒घऽशं॑साय । तर्ह॑णम् ।
उत् । त॒क्ष॒त॒म् । स्व॒र्य॑म् । पर्व॑तेभ्यः । येन॑ । रक्षः॑ । व॒वृ॒धा॒नम् । नि॒ऽजूर्व॑थः ॥ ४ ॥

वेङ्कट० इन्द्रासोमौ! द्युलोकाद् वज्रम् सम् वर्तयतम् पृथिव्याः अघशंसाय रक्षसे हिंसकम्। उत् तक्षतम् पृथक् कुरुतं स्वरणकुशलम् अशनिं[12] मेघेभ्यः, यथा काष्ठेभ्यः शकलम् उत्तक्षन्ति[13]। येन वज्रेण रक्षः वर्धमानं निहथः[14] ॥ ४ ॥

इन्द्रा॑सोमा व॒र्तय॑तं दि॒वस्पर्य॑ग्नित॒प्तेभि॑र्यु॒वमश्म॑हन्मभिः ।
तपु॑र्वधेभिर॒जरे॑भिर॒त्रिणो॒ नि पर्शा॑ने विध्यतं॒ यन्तु॑ निस्व॒रम् ॥ ५ ॥

---

१. °मानाः मूको. २. व्यपेयुः ल लअ; न्या पयेयुः वि[2]; वापैयुः अ[1]. ३. °रतेः मूको. ४. नास्ति मूको. ५. इमं मूको. ६. तु. वैप १,२९८५ l; नास्ति वि[2]. ७-७. प्रवर्धतं मूको. ८. °सो न उ° मूको. ९. उभयोः वि[2] अ[1]; युभयोः ल लअ. १०. रक्षांसि वि[2] अ[1]. ११. धियुक्तम् ल लअ; युक्तम् वि[2] अ[1]. १२. अशनं वि[2] ल लअ; अन्नं अ[1]. १३. उत्वक्ष° ल लअ; भक्षय° वि[2] अ[1]. १४. निहथ मूको.

इन्द्रासोमा । वर्तयतम् । दिवः । परि । अग्निऽतप्तेभिः । युवम् । अश्महन्मऽभिः ।
तपुःऽवधेभिः । अजरेभिः । अत्रिणः । नि । पर्शाने । विध्यतम् । यन्तु । निऽस्वरम् ॥ ५ ॥

**वेङ्कट०** [1]'इन्द्रासोमौ! परि वर्तयतम् अन्तरिक्षाद् आगच्छथः । अग्निना तप्तास्त्रैः व्याप्तहननैः तापनशील-प्रहारैः अदनशीलान् राक्षसान् शस्त्रैः नि विध्यतम् पर्शाने† पार्श्वस्थे अपि । नि यन्तु राक्षसाः निस्वरम् शब्दायमानाः(?)‡'[1] ॥ ५ ॥

[2]इति पञ्चमाष्टके सप्तमाध्याये पञ्चमो वर्गः[2] ॥

इन्द्रासोमा परि वां भूतु विश्वत इयं मतिः कक्ष्याश्वेव वाजिना ।
यां वां होत्रां परिहिनोमि मेधयेमा ब्रह्माणि नृपतीव जिन्वतम् ॥ ६ ॥

इन्द्रासोमा । परि । वाम् । भूतु । विश्वतः । इयम् । मतिः । कक्ष्या । अश्वाऽइव । वाजिना ।
याम् । वाम् । होत्राम् । परिऽहिनोमि । मेधया । इमा । ब्रह्माणि । नृपती इवेति नृपतीऽइव । जिन्वतम् ॥

**वेङ्कट०** इन्द्रासोमौ![3] परि भवतु वाम् सर्वतः इयम् स्तुतिः अश्वाविव बलिनौ[4] कक्ष्या, याम् युवयोः अहं प्रेरयामि प्रज्ञया । अतो युवाम् इमानि स्तोत्राणि राजानाविव[5] कामप्रदानेन प्रीणयतम् ॥ ६ ॥

प्रति स्मरेथां तुजयद्भिरेवैर्हतं द्रुहो रक्षसो भङ्गुरावतः ।
इन्द्रासोमा दुष्कृते मा सुगं भूद् यो नः कदा चिदभिदासति द्रुहा ॥ ७ ॥

प्रति । स्मरेथाम् । तुजयत्ऽभिः । एवैः । हतम् । द्रुहः । रक्षसः । भङ्गुरऽवतः ।
इन्द्रासोमा । दुःऽकृते । मा । सुऽगम् । भूत् । यः । नः । कदा । चित् । अभिऽदासति । द्रुहा ॥७॥

**वेङ्कट०** [6]'अस्मान् प्रति'[6] स्मरेथाम् । आगच्छतमित्यर्थः । क्षिप्रमाचरद्भिः गमनैः । हतम् च द्रोग्धॄन्[7] राक्षसान् भङ्गुरावतः भञ्जनशीलकर्मयुक्तान् । हे इन्द्रासोमौ! दुष्कर्मणे मा सुगम् भवतु । सुगम् इति सुखनाम । यः नः कदा चित् अपि अभिहिनस्ति द्रोहेण ॥ ७ ॥

यो मा पाकेन मनसा चरन्तमभिचष्टे अनृतेभिर्वचोभिः ।
आप इव काशिना संगृभीता असन्नस्त्वासत इन्द्र वक्ता ॥ ८ ॥

यः । मा । पाकेन । मनसा । चरन्तम् । अभिऽचष्टे । अनृतेभिः । वचःऽभिः ।
आपःऽइव । काशिना । सम्ऽगृभीताः । असन् । अस्तु । असतः । इन्द्र । वक्ता ॥ ८ ॥

---

१-१. नास्ति वि[1] अ[1]. † परिशाने मूको. ‡ तु. ऋ ७,१,७ भाष्यम्. २-२. नास्ति मूको.
३. इन्द्रासोमा अ[1]. ४. बलै अ[1]; अन्यत्र बलौ; सबलौ वा ल प्रस्तावः. ५. °जमाना° मूको.
६-६. प्रत्यस्माम वि[2] अ[1]; अस्मात् प्र° ल लभ. ७. दोग्धृन् वि[2] अ[1] ल; द्राद्धृन् लभ.

**वेङ्कट०** यः मां पक्वेन त्यक्तानृतेन मनसा चरन्तम् ऋजुभिः वदति अनृतैः वचोभिः, उदकानीव[1] आकाशवता पात्रेण सङ्गृहीतानि, यद्वा काशिर्मुष्टिः, असन्[2] भवतु असत्यस्य इन्द्र! वक्ता। 'यो मा[3] मोघं यातुधानेत्याह' ( ऋ ७,१०४,१५ ) इति वक्ष्यति ॥ ८ ॥

ये पा॑कश॒ंसं वि॒हर॑न्त ए॒वैर्ये वा॑ भ॒द्रं दू॒षय॑न्ति स्व॒धाभि॑ः ।
अह॑ये वा॒ तान् प्र॒दद॑ातु॒ सोम॒ आ वा॑ दधातु॒ निर्ऋ॑तेरु॒पस्थे॑ ॥ ९ ॥

ये । पा॒क॒ऽश॒ंसम् । वि॒ऽहर॑न्ते । ए॒वैः॑ । ये । वा॒ । भ॒द्रम् । दू॒षय॑न्ति । स्व॒धाभि॑ः ।
अह॑ये । वा॒ । तान् । प्र॒ऽदद॑ातु । सोम॑ः । आ । वा॒ । द॒धा॒तु॒ । निः॒ऽऋ॑तेः । उ॒प॒ऽस्थे॑ ॥ ९ ॥

**वेङ्कट०** ये पक्वानां वचसां शंसितारम् विविधं हरन्ति गमनैः, ये वा भद्रम् माम् दूषयन्ति बलैः, तान् सर्पाय वा परिददातु सोमः, आ दधातु वा निर्ऋतेः उपस्थे ॥ ९ ॥

यो नो॒ रस॒ं दिप्स॑ति पि॒त्वो अ॑ग्ने॒ यो अश्वा॑नां॒ यो गवा॒ं यस्त॒नूना॑म् ।
रि॒पुः स्ते॒नः स्ते॑य॒कृद् द॒भ्रमे॑तु॒ नि ष ही॑यतां त॒न्वा॒३ तना॑ च ॥ १० ॥

यः । न॒ः । रस॑म् । दिप्स॑ति । पि॒त्वः । अग्ने॑ । यः । अश्वा॑नाम् । यः । गवा॑म् । यः । त॒नूना॑म् ।
रि॒पुः । स्ते॒नः । स्ते॒य॒ऽकृत् । द॒भ्रम् । ए॒तु॒ । नि । सः । ही॒य॒ता॒म् । त॒न्वा॑ । तना॑ । च॒ ॥१०॥

**वेङ्कट०** यः अस्माकम् अन्नस्य रसम् विनाशयति अग्ने!, यः चाश्वादीनाम् रिपुः स्तेनः स्तेयस्य कर्ता भवति, सः दभ्रम् एतु दभ्रत्वं प्राप्नोतु[4] अल्पो भवतु। नि हीयताम् च सः आत्मना पुत्रेण च, यद्वा पुत्रेण धनेन चेति ॥ १० ॥

[5]इति पञ्चमाष्टके सप्तमाध्याये षष्ठो वर्गः[5] ॥

प॒रः सो अ॑स्तु त॒न्वा॒३ तना॑ च ति॒स्रः पृ॑थि॒वीर॒धो अ॑स्तु॒ विश्वा॑ः ।
प्रति॑ शुष्यतु॒ यशो॑ अस्य दे॒वा यो नो॒ दिवा॒ दिप्स॑ति॒ यश्च॒ नक्त॑म् ॥ ११ ॥

प॒रः । सः । अ॒स्तु॒ । त॒न्वा॑ । तना॑ । च॒ । ति॒स्रः । पृ॒थि॒वीः । अ॒धः । अ॒स्तु॒ । विश्वा॑ः ।
प्रति॑ । शु॒ष्य॒तु॒ । यश॑ः । अ॒स्य॒ । दे॒वाः॒ । यः । न॒ः । दिवा॑ । दिप्स॑ति । यः । च॒ । नक्त॑म् ॥११॥

**वेङ्कट०** परस्ताद् भवतु सः आत्मना पुत्रेण च। तथा तिस्रः च पृथिवीः सर्वाः अधस्तात् अस्तु। प्रति शुष्यतु च अस्य यशः कीर्तिः अन्नं वा हे देवाः!। यः नः इति स्पष्टम् ॥ ११ ॥

सु॒वि॒ज्ञा॒नं चि॑कि॒तुषे॒ जना॑य॒ सच्चास॑च्च॒ वच॑सी पस्पृधाते ।
तयो॒र्यत् स॒त्यं य॑त॒रदृजी॑य॒स्तदित् सोमो॑ऽवति॒ हन्त्यास॑त् ॥ १२ ॥

---

१. ककानीक ल लभ; उतानीक वि[२] अ[१]. २. असत् वि[२] अ[१]. ३. नास्ति मूको. ४. प्राप्नोति अ[१] लभ. ५-५. नास्ति मूको.

सुऽविज्ञानम् । चिकितुषे । जनाय । सत् । च । असत् । च । वचसी इति । पस्पृधाते इति ।
तयोः । यत् । सत्यम् । यतरत् । ऋजीयः । तत् । इत् । सोमः । अवति । हन्ति । असत् ॥१२॥

**वेङ्कट०** सुविज्ञानम् चिकितुषे जनाय इति विद्वांसम् आत्मानम् आह । तस्मै मह्यं सत्यम् असत्यम् च वचसी स्पर्धमाने भवतः । केचिन्मां यातुधान इति वदन्ति न तथेत्यपरे । ते वचने मिथः स्पर्धयेते[1] किमिदम् सत्यम् उतेदमिति । तयोः वचसोः यत् सत्यम् [2]यतरत् च ऋजुतरम् अनृतवर्जितम्[2] तत् एव सोमः रक्षति, तथा स्थापयति । हन्ति असत्यमिति ॥ १२ ॥

न वा उ सोमो वृजिनं हिनोति न क्षत्रियं मिथुया धारयन्तम् ।
हन्ति रक्षो हन्त्यासद् वदन्तमुभाविन्द्रस्य प्रसितौ शयाते ॥ १३ ॥

न । वै । ऊँ इति । सोमः । वृजिनम् । हिनोति । न । क्षत्रियम् । मिथुया । धारयन्तम् ।
हन्ति । रक्षः । हन्ति । असत् । वदन्तम् । उभौ । इन्द्रस्य । प्रऽसितौ । शयाते इति ॥ १३ ॥

**वेङ्कट०** न एव सोमः पापकारिणं विसृजति न अपि क्षत्रियम् असत्यम् धारयन्तम् । किं तर्हि करोति । हन्ति रक्षः, हन्ति च असत्यम् वदन्तम्[3] । उभौ इन्द्रस्य जालेन परिगृहीतौ तदन्तः शयाते ॥ १३ ॥

यदि वाहमनृतदेव आस मोघं वा देवाँ अप्यूहे अग्ने ।
किमस्मभ्यं जातवेदो हृणीषे द्रोघवाचस्ते निर्ऋथं सचन्ताम् ॥ १४ ॥

यदि । वा । अहम् । अनृतऽदेवः । आस । मोघम् । वा । देवान् । अपिऽऊहे । अग्ने ।
किम् । अस्मभ्यम् । जातऽवेदः । हृणीषे । द्रोघऽवाचः । ते । निःऽऋथम् । सचन्ताम् ॥१४॥

**वेङ्कट०** यदि वा अहम् अनृतदेवः भवामि । असत्येन यः क्रीडति सोऽनृतदेवः । मोघम् वा देवान् अपिनयामि[4] अग्ने ! असत्यं[5] निवेदयामि देवेभ्यः, तत् त्वं जानासीति वाक्यशेषः । नाहं तथाविधः । तथा सति किम् अस्मभ्यम् जातवेदः ![6] क्रुध्यसि । द्रोघवाचः राक्षसाः तव निर्ऋथम् सेवन्ताम् । यां त्वं निर्ऋतिम् उत्पादयसि[7] तां प्राप्नुवन्तीति ॥ १४ ॥

अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।
अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ॥ १५ ॥[8]

अद्य । मुरीय । यदि । यातुऽधानः । अस्मि । यदि । वा । आयुः । ततप । पुरुषस्य ।
अध । सः । वीरैः । दशऽभिः । वि । यूयाः । यः । मा । मोघम् । यातुऽधान । इति । आह ॥

---

१. स्पर्धयेते मूको. २. °तरच्चानृतमयार्जित° वि[१] अ[१]; °तरच्चानृमेव अपार्जि° ल लभ. ३. वदन्तौ वि[१] अ[१]. ४. नयानि मूको. ५. सत्यं ल. ६. जातवेदसः वि[२] अ[१]; °वेदसं लभ. ७. अल्पायसि वि[१]; उत्पायसि अ[१] ल लभ. ८. तु. या ७,३.

**वेङ्कट०** अद्य एवाहं म्रियेय यदि अहम् यातुधानः अस्मि, यदि वा राक्षसो भूत्वा पुरुषस्य आयुः जीवितम् अहम् ततप। अथ सः च वीरैः पुत्रैः दशभिः पृथक्कृतो भवतु, यः मा अनृतमेव यातुधान! इति वदति ॥ १५ ॥

[1]इति पञ्चमाष्टके सप्तमाध्याये सप्तमो वर्गः[1] ॥

यो मायांतुं यातुंधानेत्याह॒ यो वा॑ र॒क्षाः शुचि॒रस्मीत्याह॑ ।
इन्द्र॒स्तं ह॑न्तु म॒हता व॒धेन॒ विश्व॑स्य ज॒न्तोर॑ध॒मस्प॑दीष्ट ॥ १६ ॥

यः । मा॒ । अया॑तुम् । यातु॑ऽधान । इति॑ । आह॑ । यः । वा॒ । र॒क्षाः । शुचि॑ः । अ॒स्मि॒ । इति॑ । आह॑ ।
इन्द्र॑ः । तम् । ह॒न्तु॒ । म॒हता । व॒धेन॑ । विश्व॑स्य । ज॒न्तोः । अ॒ध॒मः । प॒दी॒ष्ट॒ ॥ १६ ॥

**वेङ्कट०** [2]यः माम् अहिंसकम् यातुधान! इति वदति, यः वा स्वैरं राक्षसः शुचिः अहम् अस्मि इति वदति, इन्द्रः तम् हन्तु महता वधेन। सः विश्वस्य जन्तोः अधमः पततु †सर्वस्याधः भवतु† इति[2] ॥ १६ ॥

प्र या जिगा॑ति ख॒र्गले॑व॒ नक्त॒मप॑ द्रु॒हा त॒न्वं१॒॑ गूह॑माना ।
व॒व्राँ अ॑न॒न्ताँ अव॒ सा प॑दीष्ट॒ ग्रावा॑णो घ्नन्तु र॒क्षस॑ उप॒ब्दैः ॥ १७ ॥

प्र । या । जिगा॑ति । ख॒र्गला॑ऽइव । नक्त॑म् । अप॑ । द्रु॒हा । त॒न्व॑म् । गूह॑माना ।
व॒व्रान् । अ॒न॒न्तान् । अव॑ । सा । प॒दी॒ष्ट॒ । ग्रावा॑णः । घ्नन्तु॒ । र॒क्षस॑ः । उ॒प॒ब्दैः ॥ १७ ॥

**वेङ्कट०** [3]प्र गच्छति‡ या नक्तम्। खर्गलेत्युलूकीमाहुः। उलूकीव‡ नक्तम्[3] द्रोहार्थं मनुष्याणां शरीरम् अप[4] गूहमाना, सा अपर्यन्तान् कूपान् अव पदीष्ट कूपेष्ववर्वाक्[5] पतत्वगाधेषु। ग्रावाणः घ्नन्तु राक्षसान् शब्दैः ॥ १७ ॥

वि ति॑ष्ठध्वं मरुतो वि॒क्ष्वि१॒॑च्छत॑ गृभा॒यत॑ र॒क्षस॒ः सं पि॑नष्टन ।
वयो॒ ये भू॒त्वी प॒तय॑न्ति न॒क्तभि॒र्ये वा॒ रिपो॑ दधि॒रे दे॒वे अ॑ध्व॒रे ॥ १८ ॥

वि । ति॒ष्ठ॒ध्व॒म् । म॒रु॒तः॒ । वि॒क्षु । इ॒च्छत॑ । गृ॒भा॒यत॑ । र॒क्षस॑ः । सम् । पि॒न॒ष्ट॒न॒ ।
वय॑ः । ये । भू॒त्वी । प॒तय॑न्ति । न॒क्तऽभि॑ः । ये । वा॒ । रिप॑ः । द॒धि॒रे । दे॒वे । अ॒ध्व॒रे ॥ १८ ॥

**वेङ्कट०** विविधं गच्छत[6] हे मरुतः!। प्रजासु हविः इच्छत। तदनन्तरं रक्षांसि गृह्णीत। सम् च तानि चूर्णयत। पक्षिणः[7] भूत्वा ये रात्रिभिः पतयन्ति, ये वा पापानि[8] उत्पादयन्ति देवनशीले यज्ञे, तान् रक्षसः[9] इति ॥ १८ ॥

---

१-१. नास्ति मूको. २-२. नास्ति वि[2] अ[1]. †-† °स्याद् भवन्तु मूको. ३-३. नास्ति वि[2] अ[1]. ‡ यच्छ° ल लभ. ‡ °कीमिव मूको. ४. उप वि[2] अ[1]. ५. °ध्वल्प वि[2] अ[1]. ६. गच्छ अ[1] लभ, गच्छथ वि[2] ल. ७. परिक्षीणः मूको. ८. पापादि मूको. ९. राक्षसः स लभ.

प्र वर्तय दिवो अश्मानमिन्द्र सोमशितं मघवन्त्सं शिशाधि ।
प्राक्तादपाक्तादधरादुदक्तादभि जहि रक्षसः पर्वतेन ॥ १९ ॥

प्र । वर्तय । दिवः । अश्मानम् । इन्द्र । सोमऽशितम् । मघऽवन् । सम् । शिशाधि ।
प्राक्तात् । अपाक्तात् । अधरात् । उदक्तात् । अभि । जहि । रक्षसः । पर्वतेन ॥ १९ ॥

**वेङ्कट०** प्र वर्तय दिवः अश्मानम् इन्द्र! वज्रम् । इन्द्र! पीतेन सोमेन शितमात्मीयं[1] बलं निशितीकुरु[2] । वज्रेण प्राच्याः प्रतीच्याः अधरात् उत्तरतश्च[3] अभि जहि राक्षसान् ॥ १९ ॥

एत उ त्ये पतयन्ति श्वयातव इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम् ।
शिशीते शक्रः पिशुनेभ्यो वधं नूनं सृजदशनिं यातुमद्भ्यः ॥ २० ॥

एते । ऊँ इति । त्ये । पतयन्ति । श्वऽयातवः । इन्द्रम् । दिप्सन्ति । दिप्सवः । अदाभ्यम् ।
शिशीते । शक्रः । पिशुनेभ्यः । वधम् । नूनम् । सृजत् । अशनिम् । यातुमत्ऽभ्यः ॥ २० ॥

**वेङ्कट०** ते एते पतयन्ति[4] श्वयातवः, इन्द्रम् च[5] दिप्सन्ति दम्भितुमिच्छन्तः शत्रुभिरभिभवितुमशक्यम्[6] । अथ इन्द्रश्च तीक्ष्णीकरोति शक्रः राक्षसेभ्यः वज्रम् । स क्षिप्रं विसृजतु अशनिम् हिंसावद्भ्यः[7] ॥ २० ॥

[8]इति पञ्चमाष्टके सप्तमाध्याये अष्टमो वर्गः[8] ॥

इन्द्रो यातूनामभवत् पराशरो हविर्मथीनामभ्या३विवासताम् ।
अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः ॥ २१ ॥

इन्द्रः । यातूनाम् । अभवत् । पराऽशरः । हविःऽमथीनाम् । अभि । आऽविवासताम् ।
अभि । इत् । ऊँ इति । शक्रः । परशुः । यथा । वनम् । पात्राऽइव । भिन्दन् । सतः ।
एति । रक्षसः ॥ २१ ॥

**वेङ्कट०** 'इन्द्रोऽपि पराशर उच्यते । परा शातयिता यातूनाम्' इति यास्कः (६, ३०) । इन्द्रः यातूनाम् हविर्मथीनाम् आभिमुख्येन सञ्चरताम् अभिभवं करोति । अभि एव गच्छति शक्रः, परशुः यथा वनम् अभिगच्छति, पात्राणि इव भिन्दन् मृन्मयान्यपक्वानि, विद्यमानान्[9] प्रादुर्भूतान्[10] राक्षसान्[11] । पुंलिङ्गश्च रक्षश्शब्दो दृष्ट इति ॥ २१ ॥

---

१. शीत° मूको. २. निशीती° मूको. ३. उदक् च वि[२] ल लअ; उत्तरश्च अ[१]. ४. पङ्क्ति मूको. ५. नास्ति वि[२] अ[१]. ६. आभिभवितुं शत्रुभिः अशक्य° अ[१]; शत्रुनभिभ° वि[२]. ७. अहिंसा° वि[२] ल अहिंसापद्भ्य. अ[१] लअ. ८-८. नास्ति मूको. ९. °माना वि[२] अ[१]. १०. °ताद वि[२] अ[१]. ११. रक्षसाम् वि[२] अ[१].

उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।
सुपर्णयातुमुत गृध्रयातुं दृषदेव प्र मृण रक्ष इन्द्र ॥ २२ ॥

उलूकऽयातुम् । शुशुलूकऽयातुम् । जहि । श्वऽयातुम् । उत । कोकऽयातुम् ।
सुपर्णऽयातुम् । उत । गृध्रऽयातुम् । दृषदाऽइव । प्र । मृण । रक्षः । इन्द्र ॥ २२ ॥

वेङ्कट० उलूकादयो रात्रिञ्चराः प्राणिनो[1] हिंसकाः । येषां हिंसासाधनानि भवन्ति ते तथोक्ता इति। एतान् दृषदुपलाभ्यामिव बीजादिकं संचूर्णय इन्द्र ! इति ॥ २२ ॥

मा नो रक्षो अभि नड् यातुमावतामपोच्छतु मिथुना या किमीदिना ।
पृथिवी नः पार्थिवात् पात्वंहसोऽन्तरिक्षं दिव्यात् पात्वस्मान् ॥ २३ ॥

मा । नः । रक्षः । अभि । नट् । यातुऽमावताम् । अप । उच्छतु । मिथुना । या । किमीदिना ।
पृथिवी । नः । पार्थिवात् । पातु । अंहसः । अन्तरिक्षम् । दिव्यात् । पातु । अस्मान् ॥ २३ ॥

वेङ्कट० 'रक्षः रक्षितव्यमस्मात्' ( या ४,१८ ) इत्युक्तम् । मा अस्मान् अभि व्याप्नोतु हिंसावतां बलम् । पृथक् करोतु मिथुनानि किमिदं किमिदमित्याचरन्ति राक्षसानाम् । तानिन्द्रोऽपोहतु । पृथिवी नः इति स्पष्टम् ॥ २३ ॥

इन्द्र जहि पुमांसं यातुधानमुत स्त्रियं मायया शाशदानाम् ।
विग्रीवासो मूरदेवा ऋदन्तु मा ते दृशन्त्सूर्यमुच्चरन्तम् ॥ २४ ॥

इन्द्र । जहि । पुमांसम् । यातुऽधानम् । उत । स्त्रियम् । मायया । शाशदानाम् ।
विऽग्रीवासः । मूरऽदेवाः । ऋदन्तु । मा । ते । दृशन् । सूर्यम् । उत्ऽचरन्तम् ॥ २४ ॥

वेङ्कट० इन्द्र ! जहि पुमांसम् यातुधानम् अपि च स्त्रियम् तेन सहाऽऽगच्छन्तीम् मायया प्रजाः पीडयन्तीम् । विगतग्रीवाः[2] मूरदेवाः मरणक्रीडा राक्षसाः । ऋदतिः[3] गमनकर्मा नाशकर्मा[4] वा । गच्छन्तु नश्यन्तु वेति । मा ते द्राक्षुः सूर्यम् उद्यन्तम् ॥ २४ ॥

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।
रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥ २५ ॥

प्रति । चक्ष्व । वि । चक्ष्व । इन्द्रः । च । सोम । जागृतम् ।
रक्षःऽभ्यः । वधम् । अस्यतम् । अशनिम् । यातुमत्ऽभ्यः ॥ २५ ॥

---

१. °णिनां ल; °णिना लभ. २. विगतश्रीर्वा वि[2] अ[1]; °तश्रीवा ल लभ. ३. ऋषदितिः वि[2] अ[1]; ऋदितिः ल लभ. ४. नास्ति लभ.

**वेङ्कट०** प्रति पश्य वि पश्य इन्द्रः त्वं च सोम![1], युवाम्[2] जागरणं कुरुतम्[3]। रक्षोभ्यः हन्तारम् अस्यतम् अशनिम् हिंसावद्भ्यः इति ॥ २५ ॥

[4]इति पञ्चमाष्टके सप्तमाध्याये नवमो वर्गः[4] ॥

**इति ऋग्वेदे सभाष्ये सप्तमं मण्डलं समाप्तम् ॥**



१. मस्य वि[2] अ[1]. २. नास्ति वि[1] अ[1] ३. कुरुतः मूको. ४-४. नास्ति मूको.

अथ

# ऋग्वेदे सभाष्ये

## अष्टमं मण्डलम्

[ १ ]

[1]प्रथमाद्वितीययोः प्रगाथो घौरः काण्व ऋषिः, त्रिंश्यादित्रयस्त्रिंश्यन्तानां प्लायोगिरासङ्गः, अन्त्याया आङ्गिरसी शश्वती, शिष्टानाम् मेधातिथि-मेध्यातिथी काण्वौ। इन्द्रो देवता, अन्त्यानां पञ्चानाम् आसङ्गः। आद्यानां चतसृणां प्रगाथश्छन्दः (विषमे बृहत्यौ, समे सतोबृहत्यौ), अन्त्ये द्वे त्रिष्टुभौ, शिष्टा बृहत्यः[1]।

मा चि॒द॒न्यद्वि शं॑सत॒ सखा॑यो॒ मा रि॑षण्यत।
इन्द्र॒मित्स्तो॑ता॒ वृष॑णं॒ सचा॑ सु॒ते मुहु॑रु॒क्था च॑ शंसत ॥ १ ॥

मा। चि॒त्। अ॒न्यत्। वि। शं॒स॒त॒। सखा॑यः। मा। रि॒ष॒ण्य॒त॒।
इन्द्र॑म्। इत्। स्तो॒त॒। वृष॑णम्। सचा॑। सु॒ते। मुहुः॑। उ॒क्था। च॒। शं॒स॒त॒ ॥ १ ॥

**वेङ्कट०** शौनकः—'कण्वश्चैव प्रगाथश्च घोरपुत्रौ[2] बभूवतुः।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरः स्वपन्[3]।
कृत्वा कनीयान् कण्वस्य उत्सङ्गे नान्वबुध्यत[4] ॥
शप्तुकामस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥
स घौरो[5] वाऽथ काण्वो[6] वा वंशजैर्बहुभिः सह।
ददर्शान्यैश्च सहित ऋषिर्मण्डलमष्टमम्'[7] (बृदे ६,३५-३९) इति ॥

तत्राद्यं द्व्यृचं प्रगाथोऽपश्यत्। अवशिष्टस्य मेधातिथिर्मेध्यातिथिश्च द्रष्टारौ। 'स्तुहि स्तुहि'

---

१-१. नास्ति मूको. २. घोरपु° मूको. ३. क्षमात् मूको. ४. °बुध्यत् मूको. ५. घोरो मूको. ६. कण्वो मूको. ७. °ष्टकम् मूको.

इत्यादीनां चतसृणाम् आसङ्गो नाम प्रायोगिः । तस्य पत्नी[1] त्वन्त्यामृचमपश्यत् । 'प्राङ्मतस्याद-नुक्तगोत्रः काण्वो वेदितव्यः' ( तु. ऋअ ८,१,१ ) इति ।

मा चित् इन्द्रात् अन्यत् वि शंसत । हे सखायः! मा विनष्टा भवत । इन्द्रम् एव स्तुत वर्षितारम्[2] सङ्गताः सुते सोमे । मुहुः शस्त्राणि च तस्मै शंसत ॥ १ ॥

अवक्रक्षिणं वृषभं यथाजुरं गां न चर्षणीसहम् ।
विद्वेषणं संवननोभयंकरं मंहिष्ठमुभयाविनम् ॥ २ ॥

अवऽक्रक्षिणम् । वृषभम् । यथा । अजुरम् । गाम् । न । चर्षणिऽसहम् ।
विऽद्वेषणम् । सम्ऽवनना । उभयम्ऽकरम् । मंहिष्ठम् । उभयाविनम् ॥ २ ॥

वेङ्कट० अवकर्षणशीलम्[3] वृषभम् इव अजीर्णम् गाम् इव चर्षणीनां सोढारम् विद्वेषणम् संवननम्[4] उभयस्य कर्तारम् दातृतमम् हिंसानृशंसाभ्यां तद्वन्तम् । पूर्वत्र सम्बन्धः ॥ २ ॥

यच्चिद्धि त्वा जना इमे नाना हवन्त ऊतये ।
अस्माकं ब्रह्मेदमिन्द्र भूतु तेऽहा विश्वा च वर्धनम् ॥ ३ ॥

यत् । चित् । हि । त्वा । जनाः । इमे । नाना । हवन्ते । ऊतये ।
अस्माकम् । ब्रह्म । इदम् । इन्द्र । भूतु । ते । अहा । विश्वा । च । वर्धनम् ॥ ३ ॥

वेङ्कट० यत् चित् हि त्वा जनाः इमे नाना हवन्ते[5] रक्षणाय, तथापि अस्माकम् इदम्[6] स्तोत्रम् इन्द्र! भवतु ते अहानि च सर्वाणि सौमिकानि वर्धमानानीति ॥ ३ ॥

वि तर्तूर्यन्ते मघवन् विपश्चितोऽर्यो विपो जनानाम् ।
उप क्रमस्व पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥ ४ ॥

वि । तर्तूर्यन्ते । मघऽवन् । विपःऽचितः । अर्यः । विपः । जनानाम् ।
उप । क्रमस्व । पुरुऽरूपम् । आ । भर । वाजम् । नेदिष्ठम् । ऊतये ॥ ४ ॥

वेङ्कट० उपद्रवेभ्यः वि तर्तूर्यन्ते विशेषेण तार्यन्ते[7] मघवन्! त्वया विपश्चितः अभिगन्तारः मेधाविनः जनानाम् मध्ये । तथा सति उप गच्छ, पुरुरूपम् च आ हर अन्नम् तवासन्नतमम् अस्माकं रक्षणाय ॥ ४ ॥

महे चन त्वामद्रिवः परा शुल्काय देयाम् ।
न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥ ५ ॥

---

१. नास्ति मूको. २. °तारः मूको. ३. युवक° मूको. ४. °ननम् इति मूको. ५. वहन्ते मूको. ६. इन्द्रं मूको. ७. नार्यन्ते मूको.

महे । चन । त्वाम् । अद्रिऽवः । परा । शुल्काय । देयाम् ।
न । सहस्राय । न । अयुताय । वज्रिऽवः । न । शताय । शतऽमघ ॥ ५ ॥

**वेङ्कट०** महते खलु वज्रिन्! त्वाम् मूल्याय परा दद्याम् क्रीणानाय [1]विक्रीणानः, न तु[1] सहस्राय [2]दद्याम्, न अपि अयुताय वज्रवन्!, न अपि[2] शताय बहुधन! ॥ ५ ॥

[3]इति पञ्चमाष्टके सप्तमाध्याये दशमो वर्गः[3] ॥

वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः ।
माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥ ६ ॥

वस्यान् । इन्द्र । असि । मे । पितुः । उत । भ्रातुः । अभुञ्जतः ।
माता । च । मे । छदयथः । समा । वसो इति । वसुऽत्वनाय । राधसे ॥ ६ ॥

**वेङ्कट०** वस्यान् ननु इन्द्र! असि मम पितुः अपि च भ्रातुः अपालयतः । नहि तौ रक्षतः, यथा त्वं रक्षसीति । मम माता त्वम् च ममोपच्छन्दनं कुरुथः समानौ[4] हे वासयितः! वसुमत्त्वार्थम् अन्नार्थं च । उभयं प्रयच्छथ इत्यर्थः ॥ ६ ॥

क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।
अलर्षि युध्म खजकृत् पुरंदर प्र गायत्रा अगासिषुः ॥ ७ ॥

क्व । इयथ । क्व । इत् । असि । पुरुऽत्रा । चित् । हि । ते । मनः ।
अलर्षि । युध्म । खजऽकृत् । पुरम्ऽदर । प्र । गायत्राः । अगासिषुः ॥ ७ ॥

**वेङ्कट०** क्व गतवानसि । क्व सम्प्रति भवसि । बहुषु हि स्थानेषु ते मनः भवति । परितो गच्छसि । अर्तेः चर्करीतम्[5] । हे युद्धकुशल! सङ्ग्रामस्य कर्तः! पुराणां दारयितः! । प्र अगासिषुः त्वां[6] गायत्रिण उद्गातारः ॥ ७ ॥

प्रास्मै गायत्रमर्चत वावातुर्यः पुरंदरः ।
याभिः काण्वस्योप बर्हिरासदं यासद् वज्री भिनत् पुरः ॥ ८ ॥

प्र । अस्मै । गायत्रम् । अर्चत । ववातुः । यः । पुरम्ऽदरः ।
याभिः । काण्वस्य । उप । बर्हिः । आऽसदम् । यासत् । वज्री । भिनत् । पुरः ॥ ८ ॥

**वेङ्कट०** प्र उच्चारयत इन्द्राय गायत्रम् साम, गमनशीलः यः पुरां [7]दारयिता । याभिः[7] काण्वस्य मेधातिथेः बर्हिः उप याति[8] तदासनार्थम्, वज्री भिनत्ति च पुरीः, [9]तास्वृक्षु गायत्रमिति[9] ॥ ८ ॥

---

१-१. °णानोऽस्तु मूको.　२-२. मद्यान्नाऽभ्युयुतावजूपन्ना मूको.　३-३. नास्ति मूको.　४. समानो मूको.
५. चरितम् मूको.　६. त्वम् अ[1].　७-७. °यितरभि वि[2]; °यिताराभि अ[1].　८. °यात मूको.
९-९. ताः स्रष्टुर्गात्रमि° त्रि[2]; ताः स्रष्टुगात्रमि अ[1].

ये ते सन्ति दशग्विनः शतिनो ये सहस्रिणः ।
अश्वासो ये ते वृषणो रघुद्रुवस्तेभिर्नस्तूयमा गहि ॥ ९ ॥

ये । ते । सन्ति । दशऽग्विनः । शतिनः । ये । सहस्रिणः ।
अश्वासः । ये । ते । वृषणः । रघुऽद्रुवः । तेभिः । नः । तूयम् । आ । गहि ॥ ९ ॥

**वेङ्कट०** ये ते भवन्ति दशादिसङ्ख्यायुक्ताः, बहव इत्यर्थः, अश्वाः, ये ते वृषणः क्षिप्रगामिनः, तैः अस्मान् क्षिप्रम् आ गच्छ ॥ ९ ॥

आ त्व१द्य सबर्दुघां हुवे गायत्रवेपसम् ।
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरंकृतम् ॥ १० ॥

आ । तु । अद्य । सबःऽदुघाम् । हुवे । गायत्रऽवेपसम् ।
इन्द्रम् । धेनुम् । सुऽदुघाम् । अन्याम् । इषम् । उरुऽधाराम् । अरम्ऽकृतम् ॥ १० ॥

**वेङ्कट०** आ ह्वयामि क्षिप्रम् अद्य अमृतस्य दोग्ध्रीम्, गायत्रं साम यस्या धेनोर्वेगमुत्पादयति[1] । इन्द्रम् धेनुम् सुदुघाम् अन्याम् इषम् । यथा [2]प्रत्यक्षमन्नमेवमिन्द्रश्चान्यदन्नं[2] भवति, तस्याव्यभिचारेण[3] दानात्, महाधारां पर्याप्तकारिणीम्[4] ॥ १० ॥

[5]इति पञ्चमाष्टके सप्तमाध्याये एकादशो वर्गः[5] ॥

यत् तुदत् सूर एतशं वङ्कू वातस्य पर्णिना ।
वहत् कुत्समार्जुनेयं शतक्रतुः त्सरद् गन्धर्वमस्तृतम् ॥ ११ ॥

यत् । तुदत् । सूरः । एतशम् । वङ्कू इति । वातस्य । पर्णिना ।
वहत् । कुत्सम् । आर्जुनेयम् । शतऽक्रतुः । त्सरत् । गन्धर्वम् । अस्तृतम् ॥ ११ ॥

**वेङ्कट०** यदा तुदत् सूर्यो देवः एतशम्[6] ऋषिम्, तदानीम् वङ्कू [7]वङ्कूतरौ चाश्वौ[7] वातस्य सदृशेन पतनेन तद्वन्तौ कुत्सम् अर्जुन्याः पुत्रं प्रति अवहत्[8] शतक्रतुः । अथ कुत्सेन सहाभ्यगच्छत् आदित्यम् अन्यैरहिंसितम् एतशं तस्माद्रक्षितुम् ( तु. ऋ १, ६१, १५ ) ॥ ११ ॥

य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
संधाता संधिं मघवा पुरूवसुरिष्कर्ता विहृतं पुनः ॥ १२ ॥

यः । ऋते । चित् । अभिऽश्रिषः । पुरा । जत्रुऽभ्यः । आऽतृदः ।
सम्ऽधाता । सम्ऽधिम् । मघऽवा । पुरुऽवसुः । इष्कर्ता । विऽह्रुतम् । पुनरिति ॥ १२ ॥

---

१. °यन्ति मूको. २. °क्षमन्नमिन्द्रश्चैवान्य° अ'. ३. स्यादभिचा° अ'. ४. पर्याप्ति° अ. ५-५. नास्ति मूको. ६. एतम् मूको. ७-७. °तरं चाश्वो मूको. ८. प्रत्यवगत् मूको.

**वेङ्कट०** यः विनापि अभिश्लेषेण श्लेष्मणा। येन विच्छिन्नः पुनः सन्धीयते तच्छ्लेष्म, तेन विनापि पुरा एव जत्रूणां[1] मर्दनात्[2]। जत्रवो[3] ग्रीवाः। विच्छिन्नस्य[4] शिरसो यावदातृण्णात्[5] लोहितं निरस्यति ततः प्रागेव सन्धातुं शक्तः सन्धेयं शिरः मघवा बहुधनः तथा विह्रुतम् शिथिलीकृतमपि पुनः संस्कर्तेति ॥ १२ ॥

मा भूम निष्ट्याइवेन्द्र त्वदरणा इव।
वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि ॥ १३ ॥

मा। भूम। निष्ट्याःऽइव। इन्द्र। त्वत्। अरणाःऽइव।
वनानि। न। प्रऽजहितानि। अद्रिऽवः। दुरोषासः। अमन्महि ॥ १३ ॥

**वेङ्कट०** मा वयम् भूम नीचाः [6]इव इन्द्र!, मा च भूम अरमणाः इव[6] स्तोतारः, [7]मा च[7] वनानि इव इतरेतरविश्लिष्टानि[8] दवाग्निना। वज्रिन्! शत्रुभिर्दग्धुमशक्याः त्वां स्तुमः ॥ १३ ॥

अमन्महीदनाशवोऽनुग्रासश्च वृत्रहन्।
सकृत् सु ते महता शूर राधसानु स्तोमं मुदीमहि ॥ १४ ॥

अमन्महि। इत्। अनाशवः। अनुग्रासः। च। वृत्रऽहन्।
सकृत्। सु। ते। महता। शूर। राधसा। अनु। स्तोमम्। मुदीमहि ॥ १४ ॥

**वेङ्कट०** स्तुमः त्वाम् आशुत्वोद्गूर्णत्ववर्जिताः[9] शनैश्शनैः हे वृत्रहन्! । सकृत् सहैव सुष्ठु तुभ्यम् महता हविषा सह शूर! स्तोमम् च अनु ब्रूमः, प्रयच्छन्तो हविः स्तुमः [10]इति। मदिरित्यनुमुदितवचनकर्मेति[10] ॥ १४ ॥

यदि स्तोमं मम श्रवदस्माकमिन्द्रमिन्दवः।
तिरः पवित्रं ससृवांस आशवो मन्दन्तु तुग्र्यावृधः ॥ १५ ॥

यदि। स्तोमम्। मम। श्रवत्। अस्माकम्। इन्द्रम्। इन्दवः।
तिरः। पवित्रम्। ससृऽवांसः। आशवः। मन्दन्तु। तुग्र्यऽवृधः[11] ॥ १५ ॥

**वेङ्कट०** यदि स्तोमम् मदीयं शृणुयात्, अथ इन्द्रम् अस्माकम् सोमाश्च मन्दन्तु इति। स्तुतिं चेच्छृणोति पिबति सोममित्यर्थः। तिरः पवित्रम् ससृवांसः पूताः क्षिप्रं प्राप्नुवन्तः वसतीवरीभिरतिवृद्धाः[12]। 'तुग्र्या'[13] ( निघ १,१२ ) इति जलनामेति ॥ १५ ॥

[14]इति पञ्चमाष्टके सप्तमाध्याये द्वादशो वर्गः[14] ॥

---

१. जत्रुणा वि[2]. २. °मर्ददनात् अ[1]; मर्दनान् वि[2]. ३. शत्रवो मूको. ४. पिच्छिन्नस्य अ[1]. ५. °तृणात् मूको. ६-६. इममाचार्यमरणा मूको. ७-७. किन्तु मूको. ८.° तराविश्लि° ल. ९. °द्गूर्णत्वाव° मूको. १०-१०. इत्यनुमु° मूको. ११. तु. वैप १,१४८५a. १२. °तीवरीरिति वि[2]; °तीवरीति अ[1]. १३. तुग्र्या मूको. १४-१४. नास्ति मूको.

आ त्व१द्य सधस्तुतिं वावातुः सख्युरा गहि ।
उपस्तुतिर्मघोनां प्र त्वावत्वधा ते वश्मि सुष्टुतिम् ॥ १६ ॥

आ । तु । अद्य । सधऽस्तुतिम् । ववातुः । सख्युः । आ । गहि ।
उपऽस्तुतिः । मघोनाम् । प्र । त्वा । अवतु । अध । ते । वश्मि । सुऽस्तुतिम् ॥ १६ ॥

वेङ्कट० आ गच्छ क्षिप्रम् अद्य यत्र सह स्तुवन्ति यज्ञे प्रियतमस्य[1] सख्युः । उपस्तुतिः हविष्मताम् प्र गच्छतु[2] त्वाम् । अथाहं च कामये तव सुस्तोत्रम् ॥ १६ ॥

सोता हि सोममद्रिभिरेमेनमप्सु धावत ।
गव्या वस्त्रेव वासयन्त इन्नरो निर्धुक्षन् वक्षणाभ्यः ॥ १७ ॥

सोत । हि । सोमम् । अद्रिऽभिः । आ । ईम् । एनम् । अप्ऽसु । धावत ।
गव्या । वस्त्राऽइव । वासयन्तः । इत् । नरः । निः । धुक्षन् । वक्षणाभ्यः ॥ १७ ॥

वेङ्कट० अभिषुणुत[3] सोमम् ग्रावभिः आ धावत एनम् अप्सु इति वसतीवरीभिः संसर्गमाह । तथा[4] कुर्वन्तः सोत । गव्यानि च सोममिश्रणानि सोमस्योपरि[5] वस्त्राणीव वासयन्तः मनुष्याः निः धुक्षयन्ति सोमान् अद्भ्यः ( तु. निघ १,१३ )। तथा यूयं च कुरुतेति ॥ १७ ॥

अध ज्मो अध वा दिवो बृहतो रोचनादधि ।
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥ १८ ॥

अध । ज्मः । अध । वा । दिवः । बृहतः । रोचनात् । अधि ।
अया । वर्धस्व । तन्वा । गिरा । मम । आ । जाता । सुक्रतो इति सुऽक्रतो । पृण ॥ १८ ॥

वेङ्कट० पृथिव्याः अन्तरिक्षात् बृहतः रोचनात् दिवः वा [6]आगत्य अनया[6] तायमानया मम स्तुत्या वर्धस्व, आ पूरय च हे सुक्रतो! जातानि भूतानि कामैः ॥ १८ ॥

इन्द्राय सु मदिन्तमं सोमं सोता वरेण्यम् ।
शक्र एणं पीपयद् विश्वया धिया हिन्वानं न वाजयुम् ॥ १९ ॥

इन्द्राय । सु । मदिन्ऽतमम् । सोमम् । सोत । वरेण्यम् ।
शक्रः । एनम् । पीपयत् । विश्वया । धिया । हिन्वानम् । न । वाजऽयुम् ॥ १९ ॥

वेङ्कट० इन्द्राय सुष्ठु मदयितारम् सोमम् सोत[7] वरणीयम्[8] । शक्रः एनम् वर्धयतु अभिषोतारं सर्वया प्रज्ञया यजमानं प्रीणयितारम् इदानीम् अन्नमिच्छमानम् ॥ १९ ॥

---

१. °यमस्य अ[1]. २. यच्छतु मूको. ३. अभिषुत मूको. ४. अथा मूको. ५. सोमस्यापरि मूको. ६-६. °गत्याय वि[2]. ७. सोता वि[2]; सोतार अ[1]. ८. वरेण्यम् वि[2].

मा त्वा सोम॑स्य॒ गल्द॑या॒ सदा॒ याच॑न्न॒हं गि॒रा ।
भूर्णिं॑ मृ॒गं न सव॑नेषु चुक्रु॒धं क ईशा॑नं॒ न या॑चिषत् ॥ २० ॥[1]

मा । त्वा॒ । सोम॑स्य । गल्द॑या । सदा॑ । याच॑न् । अ॒हम् । गि॒रा ।
भूर्णि॑म् । मृ॒गम् । न । सव॑नेषु । चु॒क्रु॒ध॒म् । कः । ईशा॑नम् । न । या॒चि॒ष॒त् ॥ २० ॥

**वेङ्कट०** मा त्वा सोमस्य गल्दया, **सोममिन्द्रस्य च उदरे प्रवेशयति यदा, तदा** याचन् अहम् गिरा भरणशीलम् मृगम् **सिंहम् इव दण्डताडनादिना** सवनेषु चुकुधम् **नैव क्रोधयेयम्**[2]। कः हि ईशानम् **धनानाम्** न याचिषत् । 'आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम्'[3] (माश्रौ १, ७, २, १८) इति **मन्त्रः। तत्र गल्दा इन्दवो भवन्ति नाडीनां गालना- निवारणकर्तारः ॥ २० ॥**

[4]इति पञ्चमाष्टके सप्तमाध्याये त्रयोदशो वर्गः[4] ॥

मदे॑नेषि॒तं मद॑मु॒ग्रमु॒ग्रेण॒ शव॑सा ।
विश्वे॑षां तरु॒तारं॑ मद॒च्युतं॒ मदे॒ हि ष्मा॒ ददा॑ति नः ॥ २१ ॥

मदे॑न । इ॒षि॒तम् । मद॑म् । उ॒ग्रम् । उ॒ग्रेण॑ । शव॑सा ।
विश्वे॑षाम् । त॒रु॒तार॑म् । म॒द॒ऽच्यु॒त॑म् । मदे॑ । हि । स्म॒ । ददा॑ति । न॒ः ॥ २१ ॥

**वेङ्कट०** मदेन प्रेरितम् मदम् उद्गूर्णम् उद्गूर्णेन शवसा विश्वेषाम् **शत्रूणां तारकम् मदस्य**[5] **प्रच्यावकम् सोमस्य पीतस्य मदे प्रयच्छति अस्मभ्यम् इन्द्रः**[6]। **पीत्वा सोमं मदम् अस्माकम् उत्पादयतीत्यर्थः ॥ २१ ॥**

शेवा॑रे॒ वार्या॑ पु॒रु दे॒वो मर्ता॑य दा॒शुषे॑ ।
स सु॑न्व॒ते च॑ स्तुव॒ते च॑ रासते वि॒श्वगू॑र्तो अरि॒ष्टुतः॑ ॥ २२ ॥

शेवा॑रे । वार्या॑ । पु॒रु । दे॒वः । मर्ता॑य । दा॒शुषे॑ ।
सः । सु॒न्व॒ते । च॒ । स्तु॒व॒ते । च॒ । रा॒स॒ते । वि॒श्वऽगू॑र्तः । अ॒रि॒ऽस्तु॒तः ॥ २२ ॥

**वेङ्कट० सोमो**[7] **यज्ञः स्तोत्रं वा शेवारः, '**[8]**सुखं पर्याप्तं**[8]**' यस्मिन् भवतीति । सर्वैः स्तुतः** विश्वगूर्तः । **अरिभिरभिष्टुतः**[9]। शिष्टं **स्पष्टमिति ॥ २२ ॥**

एन्द्र॑ याहि॒ मत्स्व॑ चि॒त्रेण॑ देव॒ राध॑सा ।
सरो॒ न प्रा॑स्यु॒दरं॒ सपी॑तिभि॒रा सोमे॑भिरु॒रु स्फि॒रम् ॥ २३ ॥

---

१. यास्केन ( ६,२४ ) व्याख्याता. २. क्रोधते वयम् अ[1]. ३. धवनीनाम् अ[1]. ४-४. नास्ति मूको.
५. मदनस्य मूको. ६. इन्द्र मूको. ७. सोमे मूको. ८-८. सुखपर्याप्तं मूको. ९. अरिहिरभिष्टुत मूको.

आ । इन्द्र । याहि । मत्स्वं । चित्रेणं । देव । राधसा ।
सरः । न । प्रासि । उदरम् । सपीतिऽभिः । आ । सोमेभिः । उरु । स्फिरम् ॥ २३ ॥

**वेङ्कट०** आ याहि [1]इन्द्र! मत्स्व[1] च चित्रेण देव!, सोमान्नेन । सरः इव आ पूरय आत्मीयम् उदरम् समानपानैरन्यैः सह देवैः सोमेभिः[2] विस्तीर्णं वृद्धम् । [3]स्फिरम् स्फायतेर्वृद्धिकर्मणः[3] ॥ २३ ॥

आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ २४ ॥

आ । त्वा । सहस्रम् । आ । शतम् । युक्ताः । रथे । हिरण्यये ।
ब्रह्मऽयुजः । हरयः । इन्द्र । केशिनः । वहन्तु । सोमऽपीतये ॥ २४ ॥

**वेङ्कट०** मन्त्रैर्युक्ताः ब्रह्मयुजः[4] । शिष्टं स्पष्टम् ॥ २४ ॥

आ त्वा रथे हिरण्यये हरी मयूरशेप्या ।
शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये ॥ २५ ॥

आ । त्वा । रथे । हिरण्यये । हरी इति । मयूरऽशेप्या ।
शितिऽपृष्ठा । वहताम् । मध्वः । अन्धसः । विवक्षणस्य । पीतये ॥ २५ ॥

**वेङ्कट०** आ वहताम् त्वाम् रथे हिरण्मये अश्वौ मयूररोमाणौ । शेपतिर्निर्गमनकर्मा[5] । श्वेतपृष्ठौ मदकरस्य सोमस्य वहनशीलस्य पानाय ॥ २५ ॥

[6]इति पञ्चमाष्टके सप्तमाध्याये चतुर्दशो वर्गः[6] ॥

पिबा त्व१स्य गिर्वणः सुतस्य पूर्वपा इव ।
परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ॥ २६ ॥

पिब । तु । अस्य । गिर्वणः । सुतस्य । पूर्वपाःऽइव ।
परिऽकृतस्य । रसिनः । इयम् । आऽसुतिः । चारुः । मदाय । पत्यते ॥ २६ ॥

**वेङ्कट०** [7]पिब क्षिप्रम् अमुं[7] हे गीर्भिर्वननीय! सुतम् पूर्वपाः इव यथा तदादि प्रथमं[8] पिबति तद्वत् । संस्कृतस्य अङ्गिरेण रसवतः इयम् आसूयमाना प्रेर्यमाणा आहुतिः चारुः[9] मदाय हविर्धानात् गच्छति ॥ २६ ॥

य एको अस्ति दंसना महाँ उग्रो अभि व्रतैः ।
गमत् स शिप्री न स योषदा गमद्धवं न परि वर्जति ॥ २७ ॥

---

१-१. इन्द्रमस्य मूको. २. नास्ति मूको. ३-३. स्फीरस्फातेः वि[2]; स्फीरस्पातेः अ[1]. ४. तु. ऋ ८,२,२७; ब्रह्मविदः मूको. ५. शेवति° मूको. ६-६. नास्ति मूको. ७-७. °प्र मुमु मूको. ८. °मं श्रयतिति अ[1]. ९. चारुं मूको.

यः । एकः । अस्ति । दंसना । महान् । उग्रः । अभि । व्रतैः ।
गमत् । सः । शिप्री । न । सः । योषत् । आ । गमत् । हवम् । न । परि । वर्जति ॥ २७ ॥

**वेङ्कट०** यः एकः भवति कर्मणा । महान् 'उद्‌गूर्णः अभि'[1] भवति कर्मभिः । गच्छतु[2] सः शिप्रवान्[3], न तु सः पृथग्भवतु, किन्तु आ गच्छतु सह । इन्द्रो ह्वानम् न परि वर्जयति ॥ २७ ॥

त्वं पुरं चरिष्णवं वधैः शुष्णस्य सं पिणक् ।
त्वं भा अनु चरो अध द्विता यदिन्द्र हव्यो भुवः ॥ २८ ॥

त्वम् । पुरम् । चरिष्णवम् । वधैः । शुष्णस्य । सम् । पिणक् ।
त्वम् । भाः । अनु । चरः । अध । द्विता । यत् । इन्द्र । हव्यः । भुवः ॥ २८ ॥

**वेङ्कट०** त्वम् पुरम् चरणशीलं प्रहारैः शुष्णासुरस्य[4] सञ्चूर्णितवानसि । त्वम् भासमानः अनु अचरः । अनन्तरमेव द्वैधमन्तरिक्षमध्ये[5] मार्गे[6] पृथक्कुर्वन् यदा[7] इन्द्र! हव्यः भवसि यजमानैः ॥ २८ ॥[8]

मम त्वा सूर उदिते मम मध्यंदिने दिवः ।
मम प्रपित्वे अपिशर्वरे वसवा स्तोमासो अवृत्सत ॥ २९ ॥

मम । त्वा । सूरे । उत्ऽइते । मम । मध्यन्दिने । दिवः ।
मम । प्रऽपित्वे । अपिऽशर्वरे । वसो इति । आ । स्तोमासः । अवृत्सत ॥ २९ ॥

**वेङ्कट०** मम त्वाम् उदिते सूर्ये, मम मध्यन्दिने च अह्नः मम प्रपित्वे, प्रपित्वं प्राप्तिः, अपिशर्वरे शर्वर्याः अह्ना सङ्गमे अपिशर्वरे[9] रात्रिमुखे[10] सायं हे वासयितः! आ वर्तयन्तु स्तोमाः ॥ २९ ॥

स्तुहि स्तुहीदेते घा ते मंहिष्ठासो मघोनाम् ।
निन्दिताश्वः प्रपथी परमज्या मघस्य मेध्यातिथे ॥ ३० ॥

स्तुहि । स्तुहि । इत् । एते । घ । ते । मंहिष्ठासः । मघोनाम् ।
निन्दितऽअश्वः । प्रऽपथी । परमऽज्याः । मघस्य । मेध्यऽअतिथे ॥ ३० ॥

**वेङ्कट०** अत्र कात्यायनः—"प्रायोगिश्चासङ्गो यः स्त्री भूत्वा पुमानभूत्, स मेध्यातिथये दानं दत्त्वा 'स्तुहि स्तुहि' इति चतसृभिरात्मानं तुष्टाव । पत्नी चास्याङ्गिरसी शश्वती पुंस्त्वमुपलभ्यैनं प्रीताऽन्त्यया तुष्टाव" ( ऋअ २,८,१ ) इति । यथापुरं पुनः स्तुहि एव इन्द्रम् । एते खलु तुभ्यं

---

१-१. °र्णो हि मूको. २. गच्छति अ[1]. ३. °प्रपान् मूको. ४. शुष्मासु° मूको. ५. °रिक्षमार्गे अ[1]. ६. मार्गः मूको. ७. यथा मूको. ८. तु. ऋ १,१२१,१०; ५,५१,७. ९. अपिशर्नो मूको. १०. रात्रिमुखेन अ[1].

धनवतां मध्ये अत्यन्तं दरिद्रेभ्यो दातारः निन्दिताश्वः प्रपथी परमज्याः इति त्रयो [1]राजानो मघं[1] प्रयच्छन्ति, यथाहं प्रायच्छम्, हे मेध्यातिथे ! ॥ ३० ॥

[2]इति पञ्चमाष्टके सप्तमाध्याये पञ्चदशो वर्गः[2] ॥

आ यदश्वान् वनन्वतः श्रद्धयाहं रथे रुहम् ।
उत वामस्य वसुनश्चिकेतति यो अस्ति याद्वः पशुः ॥ ३१ ॥

आ । यत् । अश्वान् । वनन्ऽवतः । श्रद्धया । अहम् । रथे । रुहम् ।
उत । वामस्य । वसुनः । चिकेतति । यः । अस्ति । याद्वः । पशुः ॥ ३१ ॥

**वेङ्कट०** यदि अहम् अश्वान्[3] भजनवतः शत्रुभ्यो धनाहरणश्रद्धया [4]रथे आ रुहम् । आयोजयामि[4] सङ्ग्रामं जिगमिषुरित्यर्थः[5] । तदनन्तरमेव वामं धनं लब्धं बुध्यते । यः भवति मनुष्यो द्रष्टा, धनवीप्सया मां पश्यति । यदुषु भवः याद्वः । 'यदुः' ( निघ २,३ ) इति मनुष्यनामेति ॥ ३१॥

य ऋज्रा मह्यं मामहे सह त्वचा हिरण्यया ।
एष विश्वान्यभ्यस्तु सौभगासङ्गस्य स्वनद्रथः ॥ ३२ ॥

यः । ऋज्रा । मह्यम् । ममहे । सह । त्वचा । हिरण्यया ।
एषः । विश्वानि । अभि । अस्तु । सौभगा । आऽसङ्गस्य । स्वनत्ऽरथः ॥ ३२ ॥

**वेङ्कट०** यः ऋजूनि धनानि[6] मह्यम् प्रायच्छत्[7] सह त्वचा[8] हिरण्यया कक्ष्यया युक्तः । एषः शत्रूणाम् विश्वानि एव सौभगानि अभि भवतु आसङ्गस्य स्वनद्रथः अश्वः । यथा स्वनद्रथो नाम कश्चिद्राजा येन प्रत्तानि[9] धनान्यासङ्गो मेध्यातिथये प्रादादिति ॥ ३२ ॥

अध प्लायोगिरति दासदन्यानासङ्गो अग्ने दशभिः सहस्रैः ।
अधोक्षणो दश मह्यं रुशन्तो नळा इव सरसो निरतिष्ठन् ॥ ३३ ॥

अध । प्लायोगिः । अति । दासत् । अन्यान् । आऽसङ्गः । अग्ने । दशऽभिः । सहस्रैः ।
अध । उक्षणः । दश । मह्यम् । रुशन्तः । नळाःऽइव । सरसः । निः । अतिष्ठन् ॥ ३३ ॥

**वेङ्कट०** इदानीम् प्लायोगिः आसङ्गः अन्यान् राज्ञः अति अदात् अग्ने ! दशभिः सहस्रैः गवां मेध्यातिथये प्रत्तैः । सहस्राणि प्रायच्छदित्यर्थः[10] । अध उक्षणः दश मह्यम् श्वेतवर्णाः सरसः नळाः इव निः अतिष्ठन् मेध्यातिथये, मया प्रत्तं धनं वहन्तः यद्वा दानप्रीतेनेन्द्रेण मह्यं प्रत्ता इति ॥ ३३ ॥

---

१-१. °नोघं अ[1]; °नो रुहं वि[2]. २-२. नास्ति मूको. ३. अश्वा मूको. ४-४. रथधनमारुहमामेयाजयामि मूको. ५. जिगीषु° वि[2]. ६. °नानि यः अ[1]. ७. °च्छत् त्वत् वि[2]; °च्छत् तत् अ[1]. ८. त्वाच अ[1]; त्वाचा वि[2]. ९. प्रत्नानि मूको. १०. प्रयच्छन्नि° मूको.

अन्वस्य स्थूरं ददृशे पुरस्तादनस्थ ऊरुरवरम्बमाणः ।
शश्वती नार्यभिचक्ष्याह सुभद्रमर्य भोजनं बिभर्षि ॥ ३४ ॥

अनु । अस्य । स्थूरम् । ददृशे । पुरस्तात् । अनस्थः । ऊरुः । अवऽरम्बमाणः ।
शश्वती । नारी । अभिऽचक्ष्य । आह । सुऽभद्रम् । अर्य । भोजनम् । बिभर्षि ॥ ३४ ॥

**वेङ्कट०** अनु ददृशे अस्य स्थूलमुदरम् पुरस्तात् । स्त्रियो हि सन्नतमध्या भवन्ति पुमांसस्तु स्थूलमध्याः । अस्थिवर्जितः महान् अवलम्बमानः शिश्नश्चानुददृशे । शश्वती नारी तमिमम् अभिमृश्य वदति हे स्वामिन्! पते! मह्यम् सुभद्रम् भोजनम् भोगम् [1]अन्नपानादिकं वा भरेति[1] ॥ ३४ ॥

[2]इति पञ्चमाष्टके सप्तमाध्याये षोडशो वर्गः[2] ॥

[२]

[1]मेधातिथिः काण्व आङ्गिरसश्च प्रियमेध ऋषिः, एकचत्वारिंशीद्वाचत्वारिंश्योर्मेधातिथिः काण्वः । इन्द्रो देवता, एकचत्वारिंशीद्वाचत्वारिंश्योर्विभिन्दुः । गायत्री छन्दः, अष्टाविंश्यनुष्टुप्[2] ।

इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् । अनाभयिन् ररिमा ते ॥ १ ॥

इदम् । वसो इति । सुतम् । अन्धः । पिब । सुऽपूर्णम् । उदरम् । अनाभयिन् । ररिम । ते ॥ १ ॥

**वेङ्कट०** मेधातिथिः आङ्गिरसश्च प्रियमेधः । इदम् वासयितः! अभिषुतम् अन्धः, तत् पिब । सुपूर्णम् कुरु उदरम् । हे अनाभयिन्! आभयवर्जित! । मत्वर्थीया वृत्तिर्वाजिनीवतीत्यादिवत् । दद्मः तुभ्यम् ॥ १ ॥

नृभिर्धूतः सुतो अश्नैरव्यो वारैः परिपूतः । अश्वो न निक्तो नदीषु ॥ २ ॥

नृऽभिः । धूतः । सुतः । अश्नैः । अव्यः । वारैः । परिऽपूतः । अश्वः । न । निक्तः । नदीषु ॥ २ ॥

**वेङ्कट०** ऋत्विग्भिः प्रक्षालितः, अभिषुतश्च अश्मभिः, अवेर्बालैश्च परिपूतः अश्वः इव निर्णिक्तशरीरः[3] नदीषु ॥ २ ॥

तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः । इन्द्र त्वास्मिन्त्सधमादे ॥ ३ ॥

तम् । ते । यवम् । यथा । गोभिः । स्वादुम् । अकर्म । श्रीणन्तः । इन्द्र । त्वा । अस्मिन् । सधऽमादे ॥३॥

**वेङ्कट०** तम् तुभ्यं यवान्नमिव गोविकारैः स्वादुम्[4] अकर्म[5] श्रीणन्तः । इन्द्र! त्वाम् अस्मिन् यज्ञे तेन तर्पयामश्चेति[6] ॥ ३ ॥

इन्द्र इत् सोमपा एक इन्द्रः सुतपा विश्वायुः । अन्तर्देवान् मर्त्यांश्च ॥ ४ ॥

इन्द्रः । इत् । सोमऽपाः । एकः । इन्द्रः । सुतऽपाः । विश्वऽआयुः । अन्तः । देवान् । मर्त्यान् । च ॥४॥

---

१-१. °कं वहरतेति मूको.　२-२. नास्ति मूको.　३. निर्विक्त° मूको.　४. स्वादं मूको.
५. कर्म मूको.　६. °मश्चेत्यर्थः अ[१].

वेङ्कट० एकः एव इन्द्रः सोमपाः, इन्द्रः सुतपाः, सर्वस्याभिगन्ता, देवान् मनुष्यान् च अन्तः वर्तमानः ॥ ४ ॥

न यं शुक्रो न दुराशीर्न तृप्रा उरुव्यचसम् । अपस्पृण्वते सुहार्दम् ॥ ५ ॥

न । यम् । शुक्रः । न । दुःऽआशीः । न । तृप्राः । उरुऽव्यचसम् । अपऽस्पृण्वते । सुऽहार्दम् ॥ ५ ॥

वेङ्कट० न यम् अभिषुतमात्रः, न च दुराशीः अशोभनाशिरः, न च तृप्राः य उदरात् पीता निर्गच्छन्ति इति, उरुव्याप्तिम् अपस्पृशन्ति[1] शोभनहृदयम् ॥ ५ ॥

[2]इति पञ्चमाष्टके सप्तमाध्याये सप्तदशो वर्गः[2] ॥

गोभिर्यदीमन्ये अस्मन् मृगं न व्रा मृगयन्ते । अभित्सरन्ति धेनुभिः ॥ ६ ॥

गोभिः । यत् । ईम् । अन्ये । अस्मत् । मृगम् । न । व्राः । मृगयन्ते । अभिऽत्सरन्ति । धेनुऽभिः ॥ ६ ॥

वेङ्कट० गवां लाभाय यदि अस्मत्तः अन्ये एनम् मृगयन्ते मृगम् इव [3]व्राताः ( तु. या ५,३ ), यदि च[4] स्तुतिभिः एनम् अभित्सरन्ति[4] । स तान् अपहायास्मान्[5] एव अभिगच्छतु[6] इति ॥ ६ ॥

त्रय इन्द्रस्य सोमाः सुतासः सन्तु देवस्य । स्वे क्षये सुतपाव्नः ॥ ७ ॥

त्रयः । इन्द्रस्य । सोमाः । सुतासः । सन्तु । देवस्य । स्वे । क्षये । सुतऽपाव्नः ॥ ७ ॥

वेङ्कट० त्रिषु सवनेषु त्रयः सोमाः सुताः भवन्तु[7] देवस्य मदीये यज्ञे सुतं सोमं पिबतः[8] ॥ ७ ॥

त्रयः कोशासः श्चोतन्ति तिस्रश्चम्वः सुपूर्णाः । समाने अधि भार्मन् ॥ ८ ॥

त्रयः । कोशासः । श्चोतन्ति । तिस्रः । चम्वः । सुऽपूर्णाः । समाने । अधि । भार्मन् ॥ ८ ॥

वेङ्कट० द्रोणकलशः आधवनीयः पूतभृदिति त्रयः कोशाः श्चोतन्ति । तिस्रः चम्वः मरुत्वतीयाख्याः सुपूर्णाः एकस्मिन् भरणे । भरणं सवनं माध्यन्दिनमिति ॥ ८ ॥

शुचिरसि पुरुनिःष्ठाः क्षीरैर्मध्यत आशीर्तः । दध्ना मन्दिष्ठः शूरस्य ॥ ९ ॥

शुचिः । असि । पुरुनिःऽस्थाः । क्षीरैः । मध्यतः । आऽशीर्तः । दध्ना । मन्दिष्ठः । शूरस्य ॥ ९ ॥

वेङ्कट० पूतो भवसि बहुषु पात्रेषु निष्ठितः क्षीरैः मध्यतः मिश्रितः दध्ना च अत्यन्तं मदयिता इन्द्रस्य इति हविःस्तुतिः ॥ ९ ॥

इमे त इन्द्र सोमास्तीव्रा अस्मे सुतासः । शुक्रा आशिरं याचन्ते ॥ १० ॥

इमे । ते । इन्द्र । सोमाः । तीव्राः । अस्मे इति । सुतासः । शुक्राः । आऽशिरम् । याचन्ते ॥ १० ॥

---

१. उप° मूको. २-२. नास्ति मूको. ३. प्रातायधि वि°. ४. अभिसरन्ति मूको. ५. °यावमा° मूको. ६. °गच्छन्तु मूको. ७. °वन्तु सोमस्य अ°. ८. पिबत मूको.

वेङ्कट० निगदसिद्धा ॥ १० ॥

[1]इति पञ्चमाष्टके सप्तमाध्याये अष्टादशो वर्गः[1] ॥

ताँ आशिरँ पुरोळाशमिन्द्रेमं सोमँ श्रीणीहि । रेवन्तं हि त्वा शृणोमि ॥ ११ ॥

तान् । आऽशिरम् । पुरोळाशम् । इन्द्र । इमम् । सोमम् । श्रीणीहि । रेवन्तम् । हि । त्वा । शृणोमि ॥ ११ ॥

वेङ्कट० आशिरम् पुरोडाशम् इमम् सोमम् इति तान् एतान् इन्द्र! उदरे श्रीणीहि। धनवन्तम् हि त्वाम् अहम् शृणोमि ॥ ११ ॥

हृत्सु पीतासो युध्यन्ते दुर्मदासो न सुरायाम् । ऊधर्न नग्ना जरन्ते ॥ १२ ॥

हृत्ऽसु । पीतासः । युध्यन्ते । [2]दुःऽमदासः । न । सुरायाम् ।[2] ऊधः । न । नग्नाः । जरन्ते ॥ १२ ॥

वेङ्कट० हृत्सु[3] पीताः सोमा इतरेतरं [4]मिश्रिता भवन्ति, यथा सुरानिमित्तं सुरापा इतरेतरम्[4] युध्यन्ते। ऊधः[5] तवोदरे न शीर्णा भवन्ति नग्नाः आशिरवर्जिता[6] इति ॥ १२ ॥

रेवाँ इद् रेवतः स्तोता स्यात् त्वावतो मघोनः । प्रेदु हरिवः श्रुतस्य ॥ १३ ॥

रेवान् । इत् । रेवतः । स्तोता । स्यात् । त्वाऽवतः । मघोनः । प्र । इत् । ऊँ इति । हरिऽवः । श्रुतस्य ॥

वेङ्कट० धनवान् एव धनवतः स्तोता भवितुमर्हति[7]। त्वत्सदृशस्य मघवतो विश्रुतस्य भवतः स्तोता हरिवः! प्र एव भवति रेवान् गोमानिति ॥ १३ ॥

उक्थं चन शस्यमानमगोररिरा चिकेत । न गायत्रं गीयमानम् ॥ १४ ॥

उक्थम् । चन । शस्यमानम् । अगोः । अरिः । आ । चिकेत । न । गायत्रम् । गीयमानम् ॥ १४ ॥

वेङ्कट० उक्थम् अपि शस्यमानम् अगोः[8] अपशोः अभिगन्ता[9] जानाति। न केवलम् गायत्रम् एव शस्यमानम्। उभयं शृणोतीत्यर्थः ॥ १४ ॥

मा न इन्द्र पीयत्नवे मा शर्धते परा दाः । शिक्षा शचीवः शचीभिः ॥ १५ ॥

मा । नः । इन्द्र । पीयत्नवे । मा । शर्धते । परा । दाः । शिक्ष । शचीऽवः । शचीभिः ॥ १५ ॥

वेङ्कट० मा अस्मान् इन्द्र! हिंसित्रे, मा च वेगं कुर्वते परा दाः। प्रयच्छ धनं प्रज्ञावन्![10] प्रज्ञाभिः ॥ १५ ॥

[1]इति पञ्चमाष्टके सप्तमाध्याये एकोनविंशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २-२. तु. या ६,४. ३. नास्ति वि[1]. ४-४. नास्ति अ[1]. ५. उधः मूको. ६. आगिर° मूको. ७. °भवतु महीति मूको. ८. अगौः मूको. ९. अहिहन्ता अ[1]; अभिहन्ता वि[1]. १०. प्रज्ञावत् मूको.

वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः । कण्वा उक्थेभिर्जरन्ते ॥ १६ ॥

वयम् । ऊँ इति । त्वा । तदित्ऽअर्थाः । इन्द्र । त्वाऽयन्तः । सखायः । कण्वाः । उक्थेभिः । जरन्ते ॥ १६ ॥

वेङ्कट० वयम् उ त्वा तत्प्रयोजनाः स्तुतिपराः इन्द्र! त्वत्कामाः सखायः । अथ परोक्षः—कण्वाः शस्त्रैः स्तुवन्तीति ॥ १६ ॥

न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ । तवेदु स्तोमं चिकेत ॥ १७ ॥

न । घ । ईम् । अन्यत् । आ । पपन । वज्रिन् । अपसः । नविष्टौ । तव । इत् । ऊँ इति । स्तोमम् । चिकेत ॥ १७

वेङ्कट० न खलु अहम् अन्यत् आ पपन आभिमुख्येन स्तौमि वज्रिन्! अपसः[1] उदकस्य अन्वेषणे[2] । तव[3] एव स्तोमम् अहम् चिकेत ॥ १७ ॥

इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति । यन्ति प्रमादमतन्द्राः ॥ १८ ॥

इच्छन्ति । देवाः । सुन्वन्तम् । न । स्वप्नाय । स्पृहयन्ति । यन्ति । प्रऽमादम् । अतन्द्राः ॥ १८ ॥

वेङ्कट० इच्छन्ति देवाः सुन्वन्तम्, न स्वप्नाय स्पृहयन्ति[4] । स्वप्नमपहाय सुन्वन्तम् अभिगच्छन्ति[5] प्रकर्षेण मदयितारम् अनलसाः[6] ॥ १८ ॥

ओ षु प्र याहि वाजेभिर्मा हृणीथा अभ्य१स्मान् । महाँइव युवजानिः ॥ १९ ॥

ओ इति । सु । प्र । याहि । वाजेभिः । मा । हृणीथाः । अभि । अस्मान् । महान्ऽइव । युवऽजानिः ॥ १९ ॥

वेङ्कट० आ प्र याहि अन्नैः, अस्मान् अभि मा क्रुधः[7], यथा वृद्धः युवजानिः जायां प्रति आगच्छति, न च क्रुध्यति ॥ १९ ॥

मो ष्व१द्य दुर्हणावान्त्सायं करदारे अस्मत् । अश्रीरइव जामाता ॥ २० ॥

मो इति । सु । अद्य । दुःऽहनावान् । सायम् । करत् । आरे । अस्मत् । अश्रीरःऽइव । जामाता ॥

वेङ्कट० मा अस्मान् अद्य समीपे करोतु हिंसावान् [8]राक्षसः सायम्[8] । स हि रक्षसां कालः । यथा विगुणः जामाता कञ्चन[9] समीपे करोति अनिच्छन्तम् ॥ २० ॥

[10]इति पञ्चमाष्टके सप्तमाध्याये विंशो वर्गः[10] ॥

विद्मा ह्यस्य वीरस्य भूरिदावरीं सुमतिम् । त्रिषु जातस्य मनांसि ॥ २१ ॥

विद्म । हि । अस्य । वीरस्य । भूरिऽदावरीम् । सुऽमतिम् । त्रिषु । जातस्य । मनांसि ॥ २१ ॥

---

१. व्याप्तस्य मूको. २. °न्वेषणाय अ[1]. ३. वै मूको. ४. °हयती मूको. ५. °च्छन्ती वि[2]. ६. °लसा मूको. ७. क्रुद्धे अ[1]. ८-८. राक्षसाय वि[2]; रक्षसाय अ[1]. ९. काञ्चन मूको. १०-१०. नास्ति मूको.

**वेङ्कट०** जानीमः हि अस्य वीरस्य बहुनो धनस्य दात्रीम् सुमतिम्[1]। त्रिषु स्थानेषु प्रादुर्भवतः मनांसि विद्म इति पूर्वार्धोक्तमेवोक्तमिति[2] ॥ २१ ॥

आ तू षिञ्च कण्वमन्तं न घा विद्म शवसानात् । यशस्तरं शतमूतेः ॥ २२ ॥

आ । तु । सिञ्च । कण्वऽमन्तम् । न । घ । विद्म । शवसानात् । यशःऽतरम् । शतम्ऽऊतेः ॥

**वेङ्कट०** आ सिञ्च क्षिप्रं स्तोतृभिः ऋत्विग्भिस्तद्वन्तम् । न खलु विद्म[3] वयं बलमाचरतः[4] बहुरक्षणाद् इन्द्राद् अन्यम् अत्यन्तम् यशस्विनम् ॥ २२ ॥

ज्येष्ठेन सोतरिन्द्राय सोमं वीराय शक्राय । भरा पिबन्नर्याय ॥ २३ ॥

ज्येष्ठेन । सोतरिति । इन्द्राय । सोमम् । वीराय । शक्राय । भर । पिबत् । नर्याय ॥ २३ ॥

**वेङ्कट०** श्रेष्ठेन पात्रेण हे [5]अभिषोतः नृहिताय[5] वीराय शक्राय इन्द्राय सोमम् । 'वीरः वीरयत्यमित्रान्' ( या १,७ )। शक्रः[6] शक्नोतेः । [7]भर । तं[7] पिबतु सोममिति ॥ २३ ॥

यो वेदिष्ठो अव्यथिष्वश्वावन्तं जरितृभ्यः । वाजं स्तोतृभ्यो गोमन्तम् ॥२४॥

यः । वेदिष्ठः । अव्यथिषु । अश्वऽवन्तम् । जरितृऽभ्यः । वाजम् । स्तोतृऽभ्यः । गोऽमन्तम् ॥२४॥

**वेङ्कट०** यः अत्यन्तं लम्भयिता व्यथारहितानां देवानां मध्ये अश्वावन्तम् स्तोतृभ्यः वाजम् अन्नम् स्तोतृभ्यः गोमन्तम् । स्तोतृभ्य इति पूरणः ॥ २४ ॥

पन्यंपन्यमित् सोतार आ धावत मद्याय । सोमं वीराय शूराय ॥ २५ ॥

पन्यम्ऽपन्यम् । इत् । सोतारः । आ । धावत । मद्याय । सोमम् । वीराय । शूराय ॥ २५ ॥

**वेङ्कट०** स्तोतव्यं स्तोतव्यम्[8] एव[9] हे सोतारः![10] । सोमम् आ धावत वसतीवरीषु [11]अभिषुतं मदार्हाय[11] वीराय शूराय । शूरः शृणातेः[12] ॥ २५ ॥

[13]इति पञ्चमाष्टके सप्तमाध्याये एकविंशो वर्गः[13] ॥

पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् । नि यमते शतमूतिः ॥ २६ ॥

पाता । वृत्रऽहा । सुतम् । आ । घ । गमत् । न । आरे । अस्मत् । नि । यमते । शतम्ऽऊतिः ॥२६॥

**वेङ्कट०** सुतस्य पानशीलः इन्द्रः आ गच्छतु । मा अस्माकम् दूरे भवतु । नि यच्छतु धनं शतरक्षणम् ॥ २६ ॥

---

१. सुदतीं मूको. २. °मित्यर्थः अ[1]. ३. विद्मो मूको. ४. आचरन्तः मूको. ५-५. येभिषातृणुहि° मूको. ६. शक्र मूको. ७-७. भरत मूको. ८. नास्ति अ[1]. ९. एति व मूको. १०. स्तोतारः मूको. ११-११. °षुतमदाहाय मूको. १२. शृणोते वि[2]; शृणुते अ[1]. १३-१३. नास्ति मूको.

एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् । गीर्भिः श्रुतं गिर्वणसम् ॥ २७ ॥

आ । इह । हरी इति । ब्रह्मऽयुजा । शग्मा । वक्षतः । सखायम् । गीःऽभिः । श्रुतम् । गिर्वणसम् ॥२७॥

**वेङ्कट०** आ वहताम् इह[1] अश्वौ [2]ब्रह्मणा युक्तौ[2] शक्तौ सखायम् स्तुतिश्रवणार्थं[3] विश्रुतं गीर्भिर्वननीयम् ॥ २७ ॥

स्वादवः सोमा आ याहि श्रीताः सोमा आ याहि ।
शिप्रिन्नृषीवः शचीवो नायमच्छा सधमादम् ॥ २८ ॥

स्वादवः । सोमाः । आ । याहि । श्रीताः । सोमाः । आ । याहि ।
शिप्रिन् । ऋषिऽवः । शचीऽवः । [4]न । अयम् ।[4] अच्छ । सधऽमादम् ॥ २८ ॥

**वेङ्कट०** स्वादवः इमे सोमाः, आ गच्छ । गोभिः †श्रीताः सोमाः, आ† याहि । शिप्रिन्! दर्शनवन्!‡ प्रज्ञावन्![5] सधमादम् त्वाम्[6] निरीक्ष्य आस्ते, तस्मादायाहि ॥ २८ ॥

स्तुतश्च यास्त्वा वर्धन्ति महे राधसे नृम्णाय । इन्द्र कारिणं वृधन्तः ॥ २९ ॥

स्तुतः । च । याः । त्वा । वर्धन्ति । महे । राधसे । नृम्णाय । इन्द्र । कारिणम् । वृधन्तः ॥२९॥

**वेङ्कट०** स्तुतयः[7] च याः त्वां वर्धयन्ति महते धनाय बलाय च । ताश्च त्वां न वर्धयन्ति करणशीलम् [8]अन्यत्र वर्तस[8] इति ॥ २९ ॥

गिरश्च यास्ते गिर्वाह उक्था च तुभ्यं तानि । सत्रा दधिरे शवांसि ॥ ३० ॥

गिरः । च । याः । ते । गिर्वाहः । उक्था । च । तुभ्यम् । तानि । सत्रा । दधिरे । शवांसि ॥३०॥

**वेङ्कट०** गिरः च याः भवन्ति तुभ्यम् गीर्भिरुह्यमान! तथा उक्थानि च तानि, यानि सत्यमेव तुभ्यं बलानि धारयन्ति । तानि च न वर्धयन्ति अन्यत्र गते त्वयीति ॥ ३० ॥

[9]इति पञ्चमाष्टके सप्तमाध्याये द्वाविंशो वर्गः[9] ॥

एवेदेष तुविकूर्मिर्वाजाँ एको वज्रहस्तः । सनादमृक्तो दयते ॥ ३१ ॥

एव । इत् । एषः । तुविऽकूर्मिः । वाजान् । एकः । वज्रऽहस्तः । सनात् । अमृक्तः । दयते ॥ ३१ ॥

**वेङ्कट०** एवमेव एषः बहोः कर्ता [10]अन्नानि एकः[10] वज्रहस्तः चिरादेवारभ्य शत्रुभिरप्रमृष्टः प्रयच्छति ॥ ३१ ॥

हन्ता वृत्रं दक्षिणेनेन्द्रः पुरू पुरुहूतः । महान् महीभिः शचीभिः ॥ ३२ ॥

---

१. इव मूको. २-२. ब्राह्मणायुक्तौ अ[1]; ब्राह्मणयुक्तौ वि[2]. ३. स्तुतिरश्रवणार्थ मूको. ४-४. तु. ऋ १, १३०, १[b]; सा. संप्रत्यर्थे नेति. ५-५. नास्ति वि[2]. †-† श्रिता सोमाया° अ[1]. ‡ °वत् अ[1]. ६. पिद्युः मूको. ७. स्तुतः मूको. ८-८. मन्ये वर्तय मूको. ९-९. नास्ति मूको. १०-१०. नान्ये को मूको.

हन्ता । वृत्रम् । दक्षिणेन । इन्द्रः । पुरुऽहूतः । महान् । महीभिः । शचीभिः ॥ ३२ ॥

**वेङ्कट०** हन्ता शत्रून् दक्षिणेन एकेनैव हस्तेन इन्द्रः बहुभिः आहूतः[1] महान् महतीभिः प्रज्ञाभिः ॥ ३२ ॥

यस्मिन् विश्वाश्चर्षणय उत च्यौत्ना ज्रयांसि च । अनु घेन्मन्दी मघोनः ॥३३॥

यस्मिन् । विश्वाः । चर्षणयः । उत । च्यौत्ना । ज्रयांसि । च । अनु । घ । इत् । मन्दी । मघोनः ॥

**वेङ्कट०** यस्मिन् विश्वाः प्रजाः अपि च बलानि वेगाः च संस्थितानि । सत्यं मघवतः स्तोता अनु हरति सोममिति ॥ ३३ ॥

एष एतानि चकारेन्द्रो विश्वा योऽति शृण्वे । वाजदावा मघोनाम् ॥ ३४ ॥

एषः । एतानि । चकार । इन्द्रः । विश्वा । यः । अति । शृण्वे । वाजऽदावा । मघोनाम् ॥३४॥

**वेङ्कट०** एषः[2] एतानि सर्वाणि भूतानि चकार इन्द्रः; यः अत्यन्तं श्रूयते अन्नस्य च दाता हविष्मताम् ॥ ३४ ॥

प्रभर्ता रथं गव्यन्तमपाकाच्चिद् यमवति । इनो वसु स हि वोळ्हा ॥ ३५ ॥

प्रऽभर्ता । रथम् । गव्यन्तम् । अपाकात् । चित् । यम् । अवति । इनः । वसु । सः । हि । वोळ्हा ॥३५॥

**वेङ्कट०** प्रभर्ता रथम् गा [3]इच्छन्तं धनेन[3] रथं गोभिः पूरयति[4] अनल्पादपि शत्रोः, यम् यजमानं रक्षति । तस्मा ईश्वरः [5]सः हि[5] धनस्य वोढा भवति । यद्वा शत्रून् प्रति नयनं प्रभरणमिति ॥३५॥

[6]इति पञ्चमाष्टके सप्तमाध्याये त्रयोविंशो वर्गः[6] ॥

सनिता विप्रो अर्वद्भिर्हन्ता वृत्रं नृभिः शूरः । सत्योऽविता विधन्तम् ॥३६॥

सनिता । विप्रः । अर्वत्ऽभिः । हन्ता । वृत्रम् । नृऽभिः । शूरः । सत्यः । अविता । विधन्तम् ॥

**वेङ्कट०** शत्रूणां सम्भक्ता मेधावी अश्वैः हन्ता च वृत्रम् नरैः[7] शूरः सत्यकर्मा रक्षिता च परिचरन्तम् इन्द्रो भवति ॥ ३६ ॥

यजध्वैनं प्रियमेधा इन्द्रं सत्राचा मनसा । यो भूत् सोमैः सत्यमद्वा ॥ ३७ ॥

यजध्व । एनम् । प्रियऽमेधाः । इन्द्रम् । सत्राचा । मनसा । यः । भूत् । सोमैः । सत्यऽमद्वा ॥३७॥

**वेङ्कट०** यजध्वम् एनम् हे प्रियमेधस्य पुत्राः! इन्द्रम् महद्धनम् अञ्चता मनसा, यः भवति सोमैः सत्य-मदनः[8] ॥ ॥ ३७ ॥

गाथश्रवसं सत्पतिं श्रवस्कामं पुरुत्मानम् । कण्वासो गात वाजिनम् ॥ ३८ ॥

गाथऽश्रवसम् । सत्ऽपतिम् । श्रवःऽकामम् । पुरुऽत्मानम् । कण्वासः । गात । वाजिनम् ॥३८॥

---

१. आहतो वि[2]; आनतो अ. २. एता वि[1]. ३-३. इच्छन्तद्धनन वि[2]; इच्छंस्तद्धनेन अ[1]. ४. पूरयतु अ[1]. ५-५. सलि मूको. ६-६. नास्ति मूको. ७. भगैः मूको. ८. °मथनं अ[1]; °मद्धनम् वि[2].

वेङ्कट० सङ्कीर्तनीयकीर्तिम् सत्पतिम्[1] अन्नकामम् बहुशरीरम् हे कण्वासः! स्तुत बलिनम् इन्द्रम् ॥ ३८ ॥

य ऋते चिद् गास्पदेभ्यो दात् सखा नृभ्यः शचीवान् । ये अस्मिन् काममश्रियन् ।३९।

यः । ऋते । चित् । गाः । पदेभ्यः । दात् । सखा । नृऽभ्यः । शचीऽवान् ।
ये । अस्मिन् । कामम् । अश्रियन् ॥ ३९ ॥

वेङ्कट० यः यज्ञे पशून् अभिगन्तृभ्यः प्रयच्छति सखा नेतृभ्यः प्रज्ञावान्, ये नरः इन्द्रे[2] कामम् कमनीयं सोमम् श्रयन्ते संमिश्रयन्ति ॥ ३९ ॥

इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् । मेषो भूतो३ऽभि यन्नयः ॥ ४० ॥

इत्था । धीऽवन्तम् । अद्रिऽवः । काण्वम् । मेध्यऽअतिथिम् । मेषः । भूतः । अभि । [3]यन् । अयः[3] ॥

वेङ्कट० इत्थमेव कर्मवन्तम् वज्रिन्! कण्वपुत्रम् मेध्यातिथिम् मेषः [4]भूत्वा अभि गच्छन्[4] [5]अभिगच्छ त्वं यजमानानिति[5] ॥ ४० ॥

शिक्षा विभिन्दो अस्मै चत्वार्ययुता ददत् । अष्टा परः सहस्रा ॥ ४१ ॥

शिक्ष । विभिन्दो इति विऽभिन्दो । अस्मै । चत्वारि । अयुता । ददत् । अष्ट । परः । सहस्रा ॥४१॥

वेङ्कट० अत्र कात्यायनः—अन्त्याभ्यां मेधातिथिः ( ऋअ २,८,२ )। देहि विभिन्दो! अस्मै गवाम् चत्वारि अयुतानि प्रयच्छन् अष्टौ च सहस्राणि परस्तात्, अधिकानीत्यर्थः ॥ ४१ ॥

उत सु त्ये पयोवृधा माकी रणस्य नप्त्या । जनित्वनाय मामहे ॥ ४२ ॥

उत । सु । त्ये इति । पयःऽवृधा । माकी इति । रणस्य । नप्त्या । जनिऽत्वनाय । ममहे ॥४२॥

वेङ्कट० अपि च एते पयसो वर्धयित्र्यौ धेनू माकी[6] च युद्धस्य नेत्र्यौ। [7]माकिः अश्वा अध्वनो[7] मिमीते गमन इति। जनित्वनाय अस्माकं प्रादुर्भावाय[8] प्रायच्छदिति ॥ ४२ ॥

[9]इति पञ्चमाष्टके सप्तमाध्याये चतुर्विंशो वर्गः[9] ॥

[ ३ ]

[1]मेधातिथिः काण्व ऋषिः। इन्द्रो देवता, अन्त्यानां चतसृणां पाकस्थामा कौरयाणः।
प्रगाथच्छन्दः ( =विषमा बृहत्यः, समाः सतोबृहत्यः ), एकविंश्यनुष्टुप्,
द्वाविंशीत्रयोविंश्यौ गायत्र्यौ, चतुर्विंशी बृहती[1]।

पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
आपिर्नो बोधि सधमाद्यो वृधे३स्माँ अवन्तु ते धियः ॥ १ ॥

---

१. सपतिम् मूको. २. इन्द्र वि[1]. ३-३. पाठः? (तु. वैप १,२५७५ d). ४-४. भूत्वाभिजगन्थ गच्छत् वि[2]; °भिजघन्थ गच्छन् अ[1]. ५-५. °भिगच्छभोयज° मूको. ६. माकि अ[1]. ७-७. माकीरश्चाध्वनो मूको. ८. °र्भवाय अ[1], ९-९. नास्ति मूको.

पिबं । सुतस्यं । रसिनंः । मत्स्वं । नः । इन्द्र । गोऽमंतः ।
आपिः । नः । बोधि । सधऽमाद्यः । वृधे । अस्मान् । अवन्तु । ते । धियंः ॥ १ ॥

वेङ्कट० मेध्यातिथिः । पिब[1] [2]सुतं रसवन्तम्[2], माद्य अस्माकं स्वभूतेन इन्द्र! गोमिश्रितेन। बन्धुः सन् बुध्यस्व अस्माकं वर्धनाय सहितैः ऋत्विग्भिः मदनीयः। अस्मान् रक्षन्तु तव कर्माणि ॥१॥

भूयाम॑ ते सुम॒तौ वा॒जिनो॑ व॒यं मा नः॑ स्तर॒भिमा॑तये ।
अ॒स्माञ् चि॒त्राभि॑रवताद॒भिष्टि॑भि॒रा नः॑ सु॒म्नेषु॑ यामय ॥ २ ॥

भूयामं । ते । सुऽमतौ । वाजिनंः । वयम् । मा । नः । स्तः । अभिऽमांतये ।
अस्मान् । चित्राभिः । अवतात् । अभिष्टिऽभिः । आ । नः । सुम्नेषुं । यमय ॥ २ ॥

वेङ्कट० भवाम तव सुमतौ हविष्मन्तः वयम्। आत्मानमभिमन्यमानाय शत्रवे स्तरणं तस्याग्रतो निधानम् [3]अस्माकम् मा भवतु[3]। अस्मान् चित्रैः अभ्येषणैः रक्ष। अस्मान् सुखेषु च आ यमय संयोजय ॥ २ ॥

इ॒मा उं त्वा पुरूवसो गिरो॑ वर्धन्तु॒ या मम॑ ।
पा॒व॒कव॑र्णाः शुच॑यो विप॒श्चितो॒ऽभि स्तोमै॑रनूषत ॥ ३ ॥

इमाः । ऊँ इति॑ । त्वा । पुरुवसो इति॑ पुरुऽवसो । गिरः॑ । वर्धन्तु । याः । मम॑ ।
पावकऽवर्णाः । शुच॑यः । विपःऽचितः॑ । अभि । स्तोमैः॑ । अनूषत ॥ ३ ॥

वेङ्कट० इमाः एव त्वां हे बहुधन! स्तुतयः वर्धयन्तु, याः मम स्वभूताः[4]। पावकसदृशवर्णाः[5]। शुचिः शोचतेर्ज्वलतिकर्मणः। ज्वलन्तः मेधाविनः इन्द्रम् स्तोमैः अभि अनूषत अस्तुवत[6] ॥ ३ ॥

अ॒यं स॒हस्र॒मृषि॑भि॒ः सह॑स्कृतः समु॒द्र इ॑व पप्रथे ।
स॒त्यः सो अ॑स्य महि॒मा गृ॒णे शवो॑ य॒ज्ञेषु॑ विप्र॒राज्ये॑ ॥ ४ ॥

अयम् । सहस्रम् । ऋषिंऽभिः । सहःऽकृतः । समुद्रःऽइव । पप्रथे ।
सत्यः । सः । अस्य । महिमा । गृणे । शवः । यज्ञेषुं । विप्रऽराज्यें ॥ ४ ॥

वेङ्कट० अयम् ऋषिभिः बहुभिः बलेन [7]कृतः अन्तरिक्षमिव[7] प्रथितोऽभूत् वृद्धशरीरः। सत्यभूतः सः अस्य महिमा स्तुतः ऋषिभिः, बलं च। तुरीयपादः प्रत्यक्षः—यज्ञेषु हे मेधाविन्!(?) इन्द्र! राज्ये(?) च सर्वस्मिन् ॥ ४ ॥

---

१. सुत पिब मूको. २-२. सुतनुसव° मूको. ३-३. नास्ति मूको. ४. स्वभूता मूको. ५. °वर्णां मूको. ६. अस्तुवन्त मूको. ७-७. कृतकृत्यन्तरिक्षमौपमिकमिव ··· वि[2], कृतकृत्यौपमिकमन्तरिक्षमिव अ[1].

इन्द्रमिद् देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ ५ ॥

इन्द्रम् । इत् । देवऽतातये । इन्द्रम् । प्रऽयति । अध्वरे ।
इन्द्रम् । सम्ऽईके । वनिनः । हवामहे । इन्द्रम् । धनस्य । सातये ॥ ५ ॥

**वेङ्कट०** इन्द्रम् एव यज्ञतननार्थम्[1], इन्द्रम् एव वर्तमाने च यज्ञे, इन्द्रम् सङ्ग्रामे हविष्मन्तः हवामहे, इन्द्रम् एव वाऽर्थस्य लाभाय ॥ ५ ॥

इति पञ्चमाष्टके सप्तमाध्याये पञ्चविंशो वर्गः ॥

इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥ ६ ॥

इन्द्रः । मह्ना । रोदसी इति । पप्रथत् । शवः । इन्द्रः । सूर्यम् । अरोचयत् ।
इन्द्रे । ह । विश्वा । भुवनानि । येमिरे । इन्द्रे । सुवानासः । इन्दवः ॥ ६ ॥

**वेङ्कट०** इन्द्रः महता शवसा [2]द्यावापृथिव्यौ अप्रथयत्[2] । इन्द्रः सूर्यम् अरोचयत् । इन्द्रे खलु विश्वानि भूतानि संयतानि, इन्द्रे एव अभिपूयमाणाः सोमाश्च ॥ ६ ॥

अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम् ॥ ७ ॥

अभि । त्वा । पूर्वऽपीतये । इन्द्र । स्तोमेभिः । आयवः ।
सम्ऽईचीनासः । ऋभवः । सम् । अस्वरन् । रुद्राः । गृणन्त । पूर्व्यम् ॥ ७ ॥

**वेङ्कट०** अभि सम् अस्वरन् सङ्गताः अभिष्टुवन्ति त्वां प्रथमेव पानाय इन्द्र! स्तोमैः मनुष्याः सन्तः । सङ्गताः सौधन्वनाः ऋभवः स्तोतारः अस्तुवन् प्रत्नमिति ॥ ७ ॥

अस्येदिन्द्रो वावृधे वृष्ण्यं शवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ॥ ८ ॥

अस्य । इत् । इन्द्रः । ववृधे । वृष्ण्यम् । शवः । मदे । सुतस्य । विष्णवि ।
अद्य । तम् । अस्य । महिमानम् । आयवः । अनु । स्तुवन्ति । पूर्वऽथा ॥ ८ ॥

**वेङ्कट०** अस्य एव सुतस्य सोमस्य मदे[3] वर्धयति इन्द्रः वृष्णः पुंस आत्मनः स्वभूतं बलं यज्ञे । 'विष्णुः' ( निघ ३, १७ ) इति यज्ञनाम[4] । अद्य तम् अस्य महिमानम् सोमजनितं मनुष्याः अनु स्तुवन्ति, यथा पूर्वे तम् अभ्यष्टुवन् ॥ ८ ॥

---

१. °ततनार्थम् अ[1]. २-२. °थिवी अवप्र° अ[1]. ३. पदे मूको. ४. यज्ञनाम्ना मूको.

तत् त्वा यामि सुवीर्यं तद् ब्रह्म पूर्वचित्तये ।
येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथ ॥ ९ ॥

तत् । त्वा । यामि । सुऽवीर्यम् । तत् । ब्रह्म । पूर्वऽचित्तये ।
येन । यतिऽभ्यः । भृगवे । धने । हिते । येन । प्रस्कण्वम् । आविथ ॥ ९ ॥

**वेङ्कट०** तम् त्वा याचे सुवीर्यम्. तत् च अन्नम्[1] पूर्वज्ञानाय, यथा मामाद्यं प्रथममेव[2] सर्वे जानन्ति । येन यतिभ्यः प्रदातृभ्यो राजभ्यः भृगवे याचकाय निहितं धनं रक्षितवानसि, येन च सुवीर्येण प्रस्कण्वम्[3] इति ॥ ९ ॥

येना समुद्रमसृजो महीरपस्तदिन्द्र वृष्णि ते शवः ।
सद्यः सो अस्य महिमा न संनशे यं क्षोणीरनुचक्रदे ॥ १० ॥

येन । समुद्रम् । असृजः । महीः । अपः । तत् । इन्द्र । वृष्णि । ते । शवः ।
सद्यः । सः । अस्य । महिमा । न । सम्ऽनशे । यम् । क्षोणीः । अनुऽचक्रदे ॥ १० ॥

**वेङ्कट०** येन समुद्रम् प्रति महतीः[4] [5]अपः वृष्टिलक्षणाः[5] वि असृजः, तत् इन्द्र! तव बलम् वर्षणशीलम्[6] । सदनार्हः सः अस्य महिमा कैश्चित् न संनाशयितुं शक्यः, यम् इमं पृथिवी अनुक्रमेण क्रन्दते । कामानाम् अभिमतानां याचनं क्रन्दनमिति ॥ १० ॥

[7]इति पञ्चमाष्टके सप्तमाध्याये षड्विंशो वर्गः[7] ॥

शग्धी न इन्द्र यत् त्वा रयिं यामि सुवीर्यम् ।
शग्धि वाजाय प्रथमं सिषासते शग्धि स्तोमाय पूर्व्य ॥ ११ ॥

शग्धि । नः । इन्द्र । यत् । त्वा । रयिम् । यामि । सुऽवीर्यम् ।
शग्धि । वाजाय । प्रथमम् । सिसासते । शग्धि । स्तोमाय । पूर्व्य ॥ ११ ॥

**वेङ्कट०** शक्तो भवसि अस्माकम् इन्द्र! तत्कर्तुं, यथा त्वा अहम् रयिम् याचे सुवीर्यम् । शग्धि चान्नार्थम् प्रथमम् एव त्वां सम्भक्तुमिच्छते । शग्धि च स्तोमाय, स्तोमः स्तोता तत्कार्यार्थम्, हे प्रत्न! इति ॥ ११ ॥

शग्धी नो अस्य यद्ध पौरमाविथ धिय इन्द्र सिषासतः ।
शग्धि यथा रुशमं श्यावकं कृपमिन्द्र प्रावः स्वर्णरम् ॥ १२ ॥

शग्धि । नः । अस्य । यत् । ह । पौरम् । आविथ । धियः । इन्द्र । सिसासतः ।
शग्धि । यथा । रुशमम् । श्यावकम् । कृपम् । इन्द्र । प्र । आवः । स्वःऽनरम् ॥ १२ ॥

---

१. अन्यं मूको. २. प्रथमेव मूको. ३-३. °ण्वश्वम् मूको. ४. महती मूको. ५. वृष्टिरपो ल° मूको. ६. तु. ऋ ५,३५,४. ७-७. नास्ति मूको.

वेङ्कट० शग्धि अस्माकम् अस्य अभिलषितस्य, यथा त्वम् पौरम् रक्षितवान् असि आत्रेयम्। कर्माणि इन्द्र! सम्भक्तुमिच्छतः यथा रुशमादींश्च[1] ॥ १२ ॥[2]

कन्नव्यो॑ अत॒सीनां॑ तु॒रो गृ॑णीत॒ मर्त्यः॑ ।
न॒ही न्व॑स्य महि॒मान॑मिन्द्रि॒यं स्व॑र्गृ॒णन्त॑ आन॒शुः ॥ १३ ॥

कत् । नव्यः॑ । अ॒त॒सीना॑म् । तु॒रः । गृ॒णी॒त॒ । मर्त्यः॑ ।
न॒हि । नु । अ॒स्य॒ । म॒हि॒मान॑म् । इ॒न्द्रि॒यम् । स्वः॑ । गृ॒णन्तः॑ । आ॒न॒शुः ॥ १३ ॥

वेङ्कट० [3]कः नव्यः अतन्तीनां[3] स्तुतीनां प्रेरयिता स्तुवीत मनुष्यः। नहि अस्य महिमानम् इन्द्रियम् च सर्वम् स्तुवन्तः पूर्वे कवयः आनशुः ॥ १३ ॥

कदु॑ स्तु॒वन्त॑ ऋतयन्त दे॒वत॒ ऋषि॒ः को विप्र॑ ओहते ।
क॒दा हवं॑ मघवन्निन्द्र सु॒न्व॒तः कदु॑ स्तुव॒त आ ग॑मः ॥ १४ ॥

कत् । ऊँ इति॑ । स्तु॒वन्तः॑ । ऋ॒त॒ऽय॒न्त॒ । दे॒वता॑ । ऋषि॑ः । कः । विप्रः॑ । ओ॒ह॒ते॒ ।
क॒दा । हव॑म् । म॒घ॒ऽव॒न् । इ॒न्द्र॒ । सु॒न्व॒तः । कत् । ऊँ इति॑ । स्तु॒व॒तः । आ । ग॒मः॒ ॥ १४ ॥

वेङ्कट० कदा स्तुवन्तः देवम् ऋतमैच्छन्। ऋषिः[4] कः मेधावी[5] च स्तुवतः च आ गमः ॥ १४ ॥

उदु॒ त्ये मधु॑मत्तमा॒ गिर॒ः स्तोमा॑स ईरते ।
स॒त्राजि॑तो धन॒सा अक्षि॑तोतयो वा॒जय॑न्तो॒ रथा॑ इव ॥ १५ ॥

उत् । ऊँ इति॑ । त्ये । मधु॑मत्ऽतमाः । गिर॑ः । स्तोमा॑सः । ई॒र॒ते॒ ।
स॒त्राऽजि॑तः । ध॒न॒ऽसाः । अक्षि॑तऽऊतयः । वा॒ज॒ऽयन्तः॑ । रथाः॑ऽइव ॥ १५ ॥

वेङ्कट० उत् ईरते अमी मधुमत्तमाः स्तुतीः स्तोमाः स्तोतारः सर्वस्य जेतारः[6] धनस्य सम्भक्तारः अक्षितरक्षणाः अन्नमिच्छन्तः। यथा रथाः एवंविधाः सङ्ग्रामं प्रविशन्तोऽक्षशब्दं कुर्वन्ति ॥ १५ ॥

[7]इति पञ्चमाष्टके सप्तमाध्याये सप्तविंशो वर्गः[7] ॥

कण्वा॑ इव॒ भृग॑वः॒ सूर्या॑ इव॒ विश्व॒मिद् धी॒तमा॑नशुः ।
इन्द्रं॒ स्तोमे॑भिर्म॒हय॑न्त आ॒यवः॑ प्रि॒यमे॑धासो अस्वरन् ॥ १६ ॥

कण्वाः॑ऽइव । भृग॑वः । सूर्याः॑ऽइव । विश्व॑म् । इत् । धी॒तम् । आ॒न॒शुः॒ ।
इन्द्र॑म् । स्तोमे॑भिः । म॒हय॑न्तः । आ॒यवः॑ । प्रि॒यऽमे॑धासः । अ॒स्व॒र॒न् ॥ १६ ॥

---

१. रुशमादीं ··· वि[२]. २. तु. ऋ ८,४,२;१२,२. ३-३. ··· तानां मूको. ४. ऋषी अ[१]; ऋषी वि[२]. ५. मेधा मूको। अत्र ग्रन्थपातोऽनुमीयते. ६. चेतारो मूको. ७-७. नास्ति मूको.

वेङ्कट० भृगुकुलजाः कण्वकुलजाताः इव तथा सूर्याः इव च विश्वम् एव धीतम् आनशुः चिन्तयन्तः प्रापुः । कम् इत्याह—इन्द्रमिति । इन्द्रम् स्तोत्रैः पूजयन्तः, आयवः प्रियमेधस्य पुत्राः अकीर्तयन्नाह्वयन्, धीतं च आनशुरिति ॥ १६ ॥[१]

युक्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः ।
अर्वाचीनो मघवन्त्सोमपीतय [२]उग्र ऋष्वेभिरा गहि[२] ॥ १७ ॥

युक्ष्व । हि । वृत्रहन्ऽतम । हरी इति । इन्द्र । पराऽवतः ।
अर्वाचीनः । मघऽवन् । सोमऽपीतये । [२]उग्रः । ऋष्वेभिः । आ । गहि[२] ॥ १७ ॥

वेङ्कट० योजय हे वृत्राणाम्[३] अतिशयेन [४]हन्तः! अश्वौ[४] इन्द्र! दूरात् आगन्तुम्[५] । अभिमुखः मघवन्! सोमपानाय उद्गूर्णः दर्शनीयैः अन्यैर्देवैः सह आ गच्छ ॥ १७ ॥

इमे हि ते कारवो वावशुर्धिया विप्रासो मेधसातये ।
स त्वं नो मघवन्निन्द्र गिर्वणो वेनो न शृणुधी हवम् ॥ १८ ॥

इमे । हि । ते । कारवः । वावशुः । धिया । विप्रासः । मेधऽसातये ।
सः । त्वम् । नः । मघऽवन् । इन्द्र । गिर्वणः । वेनः । न । शृणुधि । हवम् ॥ १८ ॥

वेङ्कट० इमे हि स्तोतारः त्वां कामयन्ते [६]बुद्ध्या मेधाविनः[६] यज्ञभजनाय कथं त्वं[७] यज्ञमागच्छेरिति । सः त्वम् नः हे मघवन्! इन्द्र! गीर्भिर्वननीय! कामी इव शृणु ह्वानम् ॥ १८ ॥

निरिन्द्र बृहतीभ्यो वृत्रं धनुभ्यो अस्फुरः ।
निरर्बुदस्य मृगयस्य मायिनो निः पर्वतस्य गा आजः ॥ १९ ॥

निः । इन्द्र । बृहतीभ्यः । वृत्रम् । धनुऽभ्यः । अस्फुरः ।
निः । अर्बुदस्य । मृगयस्य । मायिनः । निः । पर्वतस्य । गाः । आजः ॥ १९ ॥

वेङ्कट० यदा त्वम् इन्द्र! बृहतीभ्यः धनुभ्यः[८] महतोऽन्तरिक्षात् वृत्रम् निः अस्फुरः निरगमयः, तदानीम् अर्बुदादीनाम्[९] असुराणां मायावतां पशून् निः आजः इति ॥ १९ ॥

निरग्नयो रुरुचुर्निरु सूर्यो निः सोम इन्द्रियो रसः ।
निरन्तरिक्षादधमो महामहिं कृषे तदिन्द्र पौंस्यम् ॥ २० ॥

निः । अग्नयः । रुरुचुः । निः । ऊँ इति । सूर्यः । निः । सोमः । इन्द्रियः । रसः ।
निः । अन्तरिक्षात् । अधमः । महाम् । अहिम् । कृषे । तत् । इन्द्र । पौंस्यम् ॥ २० ॥

---

१. तु. ऋ ८,३,७;४०,३. २-२. ऋ ८,५०,७. ३. विश्वात्रांणाम् मूको. ४-४. हरन्तश्व वि[२]; हरन्तश्चौ अ[१]. ५. °न्तुमिच्छन्तो अ[१]. ६-६. मेधाविनो बुध्या अ[१]. ७. त्वत् मूको. ८. =धन्वभ्यः (तु. ऋ १,१४४,५ भाष्यम्, इह नान्तरीयोत्तरो मन्त्रश्च); धनुर्भ्यः मूको. ९. अम्बुदा° मूको.

**वेङ्कट०** अग्नयः निः[1] रुरुचुः निरगच्छन्। निः एव सूर्यः। निः[1] रुरुचे सोमः चन्द्रमाश्च इन्द्रस्य जुष्टः रसात्मकः[2]। कदा इत्याह—निः अधमः त्वम् अन्तरिक्षात् महान्तम् अहिम् असुरम् तदानीमिति। तत् इदं सर्वम् अवश्यम् अकृथाः त्वम् इन्द्र! इति ॥ २० ॥[3]

[4]इति पञ्चमाष्टके सप्तमाध्याये अष्टाविंशो वर्गः[4] ॥

यं मे॑ दु॒रिन्द्रो॑ म॒रुतः॒ पाक॑स्थामा॒ कौर॑याणः ।
विश्वे॑षां॒ त्मना॒ शोभि॑ष्ठ॒मुपे॑व दि॒वि धाव॑मानम् ॥ २१ ॥

यम् । मे॒ । दुः॒ । इन्द्रः॑ । म॒रुतः॑ । पाक॑ऽस्थामा । कौर॑याणः ।
विश्वे॑षाम् । त्मना॑ । शोभि॑ष्ठम् । उप॑ऽइव । दि॒वि । धाव॑मानम् ॥ २१ ॥

**वेङ्कट०** यम् मे प्रायच्छन् इन्द्रः मरुतः पाकस्थामा च कौरयाणः त्वत्प्रेषितः विश्वेषाम् अश्वानाम् आत्मना अत्यन्तं शोभयितारम् अन्यानश्वान् सहकारिणः शोभयन्तम् वेगमहत्तया [5]दिवि धावमानम्[5], तम् अहं प्रत्यगृह्णामिति वाक्यशेषः ॥ २१ ॥

रोहि॑तं मे॒ पाक॑स्थामा सु॒धुरं॑ कक्ष्य॒प्राम् । अदा॑द् रा॒यो वि॒बोध॑नम् ॥ २२ ॥

रोहि॑तम् । मे॒ । पाक॑ऽस्थामा । सु॒ऽधुर॑म् । क॒क्ष्य॒ऽप्राम् ।
अदा॑त् । रा॒यः । वि॒ऽबोध॑नम् ॥ २२ ॥

**वेङ्कट०** रोहितम्[6] मह्यम् पाकस्थामा शोभनधुरम्[7] कक्ष्यायाः पूरयितारम् अदात्[8] धनस्य विशेषेण बोधयितारं प्रापकमिति ॥ २२ ॥

यस्मा॑ अ॒न्ये दश॒ प्रति॒ धुरं॒ वह॑न्ति॒ वह्न॑यः । अस्तं॒ वयो॒ न तुग्र्य॑म् ॥ २३ ॥

यस्मै॑ । अ॒न्ये । दश॑ । प्रति॑ । धुर॑म् । वह॑न्ति । वह्न॑यः । अस्त॑म् । वयः॑ । न । तुग्र्य॑म् ॥ २३ ॥

**वेङ्कट०** यस्मै रोहिताय अन्ये दश अश्वाः प्रति वहन्ति धुरम् वोढारः, सोऽयमेकां धुरं वहति, अपरां धुरं दश वहन्ति, सोऽयं रथम् अत्यन्तशीघ्रं वहति[9], यथा तुग्रपुत्रं भुज्युं गृहं प्रति नयन्तः अश्विनोरश्वाः तद्वयं शीघ्रमवहन्निति[10] ॥ २३ ॥

आ॒त्मा पि॒तुस्त॒नूर्वास॑ ओजो॒दा अ॒भ्यञ्ज॑नम् ।
तु॒रीय॒मिद् रोहि॑तस्य॒ पाक॑स्थामानं भो॒जं दा॒तार॑मब्रवम् ॥ २४ ॥

आ॒त्मा । पि॒तुः । त॒नूः । वासः॑ । ओ॒जः॒ऽदाः । अ॒भि॒ऽअञ्ज॑नम् ।
तु॒रीय॑म् । इत् । रोहि॑तस्य । पाक॑ऽस्थामानम् । भो॒जम् । दा॒तार॑म् । अ॒ब्र॒व॒म् ॥ २४ ॥

---

१-१. नि मूको. २. तु. ऋ ९,४७,३; रसात्मकं मूको. ३. तु. ऋ ८,३२,३;६३,८ प्रभृ. ४-४. नास्ति मूको. ५-५. दिवी रेलावधारवमानम् अ[1]. ६. पुरोहितं अ[1]. ७. शोभनमधुर मूको. ८. मदात् मूको. ९. वहन्ति मूको. १०. तु. ऋ ८,७४,१४ प्रभृ.

वेङ्कट० 'शरीरभूतम् अन्नम्', तनुभूतम् वासः। स्वङ्गो[2] हि भवति 'वाससा संवीतः[3]। बलस्य साधकम् अभ्यञ्जनम्[4] तैलमिति त्रीणि। तुरीयम् किमपेक्षितमिति पृच्छ्यमानोऽहं रोहितवर्णस्य अश्वस्य दातारम् पाकस्थामनामानं[5] भोजम् ब्रवीमि। अयं चापेक्षित इति सर्वप्रदातारमिमं च ब्रवीमीति[6] ॥ २४ ॥

[7]इति पञ्चमाष्टके सप्तमाध्याये एकोनात्रिंशो वर्गः[7] ॥

[ ४ ]

[7]देवातिथिः काण्व ऋषिः। इन्द्रो देवता, पञ्चदश्याद्यष्टादश्यन्तानां पूषा वा, अन्त्यानां तिसृणां कुरुङ्गः। प्रगाथश्छन्दः (=विषमा बृहत्यः, समाः सतोबृहत्यः), अन्त्या पुरउष्णिक्[7]।

यदि॑न्द्र॒ प्रागपा॒गुद॒ङ् न्य॑ग् वा हू॒यसे॒ नृभि॑ः ।
सिमा॑ पु॒रू नृषू॑तो अ॒स्यान॑वे॒ऽसि॑ प्रशर्ध तु॒र्वशे॑ ॥ १ ॥

यत् । इ॒न्द्र॒ । प्राक् । अपा॑क् । उद॑क् । न्य॑क् । वा॒ । हू॒यसे॑ । नृऽभि॑ः ।
सिम॑ । पु॒रु । नृऽसू॑तः । अ॒सि॒ । आन॑वे । असि॑ । प्र॒ऽश॒र्ध॒ । तु॒र्वशे॑ ॥ १ ॥

वेङ्कट० देवातिथिः[8]। यद्यपि इन्द्र! त्वं सर्वतो मनुष्यैः आ हूयसे। हे स्तोतृभिर्बध्यमान! पुरुषु देशेषु स्तोतृभिः प्रेरितः आनवे भवसि[9]। अनोः[10] पुत्र आनवः। तथा भवसि हे प्रकृष्टवेग! तुर्वशे च। देवातिथेर्याज्यौ नूनमिमाविति ॥ १ ॥

यद् वा॒ रुमे॒ रुश॑मे॒ श्याव॑के॒ कृप॒ इन्द्र॑ मा॒दय॑से॒ सचा॑ ।
कण्वा॑सस्त्वा॒ ब्रह्म॑भि॒ः स्तोम॑वाहस॒ इन्द्रा य॑च्छ॒न्त्या ग॑हि ॥ २ ॥

यत् । वा॒ । रुमे॑ । रुश॑मे । श्याव॑के । कृपे॑ । इन्द्र॑ । मा॒दय॑से । सचा॑ ।
कण्वा॑सः । त्वा॒ । ब्रह्म॑ऽभिः । स्तोम॑ऽवाहसः । इन्द्र॑ । आ । य॒च्छ॒न्ति॒ । आ । ग॒हि॒ ॥ २ ॥

वेङ्कट० यत् वा त्वं रुमादिष्वन्यतमे इन्द्र! माद्यसि सहायम्। कण्वासः त्वां स्तोमैः[11] स्तोत्रवाहनाः स्तोत्रेण त्वां वहन्तः इन्द्र! आ यच्छन्ति। अतः आ गच्छ ॥ २ ॥

यथा॑ गौ॒रो अ॒पा कृ॒तं तृष्य॒न्नेत्यवे॑रिण॑म् ।
आ॒पि॒त्वे न॑ः प्रपि॒त्वे तूय॒मा ग॑हि॒ कण्वे॑षु॒ सु सचा॒ पिब॑ ॥ ३ ॥

यथा॑ । गौ॒रः । अ॒पा । कृ॒तम् । तृष्य॑न् । एति॑ । अव॑ । इरि॑णम् ।
आ॒ऽपि॒त्वे । न॒ः । प्र॒ऽपि॒त्वे । तूय॑म् । आ । ग॒हि॒ । कण्वे॑षु । सु । सचा॑ । पिब॑ ॥ ३ ॥

---

१-१. शरीरमन्नभूतम् अ[1]. २. स्वङ्गे मूको. ३-३. वासस्या संवितः मूको. ४. अभ्यंयं ननं मूको. ५. पाकस्थानना° वि[2]. ६. ब्रवीति मूको. ७-७. नास्ति मूको. ८. देवातिथिं मूको. ९. हवसि मूको. १०. अनो मूको. ११. सोमैः मूको.

**वेङ्कट०** अग्नयः निः[1] रुरुचुः निरगच्छन्। निः एव सूर्यः। निः[1] रुरुचे सोमः चन्द्रमाश्च इन्द्रस्य जुष्टः रसात्मकः[2]। कदा इत्याह — निः अधमः त्वम् अन्तरिक्षात् महान्तम् अहिम् असुरम् तदानीमिति। तत् इदं सर्वम् अवश्यम् अकृथाः त्वम् इन्द्र! इति ॥ २० ॥[3]

[4]इति पञ्चमाष्टके सप्तमाध्याये अष्टाविंशो वर्गः[4] ॥

यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः ।
विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम् ॥ २१ ॥

यम् । मे । दुः । इन्द्रः । मरुतः । पाकऽस्थामा । कौरयाणः ।
विश्वेषाम् । त्मना । शोभिष्ठम् । उपऽइव । दिवि । धावमानम् ॥ २१ ॥

**वेङ्कट०** यम् मे प्रायच्छन् इन्द्रः मरुतः पाकस्थामा च कौरयाणः त्वत्प्रेषितः विश्वेषाम् अश्वानाम् आत्मना अत्यन्तं शोभयितारम् अन्यानश्वान् सहकारिणः शोभयन्तम् वेगमहत्तया [5]दिवि धावमानम्[5], तम् अहं प्रत्यगृह्णामिति वाक्यशेषः ॥ २१ ॥

रोहितं मे पाकस्थामा सुधुरं कक्ष्यप्राम् । अदाद् रायो विबोधनम् ॥ २२ ॥

रोहितम् । मे । पाकऽस्थामा । सुऽधुरम् । कक्ष्यऽप्राम् ।
अदात् । रायः । विऽबोधनम् ॥ २२ ॥

**वेङ्कट०** रोहितम्[6] मह्यम् पाकस्थामा शोभनधुरम्[7] कक्ष्यायाः पूरयितारम् अदात्[8] धनस्य विशेषेण बोधयितारं प्रापकमिति ॥ २२ ॥

यस्मा अन्ये दश प्रति धुरं वहन्ति वह्नयः । अस्तं वयो न तुग्र्यम् ॥ २३ ॥

यस्मै । अन्ये । दश । प्रति । धुरम् । वहन्ति । वह्नयः । अस्तम् । वयः । न । तुग्र्यम् ॥ २३ ॥

**वेङ्कट०** यस्मै रोहिताय अन्ये दश अश्वाः प्रति वहन्ति धुरम् वोढारः, सोऽयमेकां धुरं वहति, अपरां धुरं दश वहन्ति, सोऽयं रथम् अत्यन्तशीघ्रं वहति[9], यथा तुग्रपुत्रं भुज्युं गृहं प्रति नयन्तः अश्विनोरश्वाः तद्वयं शीघ्रमवहन्निति[10] ॥ २३ ॥

आत्मा पितुस्तनूर्वास ओजोदा अभ्यञ्जनम् ।
तुरीयमिद् रोहितस्य पाकस्थामानं भोजं दातारमब्रवम् ॥ २४ ॥

आत्मा । पितुः । तनूः । वासः । ओजःऽदाः । अभिऽअञ्जनम् ।
तुरीयम् । इत् । रोहितस्य । पाकऽस्थामानम् । भोजम् । दातारम् । अब्रवम् ॥ २४ ॥

---

१-१. नि मूको. २. तु. ऋ ९,४७,३; रसात्मकं मूको. ३. तु. ऋ ८,३२,३;६३,८ प्रभृ. ४-४. नास्ति मूको. ५-५. दिवी रलावधारवमानम् अ[1]. ६. पुरोहितं अ[1]. ७. शोभनमधुर मूको. ७. मदात् मूको. ९. वहन्ति मूको. १०. तु. ऋ ८,७४,१४ प्रभृ.

वेङ्कट० 'शरीरभूतम् अन्नम्[1]', तनुभूतम् वासः। स्वङ्गो[2] हि भवति 'वाससा संवीतः[3]। बलस्य साधकम् अभ्यञ्जनम्[4] तैलमिति त्रीणि। तुरीयम् किमपेक्षितमिति पृच्छ्यमानोऽहं रोहितवर्णस्य अश्वस्य दातारम् पाकस्थामनामानं[5] भोजम् ब्रवीमि। अयं चापेक्षित इति सर्वप्रदातारमिमं च ब्रवीमीति[6] ॥ २४ ॥

[7]इति पञ्चमाष्टके सप्तमाध्याये एकोनत्रिंशो वर्गः[7] ॥

[ ४ ]

[7]देवातिथिः काण्व ऋषिः। इन्द्रो देवता, पञ्चदश्याद्यष्टादश्यन्तानां पूषा वा, अन्त्यानां तिसृणां कुरुङ्गः। प्रगाथश्छन्दः (=विषमा बृहत्यः, समाः सतोबृहत्यः), अन्त्या पुरउष्णिक्[7]।

यदिन्द्र प्रागपागुदङ् न्यग् वा हूयसे नृभिः।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ १ ॥

यत्। इन्द्र। प्राक्। अपाक्। उदक्। न्यक्। वा। हूयसे। नृऽभिः।
सिम। पुरु। नृऽसूतः। असि। आनवे। असि। प्रऽशर्ध। तुर्वशे ॥ १ ॥

वेङ्कट० देवातिथिः[8]। यद्यपि इन्द्र! त्वं सर्वतो मनुष्यैः आ हूयसे। हे स्तोतृभिर्बध्यमान! पुरुषु देशेषु स्तोतृभिः प्रेरितः आनवे भवसि[9]। अनोः[10] पुत्र आनवः। तथा भवसि हे प्रकृष्टवेग! तुर्वशे च। देवातिथेर्याज्यौ नूनमिमाविति ॥ १ ॥

यद् वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा।
कण्वासस्त्वा ब्रह्मभिः स्तोमवाहस इन्द्रा यच्छन्त्या गहि ॥ २ ॥

यत्। वा। रुमे। रुशमे। श्यावके। कृपे। इन्द्र। मादयसे। सचा।
कण्वासः। त्वा। ब्रह्मऽभिः। स्तोमऽवाहसः। इन्द्र। आ। यच्छन्ति। आ। गहि ॥ २ ॥

वेङ्कट० यत् वा त्वं रुमादिष्वन्यतमे इन्द्र! माद्यसि सहायम्। कण्वासः त्वां स्तोमैः[11] स्तोत्रवाहनाः स्तोत्रेण त्वां वहन्तः इन्द्र! आ यच्छन्ति। अतः आ गच्छ ॥ २ ॥

यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम्।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ ३ ॥

यथा। गौरः। अपा। कृतम्। तृष्यन्। एति। अव। इरिणम्।
आऽपित्वे। नः। प्रऽपित्वे। तूयम्। आ। गहि। कण्वेषु। सु। सचा। पिब ॥ ३ ॥

---

१-१. शरीरमन्नभूतम् अ[1]. २. स्वङ्गे मूको. ३-३. वासस्या संवितः मूको. ४. अभ्यञ्जनं मूको. ५. पाकस्थानना° वि[2]. ६. ब्रवीति मूको. ७-७. नास्ति मूको. ८. देवातिथिं मूको. ९. इवसि मूको. १०. अनो मूको. ११. सोमैः मूको.

वेङ्कट० यथा गौरः मृगः उदकेन कृतम् इरिणम्[1] मृगतृष्णाम् उदकमिति मन्यमानः तृष्यन् अव गच्छति, तथा त्वम् अन्नम् आपित्वे प्रपित्वे च प्रातश्च सायं च अस्माकं तूर्णम् आ गच्छ । कण्वेषु सुष्ठु पिब सोमं सहायभूतम् ॥ ३ ॥

मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते ।
आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद् दधिषे सहः ॥ ४ ॥

मन्दन्तु । त्वा । मघऽवन् । इन्द्र । इन्दवः । राधःऽदेयाय । सुन्वते ।
आऽमुष्य । सोमम् । अपिबः । चमू इति । सुतम् । ज्येष्ठम् । तत् । दधिषे । सहः ॥ ४ ॥

वेङ्कट० मदन्तु त्वाम् मघवन्! इन्द्र! सोमाः धनं दातुं यजमानाय । [2]आमुष्य सोमम् । आमोषणम्[2] आदानम् । अपिबः अधिषवणफलकयोः सुतम् । तदानीम् ज्येष्ठम् बलम् धारयसि ॥ ४ ॥

प्र चक्रे सहसा सहो बभञ्ज मन्युमोजसा ।
विश्वे त इन्द्र पृतनायवो यह्वो नि वृक्षा इव येमिरे ॥ ५ ॥

प्र । चक्रे । सहसा । सहः । बभञ्ज । मन्युम् । ओजसा ।
विश्वे । ते । इन्द्र । पृतनाऽयवः । यह्वो इति । नि । वृक्षाःऽइव । येमिरे ॥ ५ ॥

वेङ्कट० प्र करोति बलेन अभिभवनम्[3] शत्रूणाम् । तथा बभञ्ज च अभिमन्तारं शत्रुम् बलेन । विश्वे [4]तव इन्द्र![4] पृतनाकामाः शत्रवः हे महन्! वृक्षाः इव नियता भवन्ति । तव बलं दृष्ट्वा स्वेस्वे स्थाने निश्चला आसत इति ॥ ५ ॥

[5]इति पञ्चमाष्टके सप्तमाध्याये त्रिंशो वर्गः[5] ॥

सहस्रेणेव सचते यवीयुधा यस्त आनळुपस्तुतिम् ।
पुत्रं प्रावर्गं कृणुते सुवीर्ये दाश्नोति नमउक्तिभिः ॥ ६ ॥

सहस्रेणऽइव । सचते । यविऽयुधा । यः । ते । आनट् । उपऽस्तुतिम् ।
पुत्रम् । प्रावर्गम्[6] । कृणुते । सुऽवीर्ये । दाश्नोति । नमउक्तिऽभिः ॥ ६ ॥

वेङ्कट० सहस्रेण इव संसृष्टो भवति [7]पुनःपुनः योद्ध्रा[7] पुत्रेण, यः ते प्राप्नोति उपस्तुतिम्, पुत्रम् प्रच्छेदनकुशलम्[8] करोति च सुवीर्ये युद्धे पुरस्करोति, यः प्रयच्छति तुभ्यं हविः स्तुतिभिः सह ॥ ६ ॥

---

१. इव तु. या (९,८); इरिण मूको. २-२. मुष्यसे मभमोष° मूको. ३. °भिभवना ··· मूको. ४-४. तदेव मूको. ५-५. नास्ति मूको. ६. प्र( < प्र )–व° इति पदविभागः द्र. ७-७. युध्यते-श्चर्करीतवृत्तम् ( तु. वैप १,२६०० n ); पुनर्योधा बि[2]; पुना योद्धा अ[1]. ८. पृच्छेदकुशलम् वि[2].

मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।
महत् ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ ७ ॥

मा । भेम । मा । श्रमिष्म । उग्रस्य । सख्ये । तव ।
महत् । ते । वृष्णः । अभिऽचक्ष्यम् । कृतम् । पश्येम । तुर्वशम् । यदुम् ॥ ७ ॥

**वेङ्कट०** मा बिभिम[1], मा च श्रमिष्म उद्गूर्णस्य तव सख्ये सति। महत् हि ते वर्षितुः अभिदर्शनीयम् कर्म । पश्येम वयम् तुर्वशम् यदुम् च धनलिप्सवः ( तु. ऋ ५,३१,८ ) ॥ ७ ॥

सव्यामनु स्फिग्यं वावसे वृषा न दानो अस्य रोषति ।
मध्वा संपृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥ ८ ॥

सव्याम् । अनु । स्फिग्यम् । ववसे । वृषा । न । दानः । अस्य । रोषति ।
मध्वा । सम्ऽपृक्ताः । सारघेण । धेनवः । तूयम् । आ । इहि । द्रव । पिब ॥ ८ ॥

**वेङ्कट०** दोहार्थम् सव्याम् स्फिजम् अनु यः वावसे[2] वृषा वसति। तत्र ह्यासीनो दोग्धि। न च दुग्धस्य तुभ्यं दाता रुषितो भवति त्वया फलेन संयोज्यमानः। दुग्धेन पयसा प्रीणयितारः सोमाश्च सम्पृक्ताः मधुना सारघेण इत्यौपमिकम्। अथ हे इन्द्र! क्षिप्रम् आ इहि, द्रव, पिब च। आगतस्य पानस्थानम् प्रति [3]गमनं द्रवणम्[3]। आ पिब वा त्वरमाणम् इति ॥ ८ ॥

अश्वी रथी सुरूप इद् गोमाँ इदिन्द्र ते सखा ।
श्वात्रभाजा वयसा सचते सदा चन्द्रो याति सभामुप ॥ ९ ॥

अश्वी । रथी । सुऽरूपः । इत् । गोऽमान् । इत् । इन्द्र । ते । सखा ।
श्वात्रऽभाजा । वयसा । सचते । सदा । चन्द्रः । याति । सभाम् । उप ॥ ९ ॥

**वेङ्कट०** अश्वी रथी सुरूपः एव गोमान् एव इन्द्र! तव सखा सुखभाजा युवत्वेन वयसा संसृष्टो भवति। सदा आह्लादकश्च[4] उप गच्छति सभाम्[5] ॥ ९ ॥

ऋश्यो न तृष्यन्नवपानमा गहि पिबा सोमं वशाँ अनु ।
निमेघमानो मघवन् दिवेदिव ओजिष्ठं दधिषे सहः ॥ १० ॥

ऋश्यः । न । तृष्यन् । अवऽपानम् । आ । गहि । पिब । सोमम् । वशान् । अनु ।
निऽमेघमानः । मघऽवन् । दिवेऽदिवे । ओजिष्ठम् । दधिषे । सहः ॥ १० ॥

---

१. बिभिहि वि[2]; बिभिहिम् अ[1]. २. वा मूको. ३-३. गमन ⋯ वणम् वि[2]; गमन ⋯ बणम् अ[1].
४. ह्लादकाश्च° मूको. ५. सुमहान्तम् अ[1].

वेङ्कट० [1]ऋष्यः इव मृगः[1] तृष्यन् उदकपानस्थानम् आ गच्छ सोमपानस्थानम्, पिब सोमम्[2] कामान् अनु, सोमं स्थितं निषिञ्चन्[3]। अन्वहम्[4] मघवन्! ओजस्वितमम् धारयसि बलम् ॥ १० ॥

[5]इति पञ्चमाष्टके सप्तमाध्याये एकत्रिंशो वर्गः[5] ॥

अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
उप नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥ ११ ॥

अध्वर्यो इति । द्रवय । त्वम् । सोमम् । इन्द्रः । पिपासति ।
उप । नूनम् । युयुजे । वृषणा । हरी इति । आ । च । जगाम । वृत्रऽहा ॥ ११ ॥

वेङ्कट० 'अध्वर्यो! अंशुभ्यः[6] द्रावय त्वम् सोमम् अभिषुणु सोमम्। इन्द्रः पिपासति। उप युयुजे च स्वरथे इदानीं पुमांसौ अश्वौ। आ जगाम वृत्रहा तदानीमेव ॥ ११ ॥

स्वयं चित् स मन्यते दाशुरिर्जनो यत्रा सोमस्य तृम्पसि ।
इदं ते अन्नं युज्यं समुक्षितं तस्येहि प्र द्रवा पिब ॥ १२ ॥

स्वयम् । चित् । सः । मन्यते । दाशुरिः । जनः । [7]यत्र । सोमस्य । तृम्पसि[7] ।
इदम् । ते । अन्नम् । युज्यम् । सम्ऽउक्षितम् । तस्य । आ । इहि । प्र । द्रव । पिब ॥ १२ ॥

वेङ्कट० स्वयम् एव दाता [5]सः जनः[5] भवन्(?)[8] मन्यते, क्षिप्रं दित्सति, यत्र यज्ञे त्वं सोमेन तृप्तो भवसि तत्र वर्तमानः। इदम् ते अन्नम् पानयोग्यं पात्रेषु समुक्षितम्। तत् आ गच्छ, प्र द्रव, तत् पिब, चेति ॥ १२ ॥

रथेष्ठायाध्वर्यवः सोममिन्द्राय सोतन ।
अधि ब्रध्नस्याद्रयो वि चक्षते सुन्वन्तो दाश्वध्वरम् ॥ १३ ॥

रथेऽस्थाय । अध्वर्यवः । सोमम् । इन्द्राय । सोतन ।
अधि । ब्रध्नस्य । अद्रयः । वि । चक्षते । सुन्वन्तः । दाशुऽअध्वरम् ॥ १३ ॥

वेङ्कट० रथे स्थिताय हे अध्वर्यवः! सोमम् इन्द्राय अभिषुणुत। अधि वि चक्षते निवेदयन्ति महतः इन्द्रस्य ग्रावाणः[9] सोमम् अभिषुण्वन्तः दाश्वध्वरम्। धृतयज्ञं[10] यजमानमुच्चैर्घुष्यन्तो यजतेऽयम् इति निवेदयन्ति[11]। 'वग्नुनेन्द्रं ह्वयत। घोषेणामीवांश्चातयत' (तैब्रा ३,७,९,१) इति मन्त्रः ॥ १३ ॥

---

१-१. ऋश्य एव मृ° वि[2]; ऋश्यतो … मृ° अ[1]. २. सोमेषु मूको. ३. निषिञ्च मूको. ४. कामानयहं मूको. ५-५. नास्ति मूको. ६-६. °याशु° मूको. ७-७. तु. ऋ ८,५३,४. ८. भवाम मूको. ९ °वाणस्ते अ[1]. १०. धत्तं यज्ञं मूको. ११. 'वन्तीति अ[1].

उप॑ ब्र॒ध्नं वा॒वाता॒ वृष॑णा॒ हरी॒ इन्द्र॑म॒पसु॑ व॒क्षतः॑ ।
अ॒र्वाञ्चं॑ त्वा॒ सप्त॑योऽध्वर॒श्रियो॒ वह॑न्तु॒ सव॒नेदुप॑ ॥ १४ ॥

उप॑ । ब्र॒ध्नम् । व॒वाता॑ । वृष॑णा । हरी॒ इति॑ । इन्द्र॑म् । अ॒पऽसु॑ । व॒क्षतः॑ ।
अ॒र्वाञ्च॑म् । त्वा॒ । सप्त॑यः । अ॒ध्व॒र॒ऽश्रियः॑ । वह॑न्तु । सव॑ना । इत् । उप॑ ॥ १४ ॥

**वेङ्कट०** उप वहतः महान्तम् गमनशीलौ पुमांसौ अश्वौ इन्द्रम् अपसु कर्मसु । [1]सकारलोपश्छान्दसः । अर्वाञ्चम् त्वाम्[1] अश्वाः यज्ञं श्रयन्तः वहन्तु सवनानां समीपे ॥ १४ ॥

प्र पू॒षणं॑ वृणीमहे॒ युज्या॑य पुरू॒वसु॑म् ।
स श॑क्र शिक्ष पुरुहूत नो धि॒या तुजे॑ रा॒ये वि॑मोचन ॥ १५ ॥

प्र । पू॒षण॑म् । वृ॒णी॒म॒हे॒ । युज्या॑य । पु॒रु॒ऽवसु॑म् ।
सः । श॒क्र॒ । शि॒क्ष॒ । पु॒रु॒ऽहू॒त॒ । नः॒ । धि॒या । तुजे॑ । रा॒ये । वि॒ऽमो॒च॒न॒ ॥ १५ ॥

**वेङ्कट०** शौनकः — "पौष्णौ प्रे('प्र' इ)ति प्रगाथौ द्वौ मन्यते शाकटायनः ।
ऐन्द्रमेवाथ[2] पूर्वं तु गालवः[3] पौष्णमुत्तरम्" ॥ ( बृदे ६,४३ ) ॥

कात्यायनस्तु — 'चतस्रः [4]पौष्ण्यो वा' ( ऋअ २,८,४ ) इति[4] वदति ।

प्र वृणीमहे पूषणम् युज्याय सहायाय इन्द्राय बहुधनम् । इन्द्रो धनं प्रयच्छन्[5] पूष्णः प्रयच्छति ततस्तस्य प्रथममाह्वानम्[6] । सः त्वम् शक्र! पूष्णो धनमादाय पुरुहूत! प्रयच्छ अस्मभ्यं कर्मणा पुत्राय धनाय च हे विशेषेण प्रदातः! ॥ १५ ॥

[7]इति पञ्चमाष्टके सप्तमाध्याये द्वात्रिंशो वर्गः[7] ॥

सं नः॑ शिशीहि भु॒रिजो॑रिव क्षु॒रं रास्व॑ रा॒यो वि॑मोचन ।
त्वे तन्नः॑ सु॒वेद॑मु॒स्रियं॒ वसु॒ यं त्वं हि॒नोषि॒ मर्त्य॑म् ॥ १६ ॥

सम् । नः॒ । शि॒शी॒हि॒ । भु॒रिजोः॑ऽइव । क्षु॒रम् । रास्व॑ । रा॒यः । वि॒ऽमो॒च॒न॒ ।
त्वे इति॑ । तत् । नः॒ । सु॒ऽवेद॑म् । उ॒स्रिय॑म् । वसु॑ । यम् । त्वम् । हि॒नोषि॑ । मर्त्य॑म् ॥ १६ ॥

**वेङ्कट०** तीक्ष्णीकुरु अस्मान्, यथा नापितः[8] प्रवृद्धकेशस्य क्षुरम्[9] तीक्ष्णीकरोति । देहि धनानि हे विमोचनशील! । त्वयि अस्मभ्यं[10] गवात्मकं धनं सुलभं भवति, यम् च त्वम् प्रीणयसि मर्त्यम् । यद् अस्मभ्यं[11] त्वयि सुलभं धनम्, यं चास्मत्तोऽन्यं युद्धे प्रेरयसि तस्य सुलभमिति ॥१६॥

वेमि॑ त्वा पूषन्नृ॒ञ्जसे॒ वेमि॒ स्तोत॑व आघृणे ।
न तस्य॑ वे॒म्यर॑णं॒ हि तद्व॑सो स्तु॒षे प॒ज्राय॒ साम्ने॑ ॥ १७ ॥

---

१-१. ॰न्दसः ··· त्वाम् मूको. २. ऐन्द्रर्चमथ अ॰. ३. ॰लवाः वि॰; ॰लवा अ॰. ४-४. पौष्ण्यौ चेति वि॰; पौष्ण्यश्चेति अ॰. ५. ॰च्छद् मूको. ६. ॰ह्वान मूको. ७-७. नास्ति मूको. ८. नापितंर मूको. ९. (नापितस्य) हस्तयोः (तु. निघ २,४) क्षुरमिव सा. प्रभृ. १०. मध्य मूको. ११. यदास्म॰ मूको.

वेमि । त्वा । पूषन् । ऋञ्जसे । वेमि । स्तोतवे । आघृणे ।
न । तस्य । वेमि । अरणम् । हि । तत् । वसो इति । स्तुषे । पज्राय । साम्ने ॥ १७ ॥

वेङ्कट० अभिगच्छामि त्वा[1] पूषन्! हविर्भिः प्रसाधयितुम् । वेमि स्तोतुं त्वा हे आगतदीप्ते![2] । न तत् गच्छामि त्वत्तोऽप्यतिरिक्तम् । अरणम् [3]हि तत्[3] भवति । [3]यद्वा कामये त्वां प्रसाधयितुं स्तोतुं च । न तत् कामये यद् अरमणं भवति[3] । वसो! स्तौमि च वेगवते तुभ्यम् साम्ने संनमयते[4] ॥ १७ ॥

परा गावो यवसं कच्चिदाघृणे नित्यं रेक्णो अमर्त्य ।
अस्माकं पूषन्नविता शिवो भव मंहिष्ठो वाजसातये ॥ १८ ॥

परा । गावः । यवसम् । कत् । चित् । आघृणे । नित्यम् । रेक्णः । अमर्त्य ।
अस्माकम् । पूषन् । अविता । शिवः । भव । मंहिष्ठः । वाजऽसातये ॥ १८ ॥

वेङ्कट० परा गच्छेयुः यवसम् अस्मदीयाः गावः कदा चित् अपि यवसमेव प्रति गच्छेयुः आगतदीप्ते! । नित्यम् धनम् अस्माकं गावः हे अमर्त्य! । अस्माकम् हे पूषन्! अविता कल्याणः भव[5] दातृतमः धनलाभाय ॥ १८ ॥

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु ।
राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि ॥ १९ ॥

[6]स्थूरम् । राधः । शतऽअश्वम् । कुरुङ्गस्य । दिविष्टिषु ।[6]
राज्ञः । त्वेषस्य । सुऽभगस्य । रातिषु । तुर्वशेषु । अमन्महि ॥ १९ ॥

वेङ्कट० 'ऐन्द्राणामिह सूक्तानाम् [7]उत्तमस्योत्तमे तृचे[7] । दानं राज्ञः कुरुङ्गस्य स्थूरं राध इति स्तुतम्' ( बृदे ६,४४ ) । स्थूलं धनं महद्धनं बह्वश्वम् कुरुङ्गस्य दिवसागमनेषु[8] बहुदानं[9] भवति । राज्ञः दीप्तस्य सुधनस्य कुरुङ्गस्य रातिषु तुर्वशेषु मनुष्येषु स्तुमः — एतावन्महद्धनं दत्तमिति ॥ १९ ॥

धीभिः सातानि काण्वस्य वाजिनः प्रियमेधैरभिद्युभिः ।
षष्टिं सहस्रानु निर्मजामजे निर्यूथानि गवामृषिः ॥ २० ॥

धीभिः । सातानि । काण्वस्य । वाजिनः । प्रियऽमेधैः । अभिद्युऽभिः ।
षष्टिम् । सहस्रा । अनु । निःऽमजाम् । अजे । निः । यूथानि । गवाम् । ऋषिः ॥ २० ॥

वेङ्कट० कर्मभिः प्रत्तानि काण्वस्य [10]देवातिथेः वाजिनः[10] प्रियमेधैः अभिगतदीप्तिभिः[11] नितरां शुद्धानाम् गवाम् षष्टिम् सहस्राणि प्रियमेधेभ्यो देवातिथिः ऋषिः यूथभूतानि अनुक्रमेण निः अजे इति ॥ २० ॥

---

१. त्वां अ[1]. २. द्वागत° अ[1]. ३-३. नास्ति अ[1]. ४. °यतीति अ[1]. ५ भवथा अ[1].
६-६ तु. यास्कः ( ६,२२ ). ७-७. तदेतत् तृ° मूको. ८. = अहर्मुखेषु, उषस्सु ( तु. ऋ १,४५,७ प्रभृ; ७,४,१ च ); दिवसेष्वङ्गु वि[2]; दिवसेषु अङ्गस्सु अ[1]. ९. भहिदानं अ[1]; बहिदा° वि[2]. १०-१०. °तिथे··· वि[2] अ[1]. ११. अधिगः अ[1].

वृक्षाश्चिन्मे अभिपित्वे अरारणुः ।
गां भजन्त मेहनाश्वं भजन्त मेहना ॥ २१ ॥

वृक्षाः । चित् । मे । अभिऽपित्वे । अरारणुः ।
गाम् । भजन्त । मेहना । अश्वम् । भजन्त । मेहना ॥ २१ ॥

वेङ्कट० वृक्षाः अपि आश्रमगताः मम अभिप्राप्तौ अरारणुः हर्षाच्छब्दमकुर्वन् । यद्वा रेमिरे । मया प्रतिगृहीताम् गाम् भजन्त मेहनानि सेचमानानि[1], एवम् अश्वम् च । गावोऽश्वाश्च आश्रमस्थिता मूत्रयन्त इति ॥ २१ ॥

[2]इति पञ्चमाष्टके सप्तमाध्याये त्रयस्त्रिंशो वर्गः[2] ॥

व्याख्यत् सप्तममध्यायं पञ्चमस्याष्टकस्य सः ।
गोवर्धनकुले जातो माधवः सुन्दरीसुतः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने पञ्चमाष्टके सप्तमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये पञ्चमाष्टके सप्तमोऽध्यायः ॥



1. वैतु. तु. SEY ११७; यास्कः (४,४). २-२. नास्ति मूको.

## अथ अष्टमोऽध्यायः ।

वेङ्कट०

'दूरादिहेव यत्सती'[1] व्याचिख्यासति माधवः ।
पितृपुत्रसमावेशे वक्तव्यं सम्प्रदर्शयन् ॥ १ ॥

कण्वस्य पुत्रः प्रस्कण्वः [2]'प्र वो यह्वम्'† पितुः[2] स्मृतम्[3] ।
आर्षम् 'अग्ने विवस्वत्'[4] च पुत्रस्य तदनन्तरम् ॥ २ ॥

मधुच्छन्दाः पिता पुत्रम् आहुस्तस्य धनञ्जयम्[5] ।
'अग्निमीळे'[6] मधुच्छन्दाः 'इन्द्रं विश्वाः'[7] धनञ्जयः ॥ ३ ॥

विश्वामित्रः पिता पुत्र ऋषभस्तस्य कीर्तितः ।
पितुः 'सोमस्य'[8] इत्यार्षम् ऋषभस्य 'प्र वः'[9] स्मृतम् ॥ ४ ॥

अर्चनानाः पिता पुत्रः श्यावाश्वस्तस्य[10] कीर्तितः ।
'ऋतस्य गोपावधि तिष्ठथः'[11] पितुरार्षं विदुः ॥ ५ ॥

'प्र श्यावाश्व'[12] पितुः पूर्वं पुत्रः श्यावाश्व आगतः ।
पितृपुत्रविपर्यासे किन्तु स्यादत्र कारणम् ॥ ६ ॥

बहूनि पश्यन् सूक्तानि श्यावाश्वः पूर्वमागतः ।
अर्चनानाः[13] पिता पश्चाद् इति वृद्धेभ्य आगमः ॥ ७ ॥

विश्वामित्रपिता गाधिः स विश्वामित्रमण्डले ।
पश्चात् पुत्राद् आजगाम स चासीदृषिरल्पदृक्[14] ॥ ८ ॥

कतस्य[15] [16]पुत्र उत्कीलस्तस्य[16] सूक्ते 'वि पाजसा'[17] ।
पितुश्च सूक्ते द्वे एव 'समिध्यमानः'[18], 'भवा नः'[19] ॥ ९ ॥

ऋचस्त्रयोदशाऽपश्यत् सूनुर्दश[20] पिता ततः ।
अनाश्रित्य सूक्तसाम्यं पिता पश्चात् समागतः ॥ १० ॥

---

१. यत्सेति अ[1] वेंऋअ. २-२. प्रवोऽयं ··· वि[1] ··· अ[1]. † ऋ १, ३६, १. ३. मतम् वेंऋअ. ४. ऋ १,४४,१. ५. धनञ्जयम् वेंऋअ. ६. ऋ १,१,१. ७. ऋ १,११,१. ८. ऋ ३,१,१. ९. ऋ ३,१३,१. १०. शायाश्व° वि[2] अ[1]. ११. ऋ ५,६३,१. १२. ऋ ५,५२,१. १३. °नाना अ[1]; °नानां वि[1]. १४. °षिकल्प° वि[2] अ[1]. १५. कस्य वि[2] अ[1]. १६-१६. तनयोत्की° वि[1]; तनयोकी° अ[1]. १७. ऋ ३,१५,१. १८. ऋ ३,१७,१. १९. ऋ ३,१८,१. २०. °नुर्ददर्श वि[2]; °नुदर्श अ[1].

सुहोत्रश्शुनहोत्रश्च भारद्वाजा[१] नरस्तथा ।
समागता यथाज्येष्ठं भरद्वाजस्य मण्डले ॥ ११ ॥

'अभूरेको रयिपते'[२] षट् सूक्तानि यथाक्रमम् ।
अपश्यन्नृषयो द्वे-द्वे सन्त्यन्यत्र च तादृशाः ॥ १२ ॥

भ्रातॄणामपरो मध्य ऋषिः कश्चिन्न दृश्यते ।
त्रिशोकनाभाकमध्ये[३] विरूपः कथमागतः ॥ १३ ॥

'अग्निमस्तोष्यृग्मियम्'[४] नाभाकार्षं विदुर्बुधाः ।
एवमादीनि सूक्तानि विरूपस्तत[५] आगतः ॥ १४ ॥

'इमे विप्रस्य वेधसः'[६] तद्विरूपार्षमुच्यते ।
[७]'आ घा ये अग्निमिन्धते'† त्रैशोकं सूक्तमुच्यते[७] ॥ १५ ॥

नाभाकश्च त्रिशोकश्च[८] भ्रातराविति कोऽब्रवीत् ।
शाट्यायने[९] श्रूयते हि त्रैशोकब्राह्मणे तथा ॥ १६ ॥

अत्र शाट्यायनकम्—'कण्वो वै नार्षदो[१०] बकस्यासुरस्य दुहितरमविन्दत । तस्यां हास्य त्रिशोकनाभाकौ[११] पुत्रौ जज्ञाते' । इति ।

श्रूयतां परिहारोऽत्र 'यो यजाति यजात इत्'[१२] ।
इत्येवमादिकः कश्चिदनुवाकः स्मृतो बुधैः ॥ १७ ॥

अन्ते तस्यानुवाकस्य नाभाकः[१३] पर्यवस्थितः ।
उत्तरस्यानुवाकस्य विरूपो मुखतः स्थितः ॥ १८ ॥

'इमे विप्रस्य वेधसः'[१४] सूक्तमाग्नेयमुच्यते ।
[१५]'आ घा ये अग्निमिन्धते'† ऐन्द्रं त्रैशोकमुच्यते[१५] ॥ १९ ॥

मण्डलादिष्विवाग्नेयम् ऐन्द्रात्प्राक् स्थापितं बुधैः ।
अनुवाकान्तरत्वाच्च न भ्रातृत्वं नियामकम् ॥ २० ॥

---

१. भारद्वाजे वि[२]; भरद्वाजे अ[१]. २. ऋ ६,३१,१. ३. °नामा तं मध्ये वि[२] अ[१]. ४. ऋ ८, ३९,१. ५. °स्तत्र वि[२] अ[१]. ६. ऋ ८,४३,१. ७-७. नास्ति अ[१]. † ऋ ८,४५,१. ८. किशो° वि[२]; विशो° अ[१]. ९. °यानिः वि[२] अ[१]. १०. नार्षः द्वो वि[२] अ[१]. ११. तिशोकनाभागौ वि[२]; तिशोकनाभागो अ[१] । °कनभा° वैप २. १२. ऋ ८,३१,१. १३. नाभागः वि[२]. १४. ऋ ८,४३,१. १५-१५. नास्ति अ[१]. † ऋ ८,४५,१. १६. °ष्वपा° वि[२] अ[१].

अथायं केन विन्यासः सर्वो दृष्टो महर्षिणा ।
सर्वस्यां संहितायां यः सर्वैरिति विपश्चितः ॥ २१ ॥

मण्डलान्यृषयो[1] दृष्ट्वा[2] सर्व एव समागताः ।
विन्यासं ददृशुः पश्चादिति [3]वृद्धेभ्य आगमः[3] ॥ २२ ॥

कल्पनं चानुवाकानाम् ऋषिदृष्टमिति[4] स्थितिः ।
[5]नह्यनार्षमिदं[5] युक्तं यद् दृष्टं ब्राह्मणेष्विति ॥ २३ ॥

'स्वादिष्ठया मदिष्ठया'[6] तासामध्ययने फलम् ।
प्रादर्शयद्वसिष्ठोऽन्ते 'यः पावमानीरध्येति'[7] ॥ २४ ॥

एवं सर्वैः प्रदृष्टानां[8] सूक्तानां क्रमदर्शनम् ।
युक्तमन्ते सङ्गतानाम् अत्र[9] वृद्धेषु निर्णयः ॥ २५ ॥

तथैवान्येन[10] दृष्टेषु मन्त्रेष्वन्ये महर्षयः ।
नानाविधानि सूक्तानि[11] पश्यन्त्यपि च सङ्गताः ॥ २६ ॥

अचिन्त्यमद्भुतं वेदं साङ्गोपाङ्गमधीयते ।
अस्यागमं यथातत्त्वम् ऋषिरेवावगच्छति ॥ २७ ॥

[12]ऋषिनामार्षगोत्रेषु[12] पञ्चमेऽस्माभिरष्टके ।
अध्यायादिषु वक्तव्यं विभज्योक्तं क्रमादिति ॥ २८ ॥

[ ५ ]

[13]ब्रह्मातिथिः काण्व ऋषिः । अश्विनौ देवता, अन्त्यानां पञ्चानाम् उत्तरार्धर्चानां कशुश्चैद्यः । गायत्री छन्दः, सप्तत्रिंश्यष्टात्रिंश्यौ बृहत्यौ, अन्त्यानुष्टुप्[13] ।

**दूरादिहेव यत् सत्यरुणप्सुरशिश्वितत् । वि भानुं विश्वधातनत् ॥ १ ॥**

दूरात् । इहऽइव । यत् । सती । अरुणऽप्सुः । अशिश्वितत् । वि । भानुम् । विश्वधा । अतनत् ॥१॥

**वेङ्कट०** ब्रह्मातिथिः । दूरात् इह इव [14]यदा भवन्ती[14] दूरे स्थिताऽपीहेव भवन्ती[15] प्रकाशाद् अरुणरूपा प्राच्याम् अशिश्वितत्[16], तदानीम् वि अतनत् दीप्तिम्[17] सर्वेषु देशेषु ॥ १ ॥

---

१. °लादृष° वि[2] अ[1]. २. दृष्टाः वि[2] अ[1]. ३-३. वृद्धो ह्यभाषत वि[2]. ४. °काना अ[1].
५-५. न च ह्यार्ष° वि[2]; नह्यावर्ष° अ[1]. ६. ऋ ९,१,१. ७. ऋ ९,६७,३१. ८. प्रदिष्टानां वि[2] अ[1].
९. इति वेंऋअ. १०. नान्येषु दृष्टेष्वन्येषु अ[1]; प्रदिष्टानान्येन वि[2]. ११. सामानि वि[2] अ[1].
१२-१२. ऋषिणामार्षगोत्राणि अ[1]; ऋषिर्नामा° वि[2]. १३-१३. नास्ति मूको. १४-१४. यथा भवन्ति मूको.
१५. भवति वि[2]; भवन्ति अ[1]. १६. नास्ति अ[1]. १७. दीप्त वि[2].

नृवद् दस्रा मनोयुजा रथेन पृथुपाजसा । सचेथे अश्विनोषसम् ॥ २ ॥

नृऽवत् । दस्रा । मनःऽयुजा । रथेन । पृथुऽपाजसा । सचेथे इति । अश्विना । उषसम् ॥ २ ॥

**वेङ्कट०** मनुष्यराजवद् हे दर्शनीयौ! मनसा युज्यमानेन रथेन पृथुबलेन सचेथे हे अश्विनौ! उषसम् इमाम् ॥ २ ॥

युवाभ्यां वाजिनीवसू प्रति स्तोमा अदृक्षत । वाचं दूतो यथोहिषे ॥ ३ ॥

युवाभ्याम् । वाजिनीवसू इति वाजिनीऽवसू । प्रति । स्तोमाः । अदृक्षत । वाचम् । दूतः । यथा । ओहिषे ॥

**वेङ्कट०** हे अन्नवद्वसू! युवाभ्याम् अस्मदीयाः स्तोमाः प्रति दृश्यन्ते । दूतः यथा वाचम् प्रापयति तद्वद् वाचमहं प्रापयामि ॥ ३ ॥

पुरुप्रिया ण ऊतये पुरुमन्द्रा पुरूवसू । स्तुषे कण्वासो अश्विना ॥ ४ ॥

पुरुऽप्रिया । नः । ऊतये । पुरुऽमन्द्रा । पुरुवसू इति पुरुऽवसू । स्तुषे । कण्वासः । अश्विना ॥ ४ ॥

**वेङ्कट०** बहूनां प्रियौ बहूनां[1] मोदनौ अस्माकं रक्षणाय बहूनां वासयितारौ अश्विनौ स्तोतुं प्रवृत्ताः कण्वा इति ॥ ४ ॥

मंहिष्ठा वाजसातमेषयन्ता शुभस्पती । गन्तारा दाशुषो गृहम् ॥ ५ ॥

मंहिष्ठा । वाजऽसातमा । इषयन्ता । शुभः । पती इति । गन्तारा । दाशुषः । गृहम् ॥ ५ ॥

**वेङ्कट०** दातृतमौ अन्नानाम् अत्यन्तं दातारौ अन्नमिच्छन्तौ उदकस्य पती गन्तारौ[2] यजमानस्य गृहम् ॥ ५ ॥

[3]इति पञ्चमाष्टके अष्टमाध्याये प्रथमो वर्गः[3] ॥

ता सुदेवाय दाशुषे सुमेधामवितारिणीम् । घृतैर्गव्यूतिमुक्षतम् ॥ ६ ॥

ता । सुऽदेवाय । दाशुषे । सुऽमेधाम् । अविऽतारिणीम् । घृतैः । गव्यूतिम् । उक्षतम् ॥ ६ ॥

**वेङ्कट०** तौ शोभनदेवाय[4] यजमानाय सुप्रज्ञाम् अवितारिणीम् या[5] विविधं न गच्छति तां निश्चलां बुद्धिं प्रयच्छथः । तावस्माकम्[6] उदकैः गोमार्गम् सिञ्चतम् ॥ ६ ॥

आ नः स्तोममुप द्रवत् तूयं श्येनेभिराशुभिः । यातमश्वेभिरश्विना ॥ ७ ॥

आ । नः । स्तोमम् । उप । द्रवत् । तूयम् । श्येनेभिः । आशुऽभिः । यातम् । अश्वेभिः । अश्विना ॥७॥

**वेङ्कट०** उप आ यातम् अस्माकम् स्तोमम् द्रुतं क्षिप्रम् श्येनेभिः[1] आशुभिः । 'श्येनः, आशुः'[7] (तु. निघ १,१४) इत्यश्वनामनी । श्येनः शंसनीयगमनः । आशुः अश्नोत्यध्वानम्[8] । तैः अश्वैः आयातम् हे अश्विनौ! इति ॥ ७ ॥

---

१. नास्ति वि[१]. २. गन्तारो मूको. ३-३. नास्ति मूको. ४. शोभनदेवा मूको. ५. यां मूको. ६. तवास्मा° मूको. ७. आगुः मूको. ८. आगुर° मूको.

येभिस्तिस्रः परावतो दिवो विश्वानि रोचना । त्रीँरक्तून् परिदीयथः ॥ ८ ॥

येभिः । तिस्रः । पराऽवतः । दिवः । विश्वानि । रोचना । त्रीन् । अक्तून् । परिऽदीयथः ॥ ८ ॥

वेङ्कट० येभिः[1] अश्वैः तिस्रः परावतः परि-गच्छथः दिवः च विश्वानि रोचनानि । दूरे युक्तास्त्रयो लोकास्तिस्रः परावतः । त्रीन् अक्तून्[2] [3]इत्यग्निवायुसूर्यान् नूनमाहेति[3] । सर्वमिदं परितो गच्छथः यैरश्वैरिति ॥ ८ ॥

उत नो गोमतीरिष उत सातीरहर्विदा । वि पथः सातये सितम् ॥ ९ ॥

उत । नः । गोऽमतीः । इषः । उत । सातीः । अहःऽविदा । वि । पथः । सातये । सितम् ॥ ९ ॥

वेङ्कट० अपि च अस्मभ्यं गोमन्ति अन्नानि, अपि च धनानि हे अह्नां लम्भयितारौ! प्रयच्छतम्[4] । तल्लाभाय गमनमार्गांश्च भिक्षूणामस्माकम् वि सितम् । विपूर्वः सिनातिर्विमोचने । प्रतिबन्धकान् अपनयतम्[5] मार्गेभ्य इति ॥ ९ ॥

आ नो गोमन्तमश्विना सुवीरं सुरथं रयिम् । वोळहमश्वावतीरिषः ॥ १० ॥

आ । नः । गोऽमन्तम् । अश्विना । सुऽवीरम् । सुऽरथम् । रयिम् । वोळ्हम् । अश्वऽवतीः । इषः ॥

वेङ्कट० आ वहतम् अस्माकम्[6] गोमन्तम् हे अश्विनौ! सुपुत्रम् सुरथम् च रयिम् धनम् अश्ववन्ति अन्नानि च ॥ १० ॥

[7]इति पञ्चमाष्टके अष्टमाध्याये द्वितीयो वर्गः[7] ॥

वावृधाना शुभस्पती दस्रा हिरण्यवर्तनी । पिबतं सोम्यं मधु ॥ ११ ॥

ववृधाना । शुभः । पती इति । दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । पिबतम् । सोम्यम् । मधु ॥

वेङ्कट० वर्धमानौ हे उदकपती![8] दर्शनीयौ! हिरण्ययुक्तमार्गौ पिबतम् सोममयम् मधु ॥ ११ ॥

अस्मभ्यं वाजिनीवसू मघवद्भ्यश्च सप्रथः । छर्दिर्यन्तमदाभ्यम् ॥ १२ ॥

अस्मभ्यम् । वाजिनीवसू इति वाजिनीऽवसू । मघवत्ऽभ्यः । च । सऽप्रथः । छर्दिः । यन्तम् । अदाभ्यम् ॥

वेङ्कट० हे अस्मभ्यम् हे अन्नयुक्तधनौ! हविष्मद्भ्यः च[9] सर्वतः पृथुतमम् गृहम् प्रयच्छतम् अनभिभवनीयं शत्रुभिः ॥ १२ ॥

नि षु ब्रह्म जनानां याविष्टं तूयमा गतम् । मो ष्वन्याँ उपारतम् ॥ १३ ॥

नि । सु । ब्रह्म । जनानाम् । या । अविष्टम् । तूयम् । आ । गतम् । मो इति । सु । अन्यान् । उप । अरतम् ॥

---

१. यैः अ[1]. २. अप्तून् मूको. ३-३. °र्यान्नमा° अ[1]. ४. यच्छतम् अ[1]. ५. °वनयति अ[2].
६. आवत° मूको. ७-७. नास्ति मूको. ८. °कवती मूको. ९. ··· अयुक्तधनौ च मूको.

वेङ्कट० नितरां रक्षितवन्तौ कर्म जनानाम् यौ तौ क्षिप्रम् अस्मानपि आ [1]गच्छतम्। मा एव अन्यान् उप गच्छतम्। सु पूरण इति[1] ॥ १३ ॥

अस्य पिबतमश्विना युवं मदस्य चारुणः। मध्वो रातस्य धिष्ण्या ॥ १४ ॥

अस्य। पिबतम्। अश्विना। युवम्। मदस्य। चारुणः। मध्वः। रातस्य। धिष्ण्या ॥ १४ ॥

वेङ्कट० अमुम् पिबतम् अश्विनौ! युवाम् सोमम् चारुम् मधुसदृशम् अस्माभिः प्रत्तम् हे धिषणार्हौ![2] इति ॥ १४ ॥

अस्मे आ वहतं रयिं शतवन्तं सहस्रिणम्। पुरुक्षुं विश्वधायसम् ॥ १५ ॥

अस्मे इति। आ। वहतम्। रयिम्। शतऽवन्तम्। सहस्रिणम्। पुरुऽक्षुम्। विश्वऽधायसम् ॥ १५ ॥

वेङ्कट० अस्मभ्यम् आ वहतम् रयिम् [3]शतसहस्रसङ्ख्याकम् बहुशब्दम्[3] प्रसिद्धम् सर्वेषां धर्तारम् ( तु. ऋ ८,७,१३ ) ॥ १५ ॥

[4]इति पञ्चमाष्टके अष्टमाध्याये तृतीयो वर्गः[4] ॥

पुरुत्रा चिद्धि वां नरा विह्वयन्ते मनीषिणः। वाघद्भिरश्विना गतम् ॥ १६ ॥

पुरुऽत्रा। चित्। हि। वाम्। नरा। विऽह्वयन्ते। मनीषिणः। वाघत्ऽभिः। अश्विना। आ। गतम् ॥ १६॥

वेङ्कट० बहुषु [5]देशेषु हि[5] वाम् नरौ! विविधम् ह्वयन्ते स्तोतारः। वोढृभिरश्वैः हे अश्विनौ! आ गच्छतम् ॥ १६ ॥

जनासो वृक्तबर्हिषो हविष्मन्तो अरंकृतः। युवां हवन्ते अश्विना ॥ १७ ॥

जनासः। वृक्तऽबर्हिषः। हविष्मन्तः। अरम्ऽकृतः। युवाम्। हवन्ते। अश्विना ॥ १७ ॥

वेङ्कट० जनाः छिन्नबर्हिषः हविष्मन्तः पर्याप्तकारिणः[6] युवाम् हवन्ते हे अश्विनौ! ॥ १७ ॥

अस्माकमद्य वामयं स्तोमो वाहिष्ठो अन्तमः। युवाभ्यां भूत्वश्विना ॥ १८ ॥

अस्माकम्। अद्य। वाम्। अयम्। स्तोमः। वाहिष्ठः। अन्तमः। युवाभ्याम्। भूतु। अश्विना ॥१८॥

वेङ्कट० युवयोः अत्यन्तं वोढा अस्माकम् अयम् स्तोमः अद्य अन्तिकतमः भवतु युवाभ्याम् हे अश्विनौ! ॥१८॥

यो ह वां मधुनो दृतिराहितो रथचर्षणे। ततः पिबतमश्विना ॥ १९ ॥

यः। ह। वाम्। मधुनः। दृतिः। आऽहितः। रथऽचर्षणे। ततः। पिबतम्। अश्विना ॥ १९ ॥

वेङ्कट० यः[7] खलु युवयोः मधुनः पूर्णः दृतिः आहितः रथचर्षणे नीडे रथस्य, ततः दृतेः पिबतम् मधु हे अश्विनौ!। रथोपस्थेऽश्विनोर्यजमानेन प्रदत्तेन[8] सोमेन पूर्णो दृतिर्दृश्यत[9] इति ॥ १९ ॥

---

१-१. °छतमेवान्यातुपगच्छत सुदूरणाविति मूको. २. वृषणार्हौ मूको. ३-३. °ख्याकबहु° वि[२]. ४-४. नास्ति मूको. ५-५. हि देशेषु अ[१]. ६. पर्याप्तकारणौ मूको. ७. यः स अ[१]. ८. प्रवृत्तेन मूको. ९. दृतिश्चेत मूको.

तेन॑ नो वाजिनीवसू पश्वे॑ तो॒काय॒ शं गवे॑ । वह॑तं पीव॑री॒रिषः॑ ॥ २० ॥

तेन॑ । नः॒ । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू । पश्वे॑ । तो॒काय॑ । शम् । गवे॑ । वह॑तम् । पीव॑रीः । इषः॑ ॥२०॥

**वेङ्कट०** तेन पीतेन सोमेन अस्माकम् हे अन्नवद्वसू! [1]पश्वे अजाविकादिने[1] पुत्राय च गवे च सुखम् वहतम्, स्थूलानि चान्नानि ॥ २० ॥

[2]इति पञ्चमाष्टके अष्टमाध्याये चतुर्थो वर्गः[2] ॥

उ॒त नो॑ दि॒व्या इष॑ उ॒त सिन्धूँ॑रहर्विदा । अप॒ द्वारे॑व वर्षथः ॥ २१ ॥

उ॒त । नः॒ । दि॒व्याः । इषः॑ । उ॒त । सिन्धू॑न् । अ॒हः॒ऽवि॒दा॒ । अप॑ । द्वारा॑ऽइव । व॒र्ष॒थः॒ ॥ २१ ॥

**वेङ्कट०** अपि च अस्माकं दिव्यानि अन्नानि अपि च उदकानि, हे अहर्विदौ! अह्नो[3] ज्ञातारौ! [4]द्वारेण इव[4] अप वर्षथः । यथा अन्तर्निहितं कश्चिद् द्वारेणापगमयति तथा प्रयच्छतमिति ॥ २१ ॥

क॒दा वां॑ तौ॒ग्र्यो वि॑धत् समु॒द्रे ज॑हि॒तो न॑रा । यद् वां॒ रथो॒ विभि॒ष्पता॑त् ॥२२॥

क॒दा । वा॒म् । तौ॒ग्र्यः । वि॒ध॒त् । स॒मु॒द्रे । ज॒हि॒तः । न॒रा॒ । यत् । वा॒म् । रथः॑ । विऽभिः॑ । पता॑त् ॥२२॥

**वेङ्कट०** कदा वाम् तौग्र्यः पर्यचरत् समुद्रे सहायैः त्यक्तः हे नरौ! । यदा[5] युवयोः रथः अश्वैर्युक्तः अपतत्[6] अग्रतः प्रादुरभूत् । परिचरणावसरस्तत्र न विद्यत इति [7]परिचरणसमकालमेव प्रादुरभवदिति[7] ॥ २२ ॥

यु॒वं कण्वा॑य नासत्या॒पिरि॑प्ताय ह॒र्म्ये । शश्व॑दू॒तीर्द॑शस्यथः ॥ २३ ॥

यु॒वम् । कण्वा॑य । ना॒स॒त्या॒ । अपि॑ऽरिप्ताय । ह॒र्म्ये । शश्व॑त् । ऊ॒तीः । द॒श॒स्य॒थः॒ ॥ २३ ॥

**वेङ्कट०** युवम् कण्वाय नार्षदाय[8] हे नासत्यौ! असुरैर्गृहे प्रक्षिप्ताय बहूनि रक्षणानि प्रयच्छतम् । 'यन्नार्षदाय श्रवो अध्यधत्तम्' ( ऋ १,११७,८ ) इत्युक्तम् ॥ २३ ॥

ताभि॒रा या॑तमू॒तिभि॒र्नव्य॑सीभिः सुश॒स्तिभिः॑ । यद् वां॑ वृषण्वसू हु॒वे ॥ २४ ॥

ताभिः॑ । आ । या॒त॒म् । ऊ॒तिऽभिः॑ । नव्य॑सीभिः । सु॒श॒स्तिऽभिः॑ ।
यत् । वा॒म् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । हु॒वे ॥ २४ ॥

**वेङ्कट०** तैः आ यातम् रक्षणैः नवतरैः सुस्तोत्रैः कल्याणैः । यदा वाम् हे वृषण्वसू! ह्वयामि ॥ २४ ॥

यथा॑ चि॒त् कण्व॒माव॑तं प्रि॒यमे॑धमुपस्तु॒तम् । अत्रिं॑ शि॒ञ्जार॑मश्विना ॥ २५ ॥

यथा॑ । चि॒त् । कण्व॑म् । आव॑तम । प्रि॒यऽमे॑धम् । उ॒प॒ऽस्तु॒तम् । अत्रि॑म् । शि॒ञ्जार॑म् । अ॒श्वि॒ना॒ ॥ २५ ॥

---

१ पश्वेज्याविकादिने वि[1]; पश्वेष्याधिकादिने अ[1]. २-२. नास्ति मूको. ३. अन्नौ वि[2]; अह्नौ अ[1]. ४-४. द्वारेणेव मूको. ५. यथा मूको. ६. पतात् वि[2]. ७-७. °मेव सहायैस्त्यक्ते तूग्रपुत्रे झटित्येव युवयोः रथः प्रादुरभूत् अ[1]. ८. नोर्षदाय मूको.

वेङ्कट० यथा चित् कण्वम् अरक्षतम्, यथा वा प्रियमेधम्, यथा वा उपस्तुतम्, यथा [1]वा अत्रिम्[1], यथा वा शिञ्जारम्[2] हे अश्विनौ! ॥ २५ ॥

[3]इति पञ्चमाष्टके अष्टमाध्याये पञ्चमो वर्गः[3] ॥

यथोत कृत्व्ये धनेंऽशुं गोष्वगस्त्यम् । यथा वाजेषु सोभरिम् ॥ २६ ॥

यथा । उत । कृत्व्ये । धने । अंशुम् । गोषु । अगस्त्यम् । यथा । वाजेषु । सोभरिम् ॥ २६ ॥

वेङ्कट० यथा अपि च कर्तव्ये धने अंशुम् नाम राजानम्, गोनिमित्तं स्तुवन्तम् अगस्त्यम् च, यथा[4] वा युद्धेषु सोभरिम् नाम आवतम्[5]। तथा अस्मानपि रक्षतमिति ॥ २६ ॥

एतावद् वां वृषण्वसू अतो वा भूयो अश्विना । गृणन्तः सुम्नमीमहे ॥ २७ ॥

एतावत् । वाम् । वृषण्वसू इति वृषण्ऽवसू । अतः । वा । भूयः । अश्विना । गृणन्तः । सुम्नम् । ईमहे ॥२७॥

वेङ्कट० हे प्रदीयमानधनौ! वयं स्तुवन्तः एतावत् सुखं याचामहे यावदुक्तेभ्यः ऋषिभ्यः भवद्भ्यां कृतम्, अपि वा अतः अपि भूयः इति ॥ २७ ॥

रथं हिरण्यवन्धुरं हिरण्याभीशुमश्विना । आ हि स्थाथो दिविस्पृशम् ॥२८॥

रथम् । हिरण्यऽवन्धुरम् । हिरण्यऽअभीशुम् । अश्विना । आ । हि । स्थाथः । दिविऽस्पृशम् ॥ २८ ॥

वेङ्कट० रथम् हिरण्मयबन्धुरम् हिरण्मयाऽभीशुम् हे अश्विनौ! आ हि तिष्ठथः दिविस्पृशम् ॥ २८ ॥

हिरण्ययी वां रभिरीषा अक्षो हिरण्ययः । उभा चक्रा हिरण्यया ॥ २९ ॥

हिरण्ययी । वाम् । रभिः । ईषा । अक्षः । हिरण्ययः । उभा । चक्रा । हिरण्यया ॥ २९ ॥

वेङ्कट० युवयोः रथस्य सर्वमङ्गं हिरण्मयमिति । रभिः[6] उपस्तम्भनमित्याहुः ॥ २९ ॥

तेन नो वाजिनीवसू परावतश्चिदा गतम् । उपेमां सुष्टुतिं मम ॥ ३० ॥

तेन । नः । वाजिनीवसू इति वाजिनीऽवसू । पराऽवतः । चित् । आ । गतम् ।
उप । इमाम् । सुऽस्तुतिम् । मम ॥ ३० ॥

वेङ्कट० तेन अस्माकम् हे अन्नवद्धनौ![7] दूरादपि आ गच्छतम्, आगतौ च इमाम् मम सुष्टुतिम् उप आगच्छतम् ॥ ३० ॥

[3]इति पञ्चमाष्टके अष्टमाध्याये षष्ठो वर्गः[3] ॥

---

१-१. पात्रं मूको. २. नास्ति मूको. ३-३. नास्ति मूको. ४. तथा मूको. ५. पततम् मूको.
६. रश्मिभिः वि[2]. ७. अन्नवर्धनौ मूको.

आ वंहेथे परा॒कात् पू॒र्वीर॒श्नन्ता॑वश्विना । इषो॒ दासी॑रमर्त्या ॥ ३१ ॥

आ । व॒हे॒थे॒ इति॑ । प॒रा॒कात् । पू॒र्वीः । अ॒श्नन्तौ॑ । अ॒श्वि॒ना॒ । इषः॑ । दासीः॑ । अ॒म॒र्त्या॒ ॥ ३१ ॥

**वेङ्कट०** आ गच्छथः दूरात् बहूनि अश्नन्तौ अश्विनौ! असुराणां स्वभूतान्यन्नानि हे अमर्त्यौ!। तेषां जयार्थमागच्छतमित्यर्थः । अशिर्व्याप्तिकर्मेति ॥ ३१ ॥

आ नो॑ द्यु॒म्नैरा श्रवो॑भि॒रा रा॒या या॑तमश्विना । पुरु॑श्चन्द्रा॒ नास॑त्या ॥ ३२ ॥

आ । न॒ः । द्यु॒म्नैः । आ । श्रवः॑ऽभिः । आ । रा॒या । या॒त॒म् । अ॒श्वि॒ना॒ । पुरु॑ऽचन्द्रा । नास॑त्या ॥ ३२ ॥

**वेङ्कट०** आ यातम् अस्मान् अन्नैः [1]कीर्तिभिः धनेन[1] हे अश्विनौ! बहुहिरण्यौ! नासत्यौ! ॥ ३२ ॥

एह वां॑ प्रुषि॒तप्स॑वो॒ वयो॑ वहन्तु प॒र्णिनः॑ । अच्छा॑ स्वध्व॒रं जन॑म् ॥ ३३ ॥

आ । इ॒ह । वा॒म् । प्रु॒षि॒तऽप्स॑वः । वयः॑ । व॒ह॒न्तु॒ । प॒र्णिनः॑ । अच्छ॑ । सु॒ऽअ॒ध्व॒रम् । जन॑म् ॥ ३३ ॥

**वेङ्कट०** आ वहन्तु इह वाम् दीप्तिरूपाः अश्वाः पतनवन्तः[2] सुयज्ञम् यजमानम् प्रति ॥ ३३ ॥

रथं॑ वा॒मनु॑गायसं॒ य इ॒षा वर्त॑ते स॒ह । न च॒क्रम॒भि बा॑धते ॥ ३४ ॥

रथ॑म् । वा॒म् । अनु॑ऽगायसम् । यः । इ॒षा । वर्त॑ते । स॒ह । न । च॒क्रम् । अ॒भि । बा॒ध॒ते॒ ॥ ३४ ॥

**वेङ्कट०** रथम् वाम्[3] [4]स्तोतृभिरनुगीयमानम् यः हविषा[4] सह वर्तयति, न तं[5] [6]परचक्रम् अभि भवति[6] ॥ ३४ ॥

हि॒र॒ण्यये॑न॒ रथे॑न द्र॒वत्पा॑णिभि॒रश्वैः॑ । न धीज॑वना॒ नास॑त्या ॥ ३५ ॥

हि॒र॒ण्यये॑न । रथे॑न । द्र॒वत्पा॑णिऽभिः । अश्वैः॑ । धीऽज॑वना । नास॑त्या ॥ ३५ ॥

**वेङ्कट०** हिरण्मयेन रथेन द्रवत्पाणिभिः च अश्वैः तस्मिन् युक्तैः हे धीजवनौ![7] कर्मभिर्जवं कुर्वाणौ![8] नासत्यौ! आगच्छतमिति ॥ ३५ ॥

[9]इति पञ्चमाष्टके अष्टमाध्याये सप्तमो वर्गः[9] ॥

यु॒वं मृ॒गं जा॑गृ॒वांसं॒ स्वद॑थो वा वृषण्वसू । ता नः॑ पृङ्क्तमि॒षा र॒यिम् ॥ ३६ ॥

यु॒वम् । मृ॒गम् । जा॒गृ॒ऽवांस॑म् । स्वद॑थः । वा॒ । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।
ता । न॒ः । पृ॒ङ्क्त॒म् । इ॒षा । र॒यिम् ॥ ३६ ॥

---

१-१. °भिर्वर्ध° मूको. २. वहन्तु वि[२]. ३. वा मूको. ४-४. °नयोई° अ[१]. ५. कं वि[२]. ६-६. पेरव कर्मभिर्भवति मूको. ७. °वनः वि[२]; °वनो अ[१]. ८. कुर्वाणः मूको. ९-९. नास्ति मूको.

वेङ्कट० मृगः[1] मृगयतेः[2] ( तु. या ९,१९ )। युवां[3] मृगयमाणं स्तोतारम् जागरणपरम् स्वदथः च हे वृषण्वसू !। तौ [4]अस्मभ्यम् अन्नेन[4] रयिम् सम्पृञ्चेथाम् ॥ ३६ ॥

ता मे॑ अश्विना सनी॒नां वि॑द्यातं॒ नवा॑नाम् ।
यथा॑ चिच्चै॒द्यः क॑शुः श॒तमुष्ट्रा॑नां॒ ददत् स॒हस्रा॒ दश॒ गोना॑म् ॥ ३७ ॥

ता । मे॒ । अ॒श्वि॒ना॒ । स॒नी॒नाम् । वि॒द्यात॑म् । नवा॑नाम् ।
यथा॑ । चि॒त् । चै॒द्यः । क॒शुः । श॒तम् । उष्ट्रा॑नाम् । दद॑त् । स॒हस्रा॑ । दश॑ । गोना॑म् ॥ ३७ ॥

वेङ्कट० तौ[5] हे अश्विनौ ! नवभिक्षैरालब्धानि[6] नवानि[7] धनानि जानीतमिति। चैद्यात् कशोर्लब्धं धनमश्विनोरेव निवेदयति। यथा चित् [8]चैद्यः कशुः उष्ट्राणाम्[8] शतम् प्रायच्छत् सहस्राणि दश वा गवां च।

शौनकः— "'दूराद्' इत्याश्विने सूक्ते सप्तत्रिंशत्तमी तु या।
[9]तत्रार्धर्चो द्व्यृचश्चान्त्यः कशोर्दानस्तवः[9] स्मृतः॥" (तु. बृदे ६,४५) इति ॥३७॥

यो मे॒ हिर॑ण्यसंदृशो॒ दश॒ राज्ञो॒ अमं॑हत ।
अ॒ध॒स्प॒दा इच्चै॒द्यस्य॑ कृ॒ष्टय॑श्चर्म॒म्ना अ॒भितो॒ जना॑: ॥ ३८ ॥

यः । मे॒ । हिर॑ण्यऽसंदृशः । दश॑ । राज्ञः॑ । अमं॑हत ।
अ॒धः॒ऽप॒दाः । इत् । चै॒द्यस्य॑ । कृ॒ष्टयः॑ । च॒र्म॒ऽम्नाः । अ॒भितः॑ । जना॑: ॥ ३८ ॥

वेङ्कट० यः मे[10] [11]हिरण्यसन्दर्शनान् अलङ्कृतान्[11] दश राज्ञः[12] प्रायच्छत्, अस्माभिलषितं भवद्भिः कर्तव्यमिति, यद्वा मम प्रदीयमानं[13] शुल्कमस्मै दातव्यमिति। तस्य चैद्यस्य अन्ये सर्वे अधस्पदाः एव भवन्तु [14]चर्मम्नाः अभितः[14] वर्तमानाः जनाः। ये दृष्टे राजनि पादुकां तस्य विदधते ते चर्मम्ना इति ॥३८॥

माकि॑रे॒ना प॒था गा॒द् येने॒मे यन्ति॑ चे॒दय॑: ।
अ॒न्यो नेत् सू॒रिरोह॑ते भूरि॒दाव॑त्तरो॒ जन॑: ॥ ३९ ॥

माकि॑: । ए॒ना । प॒था । गा॒त् । येन॑ । इ॒मे । यन्ति॑ । चे॒दय॑: ।
अ॒न्यः । न । इत् । सू॒रिः । ओह॑ते । भू॒रि॒दाव॑त्ऽतरः । जन॑: ॥ ३९ ॥

वेङ्कट० मा गच्छतु अनेन पथा कश्चिद्धिंसकः, येन पथा इमे चेदयः यन्ति। यथा चैद्यः[15] कशुर्धनं प्रापयति, एवम् अन्यः नैव[16] प्रापयति सूरिः प्रेरयिता धनस्य अत्यन्तं दाताऽपि[17] जनः ॥ ३९ ॥

[18]इति पञ्चमाष्टके अष्टमाध्याये अष्टमो वर्गः[18] ॥

---

१. नास्ति मूको. २. °यते वि[2]. ३. युवं अ[1]. ४-४. अभ्यमाषेण अ[1]. ५. एतौ वि[2]. ६-६. नवभिः क्षणैर्ल° वि[2]; नवभिक्षणल° अ[1]. ७. नव्यानि वि[2]. ८-८. चैद्यक उष्ट्रा° वि[2]; छेद्यक उष्ट्रा° अ[1] ९-९. कर्त्रार्धर्चोर्धर्चान्तिकशोदनिस्तव° वि[2]; कर्त्रार्धर्चोर्धर्चान्तिकशो° अ[1]. १०. हे वि[2]. ११-११. °र्शनालङ्कृतां मूको. १२. राज्ञे मूको. १३. °मान अ[1]. १४-१४. चर्मम्नास्याभिहितो मूको. १५. चेद्यः वि[2]; चेद्य अ[1]. १६. नाव मूको. १७-१७. °तावि मूको. १८-१८. नास्ति मूको.

[ ६ ]

[1]वत्सः काण्व ऋषिः । इन्द्रो देवता, अन्त्यानां तिसृणां तिरिन्दिरः पार्शव्यः । गायत्री छन्दः[1] ।

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधे ॥ १ ॥

महान् । इन्द्रः । यः । ओजसा । पर्जन्यः । वृष्टिमान्ऽइव । स्तोमैः । वत्सस्य । ववृधे ॥ १ ॥

**वेङ्कट०** वत्सः[2] । महान् सः इन्द्रः भवति, यः ओजसा परिवृतः पर्जन्यः वृष्टिमान् इव लक्ष्यते । सः[3] स्तोमैः वत्सस्य वर्धताम् ॥ १ ॥

प्रजामृतस्य पिप्रतः प्र यद् भरन्त वह्नयः । विप्रा ऋतस्य वाहसा ॥ २ ॥

प्रऽजाम् । ऋतस्य । पिप्रतः । प्र । यत् । भरन्त । वह्नयः । विप्राः । ऋतस्य । वाहसा ॥ २ ॥

**वेङ्कट०** सर्वाम् प्रजाम् यज्ञेन पूरयतः इन्द्रस्य प्र भरन्त हविः यदा[4] वोढार ऋत्विजः मेधाविनः यज्ञस्य वाहकेन[5] सह, तदा स्तोमैः वत्सस्य वावृधे[6] इति ॥ २ ॥

कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधम् ॥ ३ ॥

कण्वाः । इन्द्रम् । यत् । अक्रत । स्तोमैः । यज्ञस्य । साधनम् । जामि । ब्रुवते । आयुधम् ॥३॥

**वेङ्कट०** कण्वाः यदा इन्द्रम् कुर्वन्ति स्तोमैः यज्ञस्य साधयितारम्, तदानीम् अस्य [7]जामि आयुधम्[7] स्तुवन्ति। जामिर्जमतेः गतिकर्मणः ( तु. या ३,६ ) ॥ ३ ॥

समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवः ॥ ४ ॥

सम । अस्य । मन्यवे । विशः । विश्वाः । नमन्त । कृष्टयः । समुद्रायऽइव । सिन्धवः ॥ ४ ॥

**वेङ्कट०** सम् नमन्त अस्य क्रोधाय विशः विश्वाः कृष्टयः । विशः परितो निविशन्तीति । समुद्राय इव सिन्धवः ( = ऋ ८,४४,२५ ) ॥ ४ ॥

ओजस्तदस्य तित्विष उभे यत् समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥ ५ ॥

ओजः । तत् । अस्य । तित्विषे । उभे इति । यत् । समऽअवर्तयत् । इन्द्रः । चर्मऽइव । रोदसी इति ॥

**वेङ्कट०** बलम् तत् अस्य दीप्यते, येन[8] बलेन इन्द्रः द्यावापृथिव्यौ उभे संवर्तयति पिण्डीकरोति चर्म इव[9] ॥ ५ ॥

[1]इति पञ्चमाष्टके अष्टमाध्याये नवमो वर्गः[1] ॥

---

१-१. नास्ति मूको. २. वत्स मूको. ३. नास्ति मूको. ४. यथा अ[1]. ५. =अग्निना ( तु. ( ऋ ३,११,७ भाष्यम् ); हवनेन मूको. ६. वावृधा मूको. ७-७. तु. ऋ १०,८,७;८; जम्यायुधनं अ[1]. ८. यस्मात् मूको. ९. तु. ऋ ६,८,३; ७,६३,१.

वि चिद् वृत्रस्य दोधतो वज्रेण शतपर्वणा । शिरो बिभेद वृष्णिना ॥ ६ ॥

वि । चित् । वृत्रस्य । दोधतः । वज्रेण । शतऽपर्वणा । शिरः । बिभेद । वृष्णिना ॥ ६ ॥

**वेङ्कट०** वृत्रस्य कम्पयतः वज्रेण शतपर्वणा शिरः वि[1] बिभेद वर्षणशीलेन ॥ ६ ॥

इमा अभि प्र णोनुमो विपामग्रेषु धीतयः । अग्नेः शोचिर्न दिद्युतः ॥ ७ ॥

इमाः । अभि । प्र । नोनुमः । विपाम् । अग्रेषु । धीतयः । अग्नेः । शोचिः । न । दिद्युतः ॥७॥

**वेङ्कट०** इमानि अभि प्र नोनुमः मेधाविनाम् अग्रेषु कर्माणि इन्द्रस्य। यानि अग्नेः तेजांसि इव व्याप्तानि ॥ ७ ॥

गुहा सतीरुप त्मना प्र यच्छोचन्त धीतयः । कण्वा ऋतस्य धारया ॥ ८ ॥

गुहा । सतीः । उप । त्मना । प्र । यत् । शोचन्त । धीतयः । कण्वाः । ऋतस्य । धारया ॥८॥

**वेङ्कट०** गुहायां वर्तमानानि इन्द्रस्य कर्माणि मेधाविभिरेव ज्ञातुं शक्यानि उप[2] प्र शोचन्त प्रज्वलयन्ति स्वयमेव, यदा प्रकटीकुर्वन्ति कण्वाः सत्यस्य धारयित्र्या वाचा। उत्तरत्र सम्बन्धः ॥ ८ ॥

प्र तमिन्द्र नशीमहि रयिं गोमन्तमश्विनम् । प्र ब्रह्म पूर्वचित्तये ॥ ९ ॥

प्र । तम् । इन्द्र । नशीमहि । रयिम् । गोऽमन्तम् । अश्विनम् । प्र । ब्रह्म । पूर्वऽचित्तये ॥ ९ ॥

**वेङ्कट०** निगदसिद्धा। [3]ब्रह्म अन्नम्[3]। पूर्वचित्तिरन्यैः[4] पूर्वमेव ज्ञानम्। अन्नवन्तं हि प्रथममेव जानन्ति। नशिर्व्याप्तिकर्मेति ॥ ९ ॥

अहमिद्धि पितुष्परि मेधामृतस्य जग्रभ । अहं सूर्य इवाजनि ॥ १० ॥

अहम् । इत् । हि । पितुः । परि[5] । मेधाम् । ऋतस्य । जग्रभ । अहम् । सूर्यःऽइव । अजनि ॥१०॥

**वेङ्कट०** अहम् एव हि पितुः कण्वस्य[6] सत्यज्ञानस्य सत्यस्य प्रज्ञाम् जगृहे गृहीतवानस्मि। अहम् सूर्यः इव दीप्यमानः अजनि ॥ १० ॥

[7]इति पञ्चमाष्टके अष्टमाध्याये दशमो वर्गः[7] ॥

अहं प्रत्नेन मन्मना गिरः शुम्भामि कण्ववत् । येनेन्द्रः शुष्ममिद् दधे ॥ ११ ॥

अहम् । प्रत्नेन । मन्मना । गिरः । शुम्भामि । कण्वऽवत् । येन । इन्द्रः । शुष्मम् । इत् । दधे ॥ ११ ॥

---

१. नास्ति मूको. २. उप वि[2]; अप अ[1]. ३-३. ब्राह्मणम् मूको. ४. रन्यैः पूर्वचितिः अ[1]. ५. तु. वैप १,१९२६g. ६. कण्वाः वि[2]; कण्वा अ[1]. ७-७. नास्ति मूको.

**वेङ्कट०** अहम् पुराणेन दिव्येण ज्ञानेन [1]स्तुतीः अलङ्करोमि[1] कण्ववत् । येन मन्मना[2] इन्द्रः बलं धारयति ॥ ११ ॥

ये त्वामिन्द्र न तुंष्टुवुर्ऋषंयो ये चं तुष्टुवुः । ममेद् वंर्धस्व सुष्टुंतः ॥ १२ ॥

ये । त्वाम् । इन्द्र । न । तुस्तुवुः । ऋषयः । ये । च । तुस्तुवुः । मम । इत् । वर्धस्व । सुऽस्तुंतः ॥

**वेङ्कट०** ये त्वाम् इन्द्र! न तुष्टुवुः, ये च स्तुवन्ति ऋषयः, सर्वानपहाय मम एवाभिलषितम् इति गम्यते, वर्धय सुष्टुतः ॥ १२ ॥

यदंस्य मन्युरध्वंनीद् वि वृत्रं पर्वशो रुजन् । अपः संमुद्रमैरंयत् ॥ १३ ॥

यत् । अस्य । मन्युः । अध्वंनीत् । वि । वृत्रम् । पर्वऽशः । रुजन् । अपः । समुद्रम् । ऐरंयत् ॥ १३ ॥

**वेङ्कट०** यदा अस्य मन्युः अध्वनीत् । ध्वनतिः शब्दकर्मा । स्तनितशब्दमुत्पादयतीत्यर्थः । वृत्रम् मेघरूपम् पर्वशः वि रुजन् तदा अपः उदकानि अन्तरिक्षम् ( तु. निघ १,३ ) प्रति प्रेरयति । यद्वेह ध्वनिः प्रकाशीभावकर्मेति ॥ १३ ॥

नि शुष्णं इन्द्र धर्णसिं वज्रं जघन्थ दस्यंवि । वृषा ह्युंग्र शृण्विषे ॥ १४ ॥

नि । शुष्णे । इन्द्र । धर्णसिम् । वज्रम् । जघन्थ । दस्यंवि । वृषा । हि । उग्र । शृण्विषे ॥ १४ ॥

**वेङ्कट०** नि जघन्थ शुष्णे दस्यौ[3] लोकस्य धारकम् वज्रम् । [4]वर्षिता हि हे उग्र![4] त्वं लोके श्रूयसे[5] ( तु. ऋ ८,३३,१० ) ॥ १४ ॥

न द्याव इन्द्रमोजसा नान्तरिक्षाणि वज्रिणम् । न विव्यचन्त भूमयः ॥ १५ ॥

न । द्यावः । इन्द्रम् । ओजसा । न । अन्तरिक्षाणि । वज्रिणम् । न । विव्यचन्त । भूमयः ॥ १५ ॥

**वेङ्कट०** न द्युलोकाः[6] इन्द्रम् बलेन व्याप्नुवन्ति वज्रिणम्, न अपि अन्तरिक्षाणि, न च भूमयः । 'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून्' ( ऋ २,२७,८ ) इति मन्त्रः ॥ १५ ॥

[7]इति पञ्चमाष्टके अष्टमाध्याये एकादशो वर्गः[7] ॥

यस्तं इन्द्र महीरपः स्तंभूयमान आशंयत् । नि तं पद्यांसु शिश्नथः ॥ १६ ॥

यः । ते । इन्द्र । महीः । अपः । स्तभुऽयमानः । आ । अशंयत् । नि । तम् । पद्यांसु । शिश्नथः ॥ १६ ॥

**वेङ्कट०** [8]यः ते इन्द्र! महतीः अपः[8] स्तम्भयन् वृत्रः आ अशयत्, तम् पद्यासु अङ्गुलीषु त्वम् नि शिश्नथः । निश्नथनं हि मारणमिति[9] ॥ १६ ॥

---

१-१. स्तुतीरलङ्करोति वि[2]; अलङ्करोति स्तुती अ[1]. २. मया मूको. ३. दस्यो मूको. ४-४. वर्षितात्युग्र मूको. ५ श्रयसे मूको. ६. द्युलोके मूको. ७-७. नास्ति मूको. ८-८. नास्ति वि[2]; नन्द ··· अ[1]. ९. वर° मूको.

य इमे रोदसी मही समीची समजग्रभीत् । तमोभिरिन्द्र तं गुहः ॥ १७ ॥

यः । इमे इति । रोदसी इति । मही इति । समीची इति सम्ऽईची । सम्ऽअजग्रभीत् । तमःऽभिः । इन्द्र । तम् । गुहः ॥ १७ ॥

वेङ्कट० 'यः इमे' द्यावापृथिव्यौ महत्यौ सङ्गते हस्तेन सङ्गृह्णाति, तम् अन्धकारैः इन्द्र! तिरस्कुरु वृत्रम् ॥ १७ ॥

य इन्द्र यतयस्त्वा भृगवो ये च तुष्टुवुः । ममेदुग्र श्रुधी हवम् ॥ १८ ॥

ये । इन्द्र । यतयः । त्वा । भृगवः । ये । च । तुस्तुवुः । मम । इत् । उग्र । श्रुधि । हवम् ॥ १८ ॥

वेङ्कट० [2]ये इन्द्र![2] यतयः[3] त्वा तुष्टुवुः, ये च भृगवः, तान् अतीत्य मम एव हे उद्गूर्ण ! श्रुधि ह्वानम् ॥ १८ ॥

इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् । एनामृतस्य पिप्युषीः ॥ १९ ॥

इमाः । ते । इन्द्र । पृश्नयः । घृतम् । दुहते । आऽशिरम् । एनाम् । ऋतस्य । पिप्युषीः ॥ १९ ॥

वेङ्कट० इमाः ते इन्द्र ! गावः घृतम् आशिरम् च दुहते भूमिम् उदकेन यज्ञसाधितेन पूरयन्त्यः ॥ १९ ॥

या इन्द्र प्रस्वस्त्वासा गर्भमचक्रिरन् । परि धर्मेव सूर्यम् ॥ २० ॥

याः । इन्द्र । प्रऽस्वः । त्वा । आसा । गर्भम् । अचक्रिरन् । परि । धर्मऽइव । सूर्यम् ॥ २० ॥

वेङ्कट० याः इमाः प्रजाताः पृश्नयः त्वां पयसो निरसनेन गर्भभूतम् परि अचक्रिरन् परिष्कुर्वन्ति । यथा धर्म[4] सूर्यम् परितः करोति । धर्म हि धारयति[5] दिवि सूर्यमिति ॥ २० ॥

[6]इति पञ्चमाष्टके अष्टमाध्याये द्वादशो वर्गः[6] ॥

त्वामिच्छवसस्पते कण्वा उक्थेन वावृधुः । त्वां सुतास इन्दवः ॥ २१ ॥

त्वाम् । इत् । शवसः । पते । कण्वाः । उक्थेन । ववृधुः । त्वाम् । सुतासः । इन्दवः ॥ २१ ॥

वेङ्कट० निगदसिद्धेति ॥ २१ ॥

तवेदिन्द्र प्रणीतिषूत प्रशस्तिरद्रिवः । यज्ञो वितन्तसाय्यः ॥ २२ ॥

तव । इत् । इन्द्र । प्रऽनीतिषु । उत । प्रऽशस्तिः । अद्रिऽवः । यज्ञः । वितन्तसाय्यः ॥ २२ ॥

---

१-१. नास्ति अ[1]. २-२. ··· इन्द्र मूको. ३. यस्तयः मूको. ४. कर्म मूको. ५. °यन्ति मूको. ६-६. नास्ति मूको.

वेङ्कट० तव एव इन्द्र! प्रणयनेषु यजमानानाम् प्रशस्तिः भवति अद्रिवः!। यज्ञः तव प्रणीतिषु एव [1]अत्यन्तं तान्तैः सेवितव्यो‡[1] भवति ॥ २२ ॥

आ नं इन्द्र महीमिषं पुरं न दर्षि गोमंतीम्। उत प्रजां सुवीर्यम् ॥ २३ ॥

आ। नः। इन्द्र। महीम्। इषम्। पुरम्। न। दर्षि। गोऽमंतीम्। उत। प्रऽजाम्। सुऽवीर्यम् ॥

वेङ्कट० आभिमुख्येन विदारय अस्माकम् इन्द्र! महद् अन्नं त्वयि स्थितं विवृतद्वारम् पुरम् इव पशुमतीम्। अपि च प्रजाम् सुवीर्यम् च प्रयच्छेति ॥ २३ ॥

[2]उत त्यदाश्वश्व्यं यदिन्द्र नाहुषीष्वा[2]। अग्रे विक्षु प्रदीदयत् ॥ २४ ॥

उत। त्यत्। आशुऽअश्व्यम्। यत्। इन्द्र। नाहुषीषु। आ। अग्रे। विक्षु। प्रऽदीदयत् ॥ २४ ॥

वेङ्कट० अपि च तत् आश्वश्व्यम् [3]अश्ववृन्दम् आशु, यत् इदम्[3] इन्द्र! नहुषस्य स्वभूतासु विक्षु स्थितम्, तच्च आत् अकर्षीदिति। अग्रे प्रकर्षेण दीप्तं भवति। ॥ २४ ॥

अभि व्रजं न तंत्निषे सूर उपाकचक्षसम्। यदिन्द्र मृळयासि नः ॥ २५ ॥

अभि। व्रजम्। न। तत्निषे। सूरः। उपाकऽचक्षसम्। यत्। इन्द्र। मृळयासि। नः ॥ २५ ॥

वेङ्कट० न[4] अभि तनोषि[5] व्रजम् गवां सरणशीलः त्वम्[6] उपाकचक्षसम्। 'उपाके' (निघ ३,१६) इत्यन्तिकनाम। अन्तिके दर्शनं यस्य। अस्मत्समीपे न वितनोषि, यदि इन्द्र! अस्मान् सुखयसि ॥२५॥

[7]इति पञ्चमाष्टके अष्टमाध्याये त्रयोदशो वर्गः[7] ॥

यदङ्ग तविषीयस इन्द्र प्रराजसि क्षितीः। महाँ अपार ओजसा ॥ २६ ॥

यत्। अङ्ग। तविषीऽयसे। इन्द्र। प्रऽराजसि। क्षितीः। महान्। अपारः। ओजसा ॥ २६ ॥

वेङ्कट० यत् अङ्ग इन्द्र! त्वं बलमिच्छसि, यस्माच्च प्रकर्षेण राजयसि मनुष्यान् महान् अपर्यन्तः बलेन। उत्तरत्र सम्बन्धः ॥ २६ ॥

तं त्वां हविष्मंतीर्विश उप ब्रुवत ऊतये। उरुज्रयसमिन्दुभिः ॥ २७ ॥

तम्। त्वा। हविष्मंतीः। विशः। उप। ब्रुवते। ऊतये। उरुऽज्रयसम्। इन्दुऽभिः ॥ २७ ॥

वेङ्कट० निगदव्याख्याता। तस्माद् बहुवेगम् उपस्तुवन्तीति ॥ २७ ॥

उपह्वरे गिरीणां संगथे च नदीनाम्। धिया विप्रो अजायत ॥ २८ ॥

---

१-१. अन्तान्ते सेवितो मूको. ‡ < वि ✓ तंस् इति वैप १,२८४३. २-२. तु. ऋ ५,७,१०; ६,४६,७. ३-३. च वृन्दं अ शुं यदि तम् मूको. ४. सा. संप्रत्यर्थे नेति. ५. °नोति मूको. ६. तम् मूको. ७-७. नास्ति मूको.

उपऽह्वरे । गिरीणाम् । सम्ऽगथे । च । नदीनाम् । धिया । विप्रः । अजायत ॥ २८ ॥

**वेङ्कट०** समीपे पर्वतानां सङ्गमे च नदीनाम् कर्मणा हेतुना मेधावी इन्द्रः प्रादुर्भवति ॥ २८ ॥

अतः समुद्रमुद्वतश्चिकित्वाँ अव पश्यति । यतो विपान एजति ॥ २९ ॥

अतः । समुद्रम् । उत्ऽवतः । चिकित्वान् । अव । पश्यति । यतः । विपानः । एजति ॥ २९ ॥

**वेङ्कट०** अतः उद्वतः स्वर्गाद् अमुष्मात् [1]प्राज्ञः अव[1] पश्यति अन्तरिक्षम्, यतः स्तूयमानः जानन् वा देवः चलति ॥ २९ ॥

आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥३०॥

आत् । इत् । प्रत्नस्य । रेतसः । ज्योतिः । पश्यन्ति । वासरम् । परः । यत् । इध्यते । दिवा ॥ ३० ॥

**वेङ्कट०** अनन्तरमेव[2] प्रत्नस्य उदकस्य सम्बन्धि ज्योतिः पश्यन्ति वासयितृ, यदा इन्द्रः[3] परस्तात् सम् इध्यते आदित्येन अन्तरिक्षस्थानः ॥ ३० ॥

[4]इति पञ्चमाष्टके अष्टमाध्याये चतुर्दशो वर्गः[4] ॥

कण्वास इन्द्र ते मतिं विश्वे वर्धन्ति पौंस्यम् । उतो शविष्ठ वृष्ण्यम् ॥ ३१ ॥

कण्वासः । इन्द्र । ते । मतिम् । विश्वे । वर्धन्ति । पौंस्यम् । उतो इति । शविष्ठ । वृष्ण्यम् ॥ ३१ ॥

**वेङ्कट०** कण्वासः इन्द्र! ते सुमतिम् विश्वे वर्धयन्ति पौंस्यम्[5] च, अपि च हे बलवत्तर! वृष्ण्यम् ॥ ३१ ॥

इमां म इन्द्र सुष्टुतिं जुषस्व प्र सु मामव । उत प्र वर्धया मतिम् ॥ ३२ ॥

इमाम् । मे । इन्द्र । सुऽस्तुतिम् । जुषस्व । प्र । सु । माम् । अव । उत । प्र । वर्धय । मतिम् ॥ ३२ ॥

**वेङ्कट०** इमाम् मे इन्द्र! सुष्टुतिम् सेवस्व। प्रकर्षेण सुष्ठु माम् रक्ष। अपि च वर्धय स्तोतारम् ॥ ३२ ॥

उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः । विप्रा अतक्ष्म जीवसे ॥ ३३ ॥

उत । ब्रह्मण्या । वयम् । तुभ्यम् । प्रऽवृद्ध । वज्रिऽवः । विप्राः । अतक्ष्म । जीवसे ॥ ३३ ॥

**वेङ्कट०** अपि च ब्रह्माणि[6] वयम् तुभ्यम् हे प्रवृद्ध! वज्रिन्! मेधाविनः संस्कृतवन्तः जीवनाय ॥ ३३ ॥

अभि कण्वा अनूषतापो न प्रवता यतीः । इन्द्रं वनन्वती मतिः ॥ ३४ ॥

---

१-१. प्राज्ञाथ मूको. २. अन्तर° मूको. ३. इन्द्र मूको. ४-४. नास्ति मूको. ५. वंश्यं मूको. ६. ब्रह्माणि कआनि अ[1]; कर्माणि वि[2].

वेङ्कट० तव एव इन्द्र! प्रणयनेषु यजमानानाम् प्रशस्तिः भवति अद्रिवः!। यज्ञः तव प्रणीतिषु एव [1]अत्यन्तं तान्तैः सेवितव्यो‡[1] भवति ॥ २२ ॥

आ नं इन्द्र महीमिषं पुरं न दर्षि गोमंतीम्। उत प्रजां सुवीर्यम् ॥ २३ ॥

आ। नः। इन्द्र। महीम्। इषम्। पुरम्। न। दर्षि। गोऽमंतीम्। उत। प्रऽजाम्। सुऽवीर्यम् ॥

वेङ्कट० आभिमुख्येन विदारय अस्माकम् इन्द्र! महद् अन्नं त्वयि स्थितं विवृतद्वारम् पुरम् इव पशुमतीम्। अपि च प्रजाम् सुवीर्यम् च प्रयच्छेति ॥ २३ ॥

[2]उत त्यदाश्वश्व्यं यदिन्द्र नाहुंषीष्वा[2]। अग्रे विक्षु प्रदीदयत् ॥ २४ ॥

उत। त्यत्। आशुऽअश्व्यम्। यत्। इन्द्र। नाहुंषीषु। आ। अग्रे। विक्षु। प्रऽदीदयत् ॥ २४ ॥

वेङ्कट० अपि च तत् आश्वश्व्यम् [3]अश्ववृन्दम् आशु, यत् इदम्[3] इन्द्र! नहुषस्य स्वभूतासु विक्षु स्थितम्, तच्च आत् अकर्षीदिति। अग्रे प्रकर्षेण दीप्तं भवति। ॥ २४ ॥

अभि व्रजं न तत्निषे सूर उपाकचक्षसम्। यदिन्द्र मृळयासि नः ॥ २५ ॥

अभि। व्रजम्। न। तत्निषे। सूरः। उपाकऽचक्षसम्। यत्। इन्द्र। मृळयासि। नः ॥ २५ ॥

वेङ्कट० न[4] अभि तनोषि[5] व्रजम् गवां सरणशीलः त्वम्[6] उपाकचक्षसम्। 'उपाके' (निघ ३,१६) इत्यन्तिकनाम। अन्तिके दर्शनं यस्य। अस्मत्समीपे न वितनोषि, यदि इन्द्र! अस्मान् सुखयसि ॥२५॥

[7]इति पञ्चमाष्टके अष्टमाध्याये त्रयोदशो वर्गः[7] ॥

यदङ्ग तविषीयस इन्द्र प्रराजसि क्षितीः। महाँ अपार ओजसा ॥ २६ ॥

यत्। अङ्ग। तविषीऽयसे। इन्द्र। प्रऽराजसि। क्षितीः। महान्। अपारः। ओजसा ॥ २६ ॥

वेङ्कट० यत् अङ्ग इन्द्र! त्वं बलमिच्छसि, यस्माच्च प्रकर्षेण राजयसि मनुष्यान् महान् अपर्यन्तः बलेन। उत्तरत्र सम्बन्धः ॥ २६ ॥

तं त्वा हविष्मतीर्विश उप ब्रुवत ऊतये। उरुज्रयसमिन्दुभिः ॥ २७ ॥

तम्। त्वा। हविष्मतीः। विशः। उप। ब्रुवते। ऊतये। उरुऽज्रयसम्। इन्दुऽभिः ॥ २७ ॥

वेङ्कट० निगदव्याख्याता। तस्माद् बहुवेगम् उपस्तुवन्तीति ॥ २७ ॥

उपह्वरे गिरीणां संगथे च नदीनाम्। धिया विप्रो अजायत ॥ २८ ॥

---

१-१. अन्तान्ते सेवितो मूको. ‡ <वि ✓तंस् इति वैप १,२८४३. २-२. तु. ऋ५,७,१०; ६,४६,७. ३-३. च वृन्दं अ शुं यदि तम् मूको. ४. सा. संप्रत्यर्थे नेति. ५. °नोति मूको. ६. तम् मूको. ७-७. नास्ति मूको.

उपऽह्वरे । गिरीणाम् । सम्ऽगथे । च । नदीनाम् । धिया । विप्रः । अजायत ॥ २८ ॥

**वेङ्कट०** समीपे पर्वतानां सङ्गमे च नदीनाम् कर्मणा हेतुना मेधावी इन्द्रः प्रादुर्भवति ॥ २८ ॥

अतः समुद्रमुद्वतश्चिकित्वाँ अव पश्यति । यतो विपान एजति ॥ २९ ॥

अतः । समुद्रम् । उत्ऽवतः । चिकित्वान् । अव । पश्यति । यतः । विपानः । एजति ॥ २९ ॥

**वेङ्कट०** अतः उद्वतः स्वर्गाद् अमुष्मात् [1]प्राज्ञः अव[1] पश्यति अन्तरिक्षम्, यतः स्तूयमानः जानन् वा देवः चलति ॥ २९ ॥

आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥३०॥

आत् । इत् । प्रत्नस्य । रेतसः । ज्योतिः । पश्यन्ति । वासरम् । परः । यत् । इध्यते । दिवा ॥ ३० ॥

**वेङ्कट०** अनन्तरमेव[2] प्रत्नस्य उदकस्य सम्बन्धि ज्योतिः पश्यन्ति वासयितृ, यदा इन्द्रः[3] परस्तात् सम् इध्यते आदित्येन अन्तरिक्षस्थानः ॥ ३० ॥

[4]इति पञ्चमाष्टके अष्टमाध्याये चतुर्दशो वर्गः[4] ॥

कण्वास इन्द्र ते मतिं विश्वे वर्धन्ति पौंस्यम् । उतो शविष्ठ वृष्ण्यम् ॥ ३१ ॥

कण्वासः । इन्द्र । ते । मतिम् । विश्वे । वर्धन्ति । पौंस्यम् । उतो इति । शविष्ठ । वृष्ण्यम् ॥ ३१ ॥

**वेङ्कट०** कण्वासः इन्द्र ! ते सुमतिम् विश्वे वर्धयन्ति पौंस्यम्[5] च, अपि च हे बलवत्तर ! वृष्ण्यम् ॥ ३१ ॥

इमां म इन्द्र सुष्टुतिं जुषस्व प्र सु मामव । उत प्र वर्धया मतिम् ॥ ३२ ॥

इमाम् । मे । इन्द्र । सुऽस्तुतिम् । जुषस्व । प्र । सु । माम् । अव । उत । प्र । वर्धय । मतिम् ॥ ३२ ॥

**वेङ्कट०** इमाम् मे इन्द्र ! सुष्टुतिम् सेवस्व । प्रकर्षेण सुष्ठु माम् रक्ष । अपि च वर्धय स्तोतारम् ॥ ३२ ॥

उत ब्रह्मण्या वयं तुभ्यं प्रवृद्ध वज्रिवः । विप्रा अतक्ष्म जीवसे ॥ ३३ ॥

उत । ब्रह्मण्या । वयम् । तुभ्यम् । प्रऽवृद्ध । वज्रिऽवः । विप्राः । अतक्ष्म । जीवसे ॥ ३३ ॥

**वेङ्कट०** अपि च ब्रह्माणि[6] वयम् तुभ्यम् हे प्रवृद्ध ! वज्रिन् ! मेधाविनः संस्कृतवन्तः जीवनाय ॥ ३३ ॥

अभि कण्वा अनूषतापो न प्रवता यतीः । इन्द्रं वनन्वती मतिः ॥ ३४ ॥

---

१-१. प्राज्ञाथ मूको. २. अन्तर° मूको. ३. इन्द्र मूको. ४-४. नास्ति मूको. ५. वंश्यं मूको. ६. ब्रह्मार्णि कआनि अ[१]; कर्मांणि वि[२].

अभि । कण्वाः । अनूषत । आपः । न । प्रऽवता । यतीः । इन्द्रम् । वननऽवती । मतिः ॥ ३४ ॥

वेङ्कट० अभि अस्तुवन् कण्वाः इन्द्रम् आपः इव प्रवणेन गच्छन्त्यः । इन्द्रम् प्रविभजन्ती(?)[1] स्तुतिः भवति ॥ ३४ ॥

इन्द्रमुक्थानि वावृधुः समुद्रमिव सिन्धवः । अनुत्तमन्युमजरम् ॥ ३५ ॥

इन्द्रम् । उक्थानि । ववृधुः । समुद्रम्ऽइव । सिन्धवः । अनुत्तऽमन्युम् । अजरम् ॥ ३५ ॥

वेङ्कट० निगदसिद्धा । अनुत्तमन्युः अतिरस्कृतक्रोधः[2] ॥ ३५ ॥

[3]इति पञ्चमाष्टके अष्टमाध्याये पञ्चदशो वर्गः[3] ॥

आ नो याहि परावतो हरिभ्यां हर्यताभ्याम् । इममिन्द्र सुतं पिब ॥ ३६ ॥

आ । नः । याहि । पराऽवतः । हरिऽभ्याम् । हर्यताभ्याम् । इमम् । इन्द्र । सुतम् । पिब ॥ ३६ ॥

वेङ्कट० आ याहि अस्मान् दूराद् अश्वाभ्याम् कमनीयाभ्याम् । इमम् इन्द्र! सुतम् पिब । हर्यतिः प्रेप्साकर्मेति ॥ ३६ ॥

त्वामिद् वृत्रहन्तम जनासो वृक्तबर्हिषः । हवन्ते वाजसातये ॥ ३७ ॥

त्वाम् । इत् । वृत्रहन्ऽतम । जनासः । वृक्तऽबर्हिषः । हवन्ते । वाजऽसातये ॥ ३७ ॥

वेङ्कट० निगदसिद्धा ॥ ३७ ॥

अनु त्वा रोदसी उभे चक्रं न वर्त्येतशम् । अनु सुवानास इन्दवः ॥ ३८ ॥

अनु । त्वा । रोदसी इति । उभे इति । चक्रम् । न । वर्ति । एतशम् । अनु । सुवानासः । इन्दवः ॥ ३८ ॥

वेङ्कट० अनुगच्छतः त्वां द्यावापृथिव्यौ उभे, यथा रथचक्रम् अग्रतो गच्छन्तम् अश्वम् अनु वर्तते । अनु वर्तन्ते [4]अभिपूयमाणाश्च इन्दवः[4] ॥ ३८ ॥

मन्दस्वा सु स्वर्णर उतेन्द्र शर्यणावति । मत्स्वा विवस्वतो मती ॥ ३९ ॥

मन्दस्व । सु । स्वःऽनरे । उत । इन्द्र । शर्यणाऽवति । मत्स्व । विवस्वतः । मती ॥ ३९ ॥

वेङ्कट० मन्दस्व सुष्ठु स्वर्णराख्ये देशे राजनि वा, अपि च इन्द्र! शर्यणावति । शर्यणावन्नाम[5] कुरुक्षेत्रस्य जघनमध्यस्थं सरः[6] । मत्स्व च विवस्वतः राज्ञः स्तुत्या ॥ ३९ ॥

वावृधान उप द्यवि वृषा वज्र्यरोरवीत् । वृत्रहा सोमपातमः ॥ ४० ॥

---

१. प्रति भवन्ती मूको; सम्भजनवती सा. २. उत्तर प्रहित वि[2]; उत्तर प्रहितक्रोध आत्मने अ[1]. ३-३. नास्ति मूको. ४-४. °णाचेदेव मूको. ५. शर्यपबन्धनाम वि[2]; शर्यणबृद्धनाम अ[1]. ६. सरे मूको.

वावृधानः । उप॑ । द्यवि॑ । वृषा॑ । वज्री । अरोरवीत् । वृत्रऽहा । सोमऽपातमः ॥ ४० ॥

**वेङ्कट०** वर्धमानः उप रोरवीति अन्तरिक्षे वृषा वज्री वृत्रहा अतिशयेन सोमस्य पाता ॥ ४० ॥

[1]इति पञ्चमाष्टके अष्टमाध्याये षोडशो वर्गः[1] ॥

ऋषि॒र्हि पू॑र्व॒जा अस्येक॒ ईशा॑न॒ ओज॑सा । इन्द्र॑ चोष्कूयसे॒ वसु॑ ॥ ४१ ॥

ऋषि॑ः । हि । पू॒र्व॒ऽजाः । असि॑ । एकः॑ । ईशा॑नः । ओज॑सा । इन्द्र॑ । चोष्कूयसे॑ । वसु॑ ॥ ४१ ॥

**वेङ्कट०** द्रष्टा हि सर्वस्य जगतः पूर्वजः त्वं भवसि एकः ईशानः बलेन । स त्वम् इन्द्र! स्तोतृभ्यः वसु ब्रवीषि ॥४१॥

अ॒स्माकं॑ त्वा सु॒ताँ उप॑ वी॒तपृ॑ष्ठा अ॒भि प्रय॑ः । श॒तं व॑हन्तु॒ हर॑यः ॥ ४२ ॥

अ॒स्माक॑म् । त्वा॒ । सु॒तान् । उप॑ । वी॒तऽपृ॑ष्ठाः । अ॒भि । प्रय॑ः । श॒तम् । व॒ह॒न्तु॒ । हर॑यः ॥ ४२ ॥

**वेङ्कट०** अस्माकम् त्वा सुतान् [2]सोमान् उप वहन्तु[2] कान्तपृष्ठाः हविर्लक्षणमन्नं च अभि शतम्[3] अश्वाः ॥ ४२ ॥

इ॒मां सु पू॒र्व्यां धियं॒ मधो॑र्घृ॒तस्य॑ पि॒प्युषी॑म् । कण्वा॑ उ॒क्थेन॑ वावृधुः ॥ ४३ ॥

इ॒माम् । सु । पू॒र्व्याम् । धिय॑म् । मधो॑ः । घृ॒तस्य॑ । पि॒प्युषी॑म् । कण्वा॑ः । उ॒क्थेन॑ । व॒वृ॒धुः ॥ ४३ ॥

**वेङ्कट०** इदं कर्म सुष्ठु वर्धयन्ति प्रत्नं मधुना घृतेन च पूर्णम् कण्वाः शस्त्रेण ॥ ४३ ॥

इन्द्र॒मिद् विम॑हीना॒ं मेधे॑ वृणीत॒ मर्त्य॑ः । इन्द्रं॑ सनि॒ष्युरू॒तये॑ ॥ ४४ ॥

इन्द्र॑म् । इत् । विऽम॑हीनाम् । मेधे॑ । वृ॒णी॒त॒ । मर्त्य॑ः । इन्द्र॑म् । स॒नि॒ष्युः । ऊ॒तये॑ ॥ ४४ ॥

**वेङ्कट०** इन्द्रम् एव विशिष्टमहत्त्वानां देवानां[4] मध्ये मेधे मर्त्यः वृणीत, इन्द्रमेव सनिमिच्छन्[5] रक्षणार्थम् ॥ ४४ ॥

अ॒र्वाञ्चं॑ त्वा पुरुष्टुत प्रि॒यमे॑धस्तुता॒ हरी॑ । सोम॒पेया॑य वक्षतः ॥ ४५ ॥

अ॒र्वाञ्च॑म् । त्वा॒ । पु॒रु॒ऽस्तु॒त॒ । प्रि॒यमे॑धऽस्तुता । हरी॒ इति॑ । सोम॒ऽपेया॑य । व॒क्ष॒तः॒ ॥ ४५ ॥

**वेङ्कट०** निगदसिद्धा ॥ ४५ ॥

श॒तम॒हं ति॒रिन्दि॑रे स॒हस्रं॒ पर्शा॒वा द॑दे । राधां॑सि॒ याद्वा॑नाम् ॥ ४६ ॥

श॒तम् । अ॒हम् । ति॒रिन्दि॑रे । स॒हस्र॑म् । पर्शौ॑ । आ । द॒दे॒ । राधां॑सि । याद्वा॑नाम् ॥ ४६ ॥

**वेङ्कट०** कात्यायनः—'तृचोऽन्त्यः तिरिन्दिरस्य पार्शव्यस्य दानस्तुतिः' ( ऋअ २,८,६ ) इति । शतम्

---

१-१. नास्ति मूको.　२-२. सेमावनुपहन्तु वि[२]; सोमावनुपहन्तु अ[१].　३-३. गतम् मूको.
४. देववानां वि[२].　५. समिच्छन् मूको.

अहम् तिरिन्दिरे[1] सहस्रम् च पर्शोः पुत्रे आ ददे प्रत्यगृह्णाम् अन्नानि यदुकुलजातानां मदीयानां पुत्रपौत्राणां भरणार्थम् ॥ ४६ ॥

त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् । ददुष्पज्राय साम्ने ॥ ४७ ॥

त्रीणि । शतानि । अर्वताम् । सहस्रा । दश । गोनाम् । ददुः । पज्राय । साम्ने ॥ ४७ ॥

**वेङ्कट०** त्रीणि शतानि अश्वानाम् दश च सहस्राणि गवाम् प्रायच्छन्[2] पज्रकुलजाताय मह्यं स्तुवते ॥४७॥

उदानट् ककुहो दिवमुष्ट्रांश्चतुर्युजो ददत् । श्रवसा याद्वं जनम् ॥ ४८ ॥

उत् । आनट् । ककुहः । दिवम् । उष्ट्रान् । चतुःऽयुजः । ददत् । श्रवसा । याद्वम् । जनम् ॥ ४८ ॥

**वेङ्कट०** व्याप्नोति[3] उच्छ्रितः दिवम्[4] तिरिन्दिरः उष्ट्रान् चतुर्युजः[5] प्रयच्छन् अन्नेन च उत् आनट् यदुवंशजम् जनम् इत्यात्मानमाह ॥ ४८ ॥

[6]इति पञ्चमाष्टके अष्टमाध्याये सप्तदशो वर्गः[6] ॥

[ ७ ]

[6]पुनर्वत्सः काण्व ऋषिः । मरुतो देवता । गायत्री छन्दः[6] ।

प्र यद् वस्त्रिष्टुभमिषं मरुतो विप्रो अक्षरत् । वि पर्वतेषु राजथ ॥ १ ॥

प्र । यत् । वः । त्रिऽस्तुभम् । इषम् । मरुतः । विप्रः । अक्षरत् । वि । पर्वतेषु । राजथ ॥ १ ॥

**वेङ्कट०** पुनर्वत्सः । यदा प्र अक्षरत् मेधावी युष्माकम् त्रिष्टुभम् इषम्, अन्नं त्रिष्टुप्[7] त्रिवृत्युच्छ्रायं[8] हि तत् । 'अभि त्रिजन्मा त्रिवृदन्नम्' ( ऋ १,१४०,२ ) इत्युक्तम् । हे मरुतः! [9]तस्य मेघेषु[9] वि राजथ तस्य वर्षार्थं प्रादुर्भूताः ॥ १ ॥

यदङ्ग तविषीयवो यामं शुभ्रा अचिध्वम् । नि पर्वता अहासत ॥ २ ॥

यत् । अङ्ग । तविषीऽयवः । यामम् । शुभ्राः । अचिध्वम् । नि । पर्वताः । अहासत ॥ २ ॥

**वेङ्कट०** यदा क्षिप्रं हे बलमिच्छन्तः! गमनं हे शोभमानाः! कुरुथ, तदानीम् [10]पर्वताः नि अहासत[10] स्वस्मात् स्थानात् निचलन्ति[11] ॥ २ ॥

उदीरयन्त वायुभिर्वाश्रासः पृश्निमातरः । धुक्षन्त पिप्युषीमिषम् ॥ ३ ॥

उत् । ईरयन्त । वायुऽभिः । वाश्रासः । पृश्निऽमातरः । धुक्षन्त । पिप्युषीम् । इषम् ॥ ३ ॥

---

१. तिमिन्दरे मूको. २. प्रयच्छ मूको. ३. उद्व्याप्नो° अ[1]. ४. दीपं मूको. ५. चतुरजः मूको. ६-६. नास्ति मूको. ७. उप. < √स्तुभ् [ *उच्छ्राये ] इति; त्रिषद मूको. ८. °य मूको. ९-९. मेधावी ··· मेघे° मूको. १०-१० पर्वतानिहासत अ[1]; °निहास्त वि[2]. ११. न चलन्ति वि[2].

वेङ्कट० उत् गमयन्ति सर्वतः[1] वायुभिः[2] प्रत्यक्षमारुतैः वाशनशीलाः गोमातरः; मरुतः अधुक्षन् लोकस्य प्यायम्[3] उदकम् अन्नं वेति[4] ॥ ३ ॥

वप॑न्ति म॒रुतो॒ मिहं॒ प्र वे॑पयन्ति॒ पर्व॑तान् । यद् याम॒ यान्ति॑ वा॒युभिः॑ ॥ ४ ॥

वप॑न्ति । म॒रुतः॑ । मिह॑म् । [5]प्र । वे॒प॒य॒न्ति॒ । पर्व॑तान्[5] । यत् । याम॑म् । यान्ति॑ । वा॒यु॒ऽभिः॑ ॥ ४ ॥

वेङ्कट० भूम्यां नि वपन्ति मरुतः वृष्टिम्, प्र वेपयन्ति च [6]मेघान्, यदा यामम्[6] प्राप्नुवन्ति [7]वायुभिः सह[7] ॥ ४ ॥

नि यद् यामा॑य वो गि॒रिर्नि सिन्ध॑वो॒ विध॑र्मणे । म॒हे शुष्मा॑य येमि॒रे ॥ ५ ॥

नि । यत् । यामा॑य । वः॒ । गि॒रिः । नि । सिन्ध॑वः । विऽध॑र्मणे । म॒हे । शुष्मा॑य । ये॒मि॒रे ॥ ५ ॥

वेङ्कट० यदा नियता भवन्ति युष्माकं गमनाय गिरिः सिन्धवः च विधारकाय गमनाय महते च बलाय विधेयीभूताः । निश्चलास्तिष्ठन्तीत्यर्थः[8] । पूर्वत्र वाक्यसमाप्तिः ॥ ५ ॥

[9]इति पञ्चमाष्टके अष्टमाध्याये अष्टादशो वर्गः[9] ॥

यु॒ष्माँ उ॒ नक्त॑मू॒तये॑ यु॒ष्मान् दिवा॑ हवामहे । यु॒ष्मान् प्र॑य॒त्य॑ध्व॒रे ॥ ६ ॥

यु॒ष्मान् । ऊँ इति॑ । नक्त॑म् । ऊ॒तये॑ । यु॒ष्मान् । दिवा॑ । ह॒वा॒म॒हे॒ । यु॒ष्मान् । प्र॒ऽय॒ति । अ॒ध्व॒रे ॥ ६ ॥

वेङ्कट० निगदसिद्धा ॥ ६ ॥

उदु॒ त्ये अ॑रु॒णप्स॑वश्चि॒त्रा यामे॑भिरीरते । वा॒श्रा अधि॒ ष्णुना॑ दि॒वः ॥ ७ ॥

उत् । ऊँ इति॑ । त्ये । अ॒रु॒णऽप्स॑वः । चि॒त्राः । यामे॑भिः । ई॒र॒ते॒ । वा॒श्राः । अधि॑ । स्नुना॑ । दि॒वः ॥ ७ ॥

वेङ्कट० उत् ईरते अमी मरुतः अरुणरूपाः चित्राः नानाविधस्वरूपाः[10] [11]यामेभिः वाशनशीलाः अधि सानुना दिवः[11] ॥ ७ ॥

सृ॒जन्ति॑ र॒श्मिमोज॑सा॒ पन्थां॒ सूर्या॑य॒ यात॑वे । ते भा॒नुभि॒र्वि त॑स्थिरे ॥ ८ ॥

सृ॒जन्ति॑ । र॒श्मिम् । ओज॑सा । पन्था॑म् । सूर्या॑य । यात॑वे । ते । भा॒नुऽभिः॑ । वि । त॒स्थि॒रे॒ ॥ ८ ॥

वेङ्कट० पन्थानं सूर्यस्य यातुः ते दीप्तिभिः वितन्वन्ति । रश्मिभिः सूर्यस्य गमनाय मार्गं कुर्वन्तीति ॥ ८ ॥

इ॒मां मे॑ मरुतो॒ गिर॑मि॒मं स्तोम॑मृभुक्षणः । इ॒मं मे॑ वनता॒ हव॑म् ॥ ९ ॥

---

१. समुद्रतः वि[2]. २. वायमुभि वि[2]; वायुमभि° अ[1]. ३. व्याय° मूको. ४. तु. ऋ ८, १३, २५; ५.४, ७; ९, ६१, १५. ५-५. तु. ऋ १, ३९, ५. ६-६. मेधान्याया° मूको. ७-७. नास्ति अ[1]. ८. निश्चलास्तिष्ठती° मूको. ९-९. नास्ति मूको. १०. °धसह्वाः मूको. ११-११. तु. ऋ ४, २८, २; या ··· शीलादि ··· मूको.

इमाम् । मे । मरुतः । गिरम् । इमम् । स्तोमम् । ऋभुक्षणः । इमम् । मे । वनत । हवम् ॥ ९ ॥

वेङ्कट० इमाम् मे हे मरुतः! गिरम्, इमम् च साम्नाम् स्तोमम् हे महान्तः! (तु. निघ ३,३), इमम् ह्वानम् च भजत ॥ ९ ॥

त्रीणि सरांसि पृश्नयो दुदुह्रे वज्रिणे मधु । उत्सं कवन्धमुद्रिणम् ॥ १० ॥

त्रीणि । सरांसि । पृश्नयः । दुदुह्रे । वज्रिणे । मधु । उत्सम् । कवन्धम । उद्रिणम् ॥ १० ॥

वेङ्कट० यथा[1] त्रीणि सरांसि पूर्णानि भवन्ति तथा पृश्निपुत्राः इन्द्राय सोममयम् मधु अदुहन्[2] [3]कवन्धम् † उत्सम् $ उदकदानम् उद्रिणम् ‡[3] इत्यन्तरिक्षमाह । वृत्रवधाय । तथा कुर्वन् तथामन्तस्त्रीगच्छतामभीषाणामिति(?) ॥ १० ॥

[4]इति पञ्चमाष्टके अष्टमाध्याये एकोनविंशो वर्गः[4] ॥

मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे । आ तू न उप गन्तन ॥ ११ ॥

मरुतः । यत् । ह । वः । दिवः । सुम्नऽयन्तः । हवामहे । आ । तु । नः । उप । गन्तन ॥ ११ ॥

वेङ्कट० मरुतः! यदा खलु [5]वः दिवः द्युलोकात्[5] सुखमिच्छन्तः वयम् हवामहे, तदैव क्षिप्रम् आ गच्छत अस्मान् ॥ ११ ॥

यूयं हि ष्ठा सुदानवो रुद्रा ऋभुक्षणो दमे । उत प्रचेतसो मदे ॥ १२ ॥

यूयम् । हि । स्थ । सुऽदानवः । रुद्राः । ऋभुक्षणः । दमे । उत । प्रऽचेतसः । मदे ॥ १२ ॥

वेङ्कट० भवथ हे शोभनदानाः! रुद्रपुत्राः! महान्तः! यज्ञे, अपि च सुमतयः सोममदे ॥ १२ ॥

आ नो रयिं मदच्युतं पुरुक्षुं विश्वधायसम् । इयर्ता मरुतो दिवः ॥ १३ ॥

आ । नः । रयिम् । मदऽच्युतम् । पुरुऽक्षुम । विश्वऽधायसम । इयर्त । मरुतः । दिवः ॥ १३ ॥

वेङ्कट० आभिमुख्येन [6]प्रेरयत धनम्[6] मदस्योपस्थापकम् बहुशब्दम् विश्वस्य धारकम् अस्माकं हे मरुतः! दिवः आहृत्य ॥ १३ ॥

अधीव यद् गिरीणां यामं शुभ्रा अचिध्वम् । सुवानैर्मन्दध्व इन्दुभिः ॥ १४ ॥

अधिऽइव । यत् । गिरीणाम् । यामम् । शुभ्राः । अचिध्वम् । सुवानैः । मन्दध्वे । इन्दुऽभिः ॥ १४ ॥

वेङ्कट० उपरि पर्वतानां हे शुभ्राः! यदा गमनम् कुरुथ, तदानीं [7]सूयमानैः सोमैः[7] मन्दध्वे[8] ॥ १४ ॥

एतावतश्चिदेषां सुम्नं भिक्षेत मर्त्यः । अदाभ्यस्य मन्मभिः ॥ १५ ॥

---

१. तु. ऋ २,२४,४. २. तु. ऋ ५,२९,७;६,१७,११. ३-३. कण्वनोत्समुदकदानमुदिक्तम् मूको. † तु. या १०,४; वैप १,१०८८ n. $ तु. या १०,९; वैप १,८९३ f. ‡ तु. या १०,१३; वैप १,८९६. ४-४. नास्ति मूको. ५-५. गोर्द्युलो° वि[२]; गोद्युलो° अ[१]. ६-६. प्रेरय तद्धनं मूको. ७. स्तूयमानः सोमे मूको. ८. मदध्वे मूको.

एतावतः । चित् । एषाम् । सुम्नम् । भिक्षेत । मर्त्यः । अदाभ्यस्य । मन्मऽभिः ॥ १५ ॥

**वेङ्कट०** एतावतः पोष्यवर्गस्य शत्रुभिरहिंस्यस्य [1]स्तुतिभिः मर्त्यः सुखम् भिक्षयेत[1] मरुतां सम्बन्धि ॥ १५ ॥

[2]इति पञ्चमाष्टके अष्टमाध्याये विंशो वर्गः[2] ॥

**ये द्रप्सा इव रोदसी धमन्त्यनु वृष्टिभिः । उत्सं दुहन्तो अक्षितम् ॥ १६ ॥**

ये । द्रप्साःऽइव । रोदसी इति । धमन्ति । अनु । वृष्टिऽभिः । उत्सम् । दुहन्तः । अक्षितम् ॥ १६ ॥

**वेङ्कट०** ये मरुतः उदकद्रप्साः इव पतन्तः द्यावापृथिव्यौ अनु धमन्ति वृष्टिभिः शब्दापयन्ति, मेघम् दुहन्तः अक्षीणम् ॥ १६ ॥

**उदु स्वानेभिरीरत उद् रथैरुदु वायुभिः । उत् स्तोमैः पृश्निमातरः ॥ १७ ॥**

उत् । ऊँ इति । स्वानेभिः । ईरते । उत् । रथैः । उत् । ऊँ इति । वायुऽभिः । उत् । स्तोमैः । पृश्निऽमातरः ॥

**वेङ्कट०** उत् गच्छन्ति शब्दैः उत् रथैः उत् अश्वैः उत् च स्तुतिभिः सह गोमातरः ॥ १७ ॥

**येनाव तुर्वशं यदुं येन कण्वं धनस्पृतम् । राये सु तस्य धीमहि ॥ १८ ॥**

येन । आव । तुर्वशम् । यदुम् । येन । कण्वम् । धनऽस्पृतम् । राये । सु । तस्य । धीमहि ॥ १८ ॥

**वेङ्कट०** येन [3]ररक्षुः तुर्वशम्[3] यदुम् मरुद्गणाः, येन च कण्वम् धनस्य स्प्रष्टारम्, धनार्थम् वयं मरुतां तच्छर्धः सुष्ठु धीमहि बुध्यामह इति ॥ १८ ॥

**इमा उ वः सुदानवो घृतं न पिप्युषीरिषः । वर्धान् काण्वस्य मन्मभिः ॥ १९ ॥**

इमाः । ऊँ इति । वः । सुऽदानवः । घृतम् । न । पिप्युषीः । इषः । वर्धान् । काण्वस्य । मन्मऽभिः ॥

**वेङ्कट०** इमाः एव युष्मान् हे शोभनदानाः ! आज्यम् इव [4]वृद्धाः इषः[4] हवींषि वर्धयन्तु काण्वस्य मन्मभिः स्तुतिभिः सह ॥ १९ ॥

**क्व नूनं सुदानवो मदथा वृक्तबर्हिषः । ब्रह्मा को वः सपर्यति ॥ २० ॥**

क्व । नूनम् । सुऽदानवः । मदथ । वृक्तऽबर्हिषः । ब्रह्मा । कः । वः । सपर्यति ॥ २० ॥

**वेङ्कट०** क्व सम्प्रति यज्ञे मदथ हे सुदानाः ! स्तीर्णबर्हिषः ! आसनार्थं यजमानैः । कः [5]ब्राह्मणः वः अधुना[5] परिचरति ॥ २० ॥

[2]इति पञ्चमाष्टके अष्टमाध्याये एकविंशो वर्गः[2] ॥

---

१-१. तु. ऋ ८,१८,१; स्तुतिर्मर्त्यसुखं भिक्षयत मूको. २-२. नास्ति मूको. ३-३. ररक्षतुर्विरवं मूको. ४-४. वृद्धायुषः मूको. ५-५. °ह्मण ··· धुना मूको.

नहि ष्म यद्ध वः पुरा स्तोमेभिर्वृक्तबर्हिषः । शर्धाँ ऋतस्य जिन्वथ ॥ २१ ॥

नहि । स्म । यत् । ह । वः । पुरा । स्तोमेभिः । वृक्तऽबर्हिषः । शर्धान् । ऋतस्य । जिन्वथ ॥ २१ ॥

**वेङ्कट०** न खलु स तद् इदानीं भवति, यत् खलु यूयं पूर्वस्मिन् काले स्तोमैः हे वृक्तबर्हिषः! उत्साहान् सत्यभूतस्य यजमानस्य प्रीणयथ ॥ २१ ॥

समु त्ये महतीरपः सं क्षोणी समु सूर्यम् । सं वज्रं पर्वशो दधुः ॥ २२ ॥

सम् । ऊँ इति । त्ये । महतीः । अपः । सम् । क्षोणी इति । सम् । ऊँ इति । सूर्यम् । सम् । वज्रम् । पर्वऽशः । दधुः ॥

**वेङ्कट०** सम् दधुः ते महद् अन्तरिक्षम् ( तु. निघ २,३ ), सम्[1] [2]द्यावापृथिवी, सम् सूर्यम्[2] । सम् दधुः वज्रम् चेन्द्रायुधम् पर्वशः[3] ॥ २२ ॥

वि वृत्रं पर्वशो ययुर्वि पर्वताँ अराजिनः । चक्राणा वृष्णि पौंस्यम् ॥ २३ ॥

वि । वृत्रम् । पर्वऽशः । ययुः । वि । पर्वतान् । अराजिनः । चक्राणाः । वृष्णि । पौंस्यम् ॥ २३ ॥

**वेङ्कट०** वि ययुः वृत्रम् असुरम् पर्वशः ( तु. ऋ ८,६,१३ ) । यातिर्वधकर्मसु ( तु. निघ २,१९ ) पठितः । अपि च मेघान् ईश्वरवर्जितान् कुर्वाणाः वर्षणशीलम् बलम्[4] ॥ २३ ॥

अनु त्रितस्य युध्यतः शुष्ममावन्नुत क्रतुम् । अन्विन्द्रं वृत्रतूर्ये ॥ २४ ॥

अनु । त्रितस्य । युध्यतः । शुष्मम् । आवन् । उत । क्रतुम् । अनु । इन्द्रम् । वृत्रऽतूर्ये ॥ २४ ॥

**वेङ्कट०** [5]अनु अरक्षन् मरुतः त्रितस्य[5] बलम् युध्यतः, अपि च प्रज्ञानम् । एतदेवाह — अनु अरक्षन्[6] इन्द्रम् [7]वृत्रवधार्थे सङ्ग्रामे[7] इति ॥ २४ ॥

विद्युद्धस्ता अभिद्यवः शिप्राः शीर्षन् हिरण्ययीः । शुभ्रा व्यञ्जत श्रिये ॥ २५ ॥

विद्युत्ऽहस्ताः । अभिऽद्यवः । शिप्राः । शीर्षन् । हिरण्ययीः । शुभ्राः । वि । अञ्जत । श्रिये ॥ २५ ॥

**वेङ्कट०** विद्योतमानहस्ताः अभिगतदीप्तयः तेषाम् शीर्षन् हिरण्मय्यः शिप्राः भवन्ति शिरस्त्राणानि ( तु. ऋ ५,५४,११ ) । शोभमानाः मरुतः श्र्यर्थम् आभरणैः[8] अङ्गानि वि अञ्जत । 'चित्रैरञ्जिभिर्वपुषे' ( ऋ १,६४,४ ) इत्युक्तम् ॥ २५ ॥

[9]इति पञ्चमाष्टके अष्टमाध्याये द्वाविंशो वर्गः[9] ॥

उशना यत् परावत उक्ष्णो रन्ध्रमयातन । द्यौर्न चक्रदद् भिया ॥ २६ ॥

उशना । यत् । पराऽवतः । उक्ष्णः । रन्ध्रम् । अयातन । द्यौः । न । चक्रदत् । भिया ॥ २६ ॥

---

१. नास्ति अ[१]. २. °द्यावा ··· सू° वि[२]. ३. वर्षशः मूको. ४. चलं मूको. ५-५. अन्तरिक्षस्थानस्येन्द्रस्य वि[२]; अन्वक्षरन्तिरथानस्येन्द्रस्य अ[१]. ६. अक्षरन् मूको. ७-७. पुत्रवधा ··· मूको. ८. श्रियर्थम् मूको. ९-९. नास्ति मूको.

वेङ्कट० उशना यूयं च हे मरुतः! शुष्णासुरवधार्थं यदा मेघस्य द्वारम् दूरात् अयातन[1] अन्तर्वर्तमानं [2]तं हन्तुम्[2], तदा द्यौः इव स शुष्णः अक्रन्दीत् भयेन ॥ २६ ॥

आ नो॑ म॒खस्य॑ दा॒वनेऽश्वै॒र्हिर॑ण्यपाणिभिः । देवा॑स॒ उप॑ गन्तन ॥ २७ ॥

आ । नः॒ । म॒खस्य॑ । दा॒वने॑ । अश्वैः॑ । हिर॑ण्यपाणिऽभिः । देवा॑सः । उप॑ । ग॒न्त॒न॒ ॥ २७ ॥

वेङ्कट० उप आ गच्छत अस्मान् धनस्य दानाय[3] अश्वैः हिरण्यपाणिभिः हे देवाः! ॥ २७ ॥

यदे॑षां॒ पृष॑ती॒ रथे॒ प्रष्टि॒र्वह॑ति॒ रोहि॑तः । यान्ति॑ शु॒भ्रा रि॒णन्न॒पः ॥ २८ ॥

यत् । ए॒षा॒म् । पृष॑तीः । रथे॑ । प्रष्टिः॑ । वह॑ति । रोहि॑तः । यान्ति॑ । शु॒भ्राः । रि॒णन् । अ॒पः ॥ २८ ॥

वेङ्कट० यत् एषाम् पृषतीः[4] रोहितः च बडवाः रथे प्रष्टिः च सुयुक्तः वहति प्रापयति[5] युनक्ति, तदा यान्ति शोभमानाः प्रेरयन्ति उदकानि च ॥ २८ ॥

सु॒षोमे॑ शर्य॒णाव॑त्यार्जी॒के प॒स्त्या॑वति । य॒युर्निच॑क्रया॒ नरः॑ ॥ २९ ॥

सु॒ऽसोमे॑ । श॒र्य॒णाऽव॑ति । आ॒र्जी॒के । प॒स्त्य॑ऽवति । य॒युः । निऽच॑क्रया । नरः॑ ॥ २९ ॥

वेङ्कट० सुषोमो नाम देशो यत्र सुषोमा नदी, तत्र शर्यणावति[6] च [7]तथा आर्जीके[7] च पस्त्यावति च मरुतो यान्ति। निचक्रा नाम पुरी, तया सुषोमादिषु गच्छन्ति मार्गस्थितया। यद्वा नियमितचक्रया सेनया सह यान्तीति ॥ २९ ॥

क॒दा ग॑च्छाथ मरुत इ॒त्था विप्रं॒ हव॑मानम् । मा॒र्डीके॑भि॒र्नाध॑मानम् ॥ ३० ॥

क॒दा । ग॒च्छा॒थ॒ । म॒रु॒तः॒ । इ॒त्था । विप्र॑म् । हव॑मानम् । मा॒र्डीके॑भिः । नाध॑मानम् ॥ ३० ॥

वेङ्कट० कदा गच्छाथ हे मरुतः! इत्थम् विप्रम् हवमानम् सुखकरैर्धनैः सह याचमानम् ॥ ३० ॥

[8]इति पञ्चमाष्टके अष्टमाध्याये त्रयोविंशो वर्गः[8] ॥

कद्ध॑ नू॒नं क॑धप्रियो॒ यदिन्द्र॒मज॑हातन । को वः॑ सखि॒त्व ओ॑हते ॥ ३१ ॥

कत् । ह॒ । नू॒नम् । क॒ध॒ऽप्रि॒यः॒ । यत् । इन्द्र॑म् । अज॑हातन । कः । वः॒ । स॒खि॒ऽत्वे । ओ॒ह॒ते॒ ॥ ३१ ॥

वेङ्कट० कदा खलु यूयं हे स्तोत्रप्रियः![9] स कालो भवति, यस्मिन् यूयम् इन्द्रम् परित्यजत। सर्वदेन्द्रेण सह वर्तध्वे[10] इति। कः वा युष्मान् अयजमानः सख्ये प्रापयति ॥ ३१ ॥

स॒हो षु णो॒ वज्र॑हस्तैः॒ कण्वा॑सो अ॒ग्निं म॒रुद्भिः॑ । स्तु॒षे हिर॑ण्यवाशीभिः ॥ ३२ ॥

---

१. आयत° मूको. २-२. तदन्तुम् मूको. ३. दाता यैः मूको. ४. बृहती मूको. ५. याति तापय° मूको. ६. °ती वि². ७-७. तदार्जिते मूको. ८-८. नास्ति मूको. ९. स्तोत्रप्रि° वि². १०. वर्त ··· मूको.

सहो इति । सु । नः । वज्रऽहस्तैः । कण्वासः । अग्निम् । मरुत्ऽभिः । स्तुषे । हिरण्यऽवाशीभिः ।३२।

**वेङ्कट०** सहैव अस्माकं स्वभूता इमे कण्वाः मरुद्भिः आयुधहस्तैः स्तुवन्ति, तथा चाहमपि हिरण्यवाशीभिः मरुद्भिः सहैव अग्निम्[1] स्तौमि । हिरण्यैरलङ्कृतानि आयुधानि भवन्ति मरुताम् ॥३२॥

**ओ षु वृष्णः प्रयज्यूना नव्यसे सुवितायं । ववृत्यां चित्रवाजान् ॥ ३३ ॥**

ओ इति । सु । वृष्णः । प्रऽयज्यून् । आ । नव्यसे । सुवितायं । ववृत्याम् । चित्रऽवाजान् ॥ ३३ ॥

**वेङ्कट०** आ ववृत्याम् वर्षितॄन् प्रकर्षेण यष्टव्यान् नवतराय अभ्युदयाय चित्रान्नान् ॥ ३३ ॥

**गिरयश्चिन्नि जिहते पर्शानासो मन्यमानाः । पर्वताश्चिन्नि येमिरे ॥ ३४ ॥**

गिरयः । चित् । नि । जिहते । पर्शानासः । मन्यमानाः । पर्वताः । चित् । नि । येमिरे ॥ ३४ ॥

**वेङ्कट०** गिरयः पर्शानाः ( तु. निघ १,१० ) इति मेघनामनी । तत्रैकं नैघण्टुकम् । ते च नि जिहते[2] निर्गच्छन्ति मरुद्भिः अभिगम्यमानाः । तथा शिलोच्चयाश्च नियताः भवन्ति मरुद्भिः मन्यमानाः, न प्रतिगच्छन्ति ॥ ३४ ॥

**आक्ष्णयावानो वहन्त्यन्तरिक्षेण पततः । धातारः स्तुवते वयः ॥ ३५ ॥**

आ । अक्ष्णऽयावानः । वहन्ति । अन्तरिक्षेण । पततः । धातारः । स्तुवते । वयः ॥ ३५ ॥

**वेङ्कट०** आ गच्छन्ति अक्ष्णयावानः[3] । दिवि दिग्भ्यो निर्गत्य विदिशो[4] ये गच्छन्ति ते तथोक्ताः । अन्तरिक्षेण पतन्तः । नुमभावश्छान्दसः । स्तुवते मनुष्याय अन्नं ताच्छील्येन दातारः[5] ॥ ३५ ॥

**अग्निर्हि जानि पूर्व्यश्छन्दो न सूरो अर्चिषा । ते भानुभिर्वि तस्थिरे ॥ ३६ ॥**

अग्निः । हि । जनि । पूर्व्यः । छन्दः । न । सूरः । अर्चिषा । ते । भानुऽभिः । वि । तस्थिरे ॥ ३६ ॥

**वेङ्कट०** अग्निः हि अजनि निर्मथितः [6]पूर्व्यः छन्दः[6] इव सूर्यो भवन् तेजसा । अथ तमग्निं जातम् भानुभिः मरुतः वि स्तारयन्ति ॥ ३६ ॥

[7]इति पञ्चमाष्टके अष्टमाध्याये चतुर्विंशो वर्गः[7] ॥

## [ ८ ]

[7]सध्वंसः काण्व ऋषिः । अश्विनौ देवता । अनुष्टुप् छन्दः[7] ।

**आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवम् ।**
**दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधु ॥ १ ॥**

---

१. अग्नीन् वि[2]. २. जिहिते मूको. ३. आक्ष्ण° मूको. ४. निवि° अ[1]. ५. दार अग्निरिति मूको. ६-६. पूर्ववच्छयित अ[1]; पूवच्छन्द वि[2]. ७-७. नास्ति मूको.

आ । नः । विश्वाभिः । ऊतिऽभिः । अश्विना । गच्छतम् । युवम् ।
दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । पिबतम् । सोम्यम् । मधु ॥ १ ॥

**वेङ्कट०** सध्वंसः । आ गच्छतम् अस्मान् विश्वैः रक्षणैः हे अश्विनौ! [1]युवाम् । आगत्य[1] च हे दर्शनीयौ! हिरण्यरथौ पिबतम् सोममयम् अन्नम् ॥ १ ॥

आ नूनं यातमश्विना रथेन सूर्यत्वचा ।
भुजी हिरण्यपेशसा कवी गम्भीरचेतसा ॥ २ ॥

आ । नूनम् । यातम् । अश्विना । रथेन । सूर्यऽत्वचा ।
भुजी इति । हिरण्यऽपेशसा । कवी इति । गम्भीरऽचेतसा ॥ २ ॥

**वेङ्कट०** आ यातम् इदानीम् अश्विनौ! [2]रथेन सूर्यतेजसा[2] हे भोजयितारौ! हिरण्य ··· ॥ २ ॥

आ यातं नहुषस्पर्यान्तरिक्षात् सुवृक्तिभिः ।
पिबाथो अश्विना मधु कण्वानां सवने सुतम् ॥ ३ ॥

आ । यातम् । नहुषः । परि । आ । अन्तरिक्षात् । सुवृक्तिऽभिः ।
पिबाथः । अश्विना । मधु । कण्वानाम् । सवने । सुतम् ॥ ३ ॥

**वेङ्कट०** ··· श्विनौ! सोमम् कण्वानाम् यज्ञे सुतम् ॥ ३ ॥

आ नो यातं दिवस्पर्यान्तरिक्षादधप्रिया ।
पुत्रः कण्वस्य वामिह सुषाव सोम्यं मधु ॥ ४ ॥

आ । नः । यातम् । दिवः । परि । आ । अन्तरिक्षात् । अधऽप्रिया ।
पुत्रः । कण्वस्य । वाम् । इह । सुसाव । सोम्यम् । मधु ॥ ४ ॥

**वेङ्कट०** निगदसिद्धा ॥ ४ ॥

आ नो यातमुपश्रुत्यश्विना सोमपीतये ।
स्वाहा स्तोमस्य वर्धना प्र कवी धीतिभिर्नरा ॥ ५ ॥

आ । नः । यातम् । उपऽश्रुति । अश्विना । सोमऽपीतये ।
स्वाहा । स्तोमस्य । वर्धना । प्र । कवी इति । धीतिऽभिः । नरा ॥ ५ ॥

**वेङ्कट०** ··· पानाय स्वाहाकारं यज्ञम् स्तोमस्य स्तोतुः कर्मभिः हे वर्धयितारौ![3] धनानि ॥ ५ ॥

[4]इति पञ्चमाष्टके अष्टमाध्याये पञ्चविंशो वर्गः[4] ॥

---

१-१. °वामहत्य मूको. २-२. रथेन ··· तेजसा मूको. ३. वर्धय अ[1]. ४-४. नास्ति मूको.

यच्चिद्धि वां पुर ऋषयो जुहूरेऽवसे नरा ।
आ यातमश्विना गतमुपेमां सुष्टुतिं मम ॥ ६ ॥

यत् । चित् । हि । वाम् । पुरा । ऋषयः । जुहूरे । अवसे । नरा ।
आ । यातम् । अश्विना । आ । गतम् । उप । इमाम् । सुऽस्तुतिम् । मम ॥ ६ ॥

**वेङ्कट०** यत् चित् हि वाम् पुरा पूर्वस्मिन्नेव काले ऋषयः आहूतवन्तौ रक्षणाय नराः ! । तथापि अस्मान् आ यातम् अश्विनौ !, उप गच्छतम् 'च मम इमाम्' सुष्टुतिम् ॥ ६ ॥

दिवश्चिद् रोचनादध्या नो गन्तं स्वर्विदा ।
धीभिर्वत्सप्रचेतसा स्तोमेभिर्हवनश्रुता ॥ ७ ॥

दिवः । चित् । रोचनात् । अधि । आ । नः । गन्तम् । स्वःऽविदा ।
धीभिः । वत्सऽप्रचेतसा । स्तोमेभिः । हवनऽश्रुता ॥ ७ ॥

**वेङ्कट०** द्युलोकाद् रोचनात् आ गच्छतम् अस्मान् हे स्वर्विदौ ! । कर्माणि उद्दिश्य हे वत्सप्रचेतसौ ! वत्सेषु प्रमनसौ तथोक्तौ स्तः मामुद्दिश्य हे ह्वानश्रुतौ ! ॥ ७ ॥

किमन्ये पर्यासतेऽस्मत् स्तोमेभिरश्विना ।
पुत्रः कण्वस्य वामृषिर्गीर्भिर्वत्सो अवीवृधत् ॥ ८ ॥

किम् । अन्ये । परि । आसते । अस्मत् । स्तोमेभिः । अश्विना ।
पुत्रः । कण्वस्य । वाम् । ऋषिः । गीःऽभिः । वत्सः । अवीवृधत् ॥ ८ ॥

**वेङ्कट०** किम् अस्मत्तः अन्ये अश्विनौ ! स्तोमैः परि उपविशन्ति । अथ प्रत्यक्षः—कण्वस्य पुत्रः वाम्[2] वत्सः ऋषिः मम भ्राता स्तुतिभिः वर्धयति । वयमेवाश्विनौ स्तुम इति ॥ ८ ॥

आ वां विप्र इहावसेऽह्वत् स्तोमेभिरश्विना ।
अरिप्रा वृत्रहन्तमा ता नो भूतं मयोभुवा ॥ ९ ॥

आ । वाम् । विप्रः । इह । अवसे । अह्वत् । स्तोमेभिः । अश्विना ।
अरिप्रा । वृत्रहन्ऽतमा । ता । नः । भूतम् । मयःऽभुवा ॥ ९ ॥

**वेङ्कट०** आ अह्वत् वाम् विप्रः इह रक्षणार्थम् स्तोमैः अश्विनौ ! । हे अपापौ ! अतिशयेन शत्रूणां हन्तारौ ! तौ अस्माकं भवतम् सुखस्य भावयितारौ ॥ ९ ॥

---

१-१. च ... मिमां मूको. २. अपां मूको.

आ यद् वां योषणा रथमतिष्ठद् वाजिनीवसू ।
विश्वान्यश्विना युवं प्र धीतान्यगच्छतम् ॥ १० ॥

आ । यत् । वाम् । योषणा । रथम् । अतिष्ठत् । वाजिनीवसू इति वाजिनीऽवसू ।
विश्वानि । अश्विना । युवम् । प्र । धीतानि । अगच्छतम् ॥ १० ॥

**वेङ्कट०** हे अन्नवद्धनौ![1] आ अतिष्ठत् यदा[2] युवयोः रथम् सूर्यस्य दुहिता, तदानीम् विश्वानि चिन्तितानि अश्विनौ! युवाम् प्र अगच्छतम् ॥ १० ॥

[3]इति पञ्चमाष्टके अष्टमाध्याये षड्विंशो वर्गः[3] ॥

अतः सहस्रनिर्णिजा रथेना यातमश्विना ।
वत्सो वां मधुमद् वचोऽशंसीत् काव्यः कविः ॥ ११ ॥

अतः । सहस्रऽनिर्निजा । रथेन । आ । यातम् । अश्विना ।
वत्सः । वाम् । मधुऽमत् । वचः । अशंसीत् । काव्यः । कविः ॥ ११ ॥

**वेङ्कट०** अस्मात्कारणात् रथेन आ गच्छतम् सहस्ररूपेण अश्विनौ!, यतः [4]वत्सः वाम्[4] [5]मधुमत् वचः[5] अशंसीत् कवेः पुत्रः स्वयं त्वत्[6] कविः ॥ ११ ॥

पुरुमन्द्रा पुरूवसू मनोतरा रयीणाम् ।
स्तोमं मे अश्विनाविममभि वह्नी अनूषाताम् ॥ १२ ॥

पुरुऽमन्द्रा । पुरुवसू इति पुरुऽवसू । मनोतरा । रयीणाम् ।
स्तोमम् । मे । अश्विनौ । इमम् । अभि । वह्नी इति । अनूषाताम् ॥ १२ ॥

**वेङ्कट०** बहुसोमौ बहुधनौ निर्मातारौ धनानाम् स्तोमम् मे अश्विनौ इमम् अभि अनूषाताम् वोढारौ । अभिष्टवोऽभिनवः । [7]सुष्टु स त्वया[7] स्तुत[8] इति ॥ १२ ॥

आ नो विश्वान्यश्विना धत्तं राधांस्यह्रया ।
कृतं न ऋत्वियावतो मा नो रीरधतं निदे ॥ १३ ॥

आ । नः । विश्वानि । अश्विना । धत्तम् । राधांसि । अह्रया ।
कृतम् । नः । ऋत्वियऽवतः । मा । नः । रीरधतम् । निदे ॥ १३ ॥

**वेङ्कट०** '[9]आ धत्तम्[9]' नः विश्वानि अन्नानि अश्विनौ! अनवनतौ उच्छ्रितवदनौ । कुरुतम् अस्मान् प्राप्तुकामान् आयुष्मतः । मा अस्मान् वशी कुरुतम् निन्दित्रे शत्रवे ॥ १३ ॥

---

१. अन्नध° मूको. २. यथा मूको. ३-३. नास्ति मूको. ४-४. वद्धो वा मूको. ५-५. मधुवचः अ[1]. ६. समुच्चये निपातस्तु द्र. (तु. या १,९); तव अ[1]. ७-७. सुष्ठुसस्त्वया अ'. ८. स्तुतम् मूको. ९-९. अधत्त मूको.

यन्नासत्या परावति यद् वा स्थो अध्यम्बरे ।
अतः सहस्रनिर्णिजा रथेना यातमश्विना ॥ १४ ॥

यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । अम्बरे ।
अतः । सहस्रऽनिर्निजा । रथेन । आ । यातम् । अश्विना ॥ १४ ॥

**वेङ्कट०** निगदसिद्धा ॥ १४ ॥

यो वां नासत्यावृषिर्गीर्भिर्वत्सो अवीवृधत् ।
तस्मै सहस्रनिर्णिजमिषं धत्तं घृतश्चुतम् ॥ १५ ॥

यः । वाम् । नासत्यौ । ऋषिः । गीःऽभिः । वत्सः । अवीवृधत् ।
तस्मै । सहस्रऽनिर्निजम् । इषम् । धत्तम् । घृतऽश्चुतम् ॥ १५ ॥

**वेङ्कट०** निगदसिद्धा ॥ १५ ॥

[1]इति पञ्चमाष्टके अष्टमाध्याये सप्तविंशो वर्गः[1] ॥

प्रास्मा ऊर्जं घृतश्चुतमश्विना यच्छतं युवम् ।
यो वां सुम्नाय तुष्टवद् वसूयाद् दानुनस्पती ॥ १६ ॥

प्र । अस्मै । ऊर्जम् । घृतऽश्चुतम् । अश्विना । यच्छतम् । युवम् ।
यः । वाम् । सुम्नाय । तुस्तवत् । वसुऽयात् । दानुनः । पती इति ॥ १६ ॥

**वेङ्कट०** [2]प्र यच्छतम्[2] अस्मै अन्नम् आज्यसिक्तम् सत्, आज्यसिक्तं क्षरति[3], अश्विनौ! युवाम् । यः वाम् सुखाय अस्तौत् धनमिच्छन् हे दानस्य स्वामिनौ! ॥ १६ ॥

आ नो गन्तं रिशादसेमं स्तोमं पुरुभुजा ।
कृतं नः सुश्रियो नरेमा दातमभिष्टये ॥ १७ ॥

आ । नः । गन्तम् । रिशादसा । इमम् । स्तोमम् । पुरुऽभुजा ।
कृतम् । नः । सुऽश्रियः । नरा । इमा । दातम् । अभिष्टये ॥ १७ ॥

**वेङ्कट०** आ गच्छतम् अस्माकं हे रिशतामसितारौ![4] इमम् स्तोमम् बहुभोजनौ! । कुरुतं चास्मान् सुश्रीकान्[5] नरौ! । इमानि च धनानि दत्तम् अभीच्छतेऽस्मै ॥ १७ ॥

आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।
राजन्तावध्वराणामश्विना यामहूतिषु ॥ १८ ॥

---

१-१. नास्ति मूको. २-२. प्रागच्छ° वि[२]; प्रगच्छ° अ[१]. ३-३. रक्षति मूको. ४. °सिरातौ मूको. ५. द्धश्रीतान् मूको.

आ । वाम् । विश्वाभिः । ऊतिऽभिः । प्रियऽमेधाः । अहूषत ।
राजन्तौ । अध्वराणाम् । अश्विना । यामऽहूतिषु ॥ १८ ॥

**वेङ्कट०** आहूतवन्तः वाम् विश्वाभिः ऊतिभिः स्तुतिभिः[1] प्रियमेधकुले जाताः, प्रियमेधो नाम काण्वपुत्रः, ईशानौ यज्ञानाम् हे अश्विनौ! यामाऽऽह्वानेषु भवतोरागमनार्थेषु ह्वानेषु ॥ १८ ॥

आ नो गन्तं मयोभुवाश्विना शंभुवा युवम् ।
यो वां विपन्यू धीतिभिर्गीर्भिर्वत्सो अवीवृधत् ॥ १९ ॥

आ । नः । गन्तम् । मयःऽभुवा । अश्विना । शम्ऽभुवा । युवम् ।
यः । वाम् । विपन्यू इति । धीतिऽभिः । गीःऽभिः । वत्सः । अवीवृधत् ॥ १९ ॥

**वेङ्कट०** निगदसिद्धा । अस्मान् आ गच्छतम् इमं च वत्सम्, यः हे स्तुतिकामौः! युवां कर्मभिः स्तुतिभिश्च वर्धयति ॥ १९ ॥

याभिः कण्वं मेधातिथिं याभिर्वशं दशव्रजम् ।
याभिर्गोशर्यमावतं ताभिर्नोऽवतं नरा ॥ २० ॥

याभिः । कण्वम् । मेधऽअतिथिम् । याभिः । वशम् । दशऽव्रजम् ।
याभिः । गोऽशर्यम् । आवतम् । ताभिः । नः । अवतम् । नरा ॥ २० ॥

**वेङ्कट०** याभिः एतान् अरक्षतम्, ताभिः अस्मान् अभिरक्षतम् । [2]गोशर्य्यम् स्यूमरश्मिमित्याहुः[2] ॥२०॥

[3]इति पञ्चमाष्टके अष्टमाध्याये अष्टाविंशो वर्गः[3] ॥

याभिर्नरा त्रसदस्युमावतं कृत्व्ये धने ।
ताभिः ष्व१स्माँ अश्विना प्रावतं वाजसातये ॥ २१ ॥

याभिः । नरा । त्रसदस्युम् । आवतम् । कृत्व्ये । धने ।
ताभिः । सु । अस्मान् । अश्विना । प्र । अवतम् । वाजऽसातये ॥ २१ ॥

**वेङ्कट०** याभिः ऊतिभिः हे नरौ! त्रसदस्युम्[4] आवतम् कर्तव्ये धने, ताभिः सुष्ठु अस्मान् अश्विनौ! प्र रक्षतम् अन्नलाभाय ॥ २१ ॥

प्र वां स्तोमाः सुवृक्तयो गिरो वर्धन्त्वश्विना ।
पुरुत्रा वृत्रहन्तमा ता नो भूतं पुरुस्पृहा ॥ २२ ॥

प्र । वाम् । स्तोमाः । सुऽवृक्तयः । गिरः । वर्धन्तु । अश्विना ।
पुरुऽत्रा । वृत्रहन्ऽतमा । ता । नः । भूतम् । पुरुऽस्पृहा ॥ २२ ॥

---

१. हेतिभिः मूको. २-२. °शय्यस्यूम° मूको. ३-३. नास्ति मूको. ४ सद° मूको.

वेङ्कट० [1]'प्रवृद्धौ कुर्वन्तु वाम्[1] स्तोमाः सुप्रवृत्ताः केवलाः गिरः च अश्विनौ! । हे बहूनां त्रातारौ! अतिशयेन वृत्रस्य हन्तारौ! तौ अस्माकं भवतम् बहूनां स्पृहणीयौ ॥ २२ ॥

त्रीणि पदान्यश्विनोराविः सान्ति गुहा परः ।
कवी ऋतस्य पत्मभिरर्वाग्जीवेभ्यस्परि ॥ २३ ॥

त्रीणि । पदानि । अश्विनोः । आविः । सन्ति । गुहा । परः ।
कवी इति । ऋतस्य । पत्मऽभिः । अर्वाक् । जीवेभ्यः । परि ॥ २३ ॥

वेङ्कट० त्रयः अंशाः अश्विनोः आविः भवन्ति । 'द्यावापृथिवीरूपेण इमे अश्विना' (तु. माश ४,१,५,१६) इति ब्राह्मणम् । परस्तात्स्थितोंऽशो गुहायां भवति । तौ कवी सर्वानन्यान् जीवानपहाय अर्वाक् आगच्छतम् ऋतस्य पतनैः सह उदकानि पातयन्ताविति ॥ २३ ॥

[2]इति पञ्चमाष्टके अष्टमाध्याये एकोनत्रिंशो वर्गः[2] ॥

[ ९ ]

[2]शशकर्णः काण्व ऋषिः । अश्विनौ देवता । अनुष्टुप् छन्दः, प्रथमाचतुर्थीषष्ठीचतुर्दशीपञ्चदश्यो बृहत्यः, द्वितीयातृतीयाविंश्येकविंश्यो गायत्र्यः, पञ्चमी ककुप्, दशमी त्रिष्टुप्, एकादशी विराट्, द्वादशी जगती[2] ।

आ नूनमश्विना युवं वत्सस्य गन्तमवसे ।
प्रास्मै यच्छतमवृकं पृथु च्छर्दिर्युयुतं या अरातयः ॥ १ ॥

आ । नूनम् । अश्विना । युवम् । वत्सस्य । गन्तम् । अवसे ।
प्र । अस्मै । यच्छतम् । अवृकम् । पृथु । छर्दिः । युयुतम् । याः । अरातयः ॥ १ ॥

वेङ्कट० शशकर्णः । आ गच्छतम् इदानीम् अश्विनौ! युवाम् अस्य वत्सस्य रक्षणाय । प्र [3]यच्छतम् अस्मै स्तेनरहितम्[3] विस्तीर्णम् गृहम् । पृथक् कुरुतम् च याः अरातयः प्रजाः ॥ १ ॥

यदन्तरिक्षे यद् दिवि यत् पञ्च मानुषाँ अनु । नृम्णं तद् धत्तमश्विना ॥ २ ॥

यत् । अन्तरिक्षे । यत् । दिवि । यत् । पञ्च । मानुषान् । अनु । नृम्णम् । तत् । धत्तम् । अश्विना ॥ २ ॥

वेङ्कट० यत् अन्तरिक्षादिषु भवति धनम्, तत्[4] अस्मभ्यम् धत्तम् हे अश्विनौ! ॥ २ ॥

ये वां दंसांस्यश्विना विप्रासः परिमामृशुः । एवेत् काण्वस्य बोधतम् ॥ ३ ॥

ये । वाम् । दंसांसि । अश्विना । विप्रासः । परिऽममृशुः । एव । इत् । काण्वस्य । बोधतम् ॥ ३ ॥

वेङ्कट० ये युवयोः कर्माणि अश्विनौ! मेधाविनः परिममृशुः निरूपितवन्तः, तेषामिव काण्वस्य अपि स्तुतिं बुध्यतम् ॥ ३ ॥

---

१-१. प्रवृद्ध ··· मूको. २-२. नास्ति मूको. ३-३. ता···स्तेनसहि° मूको. ४. तम् मूको.

अयं वां घर्मो अश्विना स्तोमेन परि षिच्यते ।
अयं सोमो मधुमान् वाजिनीवसू येन वृत्रं चिकेतथः ॥ ४ ॥

अयम् । वाम् । घर्मः । अश्विना । स्तोमेन । परि । सिच्यते ।
अयम् । सोमः । मधुऽमान् । वाजिनीवसू इति वाजिनीऽवसू । येन । वृत्रम् । चिकेतथः ॥ ४ ॥

वेङ्कट० अयम् वाम् घर्मः अश्विना! महावीरस्थितः आज्येनेव स्तोमेन परि सिच्यते । अयम्[1] च भवतोः[2] सोमः रसवान् हे[3] अन्नवद्धनौ[4]!, येन हि तेन पुरा वृत्रम् युवाम् चिकेतथः । अथुसोऽभावश्छान्दसः ॥ ४ ॥

यदप्सु यद् वनस्पतौ यदोषधीषु पुरुदंससा कृतम् ।
तेन माविष्टमश्विना ॥ ५ ॥

यत् । अप्ऽसु । यत् । वनस्पतौ । यत् । ओषधीषु । पुरुऽदंससा । कृतम् ।
तेन । मा । अविष्टम् । अश्विना ॥ ५ ॥

वेङ्कट० यत् अन्नं हे पुरुकर्माणौ! एतेषु भवद्भ्याम् कृतम्, तेन मां रक्षतम् अश्विनौ! ॥ ५ ॥

[5]इति पञ्चमाष्टके अष्टमाध्याये त्रिंशो वर्गः[5] ॥

यन्नासत्या भुरण्यथो यद् वा देव भिषज्यथः ।
अयं वां वत्सो मतिभिर्न विन्धते हविष्मन्तं हि गच्छथः ॥ ६ ॥

यत् । नासत्या । भुरण्यथः । यत् । वा । देवा । भिषज्यथः ।
अयम् । वाम् । वत्सः । मतिऽभिः । न । विन्धते । हविष्मन्तम् । हि । गच्छथः ॥ ६ ॥

वेङ्कट० यद्यपि नासत्यौ! गच्छथः[6] यत् वा हे देवौ! भैषज्यं कुरुथः स्तोतॄणाम्, तथापि अयम् वाम् वत्सः स्तुतिभिः न लभते । विन्दतेर्वर्णान्यत्वं छान्दसम् । 'न विन्धे अस्य सुष्टुतिम्' ( ऋ १,७,७ ) इति मन्त्रः । हविष्मन्तम् हि युवाम् गच्छथः ॥ ६ ॥

आ नूनमश्विनोर्ऋषिः स्तोमं चिकेत वामया ।
आ सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणि ॥ ७ ॥

आ । नूनम् । अश्विनोः । ऋषिः । स्तोमम् । चिकेत । वामया ।
आ । सोमम् । मधुमत्ऽतमम् । घर्मम् । सिञ्चात् । अथर्वणि ॥ ७ ॥

वेङ्कट० आ चिकेत ज्ञापयते तदानीम् अश्विनोः[7] स्तोमम् ऋषिः कल्याण्या वाचा । आ सिञ्चति सोमम् मधुमत्तमम् घर्मम् च अथर्वणि अग्नौ ॥ ७ ॥

---

१. यं मूको. २. भवन्तः मूको. ३. ये मूको. ४. अन्नध° मूको. ५-५. नास्ति मूको.
६. गच्छतः मूको. ७. °नौ मूको.

आ नूनं रघुवर्तनिं रथं तिष्ठाथो अश्विना ।
आ वां स्तोमा इमे मम नभो न चुच्यवीरत ॥ ८ ॥

आ । नूनम् । रघुऽवर्तनिम् । रथम् । तिष्ठाथः । अश्विना ।
आ । वाम् । स्तोमाः । इमे । मम । नभः । न । चुच्यवीरत ॥ ८ ॥

**वेङ्कट०** आ तिष्ठथः इदानीम् रथम् लघुगमनम् अश्विनौ ! आभिमुख्येन च्यवन्ते युवयोः इमे स्तोमाः यथा आदित्यः ( तु. निघ २,१३ ) दिवः उत्तिष्ठति ॥ ८ ॥

यदद्य वां नासत्योक्थैराचुच्युवीमहि ।
यद् वा वाणीभिरश्विनेवेत् काण्वस्य बोधतम् ॥ ९ ॥

यत् । अद्य । वाम् । नासत्या । उक्थैः । आऽचुच्युवीमहि ।
यत् । वा । वाणीभिः । अश्विना । एव । इत् । काण्वस्य । बोधतम् ॥ ९ ॥

**वेङ्कट०** तत् अद्य वाम् नासत्यौ ! शस्त्रैः आच्यावयामः, यत् च केवलाभिः ऋग्भिः[1] अश्विनौ !, एवमेव काण्वस्य शस्त्राणि गिरश्च बुध्यतम् ॥ ९ ॥

यद् वां कक्षीवाँ उत यद् व्यश्व ऋषिर्यद् वां दीर्घतमा जुहाव ।
पृथी यद् वां वैन्यः सादनेष्वेवेदतो अश्विना चेतयेथाम् ॥ १० ॥

यत् । वाम् । कक्षीवान् । उत । यत् । विऽअश्वः । ऋषिः । यत् । वाम् । दीर्घऽतमाः । जुहाव ।
पृथी । यत् । वाम् । वैन्यः । सदनेषु । एव । इत् । अतः । अश्विना । चेतयेथाम् ॥ १० ॥

**वेङ्कट०** यथा कक्षीवान्[2] वाम् जुहाव, अपि च '[3]व्यश्वादिः, यथा वा वेनपुत्रः पृथी वाम्[3]' यज्ञेषु । एवमेव अस्मात् कण्वाद् अश्विनौ ! स्तोत्राणि बुध्यतम् ॥ १० ॥

[4]इति पञ्चमाष्टके अष्टमाध्याये एकत्रिंशो वर्गः[4] ॥

यातं छर्दिष्पा उत नः परस्पा भूतं जगत्पा उत नस्तनूपा ।
वर्तिस्तोकाय तनयाय यातम् ॥ ११ ॥

यातम् । छर्दिःऽपौ । उत । नः । परःऽपा । भूतम् । जगत्ऽपौ । उत । नः । तनूऽपा ।
वर्तिः । तोकाय । तनयाय । यातम् ॥ ११ ॥

**वेङ्कट०** यातम् गृहस्य रक्षकौ, अपि चास्माकं ··· ··· ··· पौत्रार्थं[5] च मार्गम् यातम् । गृहं वा यातमित्यर्थः[6] ॥ ११ ॥

---

१. ऋग्विभिः मूको. २. वांक्षी वां मूको. ३-३. °श्वादिभिर्यथा वानेन पुत्रपृथिवी मूको. ४-४. नास्ति मूको. ५. स्तोत्रार्थं मूको. ६. °तमिति वि[२].

यदिन्द्रेण सरथं याथो अश्विना यद् वा वायुना भवथः समोकसा ।
यदादित्येभिर्ऋभुभिः सजोषसा यद् वा विष्णोर्विक्रमणेषु तिष्ठथः ॥ १२ ॥

यत् । इन्द्रेण । सऽरथम् । याथः । अश्विना । यत् । वा । वायुना । भवथः । समऽओकसा ।
यत् । आदित्येभिः । ऋभुऽभिः । सऽजोषसा । यत् । वा । विष्णोः । विऽक्रमणेषु । तिष्ठथः ॥ १२ ॥

वेङ्कट० यत् इन्द्रेण एकरथस्थम्[1] याथः अश्विनौ! । यत् वा वायुना भवथः समाननिवासौ । यत् वा आदित्यैः ऋभुभिः वा सङ्गतौ । यत् वा विष्णोः विक्रमेषु[2] तिष्ठथः । पूर्वत्र सम्बन्धः ॥ १२ ॥

यदद्याश्विनावहं हुवेय वाजसातये ।
यत् पृत्सु तुर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः ॥ १३ ॥

यत् । अद्य । अश्विनौ । अहम् । हुवेय । वाजऽसातये ।
यत् । पृत्ऽसु । तुर्वणे । सहः । तत् । श्रेष्ठम् । अश्विनोः । अवः ॥ १३ ॥

वेङ्कट० यत् अद्य अहम् अश्विनौ![3] अन्नलाभाय हुवेय । ततोऽहम् यत्[4] सङ्ग्रामेषु तरते प्रतियोद्ध्रे अभिभावुकम् रक्षणम् तत् लभेय श्रेष्ठम् अश्विनोः रक्षणम् ॥ १३ ॥

आ नूनं यातमश्विनेमा हव्यानि वां हिता ।
इमे सोमासो अधि तुर्वशे यदाविमे कण्वेषु वामथ ॥ १४ ॥

आ । नूनम् । यातम् । अश्विना । इमा । हव्यानि । वाम् । हिता ।
इमे । सोमासः । अधि । तुर्वशे । यदौ । इमे । कण्वेषु । वाम् । अथ ॥ १४ ॥

वेङ्कट० आ यातम् इदानीम् अश्विनौ! इमानि हवींषि वाम् विनिहितानि[5] । यथा इमे सोमाः तुर्वशे यदौ[6] निहिताः, तथा इमे सोमाः कण्वेषु च वाम् निहिता इति ॥ १४ ॥

यन्नासत्या पराके अर्वाके अस्ति भेषजम् ।
तेन नूनं विमदाय प्रचेतसा छर्दिर्वत्साय यच्छतम् ॥ १५ ॥

यत् । नासत्या । पराके । अर्वाके । अस्ति । भेषजम् ।
तेन । नूनम् । विऽमदाय । प्रऽचेतसा । छर्दिः । वत्साय । यच्छतम् ॥ १५ ॥

वेङ्कट० यत् नासत्यौ! दूरे अन्तिके वा अस्ति भेषजम्, तेन नूनम् विमदाय राज्ञे वत्साय च मम भ्रात्रे सुखम् यच्छतम्[7] हे सुमती! ॥ १५ ॥

[8]इति पञ्चमाष्टके अष्टमाध्याये द्वात्रिंशो वर्गः[8] ॥

---

१. एकरथारथं मूको.; क्रिवि. द्र. २. विचक्र° मूको. ३. °नौ अद्य मूको. ४. यः मूको. ५. निहिता° मूको. ६. यः वि°. ७. यच्छत मूको. ८-८. नास्ति मूको.

आ नूनं रघुवर्तनिं रथं तिष्ठाथो अश्विना ।
आ वां स्तोमा इमे मम नभो न चुच्यवीरत ॥ ८ ॥

आ । नूनम् । रघुऽवर्तनिम् । रथम् । तिष्ठाथः । अश्विना ।
आ । वाम् । स्तोमाः । इमे । मम । नभः । न । चुच्यवीरत ॥ ८ ॥

**वेङ्कट०** आ तिष्ठथः इदानीम् रथम् लघुगमनम् अश्विनौ! । आभिमुख्येन च्यवन्ते युवयोः इमे स्तोमाः यथा आदित्यः ( तु. निघ २,१३ ) दिवः उत्तिष्ठति ॥ ८ ॥

यदद्य वां नासत्योक्थैराचुच्युवीमहि ।
यद् वा वाणीभिरश्विनेवेत् काण्वस्य बोधतम् ॥ ९ ॥

यत् । अद्य । वाम् । नासत्या । उक्थैः । आऽचुच्युवीमहि ।
यत् । वा । वाणीभिः । अश्विना । एव । इत् । काण्वस्य । बोधतम् ॥ ९ ॥

**वेङ्कट०** तत् अद्य वाम् नासत्यौ! शस्त्रैः आच्यावयामः, यत् च केवलाभिः ऋग्भिः[1] अश्विनौ!, एवमेव काण्वस्य शस्त्राणि गिरश्च बुध्यतम् ॥ ९ ॥

यद् वां कक्षीवाँ उत यद् व्यश्व ऋषिर्यद् वां दीर्घतमा जुहाव ।
पृथी यद् वां वैन्यः सादनेष्वेवेदतो अश्विना चेतयेथाम् ॥ १० ॥

यत् । वाम् । कक्षीवान् । उत । यत् । विऽअश्वः । ऋषिः । यत् । वाम् । दीर्घऽतमाः । जुहाव ।
पृथी । यत् । वाम् । वैन्यः । सदनेषु । एव । इत् । अतः । अश्विना । चेतयेथाम् ॥ १० ॥

**वेङ्कट०** यथा कक्षीवान्[2] वाम् जुहाव, अपि च '[3]व्यश्वादिः, यथा वा वेनपुत्रः पृथी वाम्[3] यज्ञेषु । एवमेव अस्मात् कण्वाद् अश्विनौ! स्तोत्राणि बुध्यतम् ॥ १० ॥

[4]इति पञ्चमाष्टके अष्टमाध्याये एकत्रिंशो वर्गः[4] ॥

यातं छर्दिष्पा उत नः परस्पा भूतं जगत्पा उत नस्तनूपा ।
वर्तिस्तोकाय तनयाय यातम् ॥ ११ ॥

यातम् । छर्दिःऽपौ । उत । नः । परःऽपा । भूतम् । जगत्ऽपौ । उत । नः । तनूऽपा ।
वर्तिः । तोकाय । तनयाय । यातम् ॥ ११ ॥

**वेङ्कट०** यातम् गृहस्य रक्षकौ, अपि चास्माकं ......... पौत्रार्थं[5] च मार्गम् यातम् । गृहं वा यातमित्यर्थः[6] ॥ ११ ॥

---

१. ऋग्विभिः मूको. २. वांक्षी वां मूको. ३-३. °श्वादिभिर्यथा वानेन पुत्रपृथिवी मूको. ४-४. नास्ति मूको. ५. स्तोत्रार्थं मूको. ६. °तमिति वि².

यदिन्द्रेण सरथं याथो अश्विना यद् वा वायुना भवथः समोकसा ।
यदादित्येभिर्ऋभुभिः सजोषसा यद् वा विष्णोर्विक्रमणेषु तिष्ठथः ॥ १२ ॥

यत् । इन्द्रेण । सऽरथम् । याथः । अश्विना । यत् । वा । वायुना । भवथः । समऽओकसा ।
यत् । आदित्येभिः । ऋभुऽभिः । सऽजोषसा । यत् । वा । विष्णोः । विऽक्रमणेषु । तिष्ठथः ॥ १२ ॥

**वेङ्कट०** यत् इन्द्रेण एकरथस्थम्[1] याथः अश्विनौ! । यत् वा वायुना भवथः समाननिवासौ । यत् वा आदित्यैः ऋभुभिः वा सङ्गतौ । यत् वा विष्णोः विक्रमेषु[2] तिष्ठथः । पूर्वत्र सम्बन्धः ॥ १२ ॥

यदद्याश्विनावहं हुवेय वाजसातये ।
यत् पृत्सु तुर्वणे सहस्तच्छ्रेष्ठमश्विनोरवः ॥ १३ ॥

यत् । अद्य । अश्विनौ । अहम् । हुवेय । वाजऽसातये ।
यत् । पृत्ऽसु । तुर्वणे । सहः । तत् । श्रेष्ठम् । अश्विनोः । अवः ॥ १३ ॥

**वेङ्कट०** यत अद्य अहम् अश्विनौ![3] अन्नलाभाय हुवेय । ततोऽहम् यत्[4] सङ्ग्रामेषु तरते प्रतियोद्ध्रे अभिभावुकम् रक्षणम् तत् लभेय श्रेष्ठम् अश्विनोः रक्षणम् ॥ १३ ॥

आ नूनं यातमश्विनेमा हव्यानि वां हिता ।
इमे सोमासो अधि तुर्वशे यदाविमे कण्वेषु वामथ ॥ १४ ॥

आ । नूनम् । यातम् । अश्विना । इमा । हव्यानि । वाम् । हिता ।
इमे । सोमासः । अधि । तुर्वशे । यदौ । इमे । कण्वेषु । वाम् । अथ ॥ १४ ॥

**वेङ्कट०** आ यातम् इदानीम् अश्विनौ! इमानि हवींषि वाम् विनिहितानि[5] । यथा इमे सोमाः तुर्वशे यदौ[6] निहिताः, तथा इमे सोमाः कण्वेषु च वाम् निहिता इति ॥ १४ ॥

यन्नासत्या पराके अर्वाके अस्ति भेषजम् ।
तेन नूनं विमदाय प्रचेतसा छर्दिर्वत्साय यच्छतम् ॥ १५ ॥

यत् । नासत्या । पराके । अर्वाके । अस्ति । भेषजम् ।
तेन । नूनम् । विऽमदाय । प्रऽचेतसा । छर्दिः । वत्साय । यच्छतम् ॥ १५ ॥

**वेङ्कट०** यत् नासत्यौ! दूरे अन्तिके वा अस्ति भेषजम्, तेन नूनम् विमदाय राज्ञे वत्साय च मम भ्रात्रे सुखम् यच्छतम्[7] हे सुमती! ॥ १५ ॥

[8]इति पञ्चमाष्टके अष्टमाध्याये द्वात्रिंशो वर्गः[8] ॥

---

१. एकरथारथं मूको.; क्रिवि. द्र. २. विचक्र° मूको. ३. °नौ अद्य मूको. ४. यः मूको. ५. निविहि° मूको. ६. यः वि°. ७. यच्छत मूको. ८-८. नास्ति मूको.

अबु॑ध्रमु॒ त्य इन्द्र॑वन्तो अ॒ग्नयो॒ ज्योति॒र्भर॑न्त उ॒षसो॒ व्यु॑ष्टिषु ।

अबुत्स्यु प्र दे॒व्या सा॒कं वा॒चाहम॒श्विनोः ।
व्या॑वर्दे॒व्या म॒तिं वि रा॒तिं मर्त्ये॑भ्यः ॥ १६ ॥

अबु॑त्सि । ऊँ इति॑ । प्र । दे॒व्या । सा॒कम् । वा॒चा । अ॒हम् । अ॒श्विनोः॑ ।
वि । आ॒वः॒ । दे॒वि॒ । आ । म॒तिम् । वि । रा॒तिम् । मर्त्ये॑भ्यः ॥ १६ ॥

**वेङ्कट०** प्रबुद्धोऽस्मि अहम् देव्या वाचा सह अश्विनोः। स्तुवन्नेव अश्विनौ अहं प्रबुद्धोऽस्मि। तां वाचमाह—हे देवि! त्वमश्विनौ स्तुवती तयोः सुमतिम्। व्याविः आङ्पूर्वो ण्यर्थः। वि गमयसि[1]। तथा वि गमयसि च तयोर्दानम् मर्त्येभ्यः। यद्वा उषसः सम्बोधनम् देवि! इति ॥१६॥

प्र बो॑धयोषो अ॒श्विना॒ प्र दे॑वि सूनृते महि ।
प्र य॑ज्ञहोतरानु॒षक् प्र मदा॑य॒ श्रवो॑ बृ॒हत् ॥ १७ ॥

प्र । बो॒ध॒य॒ । उ॒षः॒ । अ॒श्विना॑ । प्र । दे॒वि॒ । सू॒नृ॒ते॒ । म॒हि॒ ।
प्र । य॒ज्ञ॒ऽहो॒तः॒ । आ॒नु॒षक् । प्र । मदा॑य । श्रवः॑ । बृ॒हत् ॥ १७ ॥

**वेङ्कट०** हे उषः! अश्विनौ प्र बोधय[2] देवि! सुशब्दे! महति!। हे यज्ञहोतः! औषसाग्ने! प्र यच्छ स्तोत्रैः मदाय महद् अन्नम् अनुषक्तम् ॥ १७ ॥

यदु॑षो॒ यासि॑ भा॒नुना॒ सं सूर्ये॑ण रोचसे ।
आ हा॒यम॒श्विनो॒ रथो॑ व॒र्तिर्या॑ति नृ॒पाय्य॑म् ॥ १८ ॥

यत् । उ॒षः॒ । यासि॑ । भा॒नुना॑ । सम् । सूर्ये॑ण । रो॒च॒से॒ ।
आ । ह॒ । अ॒यम् । अ॒श्विनोः॑ । रथः॑ । व॒र्तिः । या॒ति॒ । नृ॒ऽपाय्य॑म् ॥ १८ ॥

**वेङ्कट०** यदा त्वम् हे उषः! भानुना सह यासि, तदा सूर्येण च सम् रोचसे, तदानीम् आ याति [3]अश्विनोः अयम् रथः वर्तिः[3] यज्ञम्, यत्र नृभिः [4]सोमः पीयते[4] ॥ १८ ॥

यदापी॑तासो अं॒शवो॒ गावो॒ न दु॒ह्र ऊध॑भिः ।
यद् वा॒ वाणी॒रनू॑षत॒ प्र दे॑व॒यन्तो॑ अ॒श्विना॑ ॥ १९ ॥

यत् । आऽपी॑तासः । अं॒शवः॑ । गावः॑ । न । दु॒ह्रे । ऊध॑ऽभिः ।
यत् । वा॒ । वाणीः॑ । अनू॑षत । प्र । दे॒व॒ऽयन्तः॑ । अ॒श्विना॑ ॥ १९ ॥

**वेङ्कट०** यदा रसेन[5] आपीताः अंशवः स्वरसं दुहन्ति गावः इव पयः ऊधभिः, यदा[6] वाणीः प्र स्तुवन्ति देवौ अश्विनौ इच्छन्तः। पूर्वत्र सम्बन्धः ॥ १९ ॥

---

१. =त्वरयसि। २. °धयन् मूको. ३-३. °नेऽन्तारथे रथो पतिः मूको. ४-४. सोमपीतये अ[१]. ५. रक्षसे अ[१]; राक्षसे° वि[२]. ६. यथा अ[१].

प्र द्युम्नाय प्र शवसे प्र नृषाह्याय शर्मणे । प्र दक्षाय प्रचेतसा ॥ २० ॥

प्र । द्युम्नाय । प्र । शवसे । प्र । नृऽसह्याय । शर्मणे । प्र । दक्षाय । प्रऽचेतसा ॥ २० ॥

**वेङ्कट०** प्र स्तुवति अन्नाय प्र च शवसे प्र च शत्रूणामभिभवित्रे गृहाय [1]प्र च बलाय[1] हे सुमती! ॥२०॥

यन्नूनं धीभिरश्विना पितुर्योना निषीदथः । यद् वा सुम्नेभिरुक्थ्या ॥ २१ ॥

यत् । नूनम् । धीभिः । अश्विना । पितुः । योना । निऽसीदथः । यत् । वा । सुम्नेभिः । उक्थ्या ॥ २१ ॥

**वेङ्कट०** यत् इदानीम् हे अश्विनौ! पितुः आदित्यस्य योनौ दिवि निषीदथः कर्मभिर्हेतुभिः तत्र कानिचित्कर्माणि कर्तुम्, यत् वा सुखान्यनुभवितुम्। अथापि भवन्तौ[3] रथे आयातम्[4] प्रशस्यौ! ॥२१॥

[5]इति पञ्चमाष्टके अष्टमाध्याये त्रयस्त्रिंशो वर्गः[5] ॥

[ १० ]

[5]प्रगाथो घौरः काण्व ऋषिः । अश्विनौ देवता । आद्या बृहती, द्वितीया मध्येज्योतिः, तृतीया अनुष्टुप्, चतुर्थी आस्तारपङ्क्तिः, पञ्चमीषष्ठ्यौ प्रगाथः ( =पञ्चमी बृहती, षष्ठी सतोबृहती )[5] ।

यत् स्थो दीर्घप्रसद्मनि यद् वादो रोचने दिवः ।
यद् वा समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ॥ १ ॥

यत् । स्थः । दीर्घऽप्रसद्मनि । यत् । वा । अदः । रोचने । दिवः ।
यत् । वा । समुद्रे । अधि । आऽकृते । गृहे । अतः । आ । यातम । अश्विना ॥ १ ॥

**वेङ्कट** प्रगाथः[6] । यदि भवथः[7] युवां दीर्घतरयज्ञगृहे[8] यजमाने, यत् वा अमुष्मिन् आदित्यस्य रोचने लोके, यत् वा अन्तरिक्षे (तु. निघ १, ३), युवयोर्निवासार्थम् आकृते गृहे आ यातम् हे अश्विनौ! ॥१॥

यद् वा यज्ञं मनवे संमिमिक्षथुरेवेत् काण्वस्य बोधतम् ।
बृहस्पतिं विश्वान् देवाँ अहं हुव इन्द्राविष्णू अश्विनावाशुहेषसा ॥ २ ॥

यत् । वा । यज्ञम । मनवे । सम्ऽमिमिक्षथुः । एव । इत् । काण्वस्य । बोधतम् ।
बृहस्पतिम् । विश्वान् । देवान् । अहम् । हुवे । इन्द्राविष्णू इति । अश्विनौ । आशुऽहेषसा ॥२॥

**वेङ्कट०** यत् वा यज्ञम् मनुष्याय संमिमिक्षथुः । एवमेव काण्वस्य स्तुतिं बुध्यतम् । अथ परोक्षः । बृहस्पत्यादीन् ह्वयामि अश्विनौ च आशुगमनौ ॥ २ ॥

त्या न्व१श्विना हुवे सुदंससा गृभे कृता ।
ययोरस्ति प्र णः सख्यं देवेष्वध्याप्यम् ॥ ३ ॥

---

१-१. च प्रबलाय अ[1]. २. °मती: मूको. ३. भवन्तो वि[1]; °वन्ते अ[1]. ४. आयातु मूको. ५-५. नास्ति मूको. ६. °गार्थ मूको. ७. भवतो मूको. ८. दीर्घस्तय° वि[2]; दीर्घव्रतय° अ[1].

त्या । नु । अश्विना । हुवे । सुऽदंससा । गृभे । कृता ।
ययोः । अस्ति । प्र । नः । सख्यम् । देवेषु । अधि । आप्यम् ॥ ३ ॥

वेङ्कट० तौ क्षिप्रम् अश्विनौ ह्वयामि सुकर्माणौ[1] यज्ञगृहे कर्तारौ, ययोः प्र भवति सख्यम् अस्मद्विषयम्, तथा देवेषु अधि[2] प्राप्तिः ज्ञातेयं वा[3]। देवेषु[4] वर्तते मनुष्येष्वपीति। अधिः सप्तम्यर्थं स्फुटीकरोति ॥ ३ ॥

ययोरधि प्र यज्ञा असूरे सन्ति सूरयः ।
ता यज्ञस्याध्वरस्य प्रचेतसा स्वधाभिर्या पिबतः सोम्यं मधु ॥ ४ ॥

ययोः । अधि । प्र । यज्ञाः । असूरे । सन्ति । सूरयः ।
ता । यज्ञस्य । अध्वरस्य । प्रऽचेतसा । स्वधाभिः । या । पिबतः । सोम्यम् । मधु ॥ ४ ॥

वेङ्कट० ययोः अधि यज्ञाः प्र भवन्ति, ययोश्च प्रसादेन प्रज्ञारहिते मनुष्ये प्रज्ञाः[5] प्रादुर्भवन्ति[6]। ता यज्ञस्य अहिंस्यस्य[7] प्रचेतसौ नेतारौ भवन्तौ हविर्भिः यौ पिबतः सोममयम् मधु ॥ ४ ॥

यदद्याश्विनावपाग् यत् प्राक् स्थो वाजिनीवसू ।
यद् द्रुह्यव्यनवि तुर्वशे यदौ हुवे वामथ मा गतम् ॥ ५ ॥

यत् । अद्य । अश्विनौ । अपाक् । यत् । प्राक् । स्थः । वाजिनीवसू इति वाजिनीऽवसू ।
यत् । द्रुह्यवि । अनवि । तुर्वशे । यदौ । हुवे । वाम् । अथ । मा । आ । गतम् ॥ ५ ॥

वेङ्कट० यत् अद्य हे अश्विनौ! अपाक् भवथः, यदि वा प्राक् हे अन्नवद्धनौ![8], यदि द्रुह्यौ राजनि अनवि तुर्वशे यदौ वा स्थः, वाम् अहम् हुवे। सम्प्रति माम् आ गच्छतम् ॥ ५ ॥

यदन्तरिक्षे पतथः पुरुभुजा यद् वेमे रोदसी अनु ।
यद् वा स्वधाभिरधितिष्ठथो रथमत आ यातमश्विना ॥ ६ ॥

यत् । अन्तरिक्षे । पतथः । पुरुऽभुजा । यत् । वा । इमे इति । रोदसी इति । अनु ।
यत् । वा । स्वधाभिः । अधिऽतिष्ठथः । रथम् । अतः । आ । यातम् । अश्विना ॥ ६ ॥

वेङ्कट० यत् अन्तरिक्षे गच्छथः हे बहुभोजनौ!, [9]यत् वा[9] इमे द्यावापृथिव्यौ प्रति। यत् वा रथस्थाभिः स्वधाभिः सह आत्मीयम् रथम् अधितिष्ठथः। अतः आ गच्छतम् अश्विनौ! ॥ ६ ॥

[1]इति पञ्चमाष्टके अष्टमाध्याये चतुस्त्रिंशो वर्गः[1] ॥

---

१. स्सु° मूको. २. अपि मूको. ३. नास्ति मूको. ४. नास्ति अ[1]. ५. प्रज्ञा अ[1]. ६. °वन्ति अ[1]. ७. अहिंय मूको. ८. °न्नदयौ मूको. ९-९. नास्ति मूको.

[ ११ ]

[1]वत्सः काण्व ऋषिः । अग्निर्देवता । गायत्री छन्दः, आद्या प्रतिष्ठा, द्वितीया वर्धमाना, दशमी त्रिष्टुप्[1] ।

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥ १ ॥

त्वम् । अग्ने । व्रतऽपाः । असि । देवः । आ । मर्त्येषु । आ । त्वम् । यज्ञेषु । ईड्यः ॥ १ ॥

वेङ्कट० त्वम् अग्ने! कर्मणः पालयिता भवसि, देवश्च सन् मर्त्येषु आगत्य वर्तसे । त्वम् [2]यज्ञेषु स्तुत्यः असि[2] ॥ १ ॥

त्वमसि प्रशस्यो विदथेषु सहन्त्य । अग्ने रथीरध्वराणाम् ॥ २ ॥

त्वम् । असि । प्रऽशस्यः । विदथेषु । सहन्त्य । अग्ने । रथीः । अध्वराणाम् ॥ २ ॥

वेङ्कट० त्वम् भवसि स्तुत्यः यज्ञेषु हे सहनकुशल! अग्ने! नेता अध्वराणाम् ॥ २ ॥

स त्वमस्मदप द्विषो युयोधि जातवेदः । अदेवीरग्ने अरातीः ॥ ३ ॥

सः । त्वम् । अस्मत् । अप । द्विषः । युयोधि । जातऽवेदः । अदेवीः । अग्ने । अरातीः ॥ ३ ॥

वेङ्कट० सः त्वम् अस्मत्तः[3] अप युयोधि[4] पृथक् कुरु द्वेष्टॄन् हे जातप्रज्ञ!, तथा अदेवीः आसुरीः अग्ने! अरातीः अप्रयच्छन्तीश्च विशः[5] ॥ ३ ॥

अन्ति चित् सन्तमह यज्ञं मर्तस्य रिपोः । नोप वेषि जातवेदः ॥ ४ ॥

अन्ति । चित् । सन्तम् । अह । यज्ञम् । मर्तस्य । रिपोः । न । उप । वेषि । जातऽवेदः ॥ ४ ॥

वेङ्कट० अन्तिके चित् वर्तमानम् एव यज्ञम् मनुष्यस्य प्रजानां शत्रुभूतस्य न उप गच्छसि जातवेदः! ॥ ४ ॥

मर्ता अमर्त्यस्य ते भूरि नाम मनामहे । विप्रासो जातवेदसः ॥ ५ ॥

मर्ताः । अमर्त्यस्य । ते । भूरि । नाम । मनामहे । विप्रासः । जातऽवेदसः ॥ ५ ॥

वेङ्कट० अमर्त्यस्य[6] ते बहूनि नामानि उच्चारयामः मेधाविनः मर्ताः जातप्रज्ञस्य ॥ ५ ॥

[1]इति पञ्चमाष्टके अष्टमाध्याये पञ्चत्रिंशो वर्गः[1] ॥

विप्रं विप्रासोऽवसे देवं मर्तास ऊतये । अग्निं गीर्भिर्हवामहे ॥ ६ ॥

विप्रम् । विप्रासः । अवसे । देवम् । मर्तासः । ऊतये । अग्निम् । गीःऽभिः । हवामहे ॥ ६ ॥

वेङ्कट० मेधाविनं मेधाविनः रक्षणाय [7]देवम् मनुष्याः[7] रक्षणाय अग्निम् स्तुतिभिः हवामहे ॥ ६ ॥

---

१-१. नास्ति मूको. २. यज्ञे ··· मूको. ३. नास्ति अ[1]. ४. वायु° वि[2]; वयु व यु° अ[1]. ५. विशम् मूको. ६. मर्तस्य अ[1]. ७-७. देवमनु° मूको.

आ ते॑ व॒त्सो मनो॑ यमत् पर॒माच्चि॑त् स॒धस्था॑त् । अग्ने॒ त्वांका॑मया गि॒रा ॥७॥

आ । ते॒ । व॒त्सः । मनः॑ । य॒म॒त् । प॒र॒मात् । चि॒त् । स॒धऽस्था॑त् । अग्ने॑ । त्वाम्ऽका॑मया । गि॒रा ॥७॥

**वेङ्कट०** आभिमुख्येन आ यच्छत्[1] [2]वत्सः तव[2] मनः परमात् अपि तव आवासात्[3] अग्ने! त्वां कामयमानया स्तुत्या ॥ ७ ॥

पु॒रु॒त्रा हि स॒दृङ्ङसि॒ विशो॒ विश्वा॒ अनु॑ प्र॒भुः । स॒मत्सु॑ त्वा हवामहे ॥ ८ ॥

पु॒रु॒ऽत्रा । हि । स॒ऽदृङ् । असि॑ । विशः॑ । विश्वाः॑ । अनु॑ । प्र॒ऽभुः । स॒मत्ऽसु॑ । त्वा॒ । ह॒वा॒म॒हे॒ ॥८॥

**वेङ्कट०** बहुषु त्वं देशेषु प्रज्वलन् सदृङ्[4] भवसि, विशः[5] इव विश्वाः अनु प्रभवसि[6] । तम् त्वा सङ्ग्रामेषु हवामहे ॥ ८ ॥

स॒मत्स्व॒ग्निमव॑से वाज॒यन्तो॑ हवामहे । वाजे॑षु चि॒त्रराध॑सम् ॥ ९ ॥

स॒मत्ऽसु॑ । अ॒ग्निम् । अव॑से । वा॒ज॒ऽयन्तः॑ । ह॒वा॒म॒हे॒ । वाजे॑षु । चि॒त्रऽरा॑धसम् ॥ ९ ॥

**वेङ्कट०** सङ्ग्रामेषु अग्निम् रक्षणाय अन्नमिच्छन्तः हवामहे, सङ्ग्रामेषु चित्रमन्नम् यः साधयति ॥ ९ ॥

प्र॒त्नो हि क॒मीड्यो॑ अध्व॒रेषु॑ स॒नाच्च॒ होता॒ नव्य॑श्च॒ सत्सि॑ ।
स्वां चा॑ग्ने त॒न्वं॑ पि॒प्रय॑स्वा॒स्मभ्यं॑ च॒ सौभ॑ग॒मा य॑जस्व ॥ १० ॥

प्र॒त्नः । हि । क॒म् । ईड्यः॑ । अ॒ध्व॒रेषु॑ । स॒नात् । च॒ । होता॑ । नव्यः॑ । च॒ । सत्सि॑ ।
स्वाम् । च॒ । अ॒ग्ने॒ । त॒न्व॑म् । पि॒प्रय॑स्व । अ॒स्मभ्य॑म् । च॒ । सौभ॑गम् । आ । य॒ज॒स्व॒ ॥१०॥

**वेङ्कट०** स्तुत्यः अध्वरेषु सनातनः होता नूतनः च सीदसि । स त्वम् स्वाम् च तन्वम्[7] प्रीणय, अस्मभ्यम् च सौभाग्यम् आभिमुख्येन देहि ॥ १० ॥

[8]इति पञ्चमाष्टके अष्टमाध्याये षट्त्रिंशो वर्गः[8] ॥

ऋगर्थदीपिका सेयं पञ्चमश्चायमष्टकः ।
कर्ता श्रीवेङ्कटार्यस्य तनयो माधवाह्वयः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने पञ्चमाष्टके अष्टमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये पञ्चमाष्टके अष्टमोऽध्यायः ॥

पञ्चमोऽष्टकः समाप्तः ॥



---

१. गच्छत् मूको. २-२. वस्तवः मूको. ३. तावसात् मूको. ४. वहु सदन् अ[1]. ५. विश्वां वि[2]. ६. भव॰ मूको. ७. तयं अ[1]; यं वि ८-८. नास्ति मूको.

अथ षष्ठोऽष्टकः ।

वेङ्कट०

अथ षष्ठोऽष्टकस्तस्मिन्नध्यायादिषु वक्ष्यते ।
यच्छन्दसीह वक्तव्यं विद्यते छान्दसैर्द्विजैः ॥ १ ॥

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुब्जगत्यौ[1] सप्तेति च्छन्दांसि कवयो विदुः ॥ २ ॥

ननु चातिजगत्यस्ति शक्वर्यप्यतिशक्वरी ।
तथैव चाष्टिरत्यष्टिर्धृतिश्चातिधृतिस्तथा ॥ ३ ॥

सर्वाणि दृष्टानि च संहितायां
तथैव चासंश्चतुरुत्तराणि ।
ततश्च वेदे[2] वचनीयमित्थम्
इमानि छन्दांसि चतुर्दशेति ॥ ४ ॥

ननु च त्रीणि छन्दांसि चत्वारीति च दृश्यते ।
आहुः प्रवादौ भाक्तौ तौ सप्तत्वञ्चैव तादृशम् ॥ ५ ॥

भवन्ति च्छान्दसानीह पदानि त्रीणि तद्यथा ।
एकमष्टाक्षरं दृष्टम् एकमेकादशाक्षरम् ॥ ६ ॥

द्वादशाक्षरमप्येकं तेन त्रीणीति भाषते ।
पदं दशाक्षरं चाल्पं वैराजं[3] तदुपेक्षितम् ॥ ७ ॥

गायत्र्येवोष्णिगभवत् पङ्क्तिमल्पाम्[4] उपेक्षते ।
अनुष्टुबेव[5] बृहती तेन चत्वारि भाषते ॥ ८ ॥

तद्वद्[6] भूयांसि सप्तैव प्रधानान्यपि वा पुनः ।
[7]कथ्यन्ते नामभिश्चैव गायत्री[7] जगतीति च ॥ ९ ॥

निचृतो[8] भूरिजश्चाहुस्ताश्चेदूनाधिकाक्षराः ।
द्वाभ्यां विराट्स्वराजौ [9]च निचृदुष्णिग्भुरिक्ककुप्[9] ॥ १० ॥

---

१. °जगत्योः वि[2] अ[1]. २. वेदैः वि[2]; वेदेः अ[1]. ३. °राजस् वि[2] अ[1]. ४. ··· पत्तिम° वि[2] अ[1]. ५. °ष्टुभेति अ[1] वि[2] ६. तेन अ[1]. ७-७. कथ्य ··· गायत्री° वि[2] अ[1]. ८. निर्वृतौ वि[2] अ[1]. ९-९. च ··· भूरिकुकि ··· वि[2]; च ··· भूरिक्रिय ··· अ[1].

'अग्निः पूर्वेभिः ऋषिभिः'[1] गायत्री निचृदुच्यते ।
'विद्वांसाविद् दुरः पृच्छेद्'[2] गायत्री सा[3] भूरिक्[4] स्मृता ॥ ११ ॥

विराजमाहुः 'राजन्तमध्वराणाम्'[5] इमामृचम् ।
'इन्द्रं जुषस्व प्र वहा'[6] सैषानुष्टुप्स्वराडिति ॥ १२ ॥

चत्वारः पञ्चकाः पादाः षट्कश्चैको यदा भवेत् ।
गायत्री पदपङ्क्तिः सा 'अधा ह्यग्ने क्रतोः'[7] इति ॥ १३ ॥

'चतुष्को वा[8] चतुर्थः स्यात् तत्रोदाहरणं त्विदम् ।
'अग्ने तमद्याश्वम्'[9] इति चतुष्को हि 'हृदिस्पृशः'[10] ॥ १४ ॥

पदपङ्क्तिन्तु पठति[11] पङ्क्तिष्वेव पतञ्जलिः ।
कात्यायनस्य गायत्री पदपङ्क्तिरिति स्थितिः ॥ १५ ॥

षट्सप्तैकादशाः पादा उष्णिग्गर्भेति तां विदुः ।
सा 'ता मे अश्व्यानाम्'[12] इति त्रयश्च यदि[13] सप्तकाः ॥ १६ ॥

सा तु पादनिचृत्प्रोक्ता 'युवाकु हि शचीं( ची'[14] इ )ति सा ।
यदि सप्तकयोर्मध्ये षट्कः साऽतिनिचृत्स्मृता ॥ १७ ॥

सा 'पुरुतमं पुरूणां स्तोतॄणाम्'[15] इति दृश्यते[16] ।
यदि सप्तकयोर्मध्ये दशकः स्यात् प्रतिष्ठितः ॥ १८ ॥

यवमध्या सा भवति 'स सुन्वे यो वसूनाम्'[17] ।
षट्कसप्तकाष्टकाश्चेद् वर्धमानेति कीर्तिता ॥ १९ ॥

विपरीता प्रतिष्ठेति तत्रोदाहरणं शृणु ।
'त्वमसि प्रशस्यः'[18] इति 'त्वमग्ने व्रतपा असि'[19] ॥ २० ॥

षट्कैश्चतुर्भिर्गायत्री पदैस्तु भवति क्वचित् ।
'इन्द्रश्शचीपतिः' इति तत्राहुस्तन्निदर्शनम्[20] ॥ २१ ॥

---

१. ऋ १,१,२. २. ऋ १,१२०,१. ३. नास्ति वि[2] अ[1]. ४. भूरिति वि[2] अ[1]. ५. ऋ १,१,८. ६. कौ २,३०२. ७. ऋ ४,१०,२. ८. °ष्कोप वि[2] अ[1]. ९. ऋ ४,१०,१. १०. ऋ १०,२५,२. ११. ··· पन्ति वि[2]; ··· अ[1]. १२. ऋ ८,२५,२३. १३. इति वि[2] अ[1]. १४. १,१७,४. १५. ऋ ६,४५,२९. १६. दृश्यनाम् वि[2]. १७. ऋ ९,१०८,१३. १८. ऋ ८,११,२. १९. ऋ ८,११,१. २०. °र्शनम । इन्द्रः शचीपतिः बलेन वीळितः । दुश्च्यवनो वृषा समत्सु सासहिः ॥ ( तु. ऋप्रा १६,१७ ) वि[2] अ[1].

[ १२ ]

[1]पर्वतः काण्व ऋषिः । इन्द्रो देवता । उष्णिक् छन्दः[1] ।

य इन्द्र सोमपातमो मदः शविष्ठ चेतति । येना हंसि न्य१त्रिणं तमीमहे ॥१॥

यः । इन्द्र । सोमऽपातमः । मदः । शविष्ठ । चेतति । येन । हंसि । नि । अत्रिणम् । तम् । ईमहे ॥ १ ॥

वेङ्कट० पर्वतः[2] । यः इन्द्र! अतिशयेन सोमस्य पाता तव मदः हे बलवत्तम! प्रज्ञायते शत्रुभिः[3], येन मदेन त्वम् नि हंसि रक्षः, तम् मदं[4] वयम् अभिगच्छामः ॥ १ ॥

येना दशग्वमध्रिगुं वेपयन्तं स्वर्णरम् । येना समुद्रमाविथा तमीमहे ॥ २ ॥

येन । दशऽग्वम् । अध्रिऽगुम् । वेपयन्तम् । स्वःऽनरम् । येन । समुद्रम् । आविथ । तम् । ईमहे ॥ २ ॥

वेङ्कट० येन दिवोदासम् अधृतगमनम् कम्पमानम् स्वर्णरम्, येन च समुद्रम् अरक्षः[5], तम् ईमहे ॥ २ ॥

येन सिन्धुं महीरपो रथाँइव प्रचोदयः । पन्थामृतस्य यातवे तमीमहे ॥ ३ ॥

येन । सिन्धुम् । महीः । अपः । रथान्ऽइव । प्रऽचोदयः । पन्थाम् । ऋतस्य । यातवे । तम् । ईमहे ॥ ३ ॥

वेङ्कट० येन सिन्धुम् प्रति महान्ति उदकानि रथान्[6] इव प्रचोदयसि यज्ञस्य पन्थानम् प्राप्तुम्, तम् मदम् ईमहे ॥ ३ ॥

इमं स्तोममभिष्टये घृतं न पूतमद्रिवः । येना नु सद्य ओजसा ववक्षिथ ॥४॥

इमम् । स्तोमम् । अभिष्टये । घृतम् । न । पूतम् । अद्रिऽवः । येन । नु । सद्यः । ओजसा । ववक्षिथ ॥ ४ ॥

वेङ्कट० इमम् स्तोमम् अस्माकमभिलषितसिद्ध्यर्थम् घृतम् इव पूतम् वज्रिन्! जुषस्व, येन क्षिप्रं तदानीमेव बलेन महान् सन् स्तोतॄन् वहसि[7]। 'ववक्षिथ' ( निघ ३,३ ) इति महन्नामसु अस्ति ॥ ४ ॥

इमं जुषस्व गिर्वणः समुद्रइव पिन्वते । इन्द्र विश्वाभिरूतिभिर्ववक्षिथ ॥ ५ ॥

इमम् । जुषस्व । गिर्वणः । समुद्रःऽइव । पिन्वते । इन्द्र । विश्वाभिः । ऊतिऽभिः । ववक्षिथ ॥५॥

वेङ्कट० इमम् सेवस्व हे गीर्भिर्वननीय![8] स्तोमम्, समुद्रः इव ऊर्मिभिः पिन्वते भूयोभूयो निस्सरति । इन्द्र! विश्वैः पालनैः सह त्वं स्तोतॄन् वहसि ॥ ५ ॥

[1]इति षष्ठाष्टके प्रथमाध्याये प्रथमो वर्गः[1] ॥

यो नो देवः परावतः सखित्वनाय मामहे । दिवो न वृष्टिं प्रथयन् ववक्षिथ ॥६॥

---

१-१ नास्ति मूको. २. नास्ति वि[२]. ३. शत्रून् मूको. ४. त्वं मूको. ५. भार॰ वि[२]. ६. रथावे मूको. ७. भवसि मूको. ८. ॰नीयं मूको.

यः । नः । देवः । पराऽवतः । सखिऽत्वनाय । ममहे । दिवः । न । वृष्टिम् । प्रथयन् । ववक्षिथ ॥६॥

वेङ्कट० यः अस्मान् देवः परावतः आगत्य सख्यार्थं पूजयति, स त्वम् दिवः वृष्टिम् प्रथयन् मेघ इव अस्मान् वहसि ॥ ६ ॥

ववक्षुरस्य केतवं उत वज्रो गभस्त्योः । यत् सूर्यो न रोदसी अवर्धयत् ॥७॥

ववक्षुः । अस्य । केतवः । उत । वज्रः । गभस्त्योः । यत् । सूर्यः । न । रोदसी इति । अवर्धयत् ॥७॥

वेङ्कट० वहन्तु अस्य रश्मयः, अपि च वज्रः गभस्त्योः निहितः, यदा[1] सूर्यः इव द्यावापृथिव्यौ इन्द्रः वर्धयति ॥ ७ ॥

यदि प्रवृद्ध सत्पते सहस्रं महिषाँ अघः । आदित् तं इन्द्रियं महि प्र वावृधे ।८।

यदि । प्रऽवृद्ध । सत्ऽपते । सहस्रम् । महिषान् । अघः । आत् । इत् । ते । इन्द्रियम् । महि । प्र । ववृधे ॥

वेङ्कट० यदि प्रवृद्ध! सतां पते! सहस्रम् महिषान् अभक्षयः, अनन्तरमेव तव बलं महत्त्वं च प्र वर्धते । सहस्रमेव तवाऽशनाय पर्याप्तं महिषाणामिति ॥ ८ ॥

इन्द्रः सूर्यस्य रश्मिभिर्न्यर्शसानमोषति । अग्निर्वनेव सासहिः प्र वावृधे ॥ ९ ॥

इन्द्रः । सूर्यस्य । रश्मिऽभिः । नि । अर्शसानम् । ओषति ।
अग्निः । वनाऽइव । ससहिः । प्र । ववृधे ॥ ९ ॥

वेङ्कट० इन्द्रः आदित्यस्य रश्मिभिः [2]नि ओषति अर्शसानम्[2] । अर्शसानः[3] बाधमानः । शत्रुमत्ति । अग्निः [4]वनानि इव अभिभवन्[4] सङ्ग्रामेषु प्र वर्धते ॥ ९ ॥

इयं तं ऋत्वियावती धीतिरेति नवीयसी । सपर्यन्ती पुरुप्रिया मिमीत इत् ॥१०॥

इयम् । ते । ऋत्वियऽवती । धीतिः । एति । नवीयसी । सपर्यन्ती । पुरुऽप्रिया । मिमीते । इत् ॥ १० ॥

वेङ्कट० इयम् ते काले प्रयुज्यमाना स्तुतिः एति नवतरा । परिचरन्ती सर्वेषां प्रिया पूजयत्येव त्वाम् । इहोष्णिक्षु[5] [6]तृतीये पादेऽन्तिमानां[6] चतुर्णामक्षराणां पादधर्मो[7] दृश्यते ॥ १० ॥

[8]इति षष्ठाष्टके प्रथमाध्याये द्वितीयो वर्गः[8] ॥

गर्भो यज्ञस्य देवयुः क्रतुं पुनीत आनुषक् । स्तोमैरिन्द्रस्य वावृधे मिमीत इत् ॥११॥

गर्भः । यज्ञस्य । देवऽयुः । क्रतुम् । पुनीते । आनुषक् । स्तोमैः । इन्द्रस्य । ववृधे । मिमीते । इत् ॥ ११ ॥

---

१. यथा अ[1]. २-२. नोषत्यर्शसोनम मूको. ३. अर्शसान्नो मूको. ४-४. °नीववाभि° वि[1]; °नीवाभिभवद् अ[1]. ५. इवोष्णि° अ[1]. ६-६. तृतीयामेवान्ति° अ[1]; °तीयेवान्ति° वि[2]. ७. वादध° मूको. ८-८. नास्ति मूको.

वेङ्कट० यज्ञस्य गर्भः यजमानः क्रतुम् आत्मानं कर्मणां कर्तारं शोधयति अनुषक्तम्[1]। तत्र स्तोमैः इन्द्रस्य प्रवृद्धो भवति, पश्यति[2] चेन्द्रम् ॥ ११ ॥

सनिर्मित्रस्य॑ पप्रथ इन्द्रः॒ सोम॑स्य पी॒तये॑। प्राची॒ वाशी॑व सुन्व॒ते मिमी॑त इत् ॥१२॥

स॒निः। मि॒त्रस्य॑। प॒प्र॒थे॒। इन्द्रः॑। सोम॑स्य। पी॒तये॑। प्राची॑। वाशी॑ऽइव। सु॒न्व॒ते। मिमी॑ते। इत् ॥ १२॥

वेङ्कट० मित्रभूतस्य यजमानस्य दाता इन्द्रः प्रथितो भवति सोमपानाय। [3]प्राची उपर्युपरि[3] वर्धमाना स्तुतिः ( तु. निघ १,११ ) इदानीं यजमानाय प्रथितं[4] करोति एव इन्द्रम् ॥ १२ ॥

यं विप्रा॑ उ॒क्थवा॑हसोऽभिप्रम॒न्दुरा॒यवः॑।
घृ॒तं न पि॑प्य आ॒सन्यृ॒तस्य॒ यत् ॥ १३ ॥

यम्। विप्राः॑। उ॒क्थऽवा॑हसः। अ॒भि॒ऽप्र॒म॒न्दुः। आ॒यवः॑।
घृ॒तम्। न। पि॒प्ये॒। आ॒सनि॑। ऋ॒तस्य॑। यत् ॥ १३ ॥

वेङ्कट० यम् विप्राः[5] शस्त्रस्य वोढारः[6] प्रकर्षेणाभिप्रमदन्ति मनुष्याः, तस्य आस्ये घृतम् इव [7]सोमः अवर्धत[7] ऋतस्य, सत्यकर्मण इन्द्रस्य यत् प्रीणनमिति ॥ १३ ॥

उ॒त स्व॒राजे॒ अदि॑तिः॒ स्तोम॒मिन्द्रा॑य जीजनत्। पु॒रु॒प्र॒शस्त॑मू॒तय॑ ऋ॒तस्य॒ यत् ॥१४॥

उ॒त। स्व॒ऽराजे॑। अदि॑तिः। स्तोम॑म्। इन्द्रा॑य। जी॒ज॒न॒त्। पु॒रु॒ऽप्र॒श॒स्तम्। ऊ॒तये॑। ऋ॒तस्य॑। यत् ॥

वेङ्कट० अपि च स्वराजे इन्द्राय इयं[8] पृथिवी स्तोमम् जनयति बहुप्रशस्तम् रक्षणाय सत्यस्येन्द्रस्य युक्तमिति ॥ १४ ॥

अ॒भि वह्न॑य ऊ॒तये॒ऽनू॑षत॒ प्रश॑स्तये। न दे॑व॒ विव्र॑ता॒ हरी॑ ऋ॒तस्य॒ यत् ॥ १५ ॥

अ॒भि। वह्न॑यः। ऊ॒तये॑। अनू॑षत। प्रऽश॑स्तये। न। दे॒व॒। विऽव्र॑ता। हरी॒ इति॑। ऋ॒तस्य॑। यत् ॥१५॥

वेङ्कट० अभि अनूषत वोढारः इन्द्रम् रक्षणाय प्रशस्तये च। न देव! इन्द्र! तवाश्वौ विकर्माणौ भवतः, अपि तर्हि समानमनसौ एकं कर्म कुरुतः। यत् तव योग्यं [9]कर्म तत्[9] [10]समनसौ कुरुतः[10] ॥ १५ ॥

[11]इति षष्ठाष्टके प्रथमाध्याये तृतीयो वर्गः[11] ॥

यत् सोम॑मिन्द्र॒ विष्ण॑वि॒ यद् वा॑ घ त्रि॒त आ॒प्त्ये।
यद् वा॑ म॒रुत्सु॒ मन्द॑से॒ समिन्दु॑भिः ॥ १६ ॥

---

१. °क्तां मूको. २. ··· श्यति मूको. ३-३. प्रचर्युपरि वि[२]; प्रलचर्युपरि अ[२]. ४. नास्ति मूको. ५. °प्राः मनुष्याः मूको. ६. °रं मूको. ७-७. सोममव° वि[२]; सोमवर्ष° अ[२]. ८. इदं यं मूको. ९-९. कर्म ः मूको. १०-१०. °नसोऽकुरुत मूको. ११-११. नास्ति मूको.

यत् । सोम॑म् । इ॒न्द्र॒ । विष्ण॑वि । यत् । वा॒ । घ॒ । त्रि॒ते । आ॒प्त्ये ।
यत् । वा॒ । म॒रुत्ऽसु॑ । मन्द॑से । सम् । इन्दु॑ऽभिः ॥ १६ ॥

**वेङ्कट०** यदि सोमम् इन्द्र! भ्रातरि विष्णौ, [१]यत् वा अद्भ्यो[१] जाते तवानुचरे त्रिते, यत् वा मरुत्सु[२] मन्दसे, तैः सह सोमं पीत्वा मन्दसे। अथापि अस्माकम् इन्दुभिः सम् रमस्वेति। अस्योत्तरा भूयसे निर्वचनाय ॥ १६ ॥

यद् वा॑ शक्र परा॒वति॑ समु॒द्रे अधि॒ मन्द॑से । अ॒स्माक॒मित् सु॒ते र॑णा॒ समिन्दु॑भिः ॥१७॥

यत् । वा॒ । श॒क्र॒ । प॒रा॒ऽवति॑ । स॒मु॒द्रे । अधि॑ । मन्द॑से ।
अ॒स्माक॑म् । इत् । सु॒ते । र॒ण॒ । सम् । इन्दु॑ऽभिः ॥ १७ ॥

**वेङ्कट०** यत् वा शक्र! दूरे यदि [३]वा समुद्रे[३] मन्दसे अस्माकम् एव सुते सम् रमस्व इन्दुभिः ॥ १७ ॥

यद् वासि॑ सुन्व॒तो वृ॒धो यज॑मानस्य सत्पते ।
उ॒क्थे वा॒ यस्य॒ रण्य॑सि॒ समिन्दु॑भिः ॥ १८ ॥

यत् । वा॒ । असि॑ । सु॒न्व॒तः । वृ॒धः । यज॑मानस्य । स॒त्ऽप॒ते॒ ।
उ॒क्थे । वा॒ । यस्य॑ । रण्य॑सि । सम् । इन्दु॑ऽभिः ॥ १८ ॥

**वेङ्कट०** यदि च भवसि सुन्वतः [४]अन्यस्य वृधः[४] यजमानस्य हे सत्पते![५], ततो मदीयैः इन्दुभिः संरमस्व, शस्त्रे वा यस्य सम् रमसे तमप्यपहायेति ॥ १८ ॥

दे॒वंदे॑वं॒ वोऽव॑स॒ इन्द्र॑मिन्द्रं गृ॒णीषणि॑ । अधा॑ य॒ज्ञाय॑ तु॒र्वणे॒ व्या॑नशुः ॥ १९ ॥

दे॒वम्ऽदे॑वम् । वः॒ । अव॑से । इन्द्र॑म्ऽइन्द्रम् । गृ॒णीषणि॑ । अध॑ । य॒ज्ञाय॑ । तु॒र्वणे॑ । वि । आ॒न॒शुः॒ ॥ १९ ॥

**वेङ्कट०** सर्वदेवेन्द्रम् एव देवं युष्माकं रक्षणाय स्तुतेः सम्भर्तारः व्याप्नुवन्तु सङ्ग्रामे, अथ [६]यज्ञाय च[६] तारकाय[७] ॥ १९ ॥

य॒ज्ञेभि॑र्य॒ज्ञवा॑हसं॒ सोमे॑भिः सोम॒पात॑मम् । होत्रा॑भि॒रिन्द्रं॑ वावृधु॒र्व्या॑नशुः ॥२०॥

य॒ज्ञेभिः॑ । य॒ज्ञऽवा॑हसम् । सोमे॑भिः । सो॒म॒ऽपात॑मम् । होत्रा॑भिः । इन्द्र॑म् । व॒वृ॒धुः॒ । वि । आ॒न॒शुः॒ ॥

**वेङ्कट०** यज्ञैः यज्ञस्य वोढारम् सोमैः [८]सोमपातमम् होत्राभिः[८] च इन्द्रम् अवर्धयन्, विविधम् आनशुः ॥ २० ॥

[९]इति षष्ठाष्टके प्रथमाध्याये चतुर्थो वर्गः[९] ॥

---

१-१. द्वास्यौ मूको. २. मन्त्रान् सु मूको. ३-३. समुद्रे वा अ[१]. ४-४. °स्यधेकः अ[१]. ५. सम्प वि[२]; सम्पते अ[१]. ६-६. च यज्ञाय अ[१]. ७. तादकाः यम् वि[२]. ८. सोममपां याभिश्च मूको. ९-९. नास्ति मूको.

महीरस्य प्रणीतयः पूर्वीरुत प्रशस्तयः । विश्वा वसूनि दाशुषे व्यानशुः ॥२१॥

महीः । अस्य । प्रऽनीतयः । पूर्वीः । उत । प्रऽशस्तयः ।
विश्वा । वसूनि । दाशुषे । वि । आनशुः ॥ २१ ॥

**वेङ्कट०** महान्ति अस्य प्रणयनानि बहूनि प्रशंसनानि[1] विश्वानि च वसूनि दाशुषे प्रयच्छते[2] । तमिमम् वि आनशुः ॥ २१ ॥

इन्द्रं वृत्राय हन्तवे देवासो दधिरे पुरः । इन्द्रं वाणीरनूषता समोजसे ॥ २२ ॥

इन्द्रम् । वृत्राय । हन्तवे । देवासः । दधिरे । पुरः । इन्द्रम् । वाणीः । अनूषत । सम् । ओजसे ॥ २२ ॥

**वेङ्कट०** वृत्रं हन्तुम् पुरः दधिरे देवाः इन्द्रम् ॥ २२ ॥

महान्तं महिना वयं स्तोमेभिर्हवनश्रुतम् । अर्कैरभि प्र णोनुमः समोजसे ॥२३॥

महान्तम् । महिना । वयम् । स्तोमेभिः । हवनऽश्रुतम् । अर्कैः । अभि । प्र । नोनुमः । सम् । ओजसे ॥

**वेङ्कट०** महान्तम् महता[3] हविषा वयम् स्तोमेभिः च ह्वानश्रुतम् ऋग्भिश्च सम्यक् अभि प्र नोनुमः बलाय ॥ २३ ॥

न यं विविक्तो रोदसी नान्तरिक्षाणि वज्रिणम् ।
अमादिदस्य तित्विषे समोजसः ॥ २४ ॥

न । यम् । विविक्तः । रोदसी इति । न । अन्तरिक्षाणि । वज्रिणम् ।
अमात् । इत् । अस्य । तित्विषे । सम् । ओजसः ॥ २४ ॥

**वेङ्कट०** न यम् पृथक् कुरुतः द्यावापृथिव्यौ, न च अन्तरिक्षाणि वज्रिणम् । तस्य अस्य यद् ओजः[4] तद्भयादेव सन्दीप्तं[5] भवति सर्वं तेजः । सूर्यादयो 'हि तम्' उद्यन्तीति ॥ २४ ॥

यदिन्द्र पृतनाज्ये देवास्त्वा दधिरे पुरः । आदित् ते हर्यता हरी ववक्षतुः ॥ २५ ॥

यत् । इन्द्र । पृतनाज्ये । देवाः । त्वा । दधिरे । पुरः । आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥२५॥

**वेङ्कट०** यदा इन्द्र! सङ्ग्रामे देवाः त्वाम् पुरः दधिरे । अनन्तरमेव तव कान्तौ अश्वौ त्वाम्[7] ववक्षतुः ॥ २५ ॥

[8]इति षष्ठाष्टके प्रथमाध्याये पञ्चमो वर्गः[8] ॥

---

१. प्रशंसानि वि[1]. २. प्रजयन्ति वि[2]; प्रयच्छन्ति अ[1]. ३. महत्त्वा मूको. ४. °जो भवति अ[1]. ५. सदी° मूको. ६-६. हिता मूको. ७. त्वं अ[1]. ८-८° नास्ति मूको.

यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधीः । आदित् ते हर्यता हरी ववक्षतुः ॥ २६ ॥

यदा । वृत्रम् । नदीऽवृतम् । शवसा । वज्रिन् । अवधीः ।
आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥ २६ ॥

वेङ्कट० निगदसिद्धा ॥ २६ ॥

यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे ।
आदित् ते हर्यता हरी ववक्षतुः ॥ २७ ॥

यदा । ते । विष्णुः । ओजसा । त्रीणि । पदा । विऽचक्रमे ।
आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥ २७ ॥

वेङ्कट० यदा तव बलेन आप्यायितः विष्णुः त्रीणि पदानि विचक्रमे, तदानीम् ते हर्यता हरी ववक्षतुः[1] इति ॥ २७ ॥

यदा ते हर्यता हरी वावृधाते दिवेदिवे ।
आदित् ते विश्वा भुवनानि येमिरे ॥ २८ ॥

यदा । ते । हर्यता । हरी इति । वावृधाते इति । दिवेऽदिवे ।
आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ २८ ॥

वेङ्कट० यदा तव स्पृहणीयौ अश्वौ विवर्धयेते[2] अन्वहम्, अनन्तरमेव विश्वानि भुवनानि तुभ्यम्[3] प्रयच्छन्ति ॥ २८ ॥

यदा ते मारुतीर्विशस्तुभ्यमिन्द्र नियेमिरे ।
आदित् ते विश्वा भुवनानि येमिरे ॥ २९ ॥

यदा । ते । मारुतीः । विशः । तुभ्यम् । इन्द्र । निऽयेमिरे ।
आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ २९ ॥

वेङ्कट० यदा तव मरुतो नाम देवविशः[4] तुभ्यम् इन्द्र ! अमानम् (?) नि येमिरे नियच्छन्ति ॥ २९ ॥

यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः ।
आदित् ते विश्वा भुवनानि येमिरे ॥ ३० ॥

---

१. नास्ति मूको. २. °र्धयते मूको. ३. तव वि². ४. °विशो मूको.

यदा । सूर्यम् । अमुम् । दिवि । शुक्रम् । ज्योतिः । अधारयः ।
आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥ ३० ॥

**वेङ्कट०** निगदसिद्धा ॥ ३० ॥

इमां त इन्द्र सुष्टुतिं विप्र इयर्ति धीतिभिः । जामिं पदेव पिप्रतीं प्राध्वरे ॥ ३१ ॥

इमाम् । ते । इन्द्र । सुऽस्तुतिम् । विप्रः । इयर्ति । धीतिऽभिः । जामिम् । पदाऽइव । पिप्रतीम् । प्र । अध्वरे ॥

**वेङ्कट०** इमाम् ते इन्द्र ! सुष्टुतिम् विप्रः प्रेरयति कर्मभिः, यज्ञे स्वसारम् इव इन्द्रियाणि पूरयन्तीम्[1] ॥ ३१ ॥

यदस्य धामनि प्रिये समीचीनासो अस्वरन् । नाभा यज्ञस्य दोहना प्राध्वरे ॥ ३२ ॥

यत् । अस्य । धामनि । प्रिये । सम्ऽईचीनासः । अस्वरन् ।
नाभा । यज्ञस्य । दोहना । प्र । अध्वरे ॥ ३२ ॥

**वेङ्कट०** यत् अस्य स्थाने प्रिये सङ्गताः अस्वरन् स्तुवन्ति यज्ञस्य नाभ्याह्वयसदसि[2], यत्र स्तोतारः कामान् दुहन्ति यज्ञे, तत्रेमां सुष्टुतिम् विप्रः प्रेरयतीति ॥ ३२ ॥

सुवीर्यं स्वश्व्यं सुगव्यमिन्द्र दद्धि नः । होतेव पूर्वचित्तये प्राध्वरे ॥ ३३ ॥

सुऽवीर्यम् । सुऽअश्व्यम् । सुऽगव्यम् । इन्द्र । दद्धि । नः । होताऽइव । पूर्वऽचित्तये । प्र । अध्वरे ॥ ३३ ॥

**वेङ्कट०** सुवीर्यम् शोभनाश्वसङ्घम् सुगव्यम् इन्द्र ! प्रयच्छ अस्मभ्यम्, यथा [3]होता स्तुतकर्मणे[3] यजमानाय यज्ञे देवेभ्य आदाय अभिलषितम्[4] प्र यच्छतीति ॥ ३३ ॥

[4]इति षष्ठाष्टके प्रथमाध्याये षष्ठो वर्गः[4] ॥

[ १३ ]

[5]नारदः काण्व ऋषिः । इन्द्रो देवता । उष्णिक् छन्दः[5] ।

इन्द्रः सुतेषु सोमेषु क्रतुं पुनीत उक्थ्यम् । विदे वृधस्य दक्षसो महान् हि षः ॥ १ ॥

इन्द्रः । सुतेषु । सोमेषु । क्रतुम् । पुनीते । उक्थ्यम् ।
विदे । वृधस्य । दक्षसः । महान् । हि । सः ॥ १ ॥

**वेङ्कट०** नारदः[6] । इन्द्रः सुतेषु सोमेषु प्रज्ञातम् आत्मीयं ··· प्रशस्यं वृद्धम् बलम् च विन्दते । महान् हि सः इन्द्र इति ॥ १ ॥

---

१. पूरयन्ति मूको. २. नाह्वयसददसि मूको. ३-३. होता ··· स्तुत मूको. ४. अतिलपितुं मूको. ५-५. नास्ति मूको. ६. नार अ[1]; नास्ति वि[2].

स प्रथमे व्योमनि देवानां सदने वृधः । सुपारः सुश्रवस्तमः समप्सुजित् ॥ २ ॥

सः । प्रथमे । विऽओमनि । देवानाम् । सदने । वृधः ।
सुऽपारः । सुश्रवःऽतमः । सम् । अप्सुऽजित् ॥ २ ॥

वेङ्कट० सः प्रथमे स्थाने देवावासभूते[1] अन्तरिक्षे वृद्धः सुष्ठु पारयिता[2] स्वन्नतमः अन्तरिक्षे सम्यग् जेता[3] ॥ २ ॥

तमह्वे वाजसातय इन्द्रं भराय शुष्मिणम् । भवा नः सुम्ने अन्तमः सखा वृधे ॥३॥

तम् । अह्वे । वाजऽसातये । इन्द्रम् । भराय । शुष्मिणम् ।
भव । नः । सुम्ने । अन्तमः । सखा । वृधे ॥ ३ ॥

वेङ्कट० तम्[4] ह्वयामि सङ्ग्रामे अन्नं यत्र लभ्यते, इन्द्रम् बलवन्तम्[5] । भव त्वम् अस्माकं सुखे अन्तिकतमः सखा वर्धनाय चेति ॥ ३ ॥

इयं त इन्द्र गिर्वणो रातिः क्षरति सुन्वतः । मन्दानो अस्य बर्हिषो वि राजसि ॥४॥

इयम् । ते । इन्द्र । गिर्वणः । रातिः । क्षरति । सुन्वतः । मन्दानः । अस्य । बर्हिषः । वि । राजसि ॥ ४ ॥

वेङ्कट० इयम् ते हे इन्द्र! गीर्भिर्वननीय! सोमस्य [6]रातिः क्षरति[6] सुन्वतः । मोदमानः अनेन स्तीर्णेन[7] बर्हिषा वि राजसि ॥ ४ ॥

नूनं तदिन्द्र दद्धि नो यत् त्वा सुन्वन्त ईमहे । रयिं नश्चित्रमा भरा स्वर्विदम् ॥५॥

नूनम् । तत् । इन्द्र । दद्धि । नः । यत् । त्वा । सुन्वन्तः । ईमहे ।
रयिम् । नः । चित्रम् । आ । भर । स्वःऽविदम् ॥ ५ ॥

वेङ्कट० इदानीम्[8] तत् इन्द्र! प्रयच्छ अस्मभ्यम्, यत् त्वा सुन्वतः याचामहे । रयिम् नः चित्रम् आ भर सर्वस्य लम्भकम् ॥ ५ ॥

[9]इति षष्ठाष्टके प्रथमाध्याये सप्तमो वर्गः[9] ॥

स्तोता यत् ते विचर्षणिरतिप्रशर्धयद् गिरः । वया इवानु रोहते जुषन्त यत् ॥ ६ ॥

स्तोता । यत् । ते । विऽचर्षणिः । अतिऽप्रशर्धयत् । गिरः ।
वयाःऽइव । अनु । रोहते । जुषन्त । यत् ॥ ६ ॥

वेङ्कट० स्तोता [10]यत् तव विचर्षणिः अत्यन्तं[10] प्रशर्धयति[11] स्तुतीः[12] । शाखाः इव वृक्षम् त्वाम् आरोहन्ति वेष्टयन्ति ता वाचः, यदा त्वां सेवन्त[13] इति ॥ ६ ॥

---

१. देवासहूते मूको. २. वार° मूको. ३. °म्यगेच्छेतौ मूको. ४. त ··· अ[1]. ५. °न्तं वा अ[1]. ६-६. रातिरक्षति मूको. ७. तीर्णेन मूको. ८. नास्ति वि[2]. ९-९. नास्ति मूको. १०-१०. तव ··· रत्य° मूको. ११. प्रवर्ध° मूको. १२. स्तुतैः मूको. १३. सेव मूको.

प्रत्नवज्जनया गिरः शृणुधी जरितुर्हवम् । मदेमदे ववक्षिथा सुकृत्वने ॥ ७ ॥

प्रत्नऽवत् । जनय । गिरः । शृणुधि । जरितुः । हवम् । मदेऽमदे । ववक्षिथ । सुऽकृत्वने ॥ ७ ॥

वेङ्कट० प्रत्नवत्[1] जनय स्तुतीः[2] इत्यात्मानम् अनुशिष्य इन्द्रम् आह— शृणु जरितुः[3] ह्वानमिति । सोमस्य मदेन त्वं धनानि वहसि सुकर्मणे ॥ ७ ॥

क्रीळन्त्यस्य सूनृता आपो न प्रवता यतीः । अया धिया य उच्यते पतिर्दिवः ॥८॥

क्रीळन्ति । अस्य । सूनृताः । आपः । न । प्रऽवता । यतीः । अया । धिया । यः । उच्यते । पतिः । दिवः ॥

वेङ्कट० अभिमुखं गच्छन्ति अस्य स्तुतयः आपः इव प्रवणेन गच्छन्त्यः । अनया प्रज्ञया स्तोतॄणाम् यः उच्यते पतिः दिवः, यम् पतिरयमिति प्रज्ञावन्तमिन्द्रं वदन्ति ॥ ८ ॥

उतो पतिर्य उच्यते कृष्टीनामेक इद् वशी । नमोवृधैरवस्युभिः सुते रण ॥ ९ ॥

उतो इति । पतिः । यः । उच्यते । कृष्टीनाम् । एकः । इत् । वशी । नमःऽवृधैः । अवस्युऽभिः । सुते । रण ॥

वेङ्कट० अपि च स्वामी यः उच्यते मनुष्याणाम् एकः एव स्वतन्त्रः हविर्वर्धयद्भिः[4] भिक्षमाणैः अवस्युभिः[5] सुते अस्मिन्सोमे रमस्व ॥ ९ ॥

स्तुहि श्रुतं विपश्चितं हरी यस्य प्रसक्षिणा । गन्तारा दाशुषो गृहं नमस्विनः ॥१०॥

स्तुहि । श्रुतम् । विपःऽचितम् । हरी इति । यस्य । प्रऽसक्षिणा । गन्तारा । दाशुषः । गृहम् । नमस्विनः ॥

वेङ्कट० स्तुहि[6] विश्रुतम् मेधाविनम्, अश्वौ यस्य प्रसहनशीलौ गन्तारौ यजमानस्य गृहम् हविष्मतः ॥ १० ॥

[7]इति षष्ठाष्टके प्रथमाध्याये अष्टमो वर्गः[7] ॥

तूतुजानो महेमतेऽश्वेभिः प्रुषितप्सुभिः । आ याहि यज्ञमाशुभिः शमिद्धि ते ॥११॥

तुतुजानः । महेऽमते । अश्वेभिः । प्रुषितप्सुऽभिः । आ । याहि । यज्ञम् । आशुऽभिः । शम् । इत् । हि । ते ॥

वेङ्कट० उत्सवे स्थिता मतिर्यस्य स[8] महेमतिः । त्वरन् हे इन्द्र! महेमते! अश्वैः दीप्तरूपैः आ याहि यज्ञम् आशुभिः, सुखमेवात्र तुभ्यमिति ॥ ११ ॥

इन्द्र शविष्ठ सत्पते रयिं गृणत्सु धारय । श्रवः सूरिभ्यो अमृतं वसुत्वनम् ॥१२॥

इन्द्र । शविष्ठ । सत्ऽपते । रयिम् । गृणत्ऽसु । धारय । श्रवः । सूरिऽभ्यः । अमृतम् । वसुऽत्वनम् ॥१२॥

वेङ्कट० इन्द्र! बलवत्तम! सतां पते! रयिम् स्तुवत्सु स्थापय । अन्नं च स्तोतृभ्यः अमरणसाधनम् वसुमत्त्वम् देहि ॥ १२ ॥

---

१. °वः मूको. २. स्तुतिः मूको. ३. जरीतु मूको. ४. °यन् मूको. ५. °भिः शुभिः मूको. ६. नास्ति वि[२]. ७-७. नास्ति मूको. ८. नास्ति मूको.

हवे॑ त्वा॒ सूर॒ उदि॑ते॒ हवे॑ म॒ध्यंदि॑ने दि॒वः । जु॒षा॒ण इ॑न्द्र॒ सप्ति॑भिर्न॒ आ ग॑हि ॥१३॥

हवे॑ । त्वा॒ । सूरे॑ । उत्ऽइ॑ते । हवे॑ । म॒ध्यंदि॑ने । दि॒वः । जु॒षा॒णः । इ॒न्द्र॒ । सप्ति॑ऽभिः । नः॒ । आ । ग॒हि॒ ॥१३॥

वेङ्कट० ह्वयामि त्वाम् हे इन्द्र! प्रातः, ह्वयामि अहं च मध्ये दिवः । प्रीयमाणः इन्द्र![1] अस्मान् अश्वैः आ गच्छ ॥ १३ ॥

आ तू ग॑हि॒ प्र तु द्र॑व॒ मत्स्वा॑ सु॒तस्य॒ गोम॑तः । तन्तुं॑ तनुष्व पू॒र्व्यं यथा॑ वि॒दे ॥१४॥

आ । तु । ग॒हि॒ । प्र । तु । द्र॒व॒ । मत्स्व॑ । सु॒तस्य॑ । गोऽम॑तः । तन्तु॑म् । त॒नु॒ष्व॒ । पू॒र्व्यम् । यथा॑ । वि॒दे ॥ १४ ॥

वेङ्कट० आ गच्छ क्षिप्रम् । प्र द्रव च सोमं प्रति । मत्स्व च सुतेन पयोमिश्रणेन सोमेन । सन्तानम् चास्मदीयमन्विच्छन् तनुष्व[2] पूर्व्यम् अतः पूर्वं क्रमादागतम् यथा तव प्रकारस्त्वया ज्ञायते तथेति ॥ १४ ॥

यच्छ॑क्रासि॑ परा॒वति॒ यद॑र्वा॒वति॑ वृत्रहन् । यद् वा॑ समु॒द्रे अन्ध॑सोऽवि॒तेद॑सि ॥१५॥

यत् । श॒क्र॒ । असि॑ । प॒रा॒ऽवति॑ । यत् । अ॒र्वा॒ऽवति॑ । वृ॒त्र॒ऽह॒न् ।
यत् । वा॒ । स॒मु॒द्रे । अन्ध॑सः । अ॒वि॒ता । इत् । अ॒सि॒ ॥ १५ ॥

वेङ्कट० यदि शक्र! भवसि दूरे, यदि वा अन्तिके वृत्रहन्!, यत् वा अन्तरिक्षे अन्नेन रक्षितैव[3] ॥ १५ ॥

[4]इति षष्ठाष्टके प्रथमाध्याये नवमो वर्गः[4] ॥

इन्द्रं॑ वर्धन्तु नो॒ गिर॒ इन्द्रं॑ सु॒तास॒ इन्द॑वः । इन्द्रे॑ ह॒विष्म॑ती॒र्विशो॑ अराणिषुः ॥१६॥

इन्द्र॑म् । व॒र्ध॒न्तु॒ । नः॒ । गिरः॑ । इन्द्र॑म् । सु॒तासः॑ । इन्द॑वः ।
इन्द्रे॑ । ह॒विष्म॑तीः । विशः॑ । अ॒रा॒णि॒षुः॒ ॥ १६ ॥

वेङ्कट० वर्धयन्तु नः गिरः इन्द्रम्, इन्द्रम् सुताः सोमाः । इन्द्रे हविष्मत्यः[5] प्रजाः लब्धधनाः अराणिषुः रेमिरे ॥ १६ ॥

तमिद् विप्रा॑ अव॒स्यवः॑ प्र॒वत्व॑तीभिरू॒तिभिः॑ । इन्द्रं॑ क्षो॒णीर॑वर्धयन् व॒या इ॑व ॥ १७॥

तम् । इत् । विप्राः॑ । अ॒व॒स्यवः॑ । प्र॒वत्व॑तीभिः । ऊ॒तिऽभिः॑ ।
इन्द्र॑म् । क्षो॒णीः । अ॒व॒र्ध॒य॒न् । व॒याःऽइ॑व ॥ १७ ॥

वेङ्कट० तम् एव विप्राः रक्षणकामाः प्रकर्षवद्भिः रक्षणैः हेतुभिः वर्धयन्ति । तमेव सर्वाः पृथिव्यः वर्धयन्ति, यथा वृक्षं शाखाः वर्धयन्ति ॥ १७ ॥

---

१. इन्द्र इव अ[1]. २. तदमुष्य मूको. ३. °क्षितेन मूको. ४-४. नास्ति मूको.
५. °मभ्यं मूको.

त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत । तमिद् वर्धन्तु नो गिरः सदावृधम् ॥ १८ ॥

त्रिऽकद्रुकेषु । चेतनम् । देवासः । यज्ञम् । अत्नत । तम् । इत् । वर्धन्तु । नः । गिरः । सदाऽवृधम् ॥ १८ ॥

**वेङ्कट०** आभिप्लविकस्य पूर्वं त्र्यहं त्रिकद्रुक इत्याचक्षते। तेषु चेतयितारम्[1] देवाः यजनीयम् इन्द्रं विस्तारयन्ति। तम् एव अस्माकं वर्धयन्तु गिरः सदावर्धकम्[2] ॥ १८ ॥

स्तोता यत् ते अनुव्रत उक्थान्यृतुथा दधे । शुचिः पावक उच्यते सो अद्भुतः ॥ १९ ॥

स्तोता । यत् । ते । अनुऽव्रतः । उक्थानि । ऋतुऽथा । दधे ।
शुचिः । पावकः । उच्यते । सः । अद्भुतः ॥ १९ ॥

**वेङ्कट०** स्तोता यदि [3]ते अनुगुणकर्मा[3] शस्त्राणि काले धारयति। स स्वयम् शुचिः शोधकश्च लौकिकैः कीर्त्यते, तथा महान् भवति ॥ १९ ॥

तदिद् रुद्रस्य चेतति यह्वं प्रत्नेषु धामसु । मनो यत्रा वि तद् दधुर्विचेतसः ॥ २० ॥

तत् । इत् । रुद्रस्य । चेतति । यह्वम् । प्रत्नेषु । धामऽसु । मनः । यत्र । वि । तत् । दधुः । विऽचेतसः ॥ २० ॥

**वेङ्कट०** तत् एव स्तोतुः स्तोत्रं ज्ञायते[4] महत् पुराणेषु यज्ञगृहेषु, मनः यत्र स्तोत्रे वि दधुः विचेतसः देवाः। पुराणेषु यज्ञेष्विन्द्रमेव स्तुवन्ति स्तोतारः, तद् देवाश्च शृण्वन्तीति ॥ २० ॥

[5]इति षष्ठाष्टके प्रथमाध्याये दशमो वर्गः[5] ॥

यदि मे सख्यमावर इमस्य पाह्यन्धसः । येन विश्वा अति द्विषो अतारिम ॥ २१ ॥

यदि । मे । सख्यम् । आऽवरः । इमस्य । पाहि । अन्धसः ।
येन । विश्वाः । अति । द्विषः । अतारिम ॥ २१ ॥

**वेङ्कट०** यदि मे सख्यम् आवृणोषि, ततः[6] इमम् सोमम् पिब। येन त्वया पीतेन विश्वाः अति तरेम वयम् द्विषः प्रजाः ॥ २१ ॥

कदा त इन्द्र गिर्वणः स्तोता भवाति शंतमः । कदा नो गव्ये अश्व्ये वसौ दधः ॥ २२ ॥

कदा । ते । इन्द्र । गिर्वणः । स्तोता । भवाति । शम्ऽतमः ।
कदा । नः । गव्ये । अश्व्ये । वसौ । दधः ॥ २२ ॥

**वेङ्कट०** कदा ते हे इन्द्र! गीर्भिर्वननीय! स्तोता भवति सुखतमः[7]। कदा अस्मान् [8]गोसङ्घे अश्वसङ्घे[8] धने च करोषीति ॥ २२ ॥

---

१. तयि° मूको. २. °वर्धतम् मूको. ३-३. ते गुण° मूको. ४. जायते मूको. ५-५. नास्ति मूको. ६. काका··· मूको. ७. °तम मूको. ८-८. °सङ्घेश्च स° मूको.

उत ते सुष्टुता हरी वृषणा वहतो रथम् । अजुर्यस्य मदिन्तमं यमीमहे ॥ २३ ॥

उत । ते । सुऽस्तुता । हरी इति । वृषणा । वहतः । रथम् । अजुर्यस्य । मदिन्ऽतमम् । यम् । ईमहे ॥ २३ ॥

**वेङ्कट०** अपि च ते सुष्टुतौ[1] अश्वौ वर्षितारौ वहतः रथम्, जरयितुम्[2] अशक्यस्य स्तोतॄणामतिशयेन मदयितारम् यम् वयम्[3] अर्थमभिलषितं याचामहे ॥ २३ ॥

तमीमहे पुरुष्टुतं यह्वं प्रत्नाभिरूतिभिः । नि बर्हिषि प्रिये सदद्ध द्विता ॥ २४ ॥

तम् । ईमहे । पुरुऽस्तुतम् । यह्वम् । प्रत्नाभिः । ऊतिऽभिः ।
नि । बर्हिषि । प्रिये । सदत् । अध । द्विता ॥ २४ ॥

**वेङ्कट०** तम् इन्द्रं याचामहे बहुभिः स्तुतम् महान्तम् । प्रत्नैः मरुद्भिः सह नि षीदतु बर्हिषि प्रिये सम्प्रति । द्विता 'द्वैधम्' इति यास्कः ( ५,३ ) । इहासनाय अपरं शरीरं गृहीत्वेति तदर्थः[4] ॥ २४ ॥

वर्धस्वा सु पुरुष्टुत ऋषिष्टुताभिरूतिभिः । धुक्षस्व पिप्युषीमिषमवा च नः ॥ २५ ॥

वर्धस्व । सु । पुरुऽस्तुत । ऋषिऽस्तुताभिः । ऊतिऽभिः ।
धुक्षस्व । पिप्युषीम् । इषम् । अव । च । नः ॥ २५ ॥

**वेङ्कट०** वर्धस्व सुष्ठु[5] हे बहुभिः स्तुत! ऋषिष्टुतैः मरुद्भिः सह । धुक्षस्व च वर्धयित्रीम् इषम् अन्नम् । रक्ष च अस्मान् ॥ २५ ॥

[6]इति षष्ठाष्टके प्रथमाध्याये एकादशो वर्गः[6] ॥

इन्द्र त्वमवितेदसीत्था स्तुवतो अद्रिवः । ऋतादियर्मि ते धियं मनोयुजम् ॥ २६ ॥

इन्द्र । त्वम् । अविता । इत् । असि । इत्था । स्तुवतः । अद्रिऽवः ।
ऋतात् । इयर्मि । ते । धियम् । मनःऽयुजम् ॥ २६ ॥

**वेङ्कट०** इन्द्र! त्वम् रक्षितैव भवसि अमुत्र[7] स्तुवतः वज्रिन्! । सत्यादेव प्रेरयामि[8] तव मनोयुजम् स्तोत्रमिति ॥ २६ ॥

इह त्या सधमाद्या युजानः सोमपीतये । हरी इन्द्र प्रतद्वसू अभि स्वर ॥ २७ ॥

इह । त्या । सधऽमाद्या । युजानः । सोमऽपीतये ।
हरी इति । इन्द्र । प्रतद्वसू इति प्रतत्ऽवसू । अभि । स्वर ॥ २७ ॥

---

१. सुष्ठु तौ मूको. २. धार° अ[1]. ३. पयः वि[2]; पय अ[1]. ४. नूनर्थ वि[2]; नूनर्थ अ[1].
५. सस्तुतिपु मूको. ६-६. नास्ति मूको. ७. अमुत्र मूको. ८. °यामः वि[2].

**वेङ्कट०** इह तौ सहमदन्तौ युञ्जानः सोमपीतये हरी इन्द्र! प्राप्तधनौ अस्मासु प्रेरय ॥ २७ ॥

अभि स्वरन्तु ये तव रुद्रासः सक्षत श्रियम् । उतो मरुत्वतीर्विशो अभि प्रयः ॥२८॥

अभि । स्वरन्तु । ये । तव । रुद्रासः । सक्षत । श्रियम् ।
उतो इति । मरुत्वतीः । विशः । अभि । प्रयः ॥ २८ ॥

**वेङ्कट०** अभि स्वरन्तु ये तव स्वभूताः अश्वाः । स्तोतारः तेन[1] प्राप्नुवन्तु श्रियम्, अपि च [2]मरुत्वतीः विशः[2] । अस्मान् अभि प्रापय अन्नम् ॥ २८ ॥

इमा अस्य प्रतूर्तयः पदं जुषन्त यद् दिवि । नाभा यज्ञस्य सं दधुर्यथा विदे ॥२९॥

इमाः । अस्य । प्रऽतूर्तयः । पदम् । जुषन्त । यत् । दिवि ।
नाभा । यज्ञस्य । सम् । दधुः । यथा । विदे ॥ २९ ॥

**वेङ्कट०** इमाः अस्य प्रतरणशीलाः पदम् जुषन्त, यत् अस्य दिवि भवति पदम् । नाभेः पाचय(?) यज्ञस्य हीमाः[3] सम् दधुः, यथा[4] अयं मनुष्येषु ज्ञायते ॥ २९ ॥

अयं दीर्घाय चक्षसे प्राचि प्रयत्यध्वरे । मिमीते यज्ञमानुषग् विचक्ष्य ॥ ३० ॥

अयम् । दीर्घाय । चक्षसे । प्राचि । प्रऽयति । अध्वरे ।
मिमीते । यज्ञम् । आनुषक् । विऽचक्ष्य ॥ ३० ॥

**वेङ्कट०** अयम् दीर्घाय दूरस्य दर्शनाय[5] इन्द्रः, तं प्राचीने वर्तमाने यज्ञे मिमीते करोति यागसाधनं सोमम् अनुषक्तं बुद्ध्या दृष्ट्वेति[6] ॥ ३० ॥

[7]इति षष्ठाष्टके प्रथमाध्याये द्वादशो वर्गः[7] ॥

वृषायमिन्द्र ते रथ उतो ते वृषणा हरी । वृषा त्वं शतक्रतो वृषा हवः ॥ ३१ ॥

वृषा । अयम् । इन्द्र । ते । रथः । उतो इति । ते । वृषणा । हरी इति ।
वृषा । त्वम् । शतक्रतो इति शतऽक्रतो । वृषा । हवः ॥ ३१ ॥

**वेङ्कट०** वर्षिता अयम् इन्द्र! तव रथः, अपि च वृषणौ अश्वौ, वृषा त्वम् च [8]शतप्रज्ञ!, तथा[8] भवति[9] स्तुतिश्च वृषा इति ॥ ३१ ॥

वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः । वृषा यज्ञो यमिन्वसि वृषा हवः ॥३२॥

---

१. ते मूको. २-२. °त्वतिशः मूको. ३. हेमाः अ[1]. ४. यदा अ[1]. ५. दानाय मूको. ६. दृष्ट्वेति मूको. ७-७. नास्ति मूको, ८-८. शतप्रसूत धा वि[2] शतप्रसूत था अ[1]. ९. °वतु अ[1].

वृषा । ग्रावा । वृषा । मदः । वृषा । सोमः । अयम् । सुतः ।
वृषा । यज्ञः । यम् । इन्वसि । वृषा । हवः ॥ ३२ ॥

**वेङ्कट०** वृषा ग्रावा, वृषा च तव मदः, तथा वर्षिता अयम् त्वदर्थम् सुतः सोमः[1], वृषा यज्ञः च यम् गच्छसि, वृषा हवः ॥ ३२ ॥

**वृषा त्वा वृषणं हुवे वज्रिञ्चित्राभिरूतिभिः । वावन्थ हि प्रतिष्टुतिं वृषा हवः ॥३३॥**

वृषा । त्वा । वृषणम् । हुवे । वज्रिन् । चित्राभिः । ऊतिऽभिः ।
ववन्थ । हि । प्रतिऽस्तुतिम् । वृषा । हवः ॥ ३३ ॥

**वेङ्कट०** वृषा त्वा वृषणम् हुवे[2] वज्रिन्! चित्रैः रक्षणैर्हेतुभिः । भजसे हि त्वम् प्रतिष्टुतिम् । वृषा हवः[3] इति ॥ ३३ ॥

[4]इति षष्ठाष्टके प्रथमाध्याये त्रयोदशो वर्गः[4] ॥

## [ १४ ]

[4]गोपूक्त्यश्वसूक्तिनौ काण्वायनावृषी । इन्द्रो देवता । गायत्री छन्दः[4] ।

**यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् । स्तोता मे गोषखा स्यात् ॥१॥**

यत् । इन्द्र । अहम् । यथा । त्वम् । ईशीय । वस्वः । एकः । इत् । स्तोता । मे । गोऽसखा । स्यात् ॥१॥

**वेङ्कट०** गोपूक्त्यश्वसूक्तिनौ काण्वायनौ । यत् इन्द्र! अहम् अपि यथा[5] त्वम् ईशिषे तथा ईशीय[6] धनस्य एकः एव । अतो यो मां स्तौति सः "गोषखा स्यात्" इतीन्द्रं प्रयच्छन्तमाह ॥ १ ॥

**शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे । यदहं गोपतिः स्याम् ॥ २ ॥**

शिक्षेयम् । अस्मै । दित्सेयम् । शचीऽपते । मनीषिणे । यत् । अहम् । गोऽपतिः । स्याम् ॥ २ ॥

**वेङ्कट०** दद्याम् अस्मै, ततो विदित्सेयम् शचीपते![8] स्तुवते, यत् अहम् अपि गोपतिः स्याम् ॥ २ ॥

**धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते । गामश्वं पिप्युषी दुहे ॥ ३ ॥**

धेनुः । ते । इन्द्र । सूनृता । यजमानाय । सुन्वते । गाम् । अश्वम् । पिप्युषी । दुहे ॥ ३ ॥

**वेङ्कट०** वाक् ते इन्द्र! सत्या यजमानाय सुन्वते गाम् अश्वम् चाऽऽप्याययन्ती पूरयति ॥३॥

---

१. स वि[2]; सो अ[1]. २. भुवैव मूको. ३. भवः मूको. ४-४. नास्ति मूको. ५. या मूको. ६. °यं मूको. ७-७. घोषः स्यात्याभि मूको. ८. °पतेः मूको.

न ते वर्तास्ति राधस इन्द्र देवो न मर्त्यः। यद् दित्ससि स्तुतो मघम् ॥ ४ ॥

न । ते । वर्ता । अस्ति । राधसः । इन्द्र । देवः । न । मर्त्यः । यत् । दित्ससि । स्तुतः । मघम् ॥४॥

वेङ्कट० न ते धनस्य वारकः[1] विद्यते इन्द्र! देवः न च मनुष्यः, यदि दातुमिच्छसि स्तुतः धनम् ॥ ४ ॥

यज्ञ इन्द्रमवर्धयद् यद् भूमिं व्यवर्तयत्। चक्राण ओपशं दिवि ॥ ५ ॥

यज्ञः । इन्द्रम् । अवर्धयत् । यत् । भूमिम् । वि । अवर्तयत् । चक्राणः । ओपशम् । दिवि ॥ ५ ॥

वेङ्कट० यज्ञः इन्द्रम् वर्धयति, यत् अयम् भूमिम् विविधं वर्तयति चक्राणः कुर्वन् [2]दिवि ओपशम्[2]। योऽधः स्थूणेव [3]स्थित्वा बिभर्ति दिवं स ओपशः[3] ॥ ५ ॥

[4]इति षष्ठाष्टके प्रथमाध्याये चतुर्दशो वर्गः[4] ॥

वावृधानस्य ते वयं विश्वा धनानि जिग्युषः। ऊतिमिन्द्रा वृणीमहे ॥ ६ ॥

ववृधानस्य । ते । वयम् । विश्वा । धनानि । जिग्युषः । ऊतिम् । इन्द्र । आ । वृणीमहे ॥ ६ ॥

वेङ्कट० वर्धमानस्य ते वयम् विश्वा धनानि विजितवतः रक्षणम् हे इन्द्र! आ वृणीमहे ॥ ६ ॥

व्य१न्तरिक्षमतिरन्मदे सोमस्य रोचना। इन्द्रो यदभिनद् वलम् ॥ ७ ॥

वि । अन्तरिक्षम् । अतिरत् । मदे । सोमस्य । रोचना । इन्द्रः । यत् । अभिनत् । वलम् ॥ ७ ॥

वेङ्कट० वि अवर्धयत् अन्तरिक्षम् सोममदे रोचनेन तेजसा, इन्द्रः यदा अभिनत्[5] असुरं[6] वलम् ॥ ७ ॥

उद् गा आजदङ्गिरोभ्य आविष्कृण्वन् गुहा सतीः। अर्वाञ्चं नुनुदे वलम् ॥८॥

उत् । गाः । आजत् । अङ्गिरःऽभ्यः । आविः । कृण्वन् । गुहा । सतीः । अर्वाञ्चम् । नुनुदे । वलम् ॥ ८ ॥

वेङ्कट० उत् आजत् पशून् पणिभिः[7] अपहृतान् अङ्गिरोभ्यः आविः कृण्वन् गुहायां वर्तमानान्[8]। अभिमुखम् आगच्छन्तम्[9] वलम् [10]च नुनुदे[10] ॥ ८ ॥

इन्द्रेण रोचना दिवो दृळ्हानि दृंहितानि च। स्थिराणि न पराणुदे ॥ ९ ॥

इन्द्रेण । रोचना । दिवः । दृळ्हानि । दृंहितानि । च । स्थिराणि । न । पराऽनुदे ॥ ९ ॥

वेङ्कट० इन्द्रेण ज्योतींषि दिवः दृढानि दृंहितानि स्थिराणि, न च परानोद्यानि[11] ऊर्ध्वम् ॥ ९ ॥

---

१. पार° मूको. २-२. तु. ऋ १, १७३, ६; दिव्योवधम् मूको. ३. °स्त्वा भि भवति दिवस औपगवः वि[2]. ४-४. नास्ति मूको. ५. नीं ··· मूको. ६. शरीरम् मूको. ७. वणिग्भिः वि[2]. ८. °मानायाम् वि[2]. ९. °च्छतं च अ[1]. १०. च ··· मूको. ११. वरणोद्यानि वि[2]; वरा° अ[1].

अपामूर्मिर्मदन्निव स्तोम इन्द्राजिरायते । वि ते मदा अराजिषुः ॥ १० ॥

अपाम् । ऊर्मिः । मदन्ऽइव । स्तोमः । इन्द्र । अजिरऽयते । वि । ते । मदाः । अराजिषुः ॥१०॥

वेङ्कट० अपाम् ऊर्मिः 'हृष्यन् इव'[1] मदीयस्तोमः इन्द्र! अजिरायते 'अजिरम्' ( निघ २,१५ ) इति क्षिप्रनाम । शीघ्रं निर्गच्छति, वि राजन्ते[2] च तत्र सोममदाः ॥ १० ॥

[3]इति षष्ठाष्टके प्रथमाध्याये पञ्चदशो वर्गः[3] ॥

त्वं हि स्तोमवर्धन इन्द्रास्युक्थवर्धनः । स्तोतॄणामुत भद्रकृत् ॥ ११ ॥

त्वम् । हि । स्तोमऽवर्धनः । इन्द्र । असि । उक्थऽवर्धनः । स्तोतॄणाम् । उत । भद्रऽकृत् ॥ ११ ॥

वेङ्कट० निगदसिद्धा ॥ ११ ॥

इन्द्रमित् केशिना हरी सोमपेयाय वक्षतः । उप यज्ञं सुराधसम् ॥ १२ ॥

इन्द्रम् । इत् । केशिना । हरी इति । सोमऽपेयाय । वक्षतः । उप । यज्ञम् । सुऽराधसम् ॥ १२ ॥

वेङ्कट० इन्द्रम् एव प्रशस्तकेशौ अश्वौ[4] सोमपानाय वहतः यज्ञम् प्रति सुधनम्[5] ॥ १२ ॥

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः । विश्वा यदजयः स्पृधः ॥ १३ ॥

अपाम् । फेनेन । नमुचेः । शिरः । इन्द्र । उत् । अवर्तयः । विश्वाः । यत् । अजयः । स्पृधः ॥१३॥

वेङ्कट० अपाम् फेनेन आयुधभूतेन[6] नमुचेः शिरः इन्द्र! उत् अवर्तयः, यदा विश्वाः स्पृधः शत्रून् अजयः ॥ १३ ॥

मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूँरधूनुथाः ॥ १४ ॥

मायाभिः । उत्ऽसिसृप्सतः । इन्द्र । द्याम् । आऽरुरुक्षतः । अव । दस्यून् । अधूनुथाः ॥ १४ ॥

वेङ्कट० प्रज्ञानैः पृथिव्याः उत्सर्पितुमिच्छतः इन्द्र! द्याम् आरुरुक्षतः अव अधूनुथाः शत्रून् ॥ १४ ॥

असुन्वामिन्द्र संसदं विषूचीं व्यनाशयः । सोमपा उत्तरो भवन् ॥ १५ ॥

असुन्वाम्[7] । इन्द्र । सम्ऽसदम् । विषूचीम् । वि । अनाशयः । सोमऽपाः । उत्ऽतरः । भवन् ॥१५॥

वेङ्कट० अभिषववर्जितानाम् इन्द्र! संसदम् विषूचीम् वि अनाशयः सोमपाः उच्छ्रितः भवन् सर्वेभ्यः ॥ १५ ॥

[3]इति षष्ठाष्टके प्रथमाध्याये षोडशो वर्गः[3] ॥

---

१-१. सृष्यन्तिव अ[1]; सृष्यन्तीव वि[2]. २. °जसे वि[2]; °जते अ[1]. ३-३. नास्ति मूको. ४. अश्विनौ मूको. ५. °धनः मूको. ६. °भूते वि[2]. ७. वैप १,५२४ j-द्र.

[ १५ ]

[१]गोषूक्त्यश्वसूक्तिनौ काण्वायनावृषी। इन्द्रो देवता। उष्णिक् छन्दः[१]।

**तम्वभि प्र गायत पुरुहूतं पुरुष्टुतम्। इन्द्रं गीर्भिस्तविषमा विवासत ॥ १ ॥**

तम्। ऊँ इति। अभि। प्र। गायत। पुरुऽहूतम्। पुरुऽस्तुतम्।
इन्द्रम्। गीःऽभिः। तविषम्। आ। विवासत ॥ १ ॥

**वेङ्कट०** तम् एव अभि प्र गायत पुरुहूतम् पुरुष्टुतम्। इन्द्रम् गीर्भिः महान्तम् आभिमुख्येन परिचरत ॥ १ ॥

**यस्य द्विबर्हसो बृहत् सहो दाधार रोदसी। गिरीँरज्राँ अपः स्वर्वृषत्वना ॥२॥**

यस्य। द्विऽबर्हसः। बृहत्। सहः। दाधार। रोदसी इति। गिरीन्। अज्रान्। अपः। स्वः। वृषऽत्वना ॥२॥

**वेङ्कट०** यस्य द्वयोः स्थानयोः परिवृढस्य[२] महद् बलम् धारयति द्यावापृथिव्यौ। मेघान्[३] गमनशीलान् अन्तरिक्षमिदं च सर्वम् धारयति बलेन ॥ २ ॥

**स राजसि पुरुष्टुतँ एको वृत्राणि जिघ्नसे। इन्द्र जैत्रा श्रवस्या च यन्तवे ॥३॥**

सः। राजसि। पुरुऽस्तुत। एकः। वृत्राणि। जिघ्नसे। इन्द्र। जैत्रा। श्रवस्या। च। यन्तवे ॥ ३ ॥

**वेङ्कट०** सः राजसि पुरुष्टुत!। असहाय एव शत्रून् हंसि। तेन सुखायास्माकम्[४] इन्द्र! [५]जयहेतूनि अन्नहेतूनि[५] च नियन्तव्यानि ॥ ३ ॥

**तं ते मदं गृणीमसि वृषणं पृत्सु सासहिम्। उ लोककृत्नुमद्रिवो हरिश्रियम् ॥४॥**

तम्। ते। मदम्। गृणीमसि। वृषणम्। पृत्ऽसु। ससहिम।
ऊँ इति। लोकऽकृत्नुम्। अद्रिऽवः। हरिऽश्रियम् ॥ ४ ॥

**वेङ्कट०** तम् ते मदम् स्तुमः वर्षितारम् सङ्ग्रामेषु अभिभवितारम् लोकस्य कर्तारम् स्तोतॄणाम् वज्रिन्!, यः सदोऽश्वौ श्रयति। मदे हि जनितेऽश्वावुपतिष्ठतः ॥ ४ ॥

**येन ज्योतींष्यायवे मनवे च विवेदिथ। मन्दानो अस्य बर्हिषो वि राजसि ॥५॥**

येन। ज्योतींषि। आयवे। मनवे। च। विवेदिथ। मन्दानः। अस्य। बर्हिषः। वि। राजसि ॥ ५ ॥

**वेङ्कट०** येन ज्योतींषि आयवे राज्ञे मनवे च [६]अलम्भयः, तेन[६] सोमेन तृप्यन् अस्य यज्ञस्य सम्बन्धिना वि राजसि ॥ ५ ॥

[१]इति षष्ठाष्टके प्रथमाध्याये सप्तदशो वर्गः[१] ॥

---

१-१. नास्ति मूको. २. परिभ्रश्नस्य वि[२]; परि प्रप्तुरय अ[१]. ३. मेघात् मूको. ४. °खायास्मा° वि[२]; °खयास्मा° अ[१]. ५-५. °हेतुभ्य; नद्दे° वि[२]; °हेतुर्भ्य नहे° अ[१]. ६-६. °लम्भयं स्ते° मूको.

तद॒द्या चि॑त् त उ॒क्थिनोऽनु॑ ष्टुवन्ति पूर्वथा॑ । वृष॑पत्नीर॒पो ज॑या दि॒वेदि॑वे ॥६॥

तत् । अ॒द्य । चि॒त् । ते॒ । उ॒क्थिनः॑ । अनु॑ । स्तु॒व॒न्ति॒ । पू॒र्व॒ऽथा॑ । वृष॑ऽपत्नीः । अ॒पः । ज॒य॒ । दि॒वेऽदि॑वे ॥६॥

**वेङ्कट०** तत् अद्य अपि तव शस्त्रिणः अनु स्तुवन्ति इन्द्र![1] प्रत्नवत् यथा प्रत्ना ऋषयोऽस्तुवन् । मेघपत्नीः[2] अपः जयसि त्वम् अन्वहमिति ॥ ६ ॥

तव॒ त्यदि॑न्द्रि॒यं बृ॒हत् तव॒ शुष्म॑मु॒त क्रतु॑म् । वज्रं॑ शिशाति धि॒षणा॒ वरे॑ण्यम् ॥७॥

तव॑ । त्यत् । इ॒न्द्रि॒यम् । बृ॒हत् । तव॑ । शुष्म॑म् । उ॒त । क्रतु॑म् ।

वज्र॑म् । शि॒शा॒ति॒ । धि॒षणा॑ । वरे॑ण्यम् ॥ ७ ॥

**वेङ्कट०** तव तद् बलम् महत्, तव शोषकं तेजः, अपि च प्रज्ञानम्, आयुधम् च वरणीयम्[3], तीक्ष्णीकरोति [4]स्तोतॄणां स्तुतिः[4] ॥ ७ ॥

तव॒ द्यौरि॑न्द्र॒ पौंस्यं॑ पृथि॒वी व॑र्धति॒ श्रवः॑ । त्वामापः॒ पर्व॑तासश्च हिन्विरे ॥८॥

तव॑ । द्यौः । इ॒न्द्र॒ । पौंस्य॑म् । पृ॒थि॒वी । व॒र्ध॒ति॒ । श्रवः॑ । त्वाम् । आपः॑ । पर्व॑तासः । च॒ । हि॒न्वि॒रे॒ ॥ ८ ॥

**वेङ्कट०** तव द्यौः इन्द्र! बलम् [5]वर्धयति । वर्धयति अन्नम्[5] पृथिवी । येन त्वाम् आपः ग्रावाणः च प्रीणयन्ति ॥ ८ ॥

त्वां विष्णु॑र्बृ॒हन् क्षयो॑ मि॒त्रो गृ॑णाति॒ वरु॑णः । त्वां शर्धो॑ मद॒त्यनु॒ मारु॑तम् ॥९॥

त्वाम् । विष्णुः॑ । बृ॒हन् । क्षयः॑ । मि॒त्रः । गृ॒णा॒ति॒ । वरु॑णः । त्वाम् । शर्धः॑ । म॒द॒ति॒ । अनु॑ । मारु॑तम् ॥ ९ ॥

**वेङ्कट०** त्वाम् विष्णुः [6]महान् निवासभूतः[6] स्तौति, मित्रावरुणौ च स्तुतः । त्वाम् एव [7]अनु मदति[7] स्तौति[8] मारुतम्[9] शर्धः[10] ॥ ९ ॥

त्वं वृषा॒ जना॑नां॒ मंहि॑ष्ठ इन्द्र जज्ञिषे । स॒त्रा विश्वा॑ स्वप॒त्यानि॑ दधिषे ॥१०॥

त्वम् । वृषा॑ । जना॑नाम् । मंहि॑ष्ठः । इ॒न्द्र॒ । ज॒ज्ञि॒षे॒ । स॒त्रा । विश्वा॑ । सु॒ऽअ॒प॒त्यानि॑ । द॒धि॒षे॒ ॥ १० ॥

**वेङ्कट०** त्वम् वर्षिता जनानाम् दातृतमः इन्द्र! अजायथाः । सत्यमेव विश्वानि भूतानि शोभनापत्यानि करोषि । येन कर्मणा न पतन्ति[11] तदपत्यमेव[12] ॥ १० ॥

[13]इति षष्ठाष्टके प्रथमाध्याये अष्टादशो वर्गः[13] ॥

---

१. इन्द्रं मूको. २. °घवतीः वि[2]; °घवतीः अ[1]. ३. परं श्रियं वि[2]; परां श्रियं अ[1]. ४-४. °णां ··· त्वमिति अ[1]; °णांविति वि[2]. ५-५. वर्धयत्यति मूको. ६-६. महानिवस° मूको. ७. नुदन्ति मूको. ८. स्तौमि मूको. ९. °रुतं च अ[1]. १०. शर्ध अ[1]. ११. तपन्ति मूको. १२. कदवत्यन्तमेव वि[2]; कदावात्यन्तमेव अ[1]. १३-१३. नास्ति मूको.

सत्रा त्वं पुरुष्टुतँ एको वृत्राणि तोशसे । नान्य इन्द्रात् करणं भूयं इन्वति ॥११॥

सत्रा । त्वम् । पुरुऽस्तुत । एकः । वृत्राणि । तोशसे । न । अन्यः । इन्द्रात् । करणम् । भूयः । इन्वति ॥११॥

**वेङ्कट०** सत्रा त्वम् हे बहुभिः स्तुत! असहाय एव शत्रून् हंसि। न अन्यः कश्चित् इन्द्रात् कृतं कर्म प्रीणयति ॥ ११ ॥

यदिन्द्र मन्मशस्त्वा नाना हवन्त ऊतये । अस्माकेभिर्नृभिरत्रा स्वर्जय ॥ १२ ॥

यत् । इन्द्र । मन्मऽशः । त्वा । नाना । हवन्ते । ऊतये । अस्माकेभिः । नृऽभिः । अत्र । स्वः । जय ॥१२॥

**वेङ्कट०** यत् इन्द्र! स्तुतिभिः[1] त्वाम् नाना हवन्ते[2] रक्षणार्थम्[3]। तथाऽऽत्मीयैः जनैः[4] सह जेतव्यं सर्वम् जय इति ॥ १२ ॥

अरं क्षयाय नो महे विश्वा रूपाण्याविशन् । इन्द्रं जैत्राय हर्षया शचीपतिम् ॥१३॥

अरम् । क्षयाय । नः । महे । विश्वा । रूपाणि । आऽविशन् । इन्द्रम् । जैत्राय । हर्षय । शचीऽपतिम् ॥

**वेङ्कट०** [5]पर्याप्तानि वासाय अस्माकं[5] महते[6] विश्वानि इन्द्रस्य रूपाणि आवेशयन् इन्द्रम्[7] निजं [8]जयशीलं बलं[8] कर्तुम् स्तुतिभिः हर्षय शचीपतिम् ॥ १३ ॥

[9]इति षष्ठाष्टके प्रथमाध्याये एकोनविंशो वर्गः[9] ॥

[ १६ ]

'इरिम्बिठिः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः' ।

प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः । नरं नृषाहं मंहिष्ठम् ॥ १ ॥

प्र । सम्ऽराजम् । चर्षणीनाम् । इन्द्रम् । स्तोत । नव्यम् । गीःऽभिः । नरम् । नृऽसहम् । मंहिष्ठम् ॥ १ ॥

**वेङ्कट०** इरिम्बिठिः[10]। प्र स्तुत इन्द्रम् सम्राजम् चर्षणीनाम् स्तुत्यम् स्तुतिभिः नेतारम् नृणाम् अभिभवितारम् दातृतमम् ॥ १ ॥

यस्मिन्नुक्थानि रण्यन्ति विश्वानि च श्रवस्या । अपामवो न समुद्रे ॥ २ ॥

यस्मिन् । उक्थानि । रण्यन्ति । विश्वानि । च । श्रवस्या । अपाम् । अवः । न । समुद्रे ॥ २ ॥

**वेङ्कट०** यस्मिन् शस्त्राणि[11] रमन्ते विश्वानि च स्तोतॄणाम् अन्ननिमित्तानि वचनानि। यथा नानाविधानाम् अपाम् गमनम् उदधौ सङ्गच्छते[12] ॥ २ ॥

---

१. °तिहिः मूको. २. भवन्ते मूको. ३. °र्थः मूको. ४. °त्मीयैर्भगै वि[2]; तथात्मनैर्भागैः अ[1]. ५-५. °प्तनित्रा° मूको. ६. महेति मूको. ७. इन्द्र मूको. ८-८. °शीलब° वि[2]. ९-९. नास्ति मूको, १०. इरिमिरि मूको. ११. छत्राणि अ[1]; छत्रिणि वि[2]. १२. °च्छेत मूको.

तं सुष्टुत्या विवासे ज्येष्ठराजं भरे कृत्नुम् । महो वाजिनं सनिभ्यः ॥ ३ ॥

तम् । सुऽस्तुत्या । आ । विवासे । ज्येष्ठऽराजम् । भरे । कृत्नुम् । महः । वाजिनम् । सनिऽभ्यः ॥ ३ ॥

**वेङ्कट०** तम् सुष्टुत्या परिचरामि श्रेष्ठानां[1] राजानम् सङ्ग्रामे कर्तारम् महान्तम् बलिनम् धनार्थम् ॥ ३ ॥

यस्यानूना गभीरा मदा उरवस्तरुत्राः । हर्षुमन्तः शूरसातौ ॥ ४ ॥

यस्य । अनूनाः । गभीराः । मदाः । उरवः । तरुत्राः । हर्षुऽमन्तः । शूरऽसातौ ॥ ४ ॥

**वेङ्कट०** यस्य अन्यूनाः[2] गम्भीराः मदाः विस्तीर्णाः तारकाः हर्षमन्तः[3] स्तोतॄन् हर्षयन्तः सङ्ग्रामे ॥ ४ ॥

तमिद् धनेषु हितेष्वधिवाकाय हवन्ते । येषामिन्द्रस्ते जयन्ति ॥ ५ ॥

तम् । इत् । धनेषु । हितेषु । अधिऽवाकाय । हवन्ते । येषाम् । इन्द्रः । ते । जयन्ति ॥ ५ ॥

**वेङ्कट०** तम् एव धनेषु परत्र निहितेषु लिप्सितेषु अधिवचनाय हवन्ते । येषाम् इन्द्रः भवति सहायः, ते परान् जयन्ति ॥ ५ ॥

तमिच्च्यौत्नैरार्यन्ति तं कृतेभिश्चर्षणयः । एष इन्द्रो वरिवस्कृत् ॥ ६ ॥

तम् । इत् । च्यौत्नैः । आर्यन्ति । तम् । कृतेभिः । चर्षणयः । एषः । इन्द्रः । वरिवःऽकृत् ॥ ६ ॥

**वेङ्कट०** तम् इन्द्रं कीर्तितैर्बलैः ( तु. निघ २,९ ) प्रेरयन्ति, तम् कृतैश्च कर्मभिः चर्षणयः । एषः एव इन्द्रः तेषां धनस्य कर्ता भवति ॥ ६ ॥

[4]इति षष्ठाष्टके प्रथमाध्याये विंशो वर्गः[4] ॥

इन्द्रो ब्रह्मेन्द्र ऋषिरिन्द्रः पुरू पुरुहूतः । महान् महीभिः शचीभिः ॥ ७ ॥

इन्द्रः । ब्रह्मा । इन्द्रः । ऋषिः । इन्द्रः । पुरु । पुरुऽहूतः । महान् । महीभिः । शचीभिः ॥ ७ ॥

**वेङ्कट०** इन्द्रः महान्, इन्द्रः द्रष्टा, इन्द्रः बहुषु देवेषु बहुभिराहूतः, महान् महतीभिः प्रज्ञाभिः ॥ ७ ॥

स स्तोम्यः स हव्यः सत्यः सत्वा तुविकूर्मिः । एकश्चित् सन्नभिभूतिः ॥ ८ ॥

सः । स्तोम्यः । सः । हव्यः । सत्यः । सत्वा । तुविऽकूर्मिः । एकः । चित् । सन् । अभिऽभूतिः ॥

**वेङ्कट०** सः स्तोतव्यः, सः ह्वातव्यः सत्यकर्मा सदनशीलः बहोः कर्ता असहाय[5] एव सन् अभिभविता ॥ ८ ॥

---

१. °ष्ठानिनां मूको. २. न्यूना मूको. ३. हर्षवन्तः मूको. ४-४. नास्ति मूको. ५. सहा मूको.

तमर्केभिस्तं सामभिस्तं गायत्रैश्चर्षणयः । इन्द्रं वर्धन्ति क्षितयः ॥ ९ ॥

तम् । अर्केभिः । तम् । सामऽभिः । तम् । गायत्रैः । चर्षणयः । इन्द्रम् । वर्धन्ति । क्षितयः ॥ ९ ॥

**वेङ्कट०** तम् ऋग्भिः, तम् सामभिः, तम् गायत्रैः च इन्द्रम् विशेषेण वर्धयन्ति चर्षणयः क्षितयः द्रष्टारो मनुष्या इति ऋषीनाहुः ॥ ९ ॥

प्रणेतारं वस्यो अच्छा कर्तारं ज्योतिः समत्सु । सासह्वांसं युधामित्रान् ॥१०॥

प्रऽनेतारम् । वस्यः । अच्छ । कर्तारम् । ज्योतिः । समत्ऽसु । ससह्वांसम् । युधा । अमित्रान् ॥ १० ॥

**वेङ्कट०** प्रणेतारम् अभ्युदयम् प्रति कर्तारम् अन्धकारापनयनेन ज्योतिः, सङ्ग्रामेषु अभिभवन्तम्[1] युद्धेन अमित्रान् ॥ १० ॥

स नः पप्रिः पारयाति स्वस्ति नावा पुरुहूतः । इन्द्रो विश्वा अति द्विषः ॥११॥

सः । नः । पप्रिः । पारयाति । स्वस्ति । नावा । पुरुऽहूतः । इन्द्रः । विश्वाः । अति । द्विषः ॥११॥

**वेङ्कट०** सः अस्मान् तर्पयिता[2] पारं[3] नयतु अविनाशेन नावा बहुभिराहूतः । इन्द्रः विश्वाः च द्विषः अति पारयत्वस्मानिति । [4]यस्मात्तवैवं सिद्धम्[4] अतिपारय तस्मात् शत्रूनिति ॥ ११ ॥

स त्वं न इन्द्र वाजेभिर्दशस्या च गातुया च । अच्छा च नः सुम्नं नेषि ॥१२॥

सः । त्वम् । नः । इन्द्र । वाजेभिः । दशस्य । च । गातुऽय । च । अच्छ । च । नः । सुम्नम् । नेषि ॥

**वेङ्कट०** सः त्वम् अस्मभ्यम् इन्द्र ! बलैः शत्रुधनं प्रयच्छ च गमय च धनं प्रति । अभि नेषि च अस्मान् सुखम् ॥ १२ ॥

[5]इति षष्ठाष्टके प्रथमाध्याये एकविंशो वर्गः[5] ॥

## [ १७ ]

[4]इरिम्बिठिः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः, अन्त्ययोः प्रगाथः ( =चतुर्दशी बृहती, पञ्चदशी सतोबृहती )[4] ।

आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥ १ ॥

आ । याहि । सुसुम । हि । ते । इन्द्र । सोमम् । पिब । इमम् । आ । इदम् । बर्हिः । सदः । मम ॥१॥

**वेङ्कट०** आ याहि । [6]सुषुम ते हि[6] सोमम् इन्द्र ! । पिब सोमम् इमम्[7] । आ सीद[8] [9]च इदम्[9] मदीयम् बर्हिः ॥ १ ॥

---

१. °वन्तु वि[2]; °वन्त अ[1]. २. थित्वा मूको. ३. परायन् मूको. ४-४. यथा तवेम सिद्धाम् वि[2]; यथा तवेम सिद्धाम् अ[1]. ५-५. नास्ति मूको. ६-६. सुष्ठु ते महिमा मूको. ७. इव मूको. ८. नास्ति मूको. ९-९. वेदं वि[2]; वेदं वा अ[1].

आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणु ॥ २ ॥

आ । त्वा । ब्रह्मऽयुजा । हरी इति । वहताम् । इन्द्र । केशिना । उप । ब्रह्माणि । नः । शृणु ॥ २ ॥

**वेङ्कट०** आ वहताम् त्वां मन्त्रेण युक्तौ अश्वौ इन्द्र! प्रशस्तकेशौ । अस्माकम् उप शृणु स्तुतिम् ॥ २ ॥

ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहे ॥ ३ ॥

ब्रह्माणः । त्वा । वयम् । युजा । सोमऽपाम् । इन्द्र । सोमिनः । सुतऽवन्तः । हवामहे ॥ ३ ॥

**वेङ्कट०** ब्राह्मणाः वयम् त्वां युक्तेन[1] स्तोत्रेण सोमपाम् इन्द्र![2] विद्यमानसोमाः तत्राप्यभिषुतसोमाः हवामहे ॥ ३ ॥

आ नो याहि सुतावतोऽस्माकं सुष्टुतीरुप । पिबा सु शिप्रिन्नन्धसः ॥ ४ ॥

आ । नः । याहि । सुतऽवतः । अस्माकम् । सुऽस्तुतीः । उप । पिब । सु । शिप्रिन् । अन्धसः ॥४॥

**वेङ्कट०** आ याहि अस्मान् सुतवतः । उप गच्छ अस्माकम् सुष्टुतीः च । पिब सुशिप्रिन्!(?) सोमम् ॥ ४ ॥

आ ते सिञ्चामि कुक्ष्योरनु गात्रा वि धावतु । गृभाय जिह्वया मधु ॥ ५ ॥

आ । ते । सिञ्चामि । कुक्ष्योः । अनु । गात्रा । वि । धावतु । गृभाय । जिह्वया । मधु ॥ ५ ॥

**वेङ्कट०** आ सिञ्चामि तव कुक्ष्योः सोमम् । स तवाङ्गानि अनु वि धावतु । गृहाण जिह्वया सोममयम् मधु ॥ ५ ॥

[3]इति षष्ठाष्टके प्रथमाध्याये द्वाविंशो वर्गः[3] ॥

स्वादुष्टे अस्तु संसुदे मधुमान् तन्वे तव । सोमः शमस्तु ते हृदे ॥ ६ ॥

स्वादुः । ते । अस्तु । सम्ऽसुदे । मधुऽमान् । तन्वे । तव । सोमः । शम् । अस्तु । ते । हृदे ॥ ६ ॥

**वेङ्कट०** यस्मादापः संक्षरन्ति तस्मै तवाऽऽस्याय स्वादुः सोमो भवतु, तथा मधुमान् शरीराय च तव । सोमः शङ्करो भवतु हृदयाय ॥ ६ ॥

अयमु त्वा विचर्षणे जनीरिवाभि संवृतः । प्र सोम इन्द्र सर्पतु ॥ ७ ॥

अयम् । ऊँ इति । त्वा । विऽचर्षणे । जनीःऽइव । अभि । सम्ऽवृतः । प्र । सोमः । इन्द्र । सर्पतु ॥७॥

**वेङ्कट०** अयम् [4]च त्वा हे विद्रष्टः![4] जायाः इव ताभिः संवृतः पतिः अभि प्र सर्पतु सोमः इन्द्र! इति ॥७॥

---

१. युक्तेः मूको. २. इन्द्र वयं मूको. ३-३. नास्ति मूको. ४. चाविद्रष्टं मूको.

तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे । इन्द्रो वृत्राणि जिघ्नते ॥ ८ ॥

तुविऽग्रीवः । वपाऽउदरः । सुऽबाहुः । अन्धसः । मदे । इन्द्रः । वृत्राणि । जिघ्नते ॥ ८ ॥

**वेङ्कट०** कण्ठस्था नाड्यः ग्रीवाः । बहुग्रीवः वपोदरः सोमप्रवृद्धा[1] वपा यस्योदरे महति[2] स वपोदरः । सुबाहुः सोमस्य मदे इन्द्रः शत्रून्[3] हन्ति ॥ ८ ॥

इन्द्र प्रेहि पुरस्त्वं विश्वस्येशान ओजसा । वृत्राणि वृत्रहञ्जहि ॥ ९ ॥

इन्द्र । प्र । इहि । पुरः । त्वम् । विश्वस्य । ईशानः । ओजसा । वृत्राणि । वृत्रऽहन् । जहि ॥९॥

**वेङ्कट०** इन्द्र! प्र गच्छ पुरतः त्वम् विश्वस्य ईशानः । बलेन शत्रून् हे शत्रुहन्! जहि ॥ ९ ॥

दीर्घस्ते अस्त्वङ्कुशो येना वसु प्रयच्छसि । यजमानाय सुन्वते ॥ १० ॥

दीर्घः । ते । अस्तु । अङ्कुशः । येन । वसु । प्रऽयच्छसि । यजमानाय । सुन्वते ॥ १० ॥

**वेङ्कट०** दीर्घः ते अस्तु बाहुः । अङ्कुशवच्छत्रून्नियच्छतीति बाहुः अङ्कुशः । येन धनानि प्रयच्छसि यजमानाय सुन्वते ॥ १० ॥

[4]इति षष्ठाष्टके प्रथमाध्याये त्रयोविंशो वर्गः[4] ॥

अयं त इन्द्र सोमो निपूतो अधि बर्हिषि । एहीमस्य द्रवा पिब ॥ ११ ॥

अयम् । ते । इन्द्र । सोमः । निऽपूतः । अधि । बर्हिषि । आ । इहि । ईम् । अस्य । द्रव । पिब ॥११॥

**वेङ्कट०** अयम् ते इन्द्र! सोमः अभिषुतः । यज्ञे आ गच्छ एनम् । अमुम् द्रव, पिब च ॥ ११ ॥

शाचिगो शाचिपूजनायं रणाय ते सुतः । आखण्डल प्र हूयसे ॥ १२ ॥

शाचिगो इति शाचिऽगो । शाचिऽपूजन । अयम् । रणाय । ते । सुतः । आखण्डल । प्र । हूयसे ॥ १२ ॥

**वेङ्कट०** हे समवेतपशो! समवेतपूजन! अयम् युद्धाय तव सुतः सोमः । आखण्डल! प्र हूयसे च ॥१२॥

यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्यः । न्यस्मिन् दध्र आ मनः ॥ १३ ॥

यः । ते । शृङ्गऽवृषः । नपात् । प्रनपादिति प्रऽनपात् । कुण्डऽपाय्यः । नि । अस्मिन् । दध्रे । आ । मनः ॥

**वेङ्कट०** यः ते हे शृङ्गवृषः नपात्!, शृङ्गवृट्[5] वृषणः शृङ्गयुक्तो वर्षिता च भवति इति तस्य पुत्र! । 'कस्ते मातरं विधवामचक्रत्' ( ऋ ४, १८, १२ ) इत्युक्तम् । तस्य तव प्रणप्ता[6]

---

१. सोमः प्र° वि°. २. महती मूको. ३. शक्रन् मूको. ४-४. नास्ति मूको. ५. शृङ्गवृषट् मूको. ६. °णप्त्या मूको.

सोमः 'इन्द्रादापोऽद्भयः सोमः' इति, सः प्रणपात्। इन्द्रस्य 'कुण्डपाय्यः कुण्डे पानं यस्य'। अस्मिन् तव मनः नि दध्रे निहितमिति ॥ १३ ॥

वास्तो॑ष्पते ध्रु॒वा स्थू॒णांस॑त्रं सो॒म्याना॑म् ।
द्र॒प्सो भे॒त्ता पु॒रां शश्व॑तीना॒मिन्द्रो॒ मुनी॑नां॒ सखा॑ ॥ १४ ॥

वास्तोः॑ । प॒ते॒ । ध्रु॒वा । स्थू॒णा॑ । अंस॑त्रम् । सो॒म्याना॑म् ।
द्र॒प्सः । भे॒त्ता । पु॒राम् । शश्व॑तीनाम् । इन्द्रः॑ । मुनी॑नाम् । सखा॑ ॥ १४ ॥

वेङ्कट० हे वास्तोः पते! त्वं सोम्यानाम्[2] ध्रुवा स्थूणा[3] भवसि [4]तद्वत् तान्[4] धारयसि। तथा अंसत्रम् च तेषां भवसि। द्रप्सः द्रवतेः अभिगन्ता, भेत्ता बह्वीनाम् पुराम् इन्द्रः मुनीनाम् सखा। स्तोतारो मुनयः[5] ॥ १४ ॥

पृदा॑कुसानुर्यज॒तो ग॒वेष॑ण॒ एकः॒ सन्न॒भि भूय॑सः ।
भूर्णि॒मश्वं॑ नयत् तु॒जा पु॒रो गृ॒भेन्द्रं॒ सोम॑स्य पी॒तये॑ ॥ १५ ॥

पृदा॑कुऽसानुः । य॒ज॒तः । गो॒ऽए॒ष॑णः । एकः॑ । सन् । अ॒भि । भूय॑सः ।
भूर्णि॑म् । अश्व॑म् । न॒य॒त् । तु॒जा । पु॒रः । गृ॒भा । इन्द्र॑म् । सोम॑स्य । पी॒तये॑ ॥ १५ ॥

वेङ्कट० पृदाकुर्नाम प्राच्या दिशो रक्षिता यं[6] सम्भजते गोपनार्थं[7] सः पृदाकुसानुः इन्द्रः यष्टव्यः गवामन्वेष्टा असहायः सन् अभि भवति बहून्। स इन्द्रः क्षिप्रम् अश्वम् गृह्यमाणया कशया पुरस्तात् नयतु ईश्वरं गमनसमर्थं सोमपानायेति ॥ १५ ॥

[8]इति षष्ठाष्टके प्रथमाध्याये चतुर्विंशो वर्गः[8] ॥

## [ १८ ]

[9]इरिम्बिठिः काण्वः ऋषिः। आदित्याः देवता, चतुर्थीषष्ठीसप्तमीनाम् अदितिः, अष्टम्या अश्विनौ, नवम्या अग्निसूर्यानिलाः। उष्णिक् छन्दः[9]।

इ॒दं ह॑ नू॒नमे॑षां सु॒म्नं भि॑क्षेत॒ मर्त्यः॑ । आ॒दि॒त्याना॒मपू॑र्व्यं॒ सवी॑मनि ॥ १ ॥

इ॒दम् । ह॒ । नू॒नम् । ए॒षा॒म् । सु॒म्नम् । भि॒क्षे॒त॒ । मर्त्यः॑ । आ॒दि॒त्याना॑म् । अपू॑र्व्यम् । सवी॑मनि ॥१॥

वेङ्कट० इदम् 'ह सम्प्रति' एषाम् आदित्यानाम् प्रसवे अपूर्व्यम्[10] धनम् भिक्षेत मनुष्यः कल्याणम्। आदित्यैः प्रसूतो भिक्षितुं प्रवृत्तोऽलब्धपूर्वं धनं लभत इति ॥ १ ॥

---

१-१. =कुण्ड-देयः (प्रणपात [तु. वैप १,११२४]) '; भगपतिकाण्डे पातस्य मूको. २. सोमाना मूको. ३. स्थूणू मूको. ४-४. तद्वन्तां अ[1]. ५. °य भवन्तीत्यर्थः अ[1]. ६. यः मूको. ७. °नात्वं मूको. ८-८. नास्ति मूको. ९-९. इवं प्रति वि[2]; इभवं प्रति अ[1]. १०. नास्ति मूको.

अनर्वाणो ह्येषां पन्था आदित्यानाम् । अदब्धाः सन्ति पायवः सुगेवृधः ॥२॥

अनर्वाणः । हि । एषाम् । पन्थाः । आदित्यानाम् । अदब्धाः । सन्ति । पायवः । सुगेऽवृधः ॥२॥

**वेङ्कट०** अप्रच्युताः[1] हि एषाम् रश्मयः आदित्यानाम् अहिंसिता भवन्ति रक्षकाः, सुगम् अन्तरिक्षं तत्र प्रवृद्धाः ॥ २ ॥

तत् सु नः सविता भगो वरुणो मित्रो अर्यमा । शर्म यच्छन्तु सप्रथो यदीमहे ॥३॥

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा । शर्म । यच्छन्तु । सऽप्रथः । यत् । ईमहे ॥३॥

**वेङ्कट०** यत् गृहम् वयं याचामहे, तत् अस्मभ्यम् इमे सुष्ठु प्र यच्छन्तु इति[2], सप्रथः सर्वतः पृथुतममिति ॥ ३ ॥

देवेभिर्देव्यदितेऽरिष्टभर्मन्ना गहि । स्मत् सूरिभिः पुरुप्रिये सुशर्मभिः ॥ ४ ॥

देवेभिः । देवि । अदिते । अरिष्टऽभर्मन् । आ । गहि ।
स्मत् । सूरिऽभिः । पुरुऽप्रिये । सुशर्मऽभिः ॥ ४ ॥

**वेङ्कट०** पुत्रैः सह हे देवि! [3]अदिते! अहिंसितहविर्भरणे ![†][3] मयि आ गच्छ कल्याणं प्राज्ञैः सुसुखैः आदित्यैः बहुप्रिये![4] ॥ ४ ॥

ते हि पुत्रासो अदितेर्विदुर्द्वेषांसि योतवे । अंहोश्चिदुरुचक्रयोऽनेहसः ॥ ५ ॥

ते । हि । पुत्रासः । अदितेः । विदुः । द्वेषांसि । योतवे । अंहोः । चित् । उरुऽचक्रयः । अनेहसः ॥ ५ ॥

**वेङ्कट०** ते हि पुत्राः अदितेः जानन्ति[5] पापानि पृथक् कर्तुम् अंहोः चित् पापस्य कृशस्यापि, बहुकृतः अपापाः[6] ॥ ५ ॥

[7]इति षष्ठाष्टके प्रथमाध्याये पञ्चविंशो वर्गः[7] ॥

अदितिर्नो दिवा पशुमदितिर्नक्तमद्वयाः । अदितिः पात्वंहसः सदावृधा ॥६॥

अदितिः । नः । दिवा । पशुम् । अदितिः । नक्तम् । अद्वयाः ।
अदितिः । पातु । अंहसः । सदाऽवृधा ॥ ६ ॥

**वेङ्कट०** अदितिः नः दिवा नक्तम् च पशुम् रक्षतु अमायया अदितिः पातु पापात् सदावृद्धा ॥६॥

उत स्या नो दिवा मतिरदितिरूत्या गमत् । सा शंताति मयस्करदप स्रिधः ॥७॥

---

१. अप्रस्तुता अ[1]. २. इति स मूको. ३-३. °तेर्हिंसि° वि[2]; °तेर्हिंसि° अ[1]. † °विर्दर° मूको. ४. °प्रियैः मूको. ५. °न्तः वि[2]; °न्त अ[1]. ६. °पा मूको. ७-७. नास्ति मूको.

उत । स्या । नः । दिवा । मतिः । अदितिः । ऊत्या । आ । गमत् ।
सा । शम्ऽताति । मयः । करत् । अप । स्रिधः ॥ ७ ॥

**वेङ्कट०** अपि चैषा दिवा अस्मान् पूजनीया अदितिः रक्षणेन आ गच्छतु। सा शङ्करम्[1] अन्नं करोतु, तथा अप नयतु शत्रून् ॥ ७ ॥

उत त्या दैव्या भिषजा शं नः करतो अश्विना । युयुयातामितो रपो अप स्रिधः ॥८॥

उत । त्या । दैव्या । भिषजा । शम् । नः । करतः । अश्विना । युयुयाताम् । इतः । रपः । अप । स्रिधः ॥८॥

**वेङ्कट०** अपि च तौ दैव्यौ भिषजौ [2]शम् नः[2] कुरुताम्[3] अश्विनौ। पृथक् कुरुताम् अस्मत्तः पापम् शत्रूंश्च ॥ ८ ॥

शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः । शं वातो वात्वरपा अप स्रिधः ॥ ९ ॥

शम् । अग्निः । अग्निऽभिः । करत् । शम् । नः । तपतु । सूर्यः ।
शम् । वातः । वातु । अरपाः । अप । स्रिधः ॥ ९ ॥

**वेङ्कट०** शम् अग्निः अग्निभिः अन्यैः शाखाभूतैः करोतु। शम् नः करोतु सूर्यः। सुखम् वातः आ वातु, पापवर्जितः शत्रूंश्च अप नयतु ॥ ९ ॥

अपामीवामप स्रिधमप सेधत दुर्मतिम् । आदित्यासो युयोतना नो अंहसः ॥१०॥

अप । अमीवाम् । अप । स्रिधम् । अप । सेधत । दुःऽमतिम् ।
आदित्यासः । युयोतन । नः । अंहसः ॥ १० ॥

**वेङ्कट०** रोगम् क्षयकरम् [4]दुर्मतिम् च अप सेधत[4], आदित्याः! पृथक् कुरुत अस्मान् पापात् ॥ १० ॥

[5]इति षष्ठाष्टके प्रथमाध्याये षड्विंशो वर्गः[5] ॥

युयोता शरुमस्मदाँ आदित्यास उतामतिम् । ऋधग्द्वेषः कृणुत विश्ववेदसः ॥११॥

युयोत । शरुम् । अस्मत् । आ । आदित्यासः । उत । अमतिम् ।
ऋधक् । द्वेषः । कृणुत । विश्वऽवेदसः ॥ ११ ॥

**वेङ्कट०** पृथक् कुरुत हिंसकम् अस्मत्तः आदित्याः!, अपि च अमतिम्। पृथक् शत्रून्[6] कुरुत हे विश्वधनाः! ॥ ११ ॥

तत् सु नः शर्म यच्छतादित्या यन्मुमोचति । एनस्वन्तं चिदेनसः सुदानवः ॥१२॥

---

१. शकम् मूको. २-२. गणौ मूको. ३. °रुतम्° मूको. ४-४. सेधत दुर्मतिम् मूको. ५-५. नास्ति मूको. ६. हन्तृन् वि°.

तत् । सु । नः । शर्म । यच्छत । आदित्याः । यत् । मुमोचति ।
एनस्वन्तम् । चित् । एनसः । सुऽदानवः ॥ १२ ॥

**वेङ्कट०** तत् सुष्ठु अस्मभ्यम् शर्म यच्छत हे आदित्याः!, यत् शर्म मोचयति एनस्विनम्[1] अपि [2]एनसः मां हे[2] सुदानाः! ॥ १२ ॥

यो नः कश्चिद् रिरिक्षति रक्षस्त्वेन मर्त्यः । स्वैः ष एवै रिरिषीष्ट युर्जनः ॥१३॥

यः । नः । कः । चित् । रिरिक्षति । रक्षःऽत्वेन । मर्त्यः ।
स्वैः । सः । एवैः । रिरिषीष्ट । युः । जनः ॥ १३ ॥

**वेङ्कट०** यः अस्मान् कः चित् हिंसितुमिच्छति दुष्टभावेन मर्त्यः, सः अस्माकं पृथक्कर्ता जनः स्वैः एव ज्ञातिभिः हन्यतामिति । ज्ञातय एव सङ्गच्छन्त[3] इति ॥ १३ ॥

समित् तमघमश्नवद् दुःशंसं मर्त्यं रिपुम् । यो अस्मत्रा दुर्हणावाँ उप द्वयुः ॥१४॥

सम् । इत् । तम् । अघम् । अश्नवत् । दुःऽशंसम् । मर्त्यम् । रिपुम् ।
यः । अस्मऽत्रा । दुःऽहनावान् । उप । द्वयुः ॥ १४ ॥

**वेङ्कट०** [4]सम् एव अश्नोतु तम्[4] पापम् दुरशंसम् [5]मर्त्यम् असच्छत्रुम्[5], यः अस्मासु सखा [6]दुर्हणावान् उप[6] गच्छति द्वयुः । द्वयायति[7] सत्यानृतपरश्च ॥ १४ ॥

पाकत्रा स्थन देवा हृत्सु जानीथ मर्त्यम् । उप द्वयुं चाद्वयुं च वसवः ॥१५॥

पाकऽत्रा । स्थन । देवाः । हृत्ऽसु । जानीथ । मर्त्यम् ।
उप । द्वयुम् । च । अद्वयुम् । च । वसवः ॥ १५ ॥

**वेङ्कट०** पक्तव्यप्रज्ञेषु भवथ देवाः! । हृदयेषु च मनुष्यम् [8]द्वयाविनम् अद्वयाविनम् च[8] प्रविश्य उप जानीथ हे वासयितारः! ॥ १५ ॥

[1]इति षष्ठाष्टके प्रथमाध्याये सप्तविंशो वर्गः[1] ॥

आ शर्म पर्वतानामोतापां वृणीमहे । द्यावाक्षामारे अस्मद् रपस्कृतम् ॥ १६ ॥

आ । शर्म । पर्वतानाम् । आ । उत । अपाम् । वृणीमहे ।
द्यावाक्षामा । आरे । अस्मत् । रपः । कृतम् ॥ १६ ॥

---

१. एनस्थितम् मूको. २-२. °नसोमेह मूको. ३. °च्छत मूको.; एवाः ज्ञातय इति द्र. ४-४. समेवाश्नौ कृतं मूको. ५-५. मत्यस्मिच्छत्रून् मूको. ६-६. नास्ति मूको. ७. द्वयायसी वि[२]; द्वयासी अ[१]. ८-८. द्वयापिनश्च वि[१]; °पिनं द्वयापिनश्च अ[१].

**वेङ्कट०** आ वृणीमहे सुखम् मेघानाम्, अपि [1]च अपाम्। हे द्यावाभूम्यौ![1] अस्मत्तः पापम् दूरे कुरुतम् ॥ १६ ॥

ते नो॑ भ॒द्रेण॒ शर्म॑णा यु॒ष्माकं॑ ना॒वा व॑सवः । अति॑ विश्वा॑नि दु॒रि॒ता पि॑पर्तन ॥१७॥

ते । नः॒ । भ॒द्रेण॑ । शर्म॑णा । यु॒ष्माक॑म् । ना॒वा । व॒स॒वः॒ ।
अति॑ । विश्वा॑नि । दुः॒ऽइ॒ता । पि॒प॒र्त॒न॒ ॥ १७ ॥

**वेङ्कट०** तस्माद् भजनीयेन सुखकरेण युष्माकम् [2]नावा हे वासयितारः![2] नः[3] अति पारयत विश्वानि दुरितानि ॥ १७ ॥

तु॒चे तना॑य॒ तत् सु नो॒ द्राघी॑य॒ आयु॑र्जी॒वसे॑ ।
आदि॑त्यासः सुमहसः कृ॒णोत॑न ॥ १८ ॥

तु॒चे । तना॑य । तत् । सु । नः॒ । द्राघी॑यः । आयुः॑ । जी॒वसे॑ ।
आदि॑त्यासः । सु॒ऽम॒ह॒सः॒ । कृ॒णोत॑न ॥ १८ ॥

**वेङ्कट०** अस्माकं पुत्राय तत्पुत्राय च युष्मदीयं दीर्घतमम् आयुः जीवनार्थम् सुष्ठु कुरुत हे आदित्याः! सुदीप्तयः! ॥ १८ ॥

य॒ज्ञो ही॒ळो वो॒ अन्त॑र॒ आदि॑त्या॒ अस्ति॑ मृ॒ळत॑ ।
यु॒ष्मे इद्वो॒ अपि॑ ष्मसि सजा॒त्ये॑ ॥ १९ ॥

य॒ज्ञः । ही॒ळः । वः॒ । अन्त॑रः । आदि॑त्याः । अस्ति॑ । मृ॒ळत॑ ।
यु॒ष्मे इति॑ । इत् । वः॒ । अपि॑ । स्म॒सि॒ । स॒ऽजा॒त्ये॑ ॥ १९ ॥

**वेङ्कट०** यज्ञः युष्माकं क्रोधस्य विनाशको भवति आदित्याः!। तथा सति [4]यूयम् मृडयत[4]। वयम् युष्माकं समजात्ये अपि भवामः[5]। युष्माभिरेकीभवामो भवतां सङ्घं प्रविश्येति ॥१९॥

बृ॒हद्वरू॑थं म॒रुतां॑ दे॒वं त्रा॒तार॑म॒श्विना॑ । मि॒त्रमी॑महे॒ वरु॑णं स्व॒स्तये॑ ॥ २० ॥

बृ॒हत् । वरू॑थम् । म॒रुता॑म् । दे॒वम् । त्रा॒तार॑म् । अ॒श्विना॑ ।
मि॒त्रम् । ई॒म॒हे॒ । वरु॑णम् । स्व॒स्तये॑ ॥ २० ॥

**वेङ्कट०** बृहत् वरूथम् सद्म मरुताम्[6] देवम् च त्रातारम् सवितारम् अश्विनौ च मित्रावरुणौ [7]च अविनाशाय ईमहे[7] ॥ २० ॥

अ॒ने॒हो मि॑त्रार्यमन्नृ॒वद्व॑रुण॒ शंस्य॑म् । त्रि॒वरू॑थं मरुतो यन्त नश्छ॒र्दिः ॥२१॥

---

१-१. अपाद्द्योवा भूम्याम् वि[1]; अभेद्योवा भूम्याम् अ[1]. २-२. नावेदवा[1] मूको. ३. नास्ति मूको. ४-४. [1]यमृडयस्त मूको. ५. भुवामः मूको. ६. [1]मरुतो मूको. ७-७. चापि नाशयामहे मूको.

अनेहः । मित्र । अर्यमन् । नृऽवत् । वरुण । शंस्यम् ।
त्रिऽवरूथम् । मरुतः । यन्त । नः । छर्दिः ॥ २१ ॥

वेङ्कट० हे मित्र! अर्यमन्! वरुण! मरुतः! अपापम् मनुष्ययुक्तम् शंस्यम् त्रिच्छदिष्कम्[1] (?) गृहम् अस्मभ्यं प्रयच्छत ॥ २१ ॥

ये चिद्धि मृत्युबन्धव आदित्या मनवः स्मसि । प्र सू न आयुर्जीवसे तिरेतन ॥२२॥

ये । चित् । हि । मृत्युऽबन्धवः । आदित्याः । मनवः । स्मसि ।
प्र । सु । नः । आयुः । जीवसे । तिरेतन ॥ २२ ॥

वेङ्कट० ये चित् हि[2] मृत्युबन्धनाः हे आदित्याः! मनुष्याः भवामः । तेषां सुष्ठु आयुः वर्धयत जीवनायेति ॥ २२ ॥

[3]इति षष्ठाष्टके प्रथमाध्याये अष्टाविंशो वर्गः[3] ॥

[ १९ ]

[1]सोभरिः काण्व ऋषिः । अग्निर्देवता, चतुस्त्रिंशीपञ्चत्रिंश्योः आदित्याः, अन्त्ययोः त्रसदस्युः पौरुकुत्स्यः । षड्विंश्यन्ताः प्रगाथः (=विषमाः ककुभः, समाः सतोबृहत्यः), सप्तविंशी द्विपदा विराट्, अष्टाविंश्यादित्रयस्त्रिंश्यन्ताः प्रगाथः (=समाः ककुभः, विषमाः सतोबृहत्यः), चतुस्त्रिंशी उष्णिक्, पञ्चत्रिंशी सतोबृहती, षट्त्रिंशी ककुप्, अन्त्या पङ्क्तिः[1] ।

तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे । देवत्रा हव्यमोहिरे ॥ १ ॥

तम् । गूर्धय । स्वःऽनरम् । देवासः । देवम् । अरतिम् । दधन्विरे । देवऽत्रा । हव्यम् । आ । ऊहिरे ॥ १ ॥

वेङ्कट० सोभरिः । तम् स्तुहि [4]सर्वमनुष्यम् । देवाश्च[4] देवम् गन्तारं धारयन्ति । मनुष्याश्च अनेन देवेषु हव्यम् वहन्ति ॥ १ ॥

विभूतरातिं विप्र चित्रशोचिषमग्निमीळिष्व यन्तुरम् ।
अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥ २ ॥

विभूतऽरातिम् । विप्र । चित्रऽशोचिषम् । अग्निम् । ईळिष्व । यन्तुरम् ।
अस्य । मेधस्य । सोम्यस्य । सोभरे । प्र । ईम् । अध्वराय । पूर्व्यम् ॥ २ ॥

---

१. त्रिदिविष्कं मूको.　२. हित मूको.　३-३. नास्ति मूको.　४-४. °ष्यदे° मूको

वेङ्कट० विभूतदानम् मेधाविन्! चित्रदीप्तिम् अग्निम् स्तुहि यन्तारम्। अस्य यज्ञस्य सोमार्हस्य 'हे सोभरे!' प्रकर्षेण स्तुहि अग्निम्, योऽयं यज्ञाय मुख्यो भवति ॥ २ ॥

यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् । अस्य यज्ञस्य सुक्रतुम् ॥३॥

यजिष्ठम्। त्वा। ववृमहे। देवम्। देवऽत्रा। होतारम्। अमर्त्यम्। अस्य। यज्ञस्य। सुऽक्रतुम् ॥ ३ ॥

वेङ्कट० यष्टृतमम् त्वा वृणीमहे देवम् देवेषु 'होतारम् अमर्त्यम्' अस्य यज्ञस्य यज्ञम्, यस्य अग्निः होता भवति ॥ ३ ॥

ऊर्जो नपातं सुभगं सुदीदितिमग्निं श्रेष्ठशोचिषम् ।
स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि ॥ ४ ॥

ऊर्जः। नपातम्। सुऽभगम्। सुऽदीदितिम्। अग्निम्। श्रेष्ठऽशोचिषम्।
सः। नः। मित्रस्य। वरुणस्य। सः। अपाम्। आ। सुम्नम्। यक्षते। दिवि ॥ ४ ॥

वेङ्कट० 'ऊर्जः पुत्रम्' सुभगम् सुदीप्तम् अग्निम् श्रेष्ठशोचिषम्। रश्मयः शोचींषि। वृणीमः। सः अस्माकम् द्युलोके मित्रादीनां स्वभूतम् अन्नम् आ याचते ॥ ४ ॥

यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये । यो नमसा स्वध्वरः ॥५॥

यः। सम्ऽइधा। यः। आऽहुती। यः। वेदेन। ददाश। मर्तः। अग्नये। यः। नमसा। सुऽअध्वरः ॥५॥

वेङ्कट० यः समिधा, यः आज्याद्याहुत्या[4], यः च स्वाध्यायेन दानं करोति मनुष्यः [5]अग्नये। [6]स्वाध्याये च[6] वाचिकम् दानमस्ति। यः च नमस्कारेण दानं सम्पादयति। दानसमो नमस्कारश्चेत्यर्थः। यद्वा मनुष्येभ्यः प्रदीयमानमन्नम्[7]। स सर्वः सुयज्ञः ॥ ५ ॥

[8]इति षष्ठाष्टके प्रथमाध्याये एकोनत्रिंशो वर्गः[8] ॥

तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः ।
न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ॥ ६ ॥

तस्य। इत्। अर्वन्तः। रंहयन्ते। आशवः। तस्य। द्युम्निऽतमम्। यशः।
न। तम्। अंहः। देवऽकृतम्। कुतः। चन। न। मर्त्यऽकृतम्। नशत् ॥ ६ ॥

वेङ्कट० तस्य एव अश्वाः गच्छन्ति व्याप्ताः, तस्य दीप्ततमम् यशः। तम् देवकृतम् मर्त्यकृतम् वा पापम् न व्याप्नोति कुतः चन इति ॥ ६ ॥

---

१-१. हे सोम हे मूको. २-२. °तारं मम त्वम् वि[2]; °तारमम त्वम् अ[1]. ३-३. ऊर्जपु° मूको.
४. आज्याहुतिभिः अ[1]. ५. °ये यश्च अ[1]. ६-६. नास्ति अ[1]. ७. प्रतीय° मूको. ८-८. नास्ति मूको.

स्वग्नयो वो अग्निभिः स्याम सूनो सहस ऊर्जां पते । सुवीरस्त्वमस्मयुः ॥ ७ ॥

सुऽअग्नयः । वः । अग्निऽभिः । स्याम । सूनो इति । सहसः । ऊर्जाम् । पते । सुऽवीरः । त्वम् । अस्मऽयुः ॥

**वेङ्कट॰** तव गार्हपत्यादिभिः अग्निभिः स्वग्नयः वयम् स्याम सहसः सूनो! अन्नानां [1]पते![1]। एकवचनेऽपि[2] वः इति दृष्टम्। सुवीरः त्वम् अस्मत्कामः स्याः ॥ ७ ॥

प्रशंसमानो अतिथिर्न मित्रियोऽग्नी रथो न वेद्यः ।
त्वे क्षेमासो अपि सन्ति साधवस्त्वं राजा रयीणाम् ॥ ८ ॥

प्रऽशंसमानः । अतिथिः । न । मित्रियः । अग्निः । रथः । न । वेद्यः ।
त्वे इति । क्षेमासः । अपि । सन्ति । साधवः । त्वम् । राजा । रयीणाम् ॥ ८ ॥

**वेङ्कट॰** प्रशस्यमानः अग्निः अतिथिः इव मित्राणां रक्षको भवति, तथा च रथः इव भवति धनहितः (तु॰ ऋ ८,८४,१)। त्वयि क्षेमाः अपि[2] भवन्ति कल्याणाः, अग्ने! त्वम् राजा भवसि धनानाम् ॥ ८ ॥

सो अद्धा दाश्वध्वरोऽग्ने मर्तः सुभग स प्रशंस्यः । स धीभिरस्तु सनिता ॥९॥

सः । अद्धा । दाशुऽअध्वरः । अग्ने । मर्तः । सुऽभग । सः । प्रऽशंस्यः । सः । धीभिः । अस्तु । सनिता ॥

**वेङ्कट॰** सः सत्यम् दत्तयज्ञः अग्ने![3] मर्त्यः सुधन![4] । सः एव प्रशंसनीयः। सः कर्मभिः अस्तु सम्भक्तः। उत्तरत्र सम्बन्धः ॥ ९ ॥

यस्य त्वमूर्ध्वो अध्वराय तिष्ठसि क्षयद्वीरः स साधते ।
सो अर्वद्भिः सनिता स विपन्युभिः स शूरैः सनिता कृतम् ॥ १० ॥

यस्य । त्वम् । ऊर्ध्वः । अध्वराय । तिष्ठसि । क्षयत्ऽवीरः । सः । साधते ।
सः । अर्वत्ऽभिः । सनिता । सः । विपन्युऽभिः । सः । शूरैः । सनिता । कृतम् ॥ १० ॥

**वेङ्कट॰** यस्य त्वम् ऊर्ध्वः यज्ञाय तिष्ठसि, निवसद्वीरः साधयति सः अश्वैः युद्धाख्यम्, एवं स्तोतृभिः एवम् शूरैः ॥ १० ॥

[5]इति षष्ठाष्टके प्रथमाध्याये त्रिंशो वर्गः[5] ॥

यस्याग्निर्वपुर्गृहे स्तोमं चनो दधीत विश्ववार्यः । हव्या वा वेविषद् विषः ॥ ११ ॥

यस्य । अग्निः । वपुः । गृहे । स्तोमम् । चनः । दधीत । विश्वऽवार्यः । हव्या । वा । वेविषत् । विषः ॥ ११ ॥

---

१-१. पतये ए॰ मूको.　२. नास्ति अ[1].　३. अग्नेः मूको.　४. ॰नः अ[1].　५-५. नास्ति मूको.

वेङ्कट० यस्य अग्निः उसः गृहे स्तोमम् हविश्च धारयति विश्वैर्वरणीयः[1]। हव्यानि [2]च भक्षयन्[2] व्याप्नोति। सः अर्वद्भिः भजते कृतम् ( तु. ऋ ८,१९,१० ) इति ॥ ११ ॥

विप्रस्य वा स्तुवतः सहसो यहो मक्षूतमस्य रातिषु ।
अवोदेवमुपरिमर्त्यं कृधि वसो विविदुषो वचः ॥ १२ ॥

विप्रस्य । वा । स्तुवतः । सहसः । यहो इति । मक्षुऽतमस्य । रातिषु ।
अवःऽदेवम् । उपरिऽमर्त्यम् । कृधि । वसो इति । विविदुषः । वचः ॥ १२ ॥

वेङ्कट० [3]मेधाविनः हे बलस्य पुत्र! अत्यन्तं[3] क्षिप्रस्य [4]वा दानेषु[4] स्तुवतः प्रयच्छतश्चेत्यर्थः। [5]तस्योभयस्यान्नम् अवोदेवम्[5] उपरिमर्त्यम् कुरु वासयितः![6] जानतः स्तोत्रम् ॥ १२ ॥

यो अग्निं हव्यदातिभिर्नमोभिर्वा सुदक्षमाविवासति । गिरा वाजिरशोचिषम् ॥१३॥
यः । अग्निम् । हव्यदातिऽभिः । नमःऽभिः । वा । सुऽदक्षम् । आऽविवासति ।
गिरा । वा । अजिरऽशोचिषम् ॥ १३ ॥

वेङ्कट० यः अग्निम् हविर्दानैः नमस्कारैः वा सुबलम् परिचरति, स्तुत्या वा गमनशीलरश्मिम्। उत्तरत्र सम्बन्धः ॥ १३ ॥

समिधा यो निशिती दाशददितिं धामभिरस्य मर्त्यः ।
विश्वेत् स धीभिः सुभगो जनाँ अति द्युम्नैरुद्न इव तारिषत् ॥ १४ ॥

सम्ऽइधा । यः । निऽशिती । दाशत् । अदितिम् । धामऽभिः । अस्य । मर्त्यः ।
विश्वा । इत् । सः । धीभिः । सुऽभगः । जनान् । अति । द्युम्नैः । उद्नःऽइव । तारिषत् ॥१४॥

वेङ्कट० समिधा यः मन्त्रेण संस्कृतया प्रीणयति अग्निम्[7], सः तेजोभिः अस्य[8] मनुष्यः विश्वान् एव कर्मभिः सुधनः[9] जनान् अन्नैश्च उदकानीव अति तरति ॥ १४ ॥

तदग्ने द्युम्नमा भर यत् सासहत् सदने कं चिदत्रिणम् । मन्युं जनस्य दूढ्यः ॥१५॥
तत् । अग्ने । द्युम्नम् । आ । भर । यत् । ससहत् । सदने । कम् । चित् । अत्रिणम् ।
मन्युम् । जनस्य । दुःऽध्यः ॥ १५ ॥

वेङ्कट० तत् अग्ने! धनम् आ हर, यत् अभिभवति गृहे वर्तमानम् कम् चित् अपि राक्षसम्, क्रोधम् च जनस्य दुर्बुद्धेः ॥ १५ ॥

[10]इति षष्ठाष्टके प्रथमाध्याये एकत्रिंशो वर्गः[10] ॥

---

१. °रश्रियः मूको. २-२. चाभ° वि[1]. ३-३. ··· त्रात्यन्तं मूको. ४-४. पादामेषु वि[1]; पादामुपु अ[1]. ५-५. °स्यान्न देव° मूको. ६. °यितं मूको. ७. तु. ऋ २,१,११. ८. अन्नैः मूको. ९. विजनः अ[1]. १०-१०. नास्ति मूको.

येन चष्टे वरुणो मित्रो अर्यमा येन नासत्या भगः ।
वयं तत् ते शवसा गातुवित्तमा इन्द्रत्वोता विधेमहि ॥ १६ ॥

येन । चष्टे । वरुणः । मित्रः । अर्यमा । येन । नासत्या । भगः ।
वयम् । तत् । ते । शवसा । गातुवित्ऽतमाः । इन्द्रत्वाऽऊताः । विधेमहि ॥ १६ ॥

वेङ्कट० येन वचसा अस्मान् पश्यन्ति[1] वरुणादयः[2], वयम् तत् वचनं तुभ्यं बलेन विधेमहि अत्यन्तं गमनविदः इन्द्रेण त्वया च रक्षिताः[3] ॥ १६ ॥

ते घेदग्ने स्वाध्यो३ ये त्वा विप्र निदधिरे नृचक्षसम् । विप्रासो देव सुक्रतुम् ॥१७॥

ते । घ । इत् । अग्ने । सुऽआध्यः । ये । त्वा । विप्र । निऽदधिरे । नृऽचक्षसम् ।
विप्रासः । देव । सुऽक्रतुम् ॥ १७ ॥

वेङ्कट० ते एव खलु अग्ने! सुकर्माणः, ये त्वा मेधाविन्! गृहे धारयन्ति नृणां द्रष्टारम् मेधाविनः देव![4] सुप्रज्ञम् ॥ १७ ॥

त इद् वेदिं सुभग त आहुतिं ते सोतुं चक्रिरे दिवि ।
त इद् वाजेभिर्जिग्युर्महद् धनं ये त्वे कामं न्येरिरे ॥ १८ ॥

ते । इत् । वेदिम् । सुऽभग । ते । आऽहुतिम् । ते । सोतुम् । चक्रिरे । दिवि ।
ते । इत् । वाजेभिः । जिग्युः । महत् । धनम् । ये । त्वे इति । कामम् । निऽएरिरे ॥ १८ ॥

वेङ्कट० ते एव यज्ञाय वेदिम्, ते एव आहुतिम् हे सुधन![5], ते एवाभिषवम् चक्रिरे, ते एव बलैः जयन्ति महत् धनम्, ये त्वयि कामम् न्येरिरे समवयन्ति दीप्ते[6] ॥ १८ ॥

भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः ॥१९॥

भद्रः । नः । अग्निः । आऽहुतः । भद्रा । रातिः । सुऽभग । भद्रः । अध्वरः ।
भद्राः । उत । प्रऽशस्तयः ॥ १९ ॥

वेङ्कट० कल्याणः अस्माकम् अग्निः आहुतः, भद्रा रातिः हे सुभग!, भद्रः यज्ञः, भद्राः अपि च स्तुतयः ॥ १९ ॥

भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहः ।
अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिः ॥ २० ॥

भद्रम् । मनः । कृणुष्व । वृत्रऽतूर्ये । येन । समत्ऽसु । ससहः ।
अव । स्थिरा । तनुहि । भूरि । शर्धताम् । वनेम । ते । अभिष्टिऽभिः ॥ २० ॥

---

१. श्यति मूको. २. °रुणोदयः मूको. ३. °क्षितः वि[2]; °क्षिता अ[1]. ४. नास्ति अ[1].
५. सुतन मूको. ६. दीप्तो अ[1].

वेङ्कट० भद्रम् मनः कुरु सङ्ग्रामे, येन मनसा त्वम् अभिभवसि सङ्ग्रामेषु शत्रून्। अव तनुहि स्थिराणि धनूंषि बहूनि हिंसताम्। वयं शत्रून् हनाम[1] [2]तव अभ्येषणैः[2] ॥ २० ॥

[3]इति षष्ठाष्टके प्रथमाध्याये द्वात्रिंशो वर्गः[3] ॥

ईळे॑ गि॒रा मनु॑र्हितं॒ यं दे॒वा दू॒तम॑र॒तिं न्ये॑रि॒रे । यजि॑ष्ठं हव्य॒वाह॑नम् ॥ २१ ॥

ईळे॑ । गि॒रा । मनु॑ःऽहितम् । यम् । दे॒वाः । दू॒तम् । अ॒र॒तिम् । नि॒ऽए॒रि॒रे । यजि॑ष्ठम् । ह॒व्य॒ऽवाह॑नम् ॥ २१ ॥

वेङ्कट० स्तौमि स्तुत्या मनुना हितम्, यम् देवाः दूतम् गन्तारम् भूम्यां प्रापयन् यष्टृतमम् हविषो वोढारम् ॥ २१ ॥

ति॒ग्मज॑म्भाय॒ तरु॑णाय॒ राज॑ते॒ प्रयो॑ गायस्य॒ग्नये॑ ।
यः पिं॒शते॑ सू॒नृता॑भिः सु॒वीर्य॑म॒ग्निर्घृ॒तेभि॒राहु॑तः ॥ २२ ॥

ति॒ग्मऽज॑म्भाय । तरु॑णाय । राज॑ते । प्रय॑ः । गा॒य॒सि॒ । अ॒ग्नये॑ ।
यः । पिं॒शते॑ । सू॒नृता॑भिः । सु॒ऽवीर्य॑म् । अ॒ग्निः । घृ॒तेभि॑ः । आऽहु॑तः ॥ २२ ॥

वेङ्कट० तिग्मदंष्ट्राय यूने राजते अन्नम् वदसि अग्नये, यः आश्लेषयति[4] वाग्भिः सुवीर्यम् स्तोतारम् अग्निः घृतैश्च आहुतः[5] ॥ २२ ॥

यदी॑ घृ॒तेभि॒राहु॑तो॒ वाशी॑म॒ग्निर्भर॑त॒ उच्चाव॑ च । असु॑र इव नि॒र्णिज॑म् ॥ २३ ॥

यदि॑ । घृ॒तेभि॑ः । आऽहु॑तः । वाशी॑म् । अ॒ग्निः । भर॑ते । उत् । च॒ । अव॑ । च॒ ।
असु॑रःऽइव । नि॒ःऽनिज॑म् ॥ २३ ॥

वेङ्कट० यदि अग्निः घृतैः आहुतः, ज्वालाम् अग्निः वहति उच्चैः नीचैः च। 'वाशी' (निघ १,११) इति वाङ्नाम[6]। वाशतिरुच्चरतिकर्मा,[7] इह[8] तु ज्वालामाह। यथा बलवान् कवचम् बिभर्ति, [9]'तथा निविशत'[9] इति ॥ २३ ॥

यो ह॒व्यान्यैर॑यता॒ मनु॑र्हितो दे॒व आ॒सा सु॑ग॒न्धिना॑ ।
विवा॑सते॒ वार्या॑णि स्वध्व॒रो होता॑ दे॒वो अम॑र्त्यः ॥ २४ ॥

यः । ह॒व्यानि॑ । ऐर॑यत । मनु॑ःऽहितः । दे॒वः । आ॒सा । सु॒ऽग॒न्धिना॑ ।
विवा॑सते । वार्या॑णि । सु॒ऽअ॒ध्व॒रः । होता॑ । दे॒वः । अम॑र्त्यः ॥ २४ ॥

वेङ्कट० यः हवींषि प्रेरितवान् मनुना निहितः[10] देवः आस्येन शोभनगन्धेन, स निर्गमयति धनानि सुयज्ञः होता देवः अमर्त्यः ॥ २४ ॥

---

१. अह° मूको. २-२. तव ह्यश्णै. वि[2]; तवां ह्यश्णे अ[1]. ३-३. नास्ति मूको. ४. आशोषयसि मूको. ५. आहुतयः मूको. ६. चोन्दना मूको. ७. पाशतेरुच्चरतिकर्मो वि[2]; पाशतेरुच्चरतिकर्मो··· अ[1]. ८. इ मूको. ९-९. तदानीं विशत वि[2]; तदानीं विशत मूको. १०. °हितः स मूको.

यद॑ग्ने मर्त्य॒स्त्वं स्याम॒हं मि॑त्रमहो॒ अम॑र्त्यः । सह॑सः सूनवाहुत ॥ २५ ॥

यत् । अ॒ग्ने॒ । मर्त्यः॑ । त्वम् । स्याम् । अ॒हम् । मि॒त्र॒ऽम॒हः॒ । अम॑र्त्यः ।
सह॑सः । सू॒नो॒ इति॑ । आ॒ऽहु॒त॒ ॥ २५ ॥

**वेङ्कट०** यत् अग्ने! त्वम् मर्त्यः स्याः, अहम् च स्याम् हे मित्राणां पूजयितः! अमर्त्यः हे सहसः पुत्र! आहुत! । उत्तरत्र सम्बन्धः ॥ २५ ॥

[1]इति षष्ठाष्टके प्रथमाध्याये त्रयस्त्रिंशो वर्गः[1] ॥

न त्वा॑ रासीया॒भिश॑स्तये वसो॒ न पा॑प॒त्वाय॑ सन्त्य ।
न मे॑ स्तो॒ताम॑ती॒वा न दुर्हि॑तः॒ स्याद॑ग्ने॒ न पा॒पया॑ ॥ २६ ॥

न । त्वा॒ । रा॒सी॒य॒ । अ॒भिऽश॑स्तये । व॒सो॒ इति॑ । न । पा॒प॒ऽत्वाय॑ । स॒न्त्य॒ ।
न । मे॒ । स्तो॒ता । अ॒म॒ति॒ऽवा । न । दुःऽहि॑तः । स्यात् । अ॒ग्ने॒ । न । पा॒पया॑ ॥ २६ ॥

**वेङ्कट०** तदाहं त्वाम् अभिशंसनाय न रासीय तुभ्यं धनानि प्रयच्छन् वासयितः!, न च पापत्वाय भजनशील! दद्याम् । न मे स्तोता [2]अमतीवा सन्तद्धा[2] मतिर्यस्य भवति तादृशः, न च दुर्हितः दुःखे निहितः स्यात् अग्ने!, न च पापया वृत्त्या युक्त इति ॥ २६ ॥

पि॒तुर्न पु॒त्रः सु॒भृ॑तो दुरो॒ण आ दे॒वाँ ए॑तु॒ प्र णो॑ ह॒विः ॥ २७ ॥

पि॒तुः । न । पु॒त्रः । सु॒ऽभृ॑तः । दु॒रो॒णे । आ । दे॒वान् । ए॒तु॒ । प्र । नः॒ । ह॒विः ॥ २७ ॥

**वेङ्कट०** पितुः इव पुत्रः सुभृतः गृहे अस्माकम् अग्निः । तथा सति प्र गच्छतु[3] हविः अस्माकम् देवान् । इयं द्विपदेति ॥ २७ ॥

तवा॒हम॑ग्न ऊ॒तिभि॒र्नेदि॑ष्ठाभिः सचेय॒ जोष॒मा व॑सो । सदा॑ दे॒वस्य॒ मर्त्यः॑ ॥ २८ ॥

तव॑ । अ॒हम् । अ॒ग्ने॒ । ऊ॒तिऽभिः॑ । नेदि॑ष्ठाभिः । स॒चे॒य॒ । जोष॑म् । आ । व॒सो॒ इति॑ । सदा॑ । दे॒वस्य॑ । मर्त्यः॑ ॥

**वेङ्कट०** तव अहम् अग्ने! पालनैः[4] अन्तिकतमैः प्रीतिम् आ सचेय वासयितः! सदा देवस्य मनुष्यः ॥ २८ ॥

तव॒ क्रत्वा॑ सनेयं॒ तव॑ रा॒तिभि॒रग्ने॒ तव॒ प्रश॑स्तिभिः ।
त्वामिदा॑हुः॒ प्रम॑तिं वसो॒ ममाग्ने॒ हर्ष॑स्व॒ दात॑वे ॥ २९ ॥

तव॑ । क्रत्वा॑ । स॒ने॒य॒म् । तव॑ । रा॒तिऽभिः॑ । अग्ने॑ । तव॑ । प्रश॑स्तिऽभिः ।
त्वाम् । इत् । आ॒हुः॒ । प्रऽम॑तिम् । व॒सो॒ इति॑ । मम॑ । अग्ने॑ । हर्ष॑स्व । दात॑वे ॥ २९ ॥

---

१-१. नास्ति मूको. २-२. °व अस° वि[2]. ३. यच्छतु मूको. ४. चाल° मूको.

वेङ्कट० तव कर्मणा धनम् सनेयम्, तव[1] दानैः अग्ने!, तव स्तुतिभिः । त्वाम् एव आहुः [2]प्रकृष्टमतिम् हे वासयितः![2] मम लौकिकाः । तथा सति अग्ने! हर्षस्व हृष्टो दानाय भवेति ॥ २९ ॥

प्र सो अ॑ग्ने तवो॒तिभि॑: सुवी॒राभि॑स्तिरते॒ वाज॑भर्मभिः । यस्य॒ त्वं स॒ख्यमा॒वर॑: ॥३०॥

प्र । सः । अ॒ग्ने॒ । तव॑ । ऊ॒तिऽभि॑ः । सु॒ऽवी॒राभि॑ः । ति॒र॒ते॒ । वाज॑भर्मऽभिः ।
यस्य॑ । त्वम् । स॒ख्यम् । आ॒ऽवर॑ः ॥ ३० ॥

वेङ्कट० प्र वर्धते[3] सः अग्ने! तव पालनैः सुपुत्रैः आहृतान्नैः[4], यस्य त्वम् सख्यम् आवृणोषि ॥ ३० ॥

[5]इति षष्ठाष्टके प्रथमाध्याये चतुस्त्रिंशो वर्गः[5] ॥

तव॑ द्र॒प्सो नील॑वान् वा॒श ऋ॒त्विय॒ इन्धा॑नः सिष्ण॒वा द॑दे ।
त्वं म॒हीना॑मु॒षसा॑मसि प्रि॒यः क्ष॒पो वस्तु॑षु राजसि ॥ ३१ ॥

तव॑ । द्र॒प्सः । नील॑ऽवान् । वा॒शः । ऋ॒त्विय॑ः । इन्धा॑नः । सि॒ष्णो॒ इति॑ । आ । द॒दे॒ ।
त्वम् । म॒हीना॑म् । उ॒षसा॑म् । अ॒सि॒ । प्रि॒यः । क्ष॒पः । वस्तु॑षु । रा॒ज॒सि॒ ॥ ३१ ॥

वेङ्कट० तव [6]रश्मिः नीलवर्णः शब्दनशीलः ऋतौ भवः[6] शुष्केष्वरण्येषु ग्रीष्मे जातः दीप्यमानः हे [7]शुद्ध! काष्ठानि आ दत्ते[7] । यद्वा एवंविधस्तव द्रप्सः यजमानैरादीयते यज्ञार्थम् । सः त्वम् महतीनाम् उषसाम् असि प्रियः, रात्रिषु अहस्सु च राजसि ॥ ३१ ॥

तमाग॑न्म॒ सोभ॑रयः स॒हस्र॑मुष्कं स्वभि॒ष्टिमव॑से । स॒म्राजं॒ त्रास॑दस्यवम् ॥ ३२ ॥

तम् । आ । अ॒ग॒न्म॒ । सोभ॑रयः । स॒हस्र॑ऽमुष्कम् । सु॒ऽअ॒भि॒ष्टिम् । अव॑से ।
स॒म्ऽराज॑म् । त्रास॑दस्यवम् ॥ ३२ ॥

वेङ्कट० तम् अग्निम् आभिमुख्येन गतवन्तो वयम् सोभरयः [8]बहुबीजम् स्वभ्येषणम्[8] रक्षणाय सम्यग् दीप्यमानम्[9] [10]त्रसदस्योः राज्ञो यज्ञे स्थितम्[10] ॥ ३२ ॥

यस्य॑ ते अग्ने अ॒न्ये अ॒ग्नय॑ उप॒क्षितो॑ व॒या इ॑व ।
विपो॒ न द्यु॒म्ना नि यु॑वे॒ जना॑नां॒ तव॑ क्ष॒त्राणि॑ व॒र्धय॑न् ॥ ३३ ॥

यस्य॑ । ते॒ । अ॒ग्ने॒ । अ॒न्ये । अ॒ग्नय॑ः । उ॒प॒ऽक्षित॑ः । व॒याःऽइ॑व ।
विप॑ः । न । द्यु॒म्ना । नि । यु॒वे॒ । जना॑नाम् । तव॑ । क्ष॒त्राणि॑ । व॒र्धय॑न् ॥ ३३ ॥

वेङ्कट० यस्य ते अग्ने! अन्ये[11] अग्नयः उपवसन्तो भवन्ति शाखाः इव वृक्षस्य । विप्रस्य इव अतिथेः अन्नैः

---

१. तच वि[2]; तच अ[1]. २-२. °मति वासयितं मूको. ३. वर्धसे मूको. ४. °तानैः मूको. ५-५. नास्ति मूको. ६. रश्मिनेव पथाशब्दनशीलं मतौ भव मूको. ७-७. शुद्धकष्ट···दत्ते मूको. ८-८. °हुबीजस्य छेषः वि[2]; °हुबीजस्व छेष° अ[1]. ९. °दीप्यनं मूको. १०-१०. त्रसदस्वेराजयज्ञेस्वितमः मूको. ११. अन्यः वि[2]; अन्नैः अ[1].

तव बलानि हविर्भिर्वर्धयन्ति । मिश्रयन्ति[1] अन्नान्यात्मनि पुत्रपौत्राणाम् जनानाम् पोषणाय । यद्वा शत्रूणां जनानाम् अन्नानीति ॥ ३३ ॥

यमा॑दित्यासो अद्रुहः पा॒रं नय॑थ॒ मर्त्य॑म् । म॒घोनां॒ विश्वे॑षां सुदानवः ॥ ३४ ॥

यम् । आ॒दि॒त्या॒सः॒ । अ॒द्रु॒हः॒ । पा॒रम् । नय॑थ । मर्त्य॑म् । म॒घोना॑म् । विश्वे॑षाम् । सु॒ऽदा॒न॒वः॒ ॥ ३४ ॥

वेङ्कट० द्वे आदित्यदेवते । यम् हे आदित्याः! अद्रोग्धारः! पारम् नयथ मनुष्यम्, धनवतामाढ्यानाम् सर्वेषामेव, सर्वेभ्योऽप्याढ्यं[2] कुरुथ हे सुदानाः!। उत्तरत्र सम्बन्धः ॥ ३४ ॥

यू॒यं रा॑जानः॒ कं चि॑च्चर्षणीसहः॒ क्षय॑न्तं॒ मानु॑षाँ॒ अनु॑ ।
व॒यं ते वो॒ वरु॑ण॒ मित्रार्य॑म॒न्त्स्यामेदृ॒तस्य॑ र॒थ्यः॑ ॥ ३५ ॥

यू॒यम् । रा॒जा॒नः॒ । कम् । चि॒त् । च॒र्ष॒णि॒ऽस॒ह॒ः । क्षय॑न्तम् । मानु॑षान् । अनु॑ ।
व॒यम् । ते । व॒ः । वरु॑ण । मित्र॑ । अर्य॑मन् । स्याम॑ । इत् । ऋ॒तस्य॑ । र॒थ्यः॑ ॥ ३५ ॥

वेङ्कट० यूयम् हे राजानः! तम् कम् चित् एव [3]पारं नयथ[3] भाग्यवन्तम् हे[4] चर्षणीनाम् अभिभवितारः! निवसन्तम् मनुष्यान् प्रति । तत्र युष्माकम् ते वयम् स्याम यद् यूयम् रक्षथ । किञ्च हे वरुण! मित्र! [5]अर्यमन्! स्याम[5] एव यज्ञस्य नेतारः ॥ ३५ ॥

अदा॑न्मे पौरुकु॒त्स्यः प॑ञ्चा॒शतं॑ त्र॒सद॑स्युर्व॒धूना॑म् । मंहि॑ष्ठो अ॒र्यः सत्प॑तिः ॥ ३६ ॥

अदा॑त् । मे॒ । पौ॒रु॒ऽकु॒त्स्यः । प॒ञ्चा॒शत॑म् । त्र॒सद॑स्युः । व॒धूना॑म् । मंहि॑ष्ठः । अ॒र्यः । सत्ऽप॑तिः ॥ ३६ ॥

वेङ्कट० शौनकः—'आग्नेये[6] स्तुती राजर्षेस्त्रसदस्योर् अदादिति ।
पञ्चाशतं वधूनां च गवां तिस्रश्च सप्तती:[7] ॥
अश्वोष्ट्राणां तथैवासौ[8] वासांसि विविधानि च ।
रत्नानि चर्षभं[9] श्यावं तासामग्रेसरं पतिम्[10] ॥
[11]प्रतिगृह्य ऋषिर्दारान्[11] इन्द्रायैतच्छशंस च ।
वयं सूक्तेन शक्रं च प्रीतस्तेन शचीपतिः ॥
ऋषे! वरं वृणीष्वेति प्रह्वस्तमृषिरब्रवीत् ।
काकुत्स्थकन्याः पञ्चाशद् युगपत् रमये[12] प्रभो! ॥

१. निश्र° मूको. २. °भ्यो व्याढं मूको. ३-३. बारनयथा मूको. ४. वो मूको. ५-५. °मन्···स्या° मूको. ६. ऋ ८,१९,३६. ७. °तिम् मूको. ८. °वासै मूको. ९. वृष° बृदे. १०. पथि मूको. ११-११. °गृह्य° ··· मूको.; कृत्वा दारानृषिर्गच्छन् बृदे. १२. रते मूको.

कामतो बहुरूपत्वं यौवनं चाक्षयां रतिम् ।
शङ्खनिधिम् पद्मनिधिम् मद्गृहेष्वनपायिनम् ॥

प्रासादान् विश्वकर्मासौ[1] सौवर्णांस्त्वत्प्रसादतः ।
कुर्वीत पुष्पवाटीश्च[2] पृथक्कासां सुरद्रुमैः[3] ॥
मा भूत् सपत्नीस्पर्धाऽऽसां सर्वमस्त्विवति चाब्रवीत् ॥' ( बृदे ६,५१-५७ )

अदात् मह्यम् पौरुकुत्स्यः वधूनाम् पञ्चाशतम् त्रसदस्युः दातृतमः अर्यः सतां पतिः ॥ ३६ ॥

उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि ।
तिसृणां सप्ततीनां श्यावः प्रणेता भुवद् वसुर्दियानां पतिः ॥ ३७ ॥

उत । मे । प्रयियोः । वयियोः । सुऽवास्त्वाः । अधि । तुग्वनि ।
तिसृणाम् । सप्ततीनाम् । श्यावः । प्रऽनेता । भुवत् । वसुः । दियानाम् । पतिः ॥ ३७ ॥

**वेङ्कट०** कूलं[4] या प्रयौति सा [5]प्रयियुः कूलंकषा[5] । 'कषन्ती कूलं या अवयौति सा वयियुः[6] । उपसर्गस्य अकारलोपश्छान्दसः । 'पार्श्वेन वसाहोमं प्रयौति' ( तै ६,३,११,१ ) इति ब्राह्मणम् । अत्र यास्कः (४,१५) —'सुवास्तुर्नदी तुग्व तीर्थं भवति तूर्णमेतदायन्ति' । तिसृणाम् सप्ततीनाम् गवां श्याववर्णः[7] ऋषभः प्रणेता अभवत् वासयिता देयानां गवाम् पतिः इति ॥ ३७ ॥

[8]इति षष्ठाष्टके प्रथमाध्याये पञ्चत्रिंशो वर्गः[8] ॥

[२०]

'सोभरिर्ऋषिः । मरुतो देवता । प्रथमाद्ययुजां ककुप् छन्दः, द्वितीयादियुजां सतोबृहती' ।

आ गन्ता मा रिषण्यत प्रस्थावानो मापं स्थाता समन्यवः । स्थिरा चिन्नमयिष्णवः ।१।

आ । गन्त । मा । रिषण्यत । प्रऽस्थावानः । मा । अप । स्थात । सुऽमन्यवः । स्थिरा । चित् । नमयिष्णवः ॥

**वेङ्कट०** आ गच्छत, मा न्यूनीकुरुत[9] हे प्रस्थानशीलाः! । मा गच्छत हे [10]समानमनसः! समानस्तुतिकाः! वा[10] कर्मणा स्थावराणां नमयितारः! ॥ १ ॥

वीळुपविभिर्मरुत ऋभुक्षण आ रुद्रासः सुदीतिभिः ।
इषा नो अद्या गता पुरुस्पृहो यज्ञमा सोभरीयवः ॥ २ ॥

---

१. °र्मा च मूको. २. °टीश्च वि[2]; °वादिश्च अ[1]. ३. °द्रुमान् वि[2]; द्रुमात् अ[1]. ४. कुलं मूको. ५-५. प्रियकुलकषा मूको. ६-६. °षन्ति युयुः मूको. ७. ववर्ण मूको. ८-८. नास्ति मूको. ९. न्यमूनिकु° मूको. १०-१०. °मनसः स्तुतिं का वा मूको.

वीळुपविऽभिः । मरुतः । ऋभुक्षणः । आ । रुद्रासः । सुदीतिऽभिः ।
इषा । नः । अद्य । आ । गत । पुरुऽस्पृहः । यज्ञम् । आ । सोभरीऽयवः ॥ २ ॥

वेङ्कट० दृढपविभिः हे मरुतः! महान्तः! अद्य आ गच्छत रुद्रपुत्राः! सुदीप्तिभिः रथैः अन्नेन सह अस्माकं हे बहुभिः स्पृहणीयाः! यज्ञम् सोभरिं कामयमानाः ॥ २ ॥

विद्मा हि रुद्रियाणां शुष्ममुग्रं मरुतां शिमीवताम् । विष्णोरेषस्य मीळ्हुषाम् ॥ ३ ॥

विद्म । हि । रुद्रियाणाम् । शुष्मम् । उग्रम् । मरुताम् । शिमीऽवताम् । विष्णोः । एषस्य । मीळ्हुषाम् ॥३॥

वेङ्कट० जानीमः हि रुद्रपुत्राणाम् बलम् उद्गूर्णम् मरुताम् कर्मवताम् विष्णोः एषणीयस्य सेक्तॄणामुत्पादयतां यज्ञम् ॥ ३ ॥

वि द्वीपानि पापतन् तिष्ठद् दुच्छुनोभे युजन्त रोदसी ।
प्र धन्वान्यैरत शुभ्रखादयो यदेजथ स्वभानवः ॥ ४ ॥

वि । द्वीपानि । पापतन् । तिष्ठत् । दुच्छुना । उभे इति । युजन्त । रोदसी इति ।
प्र । धन्वानि । ऐरत । शुभ्रऽखादयः । यत् । एजथ । स्वऽभानवः ॥ ४ ॥

वेङ्कट० वि[1] पतन्ति द्वीपान्तराणि[2], [3]तिष्ठन्ति च दुःखेन युक्तानि पतत्सु[3] च मरुत्सु । द्वीपान्तरेभ्यः पतन्तश्च द्यावापृथिव्यौ उभे युञ्जन्ति । दिवि च पृथिव्यां च भवन्ति[4] मरुतः । प्र धन्वानि । हे शुभ्रखादयः! यदा[5] कम्पध्वे स्वदीप्तयः!, तदानीम् प्र ईरयथ धन्वानि प्रति निरुदकान् देशान् प्रति गच्छथेति ॥ ४ ॥

अच्युता चिद् वो अज्मन्ना नानदति पर्वतासो वनस्पतिः । भूमिर्यामेषु रेजते ॥५॥

अच्युता । चित् । वः । अज्मन् । आ । नानदति । पर्वतासः । वनस्पतिः । भूमिः । यामेषु । रेजते ॥ ५ ॥

वेङ्कट० अच्युतान्यपि दृढान्यपि युष्माकं गमने कम्पमानानि शब्दं कुर्वन्ति । शिलोच्चयाः वनस्पतिः चेत्यच्युतानि निर्दिशति । भूमिः च गमनेषु कम्पते ॥ ५ ॥

[6]इति षष्ठाष्टके प्रथमाध्याये षट्त्रिंशो वर्गः[6] ॥

अमाय वो मरुतो यातवे द्यौर्जिहीत उत्तरा बृहत् ।
यत्रा नरो देदिशते तनूष्वा त्वक्षांसि बाह्वोजसः ॥ ६ ॥

अमाय । वः । मरुतः । यातवे । द्यौः । जिहीते । उत्ऽतरा । बृहत् ।
यत्र । नरः । देदिशते । तनूषु । आ । त्वक्षांसि । बाहुऽओजसः ॥ ६ ॥

---

१. नि मूको. २. द्वीपान्यस्त° अ[1]. ३-३. °न्ति ··· प° मूको. ४. भवति मूको. ५. यद्वा मूको. ६-६. नास्ति मूको.

वेङ्कट० बलाय युष्माकम् मरुतः! [१]हिंसित्रे द्यौः गच्छति[१] उद्गततरा बृहती। भवतां बलं [२]दृष्ट्वा स्वस्मात्[२] स्थानात् चलतीति शेषः। परोक्षः[३]—यदा नेतारो मरुत आदिशन्ति, आ दिशन्ति आत्मनोऽङ्गेषु[४] बलानि बाहुबलाः तदानीमिति ॥ ६ ॥

स्वधामनु श्रियं नरो महि त्वेषा अमवन्तो वृषप्सवः । वहन्ते अह्रुतप्सवः ॥७॥

स्वधाम् । अनु । श्रियम् । नरः । महि । त्वेषाः । अमऽवन्तः । वृषऽप्सवः । वहन्ते । अह्रुतऽप्सवः ॥ ७ ॥

वेङ्कट० बलम् श्रियम् चानुभूय दातुः नेतारः महान्तः दीप्ताः बलवन्तः [५]वर्षितृरूपाः गच्छन्ति[५] अनन्तरूपाः ॥ ७ ॥

गोभिर्वाणो अज्यते सोभरीणां रथे कोशे हिरण्यये ।
गोबन्धवः सुजातास इषे भुजे महान्तो नः स्परसे नु ॥ ८ ॥

गोभिः । वाणः । अज्यते । सोभरीणाम् । रथे । कोशे । हिरण्यये ।
गोऽबन्धवः । सुऽजातासः । इषे । भुजे । महान्तः । नः । स्परसे । नु ॥ ८ ॥

वेङ्कट० सोभरीणाम्[६] स्तुतिभिः मरुताम् वाणः [७]वाद्यविशेषः अज्यते[७] रथे हिरण्मये कोशे स्थितानाम्। गोमातरः शोभनजननाः अस्माकं इष्टये अन्नाय च महान्तः अस्माकं पारणाय तारणाय च क्षिप्रं सन्त्विति ॥ ८ ॥

प्रति वो वृषदञ्जयो वृष्णे शर्धाय मारुताय भरध्वम् । हव्या वृषप्रयाव्णे ॥ ९ ॥

प्रति । वः । वृषत्ऽअञ्जयः । वृष्णे । शर्धाय । मारुताय भरध्वम् । हव्या । वृषऽप्रयाव्ने ॥ ९ ॥

वेङ्कट० प्रति भरध्वम् यूयं हे वृष्यमाणहविष्काः! अग्निम् ये अञ्जयन्ति हविर्भिस्ते। [८]'अञ्जन्ति यं दक्षिणतो[८] हविर्भिः' ( ऋ १, ९५,६ ) इत्युक्तम् । वर्षित्रे मारुताय शर्धाय हव्यानि वृषप्रयाव्णे[९] ॥ ९ ॥

वृषणश्वेन मरुतो वृषप्सुना रथेन वृषनाभिना ।
आ श्येनासो न पक्षिणो वृथा नरो हव्या नो वीतये गत ॥ १० ॥

वृषणश्वेन । मरुतः । वृषऽप्सुना । रथेन । वृषऽनाभिना ।
आ । श्येनासः । न । पक्षिणः । वृथा । नरः । हव्या । नः । वीतये । गत ॥ १० ॥

---

१-१. °सित्रेद्गच्छति वि[२]; °सित्रो गच्छ° अ[१]. २-२. दृष्ट्वास्मात् मूको. ३. पारोक्षो वि[२]; पारोक्ष्ये अ[१]. ४. आत्मानमग्रेषु मूको. ५-५. °र्षितॄन् उपाग° अ[१]. ६. सौभरणीयां मूको. ७-७. वाज्यविशेषोज्येथे मूको. ८-८. अञ्जतो यद° वि[२]; अञ्जना येन्द° अ[१]. ९. °प्रणाय मूको.

वेङ्कट० यस्य वर्षितारः[1] अश्वाः स वृषणश्वो रथस्तेन हे मरुतः! वर्षितृरूपेण वृषनाभिना आ गच्छत, श्येनाः इव पक्षिणः अनायासेन अस्माकं[2] हव्यानि [3]नरः! पानाय[3] ॥ १० ॥

[4]इति षष्ठाष्टके प्रथमाध्याये सप्तत्रिंशो वर्गः[4] ॥

समानमञ्ज्येषां वि भ्राजन्ते रुक्मासो अधि बाहुषु । दविद्युतत्यृष्टयः ॥ ११ ॥

समानम् । अञ्जि । एषाम् । वि । भ्राजन्ते । रुक्मासः । अधि । बाहुषु । दविद्युतति । ऋष्टयः ॥ ११ ॥

वेङ्कट० समानः अलङ्कारः एषाम् । बाह्वोरुपरि केयूरादयः वि भ्राजन्ते । दीप्यन्ते चैषाम् आयुधानि ऋष्टयाख्यानि[5] ॥ ११ ॥

ते उग्रासो वृषण उग्रबाहवो नकिष्टनूषु येतिरे ।
स्थिरा धन्वान्यायुधा रथेषु वोऽनीकेष्वधि श्रियः ॥ १२ ॥

ते । उग्रासः । वृषणः । उग्रऽबाहवः । नकिः । तनूषु । येतिरे ।
स्थिरा । धन्वानि । आयुधा । रथेषु । वः । अनीकेषु । अधि । श्रियः ॥ १२ ॥

वेङ्कट० ते उद्गूर्णाः वर्षितारः उद्गूर्णबाहवः न तनूषु सेनासु[6] अल्पबलासु प्रयतन्ते । स्थिराणि[7] धनूंषि आयुधानि च युष्माकम् रथेषु सङ्ग्रामेषु[8] च भवताम्, श्रियः च निहिता इति ॥१२॥

येषामर्णो न सप्रथो नाम त्वेषं शश्वतामेकमिद् भुजे । वयो न पित्र्यं सहः ॥ १३ ॥

येषाम् । अर्णः । न । सऽप्रथः । नाम । त्वेषम् । शश्वताम् । एकम् । इत् । भुजे । वयः । न । पित्र्यम् । सहः ॥

वेङ्कट० येषाम् उदकमिव सर्वतः पृथुतमम् नाम शरीरं दीप्तम् बहूनां यजमानानाम् एकम् एव भोगाय[9] भवति अन्नमिव पित्र्यम् पुत्रस्य, बलं च ॥ १३ ॥

तान् वन्दस्व मरुतस्ताँ उप स्तुहि तेषां हि धुनीनाम् ।
अराणां न चरमस्तदेषां दाना मह्ना तदेषाम् ॥ १४ ॥

तान् । वन्दस्व । मरुतः । तान् । उप । स्तुहि । तेषाम् । हि । धुनीनाम् ।
अराणाम् । न । चरमः । तत् । एषाम् । दाना । मह्ना । तत् । एषाम् ॥ १४ ॥

वेङ्कट० तान् प्रणम मरुतः, तान् उप स्तुहि, [10]तेषाम् कम्पयितृणाम्[10] पुनःपुनरागच्छताम् न कश्चन[11] चरमः[12] भवति । तत् च उपस्तुहि एषाम्[13] महता दानेन[14] सह ॥ १४ ॥

---

१-१. वर्षितारो यस्य अ[1]. २. यास्मा° मूको. ३-३. °नरपा° मूको. ४-४. नास्ति मूको. ५. ऋष्वाख्या° मूको. ६. स्वेना° मूको. ७. स्थिराश्रि मूको. ८. सङ्घातेषु वि[2]. ९. भोगो अ[1]; भोगा वि[2]. १०-१०. °मेकं पितृणां मूको. ११. कथं चन मूको. १२. परमः मूको. १३. एषा १४. दाने मूको.

सुभगः स वं ऊतिष्वास पूर्वासु मरुतो व्युंष्टिषु । यो वा नूनमुतासंति ॥ १५ ॥

सुऽभगः । सः । वः । ऊतिषु । आसं । पूर्वासु । मरुतः । विऽउंष्टिषु । यः । वा । नूनम् । उत । असंति ॥

वेङ्कट० सुधनः सः युष्माकं रक्षणेषु [1]अभूत् मरुतः![1] पूर्वेषु व्युच्छनेषु यः पुरा[2] आढयः, यः वा इदानीम् आढयो भवति ॥ १५ ॥

[3]इति षष्ठाष्टके प्रथमाध्याये अष्टात्रिंशो वर्गः[3] ॥

यस्यं वा यूयं प्रति वाजिनो नर आ हव्या वीतयें गथ ।
अभि ष द्युम्नैरुत वाजंसातिभिः सुम्ना वो धूतयो नशत् ॥ १६ ॥

यस्यं । वा । यूयम् । प्रति । वाजिनः । नरः । आ । हव्या । वीतये । गथ ।
अभि । सः । द्युम्नैः । उत । वाजंसातिऽभिः । सुम्ना । वः । धूतयः । नशत् ॥ १६ ॥

वेङ्कट० यस्य वा यूयम् हविष्मतो हे नेतारः! प्रति आ गच्छथ[4] हव्यानि [5]वीतये, अभि[5] व्याप्नोति सः यशोभिः अपि च अन्नभजनैः सह युष्माकं धनानि हे कम्पयितारः! ॥ १६ ॥

यथा रुद्रस्यं सूनवो दिवो वशन्त्यसुंरस्य वेधसंः । युवानस्तथेदंसत् ॥ १७ ॥

यथा । रुद्रस्यं । सूनवः । दिवः । वशन्ति । असुंरस्य । वेधसंः । युवानः । तथा । इत् । असत् ॥१७॥

वेङ्कट० दीप्तस्य बलवतः रुद्रस्य विधातुः पुत्राः यथा कामयन्ते, युवानः! तथा एव तद्भवति ॥ १७ ॥

ये चार्हन्ति मरुतः सुदानवः स्मन्मीळहुषश्चरंन्ति ये ।
अतश्चिदा न उप वस्यंसा हृदा युवान आ वंवृध्वम् ॥ १८ ॥

ये । च । अर्हन्ति । मरुतः । सुऽदानवः । स्मत् । मीळहुषः । चरंन्ति । ये ।
अतः । चित् । आ । नः । उप । वस्यंसा । हृदा । युवानः । आ । ववृध्वम् ॥ १८ ॥

वेङ्कट० ये च स्तोत्रियम्[6] अर्हन्ति मरुतः शोभनदानाः ये च कल्याणं सेक्तारः चरन्ति । अथ प्रत्यक्षः — ते यूयम् अस्मादन्तरिक्षाद् अस्मान्[7] उप आ वृणीध्वम् वसीयसा हृदयेन सुमत्या सह[8] हे युवानः! ॥ १८ ॥

यूनं ऊ षु नविष्ठया वृष्णंः पावकाँ अभि सोभरे गिरा । गाय गा ईव चर्कृषत् ।१९।

यूनः । ऊँ इति । सु । नविष्ठया । वृष्णंः । पावकान् । अभि । सोभरे । गिरा । गार्य । गाःऽईव । चर्कृषत् ।१९।

---

१-१. °भूतं म° वि[2]; °भूतन्म° अ[1]. २. परा मूको. ३-३. नास्ति मूको. ४. °च्छत मूको.
५-५. चोदयामि मूको. ६. °त्रिकम् मूको. ७. °स्माद् मूको. ८. सहते यूयं मूको.

वेङ्कट० यूनः नवतरया स्तुत्या वर्षितॄणाम् पावकान् हे सोभरे! सुष्ठु अभि गाय, यथा बलीवर्दान् गमयितुं कीनाशः [१]पृथिवीं कृषन्[१] गायति ॥ १९ ॥

साहा ये सन्ति मुष्टिहेव हव्यो विश्वासु पृत्सु होतृषु ।
वृष्णश्चन्द्रान्न सुश्रवस्तमान् गिरा वन्दस्व मरुतो अह ॥ २० ॥

सहाः । ये । सन्ति । मुष्टिहाऽइव । हव्यः । विश्वासु । पृत्ऽसु । होतृषु ।
वृष्णः । चन्द्रान् । न । सुश्रवःऽतमान् । गिरा । वन्दस्व । मरुतः । अह ॥ २० ॥

वेङ्कट० अभिभवितारः ये भवन्ति, वीरः[२] ह्वातव्यः मुष्टिहा इव योद्धा[३], विश्वेषु सङ्ग्रामेषु यजमानेषु च यज्ञेषु सङ्ग्रामेषु च प्रादुर्भवन्ति, तान् पुंस इव ह्लादकान् अतिशयेन कीर्तिमतः[४] स्तुत्या स्तुहि[५] मरुतः एवम्[६] ॥ २० ॥

[७]इति षष्ठाष्टके प्रथमाध्याये एकोनचत्वारिंशो वर्गः[७] ॥

गावश्चिद् घा समन्यवः सजात्येन मरुतः सबन्धवः । रिहते ककुभो मिथः ॥२१॥

गावः । चित् । घ । सऽमन्यवः । सऽजात्येन । मरुतः । सऽबन्धवः । रिहते । ककुभः । मिथः ॥२१॥

वेङ्कट० हे समानमनस्काः! मरुतः! यूयं साजात्येन समानेन जननेन रुद्राद् येऽमी[८] सर्वे जातास्तेन समानबन्धना इतरेतरसङ्गताः गावः इव। अवशिष्टः परोक्षः। सङ्घीभूता दिशो लिहन्ति परस्परम् यथा यवसम्[९] गाव इति ॥ २१ ॥

मर्तश्चिद् वो नृतवो रुक्मवक्षस उप भ्रातृत्वमायति ।
अधि नो गात मरुतः सदा हि व आपित्वमस्ति निध्रुवि ॥ २२ ॥

मर्तः । चित् । वः । नृतवः । रुक्मऽवक्षसः । उप । भ्रातृऽत्वम् । आ । अयति ।
अधि । नः । गात । मरुतः । सदा । हि । वः । आपिऽत्वम् । अस्ति । निऽध्रुवि ॥ २२ ॥

वेङ्कट० मर्तः चित् युष्माकं हे नर्तनशीलाः! रुक्मवक्षसः! उप आ अयति भ्रातृत्वम् [१०]सोभरिः उपागच्छति[१०]। तथा सति अस्मान् अधि[११] गच्छत मरुतः!। सदा हि युष्माकम् ज्ञातेयम् अस्ति [१२]नितरां ध्रुवम्[१२] ॥ २२ ॥

मरुतो मारुतस्य न आ भेषजस्य वहता सुदानवः । यूयं सखायः सप्तयः ॥२३॥

मरुतः । मारुतस्य । नः । आ । भेषजस्य । वहत । सुऽदानवः । यूयम् । सखायः । सप्तयः ॥२३॥

वेङ्कट० हे मरुतः! मरुद्भेषजम् [१३]आ वहत[१३] अस्मान् सुदानाः! यूयम् हे सखायः! सर्पणशीलाः! ॥ २३ ॥

---

१-१. नास्ति अ[१]. २. °रे मूको. ३. योधा मूको. ४. कीर्तितमात मूको. ५. स्तुति मूको. ६. नास्ति वि[२]. ७-७. नास्ति मूको. ८. यमी मूको. ९. बयसं मूको. १०-१०. सौभरिरुपा गच्छन्ति मूको. ११. उपाधि अ[१]. १२-१२. नितराज्ञपम् मूको. १३. अहपत मूको.

याभिः सिन्धुमवथ याभिस्तूर्वथ याभिर्दशस्यथा क्रिविम् ।
मयो नो भूतोतिभिर्मयोभुवः शिवाभिरसचद्विषः ॥ २४ ॥

याभिः । सिन्धुम् । अवथ । याभिः । तूर्वथ । याभिः । दशस्यथ । क्रिविम् ।
मयः । नः । भूत । ऊतिऽभिः । मयःऽभुवः । शिवाभिः । असचऽद्विषः ॥ २४ ॥

**वेङ्कट०** याभिः सिन्धुम् [1]अवथ, धर्षयथ याभिः च शत्रून्[1], याभिः च प्रयच्छथ कूपं तृष्णजे गोतमाय, ताभिः ऊतिभिः[2] अस्माकं सुखं भावयत[3] हे सुखस्य भावयितारः! शिवाभिः हे असमवेतशत्रवः! ॥ २४ ॥

यत् सिन्धौ यदसिक्न्यां यत् समुद्रेषु मरुतः सुबर्हिषः । यत् पर्वतेषु भेषजम् ॥२५॥

यत् । सिन्धौ । यत् । असिक्न्याम् । यत् । समुद्रेषु । मरुतः । सुऽबर्हिषः । यत् । पर्वतेषु । भेषजम् ॥

**वेङ्कट०** यत् सिन्धुनाम्नि, [4]यत् च असिक्न्याम् नद्याम्[4], यत् च समुद्रेषु हे मरुतः! [5]सुयज्ञाः!, यत् च[5] मेघेषु भेषजम् । उत्तरत्र सम्बन्धः ॥ २५ ॥

विश्वं पश्यन्तो बिभृथा तनूष्वा तेना नो अधि वोचत ।
क्षमा रपो मरुत आतुरस्य न इष्कर्ता विह्रुतं पुनः ॥ २६ ॥

विश्वम् । पश्यन्तः । बिभृथ । तनूषु । आ । तेन । नः । अधि । वोचत ।
क्षमा । रपः । मरुतः । आतुरस्य । नः । इष्कर्त । विऽह्रुतम् । पुनरिति ॥ २६ ॥

**वेङ्कट०** तत् विश्वम् भेषजम् अस्मान् पश्यन्तः अस्माकमङ्गेषु धारयथ । तेन अस्मान् अधि वोचत । पृथिव्याम् हे मरुतः! गच्छतु[6] अस्माकम् आतुरस्य [7]पुत्रादेः रपः व्याधिः[7] । निष्कुरुत[8] विह्रुतम् पुनः[9] च न समेहिवति[10] ॥ २६ ॥

[11]इति षष्ठाष्टके प्रथमाध्याये चत्वारिंशो वर्गः[11] ॥

षष्ठाष्टकाद्यमध्यायं व्याचकारेति माधवः ।
बणयस्य कुले जातः सङ्गृह्यार्थान् प्रदर्शयन् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने षष्ठाष्टके प्रथमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये षष्ठाष्टके प्रथमोऽध्यायः ॥



१-१. अवधर्षन्तो याभिश्च शत्रुः वि[1]; अवधर्षयन्तो याभिश्च शत्रु अ[1]. २. कृति° मूको. ३. यतः मूको. ४-४. वद्मासि···न° मूको. ५-५. स्वयज्ञाच्च मूको. ६. गजतु मूको. ७-७. °देवयो व्याधिं मूको. ८. निपुरुत वि[2]; निपूरुत अ[1]. ९. पुरः मूको. १०. समत्वेति मूको. ११-११. नास्ति मूको.

अथ द्वितीयोऽध्यायः ।

वेङ्कट०

'वयमु त्वामपूर्व्य(र्व्य इ')ति व्याचिख्यासति माधवः ।
उष्णिगादिषु वक्तव्यम् आदावेव प्रदर्शयन् ॥ १ ॥

पादे द्वितीये 'ककुभोऽपि वृद्धिं
पुरोऽपि'[1] वृद्धिं प्रवदन्ति युक्ताः ।
छन्दस्सु तेनोष्णिगभूद् द्वितीया
तस्याष्टकौ[2] द्वादशकाश्च पादाः[3] ॥ २ ॥

[4]पादो यदा द्वादशकः[4] [5]पुरस्तात्
तदा भवेत् सा पुरउष्णिगाख्या[5] ।
'अप्स्व॒१॒न्तर्'[6] एतां प्रवदन्ति तां च
ककुप् 'प्र सो अ॑ग्ने'[7] इतीरितार्थैः[8] ॥ ३ ॥

पादो यदैकादशकः पुरस्तात्
मध्ये भवेज्जागतपाद एकः ।
[9]सा स्यात् ककुम्न्यङ्कुशिरास्तृतीयः[9]
पादो भवेत् 'नूनमथे(र्थ)'[10] इ)ति तस्याः ॥ ४ ॥

पादौ यदैकादशिनौ पुरस्तात्
'प्र या घोषे॒ भृग॑वाणे॒ न शोभे॑'[11] ।
[12]षट्को भवेत्तस्य शिरस्तृतीयो[12]
वदन्ति विप्रास्तनुशीर्षनाम्नीम् ॥ ५ ॥

'हरी॒ यस्य॑ सु॒युजा॒ विव्र॑ता वेः'[13]
अस्या मध्ये [14]षट्कपादो निविष्टः[14] ।
पिपीलिकापूर्वकमध्यशब्दं
समस्तमस्याः प्रवदन्ति संज्ञाम् ॥ ६ ॥

---

१. करुहोऽपि वृद्धिः ररापि वि[2]; कुरुहोऽपि वृद्धिःन्तरापि अ[1]. २. °स्याष्टौ वि[2] अ[1]. ३. पादौ वि[2] अ[1]. ४-४. पादे यदा द्वादशकं वि[2] अ[1]. ५-५. °स्तात् सा उष्णि° वि[2] अ[1]. ६. ऋ १,२३,१९. ७. ऋ ८,१९,३०. ८. °रिताख्यः वि[2]; °रिताख्यौ अ[1]. ९-९. तस्याः कुकुन्यङ्कुशिकास्तृ° वि[2] अ[1]. १०. ऋ ८,४६,१५. ११. ऋ १,१२०,५. १२-१२. षट्कोभतस्याश्शिंरसि न था वि[2] अ[1]. १३. ऋ १०,१०५,२. १४-१४. °ढोऽपि नंष्व वि[2] अ[1].

त्रयोऽष्टकाः पञ्चक आद्य एकः
सा 'पितुं नु स्तोषम्'[1] अनुष्टुब्गर्भा ।
'नदं वः'[2] इत्युष्णिगियं चतुर्भिः
पदैरुपेताक्षरसप्तसङ्ख्यैः[3] ॥ ७ ॥

अत्र शाट्यायनकम् —'सा ककुबब्रवीद् बलिष्ठा वाऽहमस्मीति । पराक्रममाणः खलु मेऽक्षराणि समौहीत् पूर्वां मा प्रयुञ्जताम् इति । अथोष्णिगब्रवीत् अथ वै मां पूर्वामाचक्षन्ता इति । तथेति । तस्मिन् समपादयेताम् । पूर्वप्रयोगमन्यावृणीत पूर्वाख्यानमन्या । तस्मादेने एवं प्रयुञ्जते । तस्मादुष्णिक्ककुभावित्याख्यायते' ( तु. जैब्रा ३,२९५ ) ।

चतुष्पदाऽनुष्टुबथो[4] यदा स्युः
पदानि पञ्चापि च पञ्चकानि ।
महापदाद्यां प्रवदन्ति पङ्क्तिं
[5]षष्ठं च षट्कं 'रोचत उपाके'†[5] ॥ ८ ॥

कृतिराद्यौ जागतावष्टकोऽन्ते
'मा कस्मै धातमभ्यमित्रिणे नः'[6] ।
स्यादष्टको मध्यमश्चेत[7] तदा स्यात्
'पर्यू षु प्र(प्र'[8] इ)ति पिपीलिकमध्या ॥ ९ ॥

मध्ये भवेज्जागतपाद एकः
पूर्वोत्तरौ नवकौ चापि पादौ ।
सा काविराण्णाम भवेदनुष्टुप्
सैषा 'ता विद्वांसा हवामहे वाम्'[9] ॥ १० ॥

नववैराजत्रयोदशकैः युता[10]
तां नष्टरूपां कवयो वदन्ति ।
'वि पृच्छामि पाक्या३ न देवान्'[11]
पादैर्विराट् स्याद् दशकैस्त्रिभिश्च ॥ ११ ॥

इयं 'पिबा सोमम्'[12] इतीरितायैः
यद्वा स्युरेकादशकास्त्रयोऽपि ।

---

१. ऋ १,१८७,१. २. ऋ ८,६९,२. ३. पादै° वि[२]. ४. °ष्पदानुष्णिगथो वि[२]; °ष्पादानुष्णिगिति अ[१]. ५-५. षट्कं षट्को रोचत उदाके अ[१]; षष्ठं च रोचत उपाके पदम् वेंकम. † ऋ ४,१०,५. ६. ऋ १,१२०,८. ७-७. °ध्यतश्चेत् वि[२] अ[१]. ८. ऋ ९,११०,१. ९. ऋ १,१२०,३. १०. नास्ति वि[२] अ[१]. ११. ऋ १,१२०,४. १२. ऋ ८,९५,३.

'अ॒ग्निं न॒रो दीधि॑तिभिर॒रण्यो॑ः'[1]
'दु॒ही॒यन् मि॒त्रधि॑तये यु॒वाकु॑'[2] ॥ १२ ॥

[ २१ ]

[3]सोभरिः काण्व ऋषिः । इन्द्रो देवता, अन्त्ययोश्चित्रः । प्रगाथश्छन्दः
( =विषमाः ककुभः, समाः सतोबृहत्यः )[3] ।

व॒यमु॑ त्वाम॑पूर्व्य स्थू॒रं न कच्चि॒द् भर॑न्तोऽव॒स्यव॑ः । वाजे॑ चि॒त्रं ह॑वामहे ॥१॥
व॒यम् । ऊँ इति॑ । त्वाम् । अ॒पू॒र्व्य॒ । स्थू॒रम् । न । कत् । चि॒त् । भर॑न्तः । अ॒व॒स्यव॑ः ।
वाजे॑ । चि॒त्रम् । ह॒वा॒म॒हे॒ ॥ १ ॥

**वेङ्कट०** सोभरिः[4] । वयम् उ त्वाम् हे अभिनव ! स्थूलम् इव [5]कञ्चित् मानवं[5] व्रीह्यादिभिर्हि पूरयन्तः अवस्यवः सङ्ग्रामे चित्रम् हवामहे ॥ १ ॥

उप॑ त्वा॒ कर्म॑न्नू॒तये॒ स नो॒ युवो॒ग्रश्च॑क्राम॒ यो धृ॒षत् ।
त्वामिद्ध्य॑वि॒तारं॑ ववृ॒महे॒ सखा॑य इन्द्र सान॒सिम् ॥ २ ॥
उप॑ । त्वा॒ । कर्म॑न् । ऊ॒तये॑ । सः । न॒ः । युवा॑ । उ॒ग्रः । च॒क्रा॒म॒ । यः । धृ॒षत् ।
त्वाम् । इत् । हि । अ॒वि॒तार॑म् । व॒वृ॒महे॑ । सखा॑यः । इन्द्र॒ । सा॒न॒सिम् ॥ २ ॥

**वेङ्कट०** उप गच्छामः त्वां कर्मणि रक्षणाय । सः अस्मान् इन्द्रः युवा उद्गूर्णः चक्राम अस्मान् प्रति गच्छति, यः अभिभवतु[6] शत्रुम् । त्वाम् एव हि वयं रक्षितारम् वृणीमहे सखायः इन्द्र![7] भजनीयम् ॥ २ ॥

आ या॑ही॒म इन्द॒वोऽश्व॑पते॒ गोप॑त॒ उर्व॑रापते । सोमं॑ सोमपते पिब ॥ ३ ॥
आ । या॒हि॒ । इ॒मे । इन्द॑वः । अश्व॑ऽपते । गोऽप॑ते । उर्व॑राऽपते ।
सोम॑म् । सो॒म॒ऽप॒ते॒ । पि॒ब॒ ॥ ३ ॥

**वेङ्कट०** आ याहि इमे सोमाः त्वदर्थाः हे अश्वादीनां स्वामिन्! । सोमम् सोमपते ! पिब च ॥ ३ ॥

व॒यं हि त्वा॒ बन्धु॑मन्तमब॒न्धवो॒ विप्रा॑स इन्द्र येमि॒म ।
या ते॒ धामा॑नि वृषभ॒ तेभि॒रा ग॑हि॒ विश्वे॑भि॒ः सोम॑पीतये ॥ ४ ॥
व॒यम् । हि । त्वा॒ । बन्धु॑ऽमन्तम् । अ॒ब॒न्धव॑ः । विप्रा॑सः । इन्द्र॒ । ये॒मि॒म ।
या । ते॒ । धामा॑नि । वृ॒ष॒भ॒ । तेभि॑ः । आ । ग॒हि॒ । विश्वे॑भिः । सोम॑ऽपीतये ॥ ४ ॥

---

१. ऋ ७,१,१. २. ऋ १,१२०,९. ३-३. नास्ति मूको. ४. सोभरिं वि[2]; सोहरि मूको.
५-५ काञ्चित् मानसं मूको. ६. °वति अ[1]. ७. इन्द्रम् मूको.

**वेङ्कट०** वयम् हि त्वां बन्धुभिः देवैः [1]तद्वन्तम् अबन्धवः[1] मेधाविनः इन्द्र! नियच्छामः[2]। तथा सति यानि तव शरीराणि हे वर्षितः! तैः आ गच्छ सर्वैः सोमपानाय ॥ ४ ॥

सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे । अभि त्वामिन्द्र नोनुमः ॥५॥

सीदन्तः । ते । वयः । यथा । गोऽश्रीते । मधौ । मदिरे । विवक्षणे । अभि । त्वाम् । इन्द्र । नोनुमः ॥ ५ ॥

**वेङ्कट०** पक्षिण इव त्वदीये[3] दध्ना पयसा च श्रिते सोमे मदकरे वहनशीले सीदन्तः वयम् अभि स्तुमः त्वाम्[4] इन्द्र! ॥ ५ ॥

[5]इति षष्ठाष्टके द्वितीयाध्याये प्रथमो वर्गः[5] ॥

अच्छा च त्वैना नमसा वदामसि किं मुहुश्चिद्वि दीधयः ।
सन्ति कामासो हरिवो ददिष्ट्वं स्मो वयं सन्ति नो धियः ॥ ६ ॥

अच्छ । च । त्वा । एना । नमसा । वदामसि । किम् । मुहुः । चित् । वि । दीधयः ।
सन्ति । कामासः । हरिऽवः । ददिः । त्वम् । स्मः । वयम् । सन्ति । नः । धियः ॥ ६ ॥

**वेङ्कट०** अपि च त्वाम् अनेन हविषा वदामः। किम् त्वं[6] मुहुर्मुहुः चिन्तयसि। भवन्ति अस्माकं [7]कामाः हरिवः!। त्वम् च ददिः[7]। भवामः वयम् त्वत्सन्निधौ। भवन्ति चास्माकं कर्माणि ॥ ६ ॥

नूत्ना इदिन्द्र ते वयमूती अभूम नहि नू ते अद्रिवः । विद्मा पुरा परीणसः ॥ ७ ॥

नूत्नाः । इत् । इन्द्र । ते । वयम् । ऊती । अभूम । नहि । नु । ते । अद्रिऽवः । विद्म । पुरा । परीणसः ॥ ७ ॥

**वेङ्कट०** नूतनाः एव वयम् इन्द्र! तव रक्षणे भवामः। नहि पुरा त्वां[8] महान्तम् जानीमः हे वज्रिन्! सम्प्रति त्वां जानन्तो रक्षिता इति ॥ ७ ॥

विद्मा सखित्वमुत शूर भोज्यमा ते ता वज्रिन्नीमहे ।
उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति ॥ ८ ॥

विद्म । सखिऽत्वम् । उत । शूर । भोज्यम् । आ । ते । ता । वज्रिन् । ईमहे ।
[9]उतो इति । समस्मिन् । आ । शिशीहि । नः । वसो इति[9] । वाजे । सुऽशिप्र । गोऽमति ॥८॥

**वेङ्कट०** जानीमः सखित्वम्, अपि च शूर! तव भोज्यम् धनम्। तदुभयम् वज्रिन्! आभिमुख्येन याचामहे। तथा सति अस्मान् सर्वस्मिन् गोमति अन्ने[10] [11]सम् आ शिशीहि हे वासयितः![11] [12]सुहनो! प्रदाय[12] तत्तीक्ष्णीकुर्विति[13] ॥ ८ ॥

---

१-१. °न्त…बन्ध° मूको. २. यच्छा° वि[2]. ३. °दीयेन अ[1]. ४. श्रितं मूको. ५-५. नास्ति मूको. ६. तु मूको. ७. °मा हरिग्व° वि[2]; °मा … द° अ[1]. ८. त्वा मूको. ९-९. तु. या ५,२३. १०. अन्न मूको. ११-११. °शीविहा वासवितः मूको. १२. °नोऽप्रदायां मूको. १३. °कुर्वति मूको.

**यो न॑ इ॒दमि॑दं पु॒रा प्र वस्य॑ आनि॒नाय॒ तमु॑ वः स्तुषे । सखा॑य॒ इन्द्र॑मू॒तये॑ ॥९॥**

यः। न॒ः। इ॒दम्ऽइ॑दम्। पु॒रा। प्र। वस्य॑ः। आ॒ऽनि॒नाय॑। तम्। ऊँ॒ इति॑। व॒ः। स्तु॒षे॒। सखा॑यः। इन्द्र॑म्। ऊ॒तये॑ ॥ ९ ॥

**वेङ्कट०** यः अस्माकम् इदम् च इदम् च वसीयः पुरा प्र आनिनाय, तम् एव युष्मदर्थं स्तौमि सखायः! इन्द्रम् रक्षणाय ॥ ९ ॥

**हर्य॑श्वं॒ सत्प॑तिं चर्ष॒णीसहं॒ स हि ष्मा॒ यो अम॑न्दत ।**
**आ तु नः॒ स व॑यति॒ गव्य॒मश्व्यं॑ स्तो॒तृभ्यो॑ म॒घवा॑ श॒तम् ॥ १० ॥**

हरि॑ऽअश्वम् । सत्ऽप॑तिम् । च॒र्ष॒णि॒ऽसह॑म् । सः । हि । स्म॒ । यः । अम॑न्दत ।
आ । तु । न॒ः । सः । व॒य॒ति॒ । गव्य॑म् । अश्व्य॑म् । स्तो॒तृऽभ्य॑ः । म॒घऽवा॑ । श॒तम् ॥ १० ॥

**वेङ्कट०** हरिताश्वम् सत्पतिम्[१] मनुष्याणाम् अभिभवितारम् सः हि स्म[२] स्तौति, यः तृप्तो भवति । स्तोता लब्धधनो हृष्यतीत्यर्थः । एवं सति अस्मभ्यम् सः इन्द्रः आ प्रापयति गवाश्वसङ्घम्[३] अनेकम् मघवा । तत एनं वयं च स्तुम इति ॥ १० ॥

[४]इति षष्ठाष्टके द्वितीयाध्याये द्वितीयो वर्गः[४] ॥

**त्वया॑ ह स्विद् यु॒जा व॒यं प्रति॑ श्व॒सन्तं॑ वृषभ ब्रुवीमहि । सं॒स्थे जन॑स्य॒ गोम॑तः ॥११॥**

त्वया॑ । ह॒ । स्वि॒त् । यु॒जा । व॒यम् । प्रति॑ । श्व॒सन्त॑म् । वृ॒ष॒भ॒ । ब्रु॒वी॒म॒हि॒ । स॒म्ऽस्थे । जन॑स्य । गोऽम॑तः ॥११

**वेङ्कट०** त्वया ह अस्मिन् सहायेन[५] वयम् प्रति ब्रुवीमहि हे वर्षितः! अस्मान् प्रति निश्वसन्तं शत्रुम् संस्थाने गोमतः जनस्य युद्धे ॥ ११ ॥

**जये॑म क॒ारे पु॑रुहूत क॒ारिणो॒ऽभि ति॑ष्ठेम दू॒ढ्य॑ः ।**
**नृभि॑र्वृ॒त्रं ह॒न्याम॑ शूशु॒याम॒ चावे॑रिन्द्र॒ प्र णो॒ धिय॑ः ॥ १२ ॥**

जये॑म । क॒ारे । पु॒रु॒ऽहू॒त॒ । क॒ारिण॑ः । अ॒भि । ति॒ष्ठे॒म॒ । दुः॒ऽध्य॑ः ।
नृऽभि॑ः । वृ॒त्रम् । ह॒न्याम॑ । शू॒शु॒याम॑ । च॒ । अवे॑ः । इन्द्र॒ । प्र । न॒ः । धिय॑ः ॥ १२ ॥

**वेङ्कट०** जयेम युद्धे पुरुहूत! [६]कर्तॄन् । अभि[६] तिष्ठेम पापबुद्धीन्[७] । नरैः[८] शत्रुम्[९] हन्याम, वर्धेमहि[१०] च । अस्माकम् प्र रक्ष कर्माणि इन्द्र! ॥ १२ ॥

**अ॒भ्रा॒तृ॒व्यो अ॒ना त्वमना॑पिरिन्द्र ज॒नुषा॑ स॒नाद॑सि । यु॒धेदा॑पि॒त्वमि॑च्छसे ॥१३॥**

---

१. °तिः मूको. २. ष मूको. ३. गवां च स° मूको. ४-४. नास्ति मूको. ५. °ये वि[२]. ६-६. कर्तॄनभि मूको. ७. °बुद्धिम् अ[१]. ८. भगैः मूको. ९. °त्रून् अ[१]. १०. हर्षेमहि वि[२]; हे ऋद्धेमहि अ[१].

अभ्रातृव्यः । अना । त्वम् । अनापिः । इन्द्र । जनुषा । सनात् । असि ।
युधा । इत् । आपिऽत्वम् । इच्छसे ॥ १३ ॥

वेङ्कट० शत्रुवर्जितः नेतृवर्जितः च त्वम् अबन्धुः च इन्द्र! जन्मनैव चिरादेव भवसि। युद्धेनैव त्वं बान्धवम् इच्छसि। युद्धं कुर्वन्नेव स्तोतुः सखा भवसीति ॥ १३ ॥

नकीं रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः ।
यदा कृणोषि नदनुं समूहस्यादित् पितेव हूयसे ॥ १४ ॥

नकिः । रेवन्तम् । सख्याय । विन्दसे । पीयन्ति । ते । सुराश्वः ।
यदा । कृणोषि । नदनुम् । सम् । ऊहसि । आत् । इत् । पिताऽइव । हूयसे ॥ १४ ॥

वेङ्कट० न त्वम् धनवन्तम्[1] [2]सख्याय आश्रयसि[2]। पीयन्ति त्वां सुरया वृद्धाः नास्तिकाः। यदा कृणोषि भावयसि स्तोतारम्, तदानीं तस्मै धनम् सम् ऊहसि। अनन्तरमेव तेन स्तुतिभिः पिता इव हूयसे ॥ १४ ॥

मा ते अमाजुरो यथा मूरास इन्द्र सख्ये त्वावतः । नि षदाम सचा सुते ॥१५॥

मा । ते । अमाऽजुरः । यथा । मूरासः । इन्द्र । सख्ये । त्वाऽवतः । नि । सदाम । सचा । सुते ॥ १५ ॥

वेङ्कट० मा भूम तव स्वभूता वयम् यथा अमाजुरः भवन्ति मूढाः इन्द्र! त्वावतः[3] सख्ये, तथा वयं मा भूम। असुन्वन्तो ये गृहे पुत्रैः पौत्रैश्च सह जीर्णा भवन्ति ते अमाजुरः। वयं तु ऋत्विग्भिः सह सुते सोमे नि सदाम ॥ १५ ॥

[4]इति षष्ठाष्टके द्वितीयाध्याये तृतीयो वर्गः[4] ॥

मा ते गोदत्र निरराम राधस इन्द्र मा ते गृहामहि ।
दृळ्हा चिदर्यः प्र मृशाभ्या भर न ते दामान आदभे ॥ १६ ॥

मा । ते । गोऽदत्र । निः । अराम । राधसः । इन्द्र । मा । ते । गृहामहि ।
दृळ्हा । चित् । अर्यः । प्र । मृश । अभि । आ । भर । न । ते । दामानः । आऽदभे ॥१६॥

वेङ्कट० [5]†मा ते स्वभूता वयं हे गवां दातः!† धनात् निः गमाम, सर्वदा धनिनो भवेम। इन्द्र![5] मा ते स्वभूता वयं[6] कस्माच्चित् प्रयच्छतो धनं गृह्णीमः, अपितु त्वत्त एव गृह्णीमः। दृढान्यपि अर्यः[7] धनानि हस्तेन प्र मृश, अभि आ हर च तानि। न ते दामानः दानानि[8] [9]परैः आदम्भितुं[9] शक्यन्ते महान्ति ॥ १६ ॥

१. अन्यवाच्यम् मूको. २-२. सख्याचाश्र[?] मूको. ३. तावतः मूको. ४-४. नास्ति मूको. ५-५. नास्ति वि[२]. † मान्त मान्त स्वभूता वयं हे भगवान् धातः अ[१]. ६. यं वि[२]; नास्ति अ[१]. ७. नास्ति मूको. ८. दत्तानि मूको. ९-९. परोरादंहितं वि[२]; परोरादंहितुं अ[१].

इन्द्रो॑ वा॒ घेदिय॑न्म॒घं सर॑स्वती वा सु॒भगा॑ द॒दिर्वसु॑ । त्वं वा॑ चित्र दा॒शुषे॑ ॥ १७॥

इन्द्रः॑ । वा॒ । घ॒ । इत् । इय॑त् । म॒घम् । सर॑स्वती । वा॒ । सु॒ऽभगा॑ । द॒दिः । वसु॑ । त्वम् । वा॒ । चि॒त्र । दा॒शुषे॑ ॥

**वेङ्कट०** कात्यायनः—'अन्त्ये द्वृचे चित्रस्य दानस्तुतिः' ( ऋअ २,८२१ ) इति । इन्द्रः वा खलु एतावद् धनम् प्रयच्छेत्, सरस्वती वा सुधना ददिः वसु भवति त्वम् वा हे चित्र! दाशुषे[1] । इन्द्रस्य दाश्वान् सम्प्रदानं सरस्वत्यास्तीरवासिनश्चित्रस्य भिक्षमाणः ॥ १७ ॥

चित्र इद् राजा॑ राज॒का इद॑न्य॒के य॒के सर॑स्वती॒मनु॑ ।
प॒र्जन्य॑ इव त॒तन॒द्धि वृ॒ष्ट्या स॒हस्र॑म॒युता॒ दद॑त् ॥ १८ ॥

चित्रः॑ । इत् । राजा॑ । रा॒ज॒काः । इत् । अ॒न्य॒के । य॒के । सर॑स्वतीम् । अनु॑ ।
प॒र्जन्यः॑ऽइव । त॒तन॑त् । हि । वृ॒ष्ट्या । स॒हस्र॑म् । अ॒युता॑ । दद॑त् ॥ १८ ॥

**वेङ्कट०** चित्रः एव राजा राजकाः एव अन्यके[2] अल्पका इत्यर्थः, यके सरस्वत्यास्तीरे वर्तन्ते । अयम् हि चित्रः सर्वानेव भिक्षमाणान्, पर्जन्यः पृथिवीम् इव वृष्टिभिः, धनैः तनोति सहस्रम् अयुतानि च प्रयच्छन्निति ॥ १८ ॥

[3]इति षष्ठाष्टके द्वितीयाध्याये चतुर्थो वर्गः[3] ॥

[ २२ ]

[1]सोभरिः काण्व ऋषिः । अश्विनौ देवता । आद्याः षट् प्रगाथाः ( =विषमा बृहत्यः, समाः सतोबृहत्यः ), सप्तमी बृहती, अष्टमी अनुष्टुप्, एकादशी ककुप्, द्वादशी मध्येज्योतिः, शिष्टाः प्रगाथाः ( =विषमाः ककुभः, समाः सतोबृहत्यः )[1] ।

ओ त्यम॑ह्व॒ आ रथ॑म॒द्या दंसि॑ष्ठमू॒तये॑ ।
यम॑श्विना सुहवा रुद्रवर्तनी॒ आ सू॒र्यायै॑ त॒स्थथुः॑ ॥ १ ॥

ओ इति॑ । त्यम् । अ॒ह्वे॒ । आ । रथ॑म् । अ॒द्य । दंसि॑ष्ठम् । ऊ॒तये॑ ।
यम् । अ॒श्वि॒ना॒ । सु॒ऽह॒वा॒ । रु॒द्र॒व॒र्त॒नी॒ इति॑ रुद्रऽवर्तनी । आ । सू॒र्यायै॑ । त॒स्थथुः॑ ॥ १ ॥

**वेङ्कट०** आ हुवे तम् रथम् अद्य[4] अत्यन्तदर्शनीयम् रक्षणाय, यम्[5] हे अश्विनौ! स्वाह्वानौ![6] सङ्ग्रामे रोदनशीलमार्गौ![7] यद्वा स्तूयमानमार्गौ! आ तस्थथुः सूर्यां स्वयंवरे तां वरयितुम् ॥ १ ॥

पू॒र्वा॒पुषं॑ सु॒हवं॑ पुरु॒स्पृहं॑ भु॒ज्युं वाजे॑षु॒ पूर्व्य॑म् ।
स॒च॒नाव॑न्तं सुम॒तिभिः॑ सोभरे॒ विद्वे॑षसमने॒हस॑म् ॥ २ ॥

---

१. =भिक्षमाणायेत्यभिमतं द्र. २. स्वके मूको. ३-३. नास्ति मूको. ४. अथ मूको. ५. वयं मूको. ६. °नेन मूको. ७. °शीले मा° मूको.

पूर्वऽआपुषम् । सुऽहवम् । पुरुऽस्पृहम् । भुज्युम् । वाजेषु । पूर्व्यम् ।
सचनाऽवन्तम् । सुमतिऽभिः । सोभरे । विऽद्वेषसम् । अनेहसम् ॥ २ ॥

वेङ्कट० पूर्वेषां स्तोतॄणाम् आपोषकम् स्वाह्वानम् बहुभिः स्पृहणीयम् रक्षकम् सङ्ग्रामेषु अग्रतो गन्तारम् भजनवन्तम् स्तुतिभिः सोभरे! कल्याणीभिः स्तुहि शत्रूणां विद्वेष्टारम् अनुपद्रवम् अश्विनोः रथम् ॥ २ ॥

इह त्या पुरुभूतमा देवा नमोभिरश्विना ।
अर्वाचीना स्ववसे करामहे गन्तारा दाशुषो गृहम् ॥ ३ ॥

इह । त्या । पुरुऽभूतमा । देवा । नमःऽभिः । अश्विना ।
अर्वाचीना । सु । अवसे । करामहे । गन्तारा । दाशुषः । गृहम् ॥ ३ ॥

वेङ्कट० इह तौ अत्यन्तं बहूनां भावयितारौ देवौ हविर्भिः अश्विनौ अभिमुखौ कुर्मः[1] शोभनाय रक्षणाय गन्तारौ यजमानस्य गृहम् ॥ ३ ॥

युवो रथस्य परि चक्रमीयत ईर्मान्यद् वामिषण्यति ।
अस्माँ अच्छा सुमतिर्वां शुभस्पती आ धेनुरिव धावतु ॥ ४ ॥

युवोः । रथस्य । परि । चक्रम् । ईयते । ईर्मा । अन्यत् । वाम् । इषण्यति ।
अस्मान् । अच्छ । सुऽमतिः । वाम् । शुभः । पती इति । आ । धेनुःऽइव । धावतु ॥ ४ ॥

वेङ्कट० युवयोः रथस्य एकम् चक्रम् [2]परितो द्यां[2] गच्छति । अन्यत् तु चक्रम् अवस्थितं प्रेरकौ वाम् इच्छति । 'न्यघ्न्यस्य मूर्धनि' ( ऋ १,३०,१९ ) इत्युक्तम् । अस्मान् अभि युवयोः सुमतिः हे शुभः पती! धेनुः इव आ धावतु ॥ ४ ॥

रथो यो वां त्रिवन्धुरो हिरण्याभीशुरश्विना ।
परि द्यावापृथिवी भूषति श्रुतस्तेन नासत्या गतम् ॥ ५ ॥

रथः । यः । वाम् । त्रिऽवन्धुरः । हिरण्यऽअभीशुः । अश्विना ।
परि । द्यावापृथिवी इति । भूषति । श्रुतः । तेन । नासत्या । आ । गतम् ॥ ५ ॥

वेङ्कट० [3]यः वाम् रथः[3] त्रिबन्धुरः [4]हिरण्मयाश्वादिरज्जुः[4] हे अश्विनौ! परिभवति द्यावापृथिव्यौ विश्रुतः । तेन हे नासत्यौ! आ गच्छतम् ॥ ५ ॥

[1]इति षष्ठाष्टके द्वितीयाध्याये पञ्चमो वर्गः[1] ॥

दशस्यन्ता मनवे पूर्व्यं दिवि यवं वृकेण कर्षथः ।
ता वामद्य सुमतिभिः शुभस्पती अश्विना प्र स्तुवीमहि ॥ ६ ॥

---

१. वर्मै मूको. २-२. °तोन्यां मूको. ३-३. नास्ति मूको. ४. हिर नृणयाश्वादिरज्जु मूको.

दशस्यन्ता । मनवे । पूर्व्यम् । दिवि । यवम् । वृकेण । कर्षथः ।
ता । वाम् । अद्य । सुमतिऽभिः । शुभः । पती इति । अश्विना । प्र । स्तुवीमहि ॥ ६ ॥

**वेङ्कट०** प्रयच्छन्तौ मनवे राज्ञे प्रत्नम् दिवि स्थितम् उदकम् पुनश्च यवम् वृकेण लाङ्गलेन कर्षथः। तौ वाम् अद्य[1] स्तुतिभिः शुभः पती! वयम् अश्विनौ! प्र स्तुवीमहि ॥ ६ ॥

उप नो वाजिनीवसू यातमृतस्य पथिभिः ।
येभिस्तृक्षिं वृषणा त्रासदस्यवं महे क्षत्राय जिन्वथः ॥ ७ ॥

उप । नः । वाजिनीवसू इति वाजिनीऽवसू । यातम् । ऋतस्य । पथिऽभिः ।
येभिः । तृक्षिम् । वृषणा । त्रासदस्यवम् । महे । क्षत्राय जिन्वथः ॥ ७ ॥

**वेङ्कट०** उप[2] गच्छतम् अस्मान् हे अन्नधनौ! यज्ञस्य मार्गैः, यैः तृक्षिम् त्रसदस्योः पुत्रम् हे वृषणौ! महते धनाय प्रीणयथः ॥ ७ ॥

अयं वामद्रिभिः सुतः सोमो नरा वृषण्वसू ।
आ यातं सोमपीतये पिबतं दाशुषो गृहे ॥ ८ ॥

अयम् । वाम् । अद्रिऽभिः । सुतः । सोमः । नरा । वृषण्वसू इति वृषण्ऽवसू ।
आ । यातम् । सोमऽपीतये । पिबतम् । दाशुषः । गृहे ॥ ८ ॥

**वेङ्कट०** अयम् वाम् ग्रावभिः सुतः सोमः हे नेतारौ! वृष्यमाणधनौ!। आ यातम् इति स्पष्टम् ॥ ८ ॥

आ हि रुहतमश्विना रथे कोशे हिरण्यये वृषण्वसू । युञ्जाथां पीवरीरिषः ॥ ९ ॥

आ । हि । रुहतम् । अश्विना । रथे । कोशे । हिरण्यये । वृषण्वसू इति वृषण्ऽवसू ।
युञ्जाथाम् । पीवरीः । इषः ॥ ९ ॥

**वेङ्कट०** आ रुहतम् हे अश्विनौ! हिरण्मये कोशे रथे हे वृष्यमाणधनौ!। स्थूलानि अन्नानि अस्मासु योजयतम् ततः ॥ ९ ॥

याभिः पक्थमवथो याभिरध्रिगुं याभिर्बभ्रुं विजोषसम् ।
ताभिर्नो मक्षू तूयमश्विना गतं भिषज्यतं यदातुरम् ॥ १० ॥

याभिः । पक्थम् । अवथः । याभिः । अध्रिऽगुम् । याभिः । बभ्रुम् । विऽजोषसम् ।
ताभिः । नः । मक्षु । तूयम् । अश्विना । आ । गतम् । भिषज्यतम् । यत् । आतुरम् ॥ १० ॥

**वेङ्कट०** याभिः पक्थनामानम् अवथः, याभिः च अध्रिगुम् नाम, याभिः च बभ्रुम् विजोषसम्[3],

---

१. अन्यं मूको. २. अप मूको. ३. तु. वैप१,२८४३a; °सम् च मूको.

ताभिः अस्मान् ऊतिभिः क्षिप्रम् तूर्णम् अश्विनौ! आ गच्छतम्। भिषज्यतम् आतुरम् पुत्रादिम् अस्माकम् ॥ १० ॥

[1]इति षष्ठाष्टके द्वितीयाध्याये षष्ठो वर्गः[1] ॥

यदध्रिगावो अध्रिगू इदा चिदह्नो अश्विना हवामहे। वयं गीर्भिर्विपन्यवः ॥११॥

यत्। अध्रिऽगावः। अध्रिगू इत्यध्रिऽगू। इदा। चित्। अह्नः। अश्विना। हवामहे।
वयम्। गीःऽभिः। विपन्यवः ॥ ११ ॥

**वेङ्कट०** यत् वयम् अधृतगमनाः कर्मसु त्वरमाणाः अधृतगमनौ इदानीम् अह्नि[2] अश्विनौ हवामहे वयम् गीर्भिः मेधाविनः। उत्तरत्र सम्बन्धः ॥ ११ ॥

ताभिरा यातं वृषणोप मे हवं विश्वप्सुं विश्ववार्यम्।
इषा मंहिष्ठा पुरुभूतमा नरा याभिः क्रिविं वावृधुस्ताभिरा गतम् ॥ १२ ॥

ताभिः। आ। यातम्। वृषणा। उप। मे। हवम्। विश्वऽप्सुम्। विश्वऽवार्यम्।
इषा। मंहिष्ठा। पुरुऽभूतमा। नरा। याभिः। क्रिविम्। ववृधुः। ताभिः। आ। गतम् ॥१२॥

**वेङ्कट०** ताभिः ऊतिभिः उप आ यातम् हे वृषणौ! मम स्तोत्रम् विश्वरूपम् विश्वैर्वरणीयम्। इच्छन्तौ हवींषि दातृतमौ पुरुधाभवन्तौ नरौ!। याभिः [3]कूपम् ऊतिभिः[3] उदकानि वावृधुः, ताभिः आ गच्छतम्। कूपपतितो वन्दनः[4] अद्भिः कूपं पूरयित्वोत्थापितः[5] त्रितो वेति ॥ १२ ॥

ताविदा चिदहानां तावश्विना वन्दमान उप ब्रुवे। ता ऊ नमोभिरीमहे ॥१३॥

तौ। इदा। चित्। अहानाम्। तौ। अश्विना। वन्दमानः। उप। ब्रुवे।
तौ। ऊँ इति। नमःऽभिः। ईमहे ॥ १३ ॥

**वेङ्कट०** तौ इदानीम् अह्नां प्रातः अश्विनौ[6] प्रणमन् स्तौमि। तौ एव हविर्भिः याचामहे ॥ १३ ॥

ताविद् दोषा ता उषसि शुभस्पती ता यामन् रुद्रवर्तनी।
मा नो मर्ताय रिपवे वाजिनीवसू परो रुद्रावति ख्यतम् ॥ १४ ॥

तौ। इत्। दोषा। तौ। उषसि। शुभः। पती इति। ता। यामन्। रुद्रवर्तनी इति रुद्रऽवर्तनी।
मा। नः। मर्ताय। रिपवे। वाजिनीवसू इति वाजिनीऽवसू। परः। रुद्रौ। अति। ख्यतम् ॥

**वेङ्कट०** तौ एव रात्रौ तौ उषसि उदकपती तौ अहनि स्तूयमानमार्गौ ह्वयामः[7]। तथा सति मा अस्मान् मर्ताय रिपवे हे अन्नधनौ! परस्तात् रुद्रौ! अति ख्यतम् मा परावृतम् शत्रवे इति ॥ १४ ॥

---

१-१. नास्ति मूको. २ अह्नो मूको ३-३. 'मूर्ति' मूको. ४. तु. ऋ १,११२,५; वद' मूको. ५. 'त्वोन्वावितः मूको. ६. अश्वौ मूको. ७. धयामः मूको.

आ सुग्म्याय सुग्म्यं प्राता रथेनाश्विना वा सक्षणी । हुवे पितेव सोभरी ॥१५॥

आ । सुग्म्याय । सुग्म्यम् । प्रातरिति । रथेन । अश्विना । वा । सक्षणी इति । हुवे । पिताऽइव । सोभरी ॥

वेङ्कट० आ वहतम् सुखार्हाय सुखम् प्रातः [1]रथेन अश्विनौ[1] वा सहनशीलौ[2] । तावहं[3] ह्वयामि सोभरी, यथा मम पिता तौ आजुहावेति ॥ १५ ॥

[4]इति षष्ठाष्टके द्वितीयाध्याये सप्तमो वर्गः[4] ॥

मनोजवसा वृषणा मदच्युता मक्षुंगमाभिरूतिभिः ।
आरात्ताच्चिद् भूतमस्मे अवसे पूर्वीभिः पुरुभोजसा ॥ १६ ॥

मनःऽजवसा । वृषणा । मदऽच्युता । मक्षुम्ऽगमाभिः । ऊतिऽभिः ।
आरात्तात् । चित् । भूतम् । अस्मे इति । अवसे । पूर्वीभिः । पुरुऽभोजसा ॥ १६ ॥

वेङ्कट० हे मनोवेगौ! वर्षितारौ! मदं प्रति गन्तारौ! शीघ्रं गच्छद्भिः पालनैः अन्तिके भवतम् अस्माकं रक्षणाय बह्वीभिः ऊतिभिः[5] हे बहूनां भोक्तारौ! ॥ १६ ॥

आ नो अश्वावदश्विना वर्तिर्यासिष्टं मधुपातमा नरा । गोमद् दस्रा हिरण्यवत् ॥१७॥

आ । नः । अश्वऽवत् । अश्विना । वर्तिः । यासिष्टम् । मधुऽपातमा । नरा ।
गोऽमत् । दस्रा । हिरण्यऽवत् ॥ १७ ॥

वेङ्कट० आ गच्छतम् अस्मान् प्रति मार्गम् अश्वयुक्तम् हे सोमस्य पातारौ! नेतारौ! अश्विनौ! गोयुक्तम् हिरण्ययुक्तम् च दर्शनीयौ! ॥ १७ ॥

सुप्रावर्गं सुवीर्यं सुष्ठु वार्यमनाधृष्टं रक्षस्विना ।
अस्मिन्ना वामायाने वाजिनीवसू विश्वा वामानि धीमहि ॥ १८ ॥

सुऽप्रावर्गम् । सुऽवीर्यम् । सुष्ठु । वार्यम् । अनाधृष्टम् । रक्षस्विना ।
अस्मिन् । आ । वाम् । आऽयाने । वाजिनीवसू इति वाजिनीऽवसू । विश्वा । वामानि । धीमहि ॥

वेङ्कट० शोभनप्रवर्गम् शोभनवीर्यम् सुष्ठु वरणीयं बलवता अनभिभूतं धनम् वयम् आ धीमहि । तदेवाह[6] — अस्मिन् युवयोः आगमने वाजिनीवसू! विश्वानि धनानि आ धीमहि ॥ १८ ॥

[4]इति षष्ठाष्टके द्वितीयाध्याये अष्टमो वर्गः[4] ॥

[ २३ ]

[4]विश्वमना वैयश्व ऋषिः । अग्निर्देवता । उष्णिक् छन्दः[4] ।

ईळिष्वा हि प्रतीव्यं१ यजस्व जातवेदसम् । चरिष्णुधूममगृभीतशोचिषम् ॥१॥

---

१-१. रथैनावश्वि° मूको. २. सनशी° वि[२]; सचसी° अ[१]. ३. ता वयं मूको. ४-४. नास्ति मूको. ५. कृतिभिः मूको. ६. नते देवा° मूको.

ई॒ळि॒ष्व । हि । प्र॒ती॒व्य॑म् । यज॑स्व । जा॒तऽवे॑दसम् । च॒रि॒ष्णुऽधू॑मम् । अगृ॑भीतऽशोचिषम् ॥ १ ॥

**वेङ्कट०** विश्वमनाः वैयश्वः । स्तुहि हि प्रतिगमनशीलम् । यजस्व जातवेदसम् चरणशीलधूमम्[१] अगृहीतदीप्तिं रक्षोभिः ॥ १ ॥

**दा॒मानं॑ वि॒श्वच॑र्षणे॒ऽग्निं वि॑श्वमनो गि॒रा । उ॒त स्तु॑षे॒ विष्प॑र्धसो॒ रथा॑नाम् ॥२॥**

दा॒मान॑म् । वि॒श्व॒ऽच॒र्ष॒णे॒ । अ॒ग्निम् । वि॒श्व॒ऽम॒नः॒ । गि॒रा । उ॒त । स्तु॒षे॒ । विऽस्प॑र्धसः । रथा॑नाम् ॥

**वेङ्कट०** दातारम् हे विश्वस्यार्थस्य[२] द्रष्टः! विश्वमनः! अग्निम् गिरा स्तुहि विगतस्पर्धस्य यजमानस्य रथानाम् दानमिति ॥ २ ॥

**येषा॑माबा॒ध ऋ॒ग्मिय॑ इ॒षः पृ॒क्षश्च॑ नि॒ग्रभे॑ । उ॒प॒वि॒दा वह्नि॑र्वि॒न्दते॒ वसु॑ ॥ ३ ॥**

येषा॑म् । आ॒ऽबा॒धः । ऋ॒ग्मियः॑ । इ॒षः । पृ॒क्षः । च॒ । नि॒ऽग्रभे॑ । उ॒प॒ऽवि॒दा॑ । वह्निः॑ । वि॒न्दते॒ । वसु॑ ॥ ३ ॥

**वेङ्कट०** येषाम् अयजमानानाम् आभिमुख्येन हिंसकः अर्चनीयः अन्नानि रसान् च निगृह्णाति, उपवेदनेन तेषां धनं च विन्दते वोढा ॥ ३ ॥

**उद॑स्य शो॒चिर॑स्थाद् दीदि॒युषो॒ व्य१॒॑जर॑म् । तपु॑र्जम्भस्य सु॒द्युतो॑ गण॒श्रियः॑ ॥४॥**

उत् । अ॒स्य॒ । शो॒चिः । अ॒स्था॒त् । दी॒दि॒युषः॑ । वि । अ॒जर॑म् । तपुः॑ऽजम्भस्य । सु॒ऽद्युतः॑ । ग॒ण॒ऽश्रियः॑ ॥४॥

**वेङ्कट०** उत् अस्य शोचिः देवस्य[३] अस्थात् तेजः अजरम्[४] तापयितृदंष्ट्रस्य शोभनदीप्तेः, यो यजमानगणं श्रयति ॥ ४ ॥

**उदु॑ तिष्ठ स्वध्वर॒ स्तवा॑नो दे॒व्या कृ॒पा । अ॒भि॒ख्या भा॒सा बृ॑ह॒ता शु॑शु॒क्वनिः॑ ॥५॥**

उत् । ऊँ इति॑ । ति॒ष्ठ॒ । सु॒ऽअ॒ध्व॒र॒ । स्तवा॑नः । दे॒व्या । कृ॒पा । अ॒भि॒ऽख्या । भा॒सा । बृ॒ह॒ता । शु॒शु॒क्वनिः॑ ॥

**वेङ्कट०** उत् तिष्ठ शोभनयज्ञ![५] स्तूयमानः देव्या ज्वालया अभिख्या[६] शोभनया महत्या च भासा शोचनशीलः ॥ ५ ॥

[७]इति षष्ठाष्टके द्वितीयाध्याये नवमो वर्गः[७] ॥

**अग्ने॑ या॒हि सु॑श॒स्तिभि॑र्ह॒व्या जुह्वा॑न आनु॒षक् । यथा॑ दू॒तो ब॒भूथ॑ हव्य॒वाह॑नः ॥६॥**

अग्ने॑ । या॒हि । सु॒श॒स्तिऽभिः॑ । ह॒व्या । जुह्वा॑नः । आ॒नु॒षक् । यथा॑ । दू॒तः । ब॒भूथ॑ । ह॒व्य॒ऽवाह॑नः ॥ ६ ॥

**वेङ्कट०** अग्ने![८] याहि स्तोत्रैः हवींषि जुह्वानः अनुषक्तम्, यथा [९]च त्वम्[९] दूतः बभूथ[१०] हविषां वोढा तथैव जुह्वान इति ॥ ६ ॥

---

१. °शीधुम° वि[२]; °णइशीधुम° अ[१]. २. °स्यार्भस्य वि[२]. ३. दशाख्य मूको. ४. नास्ति मूको. ५. यज्ञ वि[२]; यज्ञे अ[१]. ६. °भिमुख्या मूको. ७-७. नास्ति मूको. ८. सपा. मा (११,४१) आग्ने! (आ अ°) इति पाभे. ९-९. अत्वम् मूको. १०. बहु वि[१]; बहुधा अ[१].

अग्निं वः पूर्व्यं हुवे होतारं चर्षणीनाम् ।
तमया वाचा गृणे तमु वः स्तुषे ॥ ७ ॥

अग्निम् । वः । पूर्व्यम् । हुवे । होतारम् । चर्षणीनाम् ।
तम् । अया । वाचा । गृणे । तम् । ऊँ इति । वः । स्तुषे ॥ ७ ॥

**वेङ्कट०** अग्निम् युष्माकम् पूर्व्यम् ह्वयामि होतारम् मनुष्याणाम् । अयं हि यजति मनुष्याणाम् । तम् अनया वाचा शंसामि । तम् एव वः स्तौमि स्तोमैः ॥ ७ ॥

यज्ञेभिरद्भुतक्रतुं यं कृपा सूदयन्त इत् ।
मित्रं न जने सुधितमृतावनि ॥ ८ ॥

यज्ञेभिः । अद्भुतऽक्रतुम् । यम् । कृपा । सूदयन्ते । इत् ।
मित्रम् । न । जने । सुऽधितम् । ऋतऽवनि ॥ ८ ॥

**वेङ्कट०** यज्ञैः अद्भुतप्रज्ञम् यम् सामर्थ्येन 'कामान् सूदयन्ते'[1] एव । सूदिः क्षरणकर्मा । मित्रम् इव सन्तर्पितम् यज्ञवति[2] यजमाने क्षारयन्तीति[3] ॥ ८ ॥

ऋतावानमृतायवो यज्ञस्य साधनं गिरा । उपो एनं जुजुषुर्नमसस्पदे ॥ ९ ॥

ऋतऽवानम् । ऋतऽयवः । यज्ञस्य । साधनम् । गिरा ।
उपो इति । एनम् । जुजुषुः । नमसः । पदे ॥ ९ ॥

**वेङ्कट०** यज्ञवन्तं हे यज्ञकामाः! यज्ञस्य साधनभूतम् वाचा स्तुतम् च तम् एनम् उप आसेविषत यजमानाः हविषः स्थाने यज्ञवति ॥ ९ ॥

अच्छा नो अङ्गिरस्तमं यज्ञासो यन्तु संयतः ।
होता यो अस्ति विक्ष्वा यशस्तमः ॥ १० ॥

अच्छ । नः । अङ्गिरःऽतमम् । यज्ञासः । यन्तु । सम्ऽयतः ।
होता । यः । अस्ति । विक्षु । आ । यशःऽतमः ॥ १० ॥

**वेङ्कट०** अच्छ यन्तु अस्माकम् अङ्गिरसां[4] वरिष्ठम् यज्ञाः हवींषि संहतानि[5] स्रुग्भिः । होता यः भवति मनुष्येषु यशस्तमः, यजस्व तम् ॥ १० ॥

[6]इति षष्ठाष्टके द्वितीयाध्याये दशमो वर्गः[6] ॥

अग्ने तव त्ये अजरेन्धानासो बृहद् भाः । अश्वा इव वृषणस्तविषीयवः ॥ ११ ॥

---

१-१. °मान् आदयन्त वि[1]; °मानदारयन्त अ[1]. २. यज्ञपतिं मूको. ३. °यन्तीति मूको.
४. °रसा मूको. ५. नास्ति वि[2]. ६-६. नास्ति मूको.

अग्ने। तवं। त्ये। अजर। इन्धानासः। बृहत्। भाः। अश्वाःऽइव। वृषणः। तविषीऽयवः॥ ११॥

वेङ्कट० अग्ने! तव अमी अजर! दीप्यमानाः महान्तः रश्मयः अश्वाः इव पुमांसः बलमाचरन्तः भवन्ति ११॥

स त्वं न ऊर्जां पते रयिं रास्व सुवीर्यम्। प्राव नस्तोके तनये समत्स्वा॥१२॥

सः। त्वम्। नः। ऊर्जाम्। पते। रयिम्। रास्व। सुऽवीर्यम्।
प्र। अव। नः। तोके। तनये। समत्ऽसु। आ॥ १२॥

वेङ्कट० सः त्वम् अस्मभ्यं हे अन्नानां पते! धनम् देहि सुवीर्यम्। प्र रक्ष च अस्माकं पुत्रे पौत्रे सङ्ग्रामेषु च यद्रक्षितव्यम्॥ १२॥

यद् वा उ विश्पतिः शितः सुप्रीतो मनुषो विशि।
विश्वेदग्निः प्रति रक्षांसि सेधति॥ १३॥

यत्। वै। ऊँ इति। विश्पतिः। शितः। सुऽप्रीतः। मनुषः। विशि।
विश्वा। इत्। अग्निः। प्रति। रक्षांसि। सेधति॥ १३॥

वेङ्कट० यदा खलु विशां पतिः तीक्ष्णीकृतः सुप्रीतः मनुष्यस्य निवेशने, तदानीं विश्वानि एव रक्षांसि अग्निः प्रति सेधति॥ १३॥

श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते।
नि मायिनस्तपुषा रक्षसो दह॥ १४॥

श्रुष्टी। अग्ने। नवस्य। मे। स्तोमस्य। वीर। विश्पते।
नि। मायिनः। तपुषा। रक्षसः। दह॥ १४॥

वेङ्कट० [1]श्रुत्वा अग्ने[1] नवम् मम स्तोमम्[2] हे वीर! विश्पते! नि दह मायाविनः राक्षसान् तेजसा॥ १४॥

न तस्य मायया चन रिपुरीशीत मर्त्यः।
यो अग्नये ददाश हव्यदातिभिः॥ १५॥

न। तस्य। मायया। चन। रिपुः। ईशीत। मर्त्यः। यः। अग्नये। ददाश। हव्यदातिऽभिः॥ १५॥

वेङ्कट० न तस्य मायया अपि रिपुः मर्त्यः[3] ईशीत, यः अग्नये प्रयच्छति[4] हविषां दातृभिः॥ १५॥

[5]इति षष्ठाष्टके द्वितीयाध्याये एकादशो वर्गः[5]॥

---

१-१. श्रुत्वाने वि[2]; शृत्वाने अ[1]. २. स्तोत्रं अ[1]. ३. निमित्तं वि[1]; नमत्तं अ[1]. ४. प्रयच्छद्भिः वि[2]; प्रायच्छद्भिः अ[1]. ५-५. नास्ति मूको.

व्यश्वस्त्वा वसुविदमुक्षण्युरप्रीणादृषिः । महो राये तमु त्वा समिधीमहि ॥१६॥

विऽअश्वः । त्वा । वसुऽविदम् । उक्षण्युः । अप्रीणात् । ऋषिः ।
महः । राये । तम् । ऊँ इति । त्वा । सम् । इधीमहि ॥ १६ ॥

**वेङ्कट०** व्यश्वः मम पिता त्वां वसूनां लम्भकम् सेक्तारमिच्छन् अप्रीणात् ऋषिः महते धनाय। तम् एव त्वा वयम् सम् इधीमहि ॥ १६ ॥

उशना काव्यस्त्वा नि होतारमसादयत् । आयजिं त्वा मनवे जातवेदसम् ॥१७॥

उशना । काव्यः । त्वा । नि । होतारम् । असादयत् । आऽयजिम् । त्वा । मनवे । जातऽवेदसम् ॥१७॥

**वेङ्कट०** कविपुत्रः उशना त्वा [1]नि असादयत्[1] होतारम् आभिमुख्येन यष्टारम् त्वाम्[2] मनवे राज्ञे जातप्रज्ञम् ॥ १७ ॥

विश्वे हि त्वा सजोषसो देवासो दूतमक्रत ।
श्रुष्टी देव प्रथमो यज्ञियो भुवः ॥ १८ ॥

विश्वे । हि । त्वा । सऽजोषसः । देवासः । दूतम् । अक्रत ।
श्रुष्टी । देव । प्रथमः । यज्ञियः । भुवः ॥ १८ ॥

**वेङ्कट०** विश्वे हि त्वा [3]सङ्गताः सन्तः देवासः[3] दूतम् अकुर्वन्[4]। क्षिप्रम् देव! मुख्यः यज्ञियः च भव[5] ॥ १८ ॥

इमं घा वीरो अमृतं दूतं कृण्वीत मर्त्यः । पावकं कृष्णवर्तनिं विहायसम् ॥१९॥

इमम् । घ । वीरः । अमृतम् । दूतम् । कृण्वीत । मर्त्यः । पावकम् । कृष्णऽवर्तनिम् । विऽहायसम् ॥१९॥

**वेङ्कट०** इमम् खलु वीरः अमृतम् देवानाम् दूतम् कृण्वीत मनुष्यः[6] पावकम् कृष्णमार्गम् महान्तम् ॥ १९ ॥

तं हुवेम यतस्रुचः सुभासं शुक्रशोचिषम् । विशामग्निमजरं प्रत्नमीड्यम् ॥२०॥

तम् । हुवेम । यतऽस्रुचः । सुऽभासम् । शुक्रऽशोचिषम् ।
विशाम् । अग्निम् । अजरम् । प्रत्नम् । ईड्यम् ॥ २० ॥

**वेङ्कट०** तम् हुवेम गृहीतस्रुचः[7] शोभनभासम् [8]ज्वलद्दीप्तिकम् विशाम्[8] ईड्यम् अग्निम् अजरम् पुराणम् ॥ २० ॥

[1]इति षष्ठाष्टके द्वितीयाध्याये द्वादशो वर्गः[1] ॥

---

१-१. असायत मूको. २. त्वा अ[1]. ३-३. °ता···दे° मूको. ४. अकुण्वन् वि[2]. ५. अभवः अ[1].
६. मनुष्याः मूको. ७. °हीतः सुव वि[2]; °हीतः सुप अ[1]. ८-८. °प्ति···वि° वि[2]; °प्तिविशा° अ[1].

यो अस्मै हव्यदातिभिराहुतिं मर्तोऽविधत् ।
भूरि पोषं स धत्ते वीरवद् यशः ॥ २१ ॥

यः । अस्मै । हव्यदातिऽभिः । आऽहुतिम् । मर्तः । अविधत् ।
भूरि । पोषम् । सः । धत्ते । वीरऽवत् । यशः ॥ २१ ॥

**वेङ्कट०** यः अस्मै ऋत्विग्भिः आहुतिम्[1] मनुष्यः करोति, भूरि[2] पोषम् सः धारयति पुत्रयुक्तां च कीर्तिम् ॥ २१ ॥

प्रथमं जातवेदसमग्निं यज्ञेषु पूर्व्यम् । प्रति स्रुगेति नमसा हविष्मती ॥ २२ ॥

प्रथमम् । जातऽवेदसम् । अग्निम् । यज्ञेषु । पूर्व्यम् । प्रति । स्रुक् । एति । नमसा । हविष्मती ॥

**वेङ्कट०** प्रारम्भे जातप्रज्ञम् अग्निम् यज्ञेषु मुख्यम् प्रति एति स्रुक्[3] नमस्कारेण [4]सह हविष्मती[4] ॥ २२ ॥

आभिर्विधेमाग्नये ज्येष्ठाभिर्व्यश्ववत् । मंहिष्ठाभिर्मतिभिः शुक्रशोचिषे ॥२३ ॥

आभिः । विधेम । अग्नये । ज्येष्ठाभिः । व्यश्वऽवत् । मंहिष्ठाभिः । मतिऽभिः । शुक्रऽशोचिषे ॥ २३ ॥

**वेङ्कट०** आभिः स्तुतिभिः परिचरेम अग्नये श्रेष्ठाभिः व्यश्ववत् अस्माकम् पितृवत् पूजनीयाभिः ज्वलत्तेजसे[5] ॥ २३ ॥

नूनमर्च विहायसे स्तोमेभिः स्थूरयूपवत् । ऋषे वैयश्व दम्यायाग्नये ॥ २४ ॥

नूनम् । अर्च । विऽहायसे । स्तोमेभिः । स्थूरयूपऽवत् । ऋषे । वैयश्व । दम्याय । अग्नये ॥ २४ ॥

**वेङ्कट०** सम्प्रति स्तुहि महते स्तोमैः यथैनं [6]स्थूरयूपो नामर्षिः[6] आनर्च[7] हे ऋषे! वैयश्व! गृहहिताय अग्नये ॥ २४ ॥

अतिथिं मानुषाणां सूनुं वनस्पतीनाम् । विप्रा अग्निमवसे प्रत्नमीळते ॥ २५ ॥

अतिथिम् । मानुषाणाम् । सूनुम् । वनस्पतीनाम् । विप्राः । अग्निम् । अवसे । प्रत्नम् । ईळते ॥२५॥

**वेङ्कट०** निगदसिद्धा ॥ २५ ॥

इति षष्ठाष्टके द्वितीयाध्याये त्रयोदशो वर्गः ॥

महो विश्वाँ अभि षतोऽभि हव्यानि मानुषा ।
अग्ने नि षत्सि नमसाधि बर्हिषि ॥ २६ ॥

---

१. °हुतीः मूको. २. भूति मूको. ३. स्तून्द वि[2]; स्तू अ[1]. ४-४. °ह ··· मूको. ५. °जसः मूको. ६. सूरं यूपो नमर्षिमः मूको. ७. °नयच्च मूको.

मृहः । विश्वान् । अभि । सतः । अभि । हृव्यानि । मानुषा ।

अग्ने । नि । सत्सि । नमसा । अधि । बर्हिषि ॥ २६ ॥

**वेङ्कट०** महतः सर्वानेव सतः स्तोतॄन् अभि नि सीद। तथा मानुषाणि च हवींषि अभि निषीद 'अग्ने! संस्तुत्या'[1] सह यज्ञे ॥ २६ ॥

वंस्वा नो वार्या पुरु वंस्व रायः पुरुस्पृहः । सुवीर्यस्य प्रजावतो यशस्वतः ॥२७॥

वंस्व । नः । वार्या । पुरु । वंस्व । रायः । पुरुऽस्पृहः । सुऽवीर्यस्य । प्रजाऽवतः । यशस्वतः ॥२७॥

**वेङ्कट०** यच्छ अस्मभ्यं वरणीयानि बहूनि । वंस्व धनम् बहुभिः स्पृहणीयम् सुवीर्यम् प्रजावत् कीर्तिमच्चेति ॥ २७ ॥

त्वं वरो सुषाम्णेऽग्ने जनाय चोदय । सदा वसो रातिं यविष्ठ शश्वते ॥ २८ ॥

त्वम् । वरो इति । सुऽसाम्ने । अग्ने । जनाय । चोदय ।

सदा । वसो इति । रातिम् । यविष्ठ । शश्वते ॥ २८ ॥

**वेङ्कट०** त्वम् वरणीय! शोभनसाम्ने अग्ने! जनाय चोदय सर्वदा वासयितः! धनम् युवतम! बहवे ॥ २८ ॥

त्वं हि सुप्रतूरसि त्वं नो गोमतीरिषः । महो रायः सातिमग्ने अपा वृधि ॥२९॥

त्वम् । हि । सुऽप्रतूः । असि । त्वम् । नः । गोऽमतीः । इषः ।

महः । रायः । सातिम् । अग्ने । अप । वृधि ॥ २९ ॥

**वेङ्कट०** त्वम् हि 'शोभनप्रदाता भवसि'[2] । त्वम् अस्माकं पशुमन्ति अन्नानि महतश्च धनस्य देयम् अग्ने! विवृणु ॥ २९ ॥

अग्ने त्वं यशा अस्या मित्रावरुणा वह । ऋतावाना सम्राजा पूतदक्षसा ॥३०॥

अग्ने । त्वम् । यशाः । असि । आ । मित्रावरुणा । वह । ऋतऽवाना । सम्ऽराजा । पूतऽदक्षसा ॥ ३० ॥

**वेङ्कट०** अग्ने! त्वम् यशस्वी असि । त्वम् आ वह मित्रावरुणौ सत्यवन्तौ सम्राजौ शुद्धबलौ[3] ॥ ३० ॥

'इति षष्ठाष्टके द्वितीयाध्याये चतुर्दशो वर्गः'[4] ॥

---

१. °ग्नेः सस्तुतया मूको.　२-२. शोभनव्रता भवति मूको.　३. तद्ध° मूको.　४-४. नास्ति मूको.

[ २४ ]

[1]विश्वमना वैयश्व ऋषिः। इन्द्रो देवता, अन्त्यानां तिसृणां वरुः सौषाम्णिः। उष्णिक् छन्दः, अन्त्याऽनुष्टुप्[1]।

सखा॑य॒ आ शि॑षामहि॒ ब्रह्मेन्द्रा॑य व॒ज्रिणे॑।
स्तु॒ष ऊ॒ षु वो॒ नृत॑माय धृ॒ष्णवे॑॥ १॥

सखा॑यः। आ। शि॒षा॒म॒हि॒। ब्रह्म॑। इन्द्रा॑य। व॒ज्रिणे॑।
स्तु॒षे। ऊँ इति॑। सु। वः॒। नृऽत॑माय। धृ॒ष्णवे॑॥ १॥

वेङ्कट० हे सखायः! वयम् आ शास्महे ब्रह्म कर्तुम् इन्द्राय वज्रिणे। तत्र सर्वेषामेव युष्माकं बलाय[2] नेतृतमाय धृष्णवे तस्मै अहमेव स्तौमीति॥ १॥

शव॑सा॒ ह्यसि॑ श्रु॒तो वृ॑त्र॒हत्ये॑न वृत्र॒हा। म॒घैर्म॒घोनो॒ अति॑ शूर॒ दाशसि॥ २॥

शव॑सा। हि। असि॑। श्रु॒तः। वृ॒त्र॒ऽहत्ये॑न। वृ॒त्र॒ऽहा।
म॒घैः। म॒घोनः॑। अति॑। शू॒र॒। दा॒श॒सि॒॥ २॥

वेङ्कट० बलेन हि असि विश्रुतः वृत्रस्य हननेन [3]वृत्रहन्तेति। मघैः मघवतः[3] अति [4]प्रयच्छसि हे शूर!। एभ्यः[4] सर्वेभ्योऽत्यन्तं प्रयच्छसीति॥ २॥

स न॒: स्तवा॑न॒ आ भ॑र र॒यिं चि॒त्रश्र॑वस्तमम्।
नि॒रे॒के चि॒द् यो ह॑रिवो॒ वसु॑र्द॒दिः॥ ३॥

सः। न॒ः। स्तवा॑नः। आ। भ॒र॒। र॒यिम्। चि॒त्रश्र॑वःऽतमम्।
नि॒रे॒के। चि॒त्। यः। ह॒रि॒ऽव॒ः। वसु॑ः। द॒दिः॥ ३॥

वेङ्कट० सः अस्मभ्यं स्तूयमानः आ हर रयिम् अतिशयेनान्नवन्तम्[5]। निर्गमने यः त्वं हे हरिवः![6] वासयिता अन्नानां दाता च भवसि॥ ३॥

आ निरे॑कमु॒त प्रि॒यमिन्द्र॒ दर्षि॒ जना॑नाम्।
धृ॒ष॒ता धृ॑ष्णो॒ स्तव॑मान॒ आ भ॑र॥ ४॥

आ। नि॒रे॑कम्। उ॒त। प्रि॒यम्। इन्द्र॑। दर्षि॑। जना॑नाम्।
धृ॒ष॒ता। धृ॒ष्णो॒ इति॑। स्तव॑मानः। आ। भ॒र॒॥ ४॥

---

१-१. नास्ति मूको. २. मलाय मूको. ३-३. वृत्रहेति ··· मघवतः वि[2]; वृत्रहतेति ··· मघवनः अ[1]. ४-४. प्रयच्छास्याभ्य मूको. ५. °वन्तः मूको. ६. °रितः मूको.

वेङ्कट० आ दर्षि इन्द्र! विवृतं करोषि जनानाम् निरेकम् अपि च प्रियम्। धनं निरेकं भवति विरेचनान्निर्गमनाद्वा। स त्वं धृष्टेन मनसा हे धृष्णो! स्तूयमानः धनम् अस्मभ्यम् आ हर ॥४॥

न ते सव्यं न दक्षिणं हस्तं वरन्त आमुरः ।
न परिबाधो हरिवो गविष्टिषु ॥ ५ ॥

न । ते । सव्यम् । न । दक्षिणम् । हस्तम् । वरन्ते । आऽमुरः ।
न । परिऽबाधः । हरिऽवः । गोऽइष्टिषु ॥ ५ ॥

वेङ्कट० न ते सव्यम् हस्तम् न अपि दक्षिणम् हस्तम् वारयन्ति आभिमुख्येन मर्तारः प्रतियोद्धारः, न च परिबाधः परितो बाधमानाः हरिवः! गवामन्वेषणेषु ॥ ५ ॥

[1]इति षष्ठाष्टके द्वितीयाध्याये पञ्चदशो वर्गः[1] ॥

आ त्वा गोभिरिव व्रजं गीर्भिर्ऋणोम्यद्रिवः ।
आ स्मा कामं जरितुरा मनः पृण ॥ ६ ॥

आ । त्वा । गोभिःऽइव । व्रजम् । गीःऽभिः । ऋणोमि । अद्रिऽवः ।
आ । स्म । कामम् । जरितुः । आ । मनः । पृण ॥ ६ ॥

वेङ्कट० यथा गोपालः[2] गाः व्रजे प्रक्षिपति एवं त्वां स्तुतिभिः विध्यामि वज्रिन्!। आ[3] पूरय कामम् स्तोतुः मनः च ॥ ६ ॥

विश्वानि विश्वमनसो धिया नो वृत्रहन्तम । उग्र प्रणेतरधि षू वसो गहि ॥७॥

विश्वानि । विश्वऽमनसः । धिया । नः । वृत्रहन्ऽतम ।
उग्र । प्रनेतरिति प्रऽनेतः । अधि । सु । वसो इति । गहि ॥ ७ ॥

वेङ्कट० विश्वमनसः[4] मम हे उपद्रवाणाम् अतिशयेन हन्तः! उद्गूर्ण! प्रणेतः! वासयितः! विश्वानि स्तोत्राणि कर्माणि वा धिया सुष्ठु अधि गमय ॥ ७ ॥

वयं ते अस्य वृत्रहन् विद्याम शूर नव्यसः । वसोः स्पार्हस्य पुरुहूत राधसः ।८।

वयम् । ते । अस्य । वृत्रऽहन् । विद्याम । शूर । नव्यसः ।
वसोः । स्पार्हस्य । पुरुऽहूत । राधसः ॥ ८ ॥

वेङ्कट० वयम् तव इदम् वृत्रहन्! लभेमहि शूर! नवतरम् वसु[5] स्पृहणीयम् पुरुहूत! साधकम् इति ॥ ८ ॥

---

१-१. नास्ति मूको. २. नोबालः मूको. ३. अव वि[२]. ४. विश्वमहतः मूको. ५. वसुं मूको.

इन्द्र यथा ह्यस्ति तेऽपरीतं नृतो शवः । अमृक्ता रातिः पुरुहूत दाशुषे ॥ ९ ॥

इन्द्र । यथा । हि । अस्ति । ते । अपरिऽइतम् । नृतो इति । शवः ।
अमृक्ता । रातिः । पुरुऽहूत । दाशुषे ॥ ९ ॥

वेङ्कट० इन्द्र! यथा हि ते भवति शत्रुभिः अपरिगतम्[1] बलम् नेतः! नर्तयितः! वा, तथा पुरुहूत! रातिः च शत्रुभिः [2]अहिंसिता दाशुषे[2] भवति। त्वत्तः प्रभूतं धनं [3]न हिंसन्ति[3] शत्रवः ॥ ९ ॥

आ वृषस्व महामह महे नृतम राधसे । दृळहश्चिद् दृह्य मघवन् मघत्तये ॥ १० ॥

आ । वृषस्व । महाऽमह । महे । नृऽतम । राधसे ।
दृळ्हः । चित् । दृह्य । मघऽवन् । मघत्तये ॥ १० ॥

वेङ्कट० आ सिञ्च स्वोदरम् हे [4]अत्यन्तपूज्य! महते[4] नेतृतम! धनाय[5]। दृंहितान्यपि शत्रुपुराणि विदारय मघवन्! धनलाभाय ॥ १० ॥

[6]इति षष्ठाष्टके द्वितीयाध्याये षोडशो वर्गः[6] ॥

नू अन्यत्रा चिदद्रिवस्त्वन्नो जग्मुराशसः । मघवञ्छग्धि तव तन्न ऊतिभिः ॥ ११ ॥

नु । अन्यत्र । चित् । अद्रिऽवः । त्वत् । नः । जग्मुः । आऽशसः ।
मघऽवन् । शग्धि । तव । तत् । नः । ऊतिऽभिः ॥ ११ ॥

वेङ्कट० त्वत्तः[7] अन्यत्र पुरा अस्माकम् आशंसनानि जग्मुः अपरिज्ञानात्। इदानीम् मघवन्! देहि [8]तावकम् तत्[8] धनम् अस्मभ्यम् ऊतिभिः सह ॥ ११ ॥

नह्य१ङ्ग नृतो त्वदन्यं विन्दामि राधसे । राये द्युम्नाय शवसे च गिर्वणः ॥ १२ ॥

नहि । अङ्ग । नृतो इति । त्वत् । अन्यम् । विन्दामि । राधसे । राये । द्युम्नाय । शवसे । च । गिर्वणः ॥ १२ ॥

वेङ्कट० नहि अङ्ग हे नर्तयितः! त्वत्तः अन्यम् लभे अन्नाय धनाय कीर्त्यै बलाय च गिर्वणः! ॥ १२ ॥

एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु । प्र राधसा चोदयाते महित्वना ॥ १३ ॥

आ । इन्दुम् । इन्द्राय । सिञ्चत । पिबाति । सोम्यम् । मधु ।
प्र । राधसा । चोदयाते । महिऽत्वना ॥ १३ ॥

---

१. अप्रतिग° अ[1]. २-२. °ता ··· षे मूको. ३-३. निहिं° मूको. ४-४. °त्यन्तमह° वि[2]; °न्तनन्तन् म° अ[1]. ५. सना° मूको. ६-६. नास्ति मूको. ७ नास्ति अ[1]. ८-८. तावन्तं मूको.

वेङ्कट० इन्दुम् इन्द्राय आ सिञ्चत[1]। पिबतु स सोमं [2]मधुरसं वा। अन्नेन[2] महत्त्वेन[3] स्तोतॄन् प्र चोदयति ॥ १३ ॥

उपो हरीणां पतिं दक्षं पृञ्चन्तमब्रवम् । नूनं श्रुधि स्तुवतो अश्व्यस्य ॥ १४ ॥

उपो इति । हरीणाम् । पतिम् । दक्षम् । पृञ्चन्तम् । अब्रवम् । नूनम् । श्रुधि । स्तुवतः । अश्व्यस्य ॥ १४ ॥

वेङ्कट० उपो अब्रवम् अश्वानाम् पतिम् बलम् पर्चयन्तम् । सम्प्रति शृणु स्तुवन्तम् वैयश्वम् विश्वमनसम् ॥ १४ ॥

नह्य१ङ्ग पुरा चन जज्ञे वीरतरस्त्वत् । नकी राया नैवथा न भन्दना ॥ १५ ॥

नहि । अङ्ग । पुरा । चन । जज्ञे । वीरऽतरः । त्वत् । नकिः । राया । न । एवऽथा । न । भन्दना ॥ १५ ॥

वेङ्कट० नहि अङ्ग [4]पुरा चन इन्द्र ! जातः[4] त्वत्तः वीरतरः कश्चित् । न कश्चित् राया त्वत्तोऽतिरिक्तः, न अपि अवनेन, न च स्तुत्या। धनवान् रक्षकः स्तुत्यः[5] च त्वत्तोऽन्यः न जात इति ॥ १५ ॥

[6]इति षष्ठाष्टके द्वितीयाध्याये सप्तदशो वर्गः[6] ॥

एदु मध्वो मदिन्तरं सिञ्च वाध्वर्यो अन्धसः ।
एवा हि वीरः स्तवते सदावृधः ॥ १६ ॥

आ । इत् । ऊँ इति । मध्वः । मदिन्ऽतरम् । सिञ्च । वा । अध्वर्यो इति । अन्धसः ।
एव । हि । वीरः । स्तवते । सदाऽवृधः ॥ १६ ॥

वेङ्कट० आ सिञ्च एव तं गृहीतम् मध्वः मदिन्तरम् सोमस्य रसम् [7]अध्वर्यो! । एवम् हि वीरः स्तूयते सदावृद्धः[7] ॥ १६ ॥

इन्द्र स्थातर्हरीणां नकिष्टे पूर्व्यस्तुतिम् । उदानंश शवसा न भन्दना ॥ १७ ॥

इन्द्र । स्थातः । हरीणाम् । नकिः । ते । पूर्व्यऽस्तुतिम् । उत् । आनंश । शवसा । न । भन्दना ॥ १७ ॥

वेङ्कट० इन्द्र! अधिष्ठातः अश्वानाम्! न कश्चित् ते प्रत्नां स्तुतिम् उद्व्याप्नोति बलेन, न अपि भन्दनया पूजनीयेन धनेन। न त्वत्तो बलवान् धनी वाऽस्तीत्यर्थः ॥ १७ ॥

तं वो वाजानां पतिमहूमहि श्रवस्यवः । अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥ १८ ॥

तम् । वः । वाजानाम् । पतिम् । अहूमहि । श्रवस्यवः । अप्रायुऽभिः । यज्ञेभिः । ववृधेन्यम् ॥ १८ ॥

---

१. सिञ्चतु अ[1]. २-२. °रसवान्ने° मूको. ३. °रत्नेन प्रत्नेन मूको. ४-४. °रा ··· जा° मूको.
५. °त्यं मूको. ६-६. नास्ति मूको. ७-७. °ध्वर्यवे ··· स मूको.

**वेङ्कट०** तम् युष्माकम् अन्नानाम् पतिम् ह्वयामः अन्नकामाः [1]अप्रमाद्यद्भिः अप्रगच्छद्भिः[1] वा मनुष्यैः यज्ञैः वर्धनीयम् ॥ १८ ॥

एतो न्विन्द्रं स्तवाम सखायः स्तोम्यं नरम् ।
कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥ १९ ॥

एतो इति । नु । इन्द्रम् । स्तवाम । सखायः । स्तोम्यम् । नरम् ।
कृष्टीः । यः । विश्वाः । अभि । अस्ति । एकः । इत् ॥ १९ ॥

**वेङ्कट०** आगच्छत क्षिप्रम् । स्तवाम[2] इन्द्रम् हे सखायः! स्तोमार्हम् नेतारम्, सर्वाः प्रजाः यः एकः[3] एव अभि भवति ॥ १९ ॥

अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः । घृतात् स्वादीयो मधुनश्च वोचत ॥२०॥

अगोऽरुधाय । गोऽइषे । द्युक्षाय । दस्म्यम् । वचः । घृतात् । स्वादीयः । मधुनः । च । वोचत ॥२०॥

**वेङ्कट०** स्तुतिं यो न रुणद्धि तस्मै स्तुतिमिच्छते दीप्ताय दर्शनीयम् वचः घृतात् च मधुनः च स्वादुतरम् ब्रूत । 'वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह' इत्याश्वलायनम् ( आगृ १,१,५ ) ॥ २० ॥

[4]इति षष्ठाष्टके द्वितीयाध्याये अष्टादशो वर्गः[4] ॥

यस्यामितानि वीर्या३ न राधः पर्येतवे । ज्योतिर्न विश्वमभ्यस्ति दक्षिणा ॥२१॥

यस्य । अमितानि । वीर्या । न । राधः । परिऽएतवे ।
ज्योतिः । न । विश्वम् । अभि । अस्ति । दक्षिणा ॥ २१ ॥

**वेङ्कट०** यस्य वीर्याणि न परिमितानि, न[3] धनम् शत्रुभिः परिगन्तुं शक्यम् । ज्योतिः अन्तरिक्षम् इव यस्य दानं सर्वं स्तोतृजनम् अभि भवति । यद्वा येन दत्तं धनम् अभिभवति सर्वं शत्रुम् ॥ २१ ॥

स्तुहीन्द्रं व्यश्ववदनूर्मिं वाजिनं यमम् । अर्यो गयं मंहमानं वि दाशुषे ॥ २२ ॥

स्तुहि । इन्द्रम् । व्यश्वऽवत् । अनूर्मिम् । वाजिनम् । यमम् ।
अर्यः । गयम् । मंहमानम् । वि । दाशुषे ॥ २२ ॥

**वेङ्कट०** स्तुहि इन्द्रम् हे विश्वमनः![5] व्यश्ववत् अहिंसकम् । ऊर्मिर्हिंसाकर्मा[6] । बलिनम् नियन्तव्यम् अर्थिभिः । [7]स्वामी धनम्[7] पूज्यमानम् वि तरति दाशुषे ॥ २२ ॥

---

१. अह्रूमह्यद्भिः पग° वि[2]; अमाद्यद्भिः प्रग° अ[1]. २. स्तुवाम मूको. ३. नास्ति मूको. ४-४. नास्ति मूको. ५. °श्वात्मनो वि[2]; श्वामनो अ[1]. ६. अ त्तिर्हि मूको. ७-७. स्वामिधनवत् मूको.

एवा नूनमुपं स्तुहि वैयंश्व दशमं नवम् । सुविद्वांसं चर्कृत्यं चरणीनाम् ॥ २३ ॥

एव । नूनम् । उप । स्तुहि । वैयंश्व । दशमम् । नवंम् । सुऽविद्वांसम् । चर्कृत्यम् । चरणीनाम् ॥ २३ ॥

**वेङ्कट०** एवम् इदानीम् उप स्तुहि हे वैयश्व ! नवानां प्राणानाम् दशमम् । "नव वै[1] पुरुषे[2] [3]प्राणाः' ( जैब्रा १,१३२; तैआ ५,६,९ ) । मनुष्येषु[3] वर्तमानः[4] इन्द्रस्तेषां दशमो भवति । 'इन्द्रस्याऽऽत्मानं दशधा[5] चरन्तम्' ( तैआ ३,११,१ ) इति मन्त्रः । नवम् स्तुत्यम् सुविद्वांसम् भूयोभूयः कार्येषु प्रवर्तयितव्यम्[6] चरन्तीनां प्रजानाम् ॥ २३ ॥

वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजंम् । अहरहः शुन्ध्युः परिपदामिव ॥२४॥

वेत्थं । हि । निःऽऋतीनाम् । वज्रऽहस्त । परिऽवृजम् । अहःऽअहः । शुन्ध्युः । परिपदाम्ऽइव ॥ २४ ॥

**वेङ्कट०** जानीषे हि निर्ऋतीनाम् उपद्रवाणाम् वज्रहस्त ! परिवर्जनम्, अहरहः यथा [7]आदित्यः ( तु. या ४,१६ ) परीत्य[7] पततां रक्षसां वर्जनं वेत्ति । पतिपदी समानकर्माणाविति ॥ २४ ॥

तदिन्द्राव आ भर येना दंसिष्ठ कृत्वने । द्विता कुत्साय शिश्नथो नि चोदय ॥२५॥

तत् । इन्द्र । अवः । आ । भर । येन । दंसिष्ठ । कृत्वने । द्विता । कुत्साय । शिश्नथः । नि । चोदय ॥ २५ ॥

**वेङ्कट०** तत् इन्द्र ! रक्षणम् आ भर[8], येन रक्षणेन हे अत्यन्तदर्शनीय ! कुर्वाणाय अकृथाः[9] [10]पालनम् । एतदेवाऽऽह[10] — द्वैधम् कुत्साय शत्रून् शिश्नथः त्वम् । तदस्मभ्यमपि नि चोदय इति ॥ २५ ॥

[11]इति षष्ठाष्टके द्वितीयाध्याये एकोनविंशो वर्गः[11] ॥

तमुं त्वा नूनमीमहे नव्यं दंसिष्ठ सन्यसे ।
स त्वं नो विश्वा अभिमातीः सक्षणिः ॥ २६ ॥

तम् । ऊँ इति । त्वा । नूनम् । ईमहे । नव्यम् । दंसिष्ठ । सन्यसे ।
सः । त्वम् । नः । विश्वाः । अभिऽमातीः । सक्षणिः ॥ २६ ॥

**वेङ्कट०** तम् एव त्वाम् इदानीं याचामहे स्तुत्यम् हे अतिशयेन दर्शनीय ! धनानां संन्यासार्थं प्रदानार्थम् । सः त्वम् अस्माकम् विश्वाः अभिमातीः सहसे[12] ॥ २६ ॥

य ऋक्षादंहसो मुचद् यो वार्यात् सप्त सिन्धुषु । वर्धर्दासस्य तुविनृम्ण नीनमः ।२७।

यः । ऋक्षात् । अंहसः । मुचत् । यः । वा । आर्यात् । सप्त । सिन्धुषु ।
वधः । दासस्य । तुविऽनृम्ण । नीनमः ॥ २७ ॥

---

१-१. नवैः मूको. २. °रुषैः मूको. ३-३. प्राणम° मूको. ४. °मान मूको. ५. दशथा मूको. ६. प्रवर्तव्यम् मूको. ७-७. °त्य…प° मूको. ८. हर अ°. ९. कृथाः मूको. १०-१०. °लन मे वाह मूको. ११-११. नास्ति मूको. १२. °सेम मूको.

वेङ्कट० ऋक्षः रेचनाद् हिंसनाद्वा । यः इन्द्रो रक्षसो जाताद् उपद्रवाद् मुञ्चति, यः वा '[1]विपरीतात् आर्यात् सप्तसु[1]' सिन्धुषु तत्कूले वर्तमानानां स्तोतॄणाम् । अथ प्रत्यक्षः—स त्वं हे बहुधन! उपक्षपयितुः असुरस्य आयुधम् नमयेति ॥ २७ ॥

यथा॑ व॒रो सु॒षाम्णे॑ स॒निभ्य॒ आव॑हो र॒यिम् । व्य॑श्वेभ्यः सुभगे वाजिनीवति ॥ २८ ॥

यथा॑ । व॒रो इति॑ । सु॒ऽसाम्ने॑ । स॒निऽभ्य॑ः । आ । अव॑हः । र॒यिम् ।
विऽअ॑श्वेभ्यः । सु॒ऽभ॒गे॒ । वा॒जि॒नी॒ऽव॒ति॒ ॥ २८ ॥

वेङ्कट० 'तृचोऽन्त्यः सौषाम्णस्य वरोर्दानस्तुतिः' ( ऋअ ८,२४ ) इत्युक्तम् । यथा सुषाम्णे राजनि(?) पुरा भिक्षमाणेभ्यः आहृत्य आ अवहः[2] रयिम्, एवमिदानीमावह[3] व्यश्वेभ्यः सुभगे! वाजिनीवति! । वरो![4] इत्यत्र वक्तव्यमुक्तमिति ।

शौनकः — "'यथा वरो सुषाम्णे' इत्युत्तमस्त्वौषसस्तृचः" ( बृदे ६,६३ ) इति ॥ २८ ॥

आ ना॒र्यस्य॒ दक्षि॑णा॒ व्य॑श्वाँ एतु सो॒मिन॑ः । स्थू॒रं च॒ राध॑ः श॒तव॑त् स॒हस्र॑वत् ॥ २९ ॥

आ । ना॒र्यस्य॑ । दक्षि॑णा । विऽअ॑श्वान् । ए॒तु॒ । सो॒मिन॑ः ।
स्थू॒रम् । च॒ । राध॑ः । श॒तऽव॑त् । स॒हस्र॑ऽवत् ॥ २९ ॥

वेङ्कट० आ गच्छतु नृहितस्य सौषाम्णस्य वरोः दक्षिणा व्यश्वान् यजमानस्य, स्थूलम् च अन्नं शतसहस्रसङ्ख्याकम् ॥ २९ ॥

यत् त्वा॑ पृ॒च्छादी॑जा॒नः कु॑ह॒या कु॑हयाकृते ।
ए॒षो अप॑श्रितो व॒लो गो॑म॒तीमव॑ तिष्ठति ॥ ३० ॥

यत् । त्वा॒ । पृ॒च्छात् । ई॒जा॒नः । कु॒ह॒या । कु॒ह॒या॒ऽकृ॒ते॒ ।
ए॒षः । अप॑ऽश्रितः । व॒लः । गो॒ऽम॒तीम् । अव॑ । ति॒ष्ठ॒ति॒ ॥ ३० ॥

वेङ्कट० यदि त्वां [5]कश्चित् पृच्छति[5] जनः क्वेति हे कुहयाकृते! क्व सा इति जिज्ञासवो यां पुरस्कुर्वन्ति भिक्षणप्रवृत्ताः सा तथा सम्बोधिता उषाः । तदानीम् अयम्[6] विवृतद्वारो वारकः शत्रूणां वरिता वा भिक्षूणाम् गोमतीम् नदीं प्रति तिष्ठति, कथयसीति ॥ ३० ॥

[7]इति षष्ठाष्टके द्वितीयाध्याये विंशो वर्गः[7] ॥

[ २५ ]

[7]विश्वमना वैयश्व ऋषिः । मित्रावरुणौ देवता, दशम्यादितिसृणां विश्वे देवाः । उष्णिक् छन्दः, त्रयोविंशी उष्णिग्गर्भा[7] ।

ता वां॒ विश्व॑स्य गो॒पा दे॒वा दे॒वेषु॑ य॒ज्ञिया॑ । ऋ॒तावा॑ना यजसे पू॒तद॑क्षसा ॥ १ ॥

---

१-१. °रीत ··· सप्त° वि[2]; °रीता ··· सप्त° अ[1]. २. °वहे मूको. ३. °नीवामह मूको. ४. तु. ऋ ( ८,२३,२८;२६,२ ) भाष्यम्; परो वि[2]; पुरो अ[1]. ५. पृच्छति कश्चित् अ[1]. ६. °इयम् वि[2]. ७-७. नास्ति मूको.

ता । वाम् । विश्वस्य । गोपा । देवा । देवेषु । यज्ञिया । ऋतऽवाना । यजसे । पूतऽदक्षसा ॥ १ ॥

**वेङ्कट०** तौ वाम्[1] विश्वस्य गोपायितारौ देवौ देवेषु यज्ञियौ भजथः [2]यजमानम् । महान्तौ[2] वीरौ यज्ञवन्तौ यजसे विश्वमनः! पूतबलौ ॥ १ ॥

मित्रा तना न रथ्या३ वरुणो यश्च सुक्रतुः । सनात् सुजाता तनया धृतव्रता ॥२॥

मित्रा । तना । न । रथ्या । वरुणः । यः । च । सुऽक्रतुः । सनात् । सुऽजाता । तनया । धृतऽव्रता ॥२॥

**वेङ्कट०** मित्रावरुणौ धनानीव नेतारौ, वरुणः यः च सुक्रतुः मित्रश्च, सनातनौ सुजन्मानौ अदितेः तनयौ धृतकर्माणौ ॥ २ ॥

ता माता विश्ववेदसासुर्याय प्रमहसा । मही जजानादितिर्ऋतावरी ॥ ३ ॥

ता । माता । विश्वऽवेदसा । असुर्याय । प्रऽमहसा । मही । जजान । अदितिः । ऋतऽवरी ॥३॥

**वेङ्कट०** तौ माता[3] सर्वधनौ प्रकृष्टज्ञानौ असुराणां हन्त्रे बलाय महती जजान अदितिः सत्यवती ॥ ३ ॥

महान्ता मित्रावरुणा सम्राजा देवावसुरा । ऋतावानावृतमा घोषतो बृहत् ॥४॥

महान्ता । मित्रावरुणा । सम्ऽराजा । देवौ । असुरा । ऋतऽवानौ । ऋतम् । आ । घोषतः । बृहत् ॥ ४ ॥

**वेङ्कट०** महान्तौ मित्रावरुणौ सम्राजौ देवौ सत्यप्रज्ञौ[4] सत्यवन्तौ सत्यम् आघोषयन्तौ महत् प्रकाशयत इति ॥ ४ ॥

नपाता शवसो महः सूनू दक्षस्य सुक्रतू । सृप्रदानू इषो वास्त्वधि क्षितः ॥५॥

नपाता । शवसः । महः । सूनू इति । दक्षस्य । सुक्रतू इति सुऽक्रतू ।
सृप्रदानू इति सृप्रऽदानू । इषः । वास्तु । अधि । क्षितः ॥ ५ ॥

**वेङ्कट०** पुत्रौ महतः वेगस्य बलस्य च पुत्रौ सुकर्माणौ प्रसृतदानौ अन्नस्य वास्तुनि यज्ञे अधि वसतः ॥ ५ ॥

[5]इति षष्ठाष्टके द्वितीयाध्याये एकविंशो वर्गः[5] ॥

सं या दानूनि येमथुर्दिव्याः पार्थिवीरिषः । नभस्वतीरा वां चरन्तु वृष्टयः ॥६॥

सम् । या । दानूनि । येमथुः । दिव्याः । पार्थिवीः । इषः ।
नभस्वतीः । आ । वाम् । चरन्तु । वृष्टयः ॥ ६ ॥

---

१. =युवाम् इति द्र.  २-२. अथात्मानं महता मूको.  ३. मित्रा मूको.  ४. प्रज्ञौ वि[1].
५-५. नास्ति मूको.

वेङ्कट० सम् येमथुः यौ युवां देयानि[1] धनानि दिव्यानि पार्थिवानि च। तौ वाम् उदकवत्यः वृष्टयः आ चरन्तु उपतिष्ठन्तु ॥ ६ ॥

अधि या बृहतो दिवोऽभि यूथेव पश्यतः। ऋतावाना सम्राजा नमसे हिता ॥७॥

अधि। या। बृहतः। दिवः। अभि। यूथाऽइव। पश्यतः।
ऋतऽवाना। सम्ऽराजा। नमसे। हिता ॥ ७ ॥

वेङ्कट० यौ महतः देवान् अधि पश्यतः, यथा गोयूथानि ऋषभः अभि[2] पश्यति, सत्यवन्तौ सम्राजौ हविषे हितौ ॥ ७ ॥

ऋतावाना नि षेदतुः साम्राज्याय सुक्रतू। धृतव्रता क्षत्रिया क्षत्रमाशतुः ॥ ८ ॥

ऋतऽवाना। नि। सेदतुः। साम्ऽराज्याय। सुक्रतू इति सुऽक्रतू।
धृतऽव्रता। क्षत्रिया। क्षत्रम्। आशतुः ॥ ८ ॥

वेङ्कट० ऋतावानौ नि सेदतुः साम्राज्यार्थम् सुप्रज्ञौ धृतकर्माणौ क्षत्रियौ [3]बलम् च आगच्छताम्[3] ॥ ८ ॥

अक्ष्णश्चिद् गातुवित्तरानुल्बणेन चक्षसा। नि चिन्मिषन्ता निचिरा नि चिक्यतुः ॥९॥

अक्ष्णः। चित्। गातुवित्ऽतरा। अनुल्बणेन। चक्षसा।
नि। चित्। मिषन्ता। निऽचिरा। नि। चिक्यतुः ॥ ९ ॥

वेङ्कट० चक्षुषः[4] अपि अतिशयेन [5]गातुकान् एव वेत्तारौ। गातुः[5] गमनाद् जङ्गमं सर्वं प्राणिजातम्। अनुल्बणेन तेजसा अहोरात्रयोर्व्याप्तेन। अग्नेस्तेज उल्बणं भवति, नैवमनयोः। नि चिक्यतुः सर्वं नि-मिषन्तौ[6] नितरां पुराणौ ॥ ९ ॥

उत नो देव्यदितिरुरुष्यतां नासत्या। उरुष्यन्तु मरुतो वृद्धशवसः ॥ १० ॥

उत। नः। देवी। अदितिः। उरुष्यताम्। नासत्या। उरुष्यन्तु। मरुतः। वृद्धऽशवसः ॥ १० ॥

वेङ्कट० अपि च अस्मान्[7] देवी अदितिः रक्षतु। रक्षतां च नासत्यौ। रक्षन्तु मरुतः च प्रवृद्धवेगाः। 'मैत्रावरुणं सूक्तम्। दशम्याद्या वैश्वदेव्यः' ( तु. ऋअ ८,२५ ) ॥ १० ॥

[8]इति षष्ठाष्टके द्वितीयाध्याये द्वाविंशो वर्गः[8] ॥

ते नो नावमुरुष्यत दिवा नक्तं सुदानवः। अरिष्यन्तो नि पायुभिः सचेमहि ॥११॥

---

१. देवानि मूको. २. नास्ति मूको. ३-३. बलवांश्चागच्छतु मूको. ४. अक्ष्णः अ[1]. ५-५. गातुका एव ··· गातुः त्रिगा.नूना एव गातुः अ[1]. ६. द्विषन्तौ मूको. ७. अस्मभ्यम् वि[2]; अत्यन्तम् अस्मभ्यम् अ'. ८-८. नास्ति मूको.

ते। नः। नावम्। उरुष्यत। दिवा। नक्तम्। सुऽदानवः।
अरिष्यन्तः । नि । पायुऽभिः । सचेमहि ॥ ११ ॥

**वेङ्कट०** ते अस्माकम् नावम् रक्षत दिवा नक्तम् च हे सुदानाः![1]। अरिष्टा भवन्तः[2] ततः नि सचेमहि[3] पालनैः ॥ ११ ॥

अघ्नते विष्णवे वयमरिष्यन्तः सुदानवे। श्रुधि स्वयावन्त्सिन्धो पूर्वचित्तये ॥१२॥

अघ्नते। विष्णवे। वयम्। अरिष्यन्तः। सुऽदानवे।
श्रुधि । स्वऽयावन् । सिन्धो इति । पूर्वऽचित्तये ॥ १२ ॥

**वेङ्कट०** अहिंसते[4] विष्णवे वयम् अरिष्यन्तः शोभनदानाय स्तुतिं कुर्मः। अथ प्रत्यक्षमाह — शृणु हे स्वयावन्!। स्वयमेव यो दिवि याति[5]। स्यन्दमान![6] यजमानाय। [7]चित्तिः कर्म, आदौ यः कर्म[7] अनुतिष्ठति। मन्त्रस्तु — 'सा चित्तिभिर्नि हि चकार मर्त्यम्' ( ऋ १, १६४,२९ ) इति ॥ १२ ॥

तद् वार्यं वृणीमहे वरिष्ठं गोपयत्यम्। मित्रो यत् पान्ति वरुणो यदर्यमा ॥ १३ ॥

तत्। वार्यम्। वृणीमहे। वरिष्ठम्। गोपयत्यम्।
मित्रः। यत्। पान्ति। वरुणः। यत्। अर्यमा ॥ १३ ॥

**वेङ्कट०** तत् धनम् वृणीमहे वरिष्ठम् रक्षकं रक्षणीयं 'वा। यत् रक्षन्ति[8] मित्रादयः। अस्मदीयस्य धनस्य रक्षकाश्च भवन्त्विति ॥ १३ ॥

उत नः सिन्धुरपां तन्मरुतस्तदश्विना। इन्द्रो विष्णुर्मीढ्वांसः सजोषसः ॥ १४ ॥

उत। नः। सिन्धुः। अपाम्। तत्। मरुतः। तत्। अश्विना। इन्द्रः। विष्णुः। मीढ्वांसः। सऽजोषसः ॥ १४

**वेङ्कट०** अपि च अस्माकम् अपाम् सिन्धुः पर्जन्यः तत् रक्षतु, तत्[9] धनम् मरुतः, तत अश्विनौ इन्द्रः विष्णुः च कामानां सेक्तारः सङ्गताः रक्षन्त्विति ॥ १४ ॥

ते हि ष्मा वनुषो नरोऽभिमातिं कयस्य चित्।
तिग्मं न क्षोदः प्रतिघ्नन्ति भूर्णयः ॥ १५ ॥

ते। हि। स्म। वनुषः। नरः। अभिऽमातिम्। कयस्य। चित्।
तिग्मम्। न। क्षोदः। प्रतिऽघ्नन्ति। भूर्णयः ॥ १५ ॥

---

१. सुदा वि[2]; सुदाता अ[1]. २. भवतं वि[2]; भावतं अ[1]. ३. निषेचे° मूको. ४. हिंसते मूको. ५. याति वियति वि[2]; याति वियाति अ[1]. ६. °मानाय मूको. ७-७. चितिकर्मारेयकर्म मूको. ८-८. यावद्रक्षमिति मूको. ९. नास्ति अ[1].

वेङ्कट० ते हि भजमानस्य [1]नेतारः अभिमानिनं मदम्[1] कस्य चिदपि प्रतिघ्नन्ति क्षिप्राः। यथा तीक्ष्णम् उदकं गच्छद् अग्रतःस्थितम् उन्मूलयति ॥ १५ ॥

[2]इति षष्ठाष्टके द्वितीयाध्याये त्रयोविंशो वर्गः[2] ॥

अयमेकं इत्था पुरूरु चष्टे वि विश्पतिः। तस्य व्रतान्यनु वश्चरामसि ॥ १६ ॥

अयम्। एकः। इत्था। पुरु। उरु। चष्टे। वि। विश्पतिः। तस्य। व्रतानि। अनु। वः। चरामसि ॥

वेङ्कट० अयम् एकः सूर्यः इत्थं पुरूणि उरूणि[3] च पश्यति विशां पालयिता। तस्य व्रतानि अनु चरामः युष्मदर्थम्। अनुचरतिः आस्वादनकर्मा(?) ॥ १६ ॥

अनु पूर्वाण्योक्या साम्राज्यस्य सश्चिम। मित्रस्य व्रता वरुणस्य दीर्घश्रुत् ॥१७॥

अनु। पूर्वाणि। ओक्या। साम्ऽराज्यस्य। सश्चिम। मित्रस्य। व्रता। वरुणस्य। दीर्घऽश्रुत् ॥१७॥

वेङ्कट० क्रमेण सश्चिम प्रत्नानि गृहहितानि[4] सम्राजो वरुणस्य। तदेवाऽऽह — मित्रस्य कर्माणि वरुणस्य च[5] दीर्घश्रुतः अनुसश्चिमेति ॥ १७ ॥

परि यो रश्मिना दिवोऽन्तान् ममे पृथिव्याः।
उभे आ पप्रौ रोदसी महित्वा ॥ १८ ॥

परि। यः। रश्मिना। दिवः। अन्तान्। ममे। पृथिव्याः।
उभे इति। आ। पप्रौ। रोदसी इति। महिऽत्वा ॥ १८ ॥

वेङ्कट० यः द्यावापृथिव्योः अन्तान् रश्मिना परि मिनोति। उभे स द्यावापृथिव्यौ महत्त्वेन आ पूरयति वरुणः ॥ १८ ॥

उदु ष्य शरणे दिवो ज्योतिरयंस्त सूर्यः। अग्निर्न शुक्रः समिधान आहुतः ॥१९॥

उत्। ऊँ इति। स्यः। शरणे। दिवः। ज्योतिः। अयंस्त। सूर्यः।
अग्निः। न। शुक्रः। सम्ऽइधानः। आऽहुतः ॥ १९ ॥

वेङ्कट० उत् यच्छति अयम् आदित्यस्य आवासे ज्योतिः आत्मीयम् अवस्थितो वरुणः सुवीर्यः अग्निः इव[1] ज्वलन् समिध्यमानः आहुतः ॥ १९ ॥

वचो दीर्घप्रसद्मनीशे वाजस्य गोमतः। ईशे हि पित्वोऽविषस्य दावने ॥ २० ॥

---

१. °रो हि मदनं मूको. २-२. नास्ति मूको. ३. नास्ति मूको. ४. ग्रहगृहीतानि मूको. ५. नास्ति वि[2].

वर्चः । दीर्घऽप्रसद्मनि । ईशे । वाजस्य । गोऽमतः । ईशे । हि । पित्वः । अविषस्य । दावने ॥

वेङ्कट० [1]वचः स्तुहि[1] दीर्घप्रततसदने[2] वरुणम् । स वरुणः ईष्टे अन्नस्य पशुमतः, ईष्टे हि अन्नम् अविषम् दातुम् ॥ २० ॥

[3]इति षष्ठाष्टके द्वितीयाध्याये चतुर्विंशो वर्गः[3] ॥

तत् सूर्यं रोदसी उभे दोषा वस्तोरुप ब्रुवे । भोजेष्वस्माँ अभ्युच्चरा सदा ॥२१॥

तत् । सूर्यम् । रोदसी इति । उभे इति । दोषा । वस्तोः । उप । ब्रुवे ।
भोजेषु । अस्मान् । अभि । उत् । चर । सदा ॥ २१ ॥

वेङ्कट० तत् सुवीर्यं वारुणं तेजः द्यावापृथिव्यौ च दोशा वस्तोः अहम् उप स्तौमि । स त्वं वरुण! स्तूयमानो दातृषु अस्मान् अभि उत् चर सदा प्रेरय ॥ २१ ॥

ऋज्रमुक्षण्यायने रजतं हरयाणे । रथं युक्तमसनाम सुषामणि ॥ २२ ॥

ऋज्रम् । उक्षण्यायने । रजतम् । हरयाणे । रथम् । युक्तम् । असनाम । सुऽसामनि ॥ २२ ॥

वेङ्कट० ऋजुगामिनम् अश्वम् उक्षण्यायने वरौ राजनि असनाम[4] । रजतम् असनाम हरयाणे । अथ सुषामणि वरौ[5] युक्तम् कञ्चन रथम् लब्धवन्तः प्रसादादेव वै तेषां देवानामिति ॥ २२ ॥

ता मे अश्व्यानां हरीणां नितोशना । उतो नु कृत्व्यानां नृवाहसा ॥ २३ ॥

ता । मे । अश्व्यानाम् । हरीणाम् । निऽतोशना । उतो इति । नु । कृत्व्यानाम् । नृऽवाहसा ॥२३॥

वेङ्कट० प्रतिगृहीतावश्वावाह—तौ[6] मे अश्वसङ्घानां हरितां[7] मध्ये अत्यन्तं शत्रूणां बाधकौ । अपि च कर्तव्यानाम् युद्धानां नृणां वोढारौ ॥ २३ ॥

स्मदभीशू कशावन्ता विप्रा नविष्ठया मती । महो वाजिनावर्वन्ता सचासनम् ॥२४॥

स्मदभीशू इति स्मत्ऽअभीशू । कशाऽवन्ता । विप्रा । नविष्ठया । मती ।
महः । वाजिनौ । अर्वन्ता । सचा । असनम् ॥ २४ ॥

वेङ्कट० [8]कल्याणाभीशू कशावन्तौ[8] मेधाविनौ[9] महतो राज्ञः सुषाम्णः अश्वौ गमनवन्तौ द्वौ सह असनम् नवतरया स्तुत्या देवान् स्तुवन्[10] प्रत्यगृह्णामिति[11] ॥ २४ ॥

[1]इति षष्ठाष्टके द्वितीयाध्याये पञ्चविंशो वर्गः[1] ॥

---

१-१. बहिस्स्तुति मूको. २. °प्रततसदहे मूको. ३-३. नास्ति मूको. ४. असमान मूको. ५. वरो मूको. ६. ते मूको. ७. हरतां मूको. ८-८. °णाभिश्रुतशा° मूको. ९. °विनो मूको. १०. स्तुन्वन् मूको. ११. °ह्णादिति मूको.

[ २६ ]

[1]विश्वमना वैयश्व ऋषिः, व्यश्वो वा आङ्गिरसः। अश्विनौ देवता, अन्त्यानां षण्णां वायुः। उष्णिक् छन्दः, षोडश्याद्येकोनविंश्यन्ता एकविंशी-पञ्चविंश्यौ च गायत्र्यौ, विंशी अनुष्टुप्[1]।

युवोरु षू रथं हुवे सधस्तुत्याय सूरिषु । अतूर्तदक्षा वृषणा वृषण्वसू ॥ १ ॥

युवोः । ऊँ इति । सु । रथम् । हुवे । सधऽस्तुत्याय । सूरिषु ।
अतूर्तऽदक्षा । वृषणा । वृषण्वसू इति वृषण्ऽवसू ॥ १ ॥

**वेङ्कट०** युवयोरेव रथम् सुष्ठु ह्वयामि सह भवन्तौ स्तोतुं प्राज्ञानां मध्ये हे अहिंसितबलौ! वर्षितारौ! वृष्यमाणधनौ! ॥ १ ॥

युवं वरो सुषाम्णे महे तने नासत्या । अवोभिर्याथो वृषणा वृषण्वसू ॥ २ ॥

युवम् । वरो इति । सुऽसाम्ने । महे । तने । नासत्या ।
अवःऽभिः । याथः । वृषणा । वृषण्वसू इति वृषण्ऽवसू ॥ २ ॥

**वेङ्कट०** युवम् सुषाम्णे राजनि(?) महते धनाय अस्माकं हे नासत्यौ! पालनैः याथः वृषणौ! वृषण्वसू! ताम् इमां स्तुतिम्। वरुं सम्बोधयति वरो! इति ॥ २ ॥

ता वामद्य हवामहे हव्येभिर्वाजिनीवसू । पूर्वीरिष इषयन्तावति क्षपः ॥ ३ ॥

ता । वाम् । अद्य । हवामहे । हव्येभिः । वाजिनीवसू इति वाजिनीऽवसू ।
पूर्वीः । इषः । इषयन्तौ । अति । क्षपः ॥ ३ ॥

**वेङ्कट०** तौ वाम् अद्य हवामहे हविर्भिः हे अन्नधनौ! बहूनि अन्नानि अधिगच्छन्तौ क्षपाया अतिक्रमणे ॥ ३ ॥

आ वां वाहिष्ठो अश्विना रथो यातु श्रुतो नरा । उप स्तोमान् तुरस्य दर्शथः श्रिये ॥४॥

आ । वाम् । वाहिष्ठः । अश्विना । रथः । यातु । श्रुतः । नरा । उप । स्तोमान् । तुरस्य । दर्शथः । श्रिये ॥४॥

**वेङ्कट०** आ यातु युवयोः वोढृतमः[2] रथः अश्विनौ! नेतारौ! विश्रुतः। उप दर्शथः स्तोमान् क्षिप्रस्य स्तोतुः श्र्यर्थम्[3] ॥ ४ ॥

जुहुराणा चिदश्विना मन्येथां वृषण्वसू । युवं हि रुद्रा पर्षथो अति द्विषः ॥ ५ ॥

---

१-१. नास्ति मूको. २. वोतमः मूको. ३. श्रियर्थम् मूको.

जु॒हु॒रा॒णा । चि॒त् । अ॒श्वि॒ना॒ । आ । म॒न्ये॒था॒म् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । 
यु॒वम् । हि । रु॒द्रा॒ । पर्ष॑थः । अति॑ । द्विषः॑ ॥ ५ ॥

**वेङ्कट०** कुटिलानि पापानि अश्विनौ! युवाम्[1] आभिमुख्येन जानीथः वृषण्वसू![2] युवाम् हि स्तुत्यौ! क्रूरौ! वा शत्रून् अति पर्षथः ॥ ५ ॥

[3]इति षष्ठाष्टके द्वितीयाध्याये षड्विंशो वर्गः[3] ॥

**द॒स्रा हि विश्व॑मानु॒षङ् म॒क्षूभि॑ः परि॒दीय॑थः । धि॒यं॒जि॒न्वा मधु॑वर्णा शु॒भस्पती॑ ॥ ६ ॥**

द॒स्रा । हि । विश्व॑म् । आ॒नु॒षक् । म॒क्षुऽभि॑ः । प॒रि॒ऽदीय॑थः । 
धि॒य॒म्ऽजि॒न्वा । मधु॑ऽवर्णा । शु॒भः । पती॒ इति॑ ॥ ६ ॥

**वेङ्कट०** दस्रौ हि विश्वम् अनुषक्तं क्षिप्रैः अश्वैः परिगच्छथः कर्माणि प्रीणयन्तौ[4] मधुवर्णौ उदकपती[5] ॥ ६ ॥

**उप॑ नो यातमश्विना रा॒या वि॑श्व॒पुषा॑ स॒ह । म॒घ॒वा॑ना सु॒वीरा॒वन॑पच्युता ॥ ७ ॥**

उप॑ । न॒ः । या॒त॒म् । अ॒श्वि॒ना॒ । रा॒या । वि॒श्व॒ऽपुषा॑ । स॒ह । म॒घ॒ऽवा॑ना । सु॒ऽवीरौ॑ । अन॑पऽच्युता ॥ ७ ॥

**वेङ्कट०** उप आ यातम् अस्मान् अश्विनौ! धनेन विश्वस्य पोषकेण सह धनवन्तौ सुवीरौ अनपच्युतौ[6] ॥ ७ ॥

**आ मे॑ अ॒स्य प्र॑ती॒व्य१॒॑मिन्द्र॑नासत्या गतम् । दे॒वा दे॒वेभि॑र॒द्य स॒चन॑स्तमा ॥ ८ ॥**

आ । मे॒ । अ॒स्य । प्र॒ती॒व्य॑म् । इन्द्र॑नासत्या । ग॒त॒म् । दे॒वा॒ । दे॒वेभि॑ः । अ॒द्य । स॒चन॑ःऽतमा ॥ ८ ॥

**वेङ्कट०** आ गच्छतम् मम अस्य स्तोत्रस्य प्रतीव्यम्[7] अग्रे इन्द्रनासत्यौ! देवौ देवैः अद्य अत्यन्तं सेव्यमानौ[8] ॥ ८ ॥

**व॒यं हि वां॒ हवा॑मह उक्ष॒ण्यन्तो॑ व्यश्व॒वत् । सु॒म॒तिभि॒रुप॑ विप्रावि॒हा ग॑तम् ॥ ९ ॥**

व॒यम् । हि । वा॒म् । हवा॑महे । उ॒क्ष॒ण्यन्त॑ः । व्य॒श्व॒ऽवत् । सु॒म॒तिऽभि॑ः । उप॑ । वि॒प्रौ॒ । इ॒ह । आ । ग॒त॒म् ॥ ९ ॥

**वेङ्कट०** वयम् हि वाम् हवामहे सेक्तारौ कामयमानाः पितृवत् । सुमतिभिः उप आ गतम् इह हे मेधाविनौ! ॥ ९ ॥

**अ॒श्वि॒ना॒ स्वृ॑षे स्तुहि कु॒वित् ते॒ श्रव॑तो॒ हव॑म् । नेदी॑यसः कूळयातः प॒णीँरु॒त ॥ १० ॥**

---

१. त्वाम् वि. २. वृषण्वती मूको. ३-३. नास्ति मूको. ४. प्रियन्तो वि[3]; °न्तो वा अ[1]. ५. °वती मूको. ६. अच्युतौ वि[3]. ७. प्रतीप्यम् वि[1]; प्रदीप्यम् अ[1]. ८. सेवमानौ मूको.

अश्विना । सु । ऋषे । स्तुहि । कुवित् । ते । श्रवतः । हवम् ।
नेदीयसः । कूळयातः । पणीन् । उत ॥ १० ॥

**वेङ्कट०** सुष्ठु 'स्तुहि अश्विनौ' ऋषे! । बहु ते ह्वानम् अश्विनौ शृणुतः । अन्तिकतमान् अपि च हिंस्तः[2] पणीन्[3] अश्विनौ इति ॥ १० ॥

[4]इति षष्ठाष्टके द्वितीयाध्याये सप्तविंशो वर्गः[4] ॥

वैयश्वस्य श्रुतं नरोतो मे अस्य वेदथः । सजोषसा वरुणो मित्रो अर्यमा ॥११॥

वैयश्वस्य । श्रुतम् । नरा । उतो इति । मे । अस्य । वेदथः ।
सऽजोषसा । वरुणः । मित्रः । अर्यमा ॥ ११ ॥

**वेङ्कट०** वैयश्वस्य विश्वमनसः[5] मम अपि च नरौ![6] शृणुतं[7] ह्वानम् । अपि च तत् मदीयं जानीतम् । अथ तत्[8] सङ्गतौ मित्रावरुणौ अर्यमा च शृण्वन्तु इति ॥ ११ ॥

युवादत्तस्य धिष्ण्या युवानीतस्य सूरिभिः । अहरहर्वृषणा मह्यं शिक्षतम् ॥१२॥

युवाऽदत्तस्य । धिष्ण्या । युवाऽनीतस्य । सूरिऽभिः । अहःऽअहः । वृषणा । मह्यम् । शिक्षतम् ॥ १२ ॥

**वेङ्कट०** युवाभ्यां यत् स्तोतृभ्यः दीयते हे धिषणार्हौ!, युवाभ्यां यत् नीयते स्तोतृभ्यः, अहरहः वृषणौ![9] मह्यम् च तादृशम् शिक्षतम्[10] ॥ १२ ॥

यो वां यज्ञेभिरावृतोऽधिवस्त्रा वधूरिव । सपर्यन्ता शुभे चक्राते अश्विना ॥१३॥

यः । वाम् । यज्ञेभिः । आऽवृतः । अधिऽवस्त्रा । वधूःऽइव ।
सपर्यन्ता । शुभे । चक्राते इति । अश्विना ॥ १३ ॥

**वेङ्कट०** यः मनुष्यः युवयोः यज्ञैः परिवृतः[11], उपरिनिहितवस्त्रा वधूः इव वस्त्रेण तम् अश्विनौ भवन्तौ शुभे चक्राते परिचरन्तौ इति । परोक्ष उत्तरः ॥ १३ ॥

यो वामुरुव्यचस्तमं चिकेतति नृपाय्यम् । वर्तिरश्विना परि यातमस्मयू ॥१४॥

यः । वाम् । उरुव्यचःऽतमम् । चिकेतति । नृऽपाय्यम् ।
वर्तिः । अश्विना । परि । यातम् । अस्मऽयू इत्यस्मऽयू ॥ १४ ॥

---

१-१. तुभ्यमश्वि° वि[2]; तुभ्यश्वि° अ[1]. २. हिंसत मूको. ३-३. °णीनपि च मूको. ४-४. नास्ति मूको. ५. °श्वम° मूको. ६. नराः मूको. ७. शृणुत मूको. ८. तम् मूको. ९. वृषणो मूको. १०. नास्ति अ[1]. ११. परिहित मूको.

वेङ्कट० यः वाम् अत्यन्तं व्याप्तम् नेतृभ्यां पातव्यं सोमम् बुध्यते, तस्य[1] मार्गम् अश्विनौ! परि गच्छतम् मां कामयमानौ ॥ १४ ॥

अस्मभ्यं सु वृषण्वसू यातं वर्तिर्नृपाय्यम् । विषुद्रुहेव यज्ञमूहथुर्गिरा ॥ १५ ॥

अस्मभ्यम् । सु । वृषण्वसू इति वृषण्ऽवसू । यातम् । वर्तिः । नृऽपाय्यम् ।
विषुद्रुहाऽइव । यज्ञम् । ऊहथुः । गिरा ॥ १५ ॥

वेङ्कट० अस्मदर्थम् वृषण्वसू! सुष्ठु यातम्[2] मार्गम् नृपाय्यम्[3] सोमं प्रति । युवाम् स्तुत्या यज्ञम् ऊहथुः मनुष्येषु । [4]विषुध्रुक् शरो[4] भवति विष्वग् हिनस्तीति तेन यथा मृगम् अभिलषितं देशं प्रापयति तद्वत् इति ॥ १५ ॥

[5]इति षष्ठाष्टके द्वितीयाध्याये अष्टाविंशो वर्गः[5] ॥

वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा । युवाभ्यां भूत्वश्विना ॥ १६ ॥

वाहिष्ठः । वाम् । हवानाम् । स्तोमः । दूतः । हुवत् । नरा । युवाभ्याम् । भूतु । अश्विना ॥१६॥

वेङ्कट० वोढृतमः वाम् स्तोत्राणां मध्ये मदीयः स्तोमः दूतभूतः[6] आह्वयति हे नरौ! । स चायं स्तोमः युवाभ्याम् भवतु प्रियकरः अश्विनौ! यज्ञे ॥ १६ ॥

यदुदो दिवो अर्णव इषो वा मदथो गृहे । श्रुतमिन्मे अमर्त्या ॥ १७ ॥

यत् । अदः । दिवः । अर्णवे । इषः । वा । मदथः । गृहे । श्रुतम् । इत् । मे । अमर्त्या ॥ १७ ॥

वेङ्कट० [7]यदि अस्य[7] द्युलोकस्य [8]अर्णवे अपां स्थाने[8] मदथः अपि च इच्छतः यजमानस्य गृहे, शृणुतम् एव मम स्तोत्रम् अमर्त्यौ! । यद्वा अदः[9] अमुष्मिन् इत्यर्थः ॥ १७ ॥

उत स्या श्वैतयावरी वाहिष्ठा वां नदीनाम् । सिन्धुर्हिरण्यवर्तनिः ॥ १८ ॥

उत । स्या । श्वेतऽयावरी । वाहिष्ठा । वाम् । नदीनाम् । सिन्धुः । हिरण्यऽवर्तनिः ॥ १८ ॥

वेङ्कट० अपि च एषा श्वेतयावरी[10] नाम, श्वेतजला यातीति । वोढृतमा युवयोः भवतु नदीनाम् मध्ये स्यन्दमाना हितरमणीयमार्गेति । याम् आश्रित्य नदीम् ऋषिः वसति ताम् आह ॥ १८ ॥

स्मदेतया सुकीर्त्याश्विना श्वेतया धिया । वहेथे शुभ्रयावाना ॥ १९ ॥

---

१. नास्ति मूको. २. पात मूको. ३. नृपार्थं मूको. ४-४. दुर्धरो मूको. ५-५. नास्ति मूको. ६. दूरभूत मूको. ७-७. यदीयस्य मूको. ८-८. °र्णवो वां स्वामे मदस्वामे मूको. ९. वः मूको. १०. श्वेतलावरि मूको.

स्मत् । एतया । सुऽकीर्त्या । अश्विना । श्वेतया । धिया । वहेथे इति । शुभ्रऽयावाना ॥ १९ ॥

वेङ्कट० शोभनम् एतया 'सुष्टुत्या श्वेतया' धारयित्र्या नद्या अश्विनौ! युवाम् उह्येथे[2] हे शुभ्रगमनौ! ॥ १९ ॥

युक्ष्वा हि त्वं रथासहा युवस्व पोष्या वसो ।
आन्नो वायो मधु पिबास्माकं सवना गहि ॥ २० ॥

युक्ष्व । हि । त्वम् । रथऽसहा । युवस्व । पोष्या । वसो इति ।
आत् । नः । वायो इति । मधु । पिब । अस्माकम् । सवना । आ । गहि ॥ २० ॥

वेङ्कट० अथ वायव्यः । युङ्क्ष्व[3] हि त्वम् रथस्य वहनशक्तौ वायो! रथेऽश्वौ । अथ[4] तौ अस्मासु मिश्रय आश्वासैः[5] पोष्यौ वासयितः! । अथ पिब च वायो! अस्माकम् मधु । अस्माकम् सवनानि आ गच्छ ॥ २० ॥

[6]इति षष्ठाष्टके द्वितीयाध्याये एकोनत्रिंशो वर्गः[6] ॥

तव वायवृतस्पते त्वष्टुर्जामातरद्भुत । अवांस्या वृणीमहे ॥ २१ ॥

तव । वायो इति । ऋतःऽपते । त्वष्टुः । जामातः । अद्भुत । अवांसि । आ । वृणीमहे ॥ २१ ॥

वेङ्कट० तव वायो! यज्ञस्य पते! त्वष्टुः जामातः!, इतिहासापेक्षम्[7], महन्! पालनानि आ वृणीमहे ॥ २१ ॥

त्वष्टुर्जामातरं वयमीशानं राय ईमहे । सुतावन्तो वायुं द्युम्ना जनासः ॥ २२ ॥

त्वष्टुः । जामातरम् । वयम् । ईशानम् । रायः । ईमहे । सुतऽवन्तः । वायुम् । द्युम्ना । जनासः ॥

वेङ्कट० त्वष्टुः जामातरम् वयम् ईश्वरम् धनानि याचामहे अभिषुतसोमाः [8]वायुम् अन्नानि[8] च जनाः ॥ २२ ॥

वायो याहि शिवा दिवो वहस्वा सु स्वश्व्यम् । वहस्व महः पृथुपक्षसा रथे ॥ २३ ॥

वायो इति । याहि । शिव । आ । दिवः । वहस्व । सु । सुऽअश्व्यम् ।
वहस्व । महः । पृथुऽपक्षसा । रथे ॥ २३ ॥

वेङ्कट० आ याहि वायो! दिवः कल्याणम्(?)[9] । प्रापय सुष्ठु आत्मीयं शोभनाश्वसङ्घम् । प्रापय पृथुपक्षसौ अश्वौ महांस्त्वम् रथे महान्तौ वाम् ॥ २३ ॥

---

१-१. °त्या शोभनया:श्वे° अ[1]. २. ऊहेथे वि[1]. ३. युङ्क्ष्वे मूको. ४. अह मूको. ५. इवासैः मूको.
६-६. नास्ति मूको. ७. इतिमासा° मूको. ८-८. वायुवनानि मूको. ९. स्वरतः सम्बोधनं साधीयः द्र.

त्वां हि सुप्सरस्तमं नृषदनेषु हूमहे । ग्रावाणं नाश्वपृष्ठं मंहना ॥ २४ ॥

त्वाम् । हि । सुप्सरःऽतमम् । नृऽसदनेषु । हूमहे । ग्रावाणम् । न । अश्वऽपृष्ठम् । मंहना ॥ २४ ॥

**वेङ्कट०** त्वाम् हि सुरूपतमम्[1] नृणां सदनेषु गृहेषु हूमहे दृषदम् इव व्याप्तपृष्ठम् महत्त्वेन ॥ २४ ॥

स त्वं नो देव मनसा वायो मन्दानो अग्रियः । कृधि वाजाँ अपो धियः ॥२५॥

सः । त्वम् । नः । देव । मनसा । वायो इति । मन्दानः । अग्रियः ।
कृधि । वाजान् । अपः । धियः ॥ २५ ॥

**वेङ्कट०** सः त्वम् अस्माकम् देव! मनसा वायो! मोदमानः मुख्यः कुरु [2]अन्नानि उदकानि[2] कर्माणि च इति ॥ २५ ॥

[3]इति षष्ठाष्टके द्वितीयाध्याये त्रिंशो वर्गः[3] ॥

[ २७ ]

[1]मनुर्वैवस्वत ऋषिः। विश्वे देवा देवता। प्रगाथश्छन्दः
( = विषमा बृहत्यः, समाः सतोबृहत्यः )[1]।

अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।
ऋचा यामि मरुतो ब्रह्मणस्पतिं देवाँ अवो वरेण्यम् ॥ १ ॥

अग्निः । उक्थे । पुरःऽहितः । ग्रावाणः । बर्हिः । अध्वरे ।
ऋचा । यामि । मरुतः । ब्रह्मणः । पतिम् । देवान् । अवः । वरेण्यम् ॥ १ ॥

**वेङ्कट०** मनुः वैवस्वतः। अग्निः शस्त्रे पुरोहितः। ग्रावाणः बर्हिः च यज्ञे पुरो निहिताः। ऋचा याचे मरुतः ब्रह्मणः पतिम् च देवान् च अन्यान् रक्षणम् वरणीयम्। वैश्वदेवानि सूक्तानीति ॥ १ ॥

आ पशुं गासि पृथिवीं वनस्पतीनुषासा नक्तमोषधीः ।
विश्वे च नो वसवो विश्ववेदसो धीनां भूत प्रावितारः ॥ २ ॥

आ । पशुम् । गासि । पृथिवीम् । वनस्पतीन् । उषसा । नक्तम् । ओषधीः ।
विश्वे । च । नः । वसवः । विश्वऽवेदसः । धीनाम् । भूत । प्रऽअवितारः ॥ २ ॥

**वेङ्कट०** हे अग्ने! त्वम् आ गच्छसि पशुम् पृथिवीम् वनस्पतीन् च तथाऽहोरात्रे च ओषधीः

---

१. सरूप° मूको. २-२. अन्नाद्यादराणि वि[2]; अन्नाद्यादराणि अ[1]. ३-३. नास्ति मूको.

च। अनेन अग्निना सह हे विश्वे अपि वसवः! अस्माकं कर्मणाम् भवत [1]प्रावितारः सर्वधनाः![1] ॥ २ ॥

प्र सू नं एत्वध्वरोऽ३ऽग्ना देवेषुं पूर्व्यः ।
आदित्येषु प्र वरुणे धृतव्रते मरुत्सु विश्वभानुषु ॥ ३ ॥

प्र । सु । नः । एतु । अध्वरः । अग्ना । देवेषुं । पूर्व्यः ।
आदित्येषुं । प्र । वरुणे । धृतऽव्रते । मरुतऽसुं । विश्वऽभानुषु ॥ ३ ॥

वेङ्कट० [2]प्र एतु[2] अस्माकम् अध्वरः अग्नौ देवेषु मुख्यः[3], प्र एतु आदित्येषु वरुणे च धृतकर्मणि मरुत्सु विश्वदीप्तिषु ॥ ३ ॥

विश्वे हि ष्मा मनवे विश्ववेदसो भुवन् वृधे रिशादसः ।
अरिष्टेभिः पायुभिर्विश्ववेदसो यन्ता नोऽवृकं छर्दिः ॥ ४ ॥

विश्वे । हि । स्म । मनवे । विश्वऽवेदसः । भुवन् । वृधे । रिशादसः ।
अरिष्टेभिः । पायुऽभिः । विश्वऽवेदसः । यन्त । नः । अवृकम् । छर्दिः ॥ ४ ॥

वेङ्कट० विश्वे हि स्म सर्वधना देवाः भवन्तु मनवे वर्धनायः रिशतामसितारः। अहिंसितैः पालनैः हे विश्वधनाः! प्रयच्छत अस्मभ्यम् अस्तेनम् गृहम् ॥ ४ ॥

आ नो अद्य समनसो गन्ता विश्वे सजोषसः ।
ऋचा गिरा मरुतो देव्यदिते सदने पस्त्ये महि ॥ ५ ॥

आ । नः । अद्य । सऽमनसः । गन्त । विश्वे । सऽजोषसः ।
ऋचा । गिरा । मरुतः । देवि । अदिते । सदने । पस्त्ये । महि ॥ ५ ॥

वेङ्कट० आ गच्छत[4] अस्मान् [5]अद्य सममनसः[5] सर्वे अपि सङ्गताः। ऋचा केवलया च गिरा शुश्रूषितया आगच्छत[6] निर्विशत[7]। मरुतः! इति वाक्यभेदाद् आमन्त्रिताद्युदात्तानि। निषदनस्थाने गृहे। महि! इति अदितेः विशेषणम् ॥ ५ ॥

[8]इति षष्ठाष्टके द्वितीयाध्याये एकत्रिंशो वर्गः[8] ॥

अभि प्रिया मरुतो या वो अश्व्या हव्या मित्र प्रयाथन ।
आ बर्हिरिन्द्रो वरुणस्तुरा नर आदित्यासः सदन्तु नः ॥ ६ ॥

---

१-१. प्रापितारः सर्वधनाम् मूको. २-२. प्रेतु मूको. ३. °ख्यम् मूको. ४. गच्छ मूको. ५-५ अनन्यसममनसः वि[2]; अनन्यसनमनसः अ[1]. ६. गच्छतां वि[2]; च गच्छतां अ[1]. ७. °शति मूको. ८-८. नास्ति मूको.

अभि । प्रिया । मरुतः । या । वः । अश्व्या । हव्या । मित्र । प्रऽयाथन ।
आ । बर्हिः । इन्द्रः । वरुणः । तुराः । नरः । आदित्यासः । सदन्तु । नः ॥ ६ ॥

**वेङ्कट०** अभि प्रापयत[1] हे मरुतः! यानि [2]वः प्रियाणि अश्व्यानि[2] अश्वसङ्घान्[3]। अथ मित्र! मरुतः! हवींषि [4]प्रयाथन। आ सीदन्तु[4] अस्माकम् बर्हिः इन्द्रादयः त्वरमाणाः नेतारः ॥ ६ ॥

वयं वो वृक्तबर्हिषो हितप्रयस आनुषक् ।
सुतसोमासो वरुण हवामहे मनुष्वदिद्धाग्नयः ॥ ७ ॥

वयम् । वः । वृक्तऽबर्हिषः । हितऽप्रयसः । आनुषक् ।
सुतऽसोमासः । वरुण । हवामहे । मनुष्वत् । इद्धऽअग्नयः ॥ ७ ॥

**वेङ्कट०** वयम् विस्तीर्णबर्हिषः निहितहविष्काः अनुषक्तम् सुतसोमाः वरुण! हवामहे मनुष्वत्[5] समिद्धाग्नयः[6] ॥ ७ ॥

आ प्र यात मरुतो विष्णो अश्विना पूषन् माकीनया धिया ।
इन्द्र आ यातु प्रथमः सनिष्युभिर्वृषा यो वृत्रहा गृणे ॥ ८ ॥

आ । प्र । यात । मरुतः । विष्णो इति । अश्विना । पूषन् । माकीनया । धिया ।
इन्द्रः । आ । यातु । प्रथमः । सनिष्युऽभिः । वृषा । यः । वृत्रऽहा । गृणे ॥ ८ ॥

**वेङ्कट०** आ प्र यात हे मरुदादयः! मदीयेन कर्मणा। इन्द्रः च[7] आ यातु मुख्यः, सम्भजनमिच्छद्भिः वृषा यः वृत्रहा स्तूयते ॥ ८ ॥

वि नो देवासो अद्रुहोऽच्छिद्रं शर्म यच्छत ।
न यद् दूराद् वसवो नू चिदन्तितो वरूथमादधर्षति ॥ ९ ॥

वि । नः । देवासः । अद्रुहः । अच्छिद्रम् । शर्म । यच्छत ।
न । यत् । दूरात् । वसवः । नु । चित् । अन्तितः । वरूथम् । आऽदधर्षति ॥ ९ ॥

**वेङ्कट०** वि यच्छत अस्मभ्यं देवाः! अद्रोग्धारः! अच्छिद्रम् गृहम्, दूरात् अन्तिकात् वा आगत्य कश्चित् यत् गृहम् न आधर्षति[8] हे वासयितारः! ॥ ९ ॥

अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् ।
प्र णः पूर्वस्मै सुविताय वोचत मक्षू सुम्नाय नव्यसे ॥ १० ॥

---

१. प्राचय मूको.　२-२. बोध्यान् मूको　३. °संघातान् अ[1].　४-४. प्रयच्छानासीःत्वम् मूको.
५. मनुष्यान् मूको.　६. समिद्धाग्नाय वि[2]; समृद्धान्नाय अ[1].　७. नास्ति मूको.　८. आधर्षयति अ[1].

अस्ति । हि । वः । सऽजात्यम् । रिशादसः । देवासः । अस्ति । आप्यम् ।
प्र । नः । पूर्वस्मै । सुवितायं । वोचत । मक्षु । सुम्नायं । नव्यसे ॥ १० ॥

वेङ्कट० अस्ति हि युष्माकम् सजात्यम् हे रिशतामसितारः! देवाः!, अस्ति च ज्ञातेयं वैवस्वतेन मया [1]मनुना। आप्यसजात्ययोः[1] अल्पो भेदः। प्र वोचत अस्मान् मुख्याय अभ्युदयाय शीघ्रं धनाय च नवतराय उभयम् अस्माकं ब्रूत इति ॥ १० ॥

[2]इति षष्ठाष्टके द्वितीयाध्याये द्वात्रिंशो वर्गः[2] ॥

इदा हि व उपस्तुतिमिदा वामस्य भक्तये ।
उप वो विश्ववेदसो नमस्युराँ असृक्ष्यन्यामिव ॥ ११ ॥

इदा । हि । वः । उपऽस्तुतिम् । इदा । वामस्य । भक्तये ।
उप । वः । विश्वऽवेदसः । नमस्युः । आ । असृक्षि । अन्याम्ऽइव ॥ ११ ॥

वेङ्कट० इदानीम् हि युष्माकम् उपस्तुतिम् इदानीमेव धनस्य भजनाय उप आ असृक्षि युष्माकं हे विश्वधनाः! अन्नमिच्छन् अन्यामिव[3]। अदृष्टपूर्वा अन्येति ॥ ११ ॥

उदु ष्य वः सविता सुप्रणीतयोऽस्थादूर्ध्वो वरेण्यः ।
नि द्विपादश्चतुष्पादो अर्थिनोऽविश्रन् पतयिष्णवः ॥ १२ ॥

उत् । ऊँ इति । स्यः । वः । सविता । सुऽप्रनीतयः । अस्थात् । ऊर्ध्वः । वरेण्यः ।
नि । द्विऽपादः । चतुःऽपादः । अर्थिनः । अविश्रन् । पतयिष्णवः ॥ १२ ॥

वेङ्कट० उत् अस्थात्[4] अयं युष्माकं मध्ये सविता हे सुप्रणीतयः! ऊर्ध्वः वरणीयः[5]। नि विशन्ते स्वेषु कार्येषु द्विपदाः चतुष्पदाः कार्यार्थिनः पक्षिणश्च ॥ १२ ॥

देवंदेवं वोऽवसे देवंदेवमभिष्टये ।
देवंदेवं हुवेम वाजसातये गृणन्तो देव्या धिया ॥ १३ ॥

देवम्ऽदेवम् । वः । अवसे । देवम्ऽदेवम् । अभिष्टये ।
देवम्ऽदेवम् । हुवेम । वाजऽसातये । गृणन्तः । देव्या । धिया ॥ १३ ॥

वेङ्कट० युष्माकं मध्ये[6] च [7]देवंदेवम् हवामहे[7] रक्षणाय, अनुक्रमेण देवंदेवम् अभिलषितसिद्ध्यर्थम्। देवंदेवम् हुवेम अन्नलाभाय स्तुवन्तः देव्या प्रज्ञया ॥ १३ ॥

---

१-१. मनुनापि असजा° मूको. २-२. नास्ति मूको. ३. अन्यानिव मूको. ४. अस्मात् मूको. ५. पराणियः मूको. ६. मदे मूको. ७-७. देवं हवा° मूको.

देवासो हि ष्मा मनवे समन्यवो विश्वे साकं सरातयः ।
ते नो अद्य ते अपरं तुचे तु नो भवन्तु वरिवोविदः ॥ १४ ॥

देवासः । हि । स्म । मनवे । सऽमन्यवः । विश्वे । साकम् । सऽरातयः ।
ते । नः । अद्य । ते । अपरम् । तुचे । तु । नः । भवन्तु । वरिवःऽविदः ॥ १४ ॥

**वेङ्कट०** देवाः हि स्म मनवे मह्यं समानमनसः सर्वे एव सह सदानाः भवन्ति । ते अस्माकम् अद्य ते च [1]अस्माकम् अन्येद्युः[1] पुत्राय च भवन्तु धनस्य लम्भयितारः ॥ १४ ॥

प्र वः शंसाम्यद्रुहः संस्थ उपस्तुतीनाम् ।
न तं धूर्तिर्वरुण मित्र मर्त्यं यो वो धामभ्योऽविधत् ॥ १५ ॥

प्र । वः । शंसामि । अद्रुहः । सम्ऽस्थे । उपऽस्तुतीनाम् ।
न । तम् । धूर्तिः । वरुण । मित्र । मर्त्यम् । यः । वः । धामऽभ्यः । अविधत् ॥ १५ ॥

**वेङ्कट०** प्र शंसामि युष्मान् हे अद्रोग्धारः ! संस्थाने उपस्तुतीनाम् यज्ञे । न तम् हिंसा बाधते मित्रावरुणौ ! मर्त्यम, यः युष्माकं शरीरेभ्यः प्रयच्छति हविः ॥ १५ ॥

प्र स क्षयं तिरते वि महीरिषो यो वो वराय दाशति ।
प्र प्रजाभिर्जायते धर्मणस्पर्यरिष्टः सर्व एधते ॥ १६ ॥

प्र । सः । क्षयम् । तिरते । वि । महीः । इषः । यः । वः । वराय । दाशति ।
प्र । प्रऽजाभिः । जायते । धर्मणः । परि । अरिष्टः । सर्वः । एधते ॥ १६ ॥

**वेङ्कट०** प्र वर्धयति सः गृहम्, वि वर्धयति महान्ति [2]अन्नानि, यः वः धनाय[2] प्रयच्छति । प्र जायते च प्रजाभिः कर्मणोऽनन्तरम् । तथा अरिष्टः ततश्च[3] सर्वः भवति ॥ १६ ॥

[4]इति षष्ठाष्टके द्वितीयाध्याये त्रयस्त्रिंशो वर्गः[4] ॥

ऋते स विन्दते युधः सुगेभिर्यात्यध्वनः ।
अर्यमा मित्रो वरुणः सरातयो यं त्रायन्ते सजोषसः ॥ १७ ॥

ऋते । सः । विन्दते । युधः । सुऽगेभिः । याति । अध्वनः ।
अर्यमा । मित्रः । वरुणः । सऽरातयः । यम् । त्रायन्ते । सऽजोषसः ॥ १७ ॥

**वेङ्कट०** विनाऽपि सः युद्धात् लभते अभिलषितम्, सुगैः अश्वैश्च याति [5]मार्गान्, यम् इमे[5] सदानाः रक्षन्ति [6]सङ्गताः सन्तः[6] ॥ १७ ॥

---

१-१. °कं वि[2]; °कमद्य अ°. २-२. अन्नानि ··· ध° नूको. ३. स्तुत° मूको. ४-४. नास्ति मूको. ५-५. °र्गान्यमीमे मूको. ६-६. °ता ··· मूको.

अग्ने चिदस्मै कृणुथा न्यञ्चनं दुर्गे चिदा सुसरणम् ।
एषा चिदस्मादशनिः परो नु सास्रेधन्ती वि नश्यतु ॥ १८ ॥

अग्ने । चित् । अस्मै । कृणुथ । निऽअञ्चनम् । दुःऽगे । चित् । आ । सुऽसरणम् ।
एषा । चित् । अस्मात् । अशनिः । परः । नु । सा । अस्रेधन्ती । वि । नश्यतु ॥ १८ ॥

**वेङ्कट०** गमने अपि[1] परपुरे[2] अस्मै कुरुत निगमनम् । तथा दुर्गे अपि सुसरणम्[3] । सा एषा अशनिः शत्रुविसृष्टम्[4] आयुधम् अस्मात् [5]मनोः परः[5] अहिंसती वि नश्यतु ॥ १८ ॥

यदद्य सूर्ये उद्यति प्रियक्षत्रा ऋतं दध ।
यन्निम्रुचि प्रबुधि विश्ववेदसो यद् वा मध्यंदिने दिवः ॥ १९ ॥

यत् । अद्य । सूर्ये । उत्ऽयति । प्रियऽक्षत्राः । ऋतम् । दध ।
यत् । निऽम्रुचि । प्रऽबुधि । विश्वऽवेदसः । यत् । वा । मध्यंदिने । दिवः ॥ १९ ॥

**वेङ्कट०** यत् अद्य सूर्ये उद्गच्छति हे प्रियबलाः ! कल्याणम् धारयत[6], यत् वा निम्रुचि[7] सायम्, यद्वा प्रबुधि प्रातः हे विश्वधनाः !, [8]यत् वा अह्नो मध्ये[8] । उत्तरत्र सम्बन्धः ॥ १९ ॥

यद् वाभिपित्वे असुरा ऋतं यते छर्दिर्येम वि दाशुषे ।
वयं तद् वो वसवो विश्ववेदस उप स्थेयाम मध्य आ ॥ २० ॥

यत् । वा । अभिऽपित्वे । असुराः । ऋतम् । यते । छर्दिः । येम । वि । दाशुषे ।
वयम् । तत् । वः । वसवः । विश्वऽवेदसः । उप । स्थेयाम । मध्ये । आ ॥ २० ॥

**वेङ्कट०** यत् वा अभिप्राप्तौ हे प्राज्ञाः ![9] यज्ञम् गच्छते वियेम[10] वियच्छथ गृहम् तेजो वा यजमानाय । वयम् तत् ऋतवत् छर्दिः हे वसवः ! विश्ववेदसः ![11] उप स्थेयाम, भवद्भिः प्रत्तस्य कल्याणस्य गृहस्य मध्ये तिष्ठामेति ॥ २० ॥

यदद्य सूर उदिते यन्मध्यंदिन आतुचि ।
वामं धत्थ मनवे विश्ववेदसो जुह्वानाय प्रचेतसे ॥ २१ ॥

यत् । अद्य । सूरे । उत्ऽइते । यत् । मध्यंदिने । आऽतुचि ।
वामम् । धत्थ । मनवे । विश्वऽवेदसः । जुह्वानाय । प्रऽचेतसे ॥ २१ ॥

---

१. नास्ति अ[1]. २. पुरः पुरो वि[1]; पुरे अ[1]. ३. सुसुराणाम् मूको. ४. °विस्पष्टम् मूको. ५-५. °नोऽपरात् मूको. ६. °यथ मूको. ७. ह्रींरुचि वि[1]; ह्रीरुत्रि अ[1]. ८-८. °द्वा होमम° मूको. ९ प्रज्ञाः वि[1]. १०. वियच्छ मूको. ११. विश्ववेदसोमस्य मूको.

**वेङ्कट०** यत् अद्य उदिते सूर्ये, मध्यन्दिने यत् वा आतुचि आनिम्रोचने[1] इति। अत्र तुचिः[2] गमनकर्मा। धनं दत्थ[3] मनवे हे विश्वधनाः! जुह्वते प्रकृष्टज्ञानाय। उत्तरत्र सम्बन्धः ॥ २१ ॥

वयं तद् वः सम्राज आ वृणीमहे पुत्रो न बहुपाय्यम्।
अश्याम तदादित्या जुह्वतो हविर्येन वस्योऽनशामहै ॥ २२ ॥

वयम्। तत्। वः। सम्ऽराजः। आ। वृणीमहे। पुत्रः। न। बहुऽपाय्यम्।
अश्याम। तत्। आदित्याः। जुह्वतः। हविः। येन। वस्यः। अनशामहै ॥ २२ ॥

**वेङ्कट०** वयम्[4] युष्माकम् तत् हे सम्राजः! आ वृणीमहे [5]पुत्रः न[5] बहुभिः भोज्यम्। अश्याम तत् वयम् हे आदित्याः! हविः जुह्वतः, येन श्रेयस्त्वम् अश्नुवीमहीति ॥ २२ ॥

[6]इति षष्ठाष्टके द्वितीयाध्याये चतुस्त्रिंशो वर्गः[6] ॥

## [२८]

[6]मनुर्वैवस्वत ऋषिः। विश्वे देवा देवता। गायत्री छन्दः, चतुर्थी पुरउष्णिक्[6]।

ये त्रिंशति त्रयस्परो देवासो बर्हिरासदन्। विदन्नह द्वितासनन् ॥ १ ॥

ये। त्रिंशति। त्रयः। परः। देवासः। बर्हिः। आ। असदन्। विदन्। अह। द्विता। असनन् ॥ १ ॥

**वेङ्कट०** ये त्रिंशति त्रयः परस्तात् तु। त्रयस्त्रिंशद्देवा इत्यर्थः। देवाः बर्हिः आ सीदन्ति, ते अजानन्। तस्मात् [7]द्विता द्वैधं[7] च प्रयच्छन्तु उभाभ्यां हस्ताभ्याम्। यद्वा पुनःपुनः ॥ १ ॥

वरुणो मित्रो अर्यमा स्मद्रातिषाचो अग्नयः। पत्नीवन्तो वषट्कृताः ॥ २ ॥

वरुणः। मित्रः। अर्यमा। स्मद्रातिऽसाचः। अग्नयः। पत्नीऽवन्तः। वषट्ऽकृताः ॥ २ ॥

**वेङ्कट०** वरुणः मित्रः अर्यमा कल्याणदानभाजनाः अग्नयः च नानाविधाः सपत्नीकाः ते मया वषट्कृताः ॥ २ ॥

ते नो गोपा अपाच्यास्त उदक्त इत्था न्यक्। पुरस्तात् सर्वया विशा ॥ ३ ॥

ते। नः। गोपाः। अपाच्याः। ते। उदक्। ते। इत्था। न्यक्। पुरस्तात्। सर्वया। विशा ॥ ३ ॥

**वेङ्कट०** अपाची[8] प्रतीची ततः ते अस्माकम् गोपायितारः, ततः उदक् उदीच्याः। ततः इत्यर्थे इत्था इति, ऊर्ध्वां[9] दक्षिणां वा निर्दिशति। ते न्यक् अधस्तात् पुरस्तात् च सर्वेण अनुचरवर्गेण सह ॥ ३ ॥

---

१. निम्रोचन मूको. २. स्तुतिः मूको. ३. दत्त मूको. ४. तद् वयम् अ॰. ५-५. स्तुतिश्च मूको. ६-६. नास्ति मूको. ७-७. दूवो द्वैतं मूको. ८. °वाची मूको. ९. अत्यूर्ध्वां मूको.

यथा वशन्ति देवास्तथेदसत् तदेषां नकिरा मिनत् । अरावा चन मर्त्यः ॥४॥

यथा । वशन्ति । देवाः । तथा । इत् । असत् । तत् । एषाम् । नकिः । आ । मिनत् । अरावा । चन । मर्त्यः ॥

**वेङ्कट०** यथा कामयन्ते देवाः तथा एव तत् भवति । तत् एषाम् न कश्चित् हिनस्ति । अप्रदाताऽपि मनुष्यः देवेभ्यः प्रयच्छतीति ॥ ४ ॥

सप्तानां सप्त ऋष्टयः सप्त द्युम्नान्येषाम् । सप्तो अधि श्रियो धिरे ॥ ५ ॥

सप्तानाम् । सप्त । ऋष्टयः । सप्त । द्युम्नानि । एषाम् । सप्तो इति । अधि । श्रियः । धिरे ॥ ५ ॥

**वेङ्कट०** 'सप्त गणा वै[1] मरुतः गणशः'[2] ( तै २,२,५,७ ) । तेषाम् सप्तानाम् ऋष्टयः च [3]सप्त भवन्ति[3], सप्त द्योतमानानि आयुधानि एषाम्, अपि वा सप्त अन्नानि । सप्त एव ते श्रियः अधि[4] धारयन्ति ॥ ५ ॥

[5]इति षष्ठाष्टके द्वितीयाध्याये पञ्चत्रिंशो वर्गः[5] ॥

[ २९ ]

[5]मनुर्वैवस्वत ऋषिः, कश्यपो वा मारीचः । विश्वे देवा देवता । द्विपदा विराट् छन्दः[5] ।

बभ्रुरेको विषुणः सूनरो युवाञ्ज्यङ्क्ते हिरण्ययम् ॥ १ ॥

बभ्रुः । एकः । विषुणः । सूनरः । युवा । अञ्जि । अङ्क्ते । हिरण्ययम् ॥ १ ॥

**वेङ्कट०** बभ्रुवर्णः एकः विष्वगञ्चनः सोमः शोभननरः युवा हिरण्मयम् आभरणम् अङ्क्ते शरीरे ॥ १ ॥

योनिमेक आ ससाद द्योतनोऽन्तर्देवेषु मेधिरः ॥ २ ॥

योनिम् । एकः । आ । ससाद । द्योतनः । अन्तः । देवेषु । मेधिरः ॥ २ ॥

**वेङ्कट०** योनिम् गृहम् एकः अग्निः आ असीदत् अभिद्योतमानः देवानां मध्ये प्राज्ञः ॥ २ ॥

वाशीमेको बिभर्ति हस्त आयसीमन्तर्देवेषु निध्रुविः ॥ ३ ॥

वाशीम् । एकः । बिभर्ति । हस्ते । आयसीम् । अन्तः । देवेषु । निऽध्रुविः ॥ ३ ॥

**वेङ्कट०** वाशीम्[6] आयसीम् एकः बिभर्ति हस्ते त्वष्टा [7]देवेषु मध्ये[7] निश्चले स्थाने अवस्थितः[8] ॥ ३ ॥

वज्रमेको बिभर्ति हस्त आहितं तेन वृत्राणि जिघ्नते ॥ ४ ॥

---

१. नास्ति मूको. २. मरुतः मूको. ३-३. भवन्ति सप्त अ[1]. ४. वि मूको. ५-५. नास्ति मूको. ६. वाइशं मूको. ७-७. देवम° मूको. ८. 'स्थितम् मूको.

वज्रम् । एकः । बिभर्ति । हस्ते । आऽहितम् । तेन । वृत्राणि । जिघ्नते ॥ ४ ॥

**वेङ्कट०** वज्रम् एकः बिभर्ति इन्द्रः हस्ते निहितम् । तेन वृत्राणि हन्ति ॥ ४ ॥

तिग्ममेको बिभर्ति हस्त आयुधं शुचिरुग्रो जलाषभेषजः ॥ ५ ॥

तिग्मम् । एकः । बिभर्ति । हस्ते । आयुधम् । शुचिः । उग्रः । जलाषऽभेषजः ॥ ५ ॥

**वेङ्कट०** तीक्ष्णम् एकः बिभर्ति हस्ते आयुधम् पिनाकम् ज्वलन् उद्गूर्णः सुखकरभेषजः[1] ॥ ५ ॥

पथ एकः पीपाय तस्करो यथाँ एष वेद निधीनाम् ॥ ६ ॥

पथः । एकः । पीपाय । तस्करः । यथा । एषः । वेद । निऽधीनाम् ॥ ६ ॥

**वेङ्कट०** मार्गान् एकः पूषा रक्षति चोर इव । सोऽयं पृथिव्यां निहितान् निधीन् वेत्ति ॥ ६ ॥

त्रीण्येक उरुगायो वि चक्रमे यत्र देवासो मदन्ति ॥ ७ ॥

त्रीणि । एकः । उरुऽगायः । वि । चक्रमे । यत्र । देवासः । मदन्ति ॥ ७ ॥

**वेङ्कट०** त्रीणि पदानि एकः उरुकीर्तिः वि चक्रमे विष्णुः । येषु लोकेषु देवाः मदन्ति ॥ ७ ॥

विभिर्द्वा चरत एकया सह प्र प्रवासेव वसतः ॥ ८ ॥

विऽभिः । द्वा । चरतः । एकया । सह । प्र । प्रवासाऽइव । वसतः ॥ ८ ॥

**वेङ्कट०** अश्वैः द्वौ चरतः । एकया सूर्यया सह [2]प्र वसतः[2] सदा इमौ । प्रवासिनौ इव सदा अश्विनौ ॥ ८ ॥

सदो द्वा चक्राते उपमा दिवि सम्राजा सर्पिरासुती ॥ ९ ॥

सदः । द्वा । चक्राते इति । उपऽमा । दिवि । सम्ऽराजा । सर्पिरासुती इति सर्पिःऽआसुती ॥

**वेङ्कट०** स्थानं[3] द्वौ चक्राते उपमानभूतौ मित्रावरुणौ दिवि सम्राजौ घृतं ययोः आसूयते[4] हूयते ॥ ९ ॥

अर्चन्त एके महि साम मन्वत तेन सूर्यमरोचयन् ॥ १० ॥

अर्चन्तः । एके । महि । साम । मन्वत । तेन । सूर्यम् । अरोचयन् ॥ १० ॥

---

१. 'करो भेषजः मूको. २-२. प्रवस्सुतः मूको. ३. स्थानात् वि'; स्थान अ'. ४. आसुते मूको.

वेङ्कट० अत्रयः महत् साम उच्चारयन्ति। तेन साम्ना सूर्यम् अरोचयत्[1] ॥ १० ॥

[2]इति षष्ठाष्टके द्वितीयाध्याये षट्त्रिंशो वर्गः[2] ॥

[ ३० ]

[2]मनुर्वैवस्वत ऋषिः। विश्वे देवा देवता। प्रथमा गायत्री, द्वितीया पुरउष्णिक्, तृतीया बृहती, चतुर्थी अनुष्टुप्[2]।

नहि वो अस्त्यर्भको देवासो न कुमारकः। विश्वे सतोमहान्त इत् ॥ १ ॥

नहि। वः। अस्ति। अर्भकः। देवासः। न। कुमारकः। विश्वे। सतःऽमहान्तः। इत् ॥ १ ॥

वेङ्कट० नहि वः भवति कश्चित् अर्भकः, [3]न अपि कुमारकः[3] देवाः!। सर्वे एव सतोमहान्तः एव। सर्वस्मात् विद्यमानात् पृथिव्यादेः ये महान्तस्ते सतोमहान्तः ॥ १ ॥

इति स्तुतासो असथा रिशादसो ये स्थ त्रयश्च त्रिंशच्च। मनोर्देवा यज्ञियासः ॥२॥

इति। स्तुतासः। असथ। रिशादसः। ये। स्थ। त्रयः। च। त्रिंशत्। च। मनोः। देवाः। यज्ञियासः ॥

वेङ्कट० इत्थं स्तुताः भवथ[4] हे रिशतामसितारः![5] देवाः!, ये भवथ त्रयः च त्रिंशत् च हे मनोः देवाः! यज्ञियाः! ॥ २ ॥

ते नस्त्राध्वं तेऽवत त उ नो अधि वोचत।
मा नः पथः पित्र्यान्मानवादधि दूरं नैष्ट परावतः ॥ ३ ॥

ते। नः। त्राध्वम्। ते। अवत। ते। ऊँ इति। नः। अधि। वोचत।
मा। नः। पथः। पित्र्यात्। मानवात्। अधि। दूरम्। नैष्ट। पराऽवतः ॥ ३ ॥

वेङ्कट० ते अस्मान् रक्षोभ्यः त्राध्वम्। ते रक्षत[6] धनप्रदानैः। ते अस्मान् अधि ब्रूत। मा अस्मान् पित्र्यात् मानवात् मार्गात् अपनयत। यम्[7] दूरम् मार्गं मनुष्याणां पिता मनुः चक्रे तमेव नयत[8] ॥ ३ ॥

ये देवास इह स्थन विश्वे वैश्वानरा उत।
अस्मभ्यं शर्म सप्रथो गवेऽश्वाय यच्छत ॥ ४ ॥

ये। देवासः। इह। स्थन। विश्वे। वैश्वानराः। उत।
अस्मभ्यम्। शर्म। सऽप्रथः। गवे। अश्वाय। यच्छत ॥ ४ ॥

---

१. °यत् मूको. २-२. नास्ति मूको. ३-३. नाम वि कुमा° मूको. ४. °वत मूको. ५. °ता मूको. ६. रक्षथ मूको. ७. यत् मूको. ८. नयतम् मूको.

**वेङ्कट०** हे [1]'देवाः! ये[1] इह भवथ यज्ञे सर्वे विघ्नरहिताः। अपि च अस्मभ्यम् सर्वतः पृथु [2]'सुखम् यच्छत[2], तथा अस्मदीयाय गवे अश्वाय च ॥ ४ ॥

[3]इति षष्ठाष्टके द्वितीयाध्याये सप्तत्रिंशो वर्गः[3] ॥

[ ३१ ]

[3]मनुर्वैवस्वत ऋषिः। आद्यानां चतसृणां यज्ञो यजमानश्च देवता, पञ्चम्यादि-नवम्यन्तानां दम्पती, शिष्टानां दम्पत्याशिषः। गायत्री छन्दः, नवमीचतुर्दश्यौ अनुष्टुभौ, दशमी पादनिचृत्, अन्त्याश्चतस्रः पङ्क्तयः[3]।

यो यजा॑ति॒ यजा॑त॒ इत् सु॒नव॑च्च॒ पचा॑ति च। ब्र॒ह्मेदिन्द्र॑स्य चाकनत् ॥ १ ॥

यः। यजा॑ति। यजा॑ते। इत्। सु॒नव॑त्। च॒। पचा॑ति। च॒। ब्र॒ह्मा। इत्। इन्द्र॑स्य। चा॒क॒न॒त् ॥

**वेङ्कट०** कात्यायनः—'यो यजाति द्व्यूनाऽत्रेज्यास्तवो[4] यजमानप्रशंसा च येत्यादिपञ्च दम्पत्योः [5]शिष्टास्तदाशिषः'[5] (ऋअ २, ८, ३१) इति। यः सकृत् यजते, स दृष्टफलः पुनःपुनः यजत एव, सुनोति च पचति च [6]'पुरोडाशम्। स्तोत्राणि एव इन्द्रस्य कामयते[6] ॥ १ ॥

पु॒रो॒ळाशं॒ यो अ॑स्मै॒ सोमं॒ रर॑त आ॒शिर॑म्। पादित् तं श॒क्रो अंह॑सः ॥ २ ॥

पु॒रो॒ळाश॑म्। यः। अ॒स्मै॒। सोम॑म्। रर॑ते। आ॒ऽशिर॑म्। पात्। इत्। तम्। श॒क्रः। अंह॑सः ॥

**वेङ्कट०** पुरोडाशम् यः[7] इन्द्राय सोमम् च प्रयच्छति आशिरसहितम्[8], रक्षति एव तम् शक्रः[9] पापात् ॥ २ ॥

तस्य॑ द्यु॒माँ अ॑सद् रथो॑ दे॒वजू॑तः॒ स शू॑शुवत्। विश्वा॑ व॒न्वन्न॑मि॒त्रिया॑ ॥ ३ ॥

तस्य॑। द्यु॒ऽमान्। अ॒स॒त्। रथः॑। दे॒वऽजू॑तः। सः। शू॒शु॒व॒त्। विश्वा॑। व॒न्वन्। अ॒मि॒त्रिया॑ ॥ ३ ॥

**वेङ्कट०** तस्य दीप्तिमान् भवति रथः देवप्रेरितः। सः वर्धते विश्वानि हिंसन् अमित्रकृतानि ॥ ३ ॥

अस्य॑ प्र॒जाव॑ती गृ॒हेऽस॑श्चन्ती दि॒वेदि॑वे। इळा॑ धेनु॒मती॑ दुहे ॥ ४ ॥

अस्य॑। प्र॒जाऽव॑ती। गृ॒हे। अस॑श्चन्ती। दि॒वेऽदि॑वे। इळा॑। धे॒नु॒ऽमती॑। दु॒हे॒ ॥ ४ ॥

---

१-१. ये देवाः मूको. २-२. °खमय° मूको. ३-३. नास्ति मूको. ४. धूना तेज्यास्तपः मूको. ५-५. °ष्टा अन्याः तथाशि° मूको. ६-६. नास्ति वि[1]. ७. व मूको. ८. आङ्गिरस° मूको. ९. रक्ष मूको.

**वेङ्कट०** अस्य गृहं स्वन्नं भवति। अहरहः धेनुमती इळा दुह्यते। धेनुः पयः धिनोति इति। यद्वा इळा गवां देवता, सा धेनुभिः धेनुमती भवति ॥ ४ ॥

या दंपती समनसा सुनुत आ च धावतः। देवासो नित्ययाशिरा ॥ ५ ॥

या। दंपती इति दम्ऽपती। सऽमनसा। सुनुतः। आ। च। धावतः।
देवासः। नित्यया। आऽशिरा ॥ ५ ॥

**वेङ्कट०** शौनकः— 'यज्वनोरेव दम्पत्योः पञ्च या दम्पती ऋचः' ॥ ( बृदे ६,७४ ) ॥

यौ दम्पती सुमनसौ सोमम् सुनुतः, आ च धावतः सोमं शोधयतः हे देवाः! नित्येन आशिरेण। उत्तरत्र सम्बन्धः ॥ ५ ॥

[1]इति षष्ठाष्टके द्वितीयाध्याये अष्टात्रिंशो वर्गः[1] ॥

प्रति प्राशव्याँ इतः सम्यञ्चा बर्हिराशाते। न ता वाजेषु वायतः ॥ ६ ॥

प्रति। प्राशव्यान्। इतः। सम्यञ्चा। बर्हिः। आशाते इति। न। ता। वाजेषु। वायतः ॥ ६ ॥

**वेङ्कट०** प्रति गच्छतः[2] प्राश्यान्[3] नवान्नादीन्[4]। सम्यञ्चौ च यज्ञम् व्याप्नुतः। न तौ शुष्यतः अन्नेषु ॥ ६ ॥

न देवानामपि ह्नुतः सुमतिं न जुगुक्षतः। श्रवो बृहद् विवासतः ॥ ७ ॥

न। देवानाम्। अपि। ह्नुतः। सुऽमतिम्। न। जुगुक्षतः। श्रवः। बृहत्। विवासतः ॥ ७ ॥

**वेङ्कट०** न देवानाम् अपि ह्नुतः[5]। अपिह्नवः[6] निह्नवः। तदेवाऽऽह—सुमतिम् न जुगुक्षतः न संवृणुतः। बृहत् अन्नम् देवेभ्यः प्रयच्छतः[7]। देवैः दत्तं प्रकाशयन्तौ '[8]पुनःपुनः यजतः[8] ॥ ७ ॥

पुत्रिणा ता कुमारिणा विश्वमायुर्व्यश्नुतः। उभा हिरण्यपेशसा ॥ ८ ॥

पुत्रिणा। ता। कुमारिणा। विश्वम्। आयुः। वि। अश्नुतः। उभा। हिरण्यऽपेशसा ॥ ८ ॥

**वेङ्कट०** पुत्रवन्तौ तत्रापि कुमारवन्तौ विश्वम् आयुः प्राप्नुतः, उभौ हिरण्यरूपैः[9] आभरणैः अलङ्कृताविति ॥ ८ ॥

वीतिहोत्रा कृतद्वसू दशस्यन्तामृताय कम्।
समूधो रोमशं हतो देवेषु कृणुतो दुवः ॥ ९ ॥

---

१-१. नास्ति मूको. २. °च्छतम् मूको. ३. तु. वैप १,२२४० i; प्राश्यानम् मूको. ४. नवान्ना° मूको. ५. ह्रुतः मूको. ६. °पिह्नवि वि[2]; अपि ह्नवः अ[1]. ७. °च्छथः अ[1]. ८-८. यजत पुनः पुनः अ[1]. ९. °रूपौ मूको.

वीतिऽहोत्रा । कृतद्वसू इति कृतत्ऽवसू । दशस्यन्ता । अमृताय । कम् ।
सम् । ऊधः । रोमशम् । हतः । देवेषु । कृणुतः । दुवः ॥ ९ ॥

**वेङ्कट०** प्रिययज्ञौ कृतधनौ प्रयच्छन्तौ यजमानेभ्यः अन्नम् अमरणाय सुखकरम् । सम् हतः[1] [2]रोमशम् ऊधः[2] इति मैथुनानुभाषणम् । देवेषु च कुरुतः[3] परिचर्याम् ॥ ९ ॥

आ शर्म पर्वतानां वृणीमहे नदीनाम् । आ विष्णोः सचाभुवः ॥ १० ॥

आ । शर्म । पर्वतानाम् । वृणीमहे । नदीनाम् । आ । विष्णोः । सचाऽभुवः ॥ १० ॥

**वेङ्कट०** आ वृणीमहे सुखम् पर्वतानाम् नदीनाम् च तथा विष्णोः च देवैः सह भवतः ॥ १० ॥

[4]इति षष्ठाष्टके द्वितीयाध्याये एकोनचत्वारिंशो वर्गः[4] ॥

ऐतु पूषा रयिर्भगः स्वस्ति सर्वधातमः । उरुरध्वा स्वस्तये ॥ ११ ॥

आ । एतु । पूषा । रयिः । भगः । स्वस्ति । सर्वऽधातमः । उरुः । अध्वा । स्वस्तये ॥ ११ ॥

**वेङ्कट०** आ गच्छतु पूषा दाता भगः च स्वस्ति सर्वेषां धारयितृतमः । विस्तीर्णः पन्थाः च अस्माकम् अविनाशाय भवतु ॥ ११ ॥

अरमतिरनर्वणो विश्वो देवस्य मनसा । आदित्यानामनेह इत् ॥ १२ ॥

अरमतिः । अनर्वणः । विश्वः । देवस्य । मनसा । आदित्यानाम् । अनेहः । इत् ॥ १२ ॥

**वेङ्कट०** पर्याप्तस्तुतिः अप्रत्यृतस्य[5] सर्वः एव जनः देवस्य मनसा भवति । आदित्यानाम् [6]सर्वेषाम् अपापम्[6] एव दानमिति ॥ १२ ॥

यथा नो मित्रो अर्यमा वरुणः सन्ति गोपाः । सुगा ऋतस्य पन्थाः ॥ १३ ॥

यथा । नः । मित्रः । अर्यमा । वरुणः । सन्ति । गोपाः । सुऽगाः । ऋतस्य । पन्थाः ॥ १३ ॥

**वेङ्कट०** यथा अस्माकम् इमे मित्रादयः भवन्ति गोपायितारः, तथा सुगमनाः भवन्तु एषां यज्ञस्य पन्थानः ॥ १३ ॥

अग्निं वः पूर्व्यं गिरा देवमीळे वसूनाम् ।
सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम् ॥ १४ ॥

---

१. हतौ मूको. २-२. °शधूमः मूको. ३. कुरुतं मूको. ४-४. नास्ति मूको. ५. अप्रत्यु° मूको. ६-६. °षामे वापा° मूको.

अग्निम् । वः । पूर्व्यम् । गिरा । देवम् । ईळे । वसूनाम् ।
सपर्यन्तः । पुरुऽप्रियम् । मित्रम् । न । क्षेत्रऽसाधसम् ॥ १४ ॥

**वेङ्कट०** अग्निम् युष्माकं मुख्यम् गिरा देवम् स्तौमि धनार्थम्। परिचरन्तः बहुप्रियम् मित्रम् इव क्षेत्रस्य साधकम् मनुष्याः ॥ १४ ॥

मक्षू देववतो रथः शूरो वा पृत्सु कासु चित् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ १५ ॥

मक्षु । देवऽवतः । रथः । शूरः । वा । पृत्ऽसु । कासु । चित् ।
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥१५॥

**वेङ्कट०** शीघ्रं प्रविशति देववतः[1] रथः[2], यथा शूरः कश्चन कासु चित् पृतनासु प्रविशति। देवानाम् यः मनः यजमानः यष्टुम् इच्छति, सः अभि भवति एव अयज्वनः[3] ॥ १५ ॥

न यजमान रिष्यसि न सुन्वान न देवयो ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ १६ ॥

न । यजमान । रिष्यसि । न । सुन्वान । न । देवयो इति देवऽयो ।
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥१६॥

**वेङ्कट०** न त्वम् यजमान! रिष्यसि, न च सुन्वान!, न अपि हे देवकाम!। देवानाम् इति गतम् ॥ १६ ॥

नकिष्टं कर्मणा नशन्न प्र योषन्न योषति ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ १७ ॥

नकिः । तम् । कर्मणा । नशत् । न । प्र । योषत् । न । योषति ।
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥१७॥

**वेङ्कट०** न कश्चित् तम् कर्मणा व्याप्नोति, न प्रकर्षेण स्वस्मात् स्थानात् [4]पृथक् करोति[4], न अपि किञ्चित् पृथक् करोति इति ॥ १७ ॥

असदत्र सुवीर्यमुत त्यदाश्वश्व्यम् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत् ॥ १८ ॥

असत् । अत्र । सुऽवीर्यम् । उत । त्यत् । आशुऽअश्व्यम् ।
देवानाम् । यः । इत् । मनः । यजमानः । इयक्षति । अभि । इत् । अयज्वनः । भुवत् ॥१८॥

---

१. देवस्त्वत्तः मूको. २. रथे मूको. ३. यावज्ज्वलनः मूको. ४-४. पृथक्° मूको.

**वेङ्कट०** असत् भवति अत्र सुवीर्यम् । अपि च तत् शीघ्राश्वसंघयुक्तम्[1] । देवानाम् इति समानमिति ॥ १८ ॥

[2]इति षष्ठाष्टके द्वितीयाध्याये चत्वारिंशो वर्गः[2] ॥

षष्ठे द्वितीयमध्यायं व्याचकारेति माधवः ।
पौत्रः श्रीमाधवार्यस्य वर्जयञ्छन्दविस्तरम् ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने षष्ठाष्टके द्वितीयोऽध्यायः ॥

—*—

## इति ऋग्वेदे सभाष्ये षष्ठाष्टके द्वितीयोऽध्यायः ॥



१. °घ्राश्वसंयुक्तान् मूको. २-२. नास्ति मूको.

अथ तृतीयोऽध्यायः ।

वेङ्कट०

'प्र [1]कृतान्यृजीषिणो(णः' अ)थ व्याचिख्यासति[1] माधवः ।
प्रदर्शयन् बृहत्यादेर्लक्षणानि पृथक्पृथक् ॥ १ ॥

[2]पदैः समेता[2] बृहती चतुर्भि-
स्त्रयोऽष्टका द्वादशकस्तृतीयः[3] ।
सा स्याद् 'अ॒भि त्वे(त्वा॒'[4] इ)ति रथन्तराद्या
सोक्ता निदानेऽपि च स्कन्धोग्रीवी[5] ॥ २ ॥

यस्या भवेद् द्वादशकः[6] पुरस्तात्
[7]सोक्ता पुरस्ताद्[7] बृहतीति विप्रैः ।
'म॒हो यस्पति॑ः शव॑सो असा॒म्य॑'[8]
तस्मिन् द्वितीये बहुधा प्रवादः ॥ ३ ॥

पिङ्गलस्य मते सा स्यान्महर्षेर्न्यङ्कुसारिणी[9] ।
स्कन्धोग्रीवी क्रौष्टुकेस्तु[10] यास्कस्योरोबृहत्यपि ॥ ४ ॥

सा 'मत्स्य॒पायि ते॒ मह॑ः'[11] अन्त्यो द्वादशको यदि ।
उपरिष्टाद्बृहत्येषा 'न तमंह॑ः'[12] च तादृशी ॥ ५ ॥

यद्यष्टाक्षरयोर्मध्ये पादौ स्यातां दशाक्षरौ ।
सा स्याद्विष्टारबृहती 'यु॒वं ह्यास्तं॑ म॒हो'[13] इति ॥ ६ ॥

त्रयो द्वादशका यस्याः तामूर्ध्वबृहतीं विदुः ।
'अजी॑जनो अमृत'[14] सा 'प्र३लं२ पीयू३१२षम्'[15] इत्यपि ॥ ७ ॥

यदि त्वष्टाक्षरो मध्ये त्रयोदशकयोर्भवेत् ।
सा पिपीलिकमध्या स्यात् 'अ॒भि वो॑ वी॒रमन्ध॑सः'[16] ॥ ८ ॥

'सनि॑तः सुस॑नितरुग्र॑'[17] नवाष्टैकादशाष्टकाः ।
बृहत्येषा तु विषमपदेति कवयो विदुः ॥ ९ ॥

---

१-१. °णो व्या° वेंऋअ. २. पादैः सतः वि[2] अ[1]. ३. °तीये वि[2] अ[1]. ४. ऋ ८,३,७. ५. °ग्रीवा वि[2]. ६. °कम् वि[2] अ[1]. ७-७. त्रुटितम् वि[2] अ[1]. ८. ऋ १०,२२,३. ९. °ङ्कुसंकरी अ[1]; °ङ्कुसक्करि° वि[2]. १०. कौष्टुतेस्तु मूको. ११. ऋ १,१७५.१ १२. १०,१२६,१. १३. ऋ १, १२०,७. १४. ऋ ९,११०,४. १५. कौ २,८४४. १६. ऋ ८,४६,१४. १७. ऋ ८,४६,२०.

'तं त्वा वयं पितो'[1] सैषा चतुर्भिर्नवकैर्युता ।
बृहत्येवेति कथिता बृहत्यो नव बह्वृचैः ॥ १० ॥

भवन्ति पाङ्क्तानि पदानि पञ्च
तामाहुर् 'इन्द्रो मदाय वावृधे'[2] ।
पादैश्चतुर्भिर्दशकैर्विराट् स्यात्
'ऋतस्य पथि वेधा अपायि'[3] ॥ ११ ॥

आद्यं पदं द्वादशकं तृतीयम्
अथाष्टकौ द्वौ भवतश्च पादौ ।
सतोबृहत्याख्यमिदं वदन्ति
'न त्वावाँ अन्यो दिव्यो न पार्थिवः'[4] ॥ १२ ॥

विपर्यये सा विपरीतनाम्नी
तत्राष्टकावाद्यतृतीयपादौ ।
तामाहुर् 'य ऋष्वः श्रावयत्सखा'[5]
प्रस्तारपङ्क्तेरथ पादक्लृप्तिः ॥ १३ ॥

आद्यौ पादौ जागतावष्टकौ च
'उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः'[6] ।
आस्तारपङ्क्तिर्विपरीतपादा[7]
'अग्निं न'[8] सूक्तं कथयन्ति सर्वम् ॥ १४ ॥

आद्यान्त्यौ[9] चेज्जागतौ सम्प्रदिष्टा[10]
संस्तारपङ्क्तिः कविभिः पुराणैः ।
निदर्शनम् 'पितुभृतो न तन्तु-
मित्'[11] तु प्रदिष्टमिह शौनकेन ॥ १५ ॥

आम्नायते च द्विपदासु सेयम्
अधीयते च [12]द्विपदैव विप्रैः[12] ।
संस्तारपङ्क्तिश्च भवेत् समस्ता
विष्टारपङ्क्तेरथ पादक्लृप्तिः ॥ १६ ॥

---

१. ऋ १,१८७,११. २. ऋ १,८१,१. ३. ऋ ६,४४,८. ४. ऋ ७,३२,२३. ५. ऋ ८,४६,१२. ६. ऋ १०,१८,११. ७. आस्थानप° मूको. ८. ऋ १०,२१,१. ९. आद्यान्तौ वेंऋअ. १०. °दिष्टौ वि[1]. ११. ऋ १०,१७२,३. १२-१२. द्विपदास्समस्ताः वि[2] अ[1].

अनुष्टुभोर्द्वादशकौ[१] च मध्ये
सा चेयम् 'अग्ने तव श्रवो वयः'[२]।
विष्टारपङ्क्तिश्च[३] निदानकारो
विष्टब्धावेतौ पङ्क्तिपादाविति ॥ १७ ॥

## [ ३२ ]

[४]मेधातिथिः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः[४] ।

**प्र कृतान्यृजीषिणः कण्वा इन्द्रस्य गाथया । मदे सोमस्य वोचत ॥ १ ॥**

प्र । कृतानि । ऋजीषिणः । कण्वाः । इन्द्रस्य । गाथया । मदे । सोमस्य । वोचत ॥ १ ॥

**वेङ्कट०** मेधातिथिः । [५]प्र ब्रूत कृतानि[५] कर्माणि ऋजीषवतः हे कण्वाः! इन्द्रस्य वाचा सोमस्य मदे सञ्जाते ॥ १ ॥

**यः सृबिन्दमनर्शनिं पिप्रुं दासमहीशुवम् । वधीदुग्रो रिणन्नपः ॥ २ ॥**

यः । सृबिन्दम् । अनर्शनिम् । पिप्रुम् । दासम् । अहीशुवम् । वधीत् । उग्रः । रिणन् । अपः ॥

**वेङ्कट०** यः एतान् अवधीत् उदकानि प्रेरयन् उद्गूर्णः ॥ २ ॥

**न्यर्बुदस्य विष्टपं वर्ष्माणं बृहतस्तिर । कृषे तदिन्द्र पौंस्यम् ॥ ३ ॥**

नि । अर्बुदस्य । विष्टपम् । वर्ष्माणम् । बृहतः । तिर । कृषे । तत् । इन्द्र । पौंस्यम् ॥ ३ ॥

**वेङ्कट०** [६]नि तिर[६] विध्य मेघस्य स्थानम् उदकस्य वारकम् महतः । कुरु इन्द्र! तत् बलम् ॥ ३ ॥

**प्रति श्रुताय वो धृषत् तूर्णाशं न गिरेरधि । हुवे सुशिप्रमूतये ॥ ४ ॥**

प्रति । श्रुताय । वः । धृषत् । तूर्णाशम् । न । गिरेः । अधि । हुवे । सुऽशिप्रम् । ऊतये ॥ ४ ॥

**वेङ्कट०** प्रति हुवे धृषन्तं शत्रून् युष्माकं स्तुतीनां श्रवणाय, यथा घर्माभितप्तः[७] उदकम् ( तु. या ५,१६ ) मेघात् प्रतिह्वयति, सुहनुम् रक्षणाय ॥ ४ ॥

**स गोरश्वस्य वि व्रजं मन्दानः सोम्येभ्यः । पुरं न शूर दर्षसि ॥ ५ ॥**

सः । गोः । अश्वस्य । वि । व्रजम् । मन्दानः । सोम्येभ्यः । पुरम् । न । शूर । दर्षसि ॥ ५ ॥

**वेङ्कट०** सः त्वम् गोः अश्वस्य च व्रजम् मोदमानः[८] सोमार्हेभ्यः पुरम् इव शत्रूणाम् शूर! विवृतद्वारं करोषि ॥ ५ ॥

[४]इति षष्ठाष्टके तृतीयाध्याये प्रथमो वर्गः[४] ॥

---

१. आनुष्टुभौ वि[२] अ[१]. २. ऋ १०,१४०,१; वयम् वेंऋअ, ३-३. °पङ्क्तौ च अ[१] वि. ४-४. नास्ति मूको. ५-५. प्रकृतानि वि[१]; प्रब्रूतानि अ[१]. ६-६. नवतिरपि वि[१]; नतिरपि अ[१], ७. कर्माभि° मूको. ८. मदमानः मूको.

यदि॑ मे र॒रणः॑ सु॒त उ॒क्थे वा॒ दध॑से॒ चनः॑ । आ॒रादुप॑ स्व॒धा ग॑हि ॥ ६ ॥

यदि॑ । मे॒ । र॒रणः॑ । सु॒ते । उ॒क्थे । वा॒ । दध॑से । चनः॑ । आ॒रात् । उप॑ । स्व॒धा । आ । ग॒हि॒ ॥

वेङ्कट० यदि मे रमसे सोमे उक्थे वा, प्रयच्छसि अन्नम् । दूराद् उप आ गच्छ बलेन ॥ ६ ॥

व॒यं घा॑ ते॒ अपि॑ ष्मसि स्तो॒तार॑ इन्द्र गिर्वणः । त्वं नो॑ जिन्व सोमपाः ॥ ७ ॥

व॒यम् । घ॒ । ते॒ । अपि॑ । स्म॒सि॒ । स्तो॒तारः॑ । इ॒न्द्र॒ । गि॒र्व॒णः॒ । त्वम् । नः॒ । जि॒न्व॒ । सो॒म॒ऽपाः॒ ॥

वेङ्कट० वयम् खलु [1]ते अपि भवामः[1] स्तोतारः इन्द्र! गीर्भिर्वननीय! । त्वम् अस्मान् प्रीणयसि हे सोमस्य पातः! ॥ ७ ॥

उ॒त नः॑ पि॒तुमा भ॑र संर॒रा॒णो अवि॑क्षितम् । मघ॑व॒न् भूरि॑ ते॒ वसु॑ ॥ ८ ॥

उ॒त । नः॒ । पि॒तुम् । आ । भ॒र॒ । स॒म्ऽर॒रा॒णः । अवि॑ऽक्षितम् । मघ॑ऽवन् । भूरि॑ । ते॒ । वसु॑ ॥८॥

वेङ्कट० अपि च अस्मभ्यम् अन्नम् आ हर संरममाणः अविक्षीणम् मघवन्!, भूरि हि ते धनम् ॥ ८ ॥

उ॒त नो॒ गोम॑तस्कृधि॒ हिर॑ण्यवतो अ॒श्विनः॑ । इळा॑भिः सं र॑भेमहि ॥ ९ ॥

उ॒त । नः॒ । गोऽम॑तः । कृ॒धि॒ । हिर॑ण्यऽवतः । अ॒श्विनः॑ । इळा॑भिः । सम् । र॒भे॒म॒हि॒ ॥ ९ ॥

वेङ्कट० अपि च अस्मान् पशुमतः कुरु हिरण्यवतः अश्ववतश्च । अन्नैः च[2] सम् रभामहे[3] ॥ ९ ॥

बृ॒बदु॑क्थं हवामहे सृ॒प्रक॑रस्नमू॒तये॑ । साधु॑ कृ॒ण्वन्त॒मव॑से ॥ १० ॥

बृ॒बत्ऽउ॑क्थम् । ह॒वा॒म॒हे॒ । सृ॒प्रऽक॑रस्नम् । ऊ॒तये॑ । साधु॑ । कृ॒ण्वन्त॑म् । अव॑से ॥ १० ॥

वेङ्कट० महत् बृबत् इति यास्कः । 'बृबदुक्थो महदुक्थः । वक्तव्यमस्मा उक्थम् इति बृबदुक्थो वा' ( या ६,४ )। हवामहे प्रसृतबाहुम् रक्षणाय साधु कृण्वन्तम्[4] रक्षणाय ॥ १० ॥

[5]इति षष्ठाष्टके तृतीयाध्याये द्वितीयो वर्गः[5] ॥

यः सं॒स्थे चि॑च्छ॒तक्र॑तु॒रादीं॑ कृ॒णोति॑ वृत्र॒हा । ज॒रि॒तृभ्यः॑ पु॒रू॒वसुः॑ ॥ ११ ॥

यः । स॒म्ऽस्थे । चि॒त् । श॒तऽक्र॑तुः । आत् । ई॒म् । कृ॒णोति॑ । वृ॒त्र॒ऽहा । ज॒रि॒तृऽभ्यः॑ । पु॒रु॒ऽवसुः॑ ॥११॥

वेङ्कट० यः सङ्ग्रामे बहुकर्मा भवति, अपि च तत् युद्धं करोति वृत्रहा बहुधनः स्तोतृभ्यः ॥ ११ ॥

स नः॑ श॒क्रश्चि॒दा श॑कद् दान॑वाँ अन्तराभ॒रः । इन्द्रो॒ विश्वा॑भिरू॒तिभिः॑ ॥१२॥

---

१-१. तेविभवा मूको.  २. चाश्वैः वि[2].  ३. °रभाहमे वि[2] अ[1].  ४. कृगुतं वि[2]; कृण्वतं अ[1].
५-५. नास्ति मूको.

सः । नः । शक्रः । चित् । आ । शकत् । दानऽवान् । अन्तरऽआभरः । इन्द्रः । विश्वाभिः । ऊतिऽभिः ॥१२॥

**वेङ्कट०** सः शक्तः अस्मान् अपि शक्तान् करोति दानवान् अन्तराहरः श्वभ्राणि[1] आपूरयन्[2], छिद्रापिधायी[3] इन्द्रः विश्वैः पालनैः ॥ १२ ॥

यो रायो३ऽवनिर्महान्त्सुपारः सुन्वतः सखा । तमिन्द्रमभि गायत ॥ १३ ॥

यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा । तम् । इन्द्रम् । अभि । गायत ॥१३॥

**वेङ्कट०** यः धनस्य रक्षकः महान् शोभनपरणः[4] सुन्वतः सखा, तम् इन्द्रम् अभि गायत ॥ १३ ॥

आयन्तारं महि स्थिरं पृतनासु श्रवोजितम् । भूरेरीशानमोजसा ॥ १४ ॥

आऽयन्तारम् । महि । स्थिरम् । पृतनासु । श्रवःऽजितम् । भूरेः । ईशानम् । ओजसा ॥ १४ ॥

**वेङ्कट०** आभिमुख्येन यच्छन्तम् महान्तम् स्थिरम् सङ्ग्रामेषु[5] श्रवसो जेतारम् भूरेः ईशानम् बलेन अभिगायतेति ॥ १४ ॥

नकिरस्य शचीनां नियन्ता सूनृतानाम् । नकिर्वक्ता न दादिति ॥ १५ ॥

नकिः । अस्य । शचीनाम् । निऽयन्ता । सूनृतानाम् । नकिः । वक्ता । न । दात् । इति ॥१५॥

**वेङ्कट०** न कश्चित् अस्य कर्मणाम्[6] नियन्ता शोभनानाम् । न कश्चित् वक्ता न अयं प्रयच्छति इति ॥ १५ ॥

[7]इति षष्ठाष्टके तृतीयाध्याये तृतीयो वर्गः[7] ॥

न नूनं ब्रह्मणामृणं प्राशूनामस्ति सुन्वताम् । न सोमो अप्रता पपे ॥ १६ ॥

न । नूनम् । ब्रह्मणाम् । ऋणम् । प्राशूनाम् । अस्ति । सुन्वताम् । न । सोमः । अप्रता । पपे ॥१६॥

**वेङ्कट०** न खलु ब्राह्मणानाम् सुन्वताम् ऋणम्[8] भवति, [9]'ये सोमं प्राश्नन्ति'[9] । न सोमः अव्रतेन पीयते । अविस्तीर्णधनः अव्रतः अप्रयतो[10] वा इति ॥ १६ ॥

पन्य इदुप गायत पन्य उक्थानि शंसत । ब्रह्मा कृणोत पन्य इत् ॥ १७ ॥

पन्ये । इत् । उप । गायत । पन्ये । उक्थानि । शंसत । ब्रह्म । कृणोत । पन्ये । इत् ॥ १७ ॥

**वेङ्कट०** स्तुत्ये एव इन्द्रे[11] उप गायत । पन्ये उक्थानि च शंसत । अन्यानि च ब्रह्माणि कृणुत[12] [7]पन्ये एव[7] ॥ १७ ॥

---

१. बिभ्राणा मूको. २. °रन्नं वि[२]; °रयन्तं अ[१]. ३. छिद्राविधाजी मूको. ४. °नवरण मूको. ५. °मेषु जयते मूको. ६. कर्म वि[२]; कर्मा अ[१]. ७-७. नास्ति मूको. ८. ऋतं मूको. ९-९. चे सोममाप्राश्नाति वि[२]. १०. वैप १,३०८ p द्र.; °प्रयातो वि[२]. ११. इन्द्रम् मूको. १२. कंतुत मूको.

पन्य आ दर्दिरच्छता सहस्रा वाज्यवृतः । इन्द्रो यो यज्वनो वृधः ॥ १८ ॥

पन्यः । आ । दर्दिरत् । शता । सहस्रा । वाजी । अवृतः । इन्द्रः । यः । यज्वनः । वृधः ॥ १८ ॥

**वेङ्कट०** स्तुत्यः[1] इन्द्रः आभिमुख्येन दारयति वीराणां शतानि सहस्राणि च बलवान् अवृतः शत्रुभिः, इन्द्रः यः यज्वनः वर्धयिता ॥ १८ ॥

वि षू चर स्वधा अनु कृष्टीनामन्वाहुवः । इन्द्र पिब सुतानाम् ॥ १९ ॥

वि । सु । चर । स्वधाः । अनु । कृष्टीनाम् । अनु । आऽहुवः । इन्द्र । पिब । सुतानाम् ॥ १९ ॥

**वेङ्कट०** सुष्ठु वि चर हवींषि अनु[2] मनुष्याणाम् आह्वातव्यः । अनु द्वितीयः पूरणः । [3]इन्द्र! पिब[3] सुतान् ॥ १९ ॥

पिब स्वधैनवानामुत यस्तुग्र्ये सचा । उतायमिन्द्र यस्तव ॥ २० ॥

पिब । स्वऽधैनवानाम् । उत । यः । तुग्र्ये । सचा । उत । अयम् । इन्द्र । यः । तव ॥ २० ॥

**वेङ्कट०** पिब सोमान्[4] स्वभूतपयसः । धेनोः इदं धैनवम् । अपि च यः सोमः उदके संस्पृष्टः, अपि च अयम् सोमः त्वया पातव्यः इन्द्र!, यः त्वदीयः ॥ २० ॥

[5]इति षष्ठाष्टके तृतीयाध्याये चतुर्थो वर्गः[5] ॥

अतीहि मन्युषाविणं सुषुवांसमुपारणे । इमं रातं सुतं पिब ॥ २१ ॥

अति । इहि । मन्युऽसाविनम् । सुसुऽवांसम् । उपऽअरणे । इमम् । रातम् । सुतम् । पिब ॥ २१ ॥

**वेङ्कट०** अति गच्छ मन्युना सुन्वन्तम्[6], तथा उपारणे सुषुवांसम्[7] । यत्र न रमन्ते ब्राह्मणा उपेत्य स उपारणो देश इति । इमम् दत्तम् अस्मदीयं सोमम् पिब ॥ २१ ॥

इहि तिस्रः परावत इहि पञ्च जनाँ अति । धेना इन्द्रावचाकशत् ॥ २२ ॥

इहि । तिस्रः । पराऽवतः । इहि । पञ्च । जनान् । अति । धेनाः । इन्द्र । अवऽचाकशत् ॥ २२ ॥

**वेङ्कट०** इहि तिस्रः परावतः अतीत्य[8] । अग्रतः पृष्ठतः पार्श्वतः च आगमनम् आशास्ते । इहि पञ्च जनान् अति स्तुतीः[9] इन्द्र! अवपश्यन् ॥ २२ ॥

सूर्यो रश्मिं यथा सृजा त्वा यच्छन्तु मे गिरः । निम्नमापो न सध्र्यक् ॥ २३ ॥

सूर्यः । रश्मिम् । यथा । सृज । आ । त्वा । यच्छन्तु । मे । गिरः । निम्नम् । आपः । न । सध्र्यक् ॥ २३ ॥

---

१. स्तुत मूको. २. नास्ति मूको. ३-३. इन्द्रस्य मूको. ४. सोमात् मूको. ५-५. नास्ति मूको. ६. सुन्वन् मूको. ७. सुष्ठुवांस मूको. ८. अतिगृत्य वि[२]. ९. स्तुतिः मूको.

वेङ्कट० सूर्यः रश्मीन् यथा विसृजति, तथा धनं वि सृज । यद्वाऽश्वप्रग्रहान् । आ [1]यच्छन्तु त्वां[1] मदीयाः स्तुतयः । निम्नम् आपः यथा सह परिगृह्णन्ति, तद्वत् त्वां[2] प्रति गच्छन्ति स्तुतय इति ॥२३॥

अध्व॑र्यवा तु हि षि॒ञ्च सोम॑ वी॒राय॑ शि॒प्रिणे॑ । भरा॑ सु॒तस्य॑ पी॒तये॑ ॥ २४ ॥

अध्व॑र्यो इति॑ । आ । तु । हि । सि॒ञ्च । सोम॑म् । वी॒राय॑ । शि॒प्रिणे॑ । भर॑ । सु॒तस्य॑ । पी॒तये॑ ॥ २४ ॥

वेङ्कट० अध्वर्यो ! क्षिप्रम् आ सिञ्च सोमम् वीराय हनुमते[3] । हर सुतं पानाय ॥ २४ ॥

य उ॒द्नः फ॑लि॒गं भि॒नन्न्य१॒क् सिन्धूँ॑र॒वासृ॑जत् । यो गोषु॑ प॒क्वं धा॒रय॑त् ॥ २५ ॥

यः । उ॒द्नः । फ॒लि॒ऽगम् । भि॒नत् । न्य॑क् । सिन्धू॑न् । अ॒व॒ऽअसृ॑जत् । यः । गोषु॑ । प॒क्वम् । धा॒रय॑त् ॥२५॥

वेङ्कट० यः उदकार्थं[4] मेवम् अभिनत्[5] । सिन्धून् च अन्तरिक्षात् न्यक् अवासृजत् । यः गोषु आमासु[6] पक्वम् पयः अधारयत् ॥ २५ ॥

[7]इति षष्ठाष्टके तृतीयाध्याये पञ्चमो वर्गः[7] ॥

अह॑न् वृ॒त्रमृची॑षम और्णवा॒भम॑ही॒शुव॑म् । हि॒मेना॑विध्य॒दर्बु॑दम् ॥ २६ ॥

अह॑न् । वृ॒त्रम् । ऋची॑षमः । औ॒र्ण॒ऽवा॒भम् । अ॒ही॒शुव॑म् । हि॒मेन॑ । अ॒वि॒ध्य॒त् । अर्बु॑दम् ॥ २६ ॥

वेङ्कट० अहन् [8]वृत्रम् ऋचा समः और्णवाभम् अहीशुवम्[8] । तथा हिमेन अविध्यत् अर्बुदम् च ॥ २६ ॥

प्र व॑ उ॒ग्राय॑ नि॒ष्टुरेऽषा॑ळ्हाय प्रस॒क्षिणे॑ । दे॒वत्तं॒ ब्रह्म॑ गायत ॥ २७ ॥

प्र । व॒ः । उ॒ग्राय॑ । नि॒ःऽतुरे॑ । अषा॑ळ्हाय । प्र॒ऽस॒क्षिणे॑ । दे॒वऽत्त॑म् । ब्रह्म॑ । गा॒य॒त ॥ २७ ॥

वेङ्कट० प्र गायत यूयम् उद्गूर्णाय निस्तरते[9] शत्रून् अषाळ्हाय प्रसहनशीलाय देवदत्तं देवप्रसाद-लब्धम् ब्रह्म स्तोत्रम् ॥ २७ ॥

यो विश्वा॑न्य॒भि व्र॒ता सोम॑स्य॒ मदे॒ अन्ध॑सः । इन्द्रो॑ दे॒वेषु॒ चेत॑ति ॥ २८ ॥

यः । विश्वा॑नि । अ॒भि । व्र॒ता । सोम॑स्य । मदे॑ । अन्ध॑सः । इन्द्र॑ः । दे॒वेषु॑ । चेत॑ति ॥ २८ ॥

वेङ्कट० यः विश्वानि कर्माणि सोमस्य अद्यमानस्य मदे इन्द्रः देवेषु अभि ज्ञापयति, तस्मै इन्द्राय इति ॥ २८ ॥

इ॒ह त्या स॑ध॒माद्या॒ हरी॒ हिर॑ण्यकेश्या । वो॒ळ्हाम॒भि प्रयो॑ हि॒तम् ॥ २९ ॥

इ॒ह । त्या । स॒ध॒ऽमाद्या॑ । हरी॒ इति॑ । हिर॑ण्यऽकेश्या । वो॒ळ्हाम् । अ॒भि । प्रय॑ः । हि॒तम् ॥ २९ ॥

---

1-1. आयच्छेतस्त्वं वि[1]. 2. ताम् मूको. 3. वानुमते मूको. 4. उदरार्थं मूको. 5. भिनद् मूको. 6. आमसु मूको. 7-7. नास्ति मूको. 8. °त्रमचीषं और्णवाहमहीशुपं वि[1]; °त्रमृचासमौर्णवाह-महीशुपं अ[1]. 9. निरस्तते मूको.

वेङ्कट० इह तौ सहमाद्यन्तौ अश्वौ हिरण्मयकेशौ[1] वहताम्[2] इन्द्रं निहितं सोममन्नं प्रति ॥२९॥

अर्वाञ्चं त्वा पुरुष्टुत प्रियमेधस्तुता हरी । सोमपेयाय वक्षतः ॥ ३० ॥

अर्वाञ्चम् । त्वा । पुरुऽस्तुत । प्रियमेधऽस्तुता । हरी इति । सोमऽपेयाय । वक्षतः ॥ ३० ॥

वेङ्कट० निगदसिद्धेति ॥ ३० ॥

[3]इति षष्ठाष्टके तृतीयाध्याये षष्ठो वर्गः[3] ॥

[ ३३ ]

[3]मेध्यातिथिः काण्व ऋषिः । इन्द्रो देवता । बृहती छन्दः,
षोडश्यादितिस्रो गायत्र्यः, अन्त्याऽनुष्टुप्[3] ।

वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते ॥ १ ॥

वयम् । घ । त्वा । सुतऽवन्तः । आपः । न । वृक्तऽबर्हिषः ।
पवित्रस्य । प्रऽस्रवणेषु । वृत्रऽहन् । परि । स्तोतारः । आसते ॥ १ ॥

वेङ्कट० मेध्यातिथिः । वयम् खलु त्वाम् सुतवन्तः उदकानि इव प्रवणम् अभिगच्छामः स्तीर्णबर्हिषः । स्तोतारः[4] च वृत्रहन्! त्वाम् परि उप आसते पवित्रस्य सोमानाम् प्रस्रवणेषु ॥ १ ॥

स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः ।
कदा सुतं तृषाण ओक आ गम इन्द्र स्वब्दीव वंसगः ॥ २ ॥

स्वरन्ति । त्वा । सुते । नरः । वसो इति । निरेके । उक्थिनः ।
कदा । सुतम् । तृषाणः । ओकः । आ । गमः । इन्द्र । स्वब्दीऽइव । वंसगः ॥ २ ॥

वेङ्कट० शब्दायन्ते त्वाम् अभिषुते सोमे नरः हे वासयितः! निर्गमने उक्थिनः । कदा सुतम् सोमं प्रति तृष्यन्[5] ओकः आ गमः इन्द्र! स्वभूतशब्द इव ऋषभः शब्दं कुर्वन्निति ॥ २ ॥

कण्वेभिर्धृष्णवा धृषद् वाजं दर्षि सहस्रिणम् ।
पिशङ्गरूपं मघवन् विचर्षणे मक्षू गोमन्तमीमहे ॥ ३ ॥

कण्वेभिः । धृष्णो इति । आ । धृषत् । वाजम् । दर्षि । सहस्रिणम् ।
पिशङ्गऽरूपम् । मघऽवन् । विऽचर्षणे । मक्षु । गोऽमन्तम् । ईमहे ॥ ३ ॥

---

१. °यकोशौ मूको. २. वहतौ मूको. ३-३. नास्ति मूको. ४. त्रातारः मूको. ५. हृष्यन् मूको.

वेङ्कट० कण्वानुद्दिश्य हे धृष्णो![1] वाजम्[2] सहस्रसङ्ख्यम् आ दर्षि। धृष्टम् पिशङ्गरूपम् हे मघवन्! विद्रष्टः![3] शीघ्रम् गोमन्तम् च वाजं याचामहे ॥ ३ ॥

पा॒हि गाया॒न्धसो॒ मद॒ इन्द्रा॑य मेध्यातिथे ।
यः संमि॑श्लो॒ हर्यो॒र्यः सु॒ते सचा॑ व॒ज्री रथो॑ हिर॒ण्ययः॑ ॥ ४ ॥

पा॒हि। गाय॑। अन्ध॑सः। मदे॑। इन्द्रा॑य। मे॒ध्य॒ऽअ॒ति॒थे॒।
यः। सम्ऽमि॑श्लः। हर्योः॑। यः। सु॒ते। सचा॑। व॒ज्री। रथः॑। हि॒र॒ण्ययः॑ ॥ ४ ॥

वेङ्कट० पिब सोमम् गाय च पीतस्य सोमस्य मदे इन्द्राय हे मेध्यातिथे!। यः इन्द्रः हर्योः स्वरथे सम्मिश्रयिता, यः च सुते सहायः, स इन्द्रः वज्री, तस्य रथः च हिरण्मयः ॥ ४ ॥

यः सु॒षव्यः॑ सु॒दक्षि॑ण इ॒नो यः सु॒क्रतु॑र्गृ॒णे ।
य आ॑क॒रः स॒हस्रा॒ यः श॒ताम॑घ॒ इन्द्रो॒ यः पू॒र्भिदा॑रि॒तः ॥ ५ ॥

यः। सु॒ऽस॒व्यः। सु॒ऽदक्षि॑णः। इ॒नः। यः। सु॒ऽक्रतुः॑। गृ॒णे।
यः। आ॒ऽक॒रः। स॒हस्रा॑। यः। श॒तऽम॑घः। इन्द्रः॑। यः। पूः॒ऽभित्। आ॒रि॒तः ॥ ५ ॥

वेङ्कट० यः शोभनसव्यहस्तः, यः च सुदक्षिणः ईश्वरः, यः सुप्रज्ञः स्तूयते, यः आभिमुख्येन कर्ता बहूनाम्, यः च बहुधनः इन्द्रः, यः पुरां भेत्ता आरितः। 'प्रत्यृतः स्तोमान्' इति यास्कः ( ५,१५ ) ॥ ५ ॥

[4]इति षष्ठाष्टके तृतीयाध्याये सप्तमो वर्गः[4] ॥

यो धृ॑षि॒तो योऽवृ॑तो॒ यो अस्ति॒ श्मश्रु॑षु॒ श्रि॒तः ।
विभू॑तद्यु॒म्नश्च्यव॑नः पुरुष्टु॒तः क्रत्वा॒ गौरि॑व शा॒किनः॑ ॥ ६ ॥

यः। धृ॒षि॒तः। यः। अवृ॑तः। यः। अस्ति॑। श्मश्रु॑षु। श्रि॒तः।
विभू॑तऽद्युम्नः। च्यव॑नः। पु॒रु॒ऽस्तु॒तः। क्रत्वा॑। गौःऽइ॑व। शा॒कि॒नः ॥ ६ ॥

वेङ्कट० यः धर्षयिता यः च अपरिवृतः शत्रुभिः यः च भवति श्मश्रुषु श्रितः। श्मश्रूणि युद्धानि [5]आहुः, शवाः एनं[5] श्रयन्ति इति। प्रभूतधनः च्यावयिता बहुस्तुतः कर्मणा धेनुः इव यजमानस्य स भवति ॥ ६ ॥

---

१. विष्णो मूको. २. चाज मूको. ३. विसृष्टम् मूको. ४-४. नास्ति मूको. ५-५. °हुःशवा ए° मूको.

क ईं वेद सुते सचा पिबन्तं कद् वयो दधे ।
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥ ७ ॥

कः । ईम् । वेद । सुते । सचा । पिबन्तम् । कत् । वयः । दधे ।
अयम् । यः । पुरः । विऽभिनत्ति । ओजसा । मन्दानः । शिप्री । अन्धसः ॥ ७ ॥

**वेङ्कट०** कः ईम् एनं वेत्ति सुते सोमे भवद्भिः पिबन्तम्[1] सोमम् । किं वा अन्नं धारयति । यः अयम् पुराणि[2] हिनस्ति बलेन, सोमेन मोदमानः हनुमान् ॥ ७ ॥

दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
नकिष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥ ८ ॥

दाना । मृगः । न । वारणः । पुरुऽत्रा । चरथम् । दधे ।
नकिः । त्वा । नि । यमत् । आ । सुते । गमः । महान् । चरसि । ओजसा ॥ ८ ॥

**वेङ्कट०** मृगः[3] शत्रूणामन्वेषकः मदजलानि इव वारणः बहुषु यज्ञेषु चरणशीलं मदम् इन्द्रः धारयति । तं त्वां न कश्चित् नि यच्छति[4] । अद्य आ गच्छ सुते सोमे । महान् हि त्वम् चरसि बलेन ॥ ८ ॥

य उग्रः सन्ननिष्टृतः स्थिरो रणाय संस्कृतः ।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥ ९ ॥

यः । उग्रः । सन् । अनिःऽस्तृतः । स्थिरः । रणाय । संस्कृतः ।
यदि । स्तोतुः । मघऽवा । शृणवत् । हवम् । न । इन्द्रः । योषति । आ । गमत् ॥ ९ ॥

**वेङ्कट०** यः उद्गूर्णः सन् शत्रुभिः न निष्टृतः[5] अनिस्तीर्णः स्थिरः[6] युद्धाय सम्यक् अश्वैः अलङ्कृतः सोमैः वा संस्कृतः, सः यदि स्तोतुः[7] मघवा शृणोति ह्वानम्, [8]इन्द्रः न† अन्यत्र[8] गच्छति, अपि तु तत्रैव आ गच्छति ॥ ९ ॥

सत्यमित्था वृषेदसि वृषजूतिर्नोऽवृतः ।
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥ १० ॥

सत्यम् । इत्था । वृषा । इत् । असि । वृषऽजूतिः । नः । अवृतः ।
वृषा । हि । उग्र । शृण्विषे । पराऽवति । वृषो इति । अर्वाऽवति । श्रुतः ॥ १० ॥

---

१. पिबतम् मूको. २. पुरापि मूको. ३. मृग मूको. ४. युच्छति मूको. ५. निष्ठितः वि[2]; निष्ठतः अ[1]. ६. नास्ति मूको. ७. स्तोतुम् मूको. ८-८. नास्ति अ[1]. † नास्ति वि[2].

**वेङ्कट०** सत्यम् इत्थम् त्वम् [1]वृषा एव[1] भवसि, वृषभिः[2] चाकृष्टः अस्माकं शत्रुभिः अवृतः। [3]वृषा हि[3] उग्र![4] श्रूयसे। दूरेऽपि वृषा एव समीपे च वृषा श्रुतः ॥ १० ॥

[5]इति षष्ठाष्टके तृतीयाध्याये अष्टमो वर्गः[5] ॥

वृष॑णस्ते अ॒भीश॑वो॒ वृषा॒ कशा॑ हिर॒ण्ययी॑ ।
वृषा॒ रथो॑ मघव॒न् वृष॑णा॒ हरी॒ वृषा॒ त्वं श॑तक्रतो ॥ ११ ॥

वृष॑णः । ते॒ । अ॒भीश॑वः । वृषा॑ । कशा॑ । हि॒र॒ण्ययी॑ ।
वृषा॑ । रथः॑ । म॒घ॒ऽव॒न् । वृष॑णा । ह॒री इति॑ । वृषा॑ । त्वम् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ॥ ११ ॥

**वेङ्कट०** वर्षितारः ते अश्वाः। [6]वृषा कशा[6] हिरण्मयी। वृषा रथः मघवन्!। वर्षितारौ अश्वौ। वृषा त्वम् च बहुप्रज्ञ![7] ॥ ११ ॥

वृषा॒ सोता॑ सुनोतु ते॒ वृष॑न्नृजीपि॒न्ना भ॑र ।
वृषा॑ दधन्वे॒ वृष॑णं न॒दीष्वा तुभ्यं॑ स्थातर्हरीणाम् ॥ १२ ॥

वृषा॑ । सोता॑ । सु॒नो॒तु॒ । ते॒ । वृष॑न् । ऋजी॒पि॒न् । आ । भ॒र॒ ।
वृषा॑ । द॒ध॒न्वे॒ । वृष॑णम् । न॒दीषु॑ । आ । तुभ्य॑म् । स्था॒तः॒ । ह॒री॒णाम् ॥ १२ ॥

**वेङ्कट०** वृषा सोता अभि सुनोतु सोमम् ते वृषन्!। ऋजीपिन्! ऋजुगमन! आ भर धनम्। वृषा धारितवान् वृषणम् सोमम् उदकेषु आभिमुख्येन तुभ्यम् हे हरीणाम् स्थातः ॥ १२ ॥

एन्द्र॑ याहि पी॒तये॒ मधु॑ शविष्ठ सो॒म्यम् ।
नायमच्छा॑ म॒घवा॑ शृ॒णव॒द् गिरो॒ ब्रह्मो॒क्था च॑ सु॒क्रतुः॑ ॥ १३ ॥

आ । इ॒न्द्र॒ । या॒हि॒ । पी॒तये॑ । मधु॑ । श॒वि॒ष्ठ॒ । सो॒म्यम् ।
न । अ॒यम् । अच्छ॑ । म॒घऽवा॑ । शृ॒णव॑त् । गिरः॑ । ब्रह्म॑ । उ॒क्था । च॒ । सु॒ऽक्रतुः॑ ॥ १३ ॥

**वेङ्कट०** आ याहि इन्द्र! पीतये मधु बलवत्तम! सोममयम्। न अयम् अभिशृणोति मघवा स्तुतीः स्तोत्राणि उक्थानि च सुप्रज्ञः इति अनागमनादाहेति ॥ १३ ॥

वह॑न्तु त्वा र॒थेष्ठा॒मा हर॑यो र॒थ॒युजः॑ ।
ति॒रश्चि॑द॒र्यं सव॑नानि वृत्रहन्न॒न्येषां॒ या श॑तक्रतो ॥ १४ ॥

वह॑न्तु । त्वा॒ । र॒थे॒ऽस्थाम् । आ । हर॑यः । र॒थ॒ऽयुजः॑ ।
ति॒रः । चि॒त् । अ॒र्यम् । सव॑नानि । वृ॒त्र॒ऽह॒न् । अ॒न्येषा॑म् । या । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ॥ १४ ॥

---

१-१. वृषेव वि[२]. २. वृषभैः अ[१]. ३-३. वृषाभि अ[१]; वृषभि वि[२]. ४. उग्रः मूको. ५-५. नास्ति मूको. ६-६. वृषकशा मूको. ७. बहुप्रज्ञः मूको.

**वेङ्कट०** आ वहन्तु त्वां रथस्थम् अश्वाः रथे युक्ताः ईश्वरम् तिरस्कुर्वन्तः सवनानि, अन्येषाम् यानि सवनानि भवन्ति हे शतप्रज्ञ![1] ॥ १४ ॥

अस्माकमद्यान्तमं स्तोमं धिष्व महामह ।
अस्माकं ते सवना सन्तु शंतमा मदाय द्युक्ष सोमपाः ॥ १५ ॥

अस्माकम् । अद्य । अन्तमम् । स्तोमम् । धिष्व । महाऽमह ।
अस्माकम् । ते । सवना । सन्तु । शम्ऽतमा । मदाय । द्युक्ष । सोमऽपाः ॥ १५ ॥

**वेङ्कट०** अस्माकम् अद्य अन्तिकतमम्[2] स्तोमम् धारय हे महताम्[3] अपि महन्! महापूज! वा । अस्माकम् ते सवनानि भवन्तु शन्तमानि मदाय दीप्त! सोमस्य पातः! ॥ १५ ॥

[4]इति षष्ठाष्टके तृतीयाध्याये नवमो वर्गः[4] ॥

नहि षस्तव नो मम शास्त्रे अन्यस्य रण्यति । यो अस्मान् वीर आनयत् ॥ १६ ॥

नहि । सः । तव । नो इति । मम । शास्त्रे । अन्यस्य । रण्यति । यः । अस्मान् । वीरः । आ । अनयत् ॥ १६ ॥

**वेङ्कट०** नहि सः इन्द्रः तव शासने रमते, न च मम, न अपि अन्यस्य, यः अस्मान् वीरः इन्द्रः आ नयति ॥ १६ ॥

इन्द्रश्चिद् घा तदब्रवीत् स्त्रिया अशास्यं मनः । उतो अह क्रतुं रघुम् ॥ १७ ॥

इन्द्रः । चित् । घ । तत् । अब्रवीत् । स्त्रियाः । अशास्यम् । मनः । उतो इति । अह । क्रतुम् । रघुम् ॥ १७ ॥

**वेङ्कट०** मेध्यातिथेः धनप्रदाता प्लायोगिरासङ्गः । स पुमान् भूत्वा स्त्र्यभवत् ( तु. ऋअ २,८,१ )। तदा यत् [5]इन्द्र उवाच[5] तत् वदति[6]—इन्द्रः चित् खलु तत् अब्रवीत्—स्त्रियाः मनः पुरुषेण अशिष्यम् शासितुमशक्यम् चपलत्वात्[7] । अपि च आह—लघु स्त्रियां प्रज्ञत्वम् ॥ १७ ॥

सप्ती चिद् घा मदच्युता मिथुना वहतो रथम् । एवेद् धूर्वृष्ण उत्तरा ॥ १८ ॥

सप्ती इति । चित् । घ । मदऽच्युता । मिथुना । वहतः । रथम् । एव । इत् । धूः । वृष्णः । उत्ऽतरा ॥ १८ ॥

**वेङ्कट०** [8]इन्द्रस्य अश्वावपि[8] खलु मदं सोमं प्रति गन्तारौ मिथुनौ वहतः रथम् [9]इन्द्रस्य । एवमेव वृष्णः[9] इन्द्रस्य [10]रथधूः अश्वयोः उत्तरा[10] भवति ॥ १८ ॥

अधः पश्यस्व मोपरि संतरां पादकौ हर ।
मा ते कशप्लकौ दृशन्त्स्त्री हि ब्रह्मा बभूविथ ॥ १९ ॥

---

१. गतप्रज्ञः मूको. २. °तमः वि[2]; °तम अ[1]. ३. महत्त्वाम् मूको. ४-४. नास्ति मूको. ५-५. इन्द्रा वाचः मूको. ६. वदन्ति मूको. ७. चबलत्वात् मूको. ८-८. °स्याश्वदश्वावि मूको. ९-९. °स्येव···वृ° मूको. १०-१०. रथसूरयश्वयोत्तम मूको.

अधः । पश्यस्व । मा । उपरि । सम्ऽतराम् । पादकौ । हर ।
मा । ते । कशऽप्लकौ । दृशन् । स्त्री । हि । ब्रह्मा । बभूविथ ॥ १९ ॥

**वेङ्कट०** एवमन्तरिक्षाद् आगच्छन् रथस्थ इन्द्रः स्त्रियं सन्तं प्रायोगिं पुंस्त्वम् इन्द्राद् इच्छन्तं[1] यदुवाच तद्दर्शयति—अधः[2] पश्यस्व स्त्री सती मा उपरि। तथा अत्यन्तं संश्लिष्टौ पादकौ[3] हर। यथा पुरुषो विश्लिष्टपदनिधानो[4] भवति, नैवं त्वया स्त्रिया कार्यम्। मा च ते कशप्लकौ[5] पुरुषाः पश्यन्तु। '[6]कशतिः आहननकर्मा[6]। '[7]कशः प्लकश्च[7] उभे[8] अङ्गे भवतः। तयोः अदर्शनं वाससः सुष्ठु परिधानैः भवति। स्त्रियो हि आ गुल्फाद् अभिसंवीता भवन्ति। '[9]स्त्री हि[9]' ब्रह्मा [10]सन् बभूविथ[10]। प्राक् अपि मेध्यातिथेः सूक्तान्ते प्रायोगेः आसङ्गस्य पुंस्त्वप्राप्तिरुक्तेति ( ऋ ८,१,३४ ) ॥ १९ ॥

[11]इति षष्ठाष्टके तृतीयाध्याये दशमो वर्गः[11] ॥

## [ ३४ ]

[11]नीपातिथिः काण्व ऋषिः, अन्त्यानां तिसृणां सहस्रं वसुरोचिषोऽङ्गिरसः। इन्द्रो देवता। अनुष्टुप् छन्दः, अन्त्यास्तिस्रः गायत्र्यः[11]।

एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १ ॥

आ । इन्द्र । याहि । हरिऽभिः । उप । कण्वस्य । सुऽस्तुतिम् ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १ ॥

**वेङ्कट०** नीपातिथिः। उप आ याहि इन्द्र! कण्वस्य सुष्टुतिम् अश्वैः। द्युलोकम् अस्मिन् इन्द्रे शासति[12] तत्र सुखम् आसत[13]। दिवम्[14] गच्छ दीप्तहविष्क! इति। तात्पर्यात् अनिघातः ॥ १ ॥

आ त्वा ग्रावा वदन्निह सोमी घोषेण यच्छतु ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ २ ॥

आ । त्वा । ग्रावा । वदन् । इह । सोमी । घोषेण । यच्छतु ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ २ ॥

**वेङ्कट०** आ यच्छतु त्वाम् अभिषवग्रावा शब्दं कुर्वन् इह[15] सोमवान् घोषेण ॥ २ ॥

---

१. °च्छन्तमिन्द्रः मूको. २. युधं मूको. ३. पादुकौ मूको. ४. विद्दिष्टं पदनिधानं मूको. ५. कशप्लुकौ मूको. ६-६. कगतिराहनकर्मा मूको. ७-७. कुशं वृकश्च मूको. ८. उच्चे मूको. ९-९. स्त्रीभिः मूको. १०-१०. संबभूमिदं मूको. ११-११. नास्ति मूको. १२. चासति मूको. १३. °सन् मूको. १४. दिव मूको. १५. इव मूको.

अत्रा वि नेमिरेषामुरां न धूनुते वृर्कः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ३ ॥

अत्रं । वि । नेमिः । एषाम् । उराम् । न । धूनुते । वृर्कः ।
दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इति दिवाऽवसो ॥ ३ ॥

**वेङ्कट०** अस्मिन्[1] यज्ञे एषाम् ग्राव्णाम्[2] नेमिः सोमलताम्[3] वि धूनुते[4] यथा[5] मेषीम् वृकः[6] ॥ ३ ॥

आ त्वा कण्वा इहावसे हवन्ते वाजसातये ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ४ ॥

आ । त्वा । कण्वाः । इह । अवसे । हवन्ते । वाजंऽसातये ।
दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इति दिवाऽवसो ॥ ४ ॥

**वेङ्कट०** निगदसिद्धा ॥ ४ ॥

दधामि ते सुतानां वृष्णे न पूर्वपाय्यम् ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ५ ॥

दधामि । ते । सुतानाम् । वृष्णे । न । पूर्वऽपाय्यम् ।
दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इति दिवाऽवसो ॥ ५ ॥

**वेङ्कट०** प्रयच्छामि तुभ्यं सुतान् सोमान्, यथा वृष्णे वायवे पूर्वपाय्यम् प्रयच्छति[7] यज्ञमुखे पेयं सोमम् ॥ ५ ॥

[8]इति षष्ठाष्टके तृतीयाध्याये एकदशो वर्गः[8] ॥

स्मत्पुरंधिर्न आ गहि विश्वतोधीर्न ऊतये ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ६ ॥

स्मत्ऽपुरंधिः । नः । आ । गहि । विश्वतःऽधीः । नः । ऊतये ।
दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इति दिवाऽवसो ॥ ६ ॥

**वेङ्कट०** प्रशस्तबुद्धिः अस्मान् आ गच्छ सर्वतोदत्तबुद्धिः अस्माकं रक्षणाय ॥ ६ ॥

आ नो याहि महेमते सहस्रोते शतामघ ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ७ ॥

---

१. यस्मिन् मूको. २. ग्राव्णोम् मूको. ३. सोमवतां मूको. ४. दुनुते मूको. ५. [illegible] मूको. ६. मेषी मूको. ७. प्रयति मूको. ८-८. नास्ति मूको.

आ । नः । याहि । महेऽमते । सहस्रऽऊते । शतऽमघ ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ ७ ॥

वेङ्कट० आ याहि अस्मान् हे महाबुद्धे! सहस्ररक्षण! बहुधन! ॥ ७ ॥

आ त्वा होता मनुर्हितो देवत्रा वक्षदीड्यः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ८ ॥

आ । त्वा । होता । मनुःऽहितः । देवऽत्रा । वक्षत् । ईड्यः ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ ८ ॥

वेङ्कट० आ वहतु त्वाम् होता अग्निः मनुष्यैः[१] गृहेषु निहितः[२] देवानां मध्ये स्तुत्यः ॥ ८ ॥

आ त्वा मदच्युता हरी श्येनं पक्षेव वक्षतः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ९ ॥

आ । त्वा । मदऽच्युता । हरी इति । श्येनम् । पक्षाऽइव । वक्षतः ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ ९ ॥

वेङ्कट० त्वाम् शत्रूणां मदस्य च्यावयितारौ अश्वौ यथा श्येनम् आत्मीयौ पक्षौ आ वहतः ॥ ९ ॥

आ याह्यर्य आ परि स्वाहा सोमस्य पीतये ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १० ॥

आ । याहि । अर्यः । आ । परि । स्वाहा । सोमस्य । पीतये ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १० ॥

वेङ्कट० [३]आ गच्छ ईश्वरः[३] सर्वतः । स्वाहा करोमि सोमं तव पानाय ॥ १० ॥

[४]इति षष्ठाष्टके तृतीयाध्याये द्वादशो वर्गः[४] ॥

आ नो याह्युपश्रुत्युक्थेषु रणया इह ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ११ ॥

आ । नः । याहि । उपऽश्रुति । उक्थेषु । रणय । इह ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ ११ ॥

---

१. मनुष्ये मूको. २. निहिते मूको. ३-३. आगच्छेरश्वाः मूको. ४-४. नास्ति मूको.

वेङ्कट० आ याहि अस्माकं श्रुतेः समीपम् शस्त्रेषु । रणय[1] अस्मान् यज्ञे ॥ ११ ॥

सरूपैरा सु नो गहि संभृतैः संभृताश्वः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १२ ॥

सऽरूपैः । आ । सु । नः । गहि । संऽभृतैः । सम्ऽभृतऽअश्वः ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १२ ॥

वेङ्कट० समानरूपैः अश्वैः आ गहि अस्मान् घाससम्भृतैः[2] पुष्टाश्वः ॥ १२ ॥

आ याहि पर्वतेभ्यः समुद्रस्याधि विष्टपः ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १३ ॥

आ । याहि । पर्वतेभ्यः । समुद्रस्य । अधि । विष्टपः ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १३ ॥

वेङ्कट० आ याहि पर्वतेभ्यः, तथा समुद्रस्य अन्तरिक्षस्य विष्टपात् अधि च इति ॥ १३ ॥

आ नो गव्यान्यश्व्या सहस्रा शूर दर्दृहि ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १४ ॥

आ । नः । गव्यानि । अश्व्या । सहस्रा । शूर । दर्दृहि ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १४ ॥

वेङ्कट० आ दर्दृहि विवृणु अस्मभ्यम् गव्यानि अश्व्यानि[3] च[4] शूर ! सहस्रसंख्यानि ॥ १४ ॥

आ नः सहस्रशो भरायुतानि शतानि च ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १५ ॥

आ । नः । सहस्रऽशः । भर । अयुतानि । शतानि । च ।
दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥ १५ ॥

वेङ्कट० आ हर अस्मभ्यम् सहस्रशः अयुतानि शतानि च ॥ १५ ॥

आ यदिन्द्रश्च दद्वहे सहस्रं वसुरोचिषः । ओजिष्ठमश्व्यं पशुम् ॥ १६ ॥

आ । यत् । इन्द्रः । च । दद्वहे इति । सहस्रम् । वसुऽरोचिषः । ओजिष्ठम् । अश्व्यम् । पशुम् ॥ १६ ॥

---

१. रणाय मूको. २. °संहृतैः मूको. ३. अश्वानि मूको. ४. नास्ति अ[1].

वेङ्कट० शौनकः—''तिस्रः अन्त्यास्तु[1] 'आ यदिन्द्रः' इति सहस्रम् वसुरोचिषः'' इति । वसुरोचिषः वयम् सहस्रम् अस्माकम् नेता अयम् इन्द्रः च यदा आ दद्महे पारावतात्[2] बलवत्तरम् अश्वात्मकं पशुं च । उत्तरत्र सम्बन्धः ॥ १६ ॥

य ऋ॒ज्रा वात॑रंहसोऽरु॒षासो॑ रघु॒ष्यदः॑ । भ्राज॑न्ते॒ सूर्या॑ इव ॥ १७ ॥

ये । ऋ॒ज्राः । वात॑ऽरंहसः । अ॒रु॒षासः॑ । र॒घु॒ऽस्यदः॑ । भ्राज॑न्ते । सूर्याः॑ऽइव ॥ १७ ॥

वेङ्कट० ये ऋजुगामिनः वातसदृशवेगाः आरोचमानाः लघु च स्यन्दमानाः भ्राजन्ते [3]सूर्याः इव अश्वाः आप्ताः[3] ॥ १७ ॥

पारा॑वतस्य रा॒तिषु॑ द्र॒वच्च॑क्रेष्वा॒शुषु॑ । तिष्ठं॒ वन॑स्य॒ मध्य॒ आ ॥ १८ ॥

पारा॑वतस्य । रा॒तिषु॑ । द्र॒वत्ऽच॑क्रेषु । आ॒शुषु॑ । तिष्ठ॑म् । वन॑स्य । मध्ये॑ । आ ॥ १८ ॥

वेङ्कट० तेषु एषु[4] पारावतस्य देयेषु[5] द्रवद्रथचक्रेषु अश्वेषु आ तिष्ठम् इति वसुरोचिषां सहस्रं वदति[6] तपोवनस्य मध्ये अश्वेषु प्रतिगृहीतेषु आतिष्ठम्[7] इति ॥ १८ ॥

[8]इति षष्ठाष्टके तृतीयाध्याये त्रयोदशो वर्गः[8] ॥

[ ३५ ]

[9]श्यावाश्व आत्रेय ऋषिः । अश्विनौ देवता । उपरिष्टाज्ज्योतिस्त्रिष्टुप् छन्दः, द्वाविंशीचतुर्विंश्यौ पङ्क्ती, त्रयोविंशी महाबृहती[9] ।

अ॒ग्निनेन्द्रे॑ण॒ वरु॑णेन॒ विष्णु॑नादि॒त्यै रु॒द्रैर्वसु॑भिः सचा॒भुवा॑ ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ पिबतमश्विना ॥ १ ॥

अ॒ग्निना॑ । इन्द्रे॑ण । वरु॑णेन । विष्णु॑ना । आ॒दि॒त्यैः । रु॒द्रैः । वसु॑ऽभिः । स॒चा॒ऽभुवा॑ ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । पि॒ब॒त॒म् । अ॒श्वि॒ना॒ ॥ १ ॥

वेङ्कट० श्यावाश्वः[1] । अग्न्यादिभिः सहभूतौ सङ्गतौ उषसा सूर्येण च सोमम् पिबतम् अश्विनौ! ॥ १ ॥

विश्वा॑भिर्धी॒भिर्भुव॑नेन वा॒जिना॑ दि॒वा पृ॑थि॒व्याद्रि॑भिः सचा॒भुवा॑ ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ पिबतमश्विना ॥ २ ॥

विश्वा॑भिः । धी॒भिः । भुव॑नेन । वा॒जिना॑ । दि॒वा । पृ॒थि॒व्या । अद्रि॑ऽभिः । स॒चा॒ऽभुवा॑ ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । पि॒ब॒त॒म् । अ॒श्वि॒ना॒ ॥ २ ॥

---

१. अन्त्या तु मूको. २. पारावतान् मूको. ३-३. सूर्याश्वात्ताः वि[२]; °र्या ··· °त्ताः अ[१]. ४. एतेषु अ[१]. ५. °षु अश्वेषु मूको. ६. वसति मूको. ७. अति° मूको. ८-८. नास्ति मूको. ९. नास्ति अ[१].

**वेङ्कट०** सर्वैः प्रज्ञानैः सर्वेण च भूतजातेन हे बलिनौ! शुप्रभृतिभिः च सहभूतौ[1] ॥ २ ॥

विश्वैर्देवैस्त्रिभिरेकादशैरिहाद्भिर्मरुद्भिर्भृगुभिः सचाभुवा ।
सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥ ३ ॥

विश्वैः । देवैः । त्रिऽभिः । एकादशैः । इह । अत्ऽभिः । मरुत्ऽभिः । भृगुऽभिः । सचाऽभुवा ।
सऽजोषसौ । उषसा । सूर्येण । च । सोमम् । पिबतम् । अश्विना ॥ ३ ॥

**वेङ्कट०** अस्मिन् यज्ञे सर्वैः एव सहभूतौ पिबतम् सोमम् इति ॥ ३ ॥

जुषेथां यज्ञं बोधतं हवस्य मे विश्वेह देवौ सवनाव गच्छतम् ।
सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ ४ ॥

जुषेथाम् । यज्ञम् । बोधतम् । हवस्य । मे । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥ ४ ॥

**वेङ्कट०** जुषेथाम् यज्ञम् बुध्यतं च मम ह्वानम्। सर्वाणि एव सवनानि इह देवौ! अव गच्छतम्। सङ्गतौ उषसा सूर्येण च अन्नम् अस्मभ्यम् आ वहतम् अश्विनौ! ॥ ४ ॥

स्तोमं जुषेथां युवशेव कन्यनां विश्वेह देवौ सवनाव गच्छतम् ।
सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ ५ ॥

स्तोमम् । जुषेथाम् । युवशाऽइव । कन्यनाम् । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥ ५ ॥

**वेङ्कट०** स्तोमम् सचेथां यथा[2] युवानौ कन्यानाम् आह्वानं सेवेते ॥ ५ ॥

गिरो जुषेथामध्वरं जुषेथां विश्वेह देवौ सवनाव गच्छतम् ।
सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥ ६ ॥

गिरः । जुषेथाम् । अध्वरम् । जुषेथाम् । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥ ६ ॥

**वेङ्कट०** निगदसिद्धा ॥ ६ ॥

[3]इति षष्ठाष्टके तृतीयाध्याये चतुर्दशो वर्गः[3] ॥

---

१. सहस्रभूतौ मूको, २. यथायथम् मूको. ३-३. नास्ति मूको.

हारिद्रवेव पतथो वनेदुप सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ ७ ॥

हारिद्रवाऽइव । पतथः । वना । इत् । उप । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।
सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥ ७ ॥

**वेङ्कट०** हारिद्रवौ[1] इव पक्षिणौ वनानि उप पतथः[2], सोमम् सुतम् महिषौ इव पिपासितौ[3] अव गच्छथः । सजोषौ उषसा सूर्येण च अह्नः त्रिः मार्गम् यातम् अश्विनौ ! ॥ ७ ॥

हंसाविव पतथो अध्वगाविव सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ ८ ॥

हंसौऽइव । पतथः । अध्वगौऽइव । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।
सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥ ८ ॥

**वेङ्कट०** हंसौ इव तथा अध्वगौ इव च ॥ ८ ॥

श्येनाविव पतथो हव्यदातये सोमं सुतं महिषेवाव गच्छथः ।
सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥ ९ ॥

श्येनौऽइव । पतथः । हव्यऽदातये । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।
सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥ ९ ॥

**वेङ्कट०** श्येनौ इव तथा यजमानाय च ॥ ९ ॥

पिबतं च तृप्णुतं चा च गच्छतं प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ १० ॥

पिबतम् । च । तृप्णुतम् । च । आ । च । गच्छतम् । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् ।
सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ १० ॥

**वेङ्कट०** पिबतम्, तृप्यतम्, तदर्थम् आ गच्छतम्[4], तथा प्रजाम् द्रविणम् च धत्तम् ॥ १० ॥

जयतं च प्र स्तुतं च प्र चावतं प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ ११ ॥

---

१. हरिद्रौ वि[१]; हारिद्रौ अ[१]. २. वतथः वि[२]; वतथ अ[१]. ३. विवासितौ मूको. ४. °च्छथ वि[१]; °च्छत अ[१].

जयतम् । च । प्र । स्तुतम् । च । प्र । च । अवतम् । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् ।
सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ ११ ॥

**वेङ्कट०** जयतम् च शत्रून्, प्रस्तुतम् च स्तोतॄन्, अस्मान् प्र च रक्षतम् ॥ ११ ॥

हतं च शत्रून् यततं च मित्रिणः प्रजां च धत्तं द्रविणं च धत्तम् ।
सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥ १२ ॥

हतम् । च । शत्रून् । यततम् । च । मित्रिणः । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् ।
सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥ १२ ॥

**वेङ्कट०** हतम् च शत्रून्, गच्छतम् च मैत्रीयुक्तान् ॥ १२ ॥

[1]इति षष्ठाष्टके तृतीयाध्याये पञ्चदशो वर्गः[1] ॥

मित्रावरुणवन्ता उत धर्मवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १३ ॥

मित्रावरुणऽवन्तौ । उत । धर्मऽवन्ता । मरुत्वन्ता । जरितुः । गच्छथः । हवम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आदित्यैः । यातम् । अश्विना ॥ १३ ॥

**वेङ्कट०** मित्रादिभिः सहितौ आगच्छतम् जरितुः ह्वानम् । तथा उषसा सूर्येण च[2] सङ्गतौ आदित्यैः च यातम् अश्विनौ! ॥ १३ ॥

आङ्गिरस्वन्ता उत विष्णुवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १४ ॥

अङ्गिरस्वन्तौ । उत । विष्णुऽवन्ता । मरुत्वन्ता । जरितुः । गच्छथः । हवम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आदित्यैः । यातम् । अश्विना ॥ १४ ॥

**वेङ्कट०** निगदसिद्धेति ॥ १४ ॥

ऋभुमन्ता वृषणा वाजवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।
सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥ १५ ॥

ऋभुऽमन्ता । वृषणा । वाजऽवन्ता । मरुत्वन्ता । जरितुः । गच्छथः । हवम् ।
सऽजोषसौ । उषसा । सूर्येण । च । आदित्यैः । यातम् । अश्विना ॥ १५ ॥

---

१-१. नास्ति मूको.　२. नास्ति वि°.

**वेङ्कट०** निगदसिद्धा । ऋभुमन्ता वाजवन्ता इति ज्येष्ठकनिष्ठाभ्यां व्यपदेशः ॥ १५ ॥

ब्रह्म॑ जिन्वतमु॒त जि॑न्वतं॒ धियो॑ ह॒तं रक्षां॑सि॒ सेध॑तममी॑वाः ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ सुन्व॒तो अ॑श्विना ॥ १६ ॥

ब्रह्म॑ । जि॒न्व॒तम् । उ॒त । जि॒न्व॒तम् । धियः॑ । ह॒तम् । रक्षां॑सि । सेध॑तम् । अमी॑वाः ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । सु॒न्व॒तः । अ॒श्वि॒ना॒ ॥ १६ ॥

**वेङ्कट०** ब्राह्मणम् जिन्वतम् । अपि च जिन्वतम् कर्माणि । हतम् च रक्षांसि । नि सेधतम् राक्षसान् । सङ्गतौ उषसा सूर्येण च सोमम् सुन्वतः[1] पिबतम् अश्विनौ ! ॥ १६ ॥

क्ष॒त्रं जि॑न्वतमु॒त जि॑न्वतं॒ नॄन् ह॒तं रक्षां॑सि॒ सेध॑तममी॑वाः ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ सुन्व॒तो अ॑श्विना ॥ १७ ॥

क्ष॒त्रम् । जि॒न्व॒तम् । उ॒त । जि॒न्व॒तम् । नॄन् । ह॒तम् । रक्षां॑सि । सेध॑तम् । अमी॑वाः ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । सु॒न्व॒तः । अ॒श्वि॒ना॒ ॥ १७ ॥

**वेङ्कट०** क्षत्रम् जिन्वतम् ··· ॥ १७ ॥

धे॒नूर्जि॑न्वतमु॒त जि॑न्वतं॒ विशो॑ ह॒तं रक्षां॑सि॒ सेध॑तममी॑वाः ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ सुन्व॒तो अ॑श्विना ॥ १८ ॥

धे॒नूः । जि॒न्व॒तम् । उ॒त । जि॒न्व॒तम् । विशः॑ । ह॒तम् । रक्षां॑सि । सेध॑तम् । अमी॑वाः ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । सु॒न्व॒तः । अ॒श्वि॒ना॒ ॥ १८ ॥

**वेङ्कट०** धेनूः जिन्वतम्, अपि च जिन्वतम् वैश्यान् ॥ १८ ॥

[2]इति षष्ठाष्टके तृतीयाध्याये षोडशो वर्गः[2] ॥

अत्रे॑रिव शृणुतं पू॒र्व्यस्तु॑तिं श्या॒वाश्व॑स्य सुन्व॒तो म॑दच्युता ।
स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण॒ चाश्वि॑ना ति॒रोअ॑ह्न्यम् ॥ १९ ॥

अत्रेः॑ऽइव । शृ॒णु॒त॒म् । पू॒र्व्यऽस्तु॑तिम् । श्या॒वऽअ॑श्वस्य । सु॒न्व॒तः । म॒द॒ऽच्यु॒ता॒ ।
स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । अश्वि॑ना । ति॒रः॒ऽअ॑ह्न्यम ॥ १९ ॥

**वेङ्कट०** मम पितामहस्य अत्रेः इव मम च मुख्यां स्तुतिम्[3] शृणुतम् श्यावाश्वस्य सुन्वतः हे शत्रुमदस्य च्यावकौ ! । सजोषसौ उषसा सूर्येण च अश्विना ! तिरोअह्न्यम् पिबतं सोमम् ।

---

१. सुन्वतम् मूको. २-२. नास्ति मूको. ३. श्रुतिम् मूको.

तिरोभूते[1] पूर्वस्मिन् अहनि अपरेद्युः प्रातः अनयोः यागः इति ॥ १९ ॥

सर्गाँ इव सृजतं सुष्टुतीरुप श्यावाश्वस्य सुन्वतो मदच्युता ।
सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥ २० ॥

सर्गान्ऽइव । सृजतम् । सुऽस्तुतीः । उप । श्यावऽअश्वस्य । सुन्वतः । मदऽच्युता ।
सऽजोषसौ । उषसा । सूर्येण । च । अश्विना । तिरःऽअह्न्यम् ॥ २० ॥

वेङ्कट० सुष्टुतीः[2] आत्मनि उप[3] सृजतम् सर्गान् इव । आभरणानि हवींषि वस्त्राणि वा सर्गाः ॥ २० ॥

रश्मीँरिव यच्छतमध्वराँ उप श्यावाश्वस्य सुन्वतो मदच्युता ।
सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥ २१ ॥

रश्मीन्ऽइव । यच्छतम् । अध्वरान् । उप । श्यावऽअश्वस्य । सुन्वतः । मदऽच्युता ।
सऽजोषसौ । उषसा । सूर्येण । च । अश्विना । तिरःऽअह्न्यम् ॥ २१ ॥

वेङ्कट० अस्मदीयान् यज्ञान् उप गच्छतम् अश्वप्रग्रहान् इव ॥ २१ ॥

अर्वाग् रथं नि यच्छतं पिबतं सोम्यं मधु ।
आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २२ ॥

अर्वाक् । रथम् । नि । यच्छतम् । पिबतम् । सोम्यम् । मधु ।
आ । यातम् । अश्विना । आ । गतम् । अवस्युः । वाम् । अहम् । हुवे । धत्तम् । रत्नानि । दाशुषे ॥

वेङ्कट० अभिमुखम् रथम् नि यच्छतम् । पिबतम् च सोममयम् मधु । आ यातम् अश्विनौ! आ गच्छतं च सोमं प्रति । रक्षणकामः वाम् अहम् हुवे । धत्तम् रत्नानि प्रयच्छते ॥ २२ ॥

नमोवाके प्रस्थिते अध्वरे नरा विवक्षणस्य पीतये ।
आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २३ ॥

नमःऽवाके । प्रऽस्थिते । अध्वरे । नरा । विवक्षणस्य । पीतये ।
आ । यातम् । अश्विना । आ । गतम् । अवस्युः । वाम् । अहम् । हुवे । धत्तम् । रत्नानि । दाशुषे ॥

वेङ्कट० नमस्कारः यत्र उच्यते, प्रस्थिते यज्ञे नरौ! । 'उभयं सह[4] वा एतद्यज्ञ [5]एव यत्[5] सूक्तवाकश्च नमोवाकश्च' ( माश १,९,१,४ ) इति ब्राह्मणम् । वहनशीलस्य[6] सोमस्य पानाय ॥ २३ ॥

---

१. अति° मूको.　२. 'तिम् अ'.　३. उपा मूको　४. नास्ति माश.　५-५. नास्ति मूको.
६. < वि √°वक्ष् 'वृद्धौ' इति वैप १,२९००; हनन° मूको.

स्वाहाकृतस्य तृम्पतं सुतस्य देवावन्धसः ।
आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥ २४ ॥

स्वाहाऽकृतस्य । तृम्पतम् । सुतस्य । देवौ । अन्धसः ।
आ । यातम् । अश्विना । आ । गतम् । अवस्युः । वाम् । अहम् । हुवे । धत्तम् । रत्नानि । दाशुषे ॥२४॥

**वेङ्कट०** हुतस्य सोमस्य[1] तृप्यतम् सुतस्य हे देवौ ! ॥ २४ ॥

[2]इति षष्ठाष्टके तृतीयाध्याये सप्तदशो वर्गः[2] ॥

[ ३६ ]

[1]श्यावाश्व आत्रेय ऋषिः । इन्द्रो देवता । शक्करी छन्दः, अन्त्या महापङ्क्तिः[2] ।

अवितासि सुन्वतो वृक्तबर्हिषः पिबा सोमं मदाय कं शतक्रतो ।
यं ते भागमधारयन् विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥१॥

अविता । असि । सुन्वतः । वृक्तऽबर्हिषः । पिब । सोमम् । मदाय । कम् । शतक्रतो इति शतऽक्रतो ।
यम् । ते । भागम् । अधारयन् । विश्वाः । सेहानः । पृतनाः । उरु । ज्रयः । सम् । अप्सुऽजित् ।
मरुत्वान् । इन्द्र । सत्ऽपते ॥ १ ॥

**वेङ्कट०** रक्षिता भवसि सोमम् सुन्वतः[3] स्तीर्णबर्हिषः । पिब सोमम् मदाय । कम् इति पूरणम् । शतकर्मन् ! । यम् ते सोमस्य भागम् अकल्पयन् सर्वे देवाः । 'स एतं माहेन्द्रमुद्धारमुदहरत वृत्रं हत्वाऽन्यासु देवतास्वधि' ( तै ६,५,५,३-४ ) इति ब्राह्मणम् । तं पिब विश्वाः पृतनाः उरुं च वेगं शत्रूणां सहाभिभवन् अप्सुजेता मरुत्वान् हे इन्द्र ! सतां पते ! ॥ १ ॥

प्राव स्तोतारं मघवन्नव त्वां पिबा सोमं मदाय कं शतक्रतो ।
यं ते भागमधारयन् विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥२॥

प्र । अव । स्तोतारम् । मघऽवन् । अव । त्वाम् । पिब । सोमम् । मदाय । कम् । शतक्रतो इति शतऽक्रतो ।
यम् । ते । भागम् । अधारयन् । विश्वाः । सेहानः । पृतनाः । उरु । ज्रयः । सम् । अप्सुऽजित् ।
मरुत्वान् । इन्द्र । सत्ऽपते ॥ २ ॥

**वेङ्कट०** प्र रक्ष स्तोतारम् मघवन् ! । रक्ष त्वाम् च सोमपानेन ॥ २ ॥

ऊर्जा देवाँ अवस्योजसा त्वां पिबा सोमं मदाय कं शतक्रतो ।
यं ते भागमधारयन् विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥३॥

---

१. होमस्य मूको. २-२. नास्ति मूको. ३. °वन्तः मूको.

ऊर्जा। देवान्। अवसि। ओजसा। त्वाम्। पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो।
यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः। सम्। अप्सुऽजित्।
मरुत्वान्। इन्द्र। सत्ऽपते ॥ ३ ॥

**वेङ्कट०** देव! अन्नेन देवान् रक्षसि। बलेन त्वाम् अपि इति ॥ ३ ॥

**जनिता दिवो जनिता पृथिव्याः पिबा सोमं मदाय कं शतक्रतो ।**
**यं ते भागमधारयन् विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥४॥**

जनिता। दिवः। जनिता। पृथिव्याः। पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो।
यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः। सम्। अप्सुऽजित्।
मरुत्वान्। इन्द्र। सत्ऽपते ॥ ४ ॥

**वेङ्कट०** जनिता द्यावापृथिव्योरिति ॥ ४ ॥

**जनिताश्वानां जनिता गवामसि पिबा सोमं मदाय कं शतक्रतो ।**
**यं ते भागमधारयन् विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥५॥**

जनिता। अश्वानाम्। जनिता। गवाम्। असि। पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो।
यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः। सम्। अप्सुऽजित्।
मरुत्वान्। इन्द्र। सत्ऽपते ॥ ५ ॥

**वेङ्कट०** जनिता अश्वानाम् गवाम् च भवसि ॥ ५ ॥

**अत्रीणां स्तोममद्रिवो महस्कृधि पिबा सोमं मदाय कं शतक्रतो ।**
**यं ते भागमधारयन् विश्वाः सेहानः पृतना उरु ज्रयः समप्सुजिन्मरुत्वाँ इन्द्र सत्पते ॥६॥**

अत्रीणाम्। स्तोमम्। अद्रिऽवः। महः। कृधि। पिब। सोमम्। मदाय। कम्। शतक्रतो इति शतऽक्रतो।
यम्। ते। भागम्। अधारयन्। विश्वाः। सेहानः। पृतनाः। उरु। ज्रयः। सम्। अप्सुऽजित्।
मरुत्वान्। इन्द्र। सत्ऽपते ॥ ६ ॥

**वेङ्कट०** अत्रीणाम् स्तोमम् वज्रिन्! महान्तम् कुरु ॥ ६ ॥

**श्यावाश्वस्य सुन्वतस्तथा शृणु यथाशृणोरत्रेः कर्माणि कृण्वतः ।**
**प्र त्रसदस्युमाविथ त्वमेक इन्नृषाह्य इन्द्र ब्रह्माणि वर्धयन् ॥ ७ ॥**

श्यावऽअश्वस्य। सुन्वतः। तथा। शृणु। यथा। अशृणोः। अत्रेः। कर्माणि। कृण्वतः।
प्र। त्रसदस्युम्। आविथ। त्वम्। एकः। इत्। नृऽसह्ये। इन्द्र। ब्रह्माणि। वर्धयन् ॥ ७ ॥

वेङ्कट० श्यावाश्वस्य मम शृणु सुन्वतः स्तुतिम् तथा, यथा अशृणोः अत्रेः कर्माणि कुर्वतः[१]। सः त्वम् प्र आविथ त्रसदस्युम्[२] एकः एव युद्धे इन्द्र! स्तोत्राणि वर्धयन् कामैः ॥ ७ ॥

[३]इति षष्ठाष्टके तृतीयाध्याये अष्टादशो वर्गः[३] ॥

[ ३७ ]

[१]श्यावाश्व आत्रेय ऋषिः। इन्द्रो देवता। महापङ्क्तिश्छन्दः, आद्याऽतिजगती[१]।

प्रेदं ब्रह्म वृत्रतूर्येष्वाविथ प्र सुन्वतः शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ १ ॥

प्र। इदम्। ब्रह्म। वृत्रऽतूर्येषु। आविथ। प्र। सुन्वतः। शचीऽपते। इन्द्र। विश्वाभिः। ऊतिऽभिः।
माध्यन्दिनस्य। सवनस्य। वृत्रऽहन्। अनेद्य। पिब। सोमस्य। वज्रिऽवः ॥ १ ॥

वेङ्कट० प्र आविथ इदम् ब्रह्म ब्राह्मणान् सङ्ग्रामेषु प्र सुन्वतः [४]यजमानान् शचीपते! इन्द्र![४] विश्वैः पालनैः। स त्वम् माध्यन्दिनस्य सवनस्य वृत्रहन्! अनिन्द्य! पिब सोमम् वज्रिन्! ॥ १ ॥

सेहान उग्र पृतना अभि द्रुहः शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ २ ॥

सेहानः। उग्र। पृतनाः। अभि। द्रुहः। शचीऽपते। इन्द्र। विश्वाभिः। ऊतिऽभिः।
माध्यन्दिनस्य। सवनस्य। वृत्रऽहन्। अनेद्य। पिब। सोमस्य। वज्रिऽवः ॥ २ ॥

वेङ्कट० द्रोग्ध्रीः सेनाः अभिभवन् कर्मपते![५] इति ॥ २ ॥

एकराळस्य भुवनस्य राजसि शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ ३ ॥

एकऽराट्। अस्य। भुवनस्य। राजसि। शचीऽपते। इन्द्र। विश्वाभिः। ऊतिऽभिः।
माध्यन्दिनस्य। सवनस्य। वृत्रऽहन्। अनेद्य। पिब। सोमस्य। वज्रिऽवः ॥ ३ ॥

वेङ्कट० एक एव राजा अस्य भुवनस्य राजसि ॥ ३ ॥

सस्थावाना यवयसि त्वमेक इच्छचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ ४ ॥

---

१. कुर्वथः मूको. २. °स्युम् त्वम् मूको. ३-३. नास्ति मूको. ४-४. यजमाना ··· इन्द्र मूको. ५. कर्मवतो मूको.

सुऽस्थावाना । यवयसि । त्वम् । एकः । इत् । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यन्दिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ४ ॥

वेङ्कट० समानं तिष्ठन्तौ इमौ लोकौ त्वम् एकः एव पृथक् करोषि ॥ ४ ॥

क्षेमस्य च प्रयुजश्च त्वमीशिषे शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ ५ ॥

क्षेमस्य । च । प्रऽयुजः । च । त्वम् । ईशिषे । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यन्दिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ५ ॥

वेङ्कट० क्षेमस्य च प्रयुजः प्रयोगस्य च योगक्षेमयोः त्वम् ईशिषे ॥ ५ ॥

क्षत्राय त्वमवसि न त्वमाविथ शचीपत इन्द्र विश्वाभिरूतिभिः ।
माध्यंदिनस्य सवनस्य वृत्रहन्ननेद्य पिबा सोमस्य वज्रिवः ॥ ६ ॥

क्षत्राय । त्वम् । अवसि । न । त्वम् । आविथ । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
माध्यन्दिनस्य । सवनस्य । वृत्रऽहन् । अनेद्य । पिब । सोमस्य । वज्रिऽवः ॥ ६ ॥

वेङ्कट० त्वम् बलाय भवसि । त्वं रक्षसि च आशु आश्रितान् । न त्वम् केनचित् रक्ष्यसे ॥ ६ ॥

श्यावाश्वस्य रेभतस्तथा शृणु यथाशृणोरत्रेः कर्माणि कृण्वतः ।
प्र त्रसदस्युमाविथ त्वमेक इन्नृषाह्य इन्द्र क्षत्राणि वर्धयन् ॥ ७ ॥

श्यावऽअश्वस्य । रेभतः । तथा । शृणु । यथा । अशृणोः । अत्रेः । कर्माणि । कृण्वतः ।
प्र । त्रसदस्युम् । आविथ । त्वम् । एकः । इत् । नृऽसह्ये । इन्द्र । क्षत्राणि । वर्धयन् ॥ ७ ॥

वेङ्कट० रेभतिः स्तौतिकर्मेति ( तु. निघ ३,१४ ) ॥ ७ ॥[1]

[2]इति षष्ठाष्टके तृतीयाध्याये एकोनविंशो वर्गः[2] ॥

## [ ३८ ]

[2]श्यावाश्व आत्रेय ऋषिः । इन्द्राग्नी देवता । गायत्री छन्दः[2] ।

यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु । इन्द्राग्नी तस्य बोधतम् ॥१॥

यज्ञस्य । हि । स्थः । ऋत्विजा । सस्नी इति । वाजेषु । कर्मऽसु । इन्द्राग्नी इति । तस्य । बोधतम् ॥१॥

वेङ्कट० हे इन्द्राग्नी! [3]यज्ञस्य ऋत्विजौ स्थः[3] शुद्धौ । सङ्ग्रामेषु यज्ञेषु च उपतिष्ठन्तौ इन्द्राग्नी! तं मां वित्तम्, स्तुतिं वा इमाम् इति ॥ १ ॥

---

१. शिष्टम् ऋ ८,३६,७ द्र. २-२. नास्ति मूको. ३-३. यज्ञस्यार्थ जौ्र्थ मूको.

तोशासा रथयावाना वृत्रहणापराजिता । इन्द्राग्नी तस्य बोधतम् ॥ २ ॥

तोशासा । रथऽयावाना । वृत्रऽहना । अपराऽजिता । इन्द्राग्नी इति । तस्य । बोधतम् ॥ २ ॥

**वेङ्कट०** हिंसावन्तौ रथेन गच्छन्तौ शत्रूणां हन्तारौ[1] अपराजितौ[2] युवाम् इन्द्राग्नी ! ॥ २ ॥

इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः । इन्द्राग्नी तस्य बोधतम् ॥ ३ ॥

इदम् । वाम् । मदिरम् । मधु । अधुक्षन् । अद्रिऽभिः । नरः । इन्द्राग्नी इति । तस्य । बोधतम् ॥ ३ ॥

**वेङ्कट०** निगदसिद्धा ॥ ३ ॥

जुषेथां यज्ञमिष्टये सुतं सोमं सधस्तुती । इन्द्राग्नी आ गतं नरा ॥ ४ ॥

जुषेथाम् । यज्ञम् । इष्टये । सुतम् । सोमम् । सधस्तुती इति सधऽस्तुती ।
इन्द्राग्नी इति । आ । गतम् । नरा ॥ ४ ॥

**वेङ्कट०** सेवेथाम् यज्ञम् यागाय सुतम् च सोमम् हे सहभूतस्तुती ! । इन्द्राग्नी ! आ गच्छतम् नेतारौ ! ॥ ४ ॥

इमा जुषेथां सवना येभिर्हव्यान्यूहथुः । इन्द्राग्नी आ गतं नरा ॥ ५ ॥

इमा । जुषेथाम् । सवना । येभिः । हव्यानि । ऊहथुः । इन्द्राग्नी इति । आ । गतम् । नरा ॥ ५ ॥

**वेङ्कट०** इमानि सेवेथाम् सवनानि, यैः [3]युवाम् हव्यानि ऊहथुः[3] ॥ ५ ॥

इमां गायत्रवर्तनिं जुषेथां सुष्टुतिं मम । इन्द्राग्नी आ गतं नरा ॥ ६ ॥

इमाम् । गायत्रऽवर्तनिम् । जुषेथाम् । सुऽस्तुतिम् । मम । इन्द्राग्नी इति । आ । गतम् । नरा ॥ ६ ॥

**वेङ्कट०** इमाम् गायत्रमार्गाम्[4] सेवेथाम् सुष्टुतिम् मम ॥ ६ ॥

[5]इति षष्ठाष्टके तृतीयाध्याये विंशो वर्गः[5] ॥

प्रातर्यावभिरा गतं देवेभिर्जेन्यावसू । इन्द्राग्नी सोमपीतये ॥ ७ ॥

प्रातर्यावऽभिः । आ । गतम् । देवेभिः । जेन्यावसू इति । इन्द्राग्नी इति । सोमऽपीतये ॥ ७ ॥

**वेङ्कट०** प्रातर्यावभिः आ गच्छतम् देवैः हे जेतव्यशत्रुधनौ ![6] इन्द्राग्नी ! सोमस्य पानाय ॥ ७ ॥

श्यावाश्वस्य सुन्वतोऽत्रीणां शृणुतं हवम् । इन्द्राग्नी सोमपीतये ॥ ८ ॥

---

१. हन्तारा वि[1]. २. खराजितो मूको. ३-३. युवा ··· मूको. ४. गायतमा° मूको. ५-५ नास्ति मूको. ६. °शत्रुधौ मूको.

श्यावऽअंश्वस्य । सुन्वतः । अत्रींणाम् । शृणुतम् । हवम् । इन्द्राग्नी इति । सोमऽपीतये ॥ ८ ॥

**वेङ्कट०** [1]श्यावाश्वस्य यजमानस्य ऋत्विजाम् अत्रीणाम्[1] शृणुतम्[2] ह्वानम् ॥ ८ ॥

एवा वामह्व ऊतये यथाहुवन्त मेधिराः । इन्द्राग्नी सोमपीतये ॥ ९ ॥

एव । वाम् । अह्वे । ऊतये । यथा । अहुवन्त । मेधिराः । इन्द्राग्नी इति । सोमऽपीतये ॥ ९ ॥

**वेङ्कट०** एवम् वाम्[3] अहं ह्वयामि रक्षणाय, यथा अहुवन्त[4] प्राज्ञाः ॥ ९ ॥

आहं सरस्वतीवतोरिन्द्राग्न्योरवो वृणे । याभ्यां गायत्रमृच्यते ॥ १० ॥

आ । अहम् । सरस्वतीऽवतोः । इन्द्राग्न्योः । अवः । वृणे । याभ्याम् । गायत्रम् । ऋच्यते ॥ १० ॥

**वेङ्कट०** अहम् स्तुतिमतोः[5] इन्द्राग्न्योः पालनम् आ वृणे, ययोरर्थम् गायत्रम् साम स्तूयते ॥ १० ॥

[6]इति षष्ठाष्टके तृतीयाध्याये एकविंशो वर्गः[6] ॥

## [ ३९ ]

[6]नाभाकः काण्व ऋषिः । अग्निर्देवता । महापङ्क्तिश्छन्दः[6] ।

अग्निमस्तोष्यृग्मियमग्निमीळा यजध्यै ।
अग्निर्देवाँ अनक्तु न उभे हि विदथे कविरन्तश्चरति दूत्यं नभन्तामन्यके समे ॥१॥

अग्निम् । अस्तोषि । ऋग्मियम् । अग्निम् । ईळा । यजध्यै । अग्निः । देवान् । अनक्तु । नः । उभे इति । हि । विदथे इति । कविः । अन्तरिति । चरति । दूत्यम् । नभन्ताम् । अन्यके । समे ॥१॥

**वेङ्कट०** अग्निम् [7]स्तौमि ऋगर्हम्[7] । अग्निम् स्तुत्या यष्टुं स्तौमि । अग्निः देवान् अस्माकम् अनक्तु हविर्भिः । सोऽयम् उभे हि द्यावापृथिव्यौ अन्तः दूत्यम् चरति अन्तरिक्षे गच्छन् । नभन्ताम्[8] च [9]सर्वे जिघांसवः[9] शत्रवः । यद्वा नभतिर्हिंसाकर्मा[10] (तु. निघ २,१९), हिंस्यमानाः[11] अग्निनेति[12] ॥१॥

न्यग्ने नव्यसा वचस्तनूषु शंसमेषाम् ।
न्यराती रराव्णां विश्वा अर्यो अरातीरितो युच्छन्त्वामुरो नभन्तामन्यके समे ॥२॥

नि । अग्ने । नव्यसा । वचः । तनूषु । शंसम् । एषाम् । नि । अरातीः । रराव्णाम् । विश्वाः । अर्यः । अरातीः । इतः । युच्छन्तु । आऽमुरः । नभन्ताम् । अन्यके । समे ॥ २ ॥

---

१-१. °स्य जामित्राणामू वि[2]; °स्य यजमानस्य जामित्राणाम् अ[1]. २. °त मूको. ३. नास्ति वि[2]. ४. °वन्तः मूको. ५. स्तुतीवतोः मूको. ६-६. नास्ति मूको. ७-७. स्तोमगर्भम् मूको. ८. नभवं··· मूको. ९-९. सर्वेऽपि पिबांसः वि[2]; °बिवांसः अ[1] मूको. १०. नगतिर्हिं[?] मूको. ११. °मानं मूको. १२. अग्निनेति वि[2].

वेङ्कट० नि[1] दह अग्ने! शंसनम् एषाम् शत्रूणाम् अस्माकम् अङ्गेषु नवतरेण वचसा[2]। नि दह अरातिम् प्रयच्छताम्। विश्वाः अभिगच्छन्तः अरातयः इतः अपगच्छन्तु आमूढाः ॥ २ ॥

अग्ने मन्मानि तुभ्यं कं घृतं न जुह्व आसनि ।
स देवेषु प्र चिकिद्धि त्वं ह्यसि पूर्व्यः शिवो दूतो विवस्वतो नभन्तामन्यके समे ॥३॥

अग्ने । मन्मानि । तुभ्यम् । कम् । घृतम् । न । जुह्वे । आसनि । सः । देवेषु । प्र । चिकिद्धि । त्वम् । हि । असि । पूर्व्यः । शिवः । दूतः । विवस्वतः । नभन्ताम् । अन्यके । समे ॥ ३ ॥

वेङ्कट० यथा आस्ये घृतम् जुह्वति, एवम्[3] अग्ने! स्तोत्राणि तुभ्यम् आस्ये जुह्वे। [4]सः त्वं[4] देवानां मध्ये प्रकर्षेण जानीहि स्तुतीः। त्वम् हि असि प्रत्नः[5] शिवः च दूतः विवस्वतः ॥ ३ ॥

तत्तदग्निर्वयो दधे यथायथा कृपण्यति ।
ऊर्जाहुतिर्वसूनां शं च योश्च मयो दधे विश्वस्यै देवहूत्यै नभन्तामन्यके समे ॥४॥

तत्ऽतत् । अग्निः । वयः । दधे । यथाऽयथा । कृपण्यति । ऊर्जाऽआहुतिः । वसूनाम् । शम् । च । योः । च । मयः । दधे । विश्वस्यै । देवऽहूत्यै । नभन्ताम् । अन्यके । समे ॥ ४ ॥

वेङ्कट० तत्तत् अग्निः[6] अन्नं प्रयच्छति, यथायथा स्तोतृभिः याच्यते[7]। अन्नेन आहूयमानः वासयितृणां[8] यजमानानाम् शम् च योः च सुखं च करोति। सर्वस्मै देवानां ह्वानाय, यः कश्चन अपि देवो यदि हूयते, अग्निरेव सर्वं करोति इति ॥ ४ ॥

स चिकेत सहीयसाग्निश्चित्रेण कर्मणा ।
स होता शश्वतीनां दक्षिणाभिरभीवृत इनोति च प्रतीव्यं१ नभन्तामन्यके समे ॥५॥

सः । चिकेत । सहीयसा । अग्निः । चित्रेण । कर्मणा । सः । होता । शश्वतीनाम् । दक्षिणाभिः । अभिऽवृतः । इनोति । च । प्रतीव्यम् । नभन्ताम् । अन्यके । समे ॥ ५ ॥

वेङ्कट० सः [9]ज्ञायते अभिभावुकेन[9] अग्निः चित्रेण कर्मणा। सः होता बह्वीनां पशुभिः च परिवृतः गच्छति च प्रत्येतव्यं शत्रुम् ॥ ५ ॥

[10]इति षष्ठाष्टके तृतीयाध्याये द्वाविंशो वर्गः[10] ॥

अग्निर्जाता देवानामग्निर्वेद मर्तानामपीच्यम् ।
अग्निः स द्रविणोदा अग्निर्द्वारा व्यूर्णुते स्वाहुतो नवीयसा नभन्तामन्यके समे ॥६॥

१. निर् मूको. २ नास्ति मूको. ३. एव मूको. ४-४. सत्यम् मूको. ५. प्रज्ञः मूको. ६. अग्निम् मूको. ७. याचते मूको. ८. वासयन्नृणाम् मूको. ९-९. °ते ह्यभिभावु° अ[1]. १०-१०. नास्ति मूको.

अग्निः । जाता । देवानाम् । अग्निः । वेद । मर्तानाम् । अपीच्यम् । अग्निः । सः । द्रविणःऽदाः । अग्निः । द्वारा । वि । ऊर्णुते । सुऽआहुतः । नवीयसा । नभन्ताम् । अन्यके । समे ॥

वेङ्कट० अग्निः [1]जातानि देवानाम् वेत्ति । अग्निः मर्तानाम्[1] च वेत्ति गुह्यम् । अग्निः [2]सः धनस्य[2] दाता । अग्निः द्वाराणि धनस्य वि ऊर्णुते[3] स्वाहुतः नवतरेण हविषा ॥ ६ ॥

अग्निर्देवेषु संवसुः स विक्षु यज्ञियास्वा ।
स मुदा काव्या पुरु विश्वं भूमेव पुष्यति देवो देवेषु यज्ञियो नभन्तामन्यके समे ॥७॥

अग्निः । देवेषु । समऽवसुः । सः । विक्षु । यज्ञियासु । आ । सः । मुदा । काव्या । पुरु । विश्वम् । भूमऽइव । पुष्यति । देवः । देवेषु । यज्ञियः । नभन्ताम् । अन्यके । समे ॥ ७ ॥

वेङ्कट० अग्निः देवेषु संवसति । सः मनुष्येषु, अपि च यज्ञेषु संवसति । सः मोदेन बहूनि कर्माणि पुष्यति यथा[4] विश्वम् भूमिः । देवः देवानां मध्ये यज्ञियः ॥ ७ ॥

यो अग्निः सप्तमानुषः श्रितो विश्वेषु सिन्धुषु ।
तमागन्म त्रिपस्त्यं मन्धातुर्दस्युहन्तममग्निं यज्ञेषु पूर्व्यं नभन्तामन्यके समे ॥ ८ ॥

यः । अग्निः । सप्तऽमानुषः । श्रितः । विश्वेषु । सिन्धुषु । तम् । आ । अगन्म । त्रिऽपस्त्यम् । मन्धातुः । दस्युहन्ऽतमम् । अग्निम् । यज्ञेषु । पूर्व्यम् । नभन्ताम् । अन्यके । समे ॥ ८ ॥

वेङ्कट० सप्त यस्य स्तोतारो मनुष्याः [5]स सप्तमानुषः[5] यः विश्वेषु सिन्धुषु श्रितः, तम् वयम् आ अगन्म त्रिस्थानं यौवनाश्वस्य[6] मान्धातुः ( तु. निघ ३,१५ )[7] दस्यूनां हन्तारम् अग्निम् यज्ञेषु मुख्यम्[8] ॥८॥

अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा कविः ।
स त्रीँरेकादशाँ इह यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतो नभन्तामन्यके समे ॥९॥

अग्निः । त्रीणि । त्रिऽधातूनि । आ । क्षेति । विदथा । कविः । सः । त्रीन् । एकादशान् । इह । यक्षत् । च । पिप्रयत् । च । नः । विप्रः । दूतः । परिऽकृतः । नभन्ताम् । अन्यके । समे ॥

वेङ्कट० अग्निः त्रीणि स्थानानि त्रिबन्धनानि पृथिव्यादीनि[9] आ निवसति कविः । सः त्रीन् एकादशान् देवान् इह यजतु । पूरयतु च अस्मान् मेधावी दूतः अलङ्कृतः ॥ ९ ॥

त्वं नो अग्न आयुषु त्वं देवेषु पूर्व्य वस्व एक इरज्यसि ।
त्वामापः परिस्रुतः परि यन्ति स्वसेतवो नभन्तामन्यके समे ॥ १० ॥

---

१-१. जानाति देवानां वेग्नि अङ्गिमत्तानां वि[२]; जानाति देवानां वाग्नि अङ्गिमत्तानाम् अ[१].
२-२. सदनस्य मूको. ३. ऊर्णते मूको. ४. नास्ति मूको. ५-५. संसक्तमा° मूको. ६. °श्व मूको.
७. तु. वैप १,२४५२ b. ८. °ख्यमिति अ[१]. ९. °दीनि या अ[१].

त्वम् । नः । अग्ने । आयुषु । त्वम् । देवेषु । पूर्व्य । वस्वः । एकः । इरज्यसि । त्वाम् । आपः । परिऽस्रुतः । परि । यन्ति । स्वऽसेतवः । नभन्ताम् । अन्यके । समे ॥ १० ॥

**वेङ्कट०** त्वम् अस्माकम् अग्ने! मनुष्येषु, त्वम् देवेषु पूर्व्य![1] धनस्य एकः ईशिषे। त्वाम् आपः परितः स्रवन्त्यः[2] परि गच्छन्ति स्वभूतसेतवः ॥ १० ॥

[3]इति षष्ठाष्टके तृतीयाध्याये त्रयोविंशो वर्गः[3] ॥

## [ ४० ]

[3]नाभाकः काण्व ऋषिः । इन्द्राग्नी देवता । महापङ्क्तिश्छन्दः[3] ।

इन्द्राग्नी युवं सु नः सहन्ता दासथो रयिम् ।
येन दृळ्हा समत्स्वा वीळु चित् साहिषीमह्यग्निर्वनेव वात इन्नभन्तामन्यके समे ॥१॥

इन्द्राग्नी इति । युवम् । सु । नः । सहन्ता । दासथः । रयिम् । येन । दृळ्हा । समत्ऽसु । आ । वीळु । चित् । सहिषीमहि । अग्निः । वनाऽइव । वाते । इत् । नभन्ताम् । अन्यके । समे ॥

**वेङ्कट०** इन्द्राग्नी! युवम् सुष्ठु अस्मभ्यम् अभिभवन्तौ यच्छतम् धनम्। येन [4]धनानि दृढानि[4] सङ्ग्रामेषु अपि च स्थिराणि सहिषीमहि तम् रयिम्, [5]यथा अग्निः अरण्यानि अभिभवति वात एव इति[5] ॥ १ ॥

नहि वां वव्रयामहेऽथेन्द्रमिद् यजामहे शविष्ठं नृणां नरम् ।
स नः कदा चिदर्वता गमदा वाजसातये गमदा मेधसातये नभन्तामन्यके समे ॥२॥

नहि । वाम् । वव्रयामहे । अथ । इन्द्रम् । इत् । यजामहे । शविष्ठम् । नृणाम् । नरम् । सः । नः । कदा । चित् । अर्वता । गमत् । आ । वाजऽसातये । गमत् । आ । मेधऽसातये । नभन्ताम् । अन्यके । समे ॥ २ ॥

**वेङ्कट०** न हि वाम् वयं धनं याचामहे। अपि तर्हि इन्द्रम् एव यजामहे शविष्ठम् नृणाम् नेतारम्। सः अस्मान् कदा चित् अश्वेन आ गच्छति अन्नलाभाय कदाचित् यज्ञभजनाय ॥ २ ॥

ता हि मध्यं भराणामिन्द्राग्नी अधिक्षितः ।
ता उ कवित्वना कवी पृच्छयमाना सखीयते सं धीतमश्नुतं नरा नभन्तामन्यके समे ॥३॥

ता । हि । मध्यम् । भराणाम् । इन्द्राग्नी इति । अधिऽक्षितः । तौ । ऊँ इति । कवित्वना । कवी इति । पृच्छयमाना । सखिऽयते । सम् । धीतम् । अश्नुतम् । नरा । नभन्ताम् । अन्यके । समे ॥३॥

---

१. आवर्तम् वि[1]; आर्वतम् अ[1]. २. स्रुवन्त्यः मूको. ३-३. नास्ति मूको. ४-४. दृढानि धनानि अ[1]. ५-५. यथा हिरण्यानि अभिभवति चात् इति मूको.

वेङ्कट० तौ हि मध्यम् सङ्ग्रामाणाम् इन्द्राग्नी अधिनिवसतः। तौ एव कवित्वेन क्रान्तकर्माणौ कविजनैः पृच्छयमानौ[1] सखित्वम् इच्छते सम् अश्नुतम् कर्म नरौ! ॥ ३ ॥

अभ्यर्च नभाकवदिन्द्राग्नी यजसा गिरा ।
ययोर्विश्वमिदं जगदियं द्यौः पृथिवी मह्युपस्थे बिभृतो वसु नभन्तामन्यके समे ॥४॥

अभि । अर्च । नभाकऽवत् । इन्द्राग्नी इति । यजसा । गिरा । ययोः । विश्वम् । इदम् । जगत् । इयम् । द्यौः । पृथिवी । मही । उपऽस्थे । बिभृतः । वसु । नभन्ताम् । अन्यके । समे ॥ ४ ॥

वेङ्कट० हे नाभाक! नभाकवत्[2] इन्द्राग्नी यज्ञेन स्तुत्या वा अभि अर्च, ययोः विश्वम् इदम् जगत्, ययोः च उपस्थे द्यावापृथिव्यौ वसु बिभृतः ॥ ४ ॥

प्र ब्रह्माणि नभाकवदिन्द्राग्निभ्यामिरज्यत ।
या सप्तबुध्नमर्णवं जिह्मबारमपोर्णुत इन्द्र ईशान ओजसा नभन्तामन्यके समे ॥५॥

प्र । ब्रह्माणि । नभाकऽवत् । इन्द्राग्निऽभ्याम् । इरज्यत । या । सप्तऽबुध्नम् । अर्णवम् । जिह्मऽबारम् । अपऽऊर्णुतः । इन्द्रः । ईशानः । ओजसा । नभन्ताम् । अन्यके । समे ॥ ५ ॥

वेङ्कट० प्र ईरयत इन्द्राग्निभ्याम् स्तोत्राणि नभाकवत् यौ इन्द्राग्नी सप्तमूलम् अर्णवम् पिहितद्वारम् तेजोभिः अपोर्णुतः। तयोः मध्ये इन्द्रः ईशानः भवति बलेन ॥ ५ ॥

अपि वृश्च पुराणवद् व्रततेरिव गुष्पितमोजो दासस्य दम्भय ।
वयं तदस्य संभृतं वस्विन्द्रेण वि भजेमहि नभन्तामन्यके समे ॥ ६ ॥

अपि । वृश्च । पुराणऽवत् । व्रततेःऽइव । गुष्पितम् । ओजः । दासस्य । दम्भय । वयम् । तत् । अस्य । समऽभृतम् । वसु । इन्द्रेण । वि । भजेमहि । नभन्ताम् । अन्यके । समे ॥ ६ ॥

वेङ्कट० अपि वृश्च यथा प्रत्नः[3] वृश्चति[4] शत्रूणां लतायाः इव [5]गुष्पितम् इति गुल्फतिपर्यायः[5]। व्रततेः निर्गतां शाखाम् इव इति। तदेवाह—बलम्[6] दासस्य विनाशयेति। परोक्ष उत्तरार्धः स्पष्टः ॥ ६ ॥

[7]इति षष्ठाष्टके तृतीयाध्याये चतुर्विंशो वर्गः[7] ॥

यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा ।
अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो वनुयाम वनुष्यतो नभन्तामन्यके समे ॥७॥

---

१. पूज्यमा' मूको. २. नभाकव वि'; ताकतभाकव अ'. ३. प्रश्नौ मूको. ४. पृच्छति मूको. ५ गु···गुल्फ॰ वि'; ··· गुल्फ' अ'. ६. बल मूको. ७-७. नास्ति मूको.

यत् । इन्द्राग्नी इति॑ । जना॑ः । इ॒मे । वि॒ऽह्वय॑न्ते । तना॑ । गि॒रा ।
अ॒स्माकै॑भिः । नृऽभि॑ः । व॒यम् । स॒स॒ह्याम॑ । पृ॒त॒न्य॒तः । व॒नु॒याम॑ । व॒नु॒ष्य॒तः । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥

वेङ्कट० इमे जनाः इन्द्राग्नी विह्वयन्ते धनेन स्तुत्या च । तेषु वयम्[1] अस्माकीनैः मनुष्यैः अभिभवेम पृतनामिच्छतः[2] । वनुयाम च वनुष्यतः हन्तुमिच्छतः ॥ ७ ॥

या नु श्वे॒तावव॒मो दि॒व उ॒च्चरा॑त॒ उप॒ द्युभि॑ः ।
इ॒न्द्रा॒ग्न्योरनु॑ व्र॒तमुहा॑ना यन्ति॒ सिन्ध॑वो॒ यान्त्सीं॑ ब॒न्धादमु॑ञ्चतां॒ नभ॑न्तामन्य॒के स॑मे ।८।

या । नु । श्वे॒तौ । अ॒वः । दि॒वः । उ॒त्ऽचरा॑तः । उप॑ । द्युऽभि॑ः । इ॒न्द्रा॒ग्न्योः । अनु॑ । व्र॒तम् । उहा॑नाः । य॒न्ति॒ । सिन्ध॑वः । यान् । सीम् । ब॒न्धात् । अमु॑ञ्चताम् । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥

वेङ्कट० [3]यौ श्वेतौ[3] अधस्तात् दिवः उप उच्चरतः दीप्तिभिः[4] । तयोः इन्द्राग्न्योः अनु यन्ति कर्म वहन्तः सिन्धवः, यान् सिन्धून् इमौ सर्वतो बन्धनात्[5] अमुञ्चताम् ॥ ८ ॥

पू॒र्वीष्ट॑ इन्द्रोप॑मातयः पू॒र्वीरु॒त प्रश॑स्तयः॒ सूनो॑ हि॒न्वस्य॑ हरिवः ।
वस्वो॑ वी॒रस्या॒पृचो॒ या नु साध॑न्त नो॒ धियो॒ नभ॑न्तामन्य॒के स॑मे ॥ ९ ॥

पू॒र्वीः । ते॒ । इ॒न्द्र॒ । उप॑ऽमातयः । पू॒र्वीः । उ॒त । प्रऽश॑स्तयः । सू॒नो इति॑ । हि॒न्वस्य॑ । ह॒रि॒ऽवः॒ । वस्व॑ः । वी॒रस्य॑ । आ॒ऽपृच॑ः । याः । नु । साध॑न्त । नः॒ । धिय॑ः । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥ ९ ॥

वेङ्कट० बहूनि ते उपमानानि इन्द्र!, बह्व्यश्चापि[6] प्रशस्तयः [7]प्रेरयितः! प्रीणयितुः[7], वज्रिन्!; वासयितुः वीरस्य धनानि आपर्चयतः तव याः स्तुतिः उपमातिः च अस्माकं प्रज्ञाम् असाधयन्[8] ॥ ९ ॥

तं शि॑शीता सुवृ॒क्तिभि॑स्त्वे॒षं सत्वा॑नमृ॒ग्मिय॑म् ।
उ॒तो नु चि॒द् य ओज॑सा॒ शुष्ण॑स्या॒ण्डानि॒ भेद॑ति॒ जेष॒त् स्व॑र्वतीर॒पो नभ॑न्तामन्य॒के स॑मे ।१०।

तम् । शि॒शी॒त॒ । सु॒वृ॒क्तिऽभि॑ः । त्वे॒षम् । सत्वा॑नम् । ऋ॒ग्मिय॑म् । उ॒तो इति॑ । नु । चि॒त् । यः । ओज॑सा । शुष्ण॑स्य । आ॒ण्डानि॑ । भेद॑ति । जेष॑त् । स्व॑ःऽवतीः । अ॒पः । नभ॑न्ताम् । अ॒न्य॒के । स॒मे ॥ १० ॥

वेङ्कट० तम् संस्कुरुत[9] स्तुतिभिः दीप्तं सम्भक्तारम्[10] ऋगर्हम् । अपि च यः बलेन शुष्णासुरस्य अण्डजातानि अभिनत् अपत्यानि, स दिव्यानि [11]जयतु उदकानि[11] ॥ १० ॥

तं शि॑शीता स्वध्व॒रं स॒त्यं सत्वा॑नमृ॒त्विय॑म् ।
उ॒तो नु चि॒द् य ओह॑त आ॒ण्डा शुष्ण॑स्य॒ भेद॒त्यजैः॒ स्व॑र्वतीर॒पो नभ॑न्तामन्य॒के स॑मे ॥११॥

---

१. च यम् मूको. २. पृतनाना° वि[२]. ३-३. याद्दचतौ वि[२]; यो श्वेतौ अ[१]. ४. दीप्तः वि[२]; दीप्तिः अ[१]. ५. बलं धनात् मूको. ६. °पि च वि[२]. ७-७. प्रेरयित प्रीणयित मूको. ८. साधनयत् मूको. ९. संस्कुरित वि[२]; संस्कुरित अ[१]. १०. संभर्तारम् वि[२]. ११-११. यजतु करयानि मूको.

तम् । शिशीत । सुऽअध्वरम् । सत्यम् । सत्वानम् । ऋत्वियम् । उतो इति । नु । चित् । यः । ओहते । आण्डा । शुष्णस्य । भेदति । अजैः । स्वःऽवतीः । अपः । नभन्ताम् । अन्यके । समे ॥

वेङ्कट० तम् संस्कुरुत सुयज्ञम् आर्यम् सत्वानम्[1] ऋतौ यष्टव्यम्, यः यज्ञं प्रति गच्छति हिनस्ति च शुष्णस्य आण्डानि। स त्वम् अजैषीः दिव्यानि उदकानि ॥ ११ ॥

एवेन्द्राग्निभ्यां पितृवन्नवीयो मन्धातृवदङ्गिरस्वदवाचि ।
त्रिधातुना शर्मणा पातमस्मान् वयं स्याम पतयो रयीणाम् ॥ १२ ॥

एव । इन्द्राग्निऽभ्याम् । पितृऽवत् । नवीयः । मन्धातृऽवत् । अङ्गिरस्वत् । अवाचि । त्रिऽधातुना । शर्मणा । पातम् । अस्मान् । वयम् । स्याम । पतयः । रयीणाम् ॥ १२ ॥

वेङ्कट० एवम् इन्द्राग्निभ्याम् पितृवत् नवतरम् मन्धातृवत् अङ्गिरोवच्च स्तोत्रम् अवाचि। त्रिधातुना गृहेण रक्षतम् अस्मान्। वयम् स्याम पतयः रयीणाम् इति ॥ १२ ॥

[2]इति षष्ठाष्टके तृतीयाध्याये पञ्चविंशो वर्गः[2] ॥

## [ ४१ ]

[2]नाभाकः काण्व ऋषिः। वरुणो देवता। महापङ्क्तिश्छन्दः[2]।

अस्मा ऊ षु प्रभूतये वरुणाय मरुद्भ्योऽर्चा विदुष्टरेभ्यः ।
यो धीता मानुषाणां पश्वो गा इव रक्षति नभन्तामन्यके समे ॥ १ ॥

अस्मै । ऊँ इति । सु । प्रऽभूतये । वरुणाय । मरुत्ऽभ्यः । अर्च । विदुःऽतरेभ्यः । यः । धीता । मानुषाणाम् । पश्वः । गाःऽइव । रक्षति । नभन्ताम् । अन्यके । समे ॥ १ ॥

वेङ्कट० अस्मै ऊ सु प्रकृष्टधनाय वरुणाय मरुद्भ्यः [3]च स्तुहि[3] विद्वत्तरेभ्यः, यः वरुणः कर्माणि मानुषाणाम् पशून् गच्छत इव रक्षति[4] ॥ १ ॥

तमू षु समना गिरा पितॄणां च मन्मभिः ।
नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे ॥२॥

तम् । ऊँ इति । सु । समना । गिरा । पितॄणाम् । च । मन्मऽभिः । नाभाकस्य । प्रशस्तिऽभिः । यः । सिन्धूनाम् । उप । उत्ऽअये । सप्तऽस्वसा । सः । मध्यमः । नभन्ताम् । अन्यके । समे ॥

वेङ्कट० यास्कः—'तं [5]स्वभिष्टौमि समानया[5] गिरा गीत्या स्तुत्या पितॄणां च मननीयैः स्तोमैः। नाभाकस्य प्रशस्तिभिः। ऋषिर्नाभाको बभूव। यः स्यन्दमानानामासामुपोदये सप्तस्वसारमेनमाह

---

१. सत्विनं मूको. २-२. नास्ति मूको. ३-३. चेत् तुहि मूको. ४. रक्षन्ति मूको.
५-५. स्वहिरिहामि सामान्य मूको.

वाग्भिः स मध्यम इति निरुच्यते। अथैष एव भवति। नभन्तामन्यके समे। मा भूवन्नन्यके सर्वे, ये नो द्विषन्ति दुर्धियः पापधियः पापसङ्कल्पाः' (या १०,५) इति। यत् सिन्धुभ्य उद्गच्छन्तीत्यर्थः ॥ २ ॥

स क्षपः परि षस्वजे न्यु१स्रो मायया दधे स विश्वं परि दर्शतः ।
तस्य वेनीरनु व्रतमुषस्तिस्रो अवर्धयन् नभन्तामन्यके समे ॥ ३ ॥

सः । क्षपः । परि । सस्वजे । नि । उस्रः । मायया । दधे । सः । विश्वम् । परि । दर्शतः ।
तस्य । वेनीः । अनु । व्रतम् । उषः । तिस्रः । अवर्धयन् । नभन्ताम् । अन्यके । समे ॥ ३ ॥

**वेङ्कट०** सः वरुणः रात्रीः परि स्वजते। उत्सरणशीलः सर्वं कर्मणा परितः च नि दधाति दर्शनीयः, तस्य व्रतम् कामयमानाः प्रजाः त्रिषु कालेषु अनु वर्धयन्ति प्रातः मध्यन्दिने सायमिति ॥ ३ ॥

यः ककुभो निधारयः पृथिव्यामधि दर्शतः ।
स माता पूर्व्यं पदं तद् वरुणस्य सप्त्यं स हि गोपा इवेर्यो नभन्तामन्यके समे ॥ ४ ॥

यः । ककुभः । निऽधारयः । पृथिव्याम् । अधि । दर्शतः । सः । माता । पूर्व्यम् । पदम् ।
तत् । वरुणस्य । सप्त्यम् । सः । हि । गोपाःऽइव । इर्यः । नभन्ताम् । अन्यके । समे ॥ ४ ॥

**वेङ्कट०** यः दिशः निधारयति पृथिव्या उपरि दर्शनीयः, सः निर्माता स्तोतुः प्रत्नं[1] स्थानं स्वर्गाख्यम्, तत् अस्माभिः च सर्पणीयम्[2] तस्य स्वभूतम्। सः हि गोपायिता [3]गोपाल इव[3] सर्वेषां पशूनां सर्वासां प्रजानां स्वामी भवति प्रेरयिता इर्यः ॥ ४ ॥

यो धर्ता भुवनानां य उस्राणामपीच्या३ वेद नामानि गुह्या ।
स कविः काव्या पुरु रूपं द्यौरिव पुष्यति नभन्तामन्यके समे ॥ ५ ॥

यः । धर्ता । भुवनानाम् । यः । उस्राणाम् । अपीच्या । वेद । नामानि । गुह्या ।
सः । कविः । काव्या । पुरु । रूपम् । द्यौःऽइव । पुष्यति । नभन्ताम् । अन्यके । समे ॥ ५ ॥

**वेङ्कट०** यः धारयिता भुवनानाम्, यः च रश्मीनां देवाधिष्ठानभूतानाम् अन्तर्हितानि जानाति[4] नामानि गुहायां निहितानि, सः कविः कविकर्माणि बहूनि पुष्यति, यथा द्यौः पुष्यति रूपम् ॥ ५ ॥

[5]इति षष्ठाष्टके तृतीयाध्याये षड्विंशो वर्गः[5] ॥

यस्मिन् विश्वानि काव्या चक्रे नाभिरिव श्रिता ।
त्रितं जूती सपर्यत व्रजे गावो न संयुजे युजे अश्वाँ अयुक्षत नभन्तामन्यके समे ॥६॥

---

१. प्रत्नं मूको. २. सपत्नीयं मूको. ३-३. गोपाः सचेव मूको. ४. जातानि मूको.
५-५. नास्ति मूको.

यस्मिन् । विश्वानि । काव्या । चक्रे । नाभिःऽइव । श्रिता । त्रितम् । जूती । सपर्यत ।
व्रजे । गावः । न । सम्ऽयुजे । युजे । अश्वान् । अयुक्षत । नभन्ताम् । अन्यके । समे ॥ ६ ॥

वेङ्कट० यस्मिन् विश्वानि कविकर्माणि चक्रे नाभिः इव स्थितानि अन्तः, [1]तं त्रिषु[1] [2]स्थानेषु स्थितं[2] जवेन परिचरत। यथा पशून् व्रजे संयुजे संयोगार्थं सह स्थापयितुं युञ्जन्ति[3], एवम् अस्माकम् अभियोगाय सपत्नाः च [4]अश्वान् अयुक्षत, ततः[4] क्षिप्रं परिचरत वरुणमिति ॥ ६ ॥

य आस्वत्कं आशये विश्वा जातान्येषाम् ।
परि धामानि मर्मृशद् वरुणस्य पुरो गये विश्वे देवा अनु व्रतं नभन्तामन्यके समे ॥७॥

यः । आसु । अत्कः । आऽशये । विश्वा । जातानि । एषाम् । परि । धामानि । मर्मृशत् ।
वरुणस्य । पुरः । गये । विश्वे । देवाः । अनु । व्रतम् । नभन्ताम् । अन्यके । समे ॥ ७ ॥

वेङ्कट० यः एषाम् अश्वानां स्वभूतं [5]यद् रूपम् आसु[5] दिक्षु स्थितानि विश्वानि जातानि आशेते, सोऽर्त्क्[6] सर्वाणि तेजांसि परिमृशतः वरुणस्य अस्य पुरः गये भवति रथस्य पुरस्तात् भवति। तस्य वरुणस्य विश्वे अन्ये देवाः व्रतम् अनु गच्छन्ति ॥ ७ ॥

स समुद्रो अपीच्यस्तुरो द्यामिव रोहति नि यदासु यजुर्दधे ।
स माया अर्चिना पदास्तृणान्नाकमारुहन्नभन्तामन्यके समे ॥ ८ ॥

सः । समुद्रः । अपीच्यः । तुरः । द्याम्ऽइव । रोहति । नि । यत् । आसु । यजुः । दधे ।
सः । मायाः । अर्चिना । पदा । अस्तृणात् । नाकम् । आ । अरुहत् । नभन्ताम् । अन्यके । समे ॥८॥

वेङ्कट० यस्मादापः समुद्द्रवन्ति सः समुद्रः अन्तर्हितः वरुणः तुरः क्षिप्रः, आदित्यः यथा दिवम् रोहति, तद्वत् रोहति नाकम्। यदा आसु दिक्षु प्रजाभ्यः दानम् नि दधाति। सः असुराणाम् मायाः अर्चिष्मता तेजसा हिनस्ति, [7]नाकम् च आ रोहति[7] ॥ ८ ॥

यस्य श्वेता विचक्षणा तिस्रो भूमीरधिक्षितः ।
त्रिरुत्तराणि पप्रतुर्वरुणस्य ध्रुवं सदः स सप्तानामिरज्यति नभन्तामन्यके समे ॥ ९ ॥

यस्य । श्वेता । विऽचक्षणा । तिस्रः । भूमीः । अधिऽक्षितः । त्रिः । उत्ऽतराणि । पप्रतुः ।
वरुणस्य । ध्रुवम् । सदः । सः । सप्तानाम् । इरज्यति । नभन्ताम् । अन्यके । समे ॥ ९ ॥

वेङ्कट० यस्य श्वेतानि तेजांसि तिस्रः भूमीः अधःस्थिताः प्रथयन्ति[8] अन्तरिक्षे अधिवसतः।

---

१-१. त्रीषु वि[१]; तन्त्रीषु अ[१]. २-२. अस्थाने मूको. ३. युजन्ति मूको. ४-४. आन युक्षत तत मूको. ५. यदूपरासु मूको. ६. सोक् वि[२]. ७-७. नास्ति अ[१]. ८. प्रसयति मूको.

तत्र त्रीणि च उत्तराणि। 'तिस्रो भूमीर्धारयन् त्रीरुँत द्यून्' (ऋ २,२७,८) इति मन्त्रः। तस्य वरुणस्य ध्रुवम् सदः। सः सप्तानाम् सिन्धूनाम् ईश्वरो भवति ॥ ९ ॥

यः श्वेताँ अधिनिर्णिजश्चक्रे कृष्णाँ अनु व्रता।
स धाम पूर्व्यं ममे यः स्कम्भेन वि रोदसी अजो न द्यामधारयन्नभन्तामन्यके समे ॥१०॥

यः। श्वेतान्। अधिऽनिर्निजः। चक्रे। कृष्णान्। अनु। व्रता। सः। धाम। पूर्व्यम्। ममे। यः। स्कम्भेन। वि। रोदसी इति। अजः। न। द्याम्। अधारयत्। नभन्ताम्। अन्यके। समे॥

वेङ्कट० यः दिवा श्वेतान् आत्मीयान् रश्मीन्[1] रात्रौ कृष्णान् करोति। कर्माणि लक्षीकृत्य[2] उभयविधकर्मानुगुणम्[3] सः प्रत्नम् धाम अन्तरिक्षं दिवं वा ममे। यः[4] स्कम्भेन अन्तरिक्षेण रोदसी[4] आदित्यः द्याम् इव वि धारयति इति[5] ॥ १० ॥

[6]इति षष्ठाष्टके तृतीयाध्याये सप्तविंशो वर्गः[6] ॥

## [ ४२ ]

[6]नाभाकः काण्वः, अर्चनाना आत्रेयो वा ऋषिः। आदितस्तिसृणां वरुणो देवता, अन्त्यानां तिसृणाम् अश्विनौ। आदितः तिस्रस्त्रिष्टुभः, अन्त्यास्तिस्रः अनुष्टुभः[6]।

अस्तभ्नाद् द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः।
आसीदद् विश्वा भुवनानि सम्राड् विश्वेत् तानि वरुणस्य व्रतानि ॥ १ ॥

अस्तभ्नात्। द्याम्। असुरः। विश्वऽवेदाः। अमिमीत। वरिमाणम्। पृथिव्याः। आ। असीदत्। विश्वा। भुवनानि। सम्ऽराट्। विश्वा। इत्। तानि। वरुणस्य। व्रतानि ॥ १ ॥

वेङ्कट० अस्तभ्नात् द्याम् असुरः विश्वधनः। तथा पृथिव्याः च परिमाणं चक्रे। इत्थं निर्मितानि विश्वानि भुवनानि सम्राट् भूत्वा च आ असीदत्। विश्वानि एव तानि वरुणस्य कर्माणि ॥ १ ॥

एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम्।
स नः शर्म त्रिवरूथं वि यंसत् पातं नो द्यावापृथिवी उपस्थे ॥ २ ॥

एव। वन्दस्व। वरुणम्। बृहन्तम्। नमस्य। धीरम्। अमृतस्य। गोपाम्। सः। नः। शर्म। त्रिऽवरूथम्। वि। यंसत्। पातम्। नः। द्यावापृथिवी इति। उपऽस्थे ॥२॥

वेङ्कट० एवं स्तुहि वरुणम् महान्तम्, नमस्कुरु[7] च प्राज्ञम् अमृतस्य गोपायितारम्। सः अस्मभ्यं गृहं त्रिछदिष्कं[8] प्रयच्छतु[9]। पातम् अस्मान् द्यावापृथिव्यौ! उपस्थे वर्तमानान् ॥ २ ॥

---

१. अरिमन् मूको. २. लक्ष्यीकृत्य वि[2]. ३. °विधि कर्माणिनुगुण वि[2]; °कर्माणिनुगुण अ[1]. ४. नास्ति मूको. ५. इत्यर्थः अ[1]. ६-६. नास्ति मूको. ७. नवसुरु मूको. ८. नियच्छ° मूको. ९. °च्छन्तु मूको.

इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ॥ ३ ॥

इमाम् । धियम् । शिक्षमाणस्य । देव । क्रतुम् । दक्षम् । वरुण । सम् । शिशाधि ।
यया । अति । विश्वा । दुःऽइता । तरेम । सुऽतर्माणम् । अधि । नावम् । रुहेम ॥ ३ ॥

**वेङ्कट०** इमाम् धियम् कर्म अनुतिष्ठतः देव! प्रज्ञानं बलं च वरुण! तीक्ष्णीकुरु । यया नावा विश्वानि दुरितानि अति तरेम, तां सुष्ठु तारयित्रीम् नावम् वयम् अधि रुहेम इति यज्ञाभिप्रायम् ॥ ३ ॥

आ वां ग्रावाणो अश्विना धीभिर्विप्रा अचुच्यवुः ।
नासत्या सोमपीतये नभन्तामन्यके समे ॥ ४ ॥

आ । वाम् । ग्रावाणः । अश्विना । धीभिः । विप्राः । अचुच्यवुः ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥ ४ ॥

**वेङ्कट०** आश्विनः[1] तृचः निगदसिद्धः । विप्राः ग्रावाणः यज्ञे वाम् कर्मभिः आ अचुच्यवुः इति ॥ ४ ॥

यथा वामत्रिरश्विना गीर्भिर्विप्रो अजोहवीत् ।
नासत्या सोमपीतये नभन्तामन्यके समे ॥ ५ ॥

यथा । वाम् । अत्रिः । अश्विना । गीःऽभिः । विप्रः । अजोहवीत् ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥ ५ ॥

**वेङ्कट०** निगदसिद्धा ॥ ५ ॥

एवा वामह्व ऊतये यथाहुवन्त मेधिराः ।
नासत्या सोमपीतये नभन्तामन्यके समे ॥ ६ ॥

एव । वाम् । अह्वे । ऊतये । यथा । अहुवन्त । मेधिराः ।
नासत्या । सोमऽपीतये । नभन्ताम् । अन्यके । समे ॥ ६ ॥

**वेङ्कट०** निगदसिद्धा ॥ ६ ॥

[2]इति षष्ठाष्टके तृतीयाध्याये अष्टाविंशो वर्गः[2] ॥

---

१. अश्विनम् मूको. २-२. नास्ति मूको.

[ ४३ ]

[1]विरूप आङ्गिरस ऋषिः। अग्निर्देवता। गायत्री छन्दः[1]।

इमे विप्रस्य वेधसोऽग्नेरस्तृतयज्वनः। गिरः स्तोमास ईरते ॥ १ ॥

इमे। विप्रस्य। वेधसः। अग्नेः। अस्तृतऽयज्वनः। गिरः। स्तोमासः। ईरते ॥ १ ॥

वेङ्कट० आङ्गिरसः[2] विरूपः। इमे मेधाविनः विधातुः अग्नेः अहिंसितयजमानस्य गिरः प्रेरयन्ति स्तोतारः ॥ १ ॥

अस्मै ते प्रतिहर्यते जातवेदो विचर्षणे। अग्ने जनामि सुष्टुतिम् ॥ २ ॥

अस्मै। ते। प्रतिऽहर्यते। जातऽवेदः। विऽचर्षणे। अग्ने। जनामि। सुऽस्तुतिम् ॥ २ ॥

वेङ्कट० अस्मै तुभ्यं प्रेप्सते[3] जातवेदः! [4]विद्रष्टः! अग्ने![4] जनयामि सुष्टुतिम् ॥ २ ॥

आरोका इव घेदह तिग्मा अग्ने तव त्विषः। दद्भिर्वनानि बप्सति ॥ ३ ॥

आरोकाःऽइव। घ। इत्। अह। तिग्माः। अग्ने। तव। त्विषः। दत्ऽभिः। वनानि। बप्सति ॥३॥

वेङ्कट० पशवः आरोकाः[5] आरोचनात्। पशवः इव तीक्ष्णाः[6] अग्ने! तव[7] दीप्तयः दन्तैः अरण्यानि भक्षयन्ति ॥ ३ ॥

हरयो धूमकेतवो वातजूता उप द्यवि। यतन्ते वृथगग्नयः ॥ ४ ॥

हरयः। धूमऽकेतवः। वातऽजूताः। उप। द्यवि। यतन्ते। वृथक्। अग्नयः ॥ ४ ॥

वेङ्कट० हरणशीलाः धूमकेतवः वातप्रेरिताः अन्तरिक्षे गच्छन्ति वृथक् अग्नयः। पृथक् इत्यनेन सममन्वयं वृथगिति। पृथगित्येव वाजसनेयिनः पठन्ति ( मा ३३,२ ) ॥ ४ ॥

एते त्ये वृथगग्नय इद्धासः समदृक्षत। उषसामिव केतवः ॥ ५ ॥

एते। त्ये। वृथक्। अग्नयः। इद्धासः। सम्। अदृक्षत। उषसाम्ऽइव। केतवः ॥ ५ ॥

वेङ्कट० निगदसिद्धा ॥ ५ ॥

[1]इति षष्ठाष्टके तृतीयाध्याये एकोनत्रिंशो वर्गः[1] ॥

कृष्णा रजांसि पत्सुतः प्रयाणे जातवेदसः। अग्निर्यद् रोधति क्षमि ॥ ६ ॥

कृष्णा। रजांसि। पत्सुतः। प्रऽयाने। जातऽवेदसः। अग्निः। यत्। रोधति। क्षमि ॥ ६ ॥

---

१-१. नास्ति मूको. २. अङ्गिरसः मूको. ३. प्रेप्सतो मूको. ४-४. विसष्टराग्ने मूको.
५. वैप १,६९५ h द्र. ६. तीक्ष्णान् मूको. ७. च मूको.

वेङ्कट० कृष्णाः पांसवः पत्तः भवन्ति प्रयाणे जातवेदसः अग्नेः[1], यदा अग्निः रुणद्धि वनस्पतीन् शुष्कान्[2] क्षमायाम् ॥ ६ ॥

धा॒सिं कृ॑ण्वा॒न ओष॑धी॒र्बप्स॑द॒ग्निर्न वा॑यति । पुन॒र्यन् तरु॑णी॒रपि॑ ॥ ७ ॥

धा॒सिम् । कृ॒ण्वा॒नः । ओष॑धीः । बप्स॑त् । अ॒ग्निः । न । वा॒य॒ति॒ । पुन॑ः । यन् । तरु॑णीः । अपि॑ ॥७॥

वेङ्कट० अन्नम् ( तु. निघ २,७ ) कृण्वानः ओषधीः भक्षयन् अग्निः न शाम्यति । पुनः च गच्छन् भवति प्रादुर्भूताः तरुणीः अपि ॥ ७ ॥

जि॒ह्वाभि॒रह॒ नन्न॑मद॒र्चिषा॑ जञ्ज॒णाभ॑वन् । अ॒ग्निर्वने॑षु रोचते ॥ ८ ॥

जि॒ह्वाभि॑ः । अह॑ । नन्न॑मत् । अ॒र्चिषा॑ । ज॒ञ्ज॒णा॒ऽभव॑न् । अ॒ग्निः । वने॑षु । रो॒च॒ते॒ ॥ ८ ॥

वेङ्कट० ज्वालाभिः एव वनस्पतीन् अत्यन्तं नमयन् अर्चिषा च ज्वलन् । 'जञ्जणाभवन्' ( निघ १,१७ ) इति ज्वलतिकर्मसु पठितः । अग्निः अरण्येषु रोचते ॥ ८ ॥

अ॒प्स्व॑ग्ने॒ सधि॒ष्टव॒ सौष॑धी॒रनु॑ रुध्यसे । गर्भे॒ सञ्जा॑यसे॒ पुन॑ः ॥ ९ ॥

अ॒प्ऽसु । अ॒ग्ने॒ । सधि॑ः[3] । तव॑ । सः । ओष॑धीः । अनु॑ । रु॒ध्य॒से॒ । गर्भे॑ । सन् । जा॒य॒से॒ । पुन॒रिति॑ ॥९॥

वेङ्कट० अप्सु अग्ने ! तव प्रवेशस्थानम् । सः त्वम् ओषधीः जीर्णाः अनु रुणत्सि । ततः पुनः च तासां भूमिष्ठानाम्[4] गर्भे भवन्[5] जायसे ॥ ९ ॥

उद॑ग्ने॒ तव॒ तद् घृ॒तादर्ची रो॑चत॒ आहु॑तम् । निंसा॑नं जु॒ह्वो॒३॒॑ मुखे॑ ॥ १० ॥

उत् । अ॒ग्ने॒ । तव॑ । तत् । घृ॒तात् । अ॒र्चिः । रो॒च॒ते॒ । आऽहु॑तम् । निंसा॑नम् । जु॒ह्वः॑ । मुखे॑ ॥१०॥

वेङ्कट० उत् रोचते अग्ने ! तव तत् अर्चिः घृतात् आहुतम् लिहत्[6] जुह्वः[7] होमसाधनस्रुचः मुखे ॥ १० ॥

'इति षष्ठाष्टके तृतीयाध्याये त्रिंशो वर्गः[8] ॥

उ॒क्षान्ना॑य व॒शान्ना॑य॒ सोम॑पृष्ठाय वे॒धसे॑ । स्तोमै॑र्विधेमा॒ग्नये॑ ॥ ११ ॥

उ॒क्षऽअ॑न्नाय । व॒शाऽअ॑न्नाय । सोम॑ऽपृष्ठाय । वे॒धसे॑ । स्तोमैः॑ । वि॒धे॒म॒ । अ॒ग्नये॑ ॥ ११ ॥

वेङ्कट० उक्षान्नाय वशान्नाय सोमघृतपृष्ठाय विधात्रे स्तोमैः परिचरणं कुर्मः अग्नये ॥ ११ ॥

उ॒त त्वा॒ नम॑सा व॒यं होत॒र्वरे॑ण्यक्रतो । अग्ने॑ स॒मिद्भि॑रीमहे ॥ १२ ॥

उ॒त । त्वा॒ । नम॑सा । व॒यम् । होत॒रिति॑ । वरे॑ण्यक्रतो इति॒ वरे॑ण्यऽक्रतो । अग्ने॑ । स॒मित्ऽभिः॑ । ई॒म॒हे॒ ॥ १२ ॥

---

१. अग्निः मूको. २. जुष्टान् मूको. ३. तु. मा १३,५३; वैप १,३२४७d. ४. भूयिष्ठा° मूको. ५. भव मूको. ६. लिहन् मूको. ७. जुह्वोः मूको. ८-८. नास्ति मूको.

वेङ्कट० अपि च त्वाम् अन्नेन वयम् हे होतः! वरणीयप्रज्ञ! अग्ने! समिद्भिः च याचामहे ॥ १२ ॥

उत त्वा भृगुवच्छुचे मनुष्वदग्न आहुत । अङ्गिरस्वद्धवामहे ॥ १३ ॥

उत । त्वा । भृगुऽवत् । शुचे । मनुष्वत् । अग्ने । आऽहुत । अङ्गिरस्वत् । हवामहे ॥ १३ ॥

वेङ्कट० निगदसिद्धा ॥ १३ ॥

त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे ॥ १४ ॥

त्वम् । हि । अग्ने । अग्निना । विप्रः । विप्रेण । सन् । सता । सखा । सख्या । सम्ऽइध्यसे ॥ १४ ॥

वेङ्कट० ब्राह्मणव्याख्याता ( ऐब्रा १,१६ ) ॥ १४ ॥

स त्वं विप्राय दाशुषे रयिं देहि सहस्रिणम् । अग्ने वीरवतीमिषम् ॥ १५ ॥

सः । त्वम् । विप्राय । दाशुषे । रयिम् । देहि । सहस्रिणम् । अग्ने । वीरऽवतीम् । इषम् ॥ १५ ॥

वेङ्कट० निगदसिद्धा ॥ १५ ॥

[1]इति षष्ठाष्टके तृतीयाध्याये एकत्रिंशो वर्गः[1] ॥

अग्ने भ्रातः सहस्कृत रोहिदश्व शुचिव्रत । इमं स्तोमं जुषस्व मे ॥ १६ ॥

अग्ने । भ्रातरिति । सहःऽकृत । रोहित्ऽअश्व । शुचिऽव्रत । इमम् । स्तोमम् । जुषस्व । मे ॥ १६ ॥

वेङ्कट० निगदसिद्धा ॥ १६ ॥

उत त्वाग्ने मम स्तुतो वाश्राय प्रतिहर्यते । गोष्ठं गाव इवाशत ॥ १७ ॥

उत । त्वा । अग्ने । मम । स्तुतः । वाश्राय । प्रतिऽहर्यते । गोऽस्थम् । गावःऽइव । आशत ॥ १७ ॥

वेङ्कट० अपि च त्वाम् अग्ने! मम स्तुतयः गोष्ठम् गावः इव प्राप्नुवन्ति । वाशनशीलाय वत्साय पयः कामयमानाय दोहार्थं यथा प्रविशन्ति इति ॥ १७ ॥

तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥ १८ ॥

तुभ्यम् । ताः । अङ्गिरःऽतम । विश्वाः । सुऽक्षितयः । पृथक् । अग्ने । कामाय । येमिरे ॥ १८ ॥

वेङ्कट० तुभ्यम् ताः अङ्गिरस्तम! विश्वाः प्रजाः पृथक्पृथक् अग्ने! कामसिद्ध्यर्थम् आत्मनः नियच्छन्ति ॥ १८ ॥

अग्निं धीभिर्मनीषिणो मेधिरासो विपश्चितः । अद्मसद्याय हिन्विरे ॥ १९ ॥

अग्निम् । धीभिः । मनीषिणः । मेधिरासः । विपःऽचितः । अद्मऽसद्याय । हिन्विरे ॥ १९ ॥

---

१-१. नास्ति मूको.

वेङ्कट० अग्निम् कर्मभिः मनस ईश्वराः मेधाविनः प्राज्ञाः अन्नस्य भजनाय प्रीणयन्ति ॥ १९ ॥

तं त्वामज्मेषु वाजिनं तन्वाना अग्ने अध्वरम् । वह्निं होतारमीळते ॥ २० ॥

तम् । त्वाम् । अज्मेषु । वाजिनम् । तन्वानाः । अग्ने । अध्वरम् । वह्निम् । होतारम् । ईळते ॥ २० ॥

वेङ्कट० तम् त्वाम् अज्मेषु[1] गृहेषु बलिनम् तन्वानाः अग्ने! यज्ञम् वोढारम् ह्वातारम्[2] स्तुवन्ति ॥२०॥

[3]इति षष्ठाष्टके तृतीयाध्याये द्वात्रिंशो वर्गः[3] ॥

पुरुत्रा हि सदृङ्ङसि विशो विश्वा अनु प्रभुः । समत्सु त्वा हवामहे ॥ २१ ॥

पुरुऽत्रा । हि । सऽदृङ् । असि । विशः । विश्वाः । अनु । प्रऽभुः । समत्ऽसु । त्वा । हवामहे ॥२१॥

वेङ्कट० निगदसिद्धेति ॥ २१ ॥

तमीळिष्व य आहुतोऽग्निर्विभ्राजते घृतैः । इमं नः शृणवद्धवम् ॥ २२ ॥

तम् । ईळिष्व । यः । आऽहुतः । अग्निः । विऽभ्राजते । घृतैः । इमम् । नः । शृणवत् । हवम् ॥ २२ ॥

वेङ्कट० तम् स्तुहि, यः आहुतः अग्निः विभ्राजते घृतैः सह । इमम्[4] अस्माकम् शृणोतु हवम्[5] ॥ २२ ॥

तं त्वा वयं हवामहे शृण्वन्तं जातवेदसम् । अग्ने घ्नन्तमप द्विषः ॥ २३ ॥

तम् । त्वा । वयम् । हवामहे । शृण्वन्तम् । जातऽवेदसम् । अग्ने । घ्नन्तम् । अप । द्विषः ॥२३॥

वेङ्कट० निगदसिद्धा ॥ २३ ॥

विशां राजानमद्भुतमध्यक्षं धर्मणामिमम् । अग्निमीळे स उ श्रवत् ॥ २४ ॥

विशाम् । राजानम् । अद्भुतम् । अधिऽअक्षम् । धर्मणाम् । इमम् । अग्निम् । ईळे । सः । ऊँ इति । श्रवत् ॥

वेङ्कट० विशाम् राजानम् महान्तम् अनुसन्धातारम्[6] कर्मणाम् इमम् अग्निम् स्तौमि । सः[7] शृणोतु ॥ २४ ॥

अग्निं विश्वायुवेपसं मर्यं न वाजिनं हितम् । सप्तिं न वाजयामसि ॥ २५ ॥

अग्निम् । विश्वायुऽवेपसम् । मर्यम् । न । वाजिनम् । हितम् । सप्तिम् । न । वाजयामसि ॥ २५ ॥

वेङ्कट० अग्निम् सर्वगतबलम् मनुष्यम् इव बलिनम् योद्धारम् हितम् अश्वम् इव च बलिनं कुर्मः ॥ २५ ॥

---

१. अग्ने मूको. २. ह्वातारः वि[१]; ह्वातार अ[१]. ३-३. नास्ति मूको. ४. मम मूको. ५. भवम् अ[१]. ६. °न्धा वि[१]; °न्धाय अ[१]. ७-७. सं मूको.

घ्नन् मृध्राण्यप द्विषो दहन् रक्षांसि विश्वहा । अग्ने तिग्मेन दीदिहि ॥ २६ ॥

घ्नन् । मृध्राणि । अप । द्विषः । दहन् । रक्षांसि । विश्वहा । अग्ने । तिग्मेन । दीदिहि ॥२६॥

**वेङ्कट०** हिंसकान् द्वेष्टॄन् अप घ्नन् दहन् च रक्षांसि सर्वदा अग्ने! तिग्मेन तेजसा दीदिहि[1] ॥ २६ ॥

यं त्वा जनास इन्धते मनुष्वदङ्गिरस्तम । अग्ने स बोधि मे वचः ॥ २७ ॥

यम् । त्वा । जनासः । इन्धते । मनुष्वत् । अङ्गिरःऽतम । अग्ने । सः । बोधि । मे । वचः ॥२७॥

**वेङ्कट०** निगदसिद्धेति ॥ २७ ॥

यदग्ने दिविजा अस्यप्सुजा वा सहस्कृत । तं त्वा गीर्भिर्हवामहे ॥ २८ ॥

यत् । अग्ने । दिविऽजाः । असि । अप्सुऽजाः । वा । सहःऽकृत । तम् । त्वा । गीःऽभिः । हवामहे ॥२८॥

**वेङ्कट०** यः त्वम् अग्ने! दिविजाः भवसि अन्तरिक्षजाश्च सहसा कृतः(?) च, तम् त्वा गीर्भिः हवामहे ॥ २८ ॥

तुभ्यं घेत् ते जना इमे विश्वाः सुक्षितयः पृथक् । धासिं हिन्वन्त्यत्तवे ॥२९॥

तुभ्यम् । घ । इत् । ते । जनाः । इमे । विश्वाः । सुऽक्षितयः । पृथक् । धासिम् । हिन्वन्ति । अत्तवे ॥२९॥

**वेङ्कट०** तुभ्यम् एव खलु ते इमे जनाः विश्वाः च अन्याः सुक्षितयः मया दृश्यमानाः प्रजाः अन्नम् प्रेरयन्ति अदनाय पृथक् इति ॥ २९ ॥

ते घेदग्ने स्वाध्योऽहा विश्वा नृचक्षसः । तरन्तः स्याम दुर्गहा ॥ ३० ॥

ते । घ । इत् । अग्ने । सुऽआध्यः । अहा । विश्वा । नृऽचक्षसः । तरन्तः । स्याम । दुःऽगहा ॥३०॥

**वेङ्कट०** ते खलु वयम् अग्ने! सुकर्माणः विश्वानि अहानि नृणां द्रष्टारः तरन्तः भवेम दुःखेन गाहितव्यानि ॥ ३० ॥

[2]इति षष्ठाष्टके तृतीयाध्याये चतुस्त्रिंशो वर्गः[2] ॥

अग्निं मन्द्रं पुरुप्रियं शीरं पावकशोचिषम् । हृद्भिर्मन्द्रेभिरीमहे ॥ ३१ ॥

अग्निम् । मन्द्रम् । पुरुऽप्रियम् । [3]शीरम् । पावकऽशोचिषम् ।[3] हृत्ऽभिः । मन्द्रेभिः । ईमहे ॥ ३१ ॥

**वेङ्कट०** [4]अग्निम् मादनम्[4] बहुप्रियं शयनशीलम् यज्ञेषु पावकदीप्तिम् मनोहारिभिः[5] मादनैः[6] स्तोत्रैः ईमहे ॥ ३१ ॥

---

१. दिव्यं ज्ञानम् मूको. २-२. नास्ति मूको. ३-३. या (४,१४) द्र. ४-४. अग्निमोदनम् वि[2]; अग्नि··· अ[1]. ५. मनोहराभिः वि[1]. ६. मो° मूको.

स त्वमग्ने विभावसुः सृजन्त्सूर्यो न रश्मिभिः । शर्धन् तमांसि जिघ्नसे ॥३२॥

सः । त्वम् । अग्ने । विभाऽवसुः । सृजन् । सूर्यः । न । रश्मिऽभिः । शर्धन् । तमांसि । जिघ्नसे ॥ ३२ ॥

वेङ्कट० सः त्वम् अग्ने! दीप्तिधनः उद्यन् इव सूर्यः रश्मिभिः वेगं कुर्वन् तमांसि जिघ्नसे ॥ ३२ ॥

तत् ते सहस्व ईमहे दात्रं यन्नोपदस्यति । त्वदग्ने वार्यं वसु ॥ ३३ ॥

तत् । ते । सहस्वः । ईमहे । दात्रम् । यत् । न । उपऽदस्यति । त्वत् । अग्ने । वार्यम् । वसु ॥३३॥

वेङ्कट० तत् ते बलवन्! याचामहे धनम्, यत् न उपदस्यति। त्वत्तः अग्ने! वरणीयम् धनम् याचामहे ॥ ३३ ॥

[1]इति षष्ठाष्टके तृतीयाध्याये पञ्चत्रिंशो वर्गः[1] ॥

## [ ४४ ]

[1]विरूप आङ्गिरस ऋषिः । अग्निर्देवता । गायत्री छन्दः[1] ।

समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥ १ ॥

सम्ऽइधा । अग्निम् । दुवस्यत । घृतैः । बोधयत । अतिथिम् । आ । अस्मिन् । हव्या । जुहोतन ॥१॥

वेङ्कट० समिधा अग्निम् परिचरत, घृतैः च बोधयत अतिथिम्। आ जुहुत च अस्मिन् समिद्धे हवींषि ॥ १ ॥

अग्ने स्तोमं जुषस्व मे वर्धस्वानेन मन्मना । प्रति सूक्तानि हर्य नः ॥ २ ॥

अग्ने । स्तोमम् । जुषस्व । मे । वर्धस्व । अनेन । मन्मना । प्रति । सुऽउक्तानि । हर्य । नः ॥२॥

वेङ्कट० अग्ने! स्तोमम् जुषस्व मे, वर्धस्व अनेन[2] स्तोत्रेण, प्रति कामय अस्माकम् सूक्तानि ॥ २ ॥

अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे । देवाँ आ सादयादिह ॥ ३ ॥

अग्निम् । दूतम् । पुरः । दधे । हव्यऽवाहम् । उप । ब्रुवे । देवान् । आ । सादयात् । इह ॥३॥

वेङ्कट० अग्निम् दूतम् अहं पुरः करोमि, हव्यवाहम्[3] च स्तौमि। सः देवान् इह आ सादयतु ॥ ३ ॥

उत् ते बृहन्तो अर्चयः समिधानस्य दीदिवः । अग्ने शुक्रास ईरते ॥ ४ ॥

उत् । ते । बृहन्तः । अर्चयः । सम्ऽइधानस्य । दीदिऽवः । अग्ने । शुक्रासः । ईरते ॥ ४ ॥

---

१-१. नास्ति मूको. २. प्रानेन वि[2]; पानेन अ[1]. ३. °वाहेषु मूको.

वेङ्कट० उत ईरते ते[1] महान्तः अर्चयः समिध्यमानस्य हे दीप्त! अग्ने! ज्वलन्तः ॥ ४ ॥

उप॑ त्वा जु॒ह्वो॒३ मम॑ घृ॒ताची॑र्यन्तु हर्यत । अग्ने॑ ह॒व्या जु॑षस्व नः ॥ ५ ॥

उप॑ । त्वा॒ । जु॒ह्वः॑ । मम॑ । घृ॒ताचीः॑ । य॒न्तु॒ । ह॒र्य॒त॒ । अग्ने॑ । ह॒व्या । जु॒ष॒स्व॒ । न॒ः ॥ ५ ॥

वेङ्कट० उप यन्तु[2] त्वाम्[3] मम होमसाधनस्रुचः[4] घृतमञ्चन्त्यः हे कामयमान!। अग्ने! हव्यानि जुषस्व नः ॥ ५ ॥

[5]इति षष्ठाष्टके तृतीयाध्याये षट्त्रिंशो वर्गः[5] ॥

म॒न्द्रं होता॑रमृ॒त्विजं॑ चि॒त्रभा॑नुं वि॒भाव॑सुम् । अ॒ग्निमी॑ळे॒ स उ॑ श्रवत् ॥ ६ ॥

म॒न्द्रम् । होता॑रम् । ऋ॒त्विज॑म् । चि॒त्रऽभा॑नुम् । वि॒भाऽव॑सुम् । अ॒ग्निम् । ई॒ळे॒ । सः । ऊँ इति॑ । श्र॒व॒त् ॥

वेङ्कट० मादनम्[6] ह्वातारम् ऋतौ यष्टारम् चित्रदीप्तिम् तेजोधनम् अग्निम् स्तौमि । सः शृणोतु ॥ ६ ॥

प्र॒त्नं होता॑र॒मीड्यं॒ जुष्ट॑म॒ग्निं क॒विक्र॑तुम् । अ॒ध्व॒राणा॑मभि॒श्रिय॑म् ॥ ७ ॥

प्र॒त्नम् । होता॑रम् । ईड्य॑म् । जुष्ट॑म् । अ॒ग्निम् । क॒विऽक्र॑तुम् । अ॒ध्व॒राणा॑म् । अ॒भि॒ऽश्रिय॑म् ॥ ७ ॥

वेङ्कट० प्रत्नम् होतारम् ईड्यम् पर्याप्तम् अग्निम् क्रान्तकर्माणम्[7] यज्ञानाम् अभिश्रयितारम् ईळे ॥ ७ ॥

जु॒षा॒णो अ॑ङ्गिरस्तमे॒मा ह॒व्यान्या॑नु॒षक् । अग्ने॑ य॒ज्ञं न॑य ऋतु॒था ॥ ८ ॥

जु॒षा॒णः । अ॒ङ्गि॒रः॒ऽत॒म॒ । इ॒मा । ह॒व्यानि॑ । आ॒नु॒षक् । अग्ने॑ । य॒ज्ञम् । न॒य॒ । ऋ॒तु॒ऽथा ॥ ८ ॥

वेङ्कट० जुषाणः हे अङ्गिरसां वरिष्ठ![8] इमानि हवींषि[9] अनुषक्तम् अग्ने! यज्ञम्[10] च नय काले ॥ ८ ॥

स॒मि॒धा॒न उ॑ सन्त्य॒ शुक्र॑शोच इ॒हा व॑ह । चि॒कि॒त्वान् दैव्यं॒ जन॑म् ॥ ९ ॥

स॒म्ऽइ॒धा॒नः । ऊँ इति॑ । स॒न्त्य॒ । शुक्र॑ऽशोचे । इ॒ह । आ । व॒ह॒ । चि॒कि॒त्वान् । दैव्य॑म् । जन॑म् ॥ ९ ॥

वेङ्कट० हे भजनशील! समिध्यमानः एव ज्वलद्दीप्ते! इह आ वह जानन् दैव्यम् जनम् ॥ ९ ॥

विप्रं॒ होता॑रम॒द्रुहं॑ धू॒मके॑तुं वि॒भाव॑सुम् । य॒ज्ञानां॑ के॒तुमी॑महे ॥ १० ॥

विप्र॑म् । होता॑रम् । अ॒द्रुह॑म् । धू॒मऽके॑तुम् । वि॒भाऽव॑सुम् । य॒ज्ञाना॑म् । के॒तुम् । ई॒म॒हे॒ ॥ १० ॥

वेङ्कट० प्राज्ञम् ह्वातारम् अद्रोग्धारम् धूमकेतुम् विभावसुम् यज्ञानाम् पताकास्थानीयम् याचामहे ॥ १० ॥

[5]इति षष्ठाष्टके तृतीयाध्याये सप्तत्रिंशो वर्गः[5] ॥

---

१. तं वि[2]; त अ[1]. २. जयन्तु मूको. ३. त्वम् मूको. ४. अह्रो··· मूको ५-५. नास्ति मूको. ६. मोदनं मूको. ७. °र्माणः मूको. ८. वसिष्ठ मूको. ९. हविषि मूको. १०. यं मूको.

अग्ने नि पाहि नस्त्वं प्रति ष्म देव रीषतः । भिन्धि द्वेषः सहस्कृत ॥ ११ ॥

अग्ने । नि । पाहि । नः । त्वम् । प्रति । स्म । देव । रिषतः । भिन्धि । द्वेषः । सहःऽकृत ॥ ११ ॥

वेङ्कट० हिंसतः अस्मान् अग्ने ! त्वम् प्रति नि पाहि, भिन्धि शत्रून् हे बलेन कृत ![1] ॥ ११ ॥

अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं१ स्वाम् । कविर्विप्रेण वावृधे ॥ १२ ॥

अग्निः । प्रत्नेन । मन्मना । शुम्भानः । तन्वम् । स्वाम् । कविः । विप्रेण । ववृधे ॥ १२ ॥

वेङ्कट० अग्निः[2] प्रत्नेन स्तोत्रेण स्वम् अङ्गम् शोभयन् कविः मेधाविना वृद्धो भवति ॥ १२ ॥

ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम् । अस्मिन् यज्ञे स्वध्वरे ॥ १३ ॥

ऊर्जः । नपातम् । आ । हुवे । अग्निम् । पावकऽशोचिषम् । अस्मिन् । यज्ञे । सुऽअध्वरे ॥ १३ ॥

वेङ्कट० अन्नस्य पुत्रम् आ हुवे अग्निम् पावकदीप्तिम् अस्मिन् यज्ञे अत्यन्तम् अहिंस्ये[3] असुरैः[4] ॥ १३ ॥

स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा । देवैरा सत्सि बर्हिषि ॥ १४ ॥

सः । नः । मित्रऽमहः । त्वम् । अग्ने । शुक्रेण । शोचिषा । देवैः । आ । सत्सि । बर्हिषि ॥ १४ ॥

वेङ्कट० हे मित्राणां पूजनीय ! सः त्वम् अग्ने ! ज्वलता तेजसा देवैः सह आ सीद यज्ञे ॥ १४ ॥

यो अग्निं तन्वो३ दमे देवं मर्तः सपर्यति । तस्मा इद् दीदयद् वसु ॥ १५ ॥

यः । अग्निम् । तन्वः । दमे । देवम् । मर्तः । सपर्यति । तस्मै । इत् । दीदयत् । वसु ॥ १५ ॥

वेङ्कट० यः अग्निम् धनस्य प्राप्त्यर्थं गृहे देवम् मर्त्यः परिचरति, तस्मै एव अग्निः धनम् प्रयच्छति ॥ १५ ॥

[5]इति षष्ठाष्टके तृतीयाध्याये अष्टात्रिंशो वर्गः[5] ॥

अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥ १६ ॥

अग्निः । मूर्धा । दिवः । ककुत् । पतिः । पृथिव्याः । अयम् । अपाम् । रेतांसि । जिन्वति ॥ १६ ॥

वेङ्कट० अग्निः मूर्धा दिवः उच्छ्रितः, पृथिव्याः च अयम् पतिः; अपाम् रेतांसि स्थावरजङ्गमात्मकानि प्रीणयति ॥ १६ ॥

---

१. कृतः मूको. २. अग्निम् मूको. ३. °स्यैः मूको. ४. सुरैः मूको. ५-५. नास्ति मूको.

उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः ॥ १७ ॥

उत् । अग्ने । शुचयः । तव । शुक्राः । भ्राजन्तः । ईरते । तव । ज्योतींषि । अर्चयः ॥ १७ ॥

**वेङ्कट०** उत् ईरते प्रेरयन्ति तव अग्ने! निर्मलाः शुक्लवर्णाः दीप्यमानाः अर्चयः तव ज्योतींषि ॥ १७ ॥

ईशिषे वार्यस्य हि दात्रस्याग्ने स्वर्पतिः । स्तोता स्यां तव शर्मणि ॥ १८ ॥

ईशिषे । वार्यस्य । हि । दात्रस्य । अग्ने । स्वःऽपतिः । स्तोता । स्याम् । तव । शर्मणि ॥ १८ ॥

**वेङ्कट०** ईशिषे हि वरणीयस्य धनस्य अग्ने! स्वर्गस्य स्वामी । तथा सति स्तोता अहम् स्याम् तव सुखे ॥ १८ ॥

त्वामग्ने मनीषिणस्त्वां हिन्वन्ति चित्तिभिः । त्वां वर्धन्तु नो गिरः ॥ १९ ॥

त्वाम् । अग्ने । मनीषिणः । त्वाम् । हिन्वन्ति । चित्तिऽभिः । त्वाम् । वर्धन्तु । नः । गिरः ॥

**वेङ्कट०** त्वाम् अग्ने! मनीषिणः स्तुतिभिः स्तुवन्ति, त्वाम् एव प्रीणयन्ति कर्मभिः । त्वाम् वर्धयन्तु अस्माकम् स्तुतयः ॥ १९ ॥

अदब्धस्य स्वधावतो दूतस्य रेभतः सदा । अग्नेः सख्यं वृणीमहे ॥ २० ॥

अदब्धस्य । स्वधाऽवतः । दूतस्य । रेभतः । सदा । अग्नेः । सख्यम् । वृणीमहे ॥ २० ॥

**वेङ्कट०** अहिंसितस्य बलवतः दूतस्य देवान् स्तुवतः सदा अग्नेः[2] सख्यम् वृणीमहे ॥ २० ॥

[3]इति षष्ठाष्टके तृतीयाध्याये एकोनचत्वारिंशो वर्गः[3] ॥

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ॥ २१ ॥

अग्निः । शुचिव्रतऽतमः । शुचिः । विप्रः । शुचिः । कविः । शुचिः । रोचते । आऽहुतः ॥ २१ ॥

**वेङ्कट०** अग्निः अतिशयेन शुचिकर्मा शुचिः मेधावी शुचिः कान्तप्रज्ञः शुचिः एव रोचते आहुतः ॥ २१ ॥

उत त्वा धीतयो मम गिरो वर्धन्तु विश्वहा । अग्ने सख्यस्य बोधि नः ॥ २२ ॥

उत । त्वा । धीतयः । मम । गिरः । वर्धन्तु । विश्वहा । अग्ने । सख्यस्य । बोधि । नः ॥ २२ ॥

**वेङ्कट०** अपि च त्वां कर्माणि मम गिरः च वर्धयन्तु सर्वदा । अग्ने! सख्यम् बुध्यस्व अस्माकम् ॥ २२ ॥

---

१. अग्नेः अ[1]. २. अग्ने मूको. ३-३. नास्ति मूको.

यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम् । स्युष्टे सत्या इहाशिषः ॥ २३ ॥

यत् । अग्ने । स्याम् । अहम् । त्वम् । त्वम् । वा । घ । स्याः । अहम् ।
स्युः । ते । सत्याः । इह । आऽशिषः ॥ २३ ॥

**वेङ्कट०** यत् अग्ने! अहम् त्वम् स्याम् बहुधनः, त्वम् वा खलु अहम् स्याः[1] दरिद्रः स्तोता, ततः तव आशासनानि सत्यानि स्युः इति ॥ २३ ॥

वसुर्वसुपतिर्हि कमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥ २४ ॥

वसुः । वसुऽपतिः । हि । कम् । असि । अग्ने । विभाऽवसुः । स्याम । ते । सुऽमतौ । अपि ॥ २४ ॥

**वेङ्कट०** वासयिता[2] धनपतिः[3] हि भवसि अग्ने! दीप्तिधनः । तथा सति तव सुमतौ वयम् अपि स्याम ॥ २४ ॥

अग्ने धृतव्रताय ते समुद्रायेव सिन्धवः । गिरो वाश्रास ईरते ॥ २५ ॥

अग्ने । धृतऽव्रताय । ते । समुद्रायऽइव । सिन्धवः । गिरः । वाश्रासः । ईरते ॥ २५ ॥

**वेङ्कट०** अग्ने! धृतकर्मणे तुभ्यम् गिरः वाशनशीलाः प्रवर्तन्ते, यथा समुद्राय सिन्धवः[4] ॥ २५ ॥

[5]इति षष्ठाष्टके तृतीयाध्याये चत्वारिंशो वर्गः[5] ॥

युवानं विश्पतिं कविं विश्वादं पुरुवेपसम् । अग्निं शुम्भामि मन्मभिः ॥ २६ ॥

युवानम् । विश्पतिम् । कविम् । विश्वऽअदम् । पुरुऽवेपसम् । अग्निम् । शुम्भामि । मन्मऽभिः ॥२६॥

**वेङ्कट०** युवानम् विश्पतिम् कविम् विश्वस्य हविषोऽत्तारम्[6] बहुकर्माणम्[7] अग्निम् शोभयामि स्तुतिभिः ॥ २६ ॥

यज्ञानां रथ्ये वयं तिग्मजम्भाय वीळवे । स्तोमैरिषेमाग्नये ॥ २७ ॥

यज्ञानाम् । रथ्ये । वयम् । तिग्मऽजम्भाय । वीळवे । स्तोमैः । इषेम । अग्नये ॥ २७ ॥

**वेङ्कट०** यज्ञानाम् नेत्रे वयम् तीक्ष्णज्वालाय दृढाय स्तोमैः अन्नं कर्तुमिच्छेम अग्नये[8] ॥ २७ ॥

अयमग्ने त्वे अपि जरिता भूतु सन्त्य । तस्मै पावक मृळय ॥ २८ ॥

अयम् । अग्ने । त्वे इति । अपि । जरिता । भूतु । सन्त्य । तस्मै । पावक । मृळय ॥ २८ ॥

---

१. स्यात् मूको. २. °यित्वा मूको. ३. वनस्पतिः मूको. ४. तु. ऋ ८,६,४. ५-५. नास्ति मूको. ६. °षोत्तरम् मूको. ७. °र्माणि मूको. ८. तु. ऋ ८,४३,११.

**वेङ्कट०** अयम् अग्ने! त्वयि अपि जरिता भजनीय! भवतु। तस्मै हे शोधक! सुखम् उत्पादय[1] तं सुखय ॥ २८ ॥

धीरो ह्यस्यद्मसद् विप्रो न जागृविः सदा। अग्ने दीदयसि द्यवि ॥ २९ ॥

धीरः। हि। असि। अद्मऽसत्। विप्रः। न। जागृविः। सदा। अग्ने। दीदयसि। द्यवि ॥२९॥

**वेङ्कट०** धीरः हि भवसि हविषि[2] सीदन् मेधावी इव जागरणशीलः भवसि सदा इति। प्रत्यक्षाग्निमाह—अग्ने! दीप्यसे अन्तरिक्षे ॥ २९ ॥

पुराग्ने दुरितेभ्यः पुरा मृध्रेभ्यः कवे। प्र ण आयुर्वसो तिर ॥ ३० ॥

पुरा। अग्ने। दुःऽइतेभ्यः। पुरा। मृध्रेभ्यः। कवे। प्र। नः। आयुः। वसो इति। तिर ॥३०॥

**वेङ्कट०** पापानि[3] शत्रवश्च यदाऽस्मान् हिंसन्ति, प्रागेव ततः अग्ने! कवे! वसो! वर्धय अस्माकम् आयुः इति ॥ ३० ॥

[4]इति षष्ठाष्टके तृतीयाध्याये एकचत्वारिंशो वर्गः[4] ॥

[ ४५ ]

[4]त्रिशोकः काण्व ऋषिः। इन्द्रो देवता, प्रथमाया अग्नीन्द्रौ। गायत्री छन्दः[4]।

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्। येषामिन्द्रो युवा सखा ॥१॥

आ। घ। ये। अग्निम्। इन्धते। [5]स्तृणन्ति। बर्हिः। आनुषक्।[5] येषाम्। इन्द्रः। युवा। सखा ॥१॥

**वेङ्कट०** त्रिशोकः। आभिमुख्येन खलु ये अग्निम् इन्धते, ते अनुषक्तम् बर्हिः[6] च स्तृणन्ति, येषाम् इन्द्रः युवा सखा भवति ॥ १ ॥

बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः। येषामिन्द्रो युवा सखा ॥ २ ॥

बृहन्। इत्। इध्मः। एषाम्। भूरि। शस्तम्। पृथुः। स्वरुः। येषाम्। इन्द्रः। युवा। सखा ॥

**वेङ्कट०** महान् खलु एषाम् इध्मः, भूरि च स्तोत्रम्, स्वरुः च पृथुः ॥ २ ॥

अयुद्ध इद् युधा वृतं शूर आजति सत्वभिः। येषामिन्द्रो युवा सखा ॥ ३ ॥

अयुद्धः। इत्। युधा। वृतम्। शूरः। आ। अजति। सत्वऽभिः। येषाम्। इन्द्रः। युवा। सखा ॥

---

१. ॰यम् मूको. २. हवींषि मूको. ३. पदपानि मूको. ४-४. नास्ति मूको. ५-५. या ६,१४ द्र. ६. बर्हिषः मूको.

वेङ्कट० प्रागयोद्धैव सन् योद्धृभिर्भटैः[1] परिवृतम् आत्मीयैः बलैः शूरः भूत्वा [2]आ अजति नमयति[2]। येषाम् इन्द्रः युवा सखा जनेषु अन्तर्भूतः ॥ ३ ॥

आ बुन्दं वृत्रहा ददे जातः पृच्छद् वि मातरम् । क उग्राः के ह शृण्विरे ॥४॥

आ । बुन्दम् । वृत्रऽहा । ददे । जातः । पृच्छत् । वि । मातरम् । के । उग्राः । के । ह । शृण्विरे ॥४॥

वेङ्कट० यास्कः (६,३२)—'बुन्द इषुर्भवति । भिन्दो वा भयदो वा भासमानो द्रवतीति वा' इति । जातः इन्द्रः आ ददे इषुम् वृत्रहा । अयं[3] च मातरम् वि अपृच्छत्—के इह लोके उद्गूर्णबलाः, के च वीर्येण विश्रुताः, तान् ब्रूहीति ॥ ४ ॥

प्रति त्वा शवसी वदद् गिरावप्सो न योधिषत् । यस्ते शत्रुत्वमाचके ॥ ५ ॥

प्रति । त्वा । शवसी । वदत् । गिरौ । अप्सः । न । योधिषत् । यः । ते । शत्रुऽत्वम् । आऽचके ॥५॥

वेङ्कट० प्रति अवदत् [4]त्वाम् शवसी माता[4] बलवती—यः ते शत्रुत्वम् पुत्र! कामयते, [5]स पर्वते अप्सः गजः[5] इव योधयति[6] ॥ ५ ॥

[7]इति षष्ठाष्टके तृतीयाध्याये द्विचत्वारिंशो वर्गः[7] ॥

उत त्वं मघवञ्छृणु यस्ते वष्टि ववक्षि तत् । यद् वीळयासि वीळु तत् ॥ ६ ॥

उत । त्वम् । मघऽवन् । शृणु । यः । ते । वष्टि । ववक्षि । तत् । यत् । वीळयासि । वीळु । तत् ॥६॥

वेङ्कट० अपि च तत् त्वम् मघवन्! शृणु, यत् त्वत्तः किञ्चित् कामयते तस्मै तत् वहसि। यत् च त्वं दृढीकरोषि दृढमेव तत् भवति ॥ ६ ॥

यदाजिं यात्याजिकृदिन्द्रः स्वश्वयुरुप । रथीतमो रथीनाम् ॥ ७ ॥

यत् । आजिम् । याति । आजिऽकृत् । इन्द्रः । स्वश्वऽयुः । उप । रथिऽतमः । रथिनाम् ॥ ७ ॥

वेङ्कट० यदा युद्धम् उप याति युद्धकृत् इन्द्रः स्वश्वमिच्छन्, तदा अतिशयेन रथी भवति जयति सर्वान् ॥ ७ ॥

वि षु विश्वा अभियुजो वज्रिन् विष्वग्यथा वृह । भवा नः सुश्रवस्तमः ॥८॥

वि । सु । विश्वाः । अभिऽयुजः । वज्रिन् । विष्वक् । यथा । वृह । भव । नः । सुश्रवःऽतमः ॥८॥

---

१. योद्रुहिमदृटे मूको. २-२. जनितमवति मूको. ३. दय वि[2]. ४-४. त्वाङ्गवसी माना मूको. ५-५. सर्वपतेरफोघट मूको. ६. नोधयन्ति मूको. ७-७. नास्ति मूको.

**वेङ्कट०** वि वृह सुष्ठु विश्वाः अभियोक्त्रीः प्रजाः वज्रिन्!, यथा विष्वक् भवन्ति। भव अस्माकं स्वन्नतमः[१] ॥ ८ ॥

अस्माकं सु रथं पुर इन्द्रः कृणोतु सातये। न यं धूर्वन्ति धूर्तयः ॥ ९ ॥

अस्माकम्। सु। रथम्। पुरः। इन्द्रः। कृणोतु। सातये। न। यम्। धूर्वन्ति। धूर्तयः ॥९॥

**वेङ्कट०** अस्माकम् सुष्ठु रथम् पुरः करोतु इन्द्रः [२]लाभाय, यम् इन्द्रम्[२] न हिंसन्ति हिंसकाः ॥ ९ ॥

वृज्याम ते परि द्विषोऽरं ते शक्र दावने। गमेमेदिन्द्र गोमतः ॥ १० ॥

वृज्याम। ते। परि। द्विषः। अरम्। ते। शक्र। दावने। गमेम। इत्। इन्द्र। गोऽमतः ॥१०॥

**वेङ्कट०** परि वृज्याम ते द्वेष्टॄन् नोपगच्छेम भिक्षमाणाः। पर्याप्तम् तव स्वभूतम् शक्र! दानाय [३]गमेम एव इन्द्र![३] पशुमतः ॥ १० ॥

[४]इति षष्ठाष्टके तृतीयाध्याये त्रयश्चत्वारिंशो वर्गः[४] ॥

शनैश्चिद् यन्तो अद्रिवोऽश्वावन्तः शतग्विनः। विवक्षणा अनेहसः ॥ ११ ॥

शनैः। चित्। यन्तः। अद्रिऽवः। अश्वऽवन्तः। शतऽग्विनः। [५]विवक्षणाः। अनेहसः[५] ॥ ११ ॥

**वेङ्कट०** शनैःशनैः यन्तः वज्रिन्! अश्ववन्तः बहुधनाः विवक्षणाः[६] वोढव्यं वहन्तः अनुपद्रवाः गमेमेदिति ॥ ११ ॥

ऊर्ध्वा हि ते दिवेदिवे सहस्रा सूनृता शता। जरितृभ्यो विमंहते ॥ १२ ॥

ऊर्ध्वा। हि। ते। दिवेऽदिवे। सहस्रा। सूनृता। शता। जरितृऽभ्यः। विऽमंहते ॥ १२ ॥

**वेङ्कट०** ऊर्ध्वानि हि ते अन्वहं सहस्राणि शतानि च धनानि स्तोतृभ्यः प्रयच्छति ॥ १२ ॥

विद्मा हि त्वा धनंजयमिन्द्र दृळ्हा चिदारुजम्। आदारिणं यथा गयम् ॥१३॥

विद्म। हि। त्वा। धनम्ऽजयम्। इन्द्र। दृळ्हा। चित्। आऽरुजम्। आऽदारिणम्। यथा। गयम् ॥

**वेङ्कट०** विद्म हि त्वा धनानां जेतारम् इन्द्र! दृढानामपि आभिमुख्येन भङ्क्तारम्[७] शत्रूणाम् आदर्तारम् गृहम्[८] इव भूतानां रक्षकम् ॥ १३ ॥

ककुहं चित् त्वा कवे मन्दन्तु धृष्णविन्दवः। आ त्वा पणिं यदीमहे ॥ १४ ॥

ककुहम्। चित्। त्वा। कवे। मन्दन्तु। धृष्णो इति। इन्दवः। आ। त्वा। पणिम्। यत्। ईमहे ॥

---

१. स्वन्ततं भव वि[२]; स्वन्ततम भव अ[१]. २-२. लाभायमिन्द्रम् वि[२]; लाभाय अ[१]. ३-३. गमेवैन्द्र वि[२]; गमैवैन्द्र अ[१]. ४-४. नास्ति मूको. ५-५ तु. ऋ ८,४९,४. ६. विवक्षुणा मूको. ७ हनक्कारम् अ[१]. ८. गृहैः मूको.

वेङ्कट० उच्छ्रितम् चित् त्वा कवे![1] मन्दन्तु[2] धर्षक! सोमाः[3] । आ याचामहे यदा त्वां पणमानम् ॥ १४ ॥

यस्ते॑ रे॒वाँ अदा॑शुरिः प्रम॒मर्ष॑ म॒घत्त॑ये । तस्य॑ नो॒ वेद॒ आ भ॑र ॥ १५ ॥

यः । ते॒ । रे॒वान् । अदा॑शुरिः । प्र॒ऽम॒मर्ष॑ । म॒घत्त॑ये । तस्य॑ । नः॒ । वेदः॑ । आ । भ॒र ॥ १५ ॥

वेङ्कट० यः ते धनवान् सन् अदानशीलः प्रममर्ष असूयति मघदानाय, न यजते, अर्थात्?; तस्य नः धनम् आ हर ॥ १५ ॥

[4]इति षष्ठाष्टके तृतीयाध्याये चतुश्चत्वारिंशो वर्गः[4] ॥

इ॒म उ॑ त्वा॒ वि च॑क्षते॒ सखा॑य इन्द्र॒ सो॒मिनः॑ । पु॒ष्टाव॑न्तो॒ यथा॑ प॒शुम् ॥ १६ ॥

इ॒मे । ऊँ॒ इति॑ । त्वा॒ । वि । च॒क्ष॒ते॒ । सखा॑यः । इ॒न्द्र॒ । सो॒मिनः॑ । पु॒ष्टऽव॑न्तः । यथा॑ । प॒शुम् ॥ १६ ॥

वेङ्कट० इमे उ त्वां प्रपश्यन्ति सखायः इन्द्र! अभिषुतसोमाः, यथा पश्यन्ति पशुम्[5] सम्भृतघासाः ॥ १६ ॥

उ॒त त्वाब॑धिरं व॒यं श्रुत्क॑र्णं॒ सन्त॑मू॒तये॑ । दू॒रादि॒ह ह॑वामहे ॥ १७ ॥

उ॒त । त्वा॒ । अब॑धिरम् । व॒यम् । श्रु॒त्ऽक॑र्णम् । सन्त॑म् । ऊ॒तये॑ । दू॒रात् । इ॒ह । ह॒वा॒म॒हे॒ ॥ १७ ॥

वेङ्कट० अपि च त्वाम् अवधिरम् [6]ततः श्रुत्कर्णम् सन्तम्[6] रक्षणाय दूरात् इह वयम्[7] हवामहे ॥ १७ ॥

यच्छु॒श्रुया॑ इ॒मं हवं॑ दु॒र्मर्षं॑ चक्रि॒या उ॒त । भवे॑रा॒पिर्नो॒ अन्त॑मः ॥ १८ ॥

यत् । शु॒श्रु॒याः । इ॒मम् । हव॑म् । दुः॒ऽमर्ष॑म् । च॒क्रि॒याः । उ॒त । भवेः॑ । आ॒पिः । नः॒ । अन्त॑मः ॥

वेङ्कट० यदि श्रृणुयाः इमम् ह्वानम्, दुस्सहं बलं [8]कुर्याः, भवेः[8] च बन्धुः अस्माकम् अन्तिकतमः ॥ १८ ॥

यच्चि॒द्धि ते॒ अपि॑ व्य॒थिर्ज॑ग॒न्वांसो॒ अम॑न्महि । गो॒दा इदि॑न्द्र बोधि नः ॥ १९ ॥

यत् । चि॒त् । हि । ते॒ । अपि॑ । व्य॒थिः । ज॒ग॒न्वांसः॑ । अम॑न्महि । गो॒ऽदाः । इत् । इ॒न्द्र॒ । बो॒धि॒ । नः॒ ॥

वेङ्कट० यदा चित् हि तुभ्यं व्यथिताः गन्तारः विष्दुमः, तदा [9]गोदाः एव[9] इन्द्र! अस्माकम् भवामीति[10] बुध्यस्व ॥ १९ ॥

आ त्वा॑ र॒म्भं न जिव्र॑यो रर॒म्भा श॑वसस्पते । उ॒श्मसि॑ त्वा स॒धस्थ॒ आ ॥ २० ॥

---

१. काले वि[1]; कले अ[1]. २. मन्दतु मूको. ३. सोम मूको. ४-४. नास्ति मूको. ५. पशु मूको. ६-६. ततः ··· स° मूको. ७. नास्ति अ[1]. ८-८. कुर्वाहवे वि[2]; °ह्वेः अ[1]. ९-९. गो ··· ए° मूको. १०. तु. ऋ ३,३०,२१; भावम् इ° मूको.

[1]आ । त्वा । रम्भम् । न । जिव्रयः । ररम्भ ।[1] शवसः । पते । उश्मसि । त्वा । सधऽस्थे । आ ॥२०॥

वेङ्कट० त्वाम् [2]वयम् आ रभामहे यथा दण्डम्[2] वृद्धाः हे बलस्य पते!। कामयामहे च त्वां यज्ञे ॥ २० ॥

[3]इति षष्ठाष्टके तृतीयाध्याये पञ्चचत्वारिंशो वर्गः[3] ॥

स्तोत्रमिन्द्राय गायत पुरुनृम्णाय सत्वने । नकिर्यं वृण्वते युधि ॥ २१ ॥

स्तोत्रम् । इन्द्राय । गायत । पुरुऽनृम्णाय । सत्वने । नकिः । यम् । वृण्वते । युधि ॥ २१ ॥

वेङ्कट० स्तोत्रम् इन्द्राय गायत[4] बहुधनाय दानशीलाय, न केचन यम् वारयन्ति सङ्ग्रामे ॥२१॥

अभि त्वा वृषभा सुते सुतं सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥ २२ ॥

अभि । त्वा । वृषभ । सुते । सुतम् । सृजामि । पीतये । तृम्प । वि । अश्नुहि । मदम् ॥२२॥

वेङ्कट० अभि सृजामि त्वां वृष! अभिषुते सोमे सुतम् पानाय । [5]तृप्य वि अश्नुहि[5] च सोमम् ॥ २२ ॥

मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् । माकीं ब्रह्मद्विषो वनः ॥२३॥

मा । त्वा । मूराः । अविष्यवः । मा । उपऽहस्वानः । आ । दभन् । माकीम् । ब्रह्मऽद्विषः । वनः ॥

वेङ्कट० मा त्वां मारकाः मनुष्याणां पालनकामाः[6] आ दभ्नुवन्तु[7], मा च उपहसनपराः[8] । मा त्वं ब्रह्मणो द्वेष्टॄन् भजेथाः ॥ २३ ॥

इह त्वा गोपरीणसा महे मन्दन्तु राधसे । सरो गौरो यथा पिब ॥ २४ ॥

इह । त्वा । गोऽपरीणसा । महे । मन्दन्तु । राधसे । सरः । गौरः । यथा । पिब ॥ २४ ॥

वेङ्कट० इह त्वां गव्येन पयसा मिश्रितेन सोमेन मनुष्याः महते धनाय मदन्तु । त्वं तं सोमम् पिब यथा गौरः मृगः सरः पिबति ॥ २४ ॥

या वृत्रहा परावति सना नवा च चुच्युवे । ता संसत्सु प्र वोचत ॥ २५ ॥

या । वृत्रऽहा । पराऽवति । सना । नवा । च । चुच्युवे । ता । संसत्ऽसु । प्र । वोचत ॥२५॥

---

१-१. या ३,२१ द्र. २-२. वयं ··· दण्डं मूको. ३-३. नास्ति मूको. ४. गायन्तः मूको.
५-५. तृप्यश्नुहि मूको. ६. पालकामा मूको. ७. दश्नुवन्तु वि[1]; दश्नवन्तु अ[1]. ८. उवहनवर मूको.

वेङ्कट० यानि वृत्रहा दूरे सनातनानि नूतनानि च धनानि प्रेरितवान्, तानि संसत्सु प्र वोचत ॥ २५ ॥

[1]इति षष्ठाष्टके तृतीयाध्याये षट्चत्वारिंशो वर्गः[1] ॥

अपिबत् कद्रुवः सुतमिन्द्रः सहस्रबाह्वे । अत्रादेदिष्ट पौंस्यम् ॥ २६ ॥

अपिबत् । कद्रुवः । सुतम् । इन्द्रः । सहस्रऽबाह्वे । अत्र । अदेदिष्ट । पौंस्यम् ॥ २६ ॥

वेङ्कट० अपिबत् कद्रोः ऋषेः सुतम् इन्द्रः सहस्रबाहोः शत्रून् हन्तुम् । अत्र अस्य वीर्यम् अदीप्यत ॥ २६ ॥

सत्यं तत् तुर्वशे यदौ विदानो अह्नवाय्यम् । व्यानट् तुर्वणे शमि ॥ २७ ॥

सत्यम् । तत् । तुर्वशे । यदौ । विदानः । अह्नवाय्यम् । वि । आनट् । तुर्वणे । शमि ॥ २७ ॥

वेङ्कट० सत्यम् तत् तुर्वशे यदौ[2] च तयोः प्रीत्यर्थम् जानन् तयोः शत्रुम् अह्नवाय्यम् नाम व्याप्तवान् सङ्ग्रामे कर्म ॥ २७ ॥

तरणिं वो जनानां त्रदं वाजस्य गोमतः । समानमु प्र शंसिषम् ॥ २८ ॥

तरणिम् । वः । जनानाम् । त्रदम् । वाजस्य । गोऽमतः । समानम् । ऊँ इति । प्र । शंसिषम् ॥२८॥

वेङ्कट० तारकम्[3] युष्माकम् जनानाम्, तर्दयितारम्[4], पशुमतोऽन्नस्य प्रेरयितारम् साधारणमेव प्र शंसामि ॥ २८ ॥

ऋभुक्षणं न वर्तव उक्थेषु तुग्र्यावृधम् । इन्द्रं सोमे सचा सुते ॥ २९ ॥

ऋभुक्षणम् । न । वर्तवे । उक्थेषु । तुग्र्यऽवृधम् । इन्द्रम् । सोमे । सचा । सुते ॥ २९ ॥

वेङ्कट० महान्तम् इदानीम् [5]धनं वरीतुम्[5] शस्त्रेपु उदकस्य[6] वर्धयितारम् इन्द्रम् सोमे सह सुते प्रशंसामि ॥ २९ ॥

यः कृन्तदिद् वि योन्यं त्रिशोकाय गिरिं पृथुम् । गोभ्यो गातुं निरेतवे ॥३०॥

यः । कृन्तत् । इत् । वि । योन्यम् । त्रिऽशोकाय । गिरिम् । पृथुम् । गोभ्यः । गातुम् । निःऽएतवे ॥

वेङ्कट० यः वि अकृन्तत् निर्गमनद्वारम् त्रिशोकार्थम् मेघम् विस्तीर्णम्, स उदकेभ्यो निर्गमनाय मार्गम् च करोति ॥ ३० ॥

[1]इति षष्ठाष्टके तृतीयाध्याये सप्तचत्वारिंशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २. यदोः वि[2]; यदो अ[1]. ३. कारकम् मूको. ४. तर्जयि° मूको. ५-५. येन चरितं मूको. ६. तु. निघ १,१२.

यद् दधिषे मनस्यसि मन्दानः प्रेदियक्षसि । मा तत् करिन्द्र मृळय ॥ ३१ ॥

यत् । दधिषे । मनस्यसि । मन्दानः । प्र । इत् । इयक्षसि ।

मा । तत् । कः । इन्द्र । मृळय ॥ ३१ ॥

**वेङ्कट०** यत्[1] धारयसि, यत् च नमस्करोषि मोदमानः, यत् च प्र यच्छसि[2], तत् सर्वम् इदानीम् कार्षीः[3]। अस्मान् एव सुखय ॥ ३१ ॥

दभ्रं चिद्धि त्वावतः कृतं शृण्वे अधि क्षमि । जिगात्विन्द्र ते मनः ॥ ३२ ॥

दभ्रम् । चित् । हि । त्वाऽवतः । कृतम् । शृण्वे । अधि । क्षमि । जिगातु । इन्द्र । ते । मनः ॥

**वेङ्कट०** अल्पम् अपि त्वत्सदृशस्य कृतम् विश्रुतं भवति पृथिव्याम्। तथा सति गच्छतु इन्द्र! तव मनः मयि ॥ ३२ ॥

तवेदु ताः सुकीर्तयोऽसन्नुत प्रशस्तयः । यदिन्द्र मृळयासि नः ॥ ३३ ॥

तव । इत् । ऊँ इति । ताः । सुऽकीर्तयः । असन् । उत । प्रऽशस्तयः । यत् । इन्द्र । मृळयासि । नः ॥

**वेङ्कट०** तव एव ताः सुकीर्तयः सम्भवेयुः, अपि च प्रशस्तयः, यत्[1] इन्द्र! अस्मान् सुखयसि ॥ ३३ ॥

मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु । वधीर्मा शूर भूरिषु ॥ ३४ ॥

मा । नः । एकस्मिन् । आगसि । मा । द्वयोः । उत । त्रिषु । वधीः । मा । शूर । भूरिषु ॥३४॥

**वेङ्कट०** मा वधीः अस्मान् एकस्मिन् आगसि, मा च द्वयोः, अपि च त्रिषु, मा च शूर! बहुषु अपि ॥ ३४ ॥

बिभया हि त्वावत उग्रादभिप्रभङ्गिणः । दस्मादहमृतीषहः ॥ ३५ ॥

बिभय । हि । त्वाऽवतः । उग्रात् । अभिऽप्रभङ्गिनः । दस्मात् । अहम् । ऋतिऽसहः ॥ ३५ ॥

**वेङ्कट०** बिभेमि[4] हि त्वत्सदृशात् उद्गूर्णात् शत्रुपुराणामभिप्रहर्तुः उपक्षपयितुः [5]हिंसां सहतः[5] ॥३५॥

[6]इति षष्ठाष्टके तृतीयाध्याये अष्टचत्वारिंशो वर्गः[6] ॥

मा सख्युः शूनमा विदे मा पुत्रस्य प्रभूवसो । आवृत्वद् भूतु ते मनः ॥ ३६ ॥

मा । सख्युः । शूनम् । आ । विदे । मा । पुत्रस्य । प्रभुवसो इति प्रभुऽवसो । आऽवृत्वत् । भूतु । ते । मनः ॥

---

१. यं मूको. २. यच्छ मूको. ३. कार्षीत् मूको. ४. बिभेहि मूको. ५-५. हिंसा सहत मूको. ६-६. नास्ति मूको.

वेङ्कट० मा सख्युः वृद्धिम्[1] आ वेदयामि, मा च पुत्रस्य प्रभूतधन!। आवर्तनवत् भवतु तव मनः अस्मासु ॥ ३६ ॥

को नु म॑र्या अमि॑थितः सखा॒ सखा॑यमब्रवीत् । जहा॑ को अ॒स्मदी॑षते ॥ ३७ ॥

कः । नु । म॒र्याः । अमि॑थितः । सखा॑ । सखा॑यम् । अ॒ब्र॒वीत् । ज॒हा । कः । अ॒स्मत् । ई॒ष॒ते ॥३७॥

वेङ्कट० [2]कः नु हे[2] मनुष्याः! अनाकुष्टः सखा सखायम् वदति इन्द्रात् अन्यः— कम् अहं जघान, कः वा अस्मद् भीतः पलायते इति ( तु. या ४,२ )। 'मा न एकस्मिन्नागसि' ( ऋ ८,४५,३४ ) इत्यादिकया श्रुत्या नूनम् ऋषिमिन्द्र आजहारेति तत्र विस्मयते ऋषिरिति ॥ ३७ ॥

ए॒वा॒रे वृ॑षभा सु॒तेऽसि॑न्व॒न् भूर्या॑वयः । श्व॒घ्नीव॑ नि॒वता॒ चर॑न् ॥ ३८ ॥

ए॒वा॒रे । वृ॒ष॒भ॒ । सु॒ते । असि॑न्वन् । भूरि॑ । आ॒व॒यः॒ । श्व॒घ्नीऽइ॑व । नि॒ऽवता॑ । चर॑न् ॥ ३८ ॥

वेङ्कट० एवारो नाम कश्चित्, तस्मिन् वृषभ! तेनाभिषुते सोमे असिन्वन् अबध्नन् आत्मनि बहूनि धनानि प्रापयः । 'श्वघ्नी कितवो भवति स्वं हन्ति' इति यास्कः ( ५, २२ ), अथवा श्वानं हन्तीति श्वागरः। स यथा निभृता[3] मार्गेण परम्परया[4] जीवमानः प्रतिकितवाय [5]धनं नार्पयति[5] ॥ ३८ ॥

आ त॑ ए॒ता व॑चो॒युजा॒ हरी॑ गृभ्णे सु॒मद्र॑था । यदीं॑ ब्र॒ह्मभ्य॒ इद्दद॑ः ॥ ३९ ॥

आ । ते॒ । ए॒ता । व॒चः॒ऽयुजा॑ । हरी॒ इति॑ । गृ॒भ्णे॒ । सु॒मत्ऽर॑था । यत् । ई॒म् । ब्र॒ह्मऽभ्यः॑ । इत् । दद॑ः ॥

वेङ्कट० आ गृह्णामि मदभिमुखं यातुं हस्ताभ्याम् आकर्षामि[6] तव एतौ ब्रह्मणा युज्यमानौ अश्वौ [7]कल्याणरथौ। यत् इदं धनं ब्राह्मणेभ्यः[7] एव ददासि ॥ ३९ ॥

भि॒न्धि विश्वा॒ अप॒ द्विष॒ः परि॒ बाधो॑ ज॒ही मृध॑ः । वसु॑ स्पा॒र्हं तदा भ॑र ॥४०॥

भि॒न्धि । विश्वा॑ः । अप॑ । द्विष॑ः । परि॑ । बाध॑ः । ज॒हि । मृध॑ः । वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र ॥

वेङ्कट० अप भिन्धि विश्वाः द्वेष्ट्रीः सेनाः। परि जहि च बाधः हिंसित्रीः[8] मृधः। ततः तासाम् वसु च अस्मभ्यम् आ हर स्पृहणीयम् ॥ ४० ॥

यद्वी॒ळावि॑न्द्र॒ यत् स्थि॒रे यत् पर्शा॑ने॒ परा॑भृतम् । वसु॑ स्पा॒र्हं तदा भ॑र ॥४१॥

यत् । वी॒ळौ । इ॒न्द्र॒ । यत् । स्थि॒रे । यत् । पर्शा॑ने । [9] परा॑ऽभृतम् । वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र ॥

वेङ्कट० यत् दृढे इन्द्र!, यत् च स्थिरे, यत् च मेघे त्वया पराभृतम्[10] विन्यस्तम् धनम् ॥ ४१ ॥

---

१. वृद्धस्य मूको. २-२. को नुर्दे मूको. ३. वैप १, १८२८ j द्र.; नलता मूको. ४. परम्परा मूको. ५-५. धनमपयति मूको. ६. °र्षादि मूको. ७-७. कल्या ··· भ्र' मूको. ८. हिंसीति मूको. ९. निघ १,१० (मूको.) द्र. १०, पराहृतम् अ'.

यस्य॑ ते वि॒श्वमा॑नुषो॒ भूरे॑र्द॒त्तस्य॒ वेद॑ति । वसु॑ स्पा॒र्हं तदा भ॑र ॥ ५२ ॥

यस्य॑ । ते॒ । वि॒श्वऽमा॑नुषः । भूरेः॑ । द॒त्तस्य॑ । वेद॑ति । वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र ॥४२॥

वेङ्कट० यत् त्वया दत्तम् बहु सर्वो [1]मनुष्यः जानाति वसु स्पार्हम्[1] तत् आ हरेति ॥ ४२ ॥

[2]इति षष्ठाष्टके तृतीयाध्याये एकोनपञ्चाशत्तमो वर्गः[2] ॥

षष्ठे तृतीयमध्यायं व्याचकारेति माधवः ।
श्रीवेङ्कटार्यतनयः सम्यगर्थान् प्रदर्शयन् ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने षष्ठाष्टके तृतीयोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये षष्ठाष्टके तृतीयोऽध्यायः ॥



१-१. ष्यो ··· बाई मूको. २-२. नारित मूको

अथ चतुर्थोऽध्यायः ।

वेङ्कट० 'त्वावतः पुरूवसो' व्याचिख्यासति माधवः ।
प्रदर्शयंस्त्रिष्टुबादेर्लक्षणानि पृथक्पृथक् ॥ १ ॥

स्यात् त्रिष्टुबेकादशकैश्चतुर्भिः
'कस्य नूनं कतमस्यामृतानाम्'[1] ।
पदे यदि द्वे भवतस्तु जागते
वदन्ति सूक्तेन तदा व्यवस्थाम् ॥ २ ॥

'यस्मै त्वमायजसे स साधति'[2]
'ये वाजिनं परिपश्यन्ति पक्वम्'[3] ।
पूर्वानयोर्जागतसूक्तनिष्ठा
ततश्च सा जगती त्रिष्टुबन्या ॥ ३ ॥

वैराजौ जागतौ चोभौ तां विद्यादभिसारिणीम् ।
'यो वाचा विवाचः'[4] इति तत्रोदाहरणं विदुः ॥ ४ ॥

नवकौ दशकश्चैकश्चतुर्थस्त्रैष्टुभस्तथा ।
सा स्यात् त्रिष्टुब्विराट्स्थाना 'स्वस्ति न इन्द्रो वृद्धश्रवाः'[5] ॥ ५ ॥

अपि वा दशकौ स्यातां नवकः[6] त्रैष्टुभस्तथा ।
[7]विराट्स्थानैव सा[7] 'श्रुधी हवमिन्द्र मा रिषण्यः'[8] ॥ ६ ॥

पादा यदेकादशिनस्त्रयः स्युः
'तुभ्यं श्चोतन्त्यध्रिगो शचीवः'[9] ।
पादश्चतुर्थश्च तथाष्टकः स्याद्
विराड्रूपां तां कथयन्ति सन्तः ॥ ७ ॥

त्रयो यदि द्वादशिनोऽष्टकोऽन्त्यो
ज्योतिष्मतीं तां कवयो वदन्ति ।

---

१. ऋ १,२४,१.　२. ऋ १,९४,२.　३. ऋ १,१६२,१२.　४. ऋ १०,२३,५.
५. ऋ १,८९,६.　६. नवकं वि[२] अ[१].　७-७. विराट् स्थाने वा वि[२] अ[१].　८. ऋ २,११,१.
९. ऋ ३,२१,४.

तज्ज्योतिषञ्चापि यतोऽष्टकं स्यात्
पुरस्ताज्ज्योतिर्मध्येज्योतिरिति ॥ ८ ॥

'इमे त इन्द्र ते वयं × ये त्वारभ्य चरामसि'[1]।
इत्यध्ययनमेकेषां मुख्यः पादस्तदाष्टकः[2] ॥ ९ ॥

अस्माकं तु जगत्येषा पुरुष्टुतपदान्विता।
यद्वा 'यज्ञं मनवे'[3] इति मध्येज्योतिरुदाहृता ॥ १० ॥

तृतीयेनापि पादेन मध्येज्योतिरियं भवेत्।
'तदश्विना भिषजे(जा)'[4] इ)ति सा ज्ञेयाध्वर्युवेदतः ॥ ११ ॥

उपरिष्टाज्ज्योतिरियम् 'अग्निनेन्द्रेण'[5] कीर्तिता।
पादोऽष्टकश्चतुर्थोऽस्याः 'सोमं पिबतमश्विना'[5] ॥ १२ ॥

पदानि[6] चत्वारि यदाष्टकानि
महाबृहत्युक्तिमियं[7] लभेत।
आद्यं पदं द्वादशकं च तस्याः
'नमोवाके प्रस्थिते अध्वरे नराः'[8] ॥ १३ ॥

मुख्यावष्टाक्षरौ यस्यास्तृतीयो द्वादशाक्षरः।
पुनर्द्वावष्टकौ स्यातां यवमध्येति तां विदुः ॥ १४ ॥

सा 'सं मा तपन्त्यभितः सपत्नीरिव पर्शवः'[9]।
अथाद्यौ दशकौ पादावष्टकाश्च ततस्त्रयः ॥ १५ ॥

पङ्क्त्युत्तरेति तामाहुर्विराट्पूर्वामथापरे।
'एवेन्द्राग्निभ्यामहावि'[10] त्रिष्टुभो दश कीर्तिताः ॥ १६ ॥

चत्वारो [11]द्वादशाः पादा[11] यदि स्युर्जगती भवेत्।
'जनस्य गोपा अजनिष्टे(ष्ट'[12] 'इ)मं स्तोमम्'[13] इमे यथा ॥ १७ ॥
अष्टाक्षरास्त्रयः पादा द्वौ च द्वादशकौ यदा।
महासतो बृहतीत्युक्ता[14](क्ता 'आ)यः पप्रौ भानुने(ना'[15] इ)ति सा ॥ १८ ॥

---

१. ऋ १,५७,४. २. °स्तथाष्टकम् वि[2]; °स्तथाष्टक अ[1]. ३. ऋ ८,१०,२. ४. मा १९,८२.
५. ऋ ८,३५,१. ६. पादानि अ[1]. ७. महद्बृह° वि[2] अ[1]. ८. ऋ ८,३५,२३. ९. ऋ १,१०५,८.
१०. ऋ ५,८६,६. ११-११. द्वादशपदाः मूको. १२. ऋ ५,११,१. १३. ऋ १,९४,१.
१४. °हत्युक्ता वि[2] अ[1]. १५. ऋ ६,४८,६.

अष्टकौ सप्तकः षट्को[1] दशको[2] नवकस्तथा ।
'सूर्ये॑ वि॒षमा स॑जामि'[3] महापङ्क्तिं वदन्ति ताम् ॥ १९ ॥

षट्स्वष्टकेष्वपि तथा 'अव॑ द्रु॒के अव॑ त्रि॒का'[4] ।
'उ॒भे यदि॑न्द्र॒ रोद॑सी'[5] जगत्यस्तित्र ईरिताः ॥ २० ॥ इति ।

[ ४६ ]

[6]वशः अश्व्य ऋषिः । इन्द्रो देवता, एकविंश्यादिचतुर्विंश्यन्तानां पृथुश्रवाः कानीतः,
पञ्चविंश्याद्यष्टाविंश्यन्तानां द्वात्रिंश्याश्च वायुः । गायत्री छन्दः, प्रथमायाः पादनिचृत्,
पञ्चम्याः ककुप्, सप्तम्या बृहती, अष्टम्या अनुष्टुप्, नवम्याः सतोबृहती, एकादशी-
द्वादश्योर्विपरीतोत्तरः प्रगाथः=( बृहती, विपरीता ), त्रयोदश्या द्विपदा
जगती, चतुर्दश्या बृहती पिपीलिकमध्या, पञ्चदश्याः ककुप् न्यङ्कुशिरा,
षोडश्या विराट्, सप्तदश्या जगती, अष्टादश्या उपरिष्टाद्बृहती,
एकोनविंश्या बृहती, विंश्या विषमपदा बृहती, एकविंशीचतुर्विंश्योः
पङ्क्तिः, द्वाविंश्याः संस्तारपङ्क्तिः, पञ्चविंश्याद्यष्टा-
विंश्यन्तानां प्रगाथः=( बृहती, सतोबृहती )
त्रिंश्या द्विपदा विराट्, एकत्रिंश्या
उष्णिक्, द्वात्रिंश्याः पङ्क्तिः[6] ।

**त्वाव॑तः पुरूवसो व॒यमि॑न्द्र प्रणेतः । स्मसि॑ स्थातर्हरीणाम् ॥ १ ॥**

त्वाऽव॑तः । पु॒रु॒व॒सो॒ इति॑ पुरुऽवसो । व॒यम् । इ॒न्द्र॒ । प्र॒ने॒त॒रिति॑ प्रऽनेतः । स्मसि॑ । स्था॒त॒ः । ह॒री॒णाम् ॥१॥

**वेङ्कट०** त्वत्सदृशस्य बहुधन! वयम् इन्द्र! प्रणेतः! स्वभूताः स्मः हे हरीणाम् अधिष्ठातः! ॥ १ ॥

**त्वां हि स॒त्यम॑द्रिवो वि॒द्म दा॒तार॑मि॒षाम् । वि॒द्म दा॒तार॑ं र॒यीणाम् ॥ २ ॥**

त्वाम् । हि । स॒त्यम् । अ॒द्रि॒ऽव॒ः । वि॒द्म । दा॒तार॑म् । इ॒षाम् । वि॒द्म । दा॒तार॑म् । र॒यी॒णाम् ॥२॥

**वेङ्कट०** निगदसिद्धा ॥ २ ॥

**आ यस्य॑ ते महि॒मानं॒ शत॑मूते॒ शत॑क्रतो । गी॒र्भिर्गृ॒णन्ति॑ का॒रव॑ः ॥ ३ ॥**

आ । यस्य॑ । ते॒ । म॒हि॒मान॑म् । शत॑म्ऽऊते । शत॑क्रतो॒ इति॒ शत॑ऽक्रतो । गी॒ःऽभिः । गृ॒णन्ति॑ । का॒रव॑ः ॥

**वेङ्कट०** निगदसिद्धा ॥ ३ ॥

---

१. षट्कौ वि[2] अ[1]. २. दशकौ वि[2] अ[1]. ३. ऋ १,१९१,१०. ४. ऋ १०,५९,९.
५. ऋ १०,१३४,१. ६-६. नास्ति मूको.

सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा । मित्रः पान्त्यद्रुहः ॥ ४ ॥

सुऽनीथः । घ । सः । मर्त्यः । यम् । मरुतः । यम् । अर्यमा । मित्रः । पान्ति । अद्रुहः ॥ ४ ॥

वेङ्कट० प्रशस्यः खलु भवति मनुष्यः, यम् मरुत्प्रभृतयः रक्षन्ति[1] द्रोहवर्जिताः ॥ ४ ॥

दधानो गोमदश्ववत् सुवीर्यमादित्यजूत एधते । सदा राया पुरुस्पृहा ॥ ५ ॥

दधानः । गोऽमत् । अश्वऽवत् । सुऽवीर्यम् । आदित्यऽजूतः । एधते । सदा । राया । पुरुऽस्पृहा ॥

वेङ्कट० धारयन्[2] गवादियुक्तं धनम् आदित्यप्रेरितः पुरुषः[3] वर्धते सर्वदा बहुभिः स्पृहणीयेन धनेन ॥ ५ ॥

[4]इति षष्ठाष्टके चतुर्थाध्याये प्रथमो वर्गः[4] ॥

तमिन्द्रं दानमीमहे शवसानमभीर्वम् । ईशानं राय ईमहे ॥ ६ ॥

तम् । इन्द्रम् । दानम् । ईमहे । शवसानम् । अभीर्वम् । ईशानम् । रायः । ईमहे ॥ ६ ॥

वेङ्कट० [5]तम् इन्द्रम्[5] देयं[6] धनम् याचामहे बलमाचरन्तम् अभीरुम् । ईशानम् धनानि याचामहे ॥६॥

तस्मिन् हि सन्त्यूतयो विश्वा अभीरवः सचा ।
तमा वहन्तु सप्तयः पुरूवसुं मदाय हरयः सुतम् ॥ ७ ॥

तस्मिन् । हि । सन्ति । ऊतयः । विश्वाः । अभीरवः । सचा ।
तम् । आ । वहन्तु । सप्तयः । पुरुऽवसुम् । मदाय । हरयः । सुतम् ॥ ७ ॥

वेङ्कट० तस्मिन् हि भवन्ति मरुतः सर्वे एव अभीरवः सहायाः । तम् आ वहन्तु अश्वाः बहुधनम् सोममदार्थम् हरणशीलाः सुतम् सोमं प्रति ॥ ७ ॥

यस्ते मदो वरेण्यो य इन्द्र वृत्रहन्तमः ।
य आददिः स्व१र्नृभिर्यः पृतनासु दुष्टरः ॥ ८ ॥

यः । ते । मदः । वरेण्यः । यः । इन्द्र । वृत्रहन्ऽतमः ।
यः । आऽददिः । स्वः । नृऽभिः । यः । पृतनासु । दुस्तरः ॥ ८ ॥

वेङ्कट० यः ते मदः वरणीयः, यः च इन्द्र! अतिशयेन शत्रूणां हन्ता, यः च शत्रुभ्यो नृभ्यः सर्वं धनम् आदत्ते, यः च पृतनासु दुष्टरः[7], तस्मै मदाय इति पूर्वत्र सम्बन्धः ॥ ८ ॥

---

१. रक्षति मूको. २. नास्ति अ[1]. ३. प्रणीतः मूको. ४-४. नास्ति मूको. ५-५. नास्ति अ[1]. ६. देवं मूको. ७. दुष्टतरः मूको.

यो दुष्टरो विश्ववार श्रवाय्यो वाजेष्वस्ति तरुता ।
स नः शविष्ठ सवना वसो गहि गमेम गोमति व्रजे ॥ ९ ॥

यः । दुस्तरः । विश्वऽवार । श्रवाय्यः । वाजेषु । अस्ति । तरुता ।
सः । नः । शविष्ठ । सवना । आ । वसो इति । गहि । गमेम । गोऽमति । व्रजे ॥ ९ ॥

**वेङ्कट०** यः दुष्टरः[1] विश्वैर्वरणीय! श्रवणीयः सङ्ग्रामेषु भवति तारकः, सः त्वं बलवत्तम! अस्माकं सवनानि आ गच्छ। वासयितः! गच्छेम वयं गोमन्तं व्रजम्[2] ॥ ९ ॥

गव्यो षु णो यथा पुराश्वयोत रथया । वरिवस्य महामह ॥ १० ॥

गव्यो इति । सु । नः । यथा । पुरा । अश्वऽया । उत । रथऽया । वरिवस्य । महाऽमह ॥१०॥

**वेङ्कट०** अस्माकं गवादीनामिच्छया गवादीन् अस्मभ्यं दातुं हे महाधन! परिचर अस्मान् उपागच्छ यथापुरम् इति ॥ १० ॥

[3]इति षष्ठाष्टके चतुर्थाध्याये द्वितीयो वर्गः[3] ॥

नहि ते शूर राधसोऽन्तं विन्दामि सत्रा ।
दशस्या नो मघवन्नू चिदद्रिवो धियो वाजेभिराविथ ॥ ११ ॥

नहि । ते । शूर । राधसः । अन्तम् । विन्दामि । सत्रा ।
दशस्य । नः । मघऽवन् । नु । चित् । अद्रिऽवः । धियः । वाजेभिः । आविथ ॥ ११ ॥

**वेङ्कट०** नहि ते शूर! धनस्य पर्यन्तम् बुद्धया[4] विन्दामि महतः। प्रयच्छ अस्मभ्यम् मघवन्! क्षिप्रमेव। वज्रिन्! कर्माणि अन्नैः रक्ष[5] ॥ ११ ॥

य ऋष्वः श्रावयत्सखा विश्वेत् स वेद जनिमा पुरुष्टुतः ।
तं विश्वे मानुषा युगेन्द्रं हवन्ते तविषं यतस्रुचः ॥ १२ ॥

यः । ऋष्वः । श्रवयत्ऽसखा । विश्वा । इत् । सः । वेद । जनिम । पुरुऽस्तुतः ।
तम् । विश्वे । मानुषा । युगा । इन्द्रम् । हवन्ते । तविषम् । यतऽस्रुचः ॥ १२ ॥

**वेङ्कट०** यः दर्शनीयः श्रावयत्सखा धनप्रदानेन आत्मानं श्रावयति[6], सः विश्वानि एव जातानि भूतानि वेद बहुभिः स्तुतः। तम् सर्वे मानुषान् कालान् सर्वेषु कालेषु इन्द्रम् हवन्ते वृद्धम् हस्तेन यतस्रुचः ॥ १२ ॥

---

१. दुष्टरः अ[1]. २. प्रजाम् मूको. ३-३. नास्ति मूको. ४. बुद्धाः वि[2]. ५. रक्षम् मूको. ६. भव° मूको.

स नो वाजेष्वविता पुरूवसुः पुरःस्थाता मघवा वृत्रहा भुवत् ॥ १३ ॥

सः । नः । वाजेषु । अविता । पुरुऽवसुः । पुरःऽस्थाता । मघऽवा । वृत्रऽहा । भुवत् ॥ १३ ॥

वेङ्कट० सः अस्माकं सङ्ग्रामेषु रक्षिता बहुधनः अग्रतः स्थाता मघवान् वृत्रहा भवतु इति। [1]जगती द्विपदेयम् इति[1] ॥ १३ ॥

अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।
इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥ १४ ॥

अभि । वः । वीरम् । अन्धसः । मदेषु । गाय । गिरा । महा । विऽचेतसम् ।
इन्द्रम् । नाम । श्रुत्यम् । शाकिनम् । वचः । यथा ॥ १४ ॥

वेङ्कट० अभि गायत यूयम् वीरम् सोमस्य मदेषु स्तुत्या महत्या प्रमतिम् इन्द्रम् नमयितारम् शत्रूणां श्रवणीयम् शक्तम्। यथा युष्माकम् वचः प्रतिभाति गायत्र्या त्रिष्टुभा चेति ॥१४॥

ददी रेक्णस्तन्वे ददिर्वसु ददिर्वाजेषु पुरुहूत वाजिनम् । नूनमथ ॥ १५ ॥

ददिः । रेक्णः । तन्वे । ददिः । वसु । ददिः । वाजेषु । पुरुऽहूत । वाजिनम् । नूनम् । अथ ॥

वेङ्कट० दाता धनम् आत्मने, ददिः पुत्राय च धनम्, ददिः सङ्ग्रामेषु। हे पुरुहूत! अन्नवन्तं रयिं त्वं वह[2] क्षिप्रम् इदानीमेव ॥ १५ ॥

[3]इति षष्ठाष्टके चतुर्थाध्याये तृतीयो वर्गः[3] ॥

विश्वेषामिरज्यन्तं वसूनां सासह्वांसं चिदस्य वर्पसः । कृपयतो नूनमत्यथ ॥ १६ ॥

विश्वेषाम् । इरज्यन्तम् । वसूनाम् । ससह्वांसम् । चित् । अस्य । वर्पसः ।
कृपऽयतः । नूनम् । अति । अथ ॥ १६ ॥

वेङ्कट० सर्वेषां धनानाम् ईशानम् अभिभवितारम् च अस्य वारकस्य[4] शत्रोः कल्पयतः युद्धं कुर्वाणस्य रयिम् इदानीम् अति प्रयच्छ। क्षिप्रं महान्तं रयिं प्रयच्छेत्यर्थः ॥ १६ ॥

महः सु वो अरमिषे स्तवामहे मीळ्हुषे अरंगमाय जग्मये ।
यज्ञेभिर्गीर्भिर्विश्वमनुषां मरुतामियक्षसि गाये त्वा नमसा गिरा ॥ १७ ॥

महः । सु । वः । अरम् । इषे । स्तवामहे । मीळ्हुषे । अरम्ऽगमाय । जग्मये ।
यज्ञेभिः । गीःऽभिः । विश्वऽमनुषाम् । मरुताम् । इयक्षसि । गाये । त्वा । नमसा । गिरा ॥१७॥

---

१-१. जागते द्विपदे यदिति मूको. २. वभ अ[1]. ३-३. नास्ति मूको. ४. पारकस्य मूको.

वेङ्कट० महतः 'सु वः गमनम्' सुष्ठु इच्छामि[2]। स्तवामहे सेक्त्रे पर्याप्तगमनाय गमनशीलाय तुभ्यं यज्ञैः स्तुतिभिश्च। सर्वेषां मनुष्याणाम् इज्यसे मरुताम् सम्बन्धी। तं त्वामहं गाये[3] नमस्कारेण सह गिरा ॥ १७ ॥

ये पातयन्ते अज्मभिर्गिरीणां स्नुभिरेषाम् ।
यज्ञं महिष्वणीनां सुम्नं तुविष्वणीनां प्राध्वरे ॥ १८ ॥

ये । पातयन्ते । अज्मऽभिः । गिरीणाम् । स्नुऽभिः । एषाम् ।
यज्ञम् । महिऽस्वनीनाम । सुम्नम् । तुविऽस्वनीनाम् । प्र । अध्वरे ॥ १८ ॥

वेङ्कट० ये पतन्ति बलैः उदकैः मेघानां प्रस्रवद्भिः। एषाम् मरुतां तव सहायानाम् यज्ञम् कुर्मः महास्वनानाम्। अथ सुम्नम् सुखं प्राप्नुयाम[4]। तेषां प्रवृद्धं स्वभूतं प्रापयामो वा सुखकरं हविः यज्ञे ॥ १८ ॥

प्रभङ्गं दुर्मतीनामिन्द्र शविष्ठा भर ।
रयिमस्मभ्यं युज्यं चोदयन्मते ज्येष्ठं चोदयन्मते ॥ १९ ॥

प्रऽभङ्गम् । दुःऽमतीनाम् । इन्द्र । शविष्ठ । आ । भर ।
रयिम । अस्मभ्यम् । युज्यम् । चोदयत्ऽमते । ज्येष्ठम् । चोदयत्ऽमते ॥ १९ ॥

वेङ्कट० प्रकर्षेण भञ्जकम् दुर्मतीनाम् इन्द्र! बलवत्तर! आ भर रयिम् अस्मभ्यम् योग्यम्। यस्य बुद्धिः सर्वदा धनं प्रेरयति स चोदयन्मतिः[5]। प्रशस्तम् ॥ १९ ॥

सनितः सुसनितरुग्र चित्र चेतिष्ठ सूनृत ।
प्रासहा सम्राट् सहुरिं सहन्तं भुज्युं वाजेषु पूर्व्यम् ॥ २० ॥

सनितारिति । सुऽसनितः । उग्र । चित्र । चेतिष्ठ । सूनृत ।
प्रऽसहा । सम्ऽराट् । सहुरिम् । सहन्तम् । भुज्युम् । वाजेषु । पूर्व्यम् ॥ २० ॥

वेङ्कट० सुष्ठु दातः! उद्गूर्ण! चित्र! अत्यन्तं चेतयितः![6] सुसत्य! प्रसह्य[7] हे सम्राट्! सहनशीलम् सहन्तम् भोजयितारं रयिम् सङ्ग्रामेषु मुख्यम् अस्मभ्यम् आभरेति[8] ॥ २० ॥

[9]इति षष्ठाष्टके चतुर्थाध्याये चतुर्थो वर्गः[9] ॥

---

१-१. सपगमनम् वि'; सुपग° अ'.　२. विच्छामि मूको.　३. कायेन मूको.　४. प्राप्नुयां मूको.　५. चोदयन्मतिम् मूको.　६. चेतितः मूको.　७. प्रस मूको.　८. आहरेति अ'.　९-९. नास्ति मूको.

आ स एतु य ईवदाँ अदेवः पूर्तमाददे ।
यथा चिद्वशो अश्व्यः पृथुश्रवसि कानीतेऽस्या व्युष्याददे ॥ २१ ॥

आ । सः । एतु । यः । ईवत् । आ । अदेवः । पूर्तम् । आऽददे ।
यथा । चित् । वशः । अश्व्यः । पृथुऽश्रवसि । कानीते । अस्याः । विऽउषि । आऽददे ॥२१॥

**वेङ्कट०** शौनकः— "वशायाश्व्याय[1] यत् प्रादात् कानीतस्तु पृथुश्रवाः[2] ॥
तदत्र संस्तुतं दानम् आ स इत्येवमादिभिः ।" ( बृदे ६,७९;८० ) इति ॥

आ गच्छतु सः समर्थः, यः अदेवः सन् कस्माच्चित् आढ्यात् गमनयुक्तम्[3] पूर्तम्[4] गोधनम् आदत्ते । देवश्चेत् माययाऽप्यादातुम्[5] अर्हति । मनुष्यः कश्चित् आगच्छतु इति । यथा चित् वशः[6] अश्वस्य पुत्रः पृथुश्रवसि[7] कनीतस्य[8] पुत्रे कन्यायाः वा पुत्रे अस्याः उषसो व्युच्छने[9] आददे ॥ २१ ॥

षष्टिं सहस्राश्व्यस्यायुतासनमुष्ट्राणां विंशतिं शता ।
दश श्यावीनां शता दश त्र्यरुषीणां दश गवां सहस्रा ॥ २२ ॥

षष्टिम् । सहस्रा । अश्व्यस्य । अयुता । असनम् । उष्ट्राणाम् । विंशतिम् । शता ।
दश । श्यावीनाम् । शता । दश । त्रिऽअरुषीणाम् । दश । गवाम् । सहस्रा ॥ २२ ॥

**वेङ्कट०** षष्टिम्[10] सहस्राणि अयुतानि च अभजम्, उष्ट्राणाम् च विंशतिम्[11] शतानि, दश च शतानि श्याववर्णानां वडवानाम्, दश च त्र्यरुषीणाम्[12] [13]त्रीणि आरोचमानानि[13] श्वेतानि[14] यासाम्, ऊरुपृष्ठे[15] भसदि च श्वेतानाम् इत्यर्थः । दश च गवाम् सहस्राणि इति ॥ २२ ॥

दश श्यावा ऋधद्रयो वीतवारास आशवः । मथ्रा नेमिं नि वावृतुः ॥ २३ ॥

दश । श्यावाः । ऋधत्ऽरयः । वीतऽवारासः । आशवः । मथ्राः । नेमिम् । नि । ववृतुः ॥ २३ ॥

**वेङ्कट०** दश [16]श्याववर्णाः प्रवृद्धगतयः[16] क्रान्तबलाः[17] [18]क्षिप्रा मथनशीलाः[18] रथस्य नेमिम् नि वर्तयन्ति ॥ २३ ॥

दानासः पृथुश्रवसः कानीतस्य सुराधसः ।
रथं हिरण्ययं ददन्मंहिष्ठः सूरिरभूद्वर्षिष्ठमकृत श्रवः ॥ २४ ॥

---

१. °श्याय मूको. २. पृथक्छ्रवाः मूको. ३. तु. ऋ ५,४९,५ भाष्यम्; °युक्तः मूको. ४. पूर्वं मूको. ५. °प्यादातुम् मूको. ६. विगः मूको. ७. पृथुश्रव मूको. ८. कनीतसस्य मूको. ९. °च्छन्ने मूको. १०. नास्ति अ'. ११. विं मूको. १२. ऋपीणाम् मूको. १३-१३. रोच° मूको. १४. श्वैत्यानि मूको. १५. कुरुतिष्ठे मूको. १६-१६. °र्णाः ··· गत° मूको. १७. कान्ता बाला मूको. १८-१८. क्षिप्रम° मूको.

दानासः । पृथुऽश्रवसः । कानीतस्य । सुऽराधसः ।
रथम् । हिरण्ययम् । ददत् । मंहिष्ठः । सूरिः । अभूत् । वर्षिष्ठम् । अकृत । श्रवः ॥ २४ ॥

वेङ्कट० तानि इमानि दत्तानि पृथुश्रवसः कानीतस्य सुधनस्य। मह्यम् हिरण्मयम् रथम् प्रयच्छन् अत्यन्तदाता प्राज्ञः अभूत्। पृथुतमाम् च कीर्तिम् अकृत आत्मन इति ॥ २४ ॥

आ नो वायो महे तने याहि मखाय पाजसे ।
वयं हि ते चकृमा भूरि दावने सद्यश्चिन्महि दावने ॥ २५ ॥

आ । नः । वायो इति । महे । तने[1] । याहि । मखाय । पाजसे ।
वयम् । हि । ते । चकृम । भूरि । दावने । सद्यः । चित् । महि । दावने ॥ २५ ॥

वेङ्कट० आ याहि अस्मान् वायो! महते धनाय महनीयाय च बलाय, उभयं प्रदातुम्। वयम् हि ते कृतवन्तः कर्म भूरेः दात्रे सद्यः एव महतः दात्रे ॥ २५ ॥

[2]इति षष्ठाष्टके चतुर्थाध्याये पञ्चमो वर्गः[2] ॥

यो अश्वेभिर्वहते वस्त उस्रास्त्रिः सप्त सप्ततीनाम् ।
एभिः सोमेभिः सोमसुद्भिः सोमपा दानाय शुक्रपूतपाः ॥ २६ ॥

यः । अश्वेभिः । वहते । वस्ते । उस्राः । त्रिः । सप्त । सप्ततीनाम् ।
एभिः । सोमेभिः । सोमसुत्ऽभिः । सोमऽपाः । दानाय । शुक्रपूतऽपाः ॥ २६ ॥

वेङ्कट० यः पृथुश्रवाः अश्वेभिः गच्छति, वस्ते च गाः, [3]ताभिः च[3] गच्छति। गवां [4]सङ्ख्या त्रिः सप्त[4] इति। सप्ततीनाम् त्रिः सप्त गा वस्त इति। एभिः सोमैः सोमसुद्भिः च ग्रावभिः सह हे सोमस्य पातः![5] अस्मभ्यम् दानाय हे पूतस्य सोमस्य पातः!। उत्तरत्र सम्बन्धः ॥ २६ ॥

यो म इमं चिदु त्मनामन्दच्चित्रं दावने ।
अरट्वे अक्षे नहुषे सुकृत्वनि सुकृत्तराय सुक्रतुः ॥ २७ ॥

यः । मे । इमम् । चित् । ऊँ इति । त्मना । अमन्दत् । चित्रम् । दावने ।
अरट्वे । अक्षे । नहुषे । सुऽकृत्वनि । सुकृत्ऽतराय । सुऽक्रतुः ॥ २७ ॥

वेङ्कट० यः मह्यं स्वयमेव अमन्दत्[6] चित्रम् रयिं दातुम्, श्रद्धाम् अकरोत्। अरट्वादयः पृथुश्रवसः अध्यक्षाः, तान् अन्वशात्—अस्मै नयतेति सुकृतराय[7], जन्मान्तरे[8] सुकर्मेति ॥ २७ ॥

---

1. अर्थस्य कृते ऋ २,९,२ भाष्यमपि द्र.　　२-२. नास्ति मूको.　　३-३. ता मूको.
४-४. सङ्ख्येति स° मूको.　　५. पूतस्य पातारम् मूको.　　६. °न्दम् मूको.　　७. सतूत° मूको.
८. जन्मातरे मूको.

उचथ्येऽ वपुषि यः स्वराळुत वायो घृतस्नाः ।
अश्वेषितं रजेषितं शुनेषितं प्राज्म तदिदं नु तत् ॥ २८ ॥

उचथ्ये । वपुषि । यः । स्वऽराट् । उत । वायो इति । घृतऽस्नाः ।
अश्वऽइषितम् । रजःऽइषितम् । शुनाऽइषितम् । प्र । अज्म । तत् । इदम् । नु । तत् ॥ २८ ॥

वेङ्कट० उचथ्ये वपुषि च अध्यक्षयोः यः स्वराट् पृथुश्रवाः । यद्वा अरट्वादिषु[1] षट्सु राजसु[2] यः स्वाराज्यं करोति घृतवत् शुद्धः, तस्मात् अश्वादिभिः आनीतम्[3] । रजःशब्देन गर्दभः उच्यते, उष्ट्रो वा । तत् अन्नं प्राप्नुमः । तच्चेदमिति वायवे निर्दिशति—[4]इदम् नु तत् वायो ![4] इति ॥ २८ ॥

अध प्रियमिषिराय षष्टिं सहस्रासनम् । अश्वानामिन्न वृष्णाम् ॥ २९ ॥

अध । प्रियम् । इषिराय । षष्टिम् । सहस्रा । असनम् । अश्वानाम् । इत् । न । वृष्णाम् ॥ २९ ॥

वेङ्कट० इदानीं प्रेरयित्रे राज्ञे श्रद्धेयम् सहस्राणाम् षष्टिम् ततोऽहं लब्धवान् अस्मि अश्वानाम् इव बलीवर्दानां च ॥ २९ ॥

गावो न यूथमुप यन्ति वध्रय उप मा यन्ति वध्रयः ॥ ३० ॥

गावः । न । यूथम् । उप । यन्ति । वध्रयः । उप । मा । आ । यन्ति । वध्रयः ॥ ३० ॥

वेङ्कट० यथा सङ्घे गावः यूथपम् उप गच्छन्ति, एवं मां पृथुश्रवसा दत्ताः छिन्नवृषणा बलीवर्दा उपतिष्ठन्ति ॥ ३० ॥

अध यच्चारथे गणे शतमुष्ट्राँ अचिक्रदत् । अध श्वित्नेषु विंशतिं शता ॥ ३१ ॥

अध । यत् । चारथे । गणे । शतम् । उष्ट्रान् । अचिक्रदत् । अध । श्वित्नेषु । विंशतिम् । शता ॥

वेङ्कट० अथ यथा चारथे मह्यं सञ्चार्यमाणे प्रेर्यमाणे धनगणे शतम् उष्ट्रान् अशब्दयत् प्रदानाय जुहाव । अथ श्वितेषु[5] श्वेतवर्णेषु गोषु विंशतिम् च शतानि अचिक्रदत् इति ॥ ३१ ॥

शतं दासे बल्बूथे विप्रस्तरुक्ष आ ददे ।
ते ते वायविमे जना मदन्तीन्द्रगोपा मदन्ति देवगोपाः ॥ ३२ ॥

शतम् । दासे । बल्बूथे । विप्रः । तरुक्षे । आ । ददे ।
ते । ते । वायो इति । इमे । जनाः । मदन्ति । इन्द्रऽगोपाः । मदन्ति । देवऽगोपाः ॥ ३२ ॥

---

१. अरत्वादि° मूको. २. रजस्सु मूको. ३. आरानीतम् मूको. ४-४. दनुकद्वायो मूको. ५. श्वित्येषु मूको.

वेङ्कट० शतम् दासे बल्बूथे[1] धनस्य तारुक्षे राज्ञा प्रदिष्टस्य दातरि मेधावी वशः गोऽश्वान्[2] आ ददे। अथ परोक्षवदाह—ते ते इति। हे वायो! तव स्वभूताः ते इमे जनाः इन्द्रेण देवैः च गुप्ताः लब्धधनाः अस्मात्[3] राज्ञः मदन्ति इति ॥ ३२ ॥

अध॒ स्या योष॑णा म॒ही प्र॑ती॒ची वश॑म॒श्व्य॑म् । अधि॑रुक्मा॒ वि नी॑यते ॥ ३३ ॥

अध॑ । स्या । योष॑णा । म॒ही । प्र॒ती॒ची । वश॑म् । अ॒श्व्य॑म् । अधि॑ऽरुक्मा । वि । नी॒य॒ते॒ ॥ ३३ ॥

वेङ्कट० अथ सेयं कन्या मंहनीया अभिमुखी वशम् अश्व्यम्[4] अधिरूढरुक्माभरणा राज्ञा प्रदिष्टा वि नीयते, मां प्रत्यानयन्ति[5] तां चेति ॥ ३३ ॥

[6]इति षष्ठाष्टके चतुर्थाध्याये षष्ठो वर्गः[6] ॥

[ ४७ ]

[6]त्रित आप्त्य ऋषिः। आदित्या देवता, चतुर्दश्याद्यष्टादश्यन्तानाम् आदित्योषसः। महापङ्क्तिः छन्दः[6]।

महि॑ वो मह॒ताम॑वो॒ वरु॑ण॒ मित्र॑ दा॒शुषे॑ ।
यमा॑दित्या अ॒भि द्रु॒हो रक्ष॑था॒ नेम॒घं न॑शदने॒हसो॑ व ऊ॒तय॑ः सु॒ऊ॒तयो॑ व ऊ॒तय॑ः ॥ १ ॥

महि॑ । वः॒ । म॒ह॒ताम् । अव॑ः । वरु॑ण । मित्र॑ । दा॒शुषे॑ । यम् । आ॒दि॒त्याः॒ । अ॒भि । द्रु॒हः । रक्ष॑थ । न । ई॒म् । अ॒घम् । न॒श॒त् । अ॒ने॒हस॑ः । वः॒ । ऊ॒तय॑ः । सु॒ऽऊ॒तय॑ः । वः॒ । ऊ॒तय॑ः ॥ १ ॥

वेङ्कट० त्रित आप्त्यः। महत् वः महताम् पालनम् यजमानाय हे वरुणादयः!। यम् दाश्वांसं हे आदित्याः! द्रोहात् अभि रक्षथ, न एनम् पापम् प्राप्नोति। अनुपद्रवाणि युष्माकं रक्षणानि, सुरक्षणानि युष्माकं रक्षणानीति ॥ १ ॥

वि॒दा दे॑वा अ॒घाना॒मादि॑त्यासो अ॒पाकृ॑तिम् ।
प॒क्षा वयो॒ यथो॒परि॒ व्य॑१॒स्मे शर्म॑ यच्छताने॒हसो॑ व ऊ॒तय॑ः सु॒ऊ॒तयो॑ व ऊ॒तय॑ः ॥ २ ॥

वि॒द । दे॒वाः॒ । अ॒घाना॑म् । आदि॑त्यासः । अ॒प॒ऽआकृ॑तिम् । प॒क्षा । वय॑ः । यथा॑ । उ॒परि॑ । वि । अ॒स्मे इति॑ । शर्म॑ । य॒च्छ॒त॒ । अ॒ने॒हस॑ः । वः॒ । ऊ॒तय॑ः । सु॒ऽऊ॒तय॑ः । वः॒ । ऊ॒तय॑ः ॥ २ ॥

वेङ्कट० हे देवाः! आदित्याः! पापानाम् अपाकरणप्रकारम् जानीथ। पक्षौ यथा पक्षिणः पोतानाम् उपरि कुर्वन्ति, तथा अस्मासु सुखम् वि यच्छत ॥ २ ॥

---

१. बल्ये मूको. २. गोश्व वि[2]; सोऽश्व अ[1]. ३. अस्मान् मूको. ४. अश्वं मूको. ५. प्रत्यादयन्ती मूको. ६-६. नास्ति मूको.

व्य१स्मे अधि शर्म तत् पक्षा वयो न यन्तन ।
विश्वानि विश्ववेदसो वरूथ्या मनामहेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥ ३ ॥

वि । अस्मे इति । अधि । शर्म । तत् । पक्षा । वयः । न । यन्तन । विश्वानि । विश्वऽवेदसः । वरूथ्या । मनामहे । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ३ ॥

**वेङ्कट०** वि यच्छत अस्मासु अधि तत् सुखं पक्षाविव[1] पक्षिणः अण्डानाम् उपरि। विश्वानि हे विश्वधनाः! गृहहितानि[2] धनानि याचामहे ॥ ३ ॥

यस्मा अरासत क्षयं जीवातुं च प्रचेतसः ।
मनोर्विश्वस्य घेदिम आदित्या राय ईशतेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥४॥

यस्मै । अरासत । क्षयम् । जीवातुम् । च । प्रऽचेतसः । मनोः । विश्वस्य । घ । इत् । इमे । आदित्याः । रायः । ईशते । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ४ ॥

**वेङ्कट०** यस्मै प्रयच्छन्ति निवासम्[3] अन्नम् च प्रचेतसः, तस्मै प्रयच्छन्ति। सर्वस्य मनुष्यस्य इमे आदित्याः धनस्य च ईश्वरा भवन्ति ॥ ४ ॥

परि णो वृणजन्नघा दुर्गाणि रथ्यो यथा ।
स्यामेदिन्द्रस्य शर्मण्यादित्यानामुतावस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥५॥

परि । नः । वृणजन् । अघा । दुःऽगानि । रथ्यः । यथा । स्याम । इत् । इन्द्रस्य । शर्मणि । आदित्यानाम् । उत । अवसि । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ५ ॥

**वेङ्कट०** परि वर्जयन्तु अस्मान् पापानि, यथा दुर्गाणि सारथयः परि वर्जयन्ति। स्याम एव इन्द्रस्य सुखे, अपि च अन्येषाम् आदित्यानाम् रक्षणे ॥ ५ ॥

[4]इति षष्ठाष्टके चतुर्थाध्याये सप्तमो वर्गः[4] ॥

परिह्वृतेदना जनो युष्मादत्तस्य वायति ।
देवा अदभ्रमाश वो यमादित्या अहेतनानेहसो व ऊतयः सुऊतयो व ऊतयः ॥६॥

परिऽह्वृता । इत् । अना । जनः । युष्माऽदत्तस्य । वायति । देवाः । अदभ्रम् । आश । वः । यम् । आदित्याः । अहेतन । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ६ ॥

---

१. पक्षावि मूको. २. गृहं हित्वानि मूको. ३. इति वासम् मूको. ४-४. नास्ति मूको.

वेङ्कट० परिपीडितेनैव अना प्राणेन युक्तः जनः[1] युष्माभिः दत्तं गच्छति । देवाः! [2]आश वः[2] अनल्पं धनं युष्मदीयं स लभते यम् प्राप्नुथ[3] ॥ ६ ॥

न तं ति॒ग्मं च॒न त्यजो॒ न द्रा॑सद॒भि तं गु॒रु ।
यस्मा॑ उ॒ शर्म॑ स॒प्रथ॒ आदि॑त्यासो॒ अरा॑ध्वमने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥७॥

न । तम् । ति॒ग्मम् । च॒न । त्यजः॑ । न । द्रा॒स॒त् । अ॒भि । तम् । गु॒रु । यस्मै॑ । ऊँ इति॑ । शर्म॑ । स॒ऽप्रथः॑ । आदि॑त्यासः । अरा॑ध्वम् । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥

वेङ्कट० न तम् तीक्ष्णम् त्यजः अभिगच्छति । 'त्यजः' (निघ २,१२) इति क्रोधनाम, अत्र तु आयुधवचनः[4] । त्यजस्तिजतेः निर्दिशतिकर्मणः । न अपि अभि गच्छति गुरु गदादि तम् । द्रा[5] इति कुत्सितगमनकर्मा । यस्मै[6] सुखं सर्वतः पृथु हे आदित्याः! अराध्वम्[7] अदत्त ॥ ७ ॥

यु॒ष्मे दे॑वा॒ अपि॑ ष्मसि॒ युध्य॑न्त इ॒व वर्म॑सु ।
यू॒यं म॒हो न॒ एन॑सो यू॒यमर्भा॑दुरुष्यताने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥ ८ ॥

यु॒ष्मे इति॑ । दे॒वाः॒ । अपि॑ । स्म॒सि॒ । युध्य॑न्तःऽइव । वर्म॑ऽसु । यू॒यम् । म॒हः । न॒ः । एन॑सः । यू॒यम् । अर्भा॑त् । उ॒रु॒ष्य॒त॒ । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥ ८ ॥

वेङ्कट० युष्मासु देवाः! वयम् अपि भवेम, यथा युध्यन्तः भटाः कवचेषु अपि भवन्ति । यूयम् महतः अस्मात् पापात् यूयम् अल्पात् च अस्मान् रक्षतेति ॥ ८ ॥

अदि॑तिर्न उरुष्य॒त्वदि॑ति॒ः शर्म॑ यच्छतु ।
मा॒ता मि॒त्रस्य॑ रे॒वतो॑ऽर्य॒म्णो वरु॑णस्य चाने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥९॥

अदि॑तिः । न॒ः । उ॒रु॒ष्य॒तु॒ । अदि॑तिः । शर्म॑ । य॒च्छ॒तु॒ । मा॒ता । मि॒त्रस्य॑ । रे॒वतः॑ । अ॒र्य॒म्णः । वरु॑णस्य । च॒ । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥ ९ ॥

वेङ्कट० निगदसिद्धेति ॥ ९ ॥

यद् दे॑वा॒ः शर्म॑ शर॒णं यद् भ॒द्रं यद॑नातु॒रम् ।
त्रि॒धातु॒ यद् व॑रू॒थ्यं१॒॑ तद॒स्मासु॒ वि य॑न्तनाने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥१०॥

यत् । दे॒वाः॒ । शर्म॑ । श॒र॒णम् । यत् । भ॒द्रम् । यत् । अ॒ना॒तु॒रम् । त्रि॒ऽधातु॑ । यत् । व॒रू॒थ्य॑म् । तत् । अ॒स्मासु॑ । वि । य॒न्त॒न॒ । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥ १० ॥

---

१. जाने मूको.　२-२. वैप १,४८१ d द्र.　३. प्रा नुत मूको.　४. आयुतव° अ[1].　५. द्राद् वि[2].　६. यदस्मै　७. आययम् मूको.

**वेङ्कट०** यत् देवाः! [1]सुखं शरणीयम्[1], यत् भजनीयम्, यत् रोगरहितम् त्रिगुणम्, यत् च वरूथहितं धनम्, तत् अस्मासु वि यच्छत ॥ १० ॥

[2]इति षष्ठाष्टके चतुर्थाध्याये अष्टमो वर्गः[2] ॥

आदित्या अव हि ख्यताधि कूलादिव स्पशः ।
सुतीर्थमर्वतो यथानु नो नेषथा सुगमनेहसो व ऊतयः सुऊतयो व ऊतयः ॥ ११ ॥

आदित्याः । अव । हि । ख्यत । अधि । कूलात्ऽइव । स्पशः । सुऽतीर्थम् । अर्वतः । यथा । अनु । नः । नेषथ । सुऽगम् । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ११ ॥

**वेङ्कट०** आदित्याः! अव हि पश्यत अधःस्थितान् अस्मान्, यथा कूले तिष्ठन्नधः[3] पश्यति ज्ञातोदकं जिज्ञासुः। शोभनतीर्थमिव देशम् अश्वान् सादिनः, अस्मान्[4] सुखं पन्थानम् अनु नयथ ॥ ११ ॥

नेह भद्रं रक्षस्विने नावयै नोपया उत ।
गवे च भद्रं धेनवे वीराय च श्रवस्यतेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥ १२ ॥

न । इह । भद्रम् । रक्षस्विने । न । अवऽयै । न । उपऽयै । उत । गवे । च । भद्रम् । धेनवे । वीराय । च । श्रवस्यते । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १२ ॥

**वेङ्कट०** न इह भद्रम् बलवते, न अपि अवगच्छते बाधकाय, न च उपगच्छते युष्माभिः दीयते। गवे च धेनवे च भद्रम्, वीराय च श्रवस्यते[5] अस्मदीयाय भवति युष्मद्दत्तमिति ॥ १२ ॥

यदाविर्यदपीच्यं देवासो अस्ति दुष्कृतम् ।
त्रिते तद्विश्वमाप्त्य आरे अस्मद् दधातनानेहसो व ऊतयः सुऊतयो व ऊतयः ॥ १३ ॥

यत् । आविः । यत् । अपीच्यम् । देवासः । अस्ति । दुःऽकृतम् । त्रिते । तत् । विश्वम् । आप्त्ये । आरे । अस्मत् । दधातन । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १३ ॥

**वेङ्कट०** यत् आविर्भूतम् यत् च अन्तर्हितम् हे देवाः! अस्ति दुष्कृतम्, त्रिते तत् विश्वम् आप्त्ये[6] अस्मत्तो दूरे स्थापयत ॥ १३ ॥

यच्च गोषु दुष्ष्वप्न्यं यच्चास्मे दुहितर्दिवः ।
त्रिताय तद्विभावर्याप्त्याय परा वहानेहसो व ऊतयः सुऊतयो व ऊतयः ॥ १४ ॥

---

१-१. सुखश्रवणीयाः मूको. २-२. नास्ति मूको. ३. °न्नथ वि[1]. ४. अश्वाद् वि[1]; अश्वान् अ[1]. ५. श्रयरयंत मूको. ६. आप्त्यै वि[2]; आप्ते अ[1].

यत् । च । गोषु । दुःऽस्वप्न्यम् । यत् । च । अस्मे इति । दुहितः । दिवः । त्रिताय । तत् । विभाऽवरि । आप्त्याय । परा । वह । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१४॥

वेङ्कट० पञ्च (१४-१८) उषस्या भवन्ति। यत् च गवामनर्थसूचकम् दुस्स्वप्न्यम्[1], यत् च अस्मासु दिवः दुहितः!, तत् अपां पुत्राय त्रिताय उषः! परा वह इति ॥ १४ ॥

निष्कं वा घा कृणवते स्रजं वा दुहितर्दिवः ।
त्रिते दुष्ष्वप्न्यं सर्वमाप्त्ये परि दद्मस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥ १५ ॥

निष्कम् । वा । घ । कृणवते । स्रजम् । वा । दुहितः । दिवः । त्रिते । दुःऽस्वप्न्यम् । सर्वम् । आप्त्ये । परि । दद्मसि । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १५ ॥

वेङ्कट० निष्कम् वा खलु कुर्वाणाय सुवर्णकाराय स्रजम्[2] वा स्वप्ने मह्यं यत् अघम् तत् दिवः दुहितः! त्रिते सर्वम् आप्त्ये निष्कृष्य दद्मः[3] ॥ १५ ॥

[4]इति षष्ठाष्टके चतुर्थाध्याये नवमो वर्गः[4] ॥

तदन्नाय तदपसे तं भागमुपसेदुषे ।
त्रिताय च द्विताय चोषो दुष्ष्वप्न्यं वहानेहसो व ऊतयः सुऊतयो व ऊतयः ॥१६॥

तत्ऽअन्नाय । तत्ऽअपसे । तम् । भागम् । उपऽसेदुषे । त्रिताय । च । द्विताय । च । उषः । दुःऽस्वप्न्यम् । वह । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १६ ॥

वेङ्कट० स्वप्ने भोज्यं भुङ्क्ते, करणीयं च करोति। तदुभयं तथा प्रत्यक्षतो भवति। एवं सति यः तदन्नो भवति यश्च तत्कर्मा भवति त्रितादिः, तस्मै तम्[5] भजनीयम् उभयम् उपगच्छते त्रिताय च द्विताय च अस्मत्तोऽपनीय[6] गमय दुष्ष्वप्न्यम् इति ॥ १६ ॥

यथा कलां यथा शफं यथ ऋणं संनयामसि ।
एवा दुष्ष्वप्न्यं सर्वमाप्त्ये सं नयामस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१७॥

यथा । कलाम् । यथा । शफम् । यथा । ऋणम् । सम्ऽनयामसि । एव । दुःऽस्वप्न्यम् । सर्वम् । आप्त्ये । सम् । नयामसि । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥१७॥

वेङ्कट० यथा अशनार्थं संस्कुर्वन्तो हतस्य पशोः कलाम् शफम् इति सह आदाय अन्यत्र सन्नयन्ति । एव दुष्ष्वप्न्यम् सर्वम् आप्त्ये[7] सम् नयामः । प्रवृद्धं वा यथा ऋणम् इति ॥ १७ ॥

---

१. दुस्स्वप्नम् मूको. २. नास्ति मूको. ३. °दस्मं वि'; °दस्मन् अ'. ४-४. नास्ति मूको. ५. ततम् मूको. ६. °नीय गननीय मूको. ७. °प्त्ये स्मितम् मूको.

अजैष्माद्यासनाम चाभूमानागसो वयम् ।
उषो यस्माद् दुष्ष्वप्न्यादभैष्माप तदुच्छत्वनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१८॥

अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयम् । उषः । यस्मात् । दुःऽस्वप्न्यात् । अभैष्म । अप । तत् । उच्छतु । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १८ ॥

वेङ्कट० जयेम[1] अद्य[2], भवेम[3] च अनागसः वयम् । हे उषः! यस्मात् दुष्ष्वप्न्यात्[4] वयम् अभैष्म, अप गच्छतु तत् इति ॥ १८ ॥

[5]इति षष्ठाष्टके चतुर्थाध्याये दशमो वर्गः[5] ॥

## [ ४८ ]

[8]प्रगाथो घौरः काण्व ऋषिः । सोमो देवता । त्रिष्टुप् छन्दः, पञ्चमी जगती[8] ।

स्वादोरभक्षि वयसः सुमेधाः स्वाध्यो वरिवोवित्तरस्य ।
विश्वे यं देवा उत मर्त्यासो मधु ब्रुवन्तो अभि संचरन्ति ॥ १ ॥

स्वादोः । अभक्षि । वयसः । सुऽमेधाः । सुऽआध्यः । वरिवोवित्ऽतरस्य ।
विश्वे । यम् । देवाः । उत । मर्त्यासः । मधु । ब्रुवन्तः । अभि । समऽचरन्ति ॥ १ ॥

वेङ्कट० प्रगाथः । स्वादु अहं भजेय अन्नं शोभनप्रज्ञः सुकर्मा अत्यन्तं पूजायाः[6] लम्भकम् । यम् विश्वे देवाः मनुष्याश्च सोमम् मधु इति वदन्तः अभि सङ्गच्छन्ते ॥ १ ॥

अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य ।
इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः ॥ २ ॥

अन्तरिति । च । प्र । अगाः । अदितिः । भवासि । अवऽयाता । हरसः । दैव्यस्य ।
इन्दो इति । इन्द्रस्य । सख्यम् । जुषाणः । श्रौष्टीऽइव । धुरम् । अनु । राये । ऋध्याः ॥ २ ॥

वेङ्कट० अन्तः त्वं गच्छसि अखण्डनीयः[7] । भवसि अपनेता दैव्यस्य क्रोधस्य हे इन्दो! त्वम् इन्द्रस्य सख्यम् सेवमानः । स त्वं यथा क्षिप्रगामी अश्वः 'धुरम् प्रणयति एवम्' अस्मान् प्रणय धनार्थम् । ऋधिः अनुपूर्वो गमनार्थो भवति ॥ २ ॥

---

१. जयेत् मूको. २. भाद्यं वि[1]; अद्यं अ[1]. ३. जैमहवेम मूको. ४. दुष्वप्नात् अ[1]. ५-५. नास्ति मूको. ६. पूजायां मूको. ७. °यस्य मूको. ८-८. °रम … धृ … ए° वि[1]; °रम् … ए° अ[1].

अपाम सोममृमृता अभूमागन्म ज्योतिरविदाम देवान् ।
किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥ ३ ॥

अपाम । सोमम् । अमृताः । अभूम । अगन्म । ज्योतिः । अविदाम । देवान् ।
किम् । नूनम् । अस्मान् । कृणवत् । अरातिः । किम् । ऊँ इति । धूर्तिः । अमृत । मर्त्यस्य ॥३॥

वेङ्कट० अपाम सोमम्, अमृताः च अभूम, अगन्म च ज्योतिः, अविदाम ज्ञातवन्तः च देवान् । किम् इदानीम् अस्मान् कुर्यात् शत्रुः । किम् वा हिंसकः हे अमृत! मनुष्यस्य मम कृणवत् इति ॥ ३ ॥

शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः ।
सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥ ४ ॥

शम् । नः । भव । हृदे । आ । पीतः । इन्दो इति । पिताऽइव । सोम । सूनवे । सुऽशेवः ।
सखाऽइव । सख्ये । उरुऽशंस । धीरः । प्र । नः । आयुः । जीवसे । सोम । तारीः ॥ ४ ॥

वेङ्कट० पीतः त्वम् इन्दो! हृदयाय सुखं भावय । आङ्पूर्वोऽन्तर्णयर्थे । [1]पिता इव[1] सोम! पुत्राय सुसुखः, सखा इव च सख्ये, हे बहुकीर्ते![2] प्राज्ञः प्र वर्धय अस्माकं [3]जीवनाय च आयुः[3] ॥४॥

इमे मा पीता यशस उरुष्यवो रथं न गावः समनाह पर्वसु ।
ते मा रक्षन्तु विस्रसश्चरित्रादुत मा स्रामाद् यवयन्त्विन्दवः ॥ ५ ॥

इमे । मा । पीताः । यशसः । उरुष्यवः । रथम् । न । गावः । सम् । अनाह । पर्वऽसु ।
ते । मा । रक्षन्तु । विऽस्रसः । चरित्रात् । उत । मा । स्रामात् । यवयन्तु । इन्दवः ॥ ५ ॥

वेङ्कट० इमे माम् पीताः यशस्विनः रक्षाकामाः रथम् इव गोविकारभूता बध्राः सम् नह्यन्ति सन्धिषु । ते माम् रक्षन्तु विस्रस्तात् कर्मणः । पीतसोमो ह्यविस्रस्तं कर्म करोति । अपि च मां व्याधेः पृथक् कुर्वन्तु[4] इन्दवः ॥ ५ ॥

[5]इति षष्ठाष्टके चतुर्थाध्याये एकादशो वर्गः[5] ॥

अग्निं न मा मथितं सं दिदीपः प्र चक्षय कृणुहि वस्यसो नः ।
अथा हि ते मद आ सोम मन्ये रेवाँ इव प्र चरा पुष्टिमच्छ ॥ ६ ॥

---

१-१. एतेच वि[२]; एतेव अ[१]. २. °कीर्त्ये मूको. ३-३. जीवयायुः वि[२]; जीवय चायुः अ[१]. ४. कर्मसु मूको. ५-५. नास्ति मूको.

अ॒ग्निम् । न । मा॒ । म॒थि॒तम् । सम् । दि॒दी॒पः॒ । प्र । च॒क्ष॒य॒ । कृ॒णु॒हि । वस्य॑सः । नः॒ ।
अथ॑ । हि । ते॒ । मदे॑ । आ । सो॒म॒ । मन्ये॑ । रे॒वान्ऽइ॑व । प्र । च॒र॒ । पु॒ष्टिम् । अच्छ॑ ॥ ६ ॥

**वेङ्कट०** मथितम् अग्निम् इव माम् सम् दीपय च प्र चक्षय चक्षुषः सन्धुक्षणेन । कुरु च अस्मान् वसीयसः । सम्प्रति हे सोम! पानजनिते मदे स्तौमि त्वाम् । तथा सति धनवानिव आढ्यः अस्मासु प्र चारय पोषम् ॥ ६ ॥

इ॒षि॒रेण॑ ते॒ मन॑सा सु॒तस्य॑ भक्षी॒महि॒ पित्र्य॑स्येव रा॒यः ।
सोम॑ राज॒न् प्र ण॒ आयूं॑षि तारी॒रहा॑नीव॒ सूर्यो॒ वास॒राणि॑ ॥ ७ ॥

इ॒षि॒रेण॑ । ते॒ । मन॑सा । सु॒तस्य॑ । भ॒क्षी॒महि॑ । पित्र्य॑स्यऽइव । रा॒यः ।
सोम॑ । रा॒ज॒न् । प्र । नः॒ । आयूं॑षि । ता॒रीः॒ । अहा॑निऽइव । सूर्यः॑ । वा॒स॒राणि॑ ॥ ७ ॥

**वेङ्कट०** इच्छावता मनसा त्वां[1] सुतं वयम् भक्षीमहि पित्र्यमिव धनम् । सोम! राजन्! प्र वर्धय[2] अस्माकम् आयूंषि[3] अहानीव सूर्यः वासराणि । वासयन्ति मनुष्यान् इति वासराणि इति ॥७॥[4]

सोम॑ राजन् मृ॒ळया॑ नः स्व॒स्ति तव॑ स्मसि व्र॒त्या३॒स्तस्य॑ विद्धि ।
अल॑र्ति॒ दक्ष॑ उ॒त म॒न्युरि॑न्दो॒ मा नो॑ अ॒र्यो अ॑नुका॒मं परा॑ दाः ॥ ८ ॥

सोम॑ । रा॒ज॒न् । मृ॒ळय॑ । नः॒ । स्व॒स्ति । तव॑ । स्म॒सि॒ । व्र॒त्याः॑ । तस्य॑ । वि॒द्धि॒ ।
अल॑र्ति । दक्षः॑ । उ॒त । म॒न्युः । इ॒न्दो॒ इति॑ । मा । नः॒ । अ॒र्यः । अ॒नु॒ऽका॒मम् । परा॑ । दाः॒ ॥८॥

**वेङ्कट०** सोम! राजन्! सुखय अस्मान्! अविनाशेन। तव स्मः वयं व्रतपराः। तत् त्वं जानीहि। गच्छति वृद्धः शत्रुः इन्दो![5] अभिमन्ता च अस्मान् पापार्थम्। मा अस्मान् उभयविधस्य शत्रोः यथाकामम् [6]परा दाः[6] ॥ ८ ॥

त्वं हि न॑स्त॒न्वः॑ सोम गो॒पा गात्रे॑गात्रे निष॒सत्था॑ नृ॒चक्षाः॑ ।
यत् ते॑ व॒यं प्र॑मि॒नाम॑ व्र॒तानि॒ स नो॑ मृळ सुष॒खा दे॑व॒ वस्यः॑ ॥ ९ ॥

त्वम् । हि । नः॒ । त॒न्वः॑ । सो॒म॒ । गो॒पाः । गात्रे॑ऽगात्रे । नि॒ऽस॒सत्थ॑ । नृ॒ऽचक्षाः॑ ।
यत् । ते॒ । व॒यम् । प्र॒ऽमि॒नाम॑ । व्र॒तानि॑ । सः । नः॒ । मृ॒ळ॒ । सु॒ऽस॒खा । दे॒व॒ । वस्यः॑ ॥ ९ ॥

**वेङ्कट०** त्वम् हि नः अङ्गस्य सोम! गोपायिता सर्वेषु अङ्गेषु निषीदसि मनुष्याणां द्रष्टा । यत् ते वयम् प्रहिंस्मः[7] व्रतानि । तथापि सः त्वम् अस्मान् सुखय सुसखा भवन् देव! श्रेष्ठान्[8] इति ॥ ९ ॥

---

१. तव मूको. २. वर्धते मूको. ३. आयुषि मूको. ४ व्याख्यातेयमृग् या ( ४,७ ).
५. इन्द्रो मूको. ६-६. वरदा मूको ७. प्रहिंस्य मूको. ८. 'ष्ठान् अस्मान् मूको.

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥ १० ॥

ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् । हरिऽअश्व । पीतः ।
अयम् । यः । सोमः । नि । अधायि । अस्मे इति । तस्मै । इन्द्रम् । प्रऽतिरम् । एमि । आयुः ॥

वेङ्कट० ऋदूदरेण[1] ऋदूदरः मृदूदरः ( द्र० या ६,४ ) इति शस्तोदरवर्णो[2] हि मृदूदरः भवति । तेन अहम् सख्या सङ्गतो भवामि । यः सोमः पीतः माम् न हिंस्येत् [3]इन्द्र ! । अयम् यः[3] सोमः निहितः अस्मासु तस्मै सोमाय प्रवृद्धम् आयुः जठरे अपि अवस्थानम्[4] इन्द्रम् याचे ॥ १० ॥

[5]इति षष्ठाष्टके चतुर्थाध्याये द्वादशो वर्गः[5] ॥

अप त्या अस्थुरनिरा अमीवा निरत्रसन् तमिषीचीरभैषुः ।
आ सोमो अस्माँ अरुहद् विहाया अगन्म यत्र प्रतिरन्त आयुः ॥ ११ ॥

अप । त्याः । अस्थुः । अनिराः । अमीवाः । निः । अत्रसन् । तमिषीचीः । अभैषुः ।
आ । सोमः । अस्मान् । अरुहत् । विऽहायाः । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥ ११ ॥

वेङ्कट० अप तिष्ठन्तु अपगच्छन्तु ताः[6] अनिराः[7] प्रेरयितुमशक्याः अमीवाः । नितरां त्रस्यन्तु अमीवा बलमञ्चन्त्यो बिभ्यतु च । त्रासः कम्पहेतुः भयाद् अन्यः । आ अरुहत्[8] अस्मान् सोमः महान्, अगन्म तम् यस्मिन् सोमे वर्धयन्ति आयुः पुरुषाः ॥ ११ ॥

यो न इन्दुः पितरो हृत्सु पीतोऽमर्त्यो मर्त्याँ आविवेश ।
तस्मै सोमाय हविषा विधेम मृळीके अस्य सुमतौ स्याम ॥ १२ ॥

यः । नः । इन्दुः । पितरः । हृत्ऽसु । पीतः । अमर्त्यः । मर्त्यान् । आऽविवेश ।
तस्मै । सोमाय । हविषा । विधेम । मृळीके । अस्य । सुऽमतौ । स्याम ॥ १२ ॥

वेङ्कट० यः अस्माकम् इन्दुः हे पितरः! हृत्सु पीतः अमर्त्यः मर्त्यान् आविवेश तस्मै सोमाय हविषा परिचरेम । सुखे सोमस्य सुमतौ च वयम् स्याम ॥ १२ ॥

त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ ।
तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥ १३ ॥

---

१. नास्ति मूको. २. शास्तोदरवर्णो मूको. ३-३. इन्द्रादयः मूको. ४. अमवस्थानम् मूको.
५-५. नास्ति मूको. ६. ताम् मूको. ७. अग्निः आ वि[2]; अग्निरा अ[3]. ८. अरुहम् मूको.

त्वम् । सोम । पितृऽभिः । सम्ऽविदानः । अनु । द्यावापृथिवी इति । आ । ततन्थ ।
तस्मै । ते । इन्दो इति । हविषा । विधेम । वयम् । स्याम । पतयः । रयीणाम् ॥ १३ ॥

**वेङ्कट०** त्वम् सोम! पितृभिः सङ्गच्छमानः अनु आ ततन्थ द्यावापृथिव्यौ[1] । तस्मै ते इन्दो! हविषा **परिचरेम** । वयम् इति स्पष्टम् ॥ १३ ॥

त्रातारो देवा अधि वोचता नो मा नो निद्रा ईशत मोत जल्पिः ।
वयं सोमस्य विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥ १४ ॥

त्रातारः । देवाः । अधि । वोचत । नः । मा । नः । निऽद्रा । ईशत । मा । उत । जल्पिः ।
वयम् । सोमस्य । विश्वह । प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥ १४ ॥

**वेङ्कट०** हे त्रातारः देवाः! अस्माकम् अधिवचनं [2]कुरुत । मा अस्माकम्[2] निद्रा स्वप्नः[3] ईशिष्ट, मा च जल्पिः । वयम् सोमस्य सर्वदा प्रियाः सुपुत्राः गृहम् आभिमुख्येन वदेम । आवदनं गृहस्थानां पुत्रपौत्राणां धनेन उपच्छन्दनम् इत्यर्थः[4] ॥ १४ ॥

त्वं नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृचक्षाः ।
त्वं न इन्द ऊतिभिः सजोषाः पाहि पश्चातादुत वा पुरस्तात् ॥ १५ ॥

त्वम् । नः । सोम । विश्वतः । वयःऽधाः । त्वम् । स्वःऽवित् । आ । विश । नृऽचक्षाः ।
त्वम् । नः । इन्दो इति । ऊतिऽभिः । सऽजोषाः । पाहि । पश्चातात् । उत । वा । पुरस्तात् ॥

**वेङ्कट०** त्वम् अस्माकम् सोम! विश्वतः अन्नस्य दाता । त्वम् सर्ववित् आ विश अस्मान् मनुष्याणां द्रष्टा[5] । त्वम् च इन्दो![6] अस्मान् मरुद्भिः सङ्गतः रक्ष पश्चात् पुरस्तात् च[7] ॥१५॥

[8]इति षष्ठाष्टके चतुर्थाध्याये त्रयोदशो वर्गः[8] ॥

# अथ वालखिल्यम् ।[9]

## [ ४९ ( १ ) ]

प्रस्कण्वः काण्व ऋषिः । इन्द्रो देवता । प्रगाथः छन्दः ( =विषमा बृहती, समा सतोबृहती ) ।

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ १ ॥

---

१. स्पष्टम् मा द्यावा° वि[२]; धामद्यावा° अ[१]. २-२. °तम् अस्मा° मूको. ३. स्वप्नं मूको. ४. इति वि[१]. ५. दुष्टः मूको. ६. इन्द्र मूको. ७. नास्ति अ[१]. ८-८. नास्ति मूको. ९. वालखिल्य-सूक्तानि [ ४९-५९ ( ११ ) ] न सन्ति मूको.

अभि । प्र । वः । सुऽराधसम् । इन्द्रम् । अर्च । यथा । विदे ।
यः । जरितृऽभ्यः । मघऽवा । पुरुऽवसुः । सहस्रेणऽइव । शिक्षति ॥ १ ॥

शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥ २ ॥

शतानीकाऽइव । प्र । जिगाति । धृष्णुऽया । हन्ति । वृत्राणि । दाशुषे ।
गिरेःऽइव । प्र । रसाः । अस्य । पिन्विरे । दत्राणि । पुरुऽभोजसः ॥ २ ॥

आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः ।
आपो न वज्रिन्नन्वोक्यं१ सरः पृणन्ति शूर राधसे ॥ ३ ॥

आ । त्वा । सुतासः । इन्दवः । मदाः । ये । इन्द्र । गिर्वणः ।
आपः । न । वज्रिन् । अनु । ओक्यम् । सरः । पृणन्ति । शूर । राधसे ॥ ३ ॥

अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।
आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषत् ॥ ४ ॥

अनेहसम् । प्रऽतरणम् । विवक्षणम् । मध्वः । स्वादिष्ठम् । ईम् । पिब ।
आ । यथा । मन्दसानः । किरासि । नः । प्र । क्षुद्राऽइव । त्मना । धृषत् ॥ ४ ॥

आ नः स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः ।
यं ते स्वधावन्त्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयः ॥ ५ ॥

आ । नः । स्तोमम् । उप । द्रवत् । हियानः । अश्वः । सोतृऽभिः ।
यम् । ते । स्वधाऽवन् । स्वदयन्ति । धेनवः । इन्द्र । कण्वेषु । रातयः ॥ ५ ॥

इति षष्ठाष्टके चतुर्थाध्याये चतुर्दशो वर्गः ॥

उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम् ।
उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयः ॥ ६ ॥

उग्रम् । न । वीरम् । नमसा । उप । सेदिम । विऽभूतिम् । अक्षितऽवसुम् ।
उद्रीऽइव । वज्रिन् । अवतः । न । सिञ्चते । क्षरन्ति । इन्द्र । धीतयः ॥ ६ ॥

यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि ।
अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गहि ॥ ७ ॥

यत् । ह । नूनम् । यत् । वा । यज्ञे । यत् । वा । पृथिव्याम् । अधि ।
अतः । नः । यज्ञम् । आशुऽभिः । महेऽमते । उग्रः । उग्रेभिः । आ । गहि ॥ ७ ॥

अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः ।
येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशे ॥ ८ ॥

अजिरासः । हरयः । ये । ते । आशवः । वाताःऽइव । प्रऽसक्षिणः ।
येभिः । अपत्यम् । मनुषः । परिऽईयसे । येभिः । विश्वम् । स्वः । दृशे ॥ ८ ॥

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।
यथा प्रावो मघवन् मेध्यातिथिं यथा नीपातिथिं धने ॥ ९ ॥

एतावतः । ते । ईमहे । इन्द्र । सुम्नस्य । गोऽमतः ।
यथा । प्र । आवः । मघऽवन् । मेध्यऽअतिथिम् । यथा । नीपऽअतिथिम् । धने ॥ ९ ॥

यथा कण्वे मघवन् त्रसदस्यवि यथा पक्थे दशव्रजे ।
यथा गोशर्ये असनोर्ऋजिश्वनीन्द्र गोमद्धिरण्यवत् ॥ १० ॥

यथा । कण्वे । मघऽवन् । त्रसदस्यवि । यथा । पक्थे । दशऽव्रजे ।
यथा । गोऽशर्ये । असनोः । ऋजिश्वनि । इन्द्र । गोऽमत् । हिरण्यऽवत् ॥ १० ॥

इति षष्ठाष्टके चतुर्थाध्याये पञ्चदशो वर्गः ॥

## [ ५० (२) ]

पुष्टिगुः काण्व ऋषिः । इन्द्रो देवता । प्रगाथः छन्दः ( =विषमा बृहती, समा सतोबृहती ) ।

प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये ।
यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहते ॥ १ ॥

प्र । सु । श्रुतम् । सुऽराधसम् । अर्च । शक्रम् । अभिष्टये ।
यः । सुन्वते । स्तुवते । काम्यम् । वसु । सहस्रेणऽइव । मंहते ॥ १ ॥

शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य समिषो महीः ।
गिरिर्न भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषुः ॥ २ ॥

शतऽअनीकाः । हेतयः । अस्य । दुस्तराः । इन्द्रस्य । सम्ऽइषः । महीः ।
गिरिः । न । भुज्मा । मघवत्ऽसु । पिन्वते । यत् । ईम् । सुताः । अमन्दिषुः ॥ २ ॥

यदीं सुतास इन्दवोऽभि प्रियममन्दिषुः ।
आपो न धायि सवनं म आ वसो दुघा इवोप दाशुषे ॥ ३ ॥

यत् । ईम् । सुतासः । इन्दवः । अभि । प्रियम् । अमन्दिषुः ।
आपः । न । धायि । सवनम् । मे । आ । वसो इति । दुघाःऽइव । उप । दाशुषे ॥ ३ ॥

अनेहसं वो हवमानमूतये मध्वः क्षरन्ति धीतयः ।
आ त्वा वसो हवमानास इन्दव उप स्तोत्रेषु दधिरे ॥ ४ ॥

अनेहसम् । वः । हवमानम् । ऊतये । मध्वः । क्षरन्ति । धीतयः ।
आ । त्वा । वसो इति । हवमानासः । इन्दवः । उप । स्तोत्रेषु । दधिरे ॥ ४ ॥

आ नः सोमे स्वध्वर इयानो अत्यो न तोशते ।
यं ते स्वदावन्त्स्वदन्ति गूर्तयः पौरे छन्दयसे हवम् ॥ ५ ॥

आ । नः । सोमे । सुऽअध्वरे । इयानः । अत्यः । न । तोशते ।
यम् । ते । स्वदाऽवन् । स्वदन्ति । गूर्तयः । पौरे । छन्दयसे । हवम् ॥ ५ ॥

इति षष्ठाष्टके चतुर्थाध्याये षोडशो वर्गः ॥

प्र वीरमुग्रं विविचिं धनस्पृतं विभूतिं राधसो महः ।
उद्रीव वज्रिन्नवतो वसुत्वना सदा पीपेथ दाशुषे ॥ ६ ॥

प्र । वीरम् । उग्रम् । विविचिम् । धनऽस्पृतम् । विऽभूतिम् । राधसः । महः ।
उद्रीऽइव । वज्रिन् । अवतः । वसुऽत्वना । सदा । पीपेथ । दाशुषे ॥ ६ ॥

यद्ध नूनं परावति यद् वा पृथिव्यां दिवि ।
युजान इन्द्र हरिभिर्महेमत ऋष्व ऋष्वेभिरा गहि ॥ ७ ॥

यत् । ह । नूनम् । पराऽवति । यत् । वा । पृथिव्याम् । दिवि ।
युजानः । इन्द्र । हरिऽभिः । महेऽमते । ऋष्व । ऋष्वेभिः । आ । गहि ॥ ७ ॥

रथिरासो हरयो ये ते अस्रिध ओजो वातस्य पिप्रति ।
येभिर्नि दस्युं मनुषो निघोषयो येभिः स्वः परीयसे ॥ ८ ॥

रथिरासः । हरयः । ये । ते । अस्रिधः । ओजः । वातस्य । पिप्रति ।
येभिः । नि । दस्युम् । मनुषः । निऽघोषयः । येभिः । स्वरिति स्वः । परिऽईयसे ॥ ८ ॥

एतावतस्ते वसो विद्याम शूर नव्यसः ।
यथा प्राव एतशं कृत्व्ये धने यथा वशं दशव्रजे ॥ ९ ॥

एतावतः । ते । वसो इति । विद्याम । शूर । नव्यसः ।
यथा । प्र । आवः । एतशम् । कृत्व्ये । धने । यथा । वशम् । दशऽव्रजे ॥ ९ ॥

यथा कण्वे मघवन् मेधे अध्वरे दीर्घनीथे दमूनसि ।
यथा गोशर्ये असिषासो अद्रिवो मयि गोत्रं हरिश्रियम् ॥ १० ॥

यथा । कण्वे । मघऽवन् । मेधे । अध्वरे । दीर्घऽनीथे । दमूनसि ।
यथा । गोऽशर्ये । असिसासः । अद्रिऽवः । मयि । गोत्रम् । हरिऽश्रियम् ॥ १० ॥

इति षष्ठाष्टके चतुर्थाध्याये सप्तदशो वर्गः ॥

[५१ (१)]

श्रुष्टिगुः काण्व ऋषिः । इन्द्रो देवता । प्रगाथः छन्दः (=विषमा बृहत्यः, समाः सतोबृहत्यः)।

यथा मनौ सांवरणौ सोममिन्द्रापिबः सुतम् ।
नीपातिथौ मघवन् मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचा ॥ १ ॥

यथा । मनौ । साम्ऽवरणौ । सोमम् । इन्द्र । अपिबः । सुतम् ।
नीपऽअतिथौ । मघऽवन् । मेध्यऽअतिथौ । पुष्टिऽगौ । श्रुष्टिऽगौ । सचा ॥ १ ॥

पार्षद्वाणः प्रस्कण्वं समसादयच्छयानं जिव्रिमुद्धितम् ।
सहस्राण्यसिषासद् गवामृषिस्त्वोतो दस्यवे वृकः ॥ २ ॥

पार्षद्वाणः । प्रस्कण्वम् । सम् । असादयत् । शयानम् । जिव्रिम् । उत्ऽहितम् ।
सहस्राणि । असिसासत् । गवाम् । ऋषिः । त्वाऽऊतः । दस्यवे । वृकः ॥ २ ॥

य उक्थेभिर्न विन्धते चिकिद्य ऋषिचोदनः ।
इन्द्रं तमच्छा वद नव्यस्या मत्यरिष्यन्तं न भोजसे ॥ ३ ॥

यः । उक्थेभिः । न । विन्धते । चिकित् । यः । ऋषिऽचोदनः ।
इन्द्रम् । तम् । अच्छ । वद । नव्यस्या । मती । अरिष्यन्तम् । न । भोजसे ॥ ३ ॥

यस्मा अर्कं सप्तशीर्षाणमानृचुस्त्रिधातुमुत्तमे पदे ।
स त्वि१मा विश्वा भुवनानि चिक्रददादिज्जनिष्ट पौंस्यम् ॥ ४ ॥
यस्मै । अर्कम् । सप्तऽशीर्षाणम् । आनृचुः । त्रिऽधातुम् । उत्ऽतमे । पदे ।
सः । तु । इमा । विश्वा । भुवनानि । चिक्रदत् । आत् । इत् । जनिष्ट । पौंस्यम् ॥ ४ ॥

यो नो दाता वसूनामिन्द्रं तं हूमहे वयम् ।
विद्मा ह्यस्य सुमतिं नवीयसीं गमेम गोमति व्रजे ॥ ५ ॥
यः । नः । दाता । वसूनाम् । इन्द्रम् । तम् । हूमहे । वयम् ।
विद्म । हि । अस्य । सुऽमतिम् । नवीयसीम् । गमेम । गोऽमति । व्रजे ॥ ५ ॥

इति षष्ठाष्टके चतुर्थाध्याये अष्टादशो वर्गः ॥

यस्मै त्वं वसो दानाय शिक्षसि स रायस्पोषमश्नुते ।
तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥ ६ ॥
यस्मै । त्वम् । वसो इति । दानाय । शिक्षसि । सः । रायः । पोषम् । अश्नुते ।
तम् । त्वा । वयम् । मघऽवन् । इन्द्र । गिर्वणः । सुतऽवन्तः । हवामहे ॥ ६ ॥

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥ ७ ॥
कदा । चन । स्तरीः । असि । न । इन्द्र । सश्चसि । दाशुषे ।
उपऽउप । इत् । नु । मघऽवन् । भूयः । इत् । नु । ते । दानम् । देवस्य । पृच्यते ॥ ७ ॥

प्र यो ननक्षे अभ्योजसा क्रिविं वधैः शुष्णं निघोषयन् ।
यदेदस्तम्भीत् प्रथयन्नमूं दिवमादिज्जनिष्ट पार्थिवः ॥ ८ ॥
प्र । यः । ननक्षे । अभि । ओजसा । क्रिविम् । वधैः । शुष्णम् । निऽघोषयन् ।
यदा । इत् । अस्तम्भीत् । प्रथयन् । अमूम् । दिवम् । आत् । इत् । जनिष्ट । पार्थिवः ॥ ८ ॥

यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत् सो अज्यते रयिः ॥ ९ ॥
यस्य । अयम् । विश्वः । आर्यः । दासः । शेवधिऽपाः । अरिः ।
तिरः । चित् । अर्ये । रुशमे । पवीरवि । तुभ्य । इत् । सः । अज्यते । रयिः ॥ ९ ॥

तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे सुवानास इन्दवः ॥ १० ॥

तुरण्यवः । मधुऽमन्तम् । घृतऽश्चुतम् । विप्रासः । अर्कम् । आनृचुः ।
अस्मे इति । रयिः । पप्रथे । वृष्ण्यम् । शवः । अस्मे इति । सुत्रानासः । इन्दवः ॥ १० ॥

इति षष्ठाष्टके चतुर्थाध्याये एकोनविंशो वर्गः ॥

[ ५२ ( ४ ) ]

आयुः काण्व ऋषिः । इन्द्रो देवता । प्रगाथः छन्दः ( =विषमा बृहत्यः, समाः सतोबृहत्यः ) ।

यथा मनौ विवस्वति सोमं शक्रापिबः सुतम् ।
यथा त्रिते छन्द इन्द्र जुजोषस्यायौ मादयसे सचा ॥ १ ॥

यथा । मनौ । विवस्वति । सोमम् । शक्र । अपिबः । सुतम् ।
यथा । त्रिते । छन्दः । इन्द्र । जुजोषसि । आयौ । मादयसे । सचा ॥ १ ॥

पृषध्रे मेध्ये मातरिश्वनीन्द्र सुवाने अमन्दथाः ।
यथा सोमं दशशिप्रे दशोण्ये स्यूमरश्मावृजूनसि ॥ २ ॥

पृषध्रे । मेध्ये । मातरिश्वनि । इन्द्र । सुवाने । अमन्दथाः ।
यथा । सोमम् । दशऽशिप्रे । दशऽओण्ये । स्यूमऽरश्मौ । ऋजूनसि ॥ २ ॥

य उक्था केवला दधे यः सोमं धृषितापिबत् ।
यस्मै विष्णुस्त्रीणि पदा विचक्रम उप मित्रस्य धर्मभिः ॥ ३ ॥

यः । उक्था । केवला । दधे । यः । सोमम् । धृषिता । अपिबत् ।
यस्मै । विष्णुः । त्रीणि । पदा । विऽचक्रमे । उप । मित्रस्य । धर्मऽभिः ॥ ३ ॥

यस्य त्वमिन्द्र स्तोमेषु चाकनो वाजे वाजिञ्छतक्रतो ।
तं त्वा वयं सुदुघामिव गोदुहो जुहूमसि श्रवस्यवः ॥ ४ ॥

यस्य । त्वम् । इन्द्र । स्तोमेषु । चाकनः । वाजे । वाजिन् । शतक्रतो इति शतऽक्रतो ।
तम् । त्वा । वयम् । सुदुघाम्ऽइव । गोऽदुहः । जुहूमसि । श्रवस्यवः ॥ ४ ॥

यो नो दाता स नः पिता महाँ उग्र ईशानकृत् ।
अयामन्नुग्रो मघवा पुरूवसुर्गोरश्वस्य प्र दातु नः ॥ ५ ॥

यः । नः । दाता । सः । नः । पिता । महान् । उग्रः । ईशानऽकृत् ।
अयामन् । उग्रः । मघऽवा । पुरुऽवसुः । गोः । अश्वस्य । प्र । दातु । नः ॥ ५ ॥

इति षष्ठाष्टके चतुर्थाध्याये विंशो वर्गः ॥

यस्मै॒ त्वं व॑सो दा॒नाय॒ मंह॑से॒ स रा॒यस्पोष॑मिन्वति ।
व॒सू॒यवो॒ वसु॑पतिं श॒तक्र॑तुं॒ स्तोमै॒रिन्द्रं॑ हवामहे ॥ ६ ॥

यस्मै॑ । त्वम् । व॒सो॒ इति॑ । दा॒नाय॑ । मंह॑से । सः । रा॒यः । पोष॑म् । इ॒न्व॒ति॒ ।
व॒सु॒ऽयवः॑ । वसु॑ऽपतिम् । श॒तऽक्र॑तुम् । स्तोमैः॑ । इन्द्र॑म् । ह॒वा॒म॒हे॒ ॥ ६ ॥

क॒दा च॒न प्र यु॑च्छस्यु॒भे नि पा॑सि॒ जन्म॑नी ।
तुरी॑यादित्य॒ हव॑नं त इन्द्रि॒यमा त॑स्थाव॒मृतं॑ दि॒वि ॥ ७ ॥

क॒दा । च॒न । प्र । यु॒च्छ॒सि॒ । उ॒भे इति॑ । नि । पा॒सि॒ । जन्म॑नी॒ इति॑ ।
तुरी॑य । आ॒दि॒त्य॒ । हव॑नम् । ते॒ । इ॒न्द्रि॒यम् । आ । त॒स्थौ॒ । अ॒मृत॑म् । दि॒वि ॥ ७ ॥

यस्मै॒ त्वं म॑घवन्निन्द्र गिर्वणः॒ शिक्षो॒ शिक्ष॑सि दा॒शुषे॑ ।
अ॒स्माकं॒ गिर॑ उ॒त सु॑ष्टु॒तिं व॑सो कण्व॒वच्छृ॑णु॒धी हव॑म् ॥ ८ ॥

यस्मै॑ । त्वम् । म॒घ॒ऽव॒न् । इ॒न्द्र॒ । गि॒र्व॒णः॒ । शिक्षो॒ इति॑ । शिक्ष॑सि । दा॒शुषे॑ ।
अ॒स्माक॑म् । गिरः॑ । उ॒त । सु॒ऽस्तु॒तिम् । व॒सो॒ इति॑ । क॒ण्व॒ऽवत् । शृ॒णु॒धि॒ । हव॑म् ॥ ८ ॥

अस्ता॑वि॒ मन्म॑ पू॒र्व्यं ब्रह्मेन्द्रा॑य वोचत ।
पू॒र्वीॠ॒तस्य॑ बृह॒तीर॑नूषत स्तो॒तुर्मे॒धा अ॑सृक्षत ॥ ९ ॥

अस्ता॑वि । मन्म॑ । पू॒र्व्यम् । ब्रह्म॑ । इन्द्रा॑य । वो॒च॒त॒ ।
पू॒र्वीः । ऋ॒तस्य॑ । बृ॒ह॒तीः । अ॒नू॒ष॒त॒ । स्तो॒तुः । मे॒धाः । अ॒सृ॒क्ष॒त॒ ॥ ९ ॥

समिन्द्रो॒ रायो॑ बृह॒तीर॑धूनुत॒ सं क्षो॒णी समु॒ सूर्य॑म् ।
सं शु॒क्रासः॒ शुच॑यः॒ सं गवा॑शिरः॒ सोमा॒ इन्द्र॑ममन्दिषुः ॥ १० ॥

सम् । इन्द्रः॑ । रायः॑ । बृ॒ह॒तीः । अ॒धू॒नु॒त॒ । सम् । क्षो॒णी इति॑ । सम् । ऊँ॒ इति॑ । सूर्य॑म् ।
सम् । शु॒क्रासः॑ । शुच॑यः । सम् । गोऽआ॑शिरः । सोमाः॑ । इन्द्र॑म् । अ॒म॒न्दि॒षुः॒ ॥ १० ॥

इति षष्ठाष्टके चतुर्थाध्याये एकविंशो वर्गः ॥

## [ ५३ (५) ]

मेध्यः काण्व ऋषिः । इन्द्रो देवता । प्रगाथः छन्दः ( =विषमा बृहत्यः, समाः सतोबृहत्यः ) ।

उ॒प॒मं त्वा॑ म॒घोनां॒ ज्येष्ठं॑ च वृष॒भाणा॑म् ।
पू॒र्भित्त॑मं मघवन्निन्द्र गो॒विद॒मीशा॑नं रा॒य ई॑महे ॥ १ ॥

उपऽमम् । त्वा । मघोनाम् । ज्येष्ठम् । च । वृषभाणाम् ।
पुर्भित्ऽतमम् । मघऽवन् । इन्द्र । गोऽविदम् । ईशानम् । रायः । ईमहे ॥ १ ॥

य आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवेदिवे ।
तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहे ॥ २ ॥

यः । आयुम् । कुत्सम् । अतिथिऽग्वम् । अर्दयः । ववृधानः । दिवेऽदिवे ।
तम् । त्वा । वयम् । हरिऽअश्वम् । शतऽक्रतुम् । वाजऽयन्तः । हवामहे ॥ २ ॥

आ नो विश्वेषां रसं मध्वः सिञ्चन्त्वद्रयः ।
ये परावति सुन्विरे जनेष्वा ये अर्वावतीन्दवः ॥ ३ ॥

आ । नः । विश्वेषाम् । रसम् । मध्वः । सिञ्चन्तु । अद्रयः ।
ये । पराऽवति । सुन्विरे । जनेषु । आ । ये । अर्वाऽवति । इन्दवः ॥ ३ ॥

विश्वा द्वेषांसि जहि चाव चा कृधि विश्वे सन्वन्त्वा वसु ।
शीष्टेषु चित्ते मदिरासो अंशवो यत्रा सोमस्य तृम्पसि ॥ ४ ॥

विश्वा । द्वेषांसि । जहि । च । अव । च । आ । कृधि । विश्वे । सन्वन्तु । आ । वसु ।
शीष्टेषु । चित् । ते । मदिरासः । अंशवः । यत्र । सोमस्य । तृम्पसि ॥ ४ ॥

इति षष्ठाष्टके चतुर्थाध्याये द्वाविंशो वर्गः ॥

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥ ५ ॥

इन्द्र । नेदीयः । आ । इत् । इहि । मितऽमेधाभिः । ऊतिऽभिः ।
आ । शम्ऽतम । शम्ऽतमाभिः । अभिष्टिऽभिः । आ । सुऽआपे । स्वापिऽभिः ॥ ५ ॥

आजितुरं सत्पतिं विश्वचर्षणिं कृधि प्रजास्वाभगम् ।
प्र सू तिरा शचीभिर्ये त उक्थिनः क्रतुं पुनत आनुषक् ॥ ६ ॥

आजिऽतुरम् । सत्ऽपतिम् । विश्वऽचर्षणिम् । कृधि । प्रऽजासु । आऽभगम् ।
प्र । सु । तिर । शचीभिः । ये । ते । उक्थिनः । क्रतुम् । पुनते । आनुषक् ॥ ६ ॥

यस्ते साधिष्ठोऽवसे ते स्याम भरेषु ते ।
वयं होत्राभिरुत देवहूतिभिः ससवांसो मनामहे ॥ ७ ॥

यः । ते । साधिष्ठः । अवसे । ते । स्याम । भरेषु । ते ।
वयम् । होत्राभिः । उत । देवहूतिऽभिः । ससऽवांसः । मनामहे ॥ ७ ॥

अहं हि ते हरिवो ब्रह्म वाजयुराजिं यामि सदोतिभिः ।
त्वामिदेव तममे समश्वयुर्गव्युरग्रे मथीनाम् ॥ ८ ॥

अहम् । हि । ते । हरिऽवः । ब्रह्म । वाजऽयुः । आजिम् । यामि । सदा । ऊतिऽभिः ।
त्वाम् । इत् । एव । तम् । अमे । सम् । अश्वऽयुः । गव्युः । अग्रे । मथीनाम् ॥ ८ ॥

इति षष्ठाष्टके चतुर्थाध्याये त्रयोविंशो वर्गः ॥

[ ५४ (६) ]

मातरिश्वा काण्व ऋषिः । इन्द्रो देवता, तृतीयाचतुर्थ्योः विश्वे देवाः । प्रगाथः छन्दः
( =विषमा बृहत्यः, समाः सतोबृहत्यः ) ।

एतत् त इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः ।
ते स्तोभन्त ऊर्जमावन् घृतश्चुतं पौरासो नक्षन् धीतिभिः ॥ १ ॥

एतत् । ते । इन्द्र । वीर्यम् । गीःऽभिः । गृणन्ति । कारवः ।
ते । स्तोभन्तः । ऊर्जम् । आवन् । घृतऽश्चुतम् । पौरासः । नक्षन् । धीतिऽभिः ॥ १ ॥

नक्षन्त इन्द्रमवसे सुकृत्यया येषां सुतेषु मन्दसे ।
यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्व ॥ २ ॥

नक्षन्ते । इन्द्रम् । अवसे । सुऽकृत्यया । येषाम् । सुतेषु । मन्दसे ।
यथा । सम्ऽवर्ते । अमदः । यथा । कृशे । एव । अस्मे इति । इन्द्र । मत्स्व ॥ २ ॥

आ नो विश्वे सजोषसो देवासो गन्तनोप नः ।
वसवो रुद्रा अवसे न आ गमञ्छृण्वन्तु मरुतो हवम् ॥ ३ ॥

आ । नः । विश्वे । सऽजोषसः । देवासः । गन्तन । उप । नः ।
वसवः । रुद्राः । अवसे । नः । आ । गमन् । शृण्वन्तु । मरुतः । हवम् ॥ ३ ॥

पूषा विष्णुर्हवनं मे सरस्वत्यवन्तु सप्त सिन्धवः ।
आपो वातः पर्वतासो वनस्पतिः शृणोतु पृथिवी हवम् ॥ ४ ॥

पूषा । विष्णुः । हवनम् । मे । सरस्वती । अवन्तु । सप्त । सिन्धवः ।
आपः । वातः । पर्वतासः । वनस्पतिः । शृणोतु । पृथिवी । हवम् ॥ ४ ॥

इति षष्ठाष्टके चतुर्थाध्याये चतुर्विंशो वर्गः ॥

यदिन्द्र राधो अस्ति ते माघोनं मघवत्तम ।
तेन नो बोधि सधमाद्यो वृधे भगो दानाय वृत्रहन् ॥ ५ ॥

यत् । इन्द्र । राधः । अस्ति । ते । माघोनम् । मघवत्ऽतम ।
तेन । नः । बोधि । सधऽमाद्यः । वृधे । भगः । दानाय । वृत्रऽहन् ॥ ५ ॥

आजिपते नृपते त्वमिद्धि नो वाज आ वक्षि सुक्रतो ।
वीती होत्राभिरुत देववीतिभिः ससवांसो वि शृण्विरे ॥ ६ ॥

आजिऽपते । नृऽपते । त्वम् । इत् । हि । नः । वाजे । आ । वक्षि । सुक्रतो इति सुऽक्रतो ।
वीती । होत्राभिः । उत । देववीतिऽभिः । ससऽवांसः । वि । शृण्विरे ॥ ६ ॥

सन्ति ह्यर्य आशिष इन्द्र आयुर्जनानाम् ।
अस्मान् नक्षस्व मघवन्नुपावसे धुक्षस्व पिप्युषीमिषम् ॥ ७ ॥

सन्ति । हि । अर्ये । आऽशिषः । इन्द्रे । आयुः । जनानाम् ।
अस्मान् । नक्षस्व । मघऽवन् । उप । अवसे । धुक्षस्व । पिप्युषीम् । इषम् ॥ ७ ॥

वयं त इन्द्र स्तोमेभिर्विधेम त्वमस्माकं शतक्रतो ।
महि स्थूरं शशयं राधो अह्रयं प्रस्कण्वाय नि तोशय ॥ ८ ॥

वयम् । ते । इन्द्र । स्तोमेभिः । विधेम । त्वम् । अस्माकम् । शतक्रतो इति शतऽक्रतो ।
महि । स्थुरम् । शशयम् । राधः । अह्रयम् । प्रस्कण्वाय । नि । तोशय ॥ ८ ॥

इति षष्ठाष्टके चतुर्थाध्याये पञ्चविंशो वर्गः ॥

[ ५५ (७) ]

कृशः काण्व ऋषिः । प्रस्कण्वदानं देवता । गायत्री छन्दः, तृतीयापञ्चम्यावनुष्टुभौ

भूरीदिन्द्रस्य वीर्यं१ व्यख्यमभ्यायति । राधस्ते दस्यवे वृक ॥ १ ॥

भूरि । इत् । इन्द्रस्य । वीर्यम् । वि । अख्यम् । अभि । आ । अयति । राधः । ते । दस्यवे । वृक ॥

शतं श्वेतास उक्षणो दिवि तारो न रोचन्ते । मह्ना दिवं न तस्तभुः ॥ २ ॥

शतम् । श्वेतासः । उक्षणः । दिवि । तारः । न । रोचन्ते । मह्ना । दिवम् । न । तस्तभुः ॥ २ ॥

शतं वेणूञ्छतं शुनः शतं चर्माणि म्लातानि ।
शतं मे बल्बजस्तुका अरुषीणां चतुःशतम् ॥ ३ ॥

शतम् । वेणून् । शतम् । शुनः । शतम् । चर्माणि । म्लातानि ।
शतम् । मे । बल्बजऽस्तुकाः । अरुषीणाम् । चतुःऽशतम् ॥ ३ ॥

सुदेवाः स्थ काण्वायना वयोवयो विचरन्तः । अश्वासो न चङ्क्रमत ॥ ४ ॥

सुऽदेवाः । स्थ । काण्वायनाः । वयःऽवयः । विऽचरन्तः । अश्वासः । न । चङ्क्रमत ॥ ४ ॥

आदित् साप्तस्य चर्किरन्नानूनस्य महि श्रवः ।
श्यावीरतिध्वसन् पथश्चक्षुषा चन संनशे ॥ ५ ॥

आत् । इत् । साप्तस्य । चर्किरन् । न । अनूनस्य । महि । श्रवः ।
श्यावीः । अतिऽध्वसन् । पथः । चक्षुषा । चन । सम्ऽनशे ॥ ५ ॥

इति षष्ठाष्टके चतुर्थाध्याये षड्विंशो वर्गः ॥

[५६(८)]

पृषध्रः काण्व ऋषिः । इन्द्रो देवता, पञ्चम्या अग्निसूर्यौ । गायत्री छन्दः, पञ्चमी पङ्क्तिः ।

प्रति ते दस्यवे वृक राधो अदर्श्यह्रयम् । द्यौर्न प्रथिना शवः ॥ १ ॥

प्रति । ते । दस्यवे । वृक । राधः । अदर्शि । अह्रयम् । द्यौः । न । प्रथिना । शवः ॥ १ ॥

दश मह्यं पौतक्रतः सहस्रा दस्यवे वृकः । नित्याद् रायो अमंहत ॥ २ ॥

दश । मह्यम् । पौतऽक्रतः । सहस्रा । दस्यवे । वृकः । नित्यात् । रायः । अमंहत ॥ २ ॥

शतं मे गर्दभानां शतमूर्णावतीनाम् । शतं दासाँ अति स्रजः ॥ ३ ॥

शतम् । मे । गर्दभानाम् । शतम् । ऊर्णाऽवतीनाम् । शतम् । दासान् । अति । स्रजः ॥ ३ ॥

तत्रो अपि प्राणीयत पूतक्रतायै व्यक्ता । अश्वानामिन्न यूथ्याम् ॥ ४ ॥

तत्रो इति । अपि । प्र । अनीयत । पूतऽक्रतायै । विऽअक्ता । अश्वानाम् । इत् । न । यूथ्याम् ॥४॥

अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः ।
अग्निः शुक्रेण शोचिषा बृहत् सूरो अरोचत दिवि सूर्यो अरोचत ॥ ५ ॥

अचेति । अग्निः । चिकितुः । हव्यऽवाट् । सः । सुमत्ऽरथः ।
अग्निः । शुक्रेण । शोचिषा । बृहत् । सूरः । अरोचत । दिवि । सूर्यः । अरोचत ॥ ५ ॥

इति षष्ठाष्टके चतुर्थाध्याये सप्तविंशो वर्गः ॥

[ ५७ (९) ]

मेध्यः काण्व ऋषिः। अश्विनौ देवता। त्रिष्टुप् छन्दः।

युवं देवा क्रतुना पूर्व्येण युक्ता रथेन तविषं यजत्रा।
आगच्छतं नासत्या शचीभिरिदं तृतीयं सवनं पिबाथः॥ १॥

युवम्। देवा। क्रतुना। पूर्व्येण। युक्ता। रथेन। तविषम्। यजत्रा।
आ। अगच्छतम्। नासत्या। शचीभिः। इदम्। तृतीयम्। सवनम्। पिबाथः॥ १॥

युवां देवास्त्रय एकादशासः सत्याः सत्यस्य ददृशे पुरस्तात्।
अस्माकं यज्ञं सवनं जुषाणा पातं सोममश्विना दीद्यग्नी॥ २॥

युवाम्। देवाः। त्रयः। एकादशासः। सत्याः। सत्यस्य। ददृशे। पुरस्तात्।
अस्माकम्। यज्ञम्। सवनम्। जुषाणा। पातम्। सोमम्। अश्विना। दीद्यग्नी इति दीदिऽअग्नी॥

पनाय्यं तदश्विना कृतं वां वृषभो दिवो रजसः पृथिव्याः।
सहस्रं शंसा उत ये गविष्टौ सर्वाँ इत् ताँ उप याता पिबध्यै॥ ३॥

पनाय्यम्। तत्। अश्विना। कृतम्। वाम्। वृषभः। दिवः। रजसः। पृथिव्याः।
सहस्रम्। शंसाः। उत। ये। गोऽइष्टौ। सर्वान्। इत्। तान्। उप। यात। पिबध्यै॥ ३॥

अयं वां भागो निहितो यजत्रेमा गिरो नासत्योप यातम्।
पिबतं सोमं मधुमन्तमस्मे प्र दाश्वांसमवतं शचीभिः॥ ४॥

अयम्। वाम्। भागः। निऽहितः। यजत्रा। इमाः। गिरः। नासत्या। उप। यातम्।
पिबतम्। सोमम्। मधुऽमन्तम्। अस्मे इति। प्र। दाश्वांसम्। अवतम्। शचीभिः॥ ४॥

इति षष्ठाष्टके चतुर्थाध्याये अष्टाविंशो वर्गः॥

[ ५८ (१०) ]

मेध्यः काण्व ऋषिः। विश्वे देवा देवता, प्रथमाया ऋत्विजो वा। त्रिष्टुप् छन्दः।

यमृत्विजो बहुधा कल्पयन्तः सचेतसो यज्ञमिमं वहन्ति।
यो अनूचानो ब्राह्मणो युक्त आसीत् का स्वित् तत्र यजमानस्य संवित्॥ १॥

यम् । ऋत्विजः । बहुधा । कल्पयन्तः । सऽचेतसः । यज्ञम् । इमम् । वहन्ति ।
यः । अनूचानः । ब्राह्मणः । युक्तः । आसीत् । का । स्वित् । तत्र । यजमानस्य । सम्ऽवित् ॥

एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनु प्रभूतः ।
एकैवोषाः सर्वमिदं वि भात्येकं वा इदं वि बभूव सर्वम् ॥ २ ॥

एकः । एव । अग्निः । बहुधा । सम्ऽइद्धः । एकः । सूर्यः । विश्वम् । अनु । प्रऽभूतः ।
एका । एव । उषाः । सर्वम् । इदम् । वि । भाति । एकम् । वै । इदम् । वि । बभूव । सर्वम् ॥२॥

ज्योतिष्मन्तं केतुमन्तं त्रिचक्रं सुखं रथं सुषदं भूरिवारम् ।
चित्रामघा यस्य योगेऽधिजज्ञे(?)[1] तं वां हुवे अतिरिक्तं पिबध्यै ॥ ३ ॥

ज्योतिष्मन्तम् । केतुऽमन्तम् । त्रिऽचक्रम् । सुऽखम् । रथम् । सुऽसदम् । भूरिऽवारम् ।
चित्रऽमघा । यस्य । योगे । अधिऽजज्ञे(?)[1] । तम् । वाम् । हुवे । अतिऽरिक्तम्[2] । पिबध्यै ॥ ३ ॥

इति षष्ठाष्टके चतुर्थाध्याये एकोनत्रिंशो वर्गः ॥

[ ५९ ( ११ ) ]

सुपर्णः काण्व ऋषिः । इन्द्रावरुणौ देवता । जगती छन्दः ।

इमानि वां भागधेयानि सिस्रत इन्द्रावरुणा प्र महे सुतेषु वाम् ।
यज्ञेयज्ञे ह सवना भुरण्यथो यत् सुन्वते यजमानाय शिक्षथः ॥ १ ॥

इमानि । वाम् । भागऽधेयानि । सिस्रते । इन्द्रावरुणा । प्र । महे । सुतेषु । वाम् ।
यज्ञेऽयज्ञे । ह । सवना । भुरण्यथः । यत् । सुन्वते । यजमानाय । शिक्षथः ॥ १ ॥

निष्षिध्वरीरोषधीराप आस्तामिन्द्रावरुणा महिमानमाशत ।
या सिस्रतू रजसः पारे अध्वनो ययोः शत्रुर्नकिरादेव ओहते ॥ २ ॥

निःऽसिध्वरीः । ओषधीः । आपः । आस्ताम् । इन्द्रावरुणा । महिमानम् । आशत ।
या । सिस्रतुः । रजसः । पारे । अध्वनः । ययोः । शत्रुः । नकिः । अदेवः । ओहते ॥ २ ॥

---

१. यद्योगीयतिङ्स्वरस्य सावसरत्वात् °जज्ञे इति सुशोधम् । २. अति । रिक्तम् इत्युपलब्धः पाठः प्रमाददुष्टः द्र.

सत्यं तदिन्द्रावरुणा कृशस्य वां मध्व ऊर्मिं दुहते सप्त वाणीः ।
ताभिर्दाश्वांसमवतं शुभस्पती यो वामदब्धो अभि पाति चित्तिभिः ॥ ३ ॥

सत्यम् । तत् । इन्द्रावरुणा । कृशस्य । वाम् । मध्वः । ऊर्मिम् । दुहते । सप्त । वाणीः ।
ताभिः । दाश्वांसम् । अवतम् । शुभः । पती इति । यः । वाम् । अदब्धः । अभि । पाति । चित्तिऽभिः ॥

घृतप्रुषः सौम्या जीरदानवः सप्त स्वसारः सदन ऋतस्य ।
या ह वामिन्द्रावरुणा घृतश्चुतस्ताभिर्धत्तं यजमानाय शिक्षतम् ॥ ४ ॥

घृतऽप्रुषः । सौम्याः । जीरऽदानवः । सप्त । स्वसारः । सदने । ऋतस्य ।
याः । ह । वाम् । इन्द्रावरुणा । घृतऽश्चुतः । ताभिः । धत्तम् । यजमानाय । शिक्षतम् ॥ ४ ॥

इति षष्ठाष्टके चतुर्थाध्याये त्रिंशो वर्गः ॥

अवोचाम महते सौभगाय सत्यं त्वेषाभ्यां महिमानमिन्द्रियम् ।
अस्मान्त्स्विन्द्रावरुणा घृतश्चुतस्त्रिभिः साप्तेभिरवतं शुभस्पती ॥ ५ ॥

अवोचाम । महते । सौभगाय । सत्यम् । त्वेषाभ्याम् । महिमानम् । इन्द्रियम् ।
अस्मान् । सु । इन्द्रावरुणा । घृतऽश्चुतः । त्रिऽभिः । साप्तेभिः । अवतम् । शुभः । पती इति ॥

इन्द्रावरुणा यदृषिभ्यो मनीषां वाचो मतिं श्रुतमदत्तमग्रे ।
यानि स्थानान्यसृजन्त धीरा यज्ञं तन्वानास्तपसाभ्यपश्यम् ॥ ६ ॥

इन्द्रावरुणा । यत् । ऋषिऽभ्यः । मनीषाम् । वाचः । मतिम् । श्रुतम् । अदत्तम् । अग्रे ।
यानि । स्थानानि । असृजन्त । धीराः । यज्ञम् । तन्वानाः । तपसा । अभि । अपश्यम ॥ ६ ॥

इन्द्रावरुणा सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम् ।
प्रजां पुष्टिं [1]भूतिमस्मासु धत्तं दीर्घायुत्वाय प्र तिरतं न आयुः ॥ ७ ॥

इन्द्रावरुणा । सौमनसम् । अदृप्तम् । रायः । पोषम् । यजमानेषु । धत्तम् ।
प्रऽजाम् । पुष्टिम् । भूतिम्(?)[1] । अस्मासु । धत्तम् । दीर्घायुऽत्वाय । प्र । तिरतम् । नः । आयुः ॥७॥

इति षष्ठाष्टके चतुर्थाध्याये एकत्रिंशो वर्गः ॥

इति वालखिल्यं समाप्तम् ॥

---

१. एवमुपलब्धस्य पाठस्य भूति° इति शोधः सुवेचः; सपा. खि १,६,७ रयिम् इति पाभे.

[ ६० ]

[1]भर्गः प्रागाथ ऋषिः । अग्निर्देवता । प्रगाथश्छन्दः ( =विषमा बृहत्यः, समाः सतोबृहत्यः )[1] ।

अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १ ॥

अग्ने । आ । याहि । अग्निऽभिः । होतारम् । त्वा । वृणीमहे ।
आ । त्वाम् । अनक्तु । प्रऽयता । हविष्मती । यजिष्ठम् । बर्हिः । आऽसदे ॥ १ ॥

वेङ्कट० प्रागाथः । अग्ने! आ गच्छ अग्निभिः अन्यैः सहायभूतैः सह । होतारम् त्वाम् वृणीमहे । आभिमुख्येन त्वाम् अनक्तु सिञ्चताम् अध्वर्योर्बाहुभ्याम् प्रयता हविष्मती स्रुग्[2] यष्टृतमम्, बर्हिषि[3] या स्रुग् आसाद्यते ॥ १ ॥

अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे ।
ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ २ ॥

अच्छ । हि । त्वा । सहसः । सूनो इति । अङ्गिरः । स्रुचः । चरन्ति । अध्वरे ।
ऊर्जः । नपातम् । घृतऽकेशम् । ईमहे । अग्निम् । यज्ञेषु । पूर्व्यम् ॥ २ ॥

वेङ्कट० अच्छ चरन्ति हि त्वा हे सहसः सूनो! अङ्गिरसामेक! स्रुचः यज्ञे । अन्नस्य पुत्रं [4]रक्षकं वा[4] ज्वालाकेशम् याचामहे अभिलषितम् अग्निम् यज्ञेषु मुख्यम् ॥ २ ॥

अग्ने कविर्वेधा असि होता पावक यक्ष्यः ।
मन्द्रो यजिष्ठो अध्वरेष्वीड्यो विप्रेभिः शुक्र मन्मभिः ॥ ३ ॥

अग्ने । कविः । वेधाः । असि । होता । पावक । यक्ष्यः ।
मन्द्रः । यजिष्ठः । अध्वरेषु । ईड्यः । विप्रेभिः । शुक्र । मन्मऽभिः ॥ ३ ॥

वेङ्कट० अग्ने! कविः विधाता भवसि होता हे शोधक! यष्टव्यः मोदनः यष्टृतमः यज्ञेषु स्तोतव्यः विप्रैः हे शुक्र![5] दीप्त! स्तुतिभिः ॥ ३ ॥

अद्रोघमा वहोशतो यविष्ठ्य देवाँ अजस्र वीतये ।
अभि प्रयांसि सुधिता वसो गहि मन्दस्व धीतिभिर्हितः ॥ ४ ॥

---

१-१. नास्ति मूको. २. स्रुग् मूको. ३. बर्हिषी मूको. ४-४. रक्ष मूको. ५. शुरक मूको.

अद्रोघम् । आ । वह । उशतः । यविष्ठ्य । देवान् । अजस्र । वीतये ।
अभि । प्रयांसि । सुऽधिता । आ । वसो इति । गहि । मन्दस्व । धीतिऽभिः । हितः ॥ ४ ॥

**वेङ्कट०** अद्रोघम् मां प्रति आ वह कामयमानान् युवतम! देवान् अनवरतं[1] दीप्यमान! हविषो भक्षणाय। अभि आ गच्छ सुनिहितानि हवींषि वासयितः!। [2]मन्दस्व कर्मभिः[2] दमे निहितः[3] ॥ ४ ॥

त्वमित् सप्रथा अस्यग्ने त्रातर्ऋतस्कविः ।
त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ ५ ॥

त्वम् । इत् । सऽप्रथाः । असि । अग्ने । त्रातः । ऋतः । कविः ।
त्वाम् । विप्रासः । समऽइधान । दीदिऽवः । आ । विवासन्ति । वेधसः ॥ ५ ॥

**वेङ्कट०** त्वम् एव सर्वतः पृथुतमः भवसि अग्ने! रक्षितः! सत्यभूतः क्रान्तप्रज्ञः। त्वाम् मेधाविनः हे समिध्यमान! दीप्त![4] परिचरन्ति विधातारः[5] कर्मणाम् ॥ ५ ॥

[6]इति षष्ठाष्टके चतुर्थाध्याये द्वात्रिंशो वर्गः[6] ॥

शोचा शोचिष्ठ दीदिहि विशे मयो रास्व स्तोत्रे महाँ असि ।
देवानां शर्मन् मम सन्तु सूरयः शत्रूषाहः स्वग्नयः ॥ ६ ॥

शोच । शोचिष्ठ । दीदिहि । विशे । मयः । रास्व । स्तोत्रे । महान् । असि ।
देवानाम् । शर्मन् । मम । सन्तु । सूरयः । शत्रुऽसहः । सुऽअग्नयः ॥ ६ ॥

**वेङ्कट०** शोच हे अत्यन्तं शोचितः! दीपय च। प्रजायै सुखं देहि धनं च स्तोत्रे। महान् त्वम् असि। देवैः प्रत्ते सुखे मम भवन्तु स्तोतारः शत्रूणामभिभवितारः शोभनाग्निकाः ॥ ६ ॥

यथा चिद् वृद्धमतसमग्ने संजूर्वसि क्षमि ।
एवा दह मित्रमहो यो अस्मध्रुग् दुर्मन्मा कश्च वेनति ॥ ७ ॥

यथा । चित् । वृद्धम् । अतसम् । अग्ने । समऽजूर्वसि । क्षमि ।
एव । दह । मित्रऽमहः । यः । अस्मऽध्रुक् । दुःऽमन्मा । कः । च । वेनति ॥ ७ ॥

**वेङ्कट०** यथा प्रवृद्धम् [7]अतसम् वृक्षं[7] शुष्कम् अग्ने! संजूर्वसि। जूर्वतिर्हिंसाकर्मा। सन्दहसि पृथिव्यां

---

१. अनदतरं मूको. २-२. मनुस्व चर्मभिः मूको. ३. निहितम् मूको. ४. दीप्ति मूको. ५. °तारम् मूको. ६-६ नास्ति मूको. ७-७. अतस वृक्ष मूको.

वर्तमानम्। एवम् दह हे मित्रपूजयितः!। यः अस्माकं द्रोग्धा[1] दुर्बुद्धिः कश्चित् कामयते द्रोग्धुम् अस्मान् इति ॥ ७ ॥

मा नो मर्ताय रिपवे रक्षस्विने माघशंसाय रीरधः।
अस्रेधद्भिस्तरणिभिर्यविष्ठ्य शिवेभिः पाहि पायुभिः ॥ ८ ॥

मा। नः। मर्ताय। रिपवे। रक्षस्विने। मा। अघऽशंसाय। रीरधः।
अस्रेधत्ऽभिः। तरणिऽभिः। यविष्ठ्य। शिवेभिः। पाहि। पायुऽभिः ॥ ८ ॥

वेङ्कट० मा अस्मान् मनुष्याय हिंसित्रे बलवते मा च स्तेनाय वशं नय। [2]अक्षीणैः तारकैः[2] युवतम! कल्याणैः पाहि पालनैः ॥ ८ ॥

पाहि नो अग्न एकया पाह्युत द्वितीयया।
पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ ९ ॥

पाहि। नः। अग्ने। एकया। पाहि। उत। द्वितीयया।
पाहि। गीःऽभिः। तिसृऽभिः। ऊर्जाम्। पते। पाहि। चतसृऽभिः। वसो इति ॥ ९ ॥

वेङ्कट० अस्मान् अग्ने! एकया गिरा ऋचा, पाहि उत द्वितीयया। पाहि गीर्भिः तिसृभिः च अन्नानां पते![3]। पाहि चतसृभिः च वासयितः! ॥ ९ ॥

पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव।
त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥ १० ॥

पाहि। विश्वस्मात्। रक्षसः। अराव्णः। प्र। स्म। वाजेषु। नः। अव।
त्वाम्। इत्। हि। नेदिष्ठम्। देवऽतातये। आपिम्। नक्षामहे। वृधे ॥ १० ॥

वेङ्कट० पाहि विश्वस्मात् रक्षसः अदातुः। प्र रक्ष अस्मान् सङ्ग्रामेषु। त्वाम् एव अभ्यासन्नतमम् यज्ञाय बन्धुम् वयम् नक्षामहे व्याप्नुमः वृद्ध्यर्थम् ॥ १० ॥

[4]इति षष्ठाष्टके चतुर्थाध्याये त्रयस्त्रिंशो वर्गः[4] ॥

आ नो अग्ने वयोवृधं रयिं पावक शंस्यम्।
रास्वा च न उपमाते पुरुस्पृहं सुनीती स्वयशस्तरम् ॥ ११ ॥

---

१. द्रोग्धारम् मूको. २-२. उक्षिणैस्तावकैः मूको. ३. पतये मूको. ४-४. नास्ति मूको.

आ । नः । अग्ने । वयःऽवृधम् । रयिम् । पावक । शंस्यम् ।
रास्व । च । नः । उपऽमाते । पुरुऽस्पृहम् । सुऽनीती । स्वयशःऽतरम् ॥ ११ ॥

वेङ्कट० आ हर अस्मदर्थम् अग्ने! अन्नस्य वर्धयितारम् रयिम् पावक! शंसनीयम् । देहि च अस्मभ्यं हे उपमाते!। धनं यः समीपे करोति स तथोक्तः । बहुभिः स्पृहणीयम् शोभनेन प्रणयनेन अत्यन्तम् स्वभूतकीर्ति ॥ ११ ॥

येन वंसाम पृतनासु शर्धतस्तरन्तो अर्य आदिशः ।
स त्वं नो वर्ध प्रयसा शचीवसो जिन्वा धियो वसुविदः ॥ १२ ॥

येन । वंसाम । पृतनासु । शर्धतः । तरन्तः । अर्यः । आऽदिशः ।
सः । त्वम् । नः । वर्ध । प्रयसा । शचीवसो इति शचीऽवसो । जिन्व । धियः । वसुऽविदः ॥

वेङ्कट० येन हिंस्याम सङ्ग्रामेषु वेगं कुर्वतः तरन्तः '[1]शत्रून् आह्वयमानाः[1]', तं रयिं देहि । सः त्वम् अस्मान् वर्धय च अन्नेन हे प्रज्ञया वासयितः! कर्मधन! वा, प्रीणय कर्माणि धनस्य लम्भकानि ॥ १२ ॥

शिशानो वृषभो यथाग्निः शृङ्गे दविध्वत् ।
तिग्मा अस्य हनवो न प्रतिधृषे सुजम्भः सहसो यहुः ॥ १३ ॥

शिशानः । वृषभः । यथा । अग्निः । शृङ्गे इति । दविध्वत् ।
तिग्माः । अस्य । हनवः । न । प्रतिऽधृषे । सुऽजम्भः । सहसः । यहुः ॥ १३ ॥

वेङ्कट० तीक्ष्णीकुर्वन् वृषभः इव अग्निः शृङ्गे ज्वालाशरीरं[2] धून्वन् । तीक्ष्णाः अस्य हनवः हनुसदृशा रश्मयः न[3] प्रति धर्षितुं शक्याः । सुदंष्ट्रः[4] सहसः पुत्रः[5] ॥ १३ ॥

नहि ते अग्ने वृषभ प्रतिधृषे जम्भासो यद्वितिष्ठसे ।
स त्वं नो होतः सुहुतं हविष्कृधि वंस्वा नो वार्या पुरु ॥ १४ ॥

नहि । ते । अग्ने । वृषभ । प्रतिऽधृषे । जम्भासः । यत् । विऽतिष्ठसे ।
सः । त्वम् । नः । होतरिति । सुऽहुतम् । हविः । कृधि । वंस्व । नः । वार्या । पुरु ॥ १४ ॥

वेङ्कट० नहि ते अग्ने! वृषभ! प्रतिधर्षितुं शक्यन्ते ज्वालाः, यथा दावभूतो विविधं गच्छसि । सः त्वम् अस्माकम् होतः! सुहुतम् हविः कुरु । वंस्व[6] अस्मभ्यं धनानि बहूनि ॥ १४ ॥

---

१-१. शत्रूणां ह्वय॰ मूको. २. ज्वालाः शरीरं मूको. ३. त्रुटितं वि[1]; नास्ति अ[1]. ४. सुदंष्ट्रिः मूको. ५. पुत्र मूको. ६. पंस्व मूको.

शेषे वनेषु मात्रोः सं त्वा मर्तास इन्धते ।
अतन्द्रो हव्या वहसि हविष्कृत आदिद् देवेषु राजसि ॥ १५ ॥

शेषे । वनेषु । मात्रोः । सम् । त्वा । मर्तासः । इन्धते ।
अतन्द्रः । हव्या । वहसि । हविःऽकृतः । आत् । इत् । देवेषु । राजसि ॥ १५ ॥

**वेङ्कट०** शेषे त्वम् अरण्येषु अरण्योः[1] । ततः अरणी आहृत्य मथित्वा जातं तम् त्वा सम् इन्धते मनुष्याः । ततः त्वम्[2] अनलसः हव्यानि वहसि यजमानस्य । अनन्तरम् एव देवेषु राजसि ॥ १५ ॥

सप्त होतारस्तमिदीळते त्वाग्ने सुत्यजमह्रयम् ।
भिनत्स्यद्रिं तपसा वि शोचिषा प्राग्ने तिष्ठ जनाँ अति ॥ १६ ॥

सप्त । होतारः । तम् । इत् । ईळते । त्वा । अग्ने । सुऽत्यजम् । अह्रयम् ।
भिनत्सि । अद्रिम् । तपसा । वि । शोचिषा । प्र । अग्ने । तिष्ठ । जनान् । अति ॥ १६ ॥

**वेङ्कट०** सप्त होतारः तम् एव[3] स्तुवन्ति त्वाम् अग्ने! शोभनत्यागम् उद्धतम् । वि भिनत्सि मेघम्[4] तपसा शोचिषा च । प्र तिष्ठ अग्ने! जनान् अतीत्य हवींष्यादाय देवान् प्रति ॥ १६ ॥

अग्निमग्निं वो अध्रिगुं हुवेम वृक्तबर्हिषः ।
अग्निं हितप्रयसः शश्वतीष्वा होतारं चर्षणीनाम् ॥ १७ ॥

अग्निम्ऽअग्निम् । वः । अध्रिऽगुम् । हुवेम । वृक्तऽबर्हिषः ।
अग्निम् । हितऽप्रयसः । शश्वतीषु । आ । होतारम् । चर्षणीनाम् ॥ १७ ॥

**वेङ्कट०** अग्निम् एव वः अधृतगमनम् आह्वयाम विच्छिन्नबर्हिषः । अग्निम् निहितहविष्काः बह्वीषु भूमिषु आ ह्वयन्ति मनुष्यार्थं देवानां ह्वातारम् ॥ १७ ॥

केतेन शर्मन्त्सचते सुषामण्यग्ने तुभ्यं चिकित्वना ।
इषण्यया नः पुरुरूपमा भर वाजं नेदिष्ठमूतये ॥ १८ ॥

केतेन । शर्मन् । सचते । सुऽसामनि । अग्ने । तुभ्यम् । चिकित्वना ।
इषण्यया । नः । पुरुऽरूपम् । आ । भर । वाजम् । नेदिष्ठम् । ऊतये ॥ १८ ॥

---

1. अरण्याः मूको. 2. तम् मूको. 3. एव त्वाम् मूको. 4. मेघः मूको.

वेङ्कट० प्रज्ञानेन शोभनसामके यज्ञे तव सचनं करोति जनः चिकितुषा सहकारिणा जनेन । स त्वम् अस्माकम् इष्ण्यया इच्छया बहुरूपम् आ हर अन्नम् अन्तिकतमम् रक्षणाय ॥ १८ ॥

अग्ने जरितर्विश्पतिस्तेपानो देव रक्षसः ।
अप्रोषिवान् गृहपतिर्महाँ असि दिवस्पायुर्दुरोणयुः ॥ १९ ॥

अग्ने । जरितः । विश्पतिः । तेपानः । देव । रक्षसः ।
अप्रोषिऽवान् । गृहऽपतिः । महान् । असि । दिवः । पायुः । दुरोणऽयुः ॥ १९ ॥

वेङ्कट० अग्ने! स्तोतः! त्वं विशां पालयिता तपन्[1] हे देव! रक्षांसि अप्रोषिवान् गृह एव तिष्ठन् गृहस्वामी महान् भवसि दिवः रक्षकः यजमानगृहस्य कामयिता ॥ १९ ॥

मा नो रक्ष आ वेशीदाघृणीवसो मा यातुर्यातुमावताम् ।
परोगव्यूत्यनिरामप क्षुधमग्ने सेध रक्षस्विनः ॥ २० ॥

मा । नः । रक्षः । आ । वेशीत् । आघृणिवसो इत्याघृणिऽवसो । मा । यातुः । यातुऽमावताम्[2] ।
परःऽगव्यूति । अनिराम् । अप । क्षुधम् । अग्ने । सेध । रक्षस्विनः ॥ २० ॥

वेङ्कट० मा अस्मान् रक्षः आ विशतु तेजोधन!, मा च हिंसा हिंसावतां यातुधानानाम् । गव्यूतेः क्रोशात् परस्तात् अन्नाभावम् उपक्षपयितारम् रक्षांसि च अप सेध अग्ने! ॥ २० ॥

[3]इति षष्ठाष्टके चतुर्थाध्याये पञ्चत्रिंशो वर्गः[3] ॥

[ ६१ ]

[3]भर्गः प्रागाथ ऋषिः । इन्द्रो देवता । प्रगाथश्छन्दः ( = विषमा बृहत्यः, समाः सतोबृहत्यः ) सप्तदशी शङ्कुमती[3] ।

उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमत् ॥ १ ॥

उभयम् । शृणवत् । च । नः । इन्द्रः । अर्वाक् । इदम् । वचः ।
सत्राच्या । मघऽवा । सोमऽपीतये । धिया । शविष्ठः । आ । गमत् ॥ १ ॥

वेङ्कट० अस्माकं [4]स्तोत्रशस्त्रात्मकम् उभयम्[4] इदम् वचः शृणोतु अभिमुखम् आगतः इन्द्रः । महत् धनम् अञ्चन्त्या बुद्ध्या मघवा सोमपानाय बलवत्तमः आ गच्छतु ॥ १ ॥

---

१. स्तवन मूको. २. द्यु कृते वैप १, २५९० b द्र. ३-३. नास्ति मूको. ४-४. स्तोता स्तोत्रात्मकशुभ° मूको.

तं हि स्वराजं वृषभं तमोजसे धिषणे निष्टतक्षतुः ।
उतोपमानां प्रथमो नि षीदसि सोमकामं हि ते मनः ॥ २ ॥

तम् । हि । स्वऽराजम् । वृषभम् । तम् । ओजसे । धिषणे इति । निःऽततक्षतुः ।
उत । उपऽमानाम् । प्रथमः । नि । सीदसि । सोमऽकामम् । हि । ते । मनः ॥ २ ॥

वेङ्कट० तम् हि स्वराजम् वर्षितारं वर्षाणाम् अर्थं द्यावापृथिव्यौ[1] नितरां सञ्चस्करतुः, तम् एव बलाय । अपि च [2]उपमानभूतानां देवानां[2] मुख्यो भूत्वा निषीदसि । सोमकामम् हि ते मनः ॥ २ ॥

आ वृषस्व पुरूवसो सुतस्येन्द्रान्धसः ।
विद्मा हि त्वा हरिवः पृत्सु सासहिमधृष्टं चिद् दधृष्वणिम् ॥ ३ ॥

आ । वृषस्व । पुरुवसो इति पुरुऽवसो । सुतस्य । इन्द्र । अन्धसः ।
विद्म । हि । त्वा । हरिऽवः । पृत्ऽसु । ससहिम् । अधृष्टम । चित् । दधृष्वणिम् ॥ ३ ॥

वेङ्कट० आ सिञ्चस्व बहुधन! सुतम् इन्द्र! सोमं जठरे । जानीमः[3] हि त्वां सेनासु अभिभवितारम् हरिवः![4] शत्रुभिः धर्षयितुमशक्यम् धर्षकमन्येषाम् ॥ ३ ॥

अप्रामिसत्य मघवन् तथेदसदिन्द्र क्रत्वा यथा वशः ।
सनेम वाजं तव शिप्रिन्नवसा मक्षू चिद्यन्तो अद्रिवः ॥ ४ ॥

अप्रामिऽसत्य । मघऽवन् । तथा । इत् । असत् । इन्द्र । क्रत्वा । यथा । वशः ।
सनेम । वाजम् । तव । शिप्रिन् । अवसा । मक्षु । चित् । यन्तः । अद्रिऽवः ॥ ४ ॥

वेङ्कट० अविनश्यत्सत्य! मघवन्! तथा एव भवति तत्, इन्द्र! प्रज्ञानेन यथा त्वं कामयसे । भजेमहि अन्नम् तव शिप्रिन्! रक्षणेन क्षिप्रं शत्रून् गच्छन्तो वज्रिन्! ॥ ४ ॥

शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ ५ ॥

शग्धि । ऊँ इति । सु । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।
भगम् । न । हि । त्वा । यशसम् । वसुऽविदम् । अनु । शूर । चरामसि ॥ ५ ॥

वेङ्कट० देहि सुष्ठु शचीपते! इन्द्र! विश्वैः मरुद्भिः । भगम् इव भाग्याधिपतिं यशस्विनम् त्वां धनानां लम्भयितारम् शूर![5] वयम् हि अनु चरामः ॥ ५ ॥

[6]इति षष्ठाष्टके चतुर्थाध्याये षट्त्रिंशो वर्गः[6] ॥

---

१. °व्यो मूको. २-२. °मान देवानां भूतानां मूको. ३. जानीम मूको. ४. हरिभिः इव वि[2]; हरिव अ[1]. ५. शूरम् मूको. ६-६. नास्ति मूको.

पौरो अश्वस्य पुरुकृद् गवामस्युत्सो देव हिरण्ययः ।
नकिर्हि दानं परिमर्धिषत् त्वे यद्यद्यामि तदा भर ॥ ६ ॥

पौरः । अश्वस्य । पुरुऽकृत् । गवाम् । असि । उत्सः । देव । हिरण्ययः ।
नकिः । हि । दानम् । परिऽमर्धिषत् । त्वे इति । यत्ऽयत् । यामि । तत् । आ । भर ॥ ६ ॥

वेङ्कट० पूरयिता अश्वस्य भवसि, बहूनां कर्त्ता गवाम् भवसि, उत्ससदृशः[1] देव ! हिरण्मयशरीरः । न कश्चित् हि[2] दानम् परिहिनस्ति त्वयि अवस्थितम्[3] । यद्यत् याचे अहम्, तत् सर्वम् आ भर[4] ॥ ६ ॥

त्वं ह्येहि चेरवे विदा भगं वसुत्तये ।
उद् वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥ ७ ॥

त्वम् । हि । आ । इहि । चेरवे । विदाः । भगम् । वसुत्तये ।
उत् । ववृषस्व । मघऽवन् । गोऽइष्टये । उत् । इन्द्र । अश्वम्ऽइष्टये ॥ ७ ॥

वेङ्कट० त्वम् हि दाता आ गच्छ अनुचरते । लभस्व आदत्स्व भजनीयं कल्याणं धनम् अस्माकम् वसुनो दानाय । उत्सिञ्च गां देहि मघवन् ! गा इच्छते । तथा उत् वावृषस्व अश्वम् [5]मघवन् ! अश्वमिच्छते[5] ॥ ७ ॥

त्वं पुरू सहस्राणि शतानि च यूथा दानाय मंहसे ।
आ पुरंदरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे ॥ ८ ॥

त्वम् । पुरु । सहस्राणि । शतानि । च । यूथा । दानाय । मंहसे ।
आ । पुरम्ऽदरम् । चकृम । विप्रऽवचसः । इन्द्रम् । गायन्तः । अवसे ॥ ८ ॥

वेङ्कट० त्वम् पुरूणि सहस्राणि शतानि च गवां यूथानि दानाय अनुमन्यसे । यद्वा दानो यजमानः, तस्मै प्रयच्छसि । तं त्वां पुरां दारयितारम् अभिमुखं कुर्मः विशेषेण प्रकृष्टवचसः इन्द्रम् गायन्तः रक्षणार्थम् ॥ ८ ॥

अविप्रो वा यदविधद्विप्रो वेन्द्र ते वचः ।
स प्र ममन्दत् त्वाया शतक्रतो प्राचामन्यो अहंसन ॥ ९ ॥

अविप्रः । वा । यत् । अविधत् । विप्रः । वा । इन्द्र । ते । वचः ।
सः । प्र । ममन्दत् । त्वाऽया । शतक्रतो इति शतऽक्रतो । प्राचामन्यो इति प्राचाऽमन्यो । अहम्ऽसन ॥ ९ ॥

---

१. उत्सदृशः मूको. २. नास्ति वि[2]. ३. °स्थितः मूको. ४. हर अ[1]. ५-५. मघवन्नश्व° मूको.

वेङ्कट० मेधारहितो मेधावी वा यत् इन्द्र! तव वचः करोति त्वां स्तौति, सः प्रकर्षेण मोदते त्वत्कामनया शतप्रज्ञ! प्राचीनक्रोध! । नेन्द्रस्य क्रोधं प्रतिहन्ति कश्चित् । अहमित्युक्त्वा यः शत्रून् भजते सः अहंसनः ॥ ९ ॥

उग्रबाहुर्म्रक्षकृत्वा पुरंदरो यदि मे शृणवद्धवम् ।
वसूयवो वसुपतिं शतक्रतुं स्तोमैरिन्द्रं हवामहे ॥ १० ॥

उग्रऽबाहुः । म्रक्षऽकृत्वा । पुरम्ऽदरः । यदि । मे । शृणवत् । हवम् ।
वसुऽयवः । वसुऽपतिम् । शतऽक्रतुम् । स्तोमैः । इन्द्रम् । हवामहे ॥ १० ॥

वेङ्कट० उद्गूर्णबाहुः हिंसायाः कर्ता पुरन्दरः यदि मे शृणोति ह्वानम्, धनकामाः वसुपतिम् शतप्रज्ञम् स्तोमैः[1] सर्वदा इन्द्रम् वयम् हवामहे ॥ १० ॥

[2]इति षष्ठाष्टके चतुर्थाध्याये सप्तत्रिंशो वर्गः[2] ॥

न पापासो मनामहे नारायासो न जल्हवः ।
यदिन्न्विन्द्रं वृषणं सचा सुते सखायं कृणवामहै ॥ ११ ॥

न । पापासः । मनामहे । न । अरायासः । न । जल्हवः ।
यत् । इत् । नु । इन्द्रम् । वृषणम् । सचा । सुते । सखायम् । कृणवामहै ॥ ११ ॥

वेङ्कट० यास्कः (६,२५) — 'न पापा मन्यामहे । नाधनाः । न ज्वलनेन हीनाः । अस्त्यस्मासु ब्रह्मचर्यमध्ययनं तपो दानकर्मेत्यृषिरवोचत्' इति । यस्मात् इन्द्रम् वर्षितारं सह सुते सोमे सखायम् कुर्म इति ॥ ११ ॥

उग्रं युयुज्म पृतनासु सासहिमृणकातिमदाभ्यम् ।
वेदा भृमं चित् सनिता रथीतमो वाजिनं यमिदू नशत् ॥ १२ ॥

उग्रम् । युयुज्म । पृतनासु । ससहिम् । ऋणऽकातिम् । अदाभ्यम् ।
वेद । भृमम् । चित् । सनिता । रथिऽतमः । वाजिनम् । यम् । इत् । ऊँ इति । नशत् ॥ १२ ॥

वेङ्कट० उद्गूर्णं योजयामः सङ्ग्रामेषु अभिभवितारम् ऋणकातिम् ऋणभूतस्तुतिम् ऋणवत् फलप्रदानेन स्तोतारम् उत्तमर्णमिव संयोजयन्तम् अहिंस्यम् । 'अयम् इन्द्रः तं छन्नं वेत्ति, बहुषु अश्वेषु भ्रमणकुशलमेवाश्वं[3] सम्भजनशीलः सारथिरिव यम् एव हविष्मन्तं बहूनां मनुष्याणां मध्ये इन्द्रो व्याप्नोति ॥ १२ ॥

---

१. सोम मूको.　२-२. नास्ति मूको.　३. °लमिवा° मूको.

यत॑ इन्द्र॒ भया॑महे॒ ततो॑ नो॒ अभ॑यं कृधि ।
मघ॑वञ्छ॒ग्धि तव॒ तन्न॑ ऊ॒तिभि॒र्वि द्विषो॒ वि मृधो॑ जहि ॥ १३ ॥

यत॑ः । इन्द्र॑ । भया॑महे । तत॑ः । नः॒ । अभ॑यम् । कृधि॒ ।
मघ॑ऽवन् । श॒ग्धि । तव॑ । तत् । नः॒ । ऊ॒तिऽभि॑ः । वि । द्विष॑ः । वि । मृध॑ः । ज॒हि॒ ॥ १३ ॥

**वेङ्कट०** यतः शत्रोः इन्द्र! भयामहे, ततः अस्माकम् अभयम् कुरु। मघवन्! शक्तः[1] भवसि। तव तैः अस्माकं रक्षणैः जहि द्वेष्टॄन्, वि जहि हिंसकान् ॥ १३ ॥

त्वं हि रा॑धस्पते॒ राध॑सो म॒हः क्षय॑स्यासि॑ विध॒तः ।
तं त्वा॑ व॒यं म॑घवन्निन्द्र गिर्वणः सु॒ताव॑न्तो हवामहे ॥ १४ ॥

त्वम् । हि । रा॒धः॒ऽप॒ते॒ । राध॑सः । म॒हः । क्षय॑स्य । असि॑ । वि॒ध॒तः ।
तम् । त्वा॒ । व॒यम् । म॒घ॒ऽव॒न् । इ॒न्द्र॒ । गि॒र्व॒णः॒ । सु॒तऽव॑न्तः । ह॒वा॒म॒हे॒ ॥ १४ ॥

**वेङ्कट०** त्वम् [2]हि धनपते! धनस्य[2] महतो गृहस्य च दाता भवसि परिचरतः[3]। षष्ठीसामर्थ्यात् प्रदातेति लभ्यते। तम् त्वा वयम् इति स्पष्टम् ॥ १४ ॥

इन्द्र॑ः स्पळु॒त वृ॑त्र॒हा प॑र॒स्पा नो॒ वरे॑ण्यः ।
स नो॑ रक्षिषच्च॒र॒मं स म॑ध्य॒मं स प॒श्चात् पा॑तु नः पु॒रः ॥ १५ ॥

इन्द्र॑ः । स्पट् । उ॒त । वृ॒त्र॒ऽहा । प॒रः॒ऽपाः । नः॒ । वरे॑ण्यः ।
सः । नः॒ । र॒क्षि॒ष॒त् । च॒र॒मम् । सः । म॒ध्य॒मम् । सः । प॒श्चात् । पा॒तु॒ । नः॒ । पु॒रः ॥ १५ ॥

**वेङ्कट०** इन्द्रः वेत्ता। स्पशतिर्ज्ञानकर्मा। वृत्रहा परपालयिता अस्माकं वरणीयः। सः अस्माकं रक्षतु चरमम् पुत्रम्, [4]सः मध्यमम्[4]। सः एव अस्मान् पश्चात् पुरस्ताच्च रक्षतु ॥ १५ ॥

[4]इति षष्ठाष्टके चतुर्थाध्याये अष्टात्रिंशो वर्गः[4] ॥

त्वं नः॑ प॒श्चाद॑ध॒राद॑ुत्त॒रात् पु॒र इ॑न्द्र॒ नि पा॑हि वि॒श्वतः॑ ।
आ॒रे अ॒स्मत् कृ॑णुहि॒ दैव्यं॑ भ॒यमा॒रे हे॒तीरदे॑वीः ॥ १६ ॥

त्वम् । नः॒ । प॒श्चात् । अ॒ध॒रात् । उ॒त्त॒रात् । पु॒रः । इन्द्र॑ । नि । पा॒हि॒ । वि॒श्वत॑ः ।
आ॒रे । अ॒स्मत् । कृ॒णु॒हि॒ । दैव्य॑म् । भ॒यम् । आ॒रे । हे॒तीः । अदे॑वीः ॥ १६ ॥

**वेङ्कट०** त्वम् अस्मान् इन्द्र! सर्वतः रक्ष। कुरु देवकृतम् भयम् अस्मत् दूरे, आयुधानि आसुराणि च ॥ १६ ॥

---

१. मुक्तः मूको. २-२. हि…धनं मूको. ३. परिचर मूको. ४-४. नास्ति मूको.

अ॒द्याद्या॒ श्वःश्व॒ इन्द्र॒ त्रास्व॑ प॒रे च॑ नः ।
विश्वा॑ च नो जरि॒तॄन्त्स॑त्पते॒ अहा॒ दिवा॒ नक्तं॑ च रक्षिषः ॥ १७ ॥

अ॒द्यऽअ॑द्य । श्वःऽश्वः॑ । इन्द्र॑ । त्रास्व॑ । प॒रे । च॒ । न॒ः ।
विश्वा॑ । च॒ । न॒ः । ज॒रि॒तॄन् । स॒त्ऽप॒ते॒ । अहा॑ । दिवा॑ । नक्त॑म् । च॒ । र॒क्षि॒षः॒ ॥ १७ ॥

वेङ्कट० यद्यद् अद्यशब्दवाच्यम्[1], तत्र सर्वत्र अस्मान् इन्द्र! रक्ष, एवं श्वश्च तृतीये च दिवसे अस्मान्। सर्वाणि एव च अहानि स्तोतॄन् अस्मान् हे सतां पते! दिवा नक्तम् च रक्ष ॥ १७ ॥

प्र॒भ॒ङ्गी शूरो॑ म॒घवा॑ तु॒वीम॑घः संमि॑श्लो वी॒र्या॑य॒ कम् ।
उ॒भा ते॑ बा॒हू वृष॑णा शतक्रतो॒ नि या वज्रं॑ मिमि॒क्षतुः॑ ॥ १८ ॥

प्र॒ऽभ॒ङ्गी । शूरः॑ । म॒घऽवा॑ । तु॒वि॒ऽम॑घः । सम्ऽमि॑श्लः । वी॒र्या॑य । कम् ।
उ॒भा । ते॒ । बा॒हू इति॑ । वृष॑णा । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । नि । या । वज्र॑म् । मि॒मि॒क्षतुः॑ ॥१८॥

वेङ्कट० प्रभञ्जनशीलः शूरः मघवा बहुधनः संमिश्रयिता वीर्यकरणाय सोमस्य। उभौ ते बाहू वर्षितारौ शतकर्मन्!, यौ वज्रम् नि मिमिक्षतुः परिगृह्णीतः ॥ १८ ॥

[2]इति षष्ठाष्टके चतुर्थाध्याये एकोनचत्वारिंशो वर्गः[2] ॥

[ ६२ ]

[2]प्रगाथो घौरः काण्व ऋषिः । इन्द्रो देवता । पङ्क्तिश्छन्दः, सप्तम्यादिनवम्यन्ता बृहत्यः[2] ।

प्रो अ॑स्मा॒ उप॑स्तुतिं॒ भर॑ता॒ यज्जुजो॑षति ।
उ॒क्थैरिन्द्र॑स्य॒ माहि॑नं॒ वयो॑ वर्धन्ति सो॒मिनो॑ भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ १ ॥

प्रो इति॑ । अ॒स्मै॒ । उप॑ऽस्तुतिम् । भर॑त । यत् । जुजो॑षति ।
उ॒क्थैः । इन्द्र॑स्य । माहि॑नम् । वयः॑ । व॒र्ध॒न्ति॒ । सो॒मिनः॑ । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥ १ ॥

वेङ्कट० प्रगाथः। प्र भरत[3] अस्मै उपस्तुतिम्, यदि सेवते। शस्त्रैः इन्द्रस्य महत् अन्नम् वर्धयन्ति यजमानाः। भजनीयानि इन्द्रस्य दानानि ॥ १ ॥

अयु॒जो अस॑मो नृ॒भिरेकः॑ कृ॒ष्टीर॒यास्यः॑ ।
पू॒र्वीरति॒ प्र वा॑वृधे॒ विश्वा॑ जा॒तान्योज॑सा भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ २ ॥

अ॒यु॒जः । अस॑मः । नृ॒ऽभिः॑ । एकः॑ । कृ॒ष्टीः । अ॒यास्यः॑ ।
पू॒र्वीः । अति॑ । प्र । व॒वृ॒धे॒ । विश्वा॑ । जा॒तानि॑ । ओज॑सा । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥ २ ॥

---

१. अद्य यद्० अ[1]. २-२. नास्ति मूको. ३. हरत अ[1].

वेङ्कट० असहायः अन्यैः[1] नृभिः असदृशः एकः उपक्षपयितुमशक्यः[2] बह्वीः प्रजाः[3] अति प्र वर्धते। विश्वानि च जातानि [4]बलेन अति[4] प्रवर्धते ॥ २ ॥

अहितेन चिदर्वता जीरदानुः सिषासति ।
प्रवाच्यमिन्द्र तत् तव वीर्याणि करिष्यतो भद्रा इन्द्रस्य रातयः ॥ ३ ॥

अहितेन । चित् । अर्वता । जीरऽदानुः । सिसासति ।
प्रऽवाच्यम् । इन्द्र । तत् । तव । वीर्याणि । करिष्यतः । भद्राः । इन्द्रस्य । रातयः ॥ ३ ॥

वेङ्कट० केन चित् अयोजितेन अपि अश्वेन क्षिप्रदानः[5] सम्भक्तुमिच्छति । प्रकर्षेण वाच्यम् इन्द्र! तत् तव सङ्ग्रामेषु वीर्याणि करिष्यतः, यत् स्वयमेव युज्यमानेन अश्वेन सम्भजनम्[6] इति ॥ ३ ॥

आ याहि कृणवाम त इन्द्र ब्रह्माणि वर्धना ।
येभिः शविष्ठ चाकनो भद्रमिह श्रवस्यते भद्रा इन्द्रस्य रातयः ॥ ४ ॥

आ । याहि । कृणवाम । ते । इन्द्र । ब्रह्माणि । वर्धना ।
येभिः । शविष्ठ । चाकनः । भद्रम् । इह । श्रवस्यते । भद्राः । इन्द्रस्य । रातयः ॥ ४ ॥

वेङ्कट० आ याहि कृणवाम ते इन्द्र! स्तोत्राणि वर्धनानि, यैः बलवत्तम! कामयसे भद्रम् कर्तुम् इह अन्नमिच्छते ॥ ४ ॥

धृषतश्चिद् धृषन्मनः कृणोषीन्द्र यत् त्वम् ।
तीव्रैः सोमैः सपर्यतो नमोभिः प्रतिभूषतो भद्रा इन्द्रस्य रातयः ॥ ५ ॥

धृषतः । चित् । धृषत् । मनः । कृणोषि । इन्द्र । यत् । त्वम् ।
तीव्रैः । सोमैः । सपर्यतः । नमःऽभिः । प्रतिऽभूषतः । भद्राः । इन्द्रस्य । रातयः ॥ ५ ॥

वेङ्कट० धृष्टाद् अपि धृष्टम् अत्यन्तं [7]धृष्टम् मनः[7] करोषि इन्द्र! यस्मात् त्वम्। तीव्रैः सोमैः परिचरतः नमस्कारैः अलङ्कुर्वतः तस्य तव इन्द्रस्य भजनीयानि दानानि ॥ ५ ॥

अव चष्ट ऋचीषमोऽवताँ इव मानुषः ।
जुष्ट्वी दक्षस्य सोमिनः सखायं कृणुते युजं भद्रा इन्द्रस्य रातयः ॥ ६ ॥

अव । चष्टे । ऋचीषमः । अवतान्ऽइव । मानुषः ।
जुष्ट्वी । दक्षस्य । सोमिनः । सखायम् । कृणुते । युजम् । भद्राः । इन्द्रस्य । रातयः ॥ ६ ॥

---

१. अन्यः मूको. २. प्रजा उप° मूको. ३. नास्ति मूको. ४. बलेन यानि मूको. ५. °दातुः वि[2]; °दातु न मूको. ६. भजनम् मूको. ७-७. मनः धृष्टम् अ[1].

**वेङ्कट०** अव पश्यति ऋचा समः स्तुत्या समः [1]कूपान् इव मानुषः[1]। सेविता वृद्धस्य यजमानस्य सखायम्[2] करोति युज्यमानं[3] सोममातृण्णम्[4] अवेक्षितम्[5] ॥ ६ ॥

[6]इति षष्ठाष्टके चतुर्थाध्याये चत्वारिंशो वर्गः[6] ॥

विश्वे॑ त इन्द्र वी॒र्यं॑ दे॒वा अनु॒ क्रतुं॑ ददुः ।
भुवो॒ विश्व॑स्य॒ गोप॑तिः पुरुष्टुत भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ ७ ॥

विश्वे॑ । ते॒ । इ॒न्द्र॒ । वी॒र्य॑म् । दे॒वाः । अनु॑ । क्रतु॑म् । द॒दुः॒ ।
भुवः॑ । विश्व॑स्य । गोऽप॑तिः । पु॒रु॒ऽस्तु॒त॒ । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥ ७ ॥

**वेङ्कट०** विश्वे ते इन्द्र! धनं ददतु[7] देवाः अनुसृत्य[8] प्रज्ञानम् बहवः[9]। त्वम् विश्वस्य गोपतिः बहुभिः स्तुत![10] ॥ ७ ॥

गृ॒णे तदि॑न्द्र ते॒ शव॑ उप॒मं दे॒वता॑तये ।
यद्धंसि॑ वृ॒त्रमोज॑सा शचीपते भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ ८ ॥

गृ॒णे । तत् । इ॒न्द्र॒ । ते॒ । शवः॑ । उ॒प॒ऽमम् । दे॒व॒ऽता॑तये ।
यत् । हंसि॑ । वृ॒त्रम् । ओज॑सा । श॒ची॒ऽप॒ते॒ । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥ ८ ॥

**वेङ्कट०** स्तौमि इन्द्र! तव तत् बलम् अन्तिकम् यजमानाय। येन हंसि[11] शत्रुम् बलेन प्रज्ञापते![12] ॥ ८ ॥

सम॑नेव वपुष्य॒तः कृ॒णव॒न्मानु॑षा यु॒गा ।
वि॒दे तदिन्द्र॒श्चेत॑न॒मध॑ श्रु॒तो भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ ९ ॥

सम॑नाऽइव । व॒पु॒ष्य॒तः । कृ॒णव॑त् । मानु॑षा । यु॒गा ।
वि॒दे । तत् । इन्द्रः॑ । चेत॑नम् । अध॑ । श्रु॒तः । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥ ९ ॥

**वेङ्कट०** समनस्का मानिनी इव वपुरिच्छतः[13] पुरुषान् कृणोति विधेयान् मानुषाणि युगानि कालान् मासादीन्[14]। लम्भयति तत् [15]इन्द्रः प्रज्ञापकम्[15]। तेन विश्रुतो भवति ॥ ९ ॥

उज्जा॒तमि॑न्द्र ते॒ शव॒ उत् त्वामुत् तव॒ क्रतु॑म् ।
भूरि॑गो॒ भूरि॑ वावृधु॒र्मघ॑व॒न् तव॒ शर्म॑णि भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥ १० ॥

---

१-१. कूपानि परमा मूको. २. वायम् मुको. ३. पूज्य° मूको. ४. सोमपात्रण्डम् अ[१]. ५. अपेक्षम् मूको. ६-६. नास्ति मुको. ७. ददिम मुको. ८. अन्वतु मूको. ९. व्याह्वः मूको. १०. स्तुतः मूको. ११. नास्ति मूको. १२. °ज्ञावते मूको. १३. प(ीच्छत मूको. १४. मा(ञ्चादीन् मूको. १५-१५. इन्द्रप्र° मूको.

उत् । जातम् । इन्द्र । ते । शवः । उत् । त्वाम् । उत् । तव । क्रतुम् ।
भूरिगो इति भूरिऽगो । भूरि । वृधुः । मघऽवन् । तव । शर्मणि । भद्राः । इन्द्रस्य । रातयः ॥

**वेङ्कट०** उत् वर्धयन्ति प्रादुर्भूतम् इन्द्र! तव बलम् उत् वर्धयन्ति च त्वाम् [1]उत् वर्धयन्ति तव[1] प्रज्ञानम् बहुपशो! मघवन्! अत्यन्तम्, तव[2] सुखे वर्तमानाः[3] ॥ १० ॥

अहं च त्वं च वृत्रहन्त्सं युज्याव सनिभ्य आ ।
अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः ॥ ११ ॥

अहम् । च । त्वम् । च । वृत्रऽहन् । सम् । युज्याव । सनिऽभ्यः । आ ।
अरातिऽवा । चित् । अद्रिऽवः । अनु । नौ । शूर । मंसते । भद्राः । इन्द्रस्य । रातयः ॥ ११ ॥

**वेङ्कट०** [4]अहम् च त्वम् च वृत्रहन्![4] सङ्गतौ भवाव यावता कालेन धनानि लभ्यन्ते तावत् कालम् । सङ्गतयोः च आवयोः अप्रदानशीलः अपि वज्रिन्! त्वद्धनानाम्[5] अनुमननं करोति ॥ ११ ॥

सत्यमिद् वा उ तं वयमिन्द्रं स्तवाम नानृतम् ।
महाँ असुन्वतो वधो भूरि ज्योतींषि सुन्वतो भद्रा इन्द्रस्य रातयः ॥ १२ ॥

सत्यम् । इत् । वै । ॐ इति । तम् । वयम् । इन्द्रम् । स्तवाम । न । अनृतम् ।
महान् । असुन्वतः । वधः । भूरि । ज्योतींषि । सुन्वतः । भद्राः । इन्द्रस्य । रातयः ॥ १२ ॥

**वेङ्कट०** सत्यम् एव तम् वयम् इन्द्रम् स्तवाम, न तु अनृतम् । अस्माभिः उक्ता गुणाः सत्या एव नानृता इति । महान् भवति असुन्वतः प्रहारः । बहूनि च ज्योतींषि सुन्वतः इति ॥ १२ ॥

[6]इति षष्ठाष्टके चतुर्थाध्याये एकचत्वारिंशो वर्गः[6] ॥

## [ ६३ ]

[6]प्रगाथः काण्व ऋषिः । इन्द्रो देवता, द्वादश्या देवाः । गायत्री छन्दः,
प्रथमाचतुर्थीपञ्चमीसप्तम्यः अनुष्टुभः, द्वादशी त्रिष्टुप्[6] ।

स पूर्व्यो महानां वेनः क्रतुभिरानजे । यस्य द्वारा मनुष्पिता देवेषु धियं आनजे ॥ १ ॥

सः । पूर्व्यः । महानाम् । वेनः । क्रतुऽभिः । आनजे । यस्य । द्वारा । मनुः । पिता । देवेषु । धियः । आनजे ॥

**वेङ्कट०** सः मुख्यः महतां कान्तः[7] कर्मभिः आनजे । आनजिः[8] प्राप्तिकर्मा । महतां कर्माणि उद्दिश्य

---

१-१. मुत्तव मूको. २. च वि[2]; व अ[1]. ३. [०]मानां मूको. ४. या (१,४) द्र[०]. ५. उत्र्धमानम् मूको. ६-६. नास्ति मूको. ७. क्रान्तः मूको. ८. नास्ति मूको.

गच्छति। यस्य[1] इन्द्रस्य द्वारेण सर्वेषां भूतानाम् पिता मनुः देवेषु अभिलषितानि[2] प्राप्तः[3] ॥ १ ॥

दिवो मानं नोत्सदन्त्सोमपृष्ठासो अद्रयः। उक्था ब्रह्म च शंस्या ॥ २ ॥

दिवः। मानम्। न। उत्। सदन्। सोमऽपृष्ठासः। अद्रयः। उक्था। ब्रह्म। च। शंस्या ॥ २ ॥

वेङ्कट० द्युलोकस्य निर्मातारम् इन्द्रम् न उत् सृजन्तु सदा अभिषुण्वन्तु सोमम् इन्द्राय[4] सोमपृष्ठाः ग्रावाणः। शस्त्राणि च[5] स्तोत्राणि च अस्मै शंसनीयानि ॥ २ ॥

स विद्वाँ अङ्गिरोभ्य इन्द्रो गा अवृणोदप। स्तुषे तदस्य पौंस्यम् ॥ ३ ॥

सः। विद्वान्। अङ्गिरःऽभ्यः। इन्द्रः। गाः। अवृणोत्। अप। स्तुषे। तत्। अस्य। पौंस्यम् ॥ ३ ॥

वेङ्कट० सः विद्वान् अङ्गिरसामर्थाय[6] [7]अप अवृणोत्[7] इन्द्रः पशून् पणिभिः अपहृतान्[8]। स्तौमि[9] अस्य तत् वीर्यम् ॥ ३ ॥

स प्रत्नथा कविवृध इन्द्रो वाकस्य वक्षणिः। शिवो अर्कस्य होमन्यस्मत्रा गन्त्ववसे ॥४॥

सः। प्रत्नऽथा। कविऽवृधः। इन्द्रः। वाकस्य। वक्षणिः।

शिवः। अर्कस्य। होमनि। अस्मऽत्रा। गन्तु। अवसे ॥ ४ ॥

वेङ्कट० पूर्वस्मिन्[10] इव काले सम्प्रति च कवीनां वर्धयिता इन्द्रः स्तोतुः वोढा शिवः च भवति। अर्चनीयस्य सोमस्य होमे सः अस्मासु गच्छतु रक्षणाय ॥ ४ ॥

आदू नु ते अनु क्रतुं स्वाहा वरस्य यज्यवः।

श्वात्रमर्का अनूषतेन्द्र गोत्रस्य दावने ॥ ५ ॥

आत्। ऊँ इति। नु। ते। अनु। क्रतुम्। स्वाहा। वरस्य। यज्यवः।

श्वात्रम्। अर्काः। अनूषत। इन्द्र। गोत्रस्य। दावने ॥ ५ ॥

वेङ्कट० आत् अनन्तरम् एव तव अनु स्तुवन्ति[11] प्रज्ञानम्[12] स्वाहायाः पत्युः अग्नेः यष्टारः त्वद्यागार्थम् अग्निं यजन्तः क्षिप्रम् ( तु. या ५,३ ) स्तोतारः इन्द्र! धनस्य दानाय ॥ ५ ॥

इन्द्रे विश्वानि वीर्या कृतानि कर्त्वानि च। यमर्का अध्वरं विदुः ॥ ६ ॥

इन्द्रे। विश्वानि। वीर्या। कृतानि। कर्त्वानि। च। यम्। अर्काः। अध्वरम्। विदुः ॥ ६ ॥

---

१. स्वस्य मूको. २. अभिवर्षितानि मूको. ३. प्रातः मूको. ४. इन्द्रस्य अ[1]. ५. नास्ति अ[1]. ६. °मर्थ्या° मूको. ७-७. वावृ° मूको. ८. °हृतां मूको ९. स्तोषि मूको. १०. सर्वे° मूको. ११. सव° मूको. १२. °ज्ञानां मूको.

वेङ्कट० इन्द्रे[१] विश्वानि वीर्याणि कृतानि च कर्तव्यानि च । यम्[२] स्तोतारः हिंसारहितम् जानन्ति[३] ॥ ६ ॥

[४]इति षष्ठाष्टके चतुर्थाध्याये द्विचत्वारिंशो वर्गः[४] ॥

यत् पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ।
अस्तृणाद् बर्हणा विपो३ऽर्यो मानस्य स क्षयः ॥ ७ ॥

यत् । पाञ्चऽजन्यया । विशा । इन्द्रे । घोषाः । असृक्षत ।
अस्तृणात् । बर्हणा । विपः । अर्यः । मानस्य । सः । क्षयः ॥ ७ ॥

वेङ्कट० [५]यत् पञ्चजनभवया सर्वया विशा प्रजया[५] इन्द्रे स्तुतिवाचः असृक्षत[६] सृज्यन्ते, तदानीं स्तृणाति शत्रून् महत्त्वेन । मेधाविनः स्तोतुः ईश्वरः पूजायाः [७]सः निवासः[७] ॥ ७ ॥

इयमु ते अनुष्टुतिश्चकृषे तानि पौंस्या । प्रावश्चक्रस्य वर्तनिम् ॥ ८ ॥

इयम् । ऊँ इति । ते । अनुऽस्तुतिः । चकृषे । तानि । पौंस्या । प्र । आवः । चक्रस्य । वर्तनिम् ॥ ८ ॥

वेङ्कट० इयम् उ ते अनुष्टुतिः अनुक्रमेण [८]क्रियमाणा स्तुतिः[८], कृतवानसि तानि वीर्याणि । [९]प्र अरक्षः चक्रस्य वर्तनिम्[९] । आत्मीयस्य रथस्य मार्गं यथा अन्ये न बाधन्ते तथा करोषि[१०] ॥ ८ ॥

अस्य वृष्णो व्योदन उरु क्रमिष्ट जीवसे । यवं न पश्व आ ददे ॥ ९ ॥

अस्य । वृष्णः । विऽओदने । उरु । क्रमिष्ट । जीवसे ।
यवम् । न । पश्वः । आ । ददे ॥ ९ ॥

वेङ्कट० अस्य वर्षितुः विविधे अन्ने स्वभूते विस्तीर्णं पदनिधानं करोति जीवनाय[११] सर्वः लोकः । तदा यवम्[१२] पशवः इव विविधम् ओदनम् आ दत्ते स्तुत्यात् । तथा नाम तत् स्तोत्रम् ॥ ९ ॥

तद् दधाना अवस्यवो युष्माभिर्दक्षपितरः । स्याम मरुत्वतो वृधे ॥ १० ॥

तत् । दधानाः । अवस्यवः । युष्माभिः । दक्षऽपितरः । स्याम । मरुत्वतः । वृधे ॥ १० ॥

वेङ्कट० [४]तत् स्तोत्रम् दधानाः[४] रक्षणम् इच्छन्तः युष्माभिः सह दक्षपितरः वयम् । दक्षो नाम प्रजापतिः । स्याम मरुत्वतः इन्द्रस्य वर्धनाय ॥ १० ॥

---

१. नास्ति मूको. २. अयम् मूको. ३. जनयन्ति मूको. ४-४. नास्ति मूको. ५-५. तु. या ३,८. ६. °क्ष्यत मूको. ७-७. सन्निवासः मूको. ८-८. क्रयमाणः स्तुतिः मूको. ९-९. प्रारक्षश्चक्रस्य वर्तनीम् मूको. १०. करोति मूको. ११. इति वनाय मूको. १२. वयम् मूको.

बळृत्वियाय धाम्न ऋक्वभिः शूर नोनुमः । जेषामेन्द्र त्वया युजा ॥ ११ ॥

वट् । ऋत्वियाय । धाम्ने । ऋक्वऽभिः । शूर । नोनुमः । जेषाम । इन्द्र । त्वया । युजा ॥ ११ ॥

**वेङ्कट०** सत्यम् एव ऋतौ भवाय[1] धाम्ने[2] कल्याणाय तेजसे तुभ्यं मरुद्भिः सह शूर! स्तोत्रं कुर्मः[3]। जयेम[4] इन्द्र! त्वया सहायेन शत्रून् ॥ ११ ॥

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः ॥ १२ ॥

अस्मे इति । रुद्राः । मेहना । पर्वतासः । वृत्रऽहत्ये । भरऽहूतौ । सऽजोषाः ।
यः । शंसते । स्तुवते । धायि । पज्रः । इन्द्रऽज्येष्ठाः । अस्मान् । अवन्तु । देवाः ॥ १२ ॥

**वेङ्कट०** [5]देवाः ये[5] अस्मान् रुद्राः मेहनेन सेचनेन[6] युक्ताः मेघाः शत्रुहननसाधने सङ्ग्रामे सङ्गताः, शंसते[7] स्तुवते च प्रदानाय निहितः वेगवान् पर्जन्यः, ते इमे इन्द्रज्येष्ठाः[8] देवाः रक्षन्तु। पुनः अस्मान् इति पूरणम् ॥ १२ ॥

[9]इति षष्ठाष्टके चतुर्थाध्याये त्रिचत्वारिंशो वर्गः[9] ॥

## [ ६४ ]

[9]प्रगाथः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः[9] ।

उत् त्वा मन्दन्तु स्तोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥ १ ॥

उत् । त्वा । मन्दन्तु । स्तोमाः । कृणुष्व । राधः । अद्रिऽवः । अव । ब्रह्मऽद्विषः । जहि ॥ १ ॥

**वेङ्कट०** त्वाम् उत् मादयन्तु स्तोमाः । कुरु अन्नं वज्रिन्! । अव जहि ब्रह्मणः द्वेष्टॄन् राक्षसान् ॥ १ ॥

पदा पणीँरराधसो नि बाधस्व महाँ असि । नहि त्वा कश्चन प्रति ॥ २ ॥

पदा । पणीन् । अराधसः । नि । बाधस्व । महान् । असि । नहि । त्वा । कः । चन । प्रति ॥ २ ॥

**वेङ्कट०** पदा असुरान् [10]अराधस्कान् नि बाधस्व । यतः महान् असि । नहि त्वा कः अपि प्रति[10] भवति ॥ २ ॥

त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् । त्वं राजा जनानाम् ॥ ३ ॥

---

१. य मूको. २. दाम्ने मूको. ३. कुर्वः मूको. ४. ह्येम मूको. ५-५. देवीय मूको. ६. सेचनाय मूको. ७. °त मूको. ८. °न्द्रं ज्ये° मूको. ९-९. नास्ति मूको. १०-१०. अराधक्राणि प्रति मूको.

त्वम् । ईशिषे । सुतानाम् । इन्द्र । त्वम् । असुतानाम् । त्वम् । राजा । जनानाम् ॥ ३ ॥

**वेङ्कट०** अभिषुतसोमानाम् अन्येषां च इन्द्र ! त्वम् ईशिषे । त्वम् राजा जनानाम् ॥ ३ ॥

**एहि प्रेहि क्षयो दिव्याऽऽघोषञ्चर्षणीनाम् । ओभे पृणासि रोदसी ॥ ४ ॥**

आ । इहि । प्र । इहि । क्षयः । दिवि । आऽघोषन् । चर्षणीनाम् । आ । उभे इति । पृणासि । रोदसी इति ॥

**वेङ्कट०** आ गच्छ प्र [1]गच्छ निवासम् दिवः त्वम् आघोषणम्[1] कुर्वन् मनुष्याणाम् अर्थाय । आ पूरयसि द्यावापृथिव्यौ उभे अपि ॥ ४ ॥

**त्वं चित् पर्वतं गिरिं शतवन्तं सहस्रिणम् । वि स्तोतृभ्यो रुरोजिथ ॥ ५ ॥**

त्वम् । चित् । पर्वतम् । गिरिम् । शतऽवन्तम् । सहस्रिणम् । वि । स्तोतृऽभ्यः । रुरोजिथ ॥ ५ ॥

**वेङ्कट०** तं च पर्ववन्तम् मेघम्[2] शतसहस्रोदकवन्तम् वि जहि वज्रेण स्तोतृभ्यः ॥ ५ ॥

**वयमु त्वा दिवा सुते वयं नक्तं हवामहे । अस्माकं काममा पृण ॥ ६ ॥**

वयम् । ऊँ इति । त्वा । दिवा । सुते । वयम् । नक्तम् । हवामहे । अस्माकम् । कामम् । आ । पृण ॥ ६ ॥

**वेङ्कट०** निगदसिद्धा ॥ ६ ॥

[3]इति षष्ठाष्टके चतुर्थाध्याये चतुश्चत्वारिंशो वर्गः[3] ॥

**क१स्य वृषभो युवा तुविग्रीवो अनानतः । ब्रह्मा कस्तं सपर्यति ॥ ७ ॥**

क्व । स्यः । वृषभः । युवा । तुविऽग्रीवः । अनानतः । ब्रह्मा । कः । तम् । सपर्यति ॥ ७ ॥

**वेङ्कट०** [4]क्व स वर्षिता[4] युवा बहुग्रीवः[5] । कण्ठस्था नाड्यो ग्रीवाः । कञ्चित्[6] प्रति नमनमकुर्वन् । ब्राह्मणः कः तम् पूजयति ॥ ७ ॥

**कस्य स्वित् सवनं वृषा जुजुष्वाँ अव गच्छति । इन्द्रं क उ स्विदा चके ॥ ८ ॥**

कस्य । स्वित् । सवनम् । वृषा । जुजुष्वान् । अव । गच्छति । इन्द्रम् । कः । ऊँ इति । स्वित् । आ । चके ॥

**वेङ्कट०** कस्य स्वित् सवनम् वृषा प्रीयमाणः अव[7] गच्छति । इन्द्रम् वा कः जानाति ॥ ८ ॥

**कं ते दाना असक्षत वृत्रहन् कं सुवीर्या । उक्थे क उ स्विदन्तमः ॥ ९ ॥**

---

१-१. प्रजनिष्म सदिरवे मायोषणम् मूको. २. मघं मूको. ३-३. नास्ति मूको. ४-४. क्षरयिता वि[2]; कासु क्षपयिता अ[1]. ५. बहुश्रवः वि[2]; बहुग्रवः अ[1]. ६. कश्चित् मूको. ७. यत् वि[2].

कम् । ते । दानाः । असक्षत । वृत्रऽहन् । कम् । सुऽवीर्या । उक्थे । कः । ऊँ इति । स्वित् । अन्तमः ॥९॥

वेङ्कट० कम् तव दानानि सेवन्ते वृत्रहन्! । कम् वा सुवीर्याणि सचन्ते[1] । शस्त्रे कः उ इत्थं[2] च अन्तिकतमः भवति ॥ ९ ॥

अयं ते मानुषे जने सोमः पूरुषु सूयते । तस्येहि प्र द्रवा पिब ॥ १० ॥

अयम् । ते । मानुषे । जने । सोमः । पूरुषु । सूयते । तस्य । आ । इहि । प्र । द्रव । पिब ॥ १० ॥

वेङ्कट० अयम् ते मानुषे जने सोमः पूरुनामसु राजसु सूयते । तम् आ गच्छ प्र द्रव पिब च । आगमनानन्तरं पात्रं प्रति गमनं प्रद्रवः ॥ १० ॥

अयं ते शर्यणावति सुषोमायामधि प्रियः । आर्जीकीये मदिन्तमः ॥ ११ ॥

अयम् । ते । शर्यणाऽवति । सुऽसोमायाम् । अधि । प्रियः । आर्जीकीये । मदिन्ऽतमः ॥ ११ ॥

वेङ्कट० [3]अयम् ते[3] शर्यणावति [4]कुरुक्षेत्रस्य जघनार्धभवे सरस्यन्ते[4] सुषोमाख्यायां नद्याम् प्रियकरः आर्जीकीयनाम्नि देशे च अत्यन्तं मदयिता सोमः । उत्तरत्र सम्बन्धः ॥ ११ ॥

तमद्य राधसे महे चारुं मदाय घृष्वये । एहीमिन्द्र द्रवा पिब ॥ १२ ॥

तम् । अद्य । राधसे । महे । चारुम् । मदाय । घृष्वये । [5]आ । इहि । ईम् । इन्द्र । द्रव । पिब[5] ॥ १२ ॥

वेङ्कट० तम् अद्य महते धनाय चारुम् शत्रूणां घर्षणशीलाय[6] मदाय आ गच्छ इन्द्र! द्रव पिब च ॥ १२ ॥

[3]इति षष्ठाष्टके चतुर्थाध्याये पञ्चचत्वारिंशो वर्गः[3] ॥

[ ६५ ]

[3]प्रगाथः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः[3] ।

यदिन्द्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः । आ याहि तूयमाशुभिः ॥ १ ॥

यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृऽभिः । आ । याहि । तूयम् । आशुऽभिः ॥

वेङ्कट० यदि त्वम् इन्द्र! अस्मदीयैः[7] मनुष्यैः प्राक् अपाक् उदक् न्यक् वा हूयसे, आ गच्छ क्षिप्रम् अश्वैः ॥ १ ॥

यद्वा प्रस्रवणे दिवो मादयासे स्वर्णरे । यद्वा समुद्रे अन्धसः ॥ २ ॥

---

१ सचते मूको. २. विस्थम मूको. ३-३. नास्ति मूको. ४-४. तु. ऋ ८,६,३९ भाष्यम्; कुरुक्षेत्र सस्य जघनार्थभवे समस्यन्ते मूको. ५-५. तु. इहत्यो १०मो मन्त्रः, ८,१७,११ च । ६. वर्ष° मूको. ७. अन्यदीयैः मूको.

यत् । वा । प्रऽस्रवणे । दिवः । मादयासे । स्वःऽनरे । यत् । वा । समुद्रे । अन्धसः ॥ २ ॥

**वेङ्कट०** यत् वा अन्तरिक्षस्य प्रस्रवणे स्थाने माद्यसि, सर्वनरे वा अस्मिन् लोके[1], यत् वा अन्तरिक्षे सोमेन[2]। उत्तरत्र सम्बन्धः ॥ २ ॥

आ त्वा गीर्भिर्महामुरुं हुवे गामिव भोजसे । इन्द्र सोमस्य पीतये ॥ ३ ॥

आ । त्वा । गीःऽभिः । महाम् । उरुम् । हुवे । गाम्ऽइव । भोजसे । इन्द्र । सोमस्य । पीतये ॥ ३ ॥

**वेङ्कट०** निगदव्याख्याता इति ॥ ३ ॥

आ ते इन्द्र महिमानं हरयो देव ते महः । रथे वहन्तु बिभ्रतः ॥ ४ ॥

आ । ते । इन्द्र । महिमानम् । हरयः । देव । ते । महः । रथे । वहन्तु । बिभ्रतः ॥ ४ ॥

**वेङ्कट०** आ वहन्तु तव इन्द्र! महिमानम् हरयः । [3]देव! ते[3] महः [4]अश्वा आ वहन्तु[4] रथे धारयन्तः ॥ ४ ॥

इन्द्रं गृणीष उं स्तुषे महाँ उग्र ईशानकृत् । एहि नः सुतं पिब ॥ ५ ॥

इन्द्र । गृणीषे । ऊँ इति । स्तुषे । महान् । उग्रः । ईशानऽकृत् । आ । इहि । नः । सुतम् । पिब ॥ ५ ॥

**वेङ्कट०** इन्द्र! उच्यसे स्तूयसे, महान् उद्गूर्णः ऐश्वर्यकृत् । आ इहि, नः सुतम् पिब ॥ ५ ॥

सुतावन्तस्त्वा वयं प्रयस्वन्तो हवामहे । इदं नो बर्हिरासदे ॥ ६ ॥

सुतऽवन्तः । त्वा । वयम् । प्रयस्वन्तः । हवामहे । इदम् । नः । बर्हिः । आऽसदे ॥ ६ ॥

**वेङ्कट०** सुतसोमवन्तः हविष्मन्तः च त्वा वयम् हवामहे । इदम्[5] अस्माकम् बर्हिः आसनाय[6] तवेति[7] ॥ ६ ॥

[8]इति षष्ठाष्टके चतुर्थाध्याये षट्चत्वारिंशो वर्गः[8] ॥

यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् । तं त्वा वयं हवामहे ॥ ७ ॥

यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् । तम् । त्वा । वयम् । हवामहे ॥ ७ ॥

**वेङ्कट०** यत् चित् हि बहूनाम् भवसि इन्द्र! समानः त्वम् । तथाऽपि तम् त्वा वयम् हवामहे ॥ ७ ॥

इदं ते सोम्यं मध्वधुक्षन्नद्रिभिर्नरः । जुषाण इन्द्र तत् पिब ॥ ८ ॥

इदम् । ते । सोम्यम् । मधु । अधुक्षन् । अद्रिऽभिः । नरः । जुषाणः । इन्द्र । तत् । पिब ॥ ८ ॥

---

१. तु. ऋ ८,६,३९. २. तु. ऋ ८,१३,१५. ३-३. नास्ति वि[२]. ४-४. श्रावयतु मूको. ५. इह मूको. ६. आसताय मूको. ७. तमवे° मूको. ८-८. नास्ति मूको.

वेङ्कट० इदम् ते सोममयम् मधु अधुक्षन् सुधियः ग्रावभिः। सेवमानः[1] इन्द्र! पिब तत् ॥ ८ ॥

विश्वाँ अर्यो विपश्चितोऽति ख्यस्तूयमा गहि । अस्मे धेहि श्रवो बृहत् ॥ ९ ॥

विश्वान्। अर्यः। विपःऽचितः। अति। ख्यः। तूयम्। आ। गहि। अस्मे इति। धेहि। श्रवः। बृहत् ॥९॥

वेङ्कट० विश्वान् स्वामी [2]विपश्चितः अति ख्यः अतीत्य अस्मान् एव पश्य[2]। तदर्थं क्षिप्रम् [3]आ गहि[3], अस्मासु धेहि[4] च[5] महत् अन्नम् ॥ ९ ॥

दाता मे पृषतीनां राजा हिरण्यवीनाम् । मा देवा मघवा रिषत् ॥ १० ॥

दाता। मे। पृषतीनाम्। राजा। हिरण्यऽवीनाम्। मा। देवाः। मघऽवा। रिषत् ॥ १० ॥

वेङ्कट० प्रदाता मे हिरण्यपरिवीतानाम्[6] पृषतीनाम् राजा धनवान् हे देवाः! मा [7]रिष्टो भवतु[7] ॥ १० ॥

सहस्रे पृषतीनामधि श्चन्द्रं बृहत् पृथु । शुक्रं हिरण्यमा ददे ॥ ११ ॥

सहस्रे। पृषतीनाम्। अधि। चन्द्रम्। बृहत्। पृथु। शुक्रम्। हिरण्यम्। आ। ददे ॥ ११ ॥

वेङ्कट० पृषद्वर्णानां गवाम् [8]सहस्रे उपरि[8] स्थितम् आह्लादकम् उच्छ्रितम् [9]विस्तीर्णम् उज्ज्वलम् हिरण्यम्[9] अहम् आ ददे ॥ ११ ॥

नपातो दुर्गहस्य मे सहस्रेण सुराधसः । श्रवो देवेष्वक्रत ॥ १२ ॥

नपातः। दुःऽगहस्य। मे। सहस्रेण। सुऽराधसः। श्रवः। देवेषु। अक्रत ॥ १२ ॥

वेङ्कट० व्यपेक्षावर्जितस्य दुर्गहस्य दुःखं गाहमानस्य[10] दरिद्रस्य मे गवाम् सहस्रेण सह शोभनधना राजानः अन्नम् देवेषु प्रीतेषु अग्रतः प्रायच्छन्निति [11]कञ्चन राजानं निर्दिशति[11] ॥१२॥

[1]इति षष्ठाष्टके चतुर्थाध्याये सप्तचत्वारिंशो वर्गः[1] ॥

[ ६६ ]

[1]कलिः प्रागाथ ऋषिः। इन्द्रो देवता। प्रगाथश्छन्दः (=विषमा बृहत्यः, समाः सतोबृहत्यः), पञ्चदशी अनुष्टुप्[1]।

तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ १ ॥

---

१. सेच° मूको. २-२. विपश्चिनोति मुख्योऽतीत्यस्मानेव पश्यत मूको. ३-३. नास्ति मूको. ४. देहि मूको. ५. नास्ति वि°. ६. °पीता° मूको. ७-७. रिष्टेष्टावतु मूको. ८-८. °स्रे लं ··· मुप° ९-९. °र्णज्व( °ज्वा अ° )लस्थिर° मूको. १०. दाह° मूको. ११-११. किञ्च ··· राजा° मूको.

तरःऽभिः । वः । विदत्ऽवसुम् । इन्द्रम् । सऽबाधः । ऊतये ।
बृहत् । गायन्तः । सुतऽसोमे । अध्वरे । हुवे । भरम् । न । कारिणम् ॥ १ ॥

**वेङ्कट०** वेदयद्वसुम् इन्द्रम् बाधासहिताः रक्षणार्थम् बृहत् साम गायन्तः[1] सुतसोमे यज्ञे परिचरतेति शेषः। तम् अहं युष्मदर्थं ह्वयामि भर्तारं कुटुम्बिनम् इव करणशीलम् इति ॥ १ ॥

न यं दुध्रा वरन्ते न स्थिरा मुरो मदे सुशिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ २ ॥

न । यम् । दुध्राः । वरन्ते । न । स्थिराः । मुरः । मदे । सुऽशिप्रम् । अन्धसः ।
यः । आऽदृत्य । शशमानाय । सुन्वते । दाता । जरित्रे । उक्थ्यम् ॥ २ ॥

**वेङ्कट०** न यम् दुर्धराः वारयन्ति[2], न च स्थिराः मनुष्याः सोमस्य मदेन सुहनुम्[3], यः[4] आदरं कृत्वा भजमानाय सुन्वते स्तुवते[5] च प्रशस्यं धनम् दाता इति ॥ २ ॥

यः शक्रो मृक्षो अश्व्यो यो वा कीजो हिरण्ययः ।
स ऊर्वस्य रेजयत्यपावृतिमिन्द्रो गव्यस्य वृत्रहा ॥ ३ ॥

यः । शक्रः । मृक्षः । अश्व्यः । यः । वा । कीजः । हिरण्ययः ।
सः । ऊर्वस्य । रेजयति । अपऽवृतिम् । इन्द्रः । गव्यस्य । वृत्रऽहा ॥ ३ ॥

**वेङ्कट०** यः शक्रः स्तोतॄणां परिचारकः[6] परिचरणीयो वा अक्षेषु कुशलः, यः वा कीजः[7] इति अद्भुतमाह। किम् अस्य जन्मेत्यद्भुतं दृष्ट्वा पृच्छन्ति। हिरण्मयशरीरः, सः महतः गोसङ्घस्य अपवरणम् कम्पयति विवृतद्वारं व्रजं[8] करोति इन्द्रः वृत्रहा ॥ ३ ॥

निखातं चिद्यः पुरुसंभृतं वसूदिद्वपति दाशुषे ।
वज्री सुशिप्रो हर्यश्व इत् करदिन्द्रः क्रत्वा यथा वशत् ॥ ४ ॥

निऽखातम् । चित् । यः । पुरुऽसंभृतम् । वसु । उत् । इत् । वपति । दाशुषे ।
वज्री । सुऽशिप्रः । हरिऽअश्वः । इत् । करत् । इन्द्रः । क्रत्वा । यथा । वशत् ॥ ४ ॥

**वेङ्कट०** भूम्याम् निखातम् अपि बहु च यत् तत् संभृतम्[9] वसु यजमानाय यः दातुम् उत् वपति। वज्री सुहनुः हर्यश्वः एव यत् करोति इन्द्रः, कर्मणा यथा कर्तुं कामयते ॥ ४ ॥

---

१. गायत मूको. २. °यन्तु मूको. ३. सह° मूको. ४. व मूको. ५ °वन्तः मूको. ६. °रकं मूको. ७. गीशः मूको. ८. व्रतं मूको. ९. पुरुसं° मूको.

यद् वावन्थ पुरुष्टुत पुरा चिच्छूर नृणाम् ।
वयं तत् त इन्द्र सं भरामसि यज्ञमुक्थं तुरं वचः ॥ ५ ॥

यत् । ववन्थ । पुरुऽस्तुत । पुरा । चित् । शूर । नृणाम् ।
वयम् । तत् । ते । इन्द्र । सम् । भरामसि । यज्ञम् । उक्थम् । तुरम् । वचः ॥ ५ ॥

वेङ्कट० यत् अचीकमथाः[1] पुरुष्टुत! पुरा [2]चित् विक्रान्त![2] नृणाम् [3]सकाशात्, वयम्[3] तत् ते इन्द्र! सम्प्रति सम् भरामः यज्ञम् शस्त्रं च क्षिप्रं वाच्यम्[4] इति ॥ ५ ॥

[5]इति षष्ठाष्टके चतुर्थाध्याये अष्टाचत्वारिंशो वर्गः[5] ॥

सचा सोमेषु पुरुहूत वज्रिवो मदाय द्युक्ष सोमपाः ।
त्वमिद्धि ब्रह्मकृते काम्यं वसु देष्ठः सुन्वते भुवः ॥ ६ ॥

सचा । सोमेषु । पुरुऽहूत । वज्रिऽवः । मदाय । द्युक्ष । सोमऽपाः ।
त्वम् । इत् । हि । ब्रह्मऽकृते । काम्यम् । वसु । देष्ठः । सुन्वते । भुवः ॥ ६ ॥

वेङ्कट० सह सोमेषु पुरुहूत! वज्रिन्! सोमं पातुम् [6]मदाय हे द्युमन्![6] सोमस्य पातः!। त्वम् एव हि स्तोत्रकृते कमनीयम् वसु दातृतमः सुन्वते भवसि। सर्वं धनं प्रयच्छसीत्यर्थः ॥ ६ ॥

वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।
तस्मा उ अद्य समना सुतं भरा नूनं भूषत श्रुते ॥ ७ ॥

वयम् । एनम् । इदा । ह्यः । अपीपेम । इह । वज्रिणम् ।
तस्मै । ऊँ इति । अद्य । समना । सुतम् । भर । आ । नूनम् । भूषत । श्रुते ॥ ७ ॥

वेङ्कट० वयम् एनम् इदानीम् ह्यः च आप्याययामः अत्र वज्रिणम्। तस्मै[7] [8]एव अद्य[8] सङ्ग्रामार्थम् सुतम् सोमम् भर। आ[9] भूषत आभवतु[10] आगच्छतु सम्प्रति [11]स्तोत्रे श्रुते[11] ॥ ७ ॥

वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
सेमं नः स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥ ८ ॥

वृकः । चित् । अस्य । वारणः । उराऽमथिः । आ । वयुनेषु । भूषति ।
सः । इमम् । नः । स्तोमम् । जुजुषाणः । आ । गहि । इन्द्र । प्र । चित्रया । धिया ॥ ८ ॥

---

१. अचीकम मूको. २-२. चि ··· मूको. ३-३. विशावयम् मूको. ४. प्राच्यम् मूको. ५-५. नास्ति मूको. ६-६. महाय मदत मूको. ७. तस्मातू मूको. ८-८. सावाद्य मूको. ९. नास्ति मूको. १०. भवतु मूको. ११. °त्रे ··· ते मूको.

वेङ्कट० स्तेनः अपि इन्द्रस्य वारयिता गच्छतां[1] बहूनां मथिता[2] आ भवति मार्गेषु, आनुकूल्यम् एव भजते। सः त्वम् इमम् नः स्तोमम्[3] सेवमानः आगच्छ। इन्द्र! चित्रम् कर्म उद्दिश्य प्र आगच्छेति ॥ ८ ॥

कदू न्व१॒॑स्याकृ॑त॒मिन्द्र॑स्यास्ति॒ पौंस्य॑म् ।
केनो॒ नु कं॒ श्रोम॑तेन॒ न शु॑श्रुवे ज॒नुषः॒ परि॑ वृत्र॒हा ॥ ९ ॥

कत् । ऊँ इति॑ । नु । अ॒स्य॒ । अकृ॑तम् । इन्द्र॑स्य । अ॒स्ति॒ । पौंस्य॑म् ।
केनो॒ इति॑ । नु । क॒म् । श्रोम॑तेन । न॑ । शु॒श्रु॒वे॒ । ज॒नुषः॑ । परि॑ । वृ॒त्र॒ऽहा ॥ ९ ॥

वेङ्कट० किम् नु खलु अस्य अकृतम् इन्द्रस्य भवति वीर्यम्। सर्वमेव करोति। केन नु खलु श्रवणीयेन वीर्येण न श्रूयते[4] जन्मनः प्रभृति वृत्रहा। यद्यद् इतः पूर्वं चकार सर्वेण एव तेन कर्मणा श्रूयत इति ॥ ९ ॥

कदू॑ म॒हीरधृ॑ष्टा अस्य॒ तवि॑षीः॒ कदु॑ वृत्र॒घ्नो अस्तृ॑तम् ।
इन्द्रो॒ विश्वा॑न् बे॒कुनाटाँ॑ अह॒र्दृश॑ उ॒त क्रत्वा॑ प॒णीँर॒भि ॥ १० ॥

कत् । ऊँ इति॑ । म॒हीः । अधृ॑ष्टाः । अ॒स्य॒ । तवि॑षीः । कत् । ऊँ इति॑ । वृ॒त्र॒ऽघ्नः । अस्तृ॑तम् ।
इन्द्रः॑ । विश्वा॑न् । बे॒कु॒ऽनाटा॑न् । अ॒ह॒ःऽदृशः॑ । उ॒त । क्रत्वा॑ । प॒णीन् । अ॒भि ॥ १० ॥

वेङ्कट० कदा नु खलु अस्य इन्द्रस्य महान्ति बलानि धर्षणीयानि(?) अधर्षितानि आसन्। कदा खलु वृत्रघ्नः[5] भेत्तव्यम् अस्तृतम्[6] भवति। अत्र यास्कः (६,२६) — "बेकनाटाः खलु कुसीदिनो भवन्ति। द्विगुणकारिणो वा। द्विगुणदायिनो वा। द्विगुणं कामयन्त इति वा। 'इन्द्रो विश्वान्°।' इन्द्रः सर्वान् बेकनाटान् अहर्दृशः[7] सूर्यदृशो य इमान्यहानि पश्यन्ति न पराणीति वा। अभिभवति कर्मणा पणींश्च वणिजः" इति ॥ १० ॥

[8]इति षष्ठाष्टके चतुर्थाध्याये एकोनपञ्चाशो वर्गः[8] ॥

व॒यं घा॑ ते॒ अपू॑र्व्येन्द्र॒ ब्रह्मा॑णि वृत्रहन् ।
पु॒रू॒तमा॑सः पुरुहूत वज्रिवो भृ॒तिं न प्र भ॑रामसि ॥ ११ ॥

व॒यम् । घ॒ । ते॒ । अपू॑र्व्या । इन्द्र॑ । ब्रह्मा॑णि । वृ॒त्र॒ऽह॒न् ।
पु॒रु॒ऽतमा॑सः । पु॒रु॒ऽहू॒त॒ । व॒ज्रि॒ऽवः॒ । भृ॒तिम् । न । प्र । भ॒रा॒म॒सि॒ ॥ ११ ॥

---

१. °च्छता मूको. २. पथिका मूको. ३. स्तोतः मूको. ४. श्रद्धते वि[2]; श्रवं दधते अ[1].
५. °घ्नं मूको. ६. अव्रत मूको. ७. नास्ति मूको. ८-८. नास्ति मूको.

**वेङ्कट०** वयम् खलु ते इन्द्र! नूतनानि ब्रह्माणि वृत्रहन्![1] बहुतमाः अनेके वयम् पुरुहूत! वज्रिन्! कर्मकराय[2] भृतिम्[3] इव प्र भरामः[4] ॥ ११ ॥

पूर्वीश्चिद्धि त्वे तुविकूर्मिन्नाशसो हवन्त इन्द्रोतयः ।
तिरश्चिदर्यः सवना वसो गहि शविष्ठ श्रुधि मे हवम् ॥ १२ ॥

पूर्वीः । चित् । हि । त्वे इति । तुविऽकूर्मिन् । आऽशसः । हवन्ते । इन्द्र । ऊतयः ।
तिरः । चित् । अर्यः । सवना । आ । वसो इति । गहि । शविष्ठ । श्रुधि । मे । हवम् ॥ १२ ॥

**वेङ्कट०** बहूनि हि आशंसनानि त्वयि बहुकर्मन्![5] स्थितानि[6] रक्षाश्च[7] स्तोतारः हवन्ते। तिरस्कृत्य अरेः सवनानि अरीन् वा आ गच्छ वासयितः!। बलवत्तम! शृणु मे ह्वानम् ॥ १२ ॥

वयं घा ते त्वे इद्विन्द्र विप्रा अपि ष्मसि ।
नहि त्वदन्यः पुरुहूत कश्चन मघवन्नस्ति मर्डिता ॥ १३ ॥

वयम् । घ । ते । त्वे इति । इत् । ऊँ इति । इन्द्र । विप्राः । अपि । स्मसि ।
नहि । त्वत् । अन्यः । पुरुऽहूत । कः । चन । मघऽवन् । अस्ति । मर्डिता ॥ १३ ॥

**वेङ्कट०** वयम् खलु तव स्वभूताः। तथा सति त्वयि एव इन्द्र! मेधाविनः अपि भवामः। नहि त्वत् अन्यः इति स्पष्टम् ॥ १३ ॥

त्वं नो अस्या अमतेरुत क्षुधोऽभिशस्तेरव स्पृधि ।
त्वं न ऊती तव चित्रया धिया शिक्षा शचिष्ठ गातुवित् ॥ १४ ॥

त्वम् । नः । अस्याः । अमतेः । उत । क्षुधः । अभिऽशस्तेः । अव । स्पृधि ।
त्वम् । नः । ऊती । तव । चित्रया । धिया । शिक्ष । शचिष्ठ । गातुऽवित् ॥ १४ ॥

**वेङ्कट०** अस्याः दुर्मतेः दारिद्र्यकृतायाः तथा क्षुधः अभिशस्तेः च अव[8] स्पृधि विमोचय। त्वम् अस्मभ्यम्[9] देहि[10] हि तव रक्षणेन चित्रेण कर्मणा शचिष्ठ![11] मार्गज्ञः ॥ १४ ॥

सोम इद्वः सुतो अस्तु कलयो मा बिभीतन ।
अपेदेष ध्वस्मायति स्वयं घैषो अपायति ॥ १५ ॥

---

१. °ब्रह्मा मूको. २. कर्म कारय वि[२]. ३. हर्तं मूको. ४. हरा° अ[१]. ५. °र्भ मूको. ६. स्थिरतानि मूको. ७. ररक्षा° मूको. ८. नास्ति मूको. ९. असुह्यत् मूको. १०. देवि मूको. ११. शयिषु वि[२]; शयिषू अ[१].

सोमः । इत् । वः । सुतः । अस्तु । कलयः । मा । बिभीतन ।

अप । इत् । एषः । ध्वस्मा । अयति । स्वयम् । घ । एषः । अप । अयति ॥ १५ ॥

**वेङ्कट०** सोमः एव क्षिप्रम् इन्द्रार्थं युष्माकम् सुतः भवतु । हे कलयः![2] । पुत्राणां ज्ञातीनां च [2]सम्बोधनम्। मा बिभीतन[2] । अप गच्छतु अयं ध्वंसनशीलः राक्षसः स्वयम् एव ॥ १५ ॥

[3]इति षष्ठाष्टके चतुर्थाध्याये पञ्चाशो वर्गः[3] ॥

[ ६७ ]

[1]मत्स्यः साम्मद ऋषिः, मैत्रावरुणिर्मान्यः, बहवो वा मत्स्या जालनद्धाः । आदित्या देवता, दशम्यादिद्वादश्यन्तानाम् अदितिः । गायत्री छन्दः[1] ।

त्यान् नु क्षत्रियाँ अव आदित्यान् याचिषामहे । सुमृळीकाँ अभिष्टये ॥ १ ॥

त्यान् । नु । क्षत्रियान् । अवः । आदित्यान् । याचिषामहे । सुऽमृळीकान् । अभिष्टये ॥ १ ॥

**वेङ्कट०** शौनकः[4] — ऋषिः [5]सांमदो मत्स्यः । ऋषिमस्य मैत्रावरुणिं वा मत्स्यानेव वा विदुः सूक्तेऽस्मिन् — त्यान् नु क्षत्रियान् अवः ।

तान् क्षिप्रं[5] जात्या क्षत्रियान् रक्षणम् अदित्यान् याचिषामहे सुखयितॄन् अभिगमनाय अभिमताय वा । जालात् [6]निर्गमनं प्रार्थितम्[6] ॥ १ ॥

मित्रो नो अत्यंहतिं वरुणः पर्षदर्यमा । आदित्यासो यथा विदुः ॥ २ ॥

मित्रः । नः । अति । अंहतिम् । वरुणः । पर्षत् । अर्यमा । आदित्यासः । यथा । विदुः ॥ २ ॥

**वेङ्कट०** मित्रादयः अस्मान् अंहतिम् जालम्[7] अति नयन्तु, यथा जानन्ति ॥ २ ॥

तेषां हि चित्रमुक्थ्यं१ वरूथमस्ति दाशुषे । आदित्यानामरंकृते ॥ ३ ॥

तेषाम् । हि । चित्रम् । उक्थ्यम् । वरूथम् । अस्ति । दाशुषे । आदित्यानाम् । अरम्ऽकृते ॥३॥

**वेङ्कट०** तेषाम् हि चायनीयं[8] प्रशस्यं धनं विद्यते आदित्यानाम् प्रयच्छते पर्याप्तकारिणे यजमानाय ॥ ३ ॥

महि वो महतामवो वरुण मित्रार्यमन् । अवांस्या वृणीमहे ॥ ४ ॥

महि । वः । महताम् । अवः । वरुण । मित्र । अर्यऽमन् । अवांसि । आ । वृणीमहे ॥ ४ ॥

---

१. कलय मूको. २-२. °धनमन्विहितान् वि[2]; °धनमान्विहितान् अ[1]. ३-३. नास्ति मूको. ४. तु. बृदे ६,८७-९१. ५-५. मादान् मदस्य हर्षस्य मैत्रावरुणिं व वा मत्स्यानेव विदुः सूक्तरन् । त्या ··· क्षत्रिया अव तान् क्षिप्तम् मूको, ६-६. °मन प्रास्थित मूको. ७. जलम् मूक ८. याचतीयम् मूको.

वेङ्कट० महत् वः महताम् रक्षणम् वरुण! मित्र! अर्यमन्!। तथा सति भवतां रक्षणानि आ वृणीमहे ॥ ४ ॥

जीवान् नो अभि धेतनादित्यासः पुरा हथात्। कद्ध स्थ हवनश्रुतः ॥ ५ ॥

जीवान्। नः। अभि। धेतन। आदित्यासः। पुरा। हथात्। कत्। ह। स्थ। हवनऽश्रुतः ॥५॥

वेङ्कट० यास्कः ( ६,२७ ) — 'जीवतो नोभिधावताऽऽदित्याः! पुरा[1] हननात्। क्व नु [2]स्थ ह्वानश्रुतः![2] इति। मत्स्यानां जालमापन्नानाम् एतद् आर्षं वेदयन्ते' इति ॥ ५ ॥

[3]इति षष्ठाष्टके चतुर्थाध्याये एकपञ्चाशो वर्गः[3] ॥

यद्वः श्रान्ताय सुन्वते वरूथमस्ति यच्छर्दिः। तेना नो अधि वोचत ॥ ६ ॥

यत्। वः। श्रान्ताय। सुन्वते। वरूथम्। अस्ति। यत्। छर्दिः। तेन। नः। अधि। वोचत ॥

वेङ्कट० यत् वः श्रान्ताय सुन्वते वरणीयं धनम् अस्ति, यत् च गृहम्, तेन अस्मान् अधि ब्रूत। तदुभयं दत्त्वाऽधिवचनं च कुरुत ॥ ६ ॥

अस्ति देवा अंहोरुर्वस्ति रत्नमनागसः। आदित्या अद्भुतैनसः ॥ ७ ॥

अस्ति। देवाः। अंहोः। उरु। अस्ति। रत्नम्। अनागसः। आदित्याः। अद्भुतऽएनसः[4] ॥७॥

वेङ्कट० अस्ति देवाः! आहन्तुः पापशीलस्य बहु हिंसनम्। अस्ति रत्नम्[5] अपापस्य आदित्याः! अभूतपापाः, यद् वा[6] ये पापकृतां महद् एनः कुर्वन्ति ते तथोक्ताः ॥ ७ ॥

मा नः सेतुः सिषेदयं महे वृणक्तु नस्परि। इन्द्र इद्धि श्रुतो वशी ॥ ८ ॥

मा। नः। सेतुः। सिसेत्। अयम्। महे। वृणक्तु। नः। परि। इन्द्रः। इत्। हि। श्रुतः। वशी ॥

वेङ्कट० मा अस्मान् अयम् सेतुः जालं बध्नातु। महते कर्मणे अस्मान् परि वृणक्तु वर्जयतु। इन्द्रः एव विश्रुतः स्वतन्त्रो जालात् मोचयतु इति ॥ ८ ॥

मा नो मृचा रिपूणां वृजिनानामविष्यवः। देवा अभि प्र मृक्षत ॥ ९ ॥

मा। नः। मृचा। रिपूणाम्। वृजिनानाम्। अविष्यवः। देवाः। अभि। प्र। मृक्षत ॥ ९ ॥

वेङ्कट० मृचिर्हिंसाकर्मा। 'यत् क्षुरेण मर्चयता' ( शौ ८, २, १७ ) इति मन्त्रः। मा अस्मान्

---

१. अनु परा वि[2]; अनुपुरा अ[1]. २-२ स्व वा श्रुतः मूको. ३-३. नास्ति मूको. ४, प्र३ घा ष१ वा सं३ वेति विमृश्यम्। ५. परम मूको. ६ वः मूको.

रिपूणाम् हिंसकानाम् मृचा जालेन । ते [1]अभि प्र मृक्षत[1] हे अविष्यवः![2] देवाः! । अभिप्रमर्शनम्[3] उपरि जालस्य प्रेरणम् ॥ ९ ॥

उ॒त त्वाम॑दिते मह्य॒हं दे॒व्युप॑ ब्रुवे । सु॒मृ॒ळी॒काम॒भिष्ट॑ये ॥ १० ॥

उ॒त । त्वाम् । अ॒दि॒ते॒ । म॒हि॒ । अ॒हम् । दे॒वि॒ । उप॑ । ब्रु॒वे॒ । सु॒ऽमृ॒ळी॒काम् । अ॒भिष्ट॑ये ॥ १० ॥

**वेङ्कट०** आदित्यानां मातुरियं स्तुतिः मत्स्यानामन्यतमस्येति ॥ १० ॥

[4]इति षष्ठाष्टके चतुर्थाध्याये द्विपञ्चाशो वर्गः[4] ॥

पर्षि॑ दी॒ने ग॑भी॒र आँ उग्र॑पुत्रे॒ जिघां॑सतः । माकि॑स्तो॒कस्य॑ नो रिषत् ॥ ११ ॥

पर्षि॑ । दी॒ने । ग॒भी॒रे । आ । उग्र॑ऽपुत्रे । जिघां॑सतः । माकिः॑ । तो॒कस्य॑ । नः॒ । रि॒ष॒त् ॥ ११ ॥

**वेङ्कट०** आ पर्षि क्षीणे[5] उदके । 'गभीरम्'[6] (निघ १,१२) इति उदकनाम । उद्गूर्णपुत्रे![7] जिघांसतः शत्रोः । मा कश्चित् अस्माकं पुत्रं हिंसीत् ॥ ११ ॥

अ॒ने॒हो न॑ उरुव्रज॒ उरू॑चि॒ वि प्रस॑र्तवे । कृ॒धि तो॒काय॑ जी॒वसे॑ ॥ १२ ॥

अ॒ने॒हः । न॒ः । उ॒रु॒ऽव्र॒जे॒ । उरू॑चि । वि । प्र॒ऽस॑र्तवे । कृ॒धि । तो॒काय॑ । जी॒वसे॑ ॥ १२ ॥

**वेङ्कट०** अनेहसः अस्मान् हे विस्तीर्णगमने! उरूचि! दूरं हीयं गता भवति, तथा उरुत्वं च अञ्चति । प्रसरणाय वि कुरु [8]जालात् अपनय तोकार्थम् जीवितुम्[8] । यथा जीवेम वयम् पुत्रान् रक्षितुम् ॥ १२ ॥

ये मू॒र्धान॑ः क्षि॒तीना॒मद॑ब्धास॒ः स्वय॑शसः । व्र॒ता रक्ष॑न्ते अ॒द्रुह॑ः ॥ १३ ॥

ये । मू॒र्धान॑ः । क्षि॒तीना॑म् । अद॑ब्धासः । स्वऽय॑शसः । व्र॒ता । रक्ष॑न्ते । अ॒द्रुह॑ः ॥ १३ ॥

**वेङ्कट०** ये उच्छ्रिताः प्रजानाम् अहिंसिता स्वकीर्तयः[9] कर्माणि रक्षन्ते द्रोहरहिताः ॥ १३ ॥

ते न॑ आ॒स्नो वृका॑णा॒मादि॑त्यासो मु॒मोच॑त । स्ते॒नं ब॒द्धमि॑वादिते ॥ १४ ॥

ते । न॒ः । आ॒स्नः । वृका॑णाम् । आदि॑त्यासः । मु॒मोच॑त । स्ते॒नम् । ब॒द्धम्ऽइ॑व । अ॒दि॒ते॒ ॥ १४ ॥

**वेङ्कट०** ते नः अस्मान् आस्यात्[10] हिंसकानाम् आदातॄणाम् वा आदित्याः! मुञ्चत त्वं[11] च अदिते! स्तेनम् इव बद्धम्[12] ॥ १४ ॥

अपो॒ षु ण॑ इ॒यं शरु॒रादि॑त्या॒ अप॑ दुर्म॒तिः । अ॒स्मदे॒त्वज॑घ्नुषी ॥ १५ ॥

---

१. हि वृक्षत मूको. २. ऋष्यः वि[2]; वृष्टयादयः अ[1]. ३. अग्निप्रदर्श अग्निप्रमर्श° अ[1] ४-४. नास्ति मूको. ५. क्षीणम् मूको. ६. हीरम् मूको. ७. उद्गीर्णे पु° मूको. ८-८. जालानपिनयने( ते अ[1] )कार्थं जीवि° मूको. ९ स्वकीर्णय मूको. १०. अस्मान् वि[2]; अस्याद अ[1]. ११. तं मूको. १२. बन्धम् मूको.

अपो इति । सु । नः । इयम् । शरुः । आदित्याः । अप । दुःऽमतिः । अस्मत् । एतु । अजघ्नुषी ॥

वेङ्कट० अस्मत्तः अप गच्छतु[1] आदित्याः! अहिंसन्ती[2] जालिकस्य[3] इयम् शरुः[4] प्रसितिः [5]दुर्मतिः च[5] ॥ १५॥

[6]इति षष्ठाष्टके चतुर्थाध्याये त्रिपञ्चाशो वर्गः[6] ॥

शश्वद्धि वः सुदानव आदित्या ऊतिभिर्वयम् । पुरा नूनं बुभुज्महे ॥ १६ ॥

शश्वत् । हि । वः । सुऽदानवः । आदित्याः । ऊतिऽभिः । वयम् । पुरा । नूनम् । बुभुज्महे ॥१६॥

वेङ्कट० शश्वत् हि युष्माकम् हे सुदानाः! आदित्याः! रक्षणैः वयम् भुञ्ज्महे पुरा सम्प्रति च ॥ १६ ॥

शश्वन्तं हि प्रचेतसः प्रतियन्तं चिदेनसः । देवाः कृणुथ जीवसे ॥ १७ ॥

शश्वन्तम् । हि । प्रऽचेतसः । प्रतिऽयन्तम् । चित् । एनसः । देवाः । कृणुथ । जीवसे ॥ १७॥

वेङ्कट० बहुमपि हि जनं[7] हे सुमतयः! प्रतिगच्छन्तं[8] शत्रून् पापकृतः देवाः! कुरुत जीवनाय ॥ १७॥

तत् सु नो नव्यं सन्यस आदित्या यन्मुमोचति । बन्धाद् बद्धमिवादिते ॥१८॥

तत् । सु । नः । नव्यम् । सन्यसे । आदित्याः । यत् । मुमोचति । बन्धात् । बद्धम्ऽइव । अदिते ॥

वेङ्कट० तत्[9] सुष्ठु अस्माकं नवतरम् सम्भजनाय[10] भवतु, आदित्याः! यत् अस्मान् मुञ्चति बन्धात्[11] बद्धम्[12] इव अदिते! च ॥ १८ ॥

नास्माकमस्ति तत् तर आदित्यासो अतिष्कदे । यूयमस्मभ्यं मृळत ॥ १९ ॥

न । अस्माकम् । अस्ति । तत् । तरः । आदित्यासः । अतिऽस्कदे । यूयम् । अस्मभ्यम् । मृळत ॥

वेङ्कट० न अस्माकम् अस्ति स वेगो हे आदित्याः!, यो वेगः प्रसितेः अतिस्कन्दनाय भवति। तथा सति यूयम् अस्मभ्यम् सुखं कुरुत ॥ १९ ॥

मा नो हेतिर्विवस्वत आदित्याः कृत्रिमा शरुः । पुरा नु जरसो वधीत् ॥२०॥

मा । नः । हेतिः । विवस्वतः । आदित्याः । कृत्रिमा । शरुः । पुरा । नु । जरसः । वधीत् ॥२०॥

वेङ्कट० मा अस्मान् वैवस्वतस्य[13] यमस्य हेतिभूता कृत्रिमा प्रसितिः पुरा नु जरसः वधीत्। यूयमिव[14] जीर्णाः स्याम अहताः[15] ॥ २० ॥

---

१. °च्छन्तु वि[2]. २. °सन्ति मूको. ३. अधिकस्य मूको. ४. शत्रु मूको. ५-५. °र्तीश्च मूको. ६-६. नास्ति मूको. ७. धनं मूको. ८. °च्छन्त मूको. ९ मदत् वि[2]; मदत् तत् अ[1]. १०. संभजे नः वि[2]; संभजे नोय अ[1]. ११. बन्धान् मूको. १२. बन्धम मूको. १३. वैस्वतः स्व मूको. १४. °यमेव मूको. १५. हता मूको.

वि षु द्वेषो व्यंहतिमादित्यासो वि संहितम् । विष्वग्वि वृहता रपः ॥ २१ ॥

वि । सु । द्वेषः । वि । अंहतिम् । आदित्यासः । वि । सम्ऽहितम् । विष्वक् । वि । वृहत । रपः ॥ २१ ॥

**वेङ्कट०** वि वृहत द्वेषः, [1]वि वृहत अंहतिम् आदित्याः! संहितम्[1] जालं च, विषूचीनम् वि वृहत पापम् इति ॥ २१ ॥

[2]इति षष्ठाष्टके चतुर्थाध्याये चतुःपञ्चाशो वर्गः[2] ॥

व्याख्यत् पौत्रश्चिन्तयन्त्यास्तुरीयं माधवाह्वयः ।
अध्यायमष्टके षष्ठे शब्दैः कतिपयैरिति ॥ १ ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने षष्ठाष्टके चतुर्थोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये षष्ठाष्टके चतुर्थोऽध्यायः ॥



१-१. विद्वान् ··· आदित्या संहतिम् मूको. २-२. नास्ति मूको.

अथ पञ्चमोऽध्यायः ।

वेङ्कट०

'आ त्वा रथं यथोतये' व्याचिख्यासति माधवः ।
अतिच्छन्दस्सु वक्तव्यं द्विपदासु च दर्शयन् ॥ १ ॥

त्रयः पादा जागताः स्युरष्टकौ च तथा परौ ।
आहुस्तामतिजगतीं सा 'प्र वो मुहे मतयः'[1] ॥ २ ॥

पदानि सप्त शक्वर्याः सा 'प्रो ष्वस्मै पुरोरथम्'[2] ।
पदानि तत्राष्टकानि शृणुताप्यतिशक्वरीम् ॥ ३ ॥

पदे षोडशके पूर्वे जागतं च तथाऽष्टके ।
'साकं जातः क्रतुने(ना'[3] इ)ति पदैः पञ्चभिरन्विता ॥ ४ ॥

अष्टेस्त्रयः षोडशका अष्टकौ च तथोत्तमौ ।
'त्रिकद्रुकेषु महिषः'[4] इत्यष्टिं कवयो विदुः ॥ ५ ॥

'अग्निं होतारम्'[5] अत्यष्टिर्जागतावष्टकास्त्रयः ।
जागताश्चाष्टकश्चाथ[6] सप्त पादा भवन्ति ते ॥ ६ ॥

'अवर्मह इन्द्र'[7] धृतिर्जागतावष्टकास्त्रयः ।
षोडशोऽथाष्टकश्चान्त्यः[8] सप्त पादाः प्रकीर्तिताः ॥ ७ ॥

सप्तैवातिधृतेः पादाः 'स हि शर्धो न मारुतम्'[9] ।
द्वादशकषोडशकावष्टका जागतोऽष्टकः ॥ ८ ॥

चतुर्दशेत्थं कविभिः पुराणैः
छन्दांसि दृष्टानि समीरितानि ।
[10]इयन्ति दृष्टानि तु[10] संहितायाम्
अन्यानि[11] वेदेष्वपरेषु सन्ति ॥ ९ ॥

चतुरधिकच्छन्दांसि[12] दर्शितानि चतुर्दश ।
यानि दशतयीष्वासन्नुत्तराणि सुभेषजे ॥ १० ॥

---

१. ऋ ५, ८७,१. २. ऋ १०,१३३,१. ३. ऋ २,२२,३. ४. ऋ २,२२,१. ५. ऋ १, १२८,८. ६. °कस्त्वाथ वेंऋअ. ७. ऋ १,१३३,६. ८. त्रयोदशोऽष्टक° वि[2] अ[3]. ९. ऋ १,१२७,६. १०-१०. इयं तु दृष्टानिति वि[2] अ[1]. ११. आद्यानि वि[2] अ[1]. १२. °कश्छन्दस्सु वि[2] अ[1].

कृतिः [१]प्रकृतिराकृतिर्विकृतिः संकृतिस्तथा[१]।
षष्ठी चाभिकृतिर्नाम सप्तम्युत्कृतिरुच्यते ॥ ११ ॥

अशीतिश्चतुरशीतिरष्टाशीतिर्द्विनवतिः ।
षण्णवतिः शतं पूर्णमुत्तमं तु चतुश्शतम् ॥ १२ ॥

[२]प्रातिशाख्ये निदाने च माप्रमाप्रतिमादयः[२]।
नानाविधानि च्छन्दांसि लक्षितानि च लक्षणैः[३] ॥ १३ ॥

उक्तानां छन्दसां सन्ति द्विपदैकपदा अपि ।
त्रिष्टुब्जगत्योर्गायत्र्याः पङ्क्त्या याऽभूच्चतुष्पदा[४] ॥ १४ ॥

[५]एकः पाद[५] एकपदा [६]द्वौ पादौ[६] द्विपदोच्यते ।
प्रोच्यते तेनतेनैव सरूपा[७] यस्य पादतः ॥ १५ ॥

न दाशतय्येकपदा[८] काचिद् यास्कस्य विद्यते ।
'भद्रं नो अपि वातय'[९] तस्यैकादशिनी विराट् ॥ १६ ॥

'इन्द्रो विश्वस्य गोपतिः'[१०] 'इन्द्रो विश्वस्य भूपतिः'[१०] ।
एताश्चतस्रो गायत्रीराहुरेकपदा इति ॥ १७ ॥

'पवस्व सोम मदयन्निन्द्राय मधुमत्तमः'[११] ।
इति तिस्रः समाख्याता गायत्र्यो द्विपदा इति ॥ १८ ॥

'आ वां सुम्ने वरिमन्'[१२] सा त्रिष्टुबेकपदोच्यते ।
'महि राधो विश्वजन्यम्'[१३] त्रैष्टुभं द्विपदां विदुः ॥ १९ ॥

'अग्ने भव सुषमिधा'[१४] सूक्तं सर्वं च तादृशम् ।
'स नो वाजेषु'[१५] पादौ द्वौ जगतीं द्विपदां विदुः ॥ २० ॥

'उरौ देवा अनिबाधे'[१६] 'सिषक्तु न ऊर्जव्यस्य'[१७] ।
द्वे विराजावेकपदे तथाऽ(था 'अ)सिक्न्या यजमानो न होता'[१८] ॥ इति ॥ २१ ॥

---

१-१. °राकृति ··· स्सं° वि[२] अ[१]. २-२. °शाख्येऽग्निदाने मा प्रति° वि[२] अ[१]; °प्रमा प्रतिमेति च वेंकट. ३. °क्षणम् वि[२] अ[१]. ४. प ··· भूच्च° वि[२] अ[१]. ५. एकपादा वि[१] अ[१]. ६-६. द्विपादा वि[२] अ[१]. ७. सरूपेः वि[१] अ[१]. ८. °कपादा वि[२] अ[१]. ९. ऋ १०, २०,१. १०. आश्रौ ८,२,२१. ११. ऋ ९,६७,१६. १२. ऋ ६,६३,११. १३. ऋ ६,४७,२५. १४. ऋ ७,१७,१. १५. ऋ ८, ४६,१३. १६. ऋ ५,४२,१७. १७. ऋ ५,४१,२०. १८. ऋ ४,१७,१५.

[ ६८ ]

[1]प्रियमेध आङ्गिरस ऋषिः। इन्द्रो देवता, अन्त्यानां षण्णां ऋक्षाश्वमेधौ।
गायत्री छन्दः, अनुष्टुम्मुखः प्रगाथः ( = अनुष्टुब्गायत्र्यौ ), प्रथमा-
चतुर्थीसप्तमीदशम्यः अनुष्टुभः, षोडशी शङ्कुमती[1]।

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि। तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते ॥१॥

[2]आ। त्वा। रथम्। यथा। ऊतये[2]। सुम्नाय। वर्तयामसि।
तुविऽकूर्मिम्। ऋतिऽसहम्। इन्द्र। शविष्ठ। सत्ऽपते ॥ १ ॥

वेङ्कट० प्रियमेधः। आ वर्तयामः त्वाम्, यथा रथम् आवर्तयन्ति, रक्षणाय सुखाय च बहोः कर्तारम् हिंसकानामभिभवितारम् इन्द्र! शविष्ठ! सत्पते! ॥ १ ॥

तुविशुष्म तुविक्रतो शचीवो विश्वया मते। आ पप्राथ महित्वना ॥ २ ॥

तुविऽशुष्म। तुविक्रतो इति तुविऽक्रतो। शचीऽवः। विश्वया। मते। आ। पप्राथ। महिऽत्वना ॥ २ ॥

वेङ्कट० बहुबल! बहुकर्मन्! विज्ञानवन्! विश्वव्याप्तेन महत्त्वेन पूजनीय! आ पूरितवानसि ॥ २ ॥

यस्य ते महिना महः परि ज्मायन्तमीयतुः। हस्ता वज्रं हिरण्ययम् ॥ ३ ॥

यस्य। ते। महिना। महः। परि। ज्मायन्तम्। ईयतुः। हस्ता। वज्रम्। हिरण्ययम् ॥ ३ ॥

वेङ्कट० यस्य ते महत्त्वेन महतः परिगृह्णीतः। पृथिवी ज्मा[3]। ज्मायन्तम् महान्तम् वज्रम् हस्तौ हिरण्मयम्। महान्तं वज्रं महत्त्वेन हस्तौ परिगृह्णीत इति पूर्वेण सम्बन्धः ॥ ३ ॥

विश्वानरस्य वस्पतिमनानतस्य शवसः। एवैश्च चर्षणीनामूती हुवे रथानाम् ॥४॥

विश्वानरस्य। वः। पतिम्। अनानतस्य। शवसः।
एवैः। च। चर्षणीनाम्। ऊती। हुवे। रथानाम् ॥ ४ ॥

वेङ्कट० विश्वान् प्रत्यृतस्य शत्रूणामप्रह्वस्य[4] शवसः पतिम् युष्माकं सैनिकानां गमनैः रथानाम् च गमनैः सह हुवे रक्षणाय। यदा[5] सैनिकाः सरथाः प्रविशन्ति युष्मदीयाः, तदानीम् इन्द्रं हुव इति ॥ ४ ॥[6]

अभिष्टये सदावृधं स्वर्मीळ्हेषु यं नरः। नाना हवन्त ऊतये ॥ ५ ॥

अभिष्टये। सदाऽवृधम्। स्वःऽमीळ्हेषु। यम्। नरः। नाना। हवन्ते। ऊतये ॥ ५ ॥

---

१-१. नास्ति मूको. २-२. व्यु. निगमश्च या ( ५,३ ) द्र. ३. नास्ति मूको. ४. °णा प्र° मूके. ५. यथा मूको. ६. या ( १२,२१ ) व्याख्यानमपि द्र.

वेङ्कट० अभिलषितसिद्ध्यर्थम् सदावृद्धम् सङ्ग्रामेषु यम्[1] मनुष्याः[2] नाना ह्वन्ते रक्षणार्थम् ॥ ५ ॥

[3]इति षष्ठाष्टके पञ्चमाध्याये प्रथमो वर्गः[3] ॥

परोमात्रमृचीषममिन्द्रमुग्रं सुराधसम् । ईशानं चिद्वसूनाम् ॥ ६ ॥

पुरःऽमात्रम् । ऋचीषमम् । इन्द्रम् । उग्रम् । सुऽराधसम् । ईशानम् । चित् । वसूनाम् ॥ ६ ॥

वेङ्कट० परा मात्रा यस्य तम् ऋचा समम् इन्द्रम् उग्रम् सुधनम् ईशानम् च वसूनाम्[4] ॥ ६ ॥

तंतमिद्राधसे मह इन्द्रं चोदामि पीतये । यः पूर्व्यामनुष्टुतिमीशे कृष्टीनां नृतुः ॥७॥

तम्ऽतम् । इत् । राधसे । महे । इन्द्रम् । चोदामि । पीतये ।

यः । पूर्व्याम् । अनुऽस्तुतिम् । ईशे । कृष्टीनाम् । नृतुः ॥ ७ ॥

वेङ्कट० तम् एव सर्वदा महते धनाय इन्द्रम् चोदयामि सोमं पातुम्, यः यज्ञमुखस्थाम् अनुष्टुतिम् प्रति ईश्वरो भवति मनुष्याणाम् विनेता ॥ ७ ॥

न यस्य ते शवसान सख्यमानंश मर्त्यः । नकिः शवांसि ते नशत् ॥ ८ ॥

न । यस्य । ते । शवसान । सख्यम् । आनंश । मर्त्यः । नकिः । शवांसि । ते । नशत् ॥ ८ ॥

वेङ्कट० न यस्य ते हे बलम्[5] आचरन्! सख्यम् आनशे मनुष्यः, तस्य तव न कश्चित् बलानि व्याप्नोति ॥ ८ ॥

त्वोतासस्त्वा युजाप्सु सूर्ये महद्धनम् । जयेम पृत्सु वज्रिवः ॥ ९ ॥

त्वाऽऊतासः । त्वा । युजा । अप्ऽसु । सूर्ये । महत् । धनम् । जयेम । पृत्ऽसु । वज्रिऽवः ॥ ९ ॥

वेङ्कट० [6]त्वया रक्षिताः[6] त्वया सहायेन वयम् अप्सु स्नातुं सूर्यं च द्रष्टुम्[7] महत् धनम् जयेम सङ्ग्रामेषु वज्रिन्! । धनलाभात् अमृतस्यैतदुभयं प्रयोजनम् ॥ ९ ॥

तं त्वा यज्ञेभिरीमहे तं गीर्भिर्गिर्वणस्तम ।
इन्द्र यथा चिदाविथ वाजेषु पुरुमाय्यम् ॥ १० ॥

तम् । त्वा । यज्ञेभिः । ईमहे । तम् । गीःऽभिः । गिर्वणःऽतम ।
इन्द्र । यथा । चित् । आविथ । वाजेषु । पुरुऽमाय्यम् ॥ १० ॥

---

१. यः मूको. २. ऋष्या मूको. ३-३. नास्ति मूको. ४. दधू° मूको. ५. बन्धम् मूको. ६. त्वद् मूको. ७. दृष्टं वि[2]; [7]ष्टुं अ[1].

वेङ्कट० तम् त्वा यज्ञैः प्रयुक्तैः याचामहे, तम् स्तुतिभिः हे अतिशयेन गीर्भिः वननीय!। इन्द्र! यथा रक्षसि सङ्ग्रामेषु बहुप्रज्ञम्[1]। यकारः उपजनः ॥ १० ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये द्वितीयो वर्गः[2] ॥

यस्य॑ ते स्वा॒दु स॒ख्यं स्वा॒द्वी प्रणी॑तिरद्रिवः । य॒ज्ञो वि॑तन्त॒साय्यः॑ ॥ ११ ॥

यस्य॑ । ते॒ । स्वा॒दु । स॒ख्यम् । स्वा॒द्वी । प्रऽनी॑तिः । अ॒द्रि॒ऽव॒ः । य॒ज्ञः । वि॒त॒न्त॒साय्यः॑ ॥ ११ ॥

वेङ्कट० यस्य ते हर्षकम् सख्यम् स्वाद्वी[3] च प्रणीतिः [4]वज्रिन्! यज्ञः[4] विशेषेण तननीयः[5] ॥ ११ ॥

उ॒रु ण॑स्त॒न्वे॒३॒ तन॑ उ॒रु क्षया॑य नस्कृधि । उ॒रु णो॑ यन्धि जी॒वसे॑ ॥ १२ ॥

उ॒रु । न॒ः । त॒न्वे॑ । तने॑ । उ॒रु । क्षया॑य । न॒ः । कृ॒धि॒ । उ॒रु । न॒ः । य॒न्धि॒ । जी॒वसे॑ ॥ १२ ॥

वेङ्कट० बहु नः पुत्राय तत्पुत्राय च बहु च सर्वस्मै निवासाय[6] धनं कुरु। [7]उरु वयः[7] प्रयच्छ अस्मभ्यं जीवनाय ॥ १२ ॥

उ॒रुं नृभ्य॑ उ॒रुं गव॑ उ॒रुं रथा॑य॒ पन्था॑म् । दे॒ववी॑तिं मनामहे ॥ १३ ॥

उ॒रुम् । नृ॒ऽभ्यः॑ । उ॒रुम् । गवे॑ । उ॒रुम् । रथा॑य । पन्था॑म् । दे॒वऽवी॑तिम् । म॒ना॒म॒हे॒ ॥ १३ ॥

वेङ्कट० उरुम् नृप्रभृतीनां पन्थानम् देववीतिम् यज्ञं[8] च अस्मात्[9] प्रार्थयामहे ॥ १३ ॥

उप॑ मा॒ षड् द्वाद्वा॒ नर॒ः सोम॑स्य॒ हर्ष्या॑ । तिष्ठ॑न्ति स्वादु॒रात॑यः ॥ १४ ॥

उप॑ । मा॒ । षट् । द्वाऽद्वा॑ । नर॑ः । सोम॑स्य । हर्ष्या॑ । तिष्ठ॑न्ति । स्वा॒दु॒ऽरा॒त॑यः ॥ १४ ॥

वेङ्कट० उप तिष्ठन्ति मा यज्ञे[10] प्रसर्पन्तः[11] षट् मनुष्याः द्वौद्वौ[12] भूत्वा सोमस्य पीतेन हर्षेण शोभनदानाः ॥ १४ ॥

ऋ॒ज्रावि॑न्द्रो॒त आ द॑दे॒ हरी॒ ऋक्ष॑स्य सू॒नवि॑ । आ॒श्व॒मे॒धस्य॒ रोहि॑ता ॥ १५ ॥

ऋ॒ज्रौ । इ॒न्द्रो॒ते । आ । द॒दे॒ । हरी॒ इति॑ । ऋक्ष॑स्य । सू॒नवि॑ । आ॒श्व॒ऽमे॒धस्य॑ । रोहि॑ता ॥ १५ ॥

वेङ्कट० षट्सु तेषु राजसु अतिथिग्वपुत्रे[13] इन्द्रोते ऋजुगामिनौ अश्वौ अहम् आ ददे, तथा हरी ऋक्षस्य सूनौ[14]। तथा अश्वमेधपुत्रस्य रोहितवर्णौ आददे ॥ १५ ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये तृतीयो वर्गः[2] ॥

---

१. °ज्ञ मूको. २-२. नास्ति मूको. ३. स्वादु वि[1]. ४-४. यज्ञः वज्रिश्च मूको. ५. °नीय मूको. ६. दिव° मूको. ७-७. रूपय मूको. ८. वज्रं मूको. ९. अस्मान् मूको. १०. वज्रे वि[1]; स्वज्रे अ[1]. ११. प्रसर्पन्ति वि. १२. नास्ति मूको. १३. अतिथि पु° मूको. १४. सूनो मूको.

सुरथाँ आतिथिग्वे स्वभीशूँरार्क्षे । आश्वमेधे सुपेशसः ॥ १६ ॥

सुऽरथान् । आतिथिऽग्वे । सुऽअभीशून् । आर्क्षे । आश्वऽमेधे । सुऽपेशसः ॥ १६ ॥

वेङ्कट० 'सुरथान् शोभनाश्वान् अतिथिग्वपुत्रे[†] इन्द्रोते, तथा स्वभीशून् ऋक्षपुत्रे, तथा आश्वमेधे सुरूपान् आ ददे' ॥ १६ ॥

षळश्वाँ आतिथिग्व इन्द्रोते वधूमतः । सचा पूतक्रतौ सनम् ॥ १७ ॥

षट् । अश्वान् । आतिथिऽग्वे । इन्द्रोते । वधूऽमतः । सचा । पूतऽक्रतौ । सनम् ॥ १७ ॥

वेङ्कट० ऋक्षाश्वमेधाभ्यां प्रेरितौ[2] तयोः पुत्रौ बहु धनम् ऋषये प्रायच्छताम् । तद्[3] दृष्ट्वा अतिथिग्वः च तयोः यज्ञे वर्तमानः [4]स्वपुत्रमिन्द्रोतमवदद् एतस्मै[4] देहीति । तच्चानया दर्शयति — [5]षट् अश्वान्[5] अतिथिग्वपुत्रे इन्द्रोते पूतप्रज्ञाने[6] [7]प्रत्ताभिः वधूभिः युक्तान् आर्क्षाऽऽश्वमेधाभ्यां प्रत्तेन धनेन सह अभजम् । एवं चाश्वान् एतान् तस्मै देहीति आतिथिग्वदानस्यापि इयं[7] स्तुतिर्भवति । तत्र कात्यायनः ( ऋअ २,८,६८ ) — 'अन्त्याः षड् ऋक्षाश्वमेधयोर्दानस्तुतिः' इति ॥ १७ ॥

ऐषु चेतद्वृषण्वत्यन्तर्ऋज्रेष्वरुषी । स्वभीशुः कशावती ॥ १८ ॥

आ । एषु । चेतत् । वृषण्ऽवती । अन्तः । ऋज्रेषु । अरुषी । सुऽअभीशुः । कशाऽवती ॥ १८ ॥

वेङ्कट० आ ज्ञायते एषु अश्वारोहेण पुंसा तद्वती अन्तः ऋजुगामिषु अश्वेषु आरोचमाना स्वभीशुः कशावती काचित् वडबा च इति तैः प्रत्तानाम् अश्वानां मध्ये स्थितां वडवाम् आह ॥ १८ ॥

न युष्मे वाजबन्धवो निनित्सुश्चन मर्त्यः । अवद्यमधि दीधरत् ॥ १९ ॥

न । युष्मे इति । वाजऽबन्धवः । निनित्सुः । चन । मर्त्यः । अवद्यम् । अधि । दीधरत् ॥ १९ ॥

वेङ्कट० हे अन्नबन्धवः![8] इति [9]त्रयाणां पितॄणां सम्बोधनम् । अपि वा षण्णां पुत्राणां पितॄणां च । न युष्मासु[9] निनित्सुः अपि मर्त्यः अवधारयति[10] अवद्यम् ॥ १९ ॥

[11]इति षष्ठाष्टके पञ्चमाध्याये चतुर्थो वर्गः[11] ॥

---

१-१. नास्ति वि[2]. † अतिथि ⋯ अ[1]. २. पूरि° मूको. ३. तं वि[2]. ४-४. °पुत्रो ⋯ तमद्दशादेत मूको. ५-५. षट्क्रान् मूको. ६. प्रज्ञाने वि[2]. ७-७. प्रत्नाभिः वसुयुक्तानृक्षान् अश्वमेधाभ्यां प्रत्नेन धनेन सहाभजन् एवं चान्वाचये तानिति तस्मै देहि दिग्वदानस्यापि यं मूको. ८. °वडवः मूको. ९-९. °णां पुत्राणां पितृणां च न यु° अ[1]. १०. न धा° मूको. ११-११. नास्ति मूको.

[ ६९ ]

[1]प्रियमेध आङ्गिरस ऋषिः । इन्द्रो देवता, एकादश्याः ( पूर्वार्धस्य ) विश्वे देवाः, एकादश्याः ( उत्तरार्धस्य ) द्वादश्याश्च वरुणः । अनुष्टुप् छन्दः, द्वितीया उष्णिक्, चतुर्थ्यादि-षष्ठ्यन्ता गायत्र्यः, एकादशीषोडश्यौ पङ्क्ती, सप्तदश्यष्टादश्यौ बृहत्यौ[1] ।

प्रप्र॑ वस्त्रि॒ष्टुभ॒मिषं॑ म॒न्दद्वी॑रा॒येन्द॑वे । धि॒या वो॑ मे॒धसा॑तये॒ पुर॑ंध्या॒ वि॑वासति ॥१॥

प्रऽप्र॑ । व॒ः । त्रि॒ऽस्तुभ॑म् । इष॑म् । म॒न्दत्ऽवी॑राय । इन्द॑वे ।
धि॒या । व॒ः । मे॒धऽसा॑तये । पुर॑म्ऽध्या । आ । वि॒वा॒स॒ति ॥ १ ॥

वेङ्कट० प्रभरत[2] यूयम् त्रिष्टुभम् तृचम् अन्नम् मन्दद्वीराय[3] । यो वीरान् हर्षयति । इन्दुः इन्दतेः ऐश्वर्यकर्मणः । इन्दनकर्मणे[4] । स[5] युष्मान् यज्ञभजनार्थम् धिया पुरन्ध्या भगेन देवेन सह आ गच्छति ॥ १ ॥

न॒दं व॒ ओद॑तीनां न॒दं योयु॑वतीनाम् । पतिं॑ वो॒ अघ्न्या॑नां धेनू॒नामि॑षुध्यसि ॥२॥

न॒दम् । व॒ः । ओद॑तीनाम् । न॒दम् । योयु॑वतीनाम् ।
पति॑म् । व॒ः । अघ्न्या॑नाम् । धे॒नू॒नाम् । इ॒षु॒ध्य॒सि॒ ॥ २ ॥

वेङ्कट० ओदत्य उषसः । '[6]ओदती' ( निघ १,२ ) इत्युषोनाम[6] । यस्मात् इन्द्रात् उषसः निर्गच्छन्ति नदात् इव उदकानि, तम् इन्द्रम् अहं युष्मदर्थं ह्वयामि । योयुवत्यः नद्यः, उदकेन मिश्रयन्ति इति । तथा पतिम् गवाम् । अथ एकवदाह[7]—त्वं धेनूः[8] इच्छसि ॥ २ ॥

ता अ॑स्य॒ सूद॑दोहसः॒ सोमं॑ श्रीणन्ति॒ पृश्न॑यः ।
जन्म॑न् दे॒वानां॒ विश॑स्त्रि॒ष्वा रो॑च॒ने दि॒वः ॥ ३ ॥

ताः । अ॒स्य॒ । सूद॑ऽदोहसः । सोम॑म् । श्री॒ण॒न्ति॒ । पृश्न॑यः ।
जन्म॑न् । दे॒वाना॑म् । विशः॑ । त्रि॒षु । आ । रो॒च॒ने । दि॒वः ॥ ३ ॥

वेङ्कट० ताः इन्द्रस्य सूदसदृशदोहाः[9] । 'सूदः' ( निघ ३,२३ ) इति कूपनाम[10] । सोमम् श्रीणन्ति आशिरेण गावः देवानाम् जन्मस्थाने[11] विशन्त्यः[12] दिवः आदित्यस्य रोचने हि त्रिषवणेषु इति ॥ ३ ॥

अ॒भि प्र गोप॑तिं गि॒रेन्द्र॑मर्च॒ यथा॑ वि॒दे । सू॒नुं स॒त्यस्य॒ सत्प॑तिम् ॥ ४ ॥

अ॒भि । प्र । गोऽप॑तिम् । गि॒रा । इन्द्र॑म् । अ॒र्च॒ । यथा॑ । वि॒दे । सू॒नुम् । स॒त्यस्य॑ । सत्ऽप॑तिम् ॥

---

१-१. नास्ति मूको. २. °रथ मूको. ३. मदद्वी° वि[2]; महद्वी° अ[1]. ४. इन्द्रकर्मणा मूको. ५. न मूको. ६-६. ओपसोत्युषोना° मूको. ७. °पदां ह मूको. ८. धेनुः वि[2]. ९. °देह मूको. १०. रूप' मूको. ११. स्थाने मूको. १२. विशन्त्ये मूको.

वेङ्कट० अभि प्र अर्च गवां पतिम् इन्द्रम् गिरा यथा स इन्द्रो गुणैः ज्ञायते, सत्यस्य सूनुम् सतां पतिम् ॥ ४ ॥

आ हर॑यः ससृज्रि॒रेऽरु॑षी॒रधि॑ ब॒र्हिषि॑ । यत्रा॒भि सं॒नवा॑महे ॥ ५ ॥

आ । हर॑यः । स॒सृ॒ज्रि॒रे॒ । अरु॑षीः । अधि॑ । ब॒र्हिषि॑ । यत्र॑ । अ॒भि । स॒म्ऽनवा॑महे ॥ ५ ॥

वेङ्कट० आ सृजन्ति अश्वाः आरोचमानाः बर्हिष उपरि, यस्मिन् स्थितम् इन्द्रं वयम् अभि[1] संस्तुमः ॥ ५ ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये पञ्चमो वर्गः[2] ॥

इन्द्रा॑य॒ गाव॑ आ॒शिरं॑ दुदु॒ह्रे व॒ज्रिणे॒ मधु॑ । यत् सी॑मुपह्व॒रे वि॒दत् ॥ ६ ॥

[3]इन्द्रा॑य । गाव॑ः । आ॒ऽशिर॑म् । दु॒दु॒ह्रे॒ । व॒ज्रिणे॑ । मधु॑[3] । यत् । सी॒म् । उ॒प॒ऽह्व॒रे । वि॒दत् ॥६॥

वेङ्कट० इन्द्राय गावः आशिरम् दुहते[4] वज्रिणे मदकरम् । यत् इन्द्रः मधु लभते समीपे वर्तमानं गवाम् इति ॥ ६ ॥

उद्यद् ब्र॒ध्नस्य॑ वि॒ष्टपं॑ गृ॒हमिन्द्र॑श्च॒ गन्व॑हि ।
मध्व॑ः पी॒त्वा स॑चेवहि॒ त्रिः स॒प्त सख्यु॑ः प॒दे ॥ ७ ॥

उत् । यत् । ब्र॒ध्नस्य॑ । वि॒ष्टप॑म् । गृ॒हम् । इन्द्र॑ः । च॒ । गन्व॑हि ।
मध्व॑ः । पी॒त्वा । स॒चे॒व॒हि॒ । त्रिः । स॒प्त । सख्यु॑ः । प॒दे ॥ ७ ॥

वेङ्कट० यदा[5] उद् गच्छावः महतः आदित्यस्य [6]विष्टपम् गृहम् अहम्[6] इन्द्रः च, तदा[7] सोमम् पीत्वा तत्र [8]'संसृष्टौ भवेव'[8] । त्रिः सप्त इति देवलोकानाम् उत्तमम् एकविंशमाह । 'असावादित्य एकविंशः' ( ऐब्रा १,३० ) इति ब्राह्मणम् । सख्युः स्थाने[9] ॥ ७ ॥

अर्च॑त॒ प्रार्च॑त॒ प्रिय॑मेधासो॒ अर्च॑त । अर्च॑न्तु पु॒त्र॒का उ॒त पुरं॒ न धृ॒ष्ण्व॑र्चत ॥८॥

अर्च॑त । प्र । अ॒र्च॒त॒ । प्रिय॑ऽमेधासः । अर्च॑त । अर्च॑न्तु । पु॒त्र॒काः । उ॒त । पुर॑म् । न । धृ॒ष्णु । अ॒र्च॒त॒ ॥ ८ ॥

वेङ्कट० अर्चत प्रकर्षेण अर्चत इन्द्रं हे प्रियमेधाः! अर्चत । तथा पुत्रकाः अर्चन्तु । यथा पुरम् धर्षणशीलम् अर्चन्ति, तादृशम् इन्द्रम् अर्चत ॥ ८ ॥

अव॑ स्वराति॒ गर्ग॑रो गो॒धा परि॑ सनिष्वणत् ।
पिङ्गा॒ परि॑ चनिष्कद॒दिन्द्रा॑य॒ ब्रह्मोद्य॑तम् ॥ ९ ॥

---

१. अहि वि[1]; अहिं अ[1]. २-२. नास्ति मूको. ३-३. तु. ऋ ८,६,१९; ७,१०; या ६,८. ४. दूतहतैः मूको. ५. यथा मूको. ६-६. परिष्टवामहे त्वा मूको. ७. दा मूको. ८-८. सुदृष्टौ भवेत् इति मूको. ९. स्नातैः मूको.

अव । स्वराति । गर्गरः । गोधा । परि । सनिस्वनत् ।
पिङ्गा । परि । चनिस्कदत् । इन्द्राय । ब्रह्म । उत्ऽयतम् ॥ ९ ॥

**वेङ्कट०** [1]गर्गरः वाद्यः[2] अव स्वरति प्रवृत्ते[3] युद्धे । हस्तघ्नः[3] च भृशं[4] परि स्वनत् इति । पिशङ्गवर्णा ज्या च परितः स्कन्दते । तथा इन्द्राय च स्तोत्रम् उद्यतम् भवति ॥ ९ ॥

आ यत् पतन्त्येन्यः सुदुघा अनपस्फुरः ।
अपस्फुरं गृभायत सोममिन्द्राय पातवे ॥ १० ॥

आ । यत् । पतन्ति । एन्यः । सुऽदुघाः । अनपऽस्फुरः ।
अपऽस्फुरम् । गृभायत । सोमम् । इन्द्राय । पातवे ॥ १० ॥

**वेङ्कट०** आ पतन्ति यदा नद्यः सुदोहाः अत्यन्तम् अप्रवृद्धोदकाः, [5]तदानीं पुष्टाः यूयं प्रवृद्धम् सोमम् इन्द्राय पातुं गृह्णीत ॥ १० ॥

[5]इति षष्ठाष्टके पञ्चमाध्याये षष्ठो वर्गः[5] ॥

अपादिन्द्रो अपादग्निर्विश्वे देवा अमत्सत ।
वरुण इदिह क्षयत् तमापो अभ्यनूषत वत्सं संशिश्वरीरिव ॥ ११ ॥

अपात् । इन्द्रः । अपात् । अग्निः । विश्वे । देवाः । अमत्सत ।
वरुणः । इत् । इह । क्षयत् । तम् । आपः । अभि । अनूषत । वत्सम् । संशिश्वरीःऽइव ॥११॥

**वेङ्कट०** अपात् वैश्वदेवाद् घर्मयुक्तम्[6] अपिबत् सोमम् इन्द्रः । अपिबत् अग्निः । विश्वे च देवाः अतृप्यन् सोमेन । वरुणः च इह न्यवसत् । तम् निषण्णं[7] हि आपः अभि अस्तुवन्, यथा वत्सम् संशिश्वर्यः सङ्गच्छमाना गावः । श्वयतेः गतिकर्मण[8] इदं रूपम् ॥ ११ ॥

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥ १२ ॥

सुऽदेवः । असि । वरुण । यस्य । ते । सप्त । सिन्धवः ।
अनुऽक्षरन्ति । काकुदम् । सूर्म्यम् । सुषिराम्ऽइव ॥ १२ ॥

---

१. गर्भरोगात् वि[२]; गर्भरोचाद्यो अ[१]. २. °ते मूको. ३. °घ्नं मूको. ४. भृशत् मूको.
५-५. नास्ति मूको. ६. धर्व° वि[२]; धर्वं इत्युक्तं अ[१]. ७. °ण्णा मूको. ८. भङ्क्तिक° मूको.

वेङ्कट० कल्याणदेवो भवसि वरुण!, यस्य सप्त नद्यः तव जिह्वाम् अनुक्षरन्ति। वरुणस्य एव जिह्वा यत् समुद्रः। सूर्म्यशब्दो गदायां दृष्टः—'एषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणां शततर्हांस्तृंहन्ति' ( तै १,५,७,६ ) इति। इह[1] तु सुषिरे काष्ठविशेषे वर्तते। निरुक्तं ( या ५,२७ ) द्रष्टव्यम् इति[1] ॥ १२ ॥

यो व्यतीँरफाणयत् सुयुक्ताँ उप दाशुषे ।
तक्वो नेता तदिद्वपुरुपमा यो अमुच्यत ॥ १३ ॥

यः । व्यतीन् । अफाणयत् । सुऽयुक्तान् । उप । दाशुषे ।
तक्वः । नेता । तत् । इत् । वपुः । उपऽमा । यः । अमुच्यत ॥ १३ ॥

वेङ्कट० यः विशेषेण आगमनशीलान् अश्वान् उप गमयति सुयुक्तान् दाश्वांसम् उद्दिश्य। गमनशीलः तदानीम् एव उदकं नयति। उपमानभूतः यः इन्द्रः अमुच्यत अन्यैः बलिभिः मुक्तो भवति ॥ १३ ॥

अतीदु शक्र ओहत इन्द्रो विश्वा अति द्विषः ।
भिनत् कनीन ओदनं पच्यमानं परो गिरा ॥ १४ ॥

अति । इत् । ऊँ इति । शक्रः । ओहते । इन्द्रः । विश्वाः । अति । द्विषः ।
भिनत् । कनीनः । ओदनम् । पच्यमानम् । परः । गिरा ॥ १४ ॥

वेङ्कट० अति एव गच्छति इन्द्रः शक्तः। तदेवाह—इन्द्रः विश्वाः द्विषः अति गच्छति इति। भिनत्ति कमनीय इन्द्रः मेघम्[2] माध्यमिकया वाचा देवतया पच्यमानम् [3]परस्तात् स्थितः[3] ॥ १४ ॥

अर्भको न कुमारकोऽधि तिष्ठन् नवं रथम् ।
स पक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुम् ॥ १५ ॥

अर्भकः । न । कुमारकः । अधि । तिष्ठत् । नवम् । रथम् ।
सः । पक्षत् । महिषम् । मृगम् । पित्रे । मात्रे । विभुऽक्रतुम् ॥ १५ ॥

वेङ्कट० अल्पशरीरः इव कुमारः अधि तिष्ठति इन्द्रः नवम् रथम्। सः पचतु[4] भक्षणाय महिषम् मृगम् द्यावापृथिव्योः अभ्युदयाय बहुकर्माणम् ॥ १५ ॥

आ तू सुशिप्र दंपते रथं तिष्ठा हिरण्ययम् ।
अध द्युक्षं सचेवहि सहस्रपादमरुषं स्वस्तिगामनेहसम् ॥ १६ ॥

---

१-१. इति वि[2]; इति ह अ[1]. २. तु निघ १,१०. ३-३. पुरस्तात् स्त्रियः मूको. ४. वचतुः मूको.

आ । तु । सुऽशिप्र । दम्ऽपते । रथम् । तिष्ठ । हिरण्ययम् ।

अध । द्युक्षम् । सचेवहि । सहस्रऽपादम् । अरुषम् । स्वस्तिऽगाम् । अनेहसम् ॥ १६ ॥

**वेङ्कट०** आ तिष्ठ क्षिप्रं सुहनो![1] गृहपते! हिरण्मयम् रथम् । तम् अहं च आरोहेयम् इति वदति—सम्प्रति दीप्तम् सचेवहि बहुपादम् आरोचमानम् स्वस्ति गन्तारम् अनुपद्रवम् इति ॥ १६ ॥

तं घेमित्था नमस्विन उप स्वराजमासते ।
अर्थं चिदस्य सुधितं यदेतव आवर्तयन्ति दावने ॥ १७ ॥

तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते ।

अर्थम् । चित् । अस्य । सुऽधितम् । यत् । एतवे । आऽवर्तयन्ति । दावने ॥ १७ ॥

**वेङ्कट०** तम् खलु एनम् इत्थं हविष्मन्तः उप आसते स्वराजम् । अर्थम् चित् अस्य सुनिहितम् याचते, यदा इन्द्रं दानाय आत्मनि यातुम् आवर्तयन्ति ॥ १७ ॥

अनु प्रत्नस्यौकसः प्रियमेधास एषाम् ।
पूर्वामनु प्रयतिं वृक्तबर्हिषो हितप्रयस आशत ॥ १८ ॥

अनु । प्रत्नस्य । ओकसः । प्रियऽमेधासः । एषाम् ।

पूर्वाम् । अनु । प्रऽयतिम् । वृक्तऽबर्हिषः । हितऽप्रयसः । आशत ॥ १८ ॥

**वेङ्कट०** अनु आशत एषाम् देवानाम् प्रत्नस्य ओकसः पुराणम् आत्मीयं गृहं पोषयितुं प्रियमेधाः मुख्यम् प्रदानम् स्तीर्णबर्हिषः निहितहविष्काः ॥ १८ ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये सप्तमो वर्गः[2] ॥

[ ७० ]

[1]पुरुहन्मा आङ्गिरस ऋषिः । इन्द्रो देवता । बृहती छन्दः, प्रथमादिषष्ठ्यन्ताः प्रगाथः (=विषमा बृहत्यः, समाः सतोबृहत्यः), द्वादशी शङ्कुमती, त्रयोदशी उष्णिक्, चतुर्दशी अनुष्टुप्, पञ्चदशी पुरउष्णिक्[2] ।

यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥ १ ॥

---

१. बहुनो मूको. २-२. नास्ति मूको.

यः । राजा । चर्षणीनाम् । याता । रथेभिः । अध्रिऽगुः ।
विश्वासाम् । तरुता । पृतनानाम् । ज्येष्ठः । यः । वृत्रऽहा । गृणे ॥ १ ॥

**वेङ्कट०** पुरुहन्मा आङ्गिरसः । यः राजा चर्षणीनाम् याता रथैः अधृतगमनः विश्वासाम् तारकः पृतनानाम् श्रेष्ठः । यः च वृत्रहा स्तूयते ॥ १ ॥

इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।
हस्ताय वज्रः प्रति धायि दर्शतो महो दिवे न सूर्यः ॥ २ ॥

इन्द्रम् । तम् । शुम्भ । पुरुऽहन्मन् । अवसे । यस्य । द्विता । विऽधर्तरि ।
हस्ताय । वज्रः । प्रति । धायि । दर्शतः । महः । दिवे । न । सूर्यः ॥ २ ॥

**वेङ्कट०** इन्द्रम् तम् स्तुतिभिः अलङ्कुरु हे पुरुहन्मन्! रक्षणार्थम् । यस्य तव विधर्तरि द्वैधं भवति औद्यम् अनौद्यं च, तस्य हस्ताय प्रतिनिहितः[1] वज्रः दर्शनीयः महान् दिवः इव सूर्यः ॥ २ ॥

नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णवोजसम् ॥ ३ ॥

नकिः । तम् । कर्मणा । नशत् । यः । चकार । सदाऽवृधम् ।
इन्द्रम् । न । यज्ञैः । विश्वऽगूर्तम् । ऋभ्वसम् । अधृष्टम् । धृष्णुऽओजसम् ॥ ३ ॥

**वेङ्कट०** नकिः तम् कर्मणा भिक्षणादिना व्याप्नोति परिचरन्, यः जातः न चकार सदा[2] वर्धकम् इन्द्रम् यज्ञैः विश्वैः आहूतम् महान्तम् शत्रुभिः अधृष्टम् धर्षणशीलबलम् ॥ ३ ॥

अषाळ्हमुग्रं पृतनासु सासहिं यस्मिन् महीरुरुज्रयः ।
सं धेनवो जायमाने अनोनवुर्द्यावः क्षामो अनोनवुः ॥ ४ ॥

अषाळ्हम् । उग्रम् । पृतनासु । ससहिम् । यस्मिन् । महीः । उरुऽज्रयः ।
सम् । धेनवः । जायमाने । अनोनवुः । द्यावः । क्षामः । अनोनवुः ॥ ४ ॥

**वेङ्कट०** असोढम् उद्गूर्णम् पृतनासु अभिभवितारम् । यस्मिन् जायमाने महत्यः उरुवेगाः [3]सम् अस्तुवन्[3] [4]प्रीणयित्र्यः द्यावः पृथिव्यः[4] च ॥ ४ ॥

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥ ५ ॥

---

१. प्रतिहि° वि[२]. २. सर्वदा अ[१]. ३-३. सरस्तुवद् वि[२]. ४-४. °त्र्योर्ध्वपृथिव्यः मूको.

यत् । द्यार्वः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युरिति । स्युः ।
न । त्वा । वज्रिन् । सहस्रम् । सूर्याः । अनु । न । जातम् । अष्ट । रोदसी इति ॥ ५ ॥

वेङ्कट० यदि द्युलोकाः[1] इन्द्र! तव प्रतिमानार्थम् शतम् स्युः, अपि वा शतम् भूमयः, तथापि न त्वाम् अश्नुवते[2]। त्वम् एव तेभ्योऽतिरिच्यसे। तथा न त्वा वज्रिन्! सहस्रम्[3] अपि सूर्याः अनु भवन्ति। किं बहुना, न जातम् किंचन भूतं त्वाम् अश्नुते, न च द्यावापृथिव्यौ इति ॥ ५ ॥

[4]इति षष्ठाष्टके पञ्चमाध्यायेऽष्टमो वर्गः[4] ॥

आ पप्राथ महिना वृष्ण्या वृषन् विश्वा शविष्ठ शवसा ।
अस्माँ अव मघवन् गोमति व्रजे वज्रिञ्चित्राभिरूतिभिः ॥ ६ ॥

आ । पप्राथ । महिना । वृष्ण्या । वृषन् । विश्वा । शविष्ठ । शवसा ।
अस्मान् । अव । मघऽवन् । गोऽमति । व्रजे । वज्रिन् । चित्राभिः । ऊतिऽभिः ॥ ६ ॥

वेङ्कट० आ पूरयसि महता बलेन विश्वानि एव वीर्याणि बलवत्तर! आवर्षितः!। अस्मान् रक्ष [5]मघवन्! गोमति व्रजे[5] वज्रिन्![6] चित्रैः पालनैः ॥ ६ ॥

न सीमदेव आपदिषं दीर्घायो मर्त्यः ।
एतग्वा चिद्य एतशा युयोजते हरी इन्द्रो युयोजते ॥ ७ ॥

न । सीम् । अदेवः । आपत् । इषम् । दीर्घायो इति दीर्घऽआयो । मर्त्यः ।
एतऽग्वा । चित् । यः । एतशा । युयोजते । हरी इति । इन्द्रः । युयोजते ॥ ७ ॥

वेङ्कट० न सर्वम् अस्तोता प्राप्नोति अन्नम् हे दीर्घजीव! मनुष्यः। एतौ अश्वौ भवतः प्राप्तव्यं गच्छत इति। तौ एतशवर्णौ इन्द्रस्य स्वभूतौ[7]। यः इन्द्रः रथे [8]युनक्ति तौ। यो न स्तौति, स न[8] प्राप्नोति अन्नम् इति ॥ ७ ॥

तं वो महो महाय्यमिन्द्रं दानाय सक्षणिम् ।
यो गाधेषु य आरणेषु हव्यो वाजेष्वस्ति हव्यः ॥ ८ ॥

तम् । वः । महः । महाय्यम् । इन्द्रम् । दानाय । सक्षणिम ।
यः । गाधेषु । यः । आऽअरणेषु । हव्यः । वाजेषु । अस्ति । हव्यः ॥ ८ ॥

---

१. लोकाः मूको. २. अश्नवन्त मूको. ३ स तथा मूको. ४-४. नास्ति मूको. ५-५. °वद्रो ··· व्रजे वि; °वन् ··· व्रजे अ'. ६. वज्रं मूको. ७. °त. मूको. ८-८. अनक्तितयैनं स्तौति सदः मूको.

वेङ्कट० तम् यूयं महतः अपि पूजनीयम् इन्द्रम् दानाय[1] सचमानम् परिचरत[2], यः उच्छ्रितेषु निम्नेषु च उदकेषु आह्वातव्यो भवति सङ्ग्रामेषु च ॥ ८ ॥

उदू षु णो वसो महे मृशस्व शूर राधसे ।
उदू षु मह्यै मघवन् मघत्तय उदिन्द्र श्रवसे महे ॥ ९ ॥

उत् । ऊँ इति । सु । नः । वसो इति । महे । मृशस्व । शूर । राधसे ।
उत् । ऊँ इति । सु । मह्यै । मघऽवन् । मघत्तये । उत् । इन्द्र । श्रवसे । महे ॥ ९ ॥

वेङ्कट० उत् मृशस्व उत्थापय सुष्ठु अस्मान्[3] वासयितः! शूर! महते अन्नाय । उत् मृशस्व मघवन्! महते धनदानाय । उत् मृशस्व इन्द्र! महत्यै कीर्त्यै ॥ ९ ॥

त्वं न इन्द्र ऋतयुस्त्वानिदो नि तृम्पसि ।
मध्ये वसिष्व तुविनृम्णोर्वोर्नि दासं शिश्नथो हथैः ॥ १० ॥

त्वम् । नः । इन्द्र । ऋतऽयुः । त्वाऽनिदः । नि । तृम्पसि ।
मध्ये । वसिष्व । तुविऽनृम्ण । ऊर्वोः । नि । दासम् । शिश्नथः । हथैः ॥ १० ॥

वेङ्कट० त्वम् अस्मान् इन्द्र! यज्ञकामः । त्वां यो निन्दति अयजमानः[4] तस्मात् नि[5] तृम्पसि तत आकृष्य नितरां तर्पयसि । स त्वं तव ऊर्वोः[6] मध्ये अस्मान् सुष्ठु आच्छादय रक्षार्थं तत्र कुरु तुविनृम्ण! । नि शिश्नथः [7]च असुरम्[7] प्रहारैः ॥ १० ॥

[8]इति षष्ठाष्टके पञ्चमाध्याये नवमो वर्गः[8] ॥

अन्यव्रतममानुषमयज्वानमदेवयुम् ।
अव स्वः सखा दुधुवीत पर्वतः सुघ्नाय दस्युं पर्वतः ॥ ११ ॥

अन्यऽव्रतम् । अमानुषम् । अयज्वानम् । अदेवऽयुम् ।
अव । स्वः । सखा । दुधुवीत । पर्वतः । सुऽघ्नाय । दस्युम् । पर्वतः ॥ ११ ॥

वेङ्कट० इन्द्रादन्यं यो यजते[9] सोऽन्यव्रतः तम्[10] मनुष्याणाम् अहितम् अयज्वानम् अदेवकामम्[11] इन्द्र![12] स्वः सखा पर्वतर्षिः स्वर्गात् अव दुधुवीत सुष्ठु यो हन्ति तस्मै तम् दस्युम् तस्य अग्रतः इति । पुनः पर्वतः इति पूरणम् ॥ ११ ॥

---

१. आनय वि[२]; आनाय २. °रन्त मूको. ३. °स्मात् मूको. ४. यजमा° मूको. ५. न मूको. ६. °र्वः मूको. ७-७. चारुसुरं वि[१]; चारुसुतं अ[१]. ८-८. नास्ति मूको. ९. जते मूको. १०. तत मूको. ११. देव° मूको. १२. °न्द्रः वि[१].

त्वं न॑ इन्द्रासां हस्ते॑ शविष्ठ दावने॑ ।
धानानां न सं गृ॑भायास्मयुर्द्विः सं गृ॑भायास्मयुः ॥ १२ ॥

त्वम् । नः । इन्द्र । आसाम् । हस्ते॑ । शविष्ठ । दावने॑ ।
धानानाम् । न । सम् । गृभाय । अस्मऽयुः । द्विः । सम् । गृभाय । अस्मऽयुः ॥ १२ ॥

वेङ्कट० त्वम् अस्माकम् इन्द्र! एकैकशः दानाय आसाम् गवाम् [1]समर्थ! हस्ते सम् गृहाण[1]। कर्मणि षष्ठी। यथा बह्वीर्धानाः हस्ते गृह्णाति तद्वत्। अस्मत्कामः बह्वीः [2]गाः हस्ते[2] गृहाण। ताः सर्वाः दत्त्वा पुनः च सम् गृहाण इति॥ १२ ॥

सखा॑यः क्रतु॑मिच्छत कथा रा॑धाम शरस्य॑ ।
उप॑स्तुतिं भोजः सूरियो अह्र॑यः ॥ १३ ॥

सखा॑यः । क्रतु॑म् । इच्छत । कथा । राधाम । शरस्य॑ ।
उप॑ऽस्तुतिम् । भोजः । सूरिः । यः । अह्र॑यः ॥ १३ ॥

वेङ्कट० हे सखायः! कर्म इच्छत। कथम् साधयामः शत्रूणां हिंसितुः[3] उपस्तुतिम्, भोजकः स्तोतॄणाम् प्राज्ञः यः अह्रयः[4] अनवनतः ॥ १३ ॥

भूरि॑भिः समह ऋषि॑भिर्बर्हिष्म॑द्भिः स्तविष्यसे ।
यदि॒त्थमेक॑मेकमिच्छर॑ वत्सान् परा॒दद॑ः ॥ १४ ॥

भूरि॑ऽभिः । समह । ऋषि॑ऽभिः । बर्हिष्म॑त्ऽभिः । स्तविष्यसे ।
यत् । इत्थम् । एक॑म्ऽएकम् । इत् । शर॑ । वत्सान् । पराऽदद॑ः ॥ १४ ॥

वेङ्कट० [5]हे शर! सपूज! इन्द्र![5] त्वम् ऋषिभिः बहुभिः यज्ञवद्भिः स्तविष्यसे[6]। यः त्वम् इत्थम् एकम्-एकम् वत्सान्[7] स्तोतृभ्यः तेभ्यः परायच्छसि। वत्सप्रदानेन मातरोऽपि प्रत्ता[8] भवन्ति ॥१४॥

कर्णगृह्या॑ मघवा॑ शौरदेव्यो वत्सं न॑स्त्रिभ्य आन॑यत् । अजां सूरिर्न धात॑वे ॥१५॥

कर्णऽगृह्य॑ । मघऽवा॑ । शौरऽदेव्यः । वत्सम् । नः । त्रिऽभ्यः ।
आ । अनयत् । अजाम् । सूरिः । न । धात॑वे ॥ १५ ॥

वेङ्कट० शत्रुभिः आहृतान् गवां वत्सान् कर्णे गृहीत्वा मघवा शौरदेव्यः शूरदेवानाम् इदं युद्धं शौरदेवम्। युद्धकुशलः शौरदेव्यः। सः वत्सम् अस्माकं हिंसितृभ्यः शत्रुभ्यः आ अनयत्[9]।

---

१-१. अर्थसत् गृहाय मूको. २-२. गृहेस्त वि[१]; गहस्ते अ[१]. ३. °सतिः वि[२]. ४. अह्ननः मूको. ५-५. माहित्तशर सः पूर्णेन्द्र वि[२]; माहेत्तशूर स पूर्ण अ[१]. ६. सूचिष्य मूको. ७. °त्साव वि[२]; त्रा अ[१]. ८. नत्ता मूको. ९. °नवत मूको.

यथा[1] अजाम् आत्मीयाम् प्राज्ञः स्वामी तस्याः पयो दुग्ध्वा[2] पातुं कर्णे गृहीत्वा हरति आनयति[3] ॥ १५ ॥

[4]इति षष्ठाष्टके पञ्चमाध्याये दशमो वर्गः[4] ॥

## [ ७१ ]

[5]सुदीतिपुरुमीळ्हौ आङ्गिरसौ ऋषिः, अन्यतरो वा। अग्निर्देवता। गायत्री छन्दः, दशम्यादिपञ्चदशयन्ता प्रगाथः ( =विषमा बृहत्यः, समाः सतोबृहत्यः )[5]।

**त्वं नो॑ अग्ने म॒हो॑भिः पा॒हि विश्व॑स्या॒ अरा॑तेः । उ॒त द्वि॒षो मर्त्य॑स्य ॥ १ ॥**

त्वम् । नः॒ । अ॒ग्ने॒ । महः॑ऽभिः । पा॒हि । विश्व॑स्याः । अरा॑तेः । उ॒त । द्वि॒षः । मर्त्य॑स्य ॥ १ ॥

वेङ्कट० [5]सुदीतिः पुरुमीळ्हो[5] वा। त्वम् अस्मान् अग्ने! महोभिः मनुष्यस्य बहुविधात् अदानात् रक्ष धनप्रदानेन, तथा द्वेषात् च बलप्रदानेन मनुष्यस्य ॥ १ ॥

**न॒हि म॒न्युः पौरु॑षेय॒ ईशे॑ हि वः॑ प्रियजात । त्वमिद॑सि॒ क्षपा॑वान् ॥ २ ॥**

न॒हि । म॒न्युः । पौरु॑षेयः । ईशे॑ । हि । वः॒ । प्रि॒य॒ऽजा॒त॒ । त्वम् । इत् । अ॒सि॒ । क्षपा॑ऽवान् ॥ २ ॥

वेङ्कट० दिवाचरः पुरुषः भवति, रात्रिञ्चरं रक्षः। तत्र दिवा सूर्यम् अधिष्ठाय अग्निः[6] चरति। तत्र एतद् उच्यते—नहि तव पौरुषेयः क्रोधः ईश्वरः भवति प्रियजनन!। त्वम् एव भवसि [7]रात्रिमान्, अतः[7] नक्तं च न अभिभूयसे ॥ २ ॥

**स नो॒ विश्वे॑भिर्दे॒वेभि॒रूर्जो॑ नपा॒द्भद्र॑शोचे । र॒यिं दे॑हि वि॒श्ववा॑रम् ॥ ३ ॥**

सः । नः॒ । विश्वे॑भिः । दे॒वेभिः॑ । ऊर्जः॑ । न॒पा॒त् । भद्र॑ऽशोचे । र॒यिम् । दे॒हि॒ । वि॒श्वऽवा॑रम् ॥ ३ ॥

वेङ्कट० निगदसिद्धा ॥ ३ ॥

**न तम॑ग्ने॒ अरा॑तयो॒ मर्तं॑ युवन्त रा॒यः । यं त्राय॑से दा॒श्वांस॑म् ॥ ४ ॥**

न । तम् । अ॒ग्ने॒ । अरा॑तयः । मर्त॑म् । यु॒व॒न्त॒ । रा॒यः । यम् । त्राय॑से । दा॒श्वांस॑म् ॥ ४ ॥

वेङ्कट० न[8] तम् अग्ने! शत्रवः मर्तम् पृथक् कुर्वन्ति [9]धनात्, यम्[9] यजमानं त्वं रक्षसि ॥ ४ ॥

**यं त्वं वि॑प्र मे॒धसा॑ताव॒ग्ने॑ हि॒नोषि॒ धना॑य । स तवो॒ती गोषु॒ गन्ता॑ ॥ ५ ॥**

यम् । त्वम् । वि॒प्र॒ । मे॒धऽसा॑तौ । अग्ने॑ । हि॒नोषि॑ । धना॑य । सः । तव॑ । ऊ॒ती । गोषु॑ । गन्ता॑ ॥५॥

---

१. यस्था वि[1]. २. युध्वा वि[2]. ३. आधात् इति मूको. ४-४. नास्ति मूको. ५-५. …पुत्रमिद्धो मूको. ६. °ग्नि मूको. ७-७. रात्रिमात्मनः वि[1]. ८. धनम् वि[2]. ९-९. धनान्यम् मूको.

वेङ्कट० यम् त्वम् विप्र! यजने[1] अग्ने! प्रेरयसि धनाय, सः तव रक्षणेन गोषु गन्ता भवति ॥ ५ ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये एकादशो वर्गः[2] ॥

त्वं र॒यिं पु॑रु॒वीर॑मग्ने दा॒शुषे॒ मर्ता॑य । प्र णो॑ नय॒ वस्यो॒ अच्छ॑ ॥ ६ ॥

त्वम् । र॒यिम् । पु॒रु॒ऽवीर॑म् । अग्ने॑ । दा॒शुषे॑ । मर्ता॑य । प्र । नः॒ । न॒य॒ । वस्यः॑ । अच्छ॑ ॥ ६ ॥

वेङ्कट० त्वम् धनं बहुवीरम् अग्ने! प्रयच्छसि दाशुषे मनुष्याय। अस्मान् अपि प्र णयसि श्रेयः धनं प्रति ॥ ६ ॥

उ॒रु॒ष्या णो॒ मा परा॑ दा अघाय॒ते जा॑तवेदः । दु॒रा॒ध्ये॒३॒ मर्ता॑य ॥ ७ ॥

उ॒रु॒ष्य । नः॒ । मा । परा॑ । दाः॒ । अ॒घ॒ऽय॒ते । जा॒त॒ऽवे॒दः॒ । दुः॒ऽआ॒ध्ये॑ । मर्ता॑य ॥ ७ ॥

वेङ्कट० रक्ष अस्मान्। मा परा दाः अघमिच्छते जातवेदः! दुर्बुद्धये मनुष्याय ॥ ७ ॥

अग्ने॒ माकि॑ष्टे दे॒वस्य॑ रा॒तिमदे॑वो युयोत । त्वमी॑शिषे॒ वसू॑नाम् ॥ ८ ॥

अग्ने॑ । माकिः॑ । ते॒ । दे॒वस्य॑ । रा॒तिम् । अदे॑वः । यु॒यो॒त॒ । त्वम् । ई॒शि॒षे॒ । वसू॑नाम् ॥ ८ ॥

वेङ्कट० अग्ने! मा कश्चित् तव देवस्य तत् दानम् अदेवः[3] पृथक् करोतु। त्वम् ईशिषे धनानाम् ॥ ८ ॥

स नो॒ वस्व॒ उप॑ मा॒स्यूर्जो॑ नपा॒न्माहि॑नस्य । सखे॑ वसो जरि॒तृभ्यः॑ ॥ ९ ॥

सः । नः॒ । वस्वः॑ । उप॑ । मा॒सि॒ । ऊर्जः॑ । न॒पा॒त् । माहि॑नस्य । सखे॑ । व॒सो॒ इति॑ । ज॒रि॒तृऽभ्यः॑ ॥ ९ ॥

वेङ्कट० उपमानं[4] प्रदानम्। सः अस्मभ्यम् उप प्रयच्छ हे अन्नस्य पुत्र! महत् धनम् सखे! वासयितः! स्तोतृभ्यः ॥ ९ ॥

अच्छा॑ नः शी॒रशो॑चिषं॒ गिरो॑ यन्तु दर्श॒तम् ।
अच्छा॑ य॒ज्ञासो॒ नम॑सा पुरू॒वसुं॑ पुरुप्रश॒स्तमू॒तये॑ ॥ १० ॥

अच्छ॑ । नः॒ । शी॒रऽशो॑चिषम् । गिरः॑ । य॒न्तु॒ । द॒र्श॒तम् ।

अच्छ॑ । य॒ज्ञासः॑ । नम॑सा । पु॒रु॒ऽवसु॑म् । पु॒रु॒ऽप्र॒श॒स्तम् । ऊ॒तये॑ ॥ १० ॥

वेङ्कट० अभिगच्छन्तु[5] अस्माकम् अशनशीलज्वालम् तञ्चनशीलज्वालम्[6] वा स्तुतयः दर्शनीयम्। अच्छ यन्तु यज्ञाः च हविषा बहुधनम् बहुप्रशस्तम् रक्षार्थम् ॥ १० ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये द्वादशो वर्गः[2] ॥

---

१. भजने वि[२]; °नेषु अ[१]. २-२. नास्ति मूको. ३. एव वि[२]. ४. °मान मूको. ५. °च्छतु मूको. ६. तच्चन° मूको.

अ॒ग्निं सू॒नुं सह॑सो जा॒तवे॑दसं दा॒नाय॒ वार्या॑णाम् ।
द्वि॒ता यो भूद॒मृतो॒ मर्त्ये॒ष्वा होता॑ म॒न्द्रत॑मो वि॒शि ॥ ११ ॥

अ॒ग्निम् । सू॒नुम् । सह॑सः । जा॒तऽवे॑दसम् । दा॒नाय॑ । वार्या॑णाम् ।
'द्वि॒ता । यः । भूत् । अ॒मृत॑ः । मर्त्ये॑षु । आ । होता॑ । म॒न्द्रऽत॑मः । वि॒शि' ॥ ११ ॥

वेङ्कट० अग्निम् सहसः सुतम् जातप्रज्ञम् दानाय धनानाम् । द्विता यः अभूत् । अमृतः सन् मर्त्येषु च अभवत् इति द्वैधम्[2] । होता मादयितृतमः मनुष्येषु भवति । तम् अच्छ यन्तु इति ॥ ११ ॥

अ॒ग्निं वो॑ दे॒वय॒ज्यया॒ग्निं प्र॑य॒त्य॑ध्व॒रे ।
अ॒ग्निं धी॒षु प्र॑थ॒मम॒ग्निमर्व॑त्य॒ग्निं क्षैत्रा॑य॒ साध॑से ॥ १२ ॥

अ॒ग्निम् । व॒ः । दे॒वऽय॒ज्यया॑ । अ॒ग्निम् । प्र॒ऽय॒ति । अ॒ध्व॒रे ।
अ॒ग्निम् । धी॒षु । प्र॒थ॒मम् । अ॒ग्निम् । अर्व॑ति । अ॒ग्निम् । क्षैत्रा॑य । साध॑से ॥ १२ ॥

वेङ्कट० अग्निम् युष्माकं देवयागार्थं स्तौमि, अग्निम् वर्तमाने यज्ञे, अग्निम् कर्मसु, [3]अग्निम् मुख्यमागते[3] भ्रातृव्ये, अग्निम् एव क्षेत्रसम्बन्धिने[4] साधनाय क्षेत्राणि साधयितुम् ॥ १२ ॥

अ॒ग्निरि॒षां स॒ख्ये द॑दातु न॒ ईशे॒ यो वार्या॑णाम् ।
अ॒ग्निं तो॒के तन॑ये॒ शश्व॑दीमहे॒ वसुं॒ सन्तं॑ तनू॒पाम् ॥ १३ ॥

अ॒ग्निः । इ॒षाम् । स॒ख्ये । द॒दा॒तु॒ । न॒ः । ईशे॑ । यः । वार्या॑णाम् ।
अ॒ग्निम् । तो॒के । तन॑ये । शश्व॑त् । ई॒म॒हे॒ । वसु॑म् । सन्त॑म् । त॒नू॒ऽपाम् ॥ १३ ॥

वेङ्कट० अग्निः अन्नानि सख्ये ददातु[5] नः, ईशे यः धनानाम् । अग्निम् पुत्रार्थे[6] तत्पुत्रार्थे च बहु याचामहे वासयितारम् सन्तम् अन्नानां पालयितारम् ॥ १३ ॥

अ॒ग्निमी॑ळि॒ष्वाव॑से॒ गाथा॑भिः॒ शी॒रशो॑चिषम् ।
अ॒ग्निं रा॒ये पु॑रुमीळ्ह श्रु॒तं नरो॒ऽग्निं सु॑दी॒तये॑ छ॒र्दिः ॥ १४ ॥

अ॒ग्निम् । ई॒ळि॒ष्व॒ । अव॑से । गाथा॑भिः । शी॒रऽशो॑चिषम् ।
अ॒ग्निम् । रा॒ये । पु॒रु॒ऽमी॒ळ्ह॒ । श्रु॒तम् । नर॑ः । अ॒ग्निम् । सु॒ऽदी॒तये॑ । छ॒र्दिः ॥ १४ ॥

---

१-१. तु. ऋ ८,८४,२; ५,२२,१. २. वैधम् मूको. ३-३. अग्निमुख्य° वि². ४. क्षेत्र सम्ब° मूको. ५. दधातु मूको. ६. अपुत्रार्थे मूको.

वेङ्कट० अग्निम् स्तुहि [1]रक्षणाय वाग्भिः[1] शयनशीलरोचिषम्[2], अग्निम् धनाय हे पुरुमीळ्ह! । विश्रुतम् नरः स्तुवन्ति अन्ये च । अग्निम् सुदीतये[3] च महां गृहं याचस्वेति सुदीतिः[4] पुरुमीळ्हमाह[5] सखायम् ऋत्विजं वेति ॥ १४ ॥

अ॒ग्निं द्वेषो॒ योत॒वै नो॑ गृणीमस्य॒ग्निं शं योश्च॒ दात॑वे ।
विश्वा॑सु वि॒क्ष्व॑वि॒तेव॒ हव्यो॒ भुव॒द्वस्तु॑र्ऋषू॒णाम् ॥ १५ ॥

अ॒ग्निम् । द्वेषः॑ । योत॒वै । न॒ः । गृ॒णी॒म॒सि॒ । अ॒ग्निम् । शम् । योः । च॒ । दात॑वे ।
विश्वा॑सु । वि॒क्षु । अ॒वि॒ताऽइ॑व । हव्यः॑ । भुव॑त् । वस्तुः॑ । ऋ॒षू॒णाम् ॥ १५ ॥

वेङ्कट० अग्निम् अस्माकं द्वेष्टॄन् पृथक् कर्तुं स्तुमः, अग्निम् शम् च योः च दातुम् । विश्वासु विक्षु रक्षको[6] राजा इव ह्वातव्यः भवतु वासयिता अस्माकम् ऋषूणाम्[7] । ऋषवः ऋषयः ॥१५॥

[8]इति षष्ठाष्टके पञ्चमाध्याये त्रयोदशो वर्गः[8] ॥

[ ७२ ]

[8]हर्यतः प्रागाथ ऋषिः । अग्निर्देवता, हवींषि वा । गायत्री छन्दः[8] ।

ह॒विष्कृ॑णुध्व॒मा ग॑मदध्व॒र्युर्व॑नते॒ पुन॑ः । वि॒द्वाँ अ॑स्य प्र॒शास॑नम् ॥ १ ॥

ह॒विः । कृ॒णु॒ध्व॒म् । आ । ग॒म॒त् । अ॒ध्व॒र्युः । व॒न॒ते॒ । पु॒न॒रिति॑ । वि॒द्वान् । अ॒स्य॒ । प्र॒ऽशास॑नम् ॥१॥

वेङ्कट० प्रागाथो[9] हर्यतः । आग्नेयम् । [8]हविः कृणुध्वम्[8] । आ जगाम अग्निः । आगते च अध्वर्युः अध्वरं भजते विद्वान् अस्य[10] हविषः प्रशासनम् यथा हविः क्रियते ॥ १ ॥

नि ति॒ग्मम॒भ्यं॑१॒॑शुं सीद॒द्धोता॑ म॒नाव॑धि । जु॒षा॒णो अ॑स्य स॒ख्यम् ॥ २ ॥

नि । ति॒ग्मम् । अ॒भि । अं॒शुम् । सीद॑त् । होता॑ । म॒नौ । अधि॑ । जु॒षा॒णः । अ॒स्य॒ । स॒ख्यम् ॥

वेङ्कट० तिग्मम् अंशुम् अग्निम् होता च अभि नि षीदति यजमाने जुषाणः अग्नेः सख्यम् ॥ २ ॥

अ॒न्तरि॑च्छन्ति॒ तं जने॑ रु॒द्रं प॒रो म॑नी॒षया॑ । गृ॒भ्णन्ति॑ जि॒ह्वया॑ स॒सम् ॥ ३ ॥

अ॒न्तः । इ॒च्छ॒न्ति॒ । तम् । जने॑ । रु॒द्रम् । प॒रः । म॒नी॒षया॑ । गृ॒भ्णन्ति॑ । जि॒ह्वया॑ । स॒सम् ॥ ३ ॥

वेङ्कट० अन्तः इच्छन्ति तम् जने अग्निं परस्तात् स्थितं प्रज्ञानेन । गृह्णन्ति स्तुत्या स्वपनम् । अत्र[11] यास्कः (५,३) — 'स्वपनम् एतत् माध्यमिकं[12] ज्योतिरनित्यदर्शनम्' इति ॥ ३ ॥

---

१-१. रक्ष पार्हतिः वि[2]; रक्ष पागेति अ[1]. २. °शीलम् मूको. ३. सुदीयते मूको. ४. °ति मूको. ५. °मायं वि[2]; °मायां अ[1]. ६. राजको मूको. ७. अषूणाम् मूको. ८-८. नास्ति मूको. ९. आवि प्र° मूको. १०. अद्य मूको. ११. अत्य मूको. १२. मध्यमं मूको.

जाम्यतीतपे धनुर्वयोधा अरुहद्वनम् । दृषदं जिह्वयावधीत् ॥ ४ ॥

जामि । अतीतपे । धनुः । वयःऽधाः । अरुहत् । वनम् । दृषदम् । जिह्वया । आ । अवधीत् ॥४॥

**वेङ्कट०** गमनशीलम् धनुः तपति अन्नस्य[1] दाता मध्यमः अग्निः[2], उदकम् ( तु. निघ १,१२ ) आ रोहति[3], दृषदम् मेघम् च जिह्वया हन्ति ॥ ४ ॥

चरन् वत्सो रुशन्निह निदातारं न विन्दते । वेति स्तोतव अम्ब्यम् ॥ ५ ॥

चरन् । वत्सः । रुशन् । इह । निऽदातारम् । न । विन्दते । वेति । स्तोतवे । अम्ब्यम् ॥ ५ ॥

**वेङ्कट०** चरन् वत्सः श्वेतो भवन् इह निदातारम् न विन्दते । [4]यः प्रतिबध्नाति[4] न तं लभते । वैद्युतः सोऽयं वत्सः स्वयमेव गच्छति आत्मानं स्तोतुम् [5]अम्ब्यम् माध्यमिकां वाचम्[5] इति ॥ ५ ॥

[6]इति षष्ठाष्टके पञ्चमाध्याये चतुर्दशो वर्गः[6] ॥

उतो न्वस्य यन्महदश्वावद्योजनं बृहत् । दामा रथस्य ददृशे ॥ ६ ॥

उतो इति । नु । अस्य । यत् । महत् । अश्वऽवत् । योजनम् । बृहत् । दामा । रथस्य । ददृशे ॥६॥

**वेङ्कट०** अपि च तत् क्षिप्रम् [7]यत् अस्य[7] दीर्घं पृथु सम्बद्धाश्वम् योजनम् दृश्यते । एतदेवाऽऽह — [8]दामा रथस्य इति[8] रज्जुं नियोजयति, सा यदा दृश्यते । उत्तरत्र सम्बन्धः ॥ ६ ॥

दुहन्ति सप्तैकामुप द्वा पञ्च सृजतः । तीर्थे सिन्धोरधि स्वरे ॥ ७ ॥

दुहन्ति । सप्त । एकाम् । उप । द्वा । पञ्च । सृजतः । तीर्थे । सिन्धोः । अधि । स्वरे ॥ ७ ॥

**वेङ्कट०** तदा दुहन्ति सप्त ऋत्विजः एकाम् घर्मदुघाम् उदिते[9] सूर्ये । तत्र च द्वौ अध्वर्यू पञ्च अन्यानृत्विजः उप सृजतः[10] यजमानं ब्रह्माणं होतारम् आग्नीध्रं प्रस्तोतारम् इति कस्यचित् सिन्धोः तीर्थे । यत्र असौ यजते ऋषिः तत्र । स्वरतिः शब्दकर्मा । यत् तीर्थम् ऋत्विजां शब्दैः शब्दं करोति तत्रेति ॥ ७ ॥

आ दशभिर्विवस्वत इन्द्रः कोशमचुच्यवीत् । खेदया त्रिवृता दिवः ॥ ८ ॥

आ । दशऽभिः । विवस्वतः । इन्द्रः । कोशम् । अचुच्यवीत् । खेदया । त्रिऽवृता । दिवः ॥ ८ ॥

**वेङ्कट०** इत्थं परिचरतः अस्य यजमानस्य दशभिः अङ्गुलिभिः इन्द्रः दिवः मेघम् आ अचुच्यवत् त्रिवृता रश्मिना इति ॥ ८ ॥

---

१. °न्तरय वि[2]; °न्यस्य अ[2]. २. अग्निम् मूको. ३. रोह मूको. ४-४. य ··· ब° मूको. ५-५. अस्य माध्यमिका वोचम् मूको. ६-६. नास्ति मूको. ७-७. यददास्य वि[2]. ८-८. नाम्नामरथस्ये मूको. ९. अतिथे मूको. १०. °न्तः मूको.

परि॑ त्रि॒धातु॑रध्व॒रं जू॒र्णिरे॑ति॒ नवी॑यसी । मध्वा॒ होता॑रो अञ्जते ॥ ९ ॥

परि॑ । त्रि॒ऽधातुः॑ । अ॒ध्व॒रम् । जू॒र्णिः । ए॒ति॒ । नवी॑यसी । मध्वा॑ । होता॑रः । अ॒ञ्ज॒ते॒ ॥ ९ ॥

**वेङ्कट०** 'परि त्रिविष्टि अध्वरम्' ( ऋ ४,१५,२ ) इत्यनेन[1] समानम्। अस्मिन् यज्ञे परि एति त्रिधातुः[2] क्षिप्रा नवतरा अग्नेः[3] ज्वाला। घृतेन[4] होतारः च अग्निम् अञ्जते[5] ॥ ९ ॥

सि॒ञ्चन्ति॒ नम॑साव॒तमु॒च्चाच॑क्रं॒ परि॑ज्मानम् । नी॒चीन॑बार॒मक्षि॑तम् ॥ १० ॥

सि॒ञ्चन्ति॑ । नम॑सा । अ॒व॒तम् । उ॒च्चाऽच॑क्रम् । परि॑ऽज्मानम् । नी॒चीन॑ऽबारम् । अक्षि॑तम् ॥ १० ॥

**वेङ्कट०** सिञ्चन्ति नमनेन[6] अवतम्[7] महावीरम् उपरिस्थितचक्रम् परिचारम् नीचीनद्वारम्[8] अक्षीणम् आहवनीयस्य उपरि ॥ १० ॥

[9]इति षष्ठाष्टके पञ्चमाध्याये पञ्चदशो वर्गः[9] ॥

अ॒भ्यार॒मिदद्र॑यो॒ निषि॑क्तं॒ पुष्क॑रे॒ मधु॑ । अ॒व॒तस्य॑ वि॒सर्ज॑ने ॥ ११ ॥

अ॒भि॒ऽआर॑म् । इत् । अद्र॑यः । निऽसि॑क्तम् । पुष्क॑रे । मधु॑ । अ॒व॒तस्य॑ । वि॒ऽसर्ज॑ने ॥ ११ ॥

**वेङ्कट०** अभिगम्य ऋत्विजः महावीरस्य अन्तरिक्षे[10] निषिक्तम् मधु सिञ्चन्ति आद्रियमाणाः महावीरस्य विसर्जने। होमानन्तरं हि तम् आसादयन्ति आसन्द्यामिति ॥ ११ ॥

गाव॒ उपा॑वताव॒तं म॒ही य॒ज्ञस्य॑ र॒प्सुदा॑ । उ॒भा कर्णा॑ हिर॒ण्यया॑ ॥ १२ ॥

गावः॑ । उप॑ । अ॒व॒त॒ । अ॒व॒तम् । म॒ही इति॑ । य॒ज्ञस्य॑ । र॒प्सुदा॑ । उ॒भा । कर्णा॑ । हि॒र॒ण्यया॑ ॥ १२ ॥

**वेङ्कट०** हे गावः! उप गच्छत घर्मदुघाः महावीरम्। महती[11] यज्ञस्य स्फुटा [12]महावीरोपयोगिता यस्मात् सा[12] रप्सुदा। उभौ च अस्य हिरण्मयौ कर्णौ हिरण्यरजतौ रुक्मौ इति ॥ १२ ॥

आ सु॒ते सि॑ञ्चत॒ श्रिय॒ं रोद॑स्योरभि॒श्रिय॑म् । र॒सा द॑धीत वृष॒भम् ॥ १३ ॥

आ । सु॒ते । सि॒ञ्च॒त॒ । श्रिय॑म् । रोद॑स्योः । अ॒भि॒ऽश्रिय॑म् । र॒सा । द॒धी॒त॒ । वृ॒ष॒भम् ॥ १३ ॥

**वेङ्कट०** आ सिञ्चत सुते गोपयसि श्रयणम् आजं पयः द्यावापृथिव्यौ अभिश्रयन्तम्। वृषभम् अग्निं रसे दधीत। 'आग्नेयी वा एषा यदजा' ( तैब्रा ३,७,३,१ ) इति ब्राह्मणादित्थमुक्तम् इति ॥ १३ ॥

ते जा॑नत॒ स्वमो॒क्यं१॒॑ सं व॒त्सासो॒ न मा॒तृभिः॑ । मि॒थो न॑सन्त जा॒मिभिः॑ ॥ १४ ॥

ते । जा॒न॒त॒ । स्वम् । ओ॒क्य॑म् । सम् । व॒त्सासः॑ । न । मा॒तृऽभिः॑ । मि॒थः । न॒स॒न्त॒ । जा॒मिऽभिः॑ ॥ १४ ॥

---

१. इत्येतेन अ'. २. °तु मूको. ३. °ग्ने मूको. ४. घृते° मूको. ५. °न्ते मूको. ६. नवेनन वि[2]; नवेनेन अ'. ७. अतः मूको. ८. नीचरद्वा° मूको. ९-९. नास्ति मूको. १०. अन्तिके मूको. ११. महित मूको. १२-१२. °वीरोपज्ञोयियस्सा मूको.

वेङ्कट० ते गावः जानत स्वम् निवासस्थानं महावीरम् । यथा वत्साः मातृभिः मिथः सङ्गताः भवन्ति । एवम् जामिभिः सम् नसन्त इति ॥ १४ ॥

उप॑ स्र॒क्वे॑षु॒ बप्स॑तः कृण्व॒ते ध॒रुणं॑ दि॒वि । इन्द्रे॑ अ॒ग्ना नमः॒ स्वः॑ ॥ १५ ॥

उप॑ । स्र॒क्वे॑षु । बप्स॑तः । कृ॒ण्व॒ते । ध॒रुण॑म् । दि॒वि । इन्द्रे॑ । अ॒ग्ना । नमः॑ । स्व१॒॑रिति॑ स्वः॑ ॥ १५ ॥

वेङ्कट० उप कुर्वन्ति महावीरस्य स्रक्केषु ज्वालया भक्षयतः[१] अग्नेः अन्नं प्रशस्तम् इन्द्राग्न्योः धारकम् अन्तरिक्षे । यदा[२] महावीरस्य अस्य प्रदेशम् अग्निः बप्सति, तदानीम् इन्द्राग्न्योः द्वारम् अन्नं गव्यमाज्यं च महावीरस्यास्य उपरि कुर्वन्ति ॥ १५ ॥

[३]इति षष्ठाष्टके पञ्चमाध्याये षोडशो वर्गः[३] ॥

अधु॑क्षत् पि॒प्युषी॒मिष॒मूर्जं॑ स॒प्तप॑दीम॒रिः । सूर्य॑स्य स॒प्त र॒श्मिभिः॑ ॥ १६ ॥

अधु॑क्षत् । पि॒प्युषी॑म् । इष॑म् । ऊर्ज॑म् । स॒प्तऽप॑दीम् । अ॒रिः । सूर्य॑स्य । स॒प्त । र॒श्मिऽभिः॑ ॥ १६ ॥

वेङ्कट० अधुक्षत् आप्याययत् अन्नं रसं च सप्तपदीम् माध्यमिकां वाचम् । सा हि घर्मधुग्भूत्वा तिष्ठति । तथा च अस्यवामीये ( ऋ १,१६४,२७;२८ ) उक्तम् । गन्ता वायुः सूर्यस्य सप्तभिः रश्मिभिः ॥ १६ ॥

सोम॑स्य मित्रावरु॒णोदि॑ता॒ सूर॒ आ द॑दे । तदातु॑रस्य भेष॒जम् ॥ १७ ॥

सोम॑स्य । मि॒त्रा॒व॒रु॒णा॒ । उत्ऽइ॑ता । सूरे॑ । आ । द॒दे॒ । तत् । आतु॑रस्य । भे॒ष॒जम् ॥ १७ ॥

वेङ्कट० हे मित्रावरुणौ ! उदिते सूर्ये ममास्मिन्[४] यज्ञे सोमम्[५] आ ददे देवानां [६]यागाय । तत्[६] [७]हि आतुरस्य[७] अस्मदादेः भेषजम् ॥ १७ ॥

उ॒तो न्व॑स्य॒ यत् प॒दं ह॑र्य॒तस्य॑ नि॒धान्य॑म् । परि॒ द्यां जि॒ह्वया॑तनत् ॥ १८ ॥

उ॒तो इति॑ । नु । अ॒स्य॒ । यत् । प॒दम् । ह॒र्य॒तस्य॑ । नि॒ऽधान्य॑म् । परि॑ । द्याम् । जि॒ह्वया॑ । अ॒त॒न॒त् ॥ १८ ॥

वेङ्कट० आत्ते च सोमे अपि च क्षिप्रम् अस्य हर्यतस्य मम यत् हविषां निधानयोग्यं[८] स्थानम् उत्तरवेद्यात्मकम् । 'द्यौरुत्तरवेदिः' ( माश ७,३,१,२७ ) ताम् अग्निर्ज्वालया[९] परितनोति ॥ १८ ॥

[३]इति षष्ठाष्टके पञ्चमाध्याये सप्तदशो वर्गः[३] ॥

---

१. °न्तः मूको. २. यथा मूको. ३-३. नास्ति मूको. ४. मामा° मूको. ५. सोम मूको. ६-६. गायत मूको. ७-७. ध्यातुरस्य बि[१]; ध्यातुरस्य अ[१]. ८. निदान° मूको. ९. अग्निज्वा°

[ ७३ ]

[1]गोपवन आत्रेयः सप्तवध्रिर्वा ऋषिः। अश्विनौ देवता। गायत्री छन्दः[1]।

उदीराथामृतायते युञ्जाथामश्विना रथम्। अन्ति षद् भूतु वामवः ॥ १ ॥

उत्। ईराथाम्। ऋतऽयते। युञ्जाथाम्। अश्विना। रथम्। अन्ति। सत्। भूतु। वाम्। अवः ॥

वेङ्कट० गोपवन आत्रेयः सप्तवध्रिर्वा। उत् गच्छतम्[2] यज्ञमिच्छते। युञ्जाथाम् च अश्विनौ! रथम्[3]। आसन्ने[4] स्थाने अस्माकं विद्यमानं भवतु युवयोः पालनम् ॥ १ ॥

निमिषश्चिज्जवीयसा रथेना यातमश्विना। अन्ति षद् भूतु वामवः ॥ २ ॥

निऽमिषः। चित्। जवीयसा। रथेन। आ। यातम्। अश्विना। अन्ति। सत्। भूतु। वाम्। अवः ॥

वेङ्कट० चक्षुषो निमेषादपि वेगवत्तरेण रथेन आ यातम् अश्विनौ! ॥ २ ॥

उप स्तृणीतमत्रये हिमेन घर्ममश्विना। अन्ति षद् भूतु वामवः ॥ ३ ॥

उप। स्तृणीतम्। अत्रये। हिमेन। घर्मम्। अश्विना। अन्ति। सत्। भूतु। वाम्। अवः ॥ ३ ॥

वेङ्कट० असुरैः अग्नौ प्रक्षिप्ताय अत्रये युवां तम् अग्निम् हिमेन उपस्तीर्णवन्तौ[5] ॥ ३ ॥

कुह स्थः कुह जग्मथुः कुह श्येनेव पेतथुः। अन्ति षद् भूतु वामवः ॥ ४ ॥

[6]कुह। स्थः। कुह। जग्मथुः। कुह। श्येनाऽइव। पेतथुः[6]। अन्ति। सत्। भूतु। वाम्। अवः ॥४॥

वेङ्कट० क्व भवथः[7]। सम्प्रति क्व च[8] गच्छथः[9]। [10]क्व वा[10] श्येनौ इव पेतथुः तदं [11]निरूपयन्तौ प्रेष्ठम्। अन्ति षद् भूतु वामवः[11] ॥ ४ ॥

यदद्य कर्हि कर्हि चिच्छुश्रूयातमिमं हवम्। अन्ति षद् भूतु वामवः ॥ ५ ॥

[12]यत्। अद्य। कर्हि। कर्हि। चित्। शुश्रुयातम्। इमम्। हवम्[12]। अन्ति। सत्। भूतु। वाम्। अवः ॥

वेङ्कट० यत् अद्य कस्मिन् अपि देशे कस्मिन् अपि काले शृणुयातम् इमम् हवम्। येनयेन वाक्यसंयोगेन उत्तरोऽर्धर्चः सङ्गच्छते तंतं मध्य आनयेदिति ॥ ५ ॥

[1]इति षष्ठाष्टके पञ्चमाध्याये अष्टादशो वर्गः[1] ॥

अश्विना यामहूतमा नेदिष्ठं याम्याप्यम्। अन्ति षद् भूतु वामवः ॥ ६ ॥

---

१-१. नास्ति मूको. २. °च्छत मूको. ३. तु. ऋ १,४६,७. ४. °सने मूको. ५. तु. ऋ १,११६,८. ६-६. तु. ऋ ५,७४,१-३. ७. °वथ मूको. ८. नास्ति वि[२]. ९. °च्छथ मूको. १०-१०. नास्ति वि[२]. ११-११. °पन्ति षष्ठं त्वति षद्भुयुवामव मूको. १२-१२. तु. ऋ ५,७४,१०.

अश्विना । यामऽहूतमा । नेदिष्ठम् । यामि । आप्यम् । अन्ति । सत् । भूतु । वाम् । अवः ॥६॥

**वेङ्कट०** अश्विनौ अत्यन्तम् आह्वातव्यौ नेदिष्ठम् याचे बान्धवम् ॥ ६ ॥

अवन्तमत्रये गृहं कृणुतं युवमश्विना । अन्ति षद् भूतु वामवः ॥ ७ ॥

अवन्तम् । अत्रये । गृहम् । कृणुतम् । युवम् । अश्विना । अन्ति । सत् । भूतु । वाम् । अवः ॥७॥

**वेङ्कट०** रक्षन्तम् अत्रये कृणुतम् गृहम् युवाम् अश्विनौ ! ॥ ७ ॥

वरेथे अग्निमातपो वदते वल्ग्वत्रये । अन्ति षद् भूतु वामवः ॥ ८ ॥

वरेथे इति । अग्निम् । आऽतपः । वदते । वल्गु । अत्रये । अन्ति । सत् । भूतु । वाम् । अवः ॥८॥

**वेङ्कट०** आवारयतम् अग्निम् [1]आतपः वदते वल्गु[1] स्तोत्रम् अत्रये ॥ ८ ॥

प्र सप्तवध्रिराशसा धारामग्नेरशायत । अन्ति षद् भूतु वामवः ॥ ९ ॥

प्र । सप्तऽवध्रिः । आऽशसा । धाराम् । अग्नेः । अशायत । अन्ति । सत् । भूतु । वाम् । अवः ॥९॥

**वेङ्कट०** [2]प्र अशायत[2] रात्रिषु मञ्जूषाया[3] निर्गत्य सप्तवध्रिः आशंसनेन युवयोः प्रार्थनेन अग्नेः धाराम् मञ्जूषाया अन्तःप्रविष्टाम् प्राशायत इति[4] ॥ ९ ॥

इहा गतं वृषण्वसू शृणुतं म इमं हवम् । अन्ति षद् भूतु वामवः ॥१०॥

इह । आ । गतम् । वृषण्वसू इति वृषण्ऽवसू । शृणुतम् । मे । इमम् । हवम् । अन्ति । सत् । भूतु । वाम् । अवः ॥

**वेङ्कट०** इह आ गच्छतं हे वृष्यमाणधनौ ! । शृणुतम् मे इमम् हवम् ॥ १० ॥

[5]इति षष्ठाष्टके पञ्चमाध्याये एकोनविंशो वर्गः[5] ॥

किमिदं वां पुराणवज्जरतोरिव शस्यते । अन्ति षद् भूतु वामवः ॥ ११ ॥

किम् । इदम् । वाम् । पुराणऽवत् । जरतोःऽइव । शस्यते । अन्ति । सत् । भूतु । वाम् । अवः ॥ ११ ॥

**वेङ्कट०** युवयोः प्रत्नयोः[6] जरतोः[7] इव च मया पुनःपुनः शस्यते तादृशयोः इति अनागमनात् अश्विनोः वदति । वृद्धः जीर्णः वा शस्यमान[8] इन्द्रियवैकल्यात् न तत् क्षिप्रं श्रुत्वा करोति ॥ ११ ॥

समानं वां सजात्यं समानो बन्धुरश्विना । अन्ति षद् भूतु वामवः ॥ १२ ॥

---

१-१. °पा वल्गु मूको. २-२. प्राशाय° मूको. ३. °यां मूको. ४. तु. ऋ ५,७८,७. ५-५. नास्ति मूको. ६. °त्नतोः मूको. ७. °रयोः मूको. ८. यास्य° मूको.

समानम् । वाम् । सऽजात्यम् । समानः । बन्धुः । अश्विना । अन्ति । सत् । भूतु । वाम् । अवः ॥१२॥

वेङ्कट० समानम् युवयोः सजात्यम् । एकम् एव उत्पत्तिस्थानम् इत्यर्थः । समानः च बन्धुः स्तुतिः इति ॥ १२ ॥

यो वां रजांस्यश्विना रथो वियाति रोदसी । अन्ति षद् भूतु वामवः ॥ १३ ॥

यः । वाम् । रजांसि । अश्विना । रथः । विऽयाति । रोदसी इति । अन्ति । सत् । भूतु । वाम् । अवः ॥

वेङ्कट० यः युवयोः सर्वान् लोकान् द्यावापृथिव्यौ च अश्विनौ! वि याति 'रथः, तेन आगच्छतम्' इति ॥ १३ ॥

आ नो गव्येभिरश्व्यैः सहस्रैरुप गच्छतम् । अन्ति षद् भूतु वामवः ॥ १४ ॥

आ । नः । गव्येभिः । अश्व्यैः । सहस्रैः । उप । गच्छतम् । अन्ति । सत् । भूतु । वाम् । अवः ॥

वेङ्कट० उप आ गच्छतम् अस्मान् बहुभिः गव्यैः अश्व्यैः[2] च ॥ १४ ॥

मा नो गव्येभिरश्व्यैः सहस्रेभिरति ख्यतम् । अन्ति षद् भूतु वामवः ॥ १५ ॥

मा । नः । गव्येभिः । अश्व्यैः । सहस्रेभिः । अति । ख्यतम् । अन्ति । सत् । भूतु । वाम् । अवः ॥

वेङ्कट० मा अस्मान् एतैः अति पश्यतम् । अतिदर्शनम् अप्रदानम् इति ॥ १५ ॥

अरुणप्सुरुषा अभूदकर्ज्योतिर्ऋतावरी । अन्ति षद् भूतु वामवः ॥ १६ ॥

अरुणऽप्सुः । उषाः । अभूत् । अकः । ज्योतिः । ऋतऽवरी । अन्ति । सत् । भूतु । वाम् । अवः ॥

वेङ्कट० अरुणरूपा उषाः अभूत् । करोति ज्योतिः उषाः ॥ १६ ॥

अश्विना सु विचाकशद्वृक्षं परशुमाँ इव । अन्ति षद् भूतु वामवः ॥१७॥

अश्विना । सु । विऽचाकशत् । वृक्षम् । परशुमान्ऽइव । अन्ति । सत् । भूतु । वाम् । अवः ॥१७॥

वेङ्कट० अश्विनौ ।[3] सुष्ठु नाशयति अन्धकारम् अत्यन्तं दीप्यमानः सूर्यः अग्निः वा वृक्षम् परशुमान् इव ॥ १७ ॥

पुरं न धृष्णवा रुज कृष्णया बाधितो विशा । अन्ति षद् भूतु वामवः ॥ १८ ॥

पुरम् । न । धृष्णो इति । आ । रुज । कृष्णया । बाधितः । विशा । अन्ति । सत् । भूतु । वाम् । अवः ॥

---

१-१. रथतो गच्छ° मूको. २. अश्वैः मूको. ३. अन्वयः ?.

**वेङ्कट०** कर्षणशीलया विशा शत्रुभूतया बाधितः त्वं सप्तवध्रे! धृष्णुः भूत्वा मञ्जूषाम् आ रुज इति आत्मनः अनुशासनम्। अपि वा सप्तवध्रिं गोपवनः[1] अनुशास्ति इति ॥ १८ ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये विंशो वर्गः[2] ॥

## [ ७४ ]

[2]गोपवन आत्रेय ऋषिः। अग्निर्देवता, त्रयोदश्यादिपञ्चदश्यन्तानां श्रुतर्वण आर्क्षस्य दानम्। प्रथमादिद्वादश्यन्ता अनुष्टुम्मुखः प्रगाथश्छन्दः ( =अनुष्टुब्गायत्र्यौ ), अवशिष्टा अनुष्टुभः[2]।

विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम्।
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥ १ ॥

विशःऽविशः। वः। अतिथिम्। वाजऽयन्तः। पुरुऽप्रियम्।
अग्निम्। वः। दुर्यम्। वचः। स्तुषे। शूषस्य। मन्मऽभिः ॥ १ ॥

**वेङ्कट०** सर्वस्य मनुष्यस्य अतिथिम् यूयम् अन्नम् इच्छन्तः बहुप्रियम् परिचरत। अहं च अग्निम् युष्माकं गृहभवम् वचसा[3] स्तौमि सुखकरस्य स्तोत्रैः इति ॥ १ ॥

यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम्। प्रशंसन्ति प्रशस्तिभिः ॥ २ ॥

यम्। जनासः। हविष्मन्तः। मित्रम्। न। सर्पिःऽआसुतिम्। प्रऽशंसन्ति। प्रशस्तिऽभिः ॥ २ ॥

**वेङ्कट०** यम् जनाः हविष्मन्तः सखायम् इव यस्मिन् घृतं हूयते, प्रशंसन्ति प्रशंसनैः तम् इति ॥ २ ॥

पन्यांसं जातवेदसं यो देवतात्युद्यता। हव्यान्यैरयद्दिवि ॥ ३ ॥

पन्यांसम्। जातऽवेदसम्। यः। देवऽताति। उत्ऽयता। हव्यानि। ऐरयत्। दिवि ॥ ३ ॥

**वेङ्कट०** अत्यन्तं स्तोतारम् जातवेदसम्, यः यज्ञे[4] उद्यता हव्यानि[5] द्युलोके प्रेरयति ॥ ३ ॥

आगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम्। यस्य श्रुतर्वा बृहन्नार्क्षो अनीक एधते ॥ ४ ॥

आ। अगन्म। वृत्रहन्ऽतमम्। ज्येष्ठम्। अग्निम्। आनवम्।
यस्य। श्रुतर्वा। बृहन्। आर्क्षः। अनीके। एधते ॥ ४ ॥

---

१. गानानः मूको. २-२. नास्ति मूको. ३. पयसा मूको. ४. य वि[2]. ५. इहव्यादि मूको.

वेङ्कट० आगताः वृत्रहन्तमम् प्रशस्यम् अग्निम्[1] मनुष्याणां सम्बन्धिनम्, यस्य अयम् श्रुतर्वा आर्क्षः[2] [3]महान् ज्वालासंघे[3] वर्धते इति। भिक्षणाय यज्ञ आगतः तत्रत्यम्[4] अग्निं स्तौति ॥ ४ ॥

अमृतं जातवेदसं तिरस्तमांसि दर्शतम्। घृताहवनमीड्यम् ॥ ५ ॥

अमृतम्। जातऽवेदसम्। [5]तिरः। तमांसि। दर्शतम्[5]। घृतऽआहवनम्। ईड्यम् ॥ ५ ॥

वेङ्कट० अमृतम् जातवेदसम्, यः तमांसि तिरः दर्शयति विनाशयति, यस्मिन् च घृतम् आहूयते, स्तुत्यं तम् आगन्म इति ॥ ५ ॥

[6]इति षष्ठाष्टके पञ्चमाध्याये एकविंशो वर्गः[6] ॥

सबाधो यं जना इमे३ऽग्निं हव्येभिरीळते। जुह्वानासो यतस्रुचः ॥ ६ ॥

[7]सऽबाधः। यम्। जनाः। इमे। अग्निम्। हव्येभिः। ईळते[7]। जुह्वानासः। यतऽस्रुचः ॥ ६ ॥

वेङ्कट० बाधसहिताः यम् जनाः इमे अग्निम् हव्यैः सह स्तुवन्ति होमं कुर्वाणा आत्तस्रुचः[8] ॥ ६ ॥

इयं ते नव्यसी मतिरग्ने अधाय्यस्मदा। मन्द्र सुजात सुक्रतोऽमूर दस्मातिथे ॥७॥

इयम्। ते। नव्यसी। मतिः। अग्ने। अधायि। अस्मत्। आ।
मन्द्र। सुऽजात। सुक्रतो इति सुऽक्रतो। अमूर। दस्म। अतिथे ॥ ७ ॥

वेङ्कट० इयम् ते नवतरा स्तुतिः अग्ने! निहिताऽभूत् अस्मासु हे मोदमान! शोभनजनन! सुप्रज्ञ! अमूढ! दर्शनीय! अतिथे! ॥ ७ ॥

सा ते अग्ने शंतमा चनिष्ठा भवतु प्रिया। तया वर्धस्व सुष्टुतः ॥ ८ ॥

सा। ते। अग्ने। शम्ऽतमा। चनिष्ठा। भवतु। प्रिया। तया। वर्धस्व। सुऽस्तुतः ॥ ८ ॥

वेङ्कट० सा ते [9]अग्ने! शन्तमा अतिशयेन[9] अन्नवती भवतु प्रिया। तया मत्या वर्धस्व सुष्टुतः ॥ ८ ॥

सा द्युम्नैर्द्युम्निनी बृहदुपोप श्रवसि श्रवः। दधीत वृत्रतूर्ये ॥ ९ ॥

सा। द्युम्नैः। द्युम्निनी। बृहत्। उपऽउप। श्रवसि। श्रवः। दधीत। वृत्रऽतूर्ये ॥ ९ ॥

वेङ्कट० सा हविर्भिः हविष्मती[10] महत् अन्नम् अस्माकम् उप दधीत वर्तमानस्य अन्नस्य उपरि अनुपक्षीणे पूर्वस्मिन् अन्ने[11] सङ्ग्रामे शत्रुभ्यः ॥ ९ ॥

---

१. °ग्निः मूको. २. नास्ति मूको. ३-३. महाज्वालासर्वेध मूको. ४. तस्य तत्र° अ[1]. ५-५. तु. ऋ ३,२७,१३. ६-६. नास्ति मूको. ७-७. तु. ऋ ७,८,१. ८. °च इति अ[1]. ९-९. °ग्ने ··· अति° मूको. १०. °न्ति मूको. ११. अग्ने मूको.

अश्वमिद्गां रथप्रां त्वेषमिन्द्रं न सत्पतिम् ।
यस्य श्रवांसि तूर्वथ पन्यंपन्यं च कृष्टयः ॥ १० ॥

अश्वम् । इत् । गाम् । रथऽप्राम् । त्वेषम् । इन्द्रम् । न । सत्ऽपतिम् ।
यस्य । श्रवांसि । तूर्वथ । पन्यम्ऽपन्यम् । च । कृष्टयः ॥ १० ॥

**वेङ्कट०** अश्वम् इव गन्तारम् [1]रथानां धनैः[1] पूरयितारम् दीप्तम् इन्द्रम् इव च सतां पतिम् इमं परिचरत अग्निम्, यस्य बलेन शत्रुभ्यः अन्नानि [2]तूर्वथ हिंस्थ पन्यम्[2] च स्तुत्यं धनम् मनुष्याः ॥ १० ॥

[3]इति षष्ठाष्टके पञ्चमाध्याये द्वाविंशो वर्ग[3] ॥

यं त्वा गोपवनो गिरा चनिष्ठदग्ने अङ्गिरः । स पावक श्रुधी हवम् ॥ ११ ॥

यम् । त्वा । गोपवनः । गिरा । चनिष्ठत् । अग्ने । अङ्गिरः । सः । पावक । श्रुधि । हवम् ॥ ११ ॥

**वेङ्कट०** यम् त्वा अयम्[4] गोपवनः गिरा[5] अतिशयेन अन्नप्रदातारम् अकरोत् अग्ने! अङ्गिरः!, सः पावक! श्रुधि तस्य ह्वानम् ॥ ११ ॥

यं त्वा जनास ईळते सबाधो वाजसातये । स बोधि वृत्रतूर्ये ॥ १२ ॥

यम् । त्वा । जनासः । ईळते । सऽबाधः । वाजऽसातये । सः । बोधि । वृत्रऽतूर्ये ॥ १२ ॥

**वेङ्कट०** जनासः यम् त्वा जनाः स्तुवन्ति बाधासहिताः अन्नलाभाय, सः[6] बुध्यस्व अस्मान् सङ्ग्रामे ॥ १२ ॥

अहं हुवान आर्क्षे श्रुतर्वणि मदच्युति ।
शर्धांसीव स्तुकाविनां मृक्षा शीर्षा चतुर्णाम् ॥ १३ ॥

अहम् । हुवानः । आर्क्षे । श्रुतर्वणि । मदऽच्युति ।
शर्धांसिऽइव । स्तुकाऽविनाम् । मृक्षा[7] । शीर्षा । चतुर्णाम् ॥ १३ ॥

**वेङ्कट०** अहम् हूयमानः ऋक्षस्य अपत्ये श्रुतर्वनाम्नि शत्रुमदस्य च्यावयितरि[8], स्तुकाविनः[9] ऊर्णायवः स्तुका[10] केशसङ्घातः, तद्वतां शर्धांसि इव उच्छ्रितानि लोमानि इव [11]हस्तेन उन्मृजामि[11] प्रतिगृह्यमाणानाम् चतुर्णाम् अश्वानां शिरांसि ॥ १३ ॥

---

१. रथ ··· ध° मूको. २. तुर्वथा ह्यधन्यः मूको. ३-३. नास्ति मूको. ४. नास्ति अ'. ५. रो मूको. ६. स्र मूको. ७. =√ मृक्ष् > लटि उपु१ *मृक्षामि > ( वावि. ) > *मृक्षाइ > यनि-इति ( तु. छन्दः ) । ८. व्यापपि° मूको. ९. कापि नः मूको. १०. स्तुता मूको. ११-११. तु. ऋ १,१२६,४ भाष्यम् ।

मां चत्वार आशवः शविष्ठस्य द्रवित्नवः ।
सुरथासो अभि प्रयो वक्षन् वयो न तुग्र्यम् ॥ १४ ॥

माम् । चत्वारः । आशवः । शविष्ठस्य । द्रवित्नवः ।
सुऽरथासः । अभि । प्रयः । वक्षन् । वयः । न । तुग्र्यम् ॥ १४ ॥

वेङ्कट० माम् चत्वारः अश्वाः बलवत्तमस्य श्रुतर्वणः गमनशीलाः शोभनरथाः अभि अवहन् शत्रूणाम् अन्नं प्रति । यथा तुग्र्यम् भुज्युं चतस्रः नावः स्वगृहं प्रापयन् इति ॥ १४ ॥

सत्यमित् त्वा महेनदि परुष्ण्यव देदिशम् ।
नेमापो अश्वदातरः शविष्ठादस्ति मर्त्यः ॥ १५ ॥

सत्यम् । इत् । त्वा । महेऽनदि । परुष्णि । अव । देदिशम् ।
न । ईम् । आपः । अश्वऽदातरः । शविष्ठात् । अस्ति । मर्त्यः ॥ १५ ॥

वेङ्कट० सत्यम् एव त्वां हे महानदि![1] परुष्णि! अव देदिशम् त्वां प्रति वदामि । तदेवाऽऽह— नेमापः इति । हे आपः! न अस्मात्[2] बलवत्तमाद् अन्यः कश्चित् मनुष्यः अश्वानाम् अतिशयेन दाता विद्यते[3] इति ॥ १५ ॥

[4]इति षष्ठाष्टके पञ्चमाध्याये त्रयोविंशो वर्गः[4] ॥

[ ७५ ]

[4]विरूप आङ्गिरस ऋषिः । अग्निर्देवता । गायत्री छन्दः[4] ।

युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥ १ ॥

युक्ष्व । हि । देवऽहूतमान् । अश्वान् । अग्ने । रथीःऽइव । नि । होता । पूर्व्यः । सदः ॥ १ ॥

वेङ्कट० विरूपः । योजय रथे देवानाम् आह्वातृतमान् अश्वान् अग्ने! सारथिः इव । युक्त्वा च मुख्यः त्वम् नि षीद च होता इति ॥ १ ॥

उत नो देव देवाँ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि ॥ २ ॥

उत । नः । देव । देवान् । अच्छ । वोचः । विदुःऽतरः । श्रत् । विश्वा । वार्या । कृधि ॥ २ ॥

वेङ्कट० अपि च अस्मान् देव! देवान् अभिब्रूयाः विद्वत्तमः[5] । श्रत्[6] च कृधि विश्वानि वरणीयानि धनानि देवेषु अस्माकम् ॥ २ ॥

---

१. मातः अधि वि[2]; महान् अधि अ[1]. २. अस्यात् मूको ३. विद्युत मूको. ४-४. नास्ति मूको. ५. विद्वतम मूको. ६. शं मूको.

त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः ॥ ३ ॥

त्वम् । ह । यत् । यविष्ठ्य । सहसः । सूनो इति । आऽहुत । ऋतऽवा । यज्ञियः । भुवः ॥ ३ ॥

**वेङ्कट०** त्वम् खलु यदा युवतम! सहसः पुत्र! आहुत! सत्यवान् यज्ञसम्पादकः भवसि, तदा श्रत् विश्वा वार्या कृधि ( ऋ ८,७५,२ ) ॥ ३ ॥

अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम् ॥ ४ ॥

अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः । मूर्धा । कविः । रयीणाम् ॥ ४ ॥

**वेङ्कट०** अयम् अग्निः सहस्रशतसङ्ख्यस्य अन्नस्य स्वामी[1] उच्छ्रितः [2]क्रान्तप्रज्ञः मनुष्याणाम् रयीणाम् च भवति[2] ॥ ४ ॥

तं नेमिमृभवो यथा नमस्व सहूतिभिः । नेदीयो यज्ञमङ्गिरः ॥ ५ ॥

तम् । नेमिम् । ऋभवः । यथा । आ । नमस्व । सहूतिऽभिः । नेदीयः । यज्ञम् । अङ्गिरः ॥ ५ ॥

**वेङ्कट०** हे अङ्गिरः! तम् [3]यज्ञम् आ नमस्व समीपतरम्[3] आनमय समानह्वानैः अन्यैः देवैः सह, यथा रथस्य नेमिम् ऋभवः आनमन्ति । आनमनकुशला ऋभवः ॥ ५ ॥

[4]इति षष्ठाष्टके पञ्चमाध्याये चतुर्विंशो वर्गः[4] ॥

तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ॥ ६ ॥

तस्मै । नूनम् । अभिऽद्यवे । वाचा । विऽरूप । नित्यया । वृष्णे । चोदस्व । सुऽस्तुतिम् ॥ ६ ॥

**वेङ्कट०** तस्मै इदानीम् अभिगतदीप्तये वाचा विरूप! अनवरतया[5] वृष्णे चोदस्व सुष्टुतिम् । अग्निं स्तुहीति ॥ ६ ॥

कमु ष्विदस्य सेनयाऽग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे ॥ ७ ॥

[6]कम् । ऊँ इति । स्वित् । अस्य । सेनया । अग्नेः[6] । अपाकऽचक्षसः । पणिम् । गोषु । स्तरामहे ॥७॥

**वेङ्कट०** कम्[7] खलु अस्य सेनया ज्वालानीकेन अग्नेः अनल्पतेजसः[8] पणिम् असुरं गोनिमित्तम् स्तरामहे । स्तरणं हिंसनम् इति । तदानीं बलिनम् अभिभवाम इति ॥ ७ ॥

मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्न्याः ॥ ८ ॥

मा । नः । देवानाम् । विशः । प्रस्नातीःऽइव । उस्राः । कृशम् । न । हासुः । अघ्न्याः ॥ ८ ॥

---

१. स्याम् मूको. २. °ज्ञ रयीणां भव° वि'. ३-३. °ज्ञमानसं नतर° मूको. ४-४. नास्ति मूको. ५. अवरकतया वि'; अनवरकतया अ'. ६-६. तु. ऋ १०,१५६,२. ७. तं मूको. ८. अल्प° मूको.

वेङ्कट० मा अस्मान् देवानाम् परिचारकान्[1] अग्निः हासीत्, यथा [2]पयः क्षरन्त्यः[2] उस्राः न परित्यजन्ति। कृशम् न हासुः अघ्न्याः इति औपमिकम्। कृशं वत्सं [3]यथा गावो न परित्यजन्ति[3] तद्वन्मा हासीत् इति ॥ ८ ॥

मा नः॑ स॒मस्य॑ दू॒ढ्य१॒॑ः परि॑द्वेषसो अं॒ह॒तिः। ऊ॒र्मिर्न नाव॒मा व॑धीत् ॥ ९ ॥

मा। नः॒। स॒मस्य॑। दुः॒ऽध्य॑ः। परि॑ऽद्वेषसः। अं॒ह॒तिः। ऊ॒र्मिः। न। नाव॑म्। आ। व॒धी॒त् ॥९॥

वेङ्कट० मा अस्मान् सर्वस्य दुर्बुद्धेः[4] परितः द्विषतः हननम् आहतिः ऊर्मिः[5] इव नावम् आ वधीत् ॥ ९ ॥[6]

नम॑स्ते अग्न॒ ओज॑से गृ॒णन्ति॑ देव कृ॒ष्टयः॑। अमै॑र॒मित्र॑मर्दय ॥ १० ॥

नम॑ः। ते॒। अ॒ग्ने॒। ओज॑से। गृ॒णन्ति॑। दे॒व॒। कृ॒ष्टय॑ः। अमैः॑। अ॒मित्र॑म्। अ॒र्द॒य॒ ॥ १० ॥

वेङ्कट० नमस्कारम् तव अग्न! देव! बलाय मनुष्याः उच्चारयन्ति। स त्वं बलैः अमित्रम् अर्दय ॥ १० ॥

[7]इति षष्ठाष्टके पञ्चमाध्याये पञ्चविंशो वर्गः[7] ॥

कु॒वित्सु नो॒ गवि॑ष्टये॒ऽग्ने॑ सं॒वेषि॑षो र॒यिम्। उरु॑कृदु॒रु ण॑स्कृधि ॥ ११ ॥

कु॒वित्। सु। नः॒। गोऽइ॑ष्टये। अग्ने॑। स॒म्ऽवेषि॑षः। र॒यिम्। उरु॑ऽकृत्। उ॒रु। नः॒। कृ॒धि॒ ॥

वेङ्कट० बहु अस्माकम् गविष्टये अग्ने! सुष्ठु धनं सम्प्रापय। बहुकृत्[8] बहु अस्माकं कुर्विति। पूरयितुम् अस्माकं वा इच्छामिति ॥ ११ ॥

मा नो॑ अ॒स्मिन्म॑हाध॒ने परा॑ वर्ग्भार॒भृद्य॑था। सं॒वर्गं॒ सं र॒यिं ज॑य ॥ १२ ॥

मा। नः॒। अ॒स्मिन्। म॒हा॒ऽध॒ने। परा॑। व॒र्क्। भा॒र॒ऽभृत्। य॒था। स॒म्ऽवर्ग॑म्। सम्। र॒यिम्। ज॒य ॥

वेङ्कट० मा अस्मान् अस्मिन् सङ्ग्रामे परित्याक्षीः, यथा भारभृत् अन्ते भारं परित्यजति। सर्वतः शत्रुभ्यः सहाच्छिद्यमानं धनम् अस्मदर्थम् जय इति ॥ १२ ॥

अ॒न्यम॒स्मद्भि॒या इ॒यमग्ने॒ सिष॑क्तु दु॒च्छुना॑। वर्धा॑ नो॒ अम॑व॒च्छवः॑ ॥ १३ ॥

अ॒न्यम्। अ॒स्मत्। भि॒यै। इ॒यम्। अग्ने॑। सिस॑क्तु। दु॒च्छुना॑। वर्ध॑। नः॒। अम॑ऽवत्। शव॑ः ॥१३॥

वेङ्कट० अस्मत्तः अन्यम् तस्य भयाय इयम् अग्ने! दुच्छुना सेवताम्[9]। बाधकवर्गः दुच्छुना। वर्धय अस्माकं बलयुक्तं वेगम् ॥ १३ ॥

---

१. °रकम् वि[2]; रकाम् अ[1]. २-२. वयं क्षरन्तीः मूको. ३-३. था ··· परि° मूको. ४. °द्धे मूको. ५. °र्मिम् मूको. ६. या. (५,२३) व्याख्यानम् अपि द्र. ७-७. नास्ति मूको. ८. °कृशम् मूको. ९. °ता मूको.

यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा । तं घेदग्निर्वृधावति ॥ १४ ॥

यस्य॑ । अजु॑षत् । न॒म॒स्विनः॑ । शमी॑म् । अदुः॑ऽमखस्य । वा॒ । तम् । घ॒ । इत् । अ॒ग्निः । वृ॒धा । अ॒व॒ति॒ ॥

वेङ्कट० यस्य असेवत नमस्कारवतः अदुष्टयज्ञस्य वा कर्म, तम् एव अग्निः[1] वर्धनेन रक्षति[2] ॥ १४ ॥

पर॑स्या अधि॑ सं॒वतोऽव॑राँ अ॒भ्या त॑र । यत्रा॒हमस्मि॒ ताँ अ॑व ॥ १५ ॥

पर॑स्याः । अधि॑ । स॒म्ऽवतः॑ । अव॑रान् । अ॒भि । आ । त॒र॒ । यत्र॑ । अ॒हम् । अस्मि॑ । तान् । अ॒व॒ ॥

वेङ्कट० परस्याः अस्याः संवतः शत्रुसेनायाः अवरान् अभि आ तर इति आत्मीयान् योद्धॄन् निर्दिशति । यत्र अहम् अस्मि तान् रक्ष ॥ १५ ॥

वि॒द्मा हि ते॑ पु॒रा व॒यमग्ने॑ पि॒तुर्यथाव॑सः । अधा॑ ते सु॒म्नमी॑महे ॥ १६ ॥

वि॒द्म । हि । ते॒ । पु॒रा । व॒यम् । अग्ने॑ । पि॒तुः । यथा॑ । अव॑सः । अध॑ । ते॒ । सु॒म्नम् । ई॒म॒हे॒ ॥

वेङ्कट० जानीमः हि ते[3] पुरा वयम् रक्षणम् अग्ने! यथा पितुः । अथ ते सुखं याचामहे ॥ १६ ॥

[4]इति षष्ठाष्टके पञ्चमाध्याये षड्विंशो वर्गः[4] ॥

[ ७६ ]

[4]कुरुसुतिः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः[4] ।

इ॒मं नु मा॒यिनं॑ हुव॒ इन्द्र॒मीशा॑न॒मोज॑सा । म॒रुत्व॑न्तं॒ न वृ॒ञ्जसे॑ ॥ १ ॥

इ॒मम् । नु । मा॒यिन॑म् । हु॒वे॒ । इन्द्र॑म् । ईशा॑नम् । ओज॑सा । म॒रुत्व॑न्तम् । न । वृ॒ञ्जसे॑ ॥ १ ॥

वेङ्कट० कुरुसुतिः[5] । इमम् क्षिप्रम् प्राज्ञम् हुवे[6] इन्द्रम् ईश्वरम् बलेन मरुत्वन्तम् इदानीं शत्रूणां छेदनाय ॥ १ ॥

अ॒यमिन्द्रो॑ म॒रुत्स॑खा॒ वि वृ॒त्रस्या॑भिन॒च्छिरः॑ । वज्रे॑ण श॒तप॑र्वणा ॥ २ ॥

अ॒यम् । इन्द्रः॑ । म॒रुत्ऽस॑खा । वि । वृ॒त्रस्य॑ । अ॒भि॒न॒त् । शिरः॑ । वज्रे॑ण । श॒तऽप॑र्वणा ॥ २ ॥

वेङ्कट० अयम् इन्द्रः मरुत्सखा वृत्रस्य वि अच्छिनत् शिरः वज्रेण बहुसन्धिना ॥ २ ॥

वा॒वृ॒धा॒नो म॒रुत्स॒खेन्द्रो॒ वि वृ॒त्रमै॑रयत् । सृ॒जन्त्स॑मु॒द्रिया॑ अ॒पः ॥ ३ ॥

व॒वृ॒धा॒नः । म॒रुत्ऽस॑खा । इन्द्रः॑ । वि । वृ॒त्रम् । ऐ॒र॒य॒त् । सृ॒जन् । स॒मु॒द्रियाः॑ । अ॒पः ॥ ३ ॥

---

१. °ग्निम् मूको. २. °क्षन्ति मूको. ३. नास्ति वि[2]. ४-४. नास्ति मूको. ५. कुरुसति मूको. ६. हुव मूको.

**वेङ्कट०** वर्धमानः मरुत्सखा इन्द्रः वृत्रम् वि ऐरयत् सृजन्[1] आन्तरिक्ष्याणि उदकानि ॥ ३ ॥

अयं ह येन वा इदं स्वर्मरुत्वता जितम् । इन्द्रेण सोमपीतये ॥ ४ ॥

अयम् । ह । येन । वै । इदम् । स्वः । मरुत्वता । जितम् । इन्द्रेण । सोमऽपीतये ॥ ४ ॥

**वेङ्कट०** अयम् ह खलु इन्द्रः, येन खलु इदम् सर्वम् मरुत्वता जितम् इन्द्रेण सोमपानार्थम् ॥ ४ ॥

मरुत्वन्तमृजीषिणमोजस्वन्तं विरप्शिनम् । इन्द्रं गीर्भिर्हवामहे ॥ ५ ॥

मरुत्वन्तम् । ऋजीषिणम् । ओजस्वन्तम् । विऽरप्शिनम् । इन्द्रम् । गीःऽभिः । हवामहे ॥ ५ ॥

**वेङ्कट०** मरुत्वन्तम् तृतीयसवनस्थेन ऋजीषेण तद्वन्तम् ओजस्वन्तम् महान्तम् ( तु. निघ ३,३ ) इन्द्रम् स्तुतिभिः हवामहे ॥ ५ ॥

इन्द्रं प्रत्नेन मन्मना मरुत्वन्तं हवामहे । अस्य सोमस्य पीतये ॥ ६ ॥

इन्द्रम् । प्रत्नेन । मन्मना । मरुत्वन्तम् । हवामहे । अस्य । सोमस्य । पीतये ॥ ६ ॥

**वेङ्कट०** इन्द्रम् पुराणेन स्तोत्रेण मरुत्वन्तम् इति स्पष्टम् ॥ ६ ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये सप्तविंशो वर्गः[2] ॥

मरुत्वाँ इन्द्र मीढ्वः पिबा सोमं शतक्रतो । अस्मिन् यज्ञे पुरुष्टुत ॥ ७ ॥

मरुत्वान् । इन्द्र । मीढ्वः । पिब । सोमम् । शतक्रतो इति शतऽक्रतो । अस्मिन् । यज्ञे । पुरुऽस्तुत ॥

**वेङ्कट०** स्पष्टमिति ॥ ७ ॥

तुभ्येदिन्द्र मरुत्वते सुताः सोमासो अद्रिवः हृदा हूयन्त उक्थिनः ॥ ८ ॥

तुभ्य । इत् । इन्द्र । मरुत्वते । सुताः । सोमासः । अद्रिऽवः । हृदा । हूयन्ते । उक्थिनः ॥ ८ ॥

**वेङ्कट०** तुभ्यम् एव इन्द्र ! मरुत्वते सुताः सोमाः वज्रिन् ! श्रद्धया हूयन्ते शस्त्रवन्तः ॥ ८ ॥

पिबेदिन्द्र मरुत्सखा सुतं सोमं दिविष्टिषु । वज्रं शिशान ओजसा ॥ ९ ॥

पिब । इत् । इन्द्र । मरुत्ऽसखा । सुतम् । सोमम् । दिविष्टिषु । वज्रम् । शिशानः । ओजसा ॥ ९ ॥

**वेङ्कट०** पिब एव इन्द्र ! मरुत्सखा सुतम् सोमम् अह्नामागमनेषु वज्रम् तीक्ष्णीकुर्वन् बलेन ॥ ९ ॥

---

१. न्यस्° मूको. २-२. नास्ति मूको.

उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् ॥ १० ॥

उत्ऽतिष्ठन् । ओजसा । सह । पीत्वी । शिप्रे इति । अवेपयः । सोमम् । इन्द्र । चमू इति । सुतम् ॥१०॥

**वेङ्कट०** उत्तिष्ठन् बलेन सह पीत्वा वक्त्रं त्वम् अवेपयः सोमम् इन्द्र! चम्वोः अधिषवणफलकयोः सुतम् ॥ १० ॥

अनु त्वा रोदसी उभे क्रक्षमाणमकृपेताम् । इन्द्र यद्दस्युहाभवः ॥ ११ ॥

अनु । त्वा । रोदसी इति । उभे इति । क्रक्षमाणम् । अकृपेताम् । इन्द्र । यत् । दस्युऽहा । अभवः ॥११॥

**वेङ्कट०** अनु कल्पयेताम्[1] त्वाम् उभे द्यावापृथिव्यौ विलिखन्तम् शत्रून्, इन्द्र! यदा[2] त्वम् दस्युहा भवसि ॥ ११ ॥

वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम् । इन्द्रात् परि तन्वं ममे ॥ १२ ॥

वाचम् । अष्टाऽपदीम् । अहम् । नवऽस्रक्तिम् । ऋतऽस्पृशम् । इन्द्रात् । परि । तन्वम् । ममे ॥ १२ ॥

**वेङ्कट०** वाचम् दिग्भिः अवान्तरदिग्भिः च अष्टापदीम् ताभिः आदित्येन च नवस्रक्तिम् सत्यस्पृशम् अहम् इन्द्रात् तन्वम्[3] परि ममे । तनुत्वम् इन्द्राय अपर्याप्तिरिति ॥ १२ ॥

[4]इति षष्ठाष्टके पञ्चमाध्याये अष्टाविंशो वर्गः[4] ॥

[ ७७ ]

[4]कुरुसुतिः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः, अन्त्ये द्वे प्रगाथः (=१मा बृहती, २या सतोबृहती)[4] ।

जज्ञानो नु शतक्रतुर्वि पृच्छदिति मातरम् । क उग्राः के ह शृण्विरे ॥ १ ॥

जज्ञानः । नु । शतऽक्रतुः । वि । पृच्छत् । इति । मातरम् । के । उग्राः । के । ह । शृण्विरे ॥१॥

**वेङ्कट०** जायमानः एव शतक्रतुः वि [5]पृच्छत इत्थम्[5] मातरम्—के उद्गूर्णबलाः, के च खलु विश्रुता इति ॥ १ ॥

आदीं शवस्यब्रवीदौर्णवाभमहीशुवम् । ते पुत्र सन्तु निष्टुरः ॥ २ ॥

आत् । ईम् । शवसी । अब्रवीत् । और्णऽवाभम् । अहीशुवम् । ते । पुत्र । सन्तु । निःऽतुरः ॥ २ ॥

**वेङ्कट०** अनन्तरम् एव एनं माता अब्रवीत् और्णवाभम्[6] अहीशुवम्[7] च असुरौ उक्त्वा—तादृशाः पुत्र! भवन्तु तव निस्तारणीया इति ॥ २ ॥

---

१. कल्पेतां वि[1]; कल्पेतं अ[1]. २. यथा मूको. ३. तत्त्वम् मूको. ४-४. नास्ति मूको. ५-५. प्रच्छदि त्वं मूको. ६. °वाहम् मूको. ७. अभीशुपम वि[2].

समित् तान् वृत्रहाखिदत् खे अराँ इव खेदया । प्रवृद्धो दस्युहाभवत् ॥ ३ ॥

सम् । इत् । तान् । वृत्रऽहा । अखिदत् । खे । अरान्ऽइव । खेदया । प्रऽवृद्धः । दस्युऽहा । अभवत् ॥ ३ ॥

**वेङ्कट०** सर्वान् सहैव वृत्रहा सम् अखिदत् । सङ्खेदनम् आकर्षणम् । यथा रथचक्रस्य खे अरान् खेदया रज्ज्वा सङ्खिदन्ति । प्रवृद्धः दस्युहा अभवत् ॥ ३ ॥

एकया प्रतिधापिबत् साकं सरांसि त्रिंशतम् । इन्द्रः सोमस्य काणुका ॥ ४ ॥

एकया । प्रतिऽधा[1] । अपिबत् । साकम् । सरांसि । त्रिंशतम् । इन्द्रः । सोमस्य । काणुका ॥ ४ ॥

**वेङ्कट०** एकेनैव प्रतिधानेन अपिबत् सह त्रिंशतम् सरांसि इन्द्रः सोमस्य पूर्णानि [2]क्रान्तानि इति वा कान्तानि इति वा[2] । निरुक्तं ( या ५,११ ) च द्रष्टव्यमिति ॥ ४ ॥

अभि गन्धर्वमतृणदबुध्नेषु रजःस्वा । इन्द्रो ब्रह्मभ्य इद्वृधे ॥ ५ ॥

अभि । गन्धर्वम् । अतृणत् । अबुध्नेषु । रजःऽसु । आ । इन्द्रः । ब्रह्मऽभ्यः । इत् । वृधे ॥ ५ ॥

**वेङ्कट०** [3]गन्धर्वो मेघः[3] । गाम् उदकं धारयति इति । तं रश्मिभिः अभि अतृणत् अबुध्नेषु पदनिधानयोग्यस्थलरहितेषु लोकेषु । अन्तरिक्षे स्थित इत्यर्थः । इन्द्रः ब्राह्मणान् एव वर्धयितुम् ॥ ५ ॥

[4]इति षष्ठाष्टके पञ्चमाध्याये एकोनत्रिंशो वर्गः[4] ॥

निराविध्यद् गिरिभ्य आ धारयत् पक्वमोदनम् । इन्द्रो बुन्दं स्वाततम् ॥ ६ ॥

निः । अविध्यत् । गिरिऽभ्यः । आ । धारयत् । पक्वम् । ओदनम् । इन्द्रः । बुन्दम् । सुऽआततम् ॥ ६ ॥

**वेङ्कट०** निः अविध्यत् मेघेभ्यः उदकं निर्गमयितुं मनुष्याणाम् पक्वम् ओदनम् धारयत्[5] कुर्वन् । नुमभावः छान्दसः । इन्द्रः इषुम् सृष्ट्वा तथा ॥ ६ ॥[6]

शतब्रध्न इषुस्तव सहस्रपर्ण एक इत् । यमिन्द्र चकृषे युजम् ॥ ७ ॥

शतऽब्रध्नः । इषुः । तव । सहस्रऽपर्णः । एकः । इत् । यम् । इन्द्र । चकृषे । युजम् ॥ ७ ॥

**वेङ्कट०** शताग्रः इषुः तव सहस्रपर्णः[7] भवति एकः एव, यम् इन्द्र! कृतवानसि[8] सहायम् ॥ ७ ॥

तेन स्तोतृभ्य आ भर नृभ्यो नारिभ्यो अत्तवे । सद्यो जात ऋभुष्ठिर ॥ ८ ॥

---

१. वैप १,२१४९ d द्र. २-२. कान्तादीनि वा कान्त इति वा मूको. ३-३. गन्धर्वमेकः वि[2]; °र्वोमेक अ[1]. ४-४. नास्ति मूको. ५. नास्ति मूको. ६. निर्वचनं व्याख्यानं च या. (५,३३ ) द्र. ७. °स्रः वर्णस्य मूको. ८. तवा° वि[2].

तेन॑ । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ । नृऽभ्यः॑ । नारि॑ऽभ्यः । अत्त॑वे । स॒द्यः । जा॒तः । ऋ॒भु॒ऽस्थि॒र॒ ॥ ८ ॥

वेङ्कट० तेन स्तोतृभ्यः अस्मभ्यम् आ भर बहु अन्नं पुत्रेभ्यः स्त्रीभ्यः च भक्तुं पर्याप्तम् सद्यः एव प्रादुर्भूतः ऋभुष्ठिर! । महान् स्थिरः च तथोक्तः ॥ ८ ॥

ए॒ता च्यौ॒त्नानि॑ ते कृ॒ता वर्षि॑ष्ठानि॒ परी॑णसा । हृ॒दा वी॒ड्व॑धारयः ॥ ९ ॥

ए॒ता । च्यौ॒त्नानि॑ । ते॒ । कृ॒ता । वर्षि॑ष्ठानि । परी॑णसा । हृ॒दा । वी॒ळु । अ॒धा॒र॒यः॒ ॥ ९ ॥

वेङ्कट० एतानि बलानि त्वया कृतानि वृद्धतमानि परिणद्धानि । कानीत्याह—हृदा इति । बुद्ध्या त्वं स्थिराणि पर्वतादीनि अधारयः[1] इति ॥ ९ ॥

विश्वेत् ता विष्णु॒राभ॑रदुरुक्र॒मस्त्वेषि॑तः ।
श॒तं म॑हि॒षान् क्षी॑रपा॒कमो॑द॒नं व॑रा॒हमिन्द्र॑ एमु॒षम् ॥ १० ॥

विश्वा॑ । इत् । ता । विष्णुः॑ । आ । अ॒भ॒र॒त् । उ॒रु॒ऽक्र॒मः । त्वाऽई॑षितः ।
श॒तम् । म॒हि॒षान् । क्षी॒र॒ऽपा॒कम् । ओ॒द॒नम् । [2]व॒रा॒हम् । इन्द्रः॑ । ए॒मु॒षम्[2] ॥ १० ॥

वेङ्कट० विश्वानि एव तानि वराहरूपः विष्णुः आ अहरत् असुरेषु स्थितानि उरुक्रमः त्वया इन्द्र![3] प्रेषितः । शतम् महिषान् क्षीरपाकम् ओदनम् चाहरत् । परोक्षः—तम् वराहम् आहृतासुरसर्वस्वम् इन्द्रः देवेभ्यः आहरत् । यच्छतेः प्रसारणे [4]लिटि रूपम् एमुषम् इति[4] । धनानि यः यच्छति स्म स तथोक्त इति ॥ १० ॥

तु॒वि॒क्षं ते॒ सुकृ॑तं सू॒मयं॒ धनुः॑ सा॒धुर्बु॒न्दो हि॑र॒ण्ययः॑ ।
उ॒भा ते॑ बा॒हू रण्या॑ सुसँस्कृत ऋदू॒पे चि॑दृदू॒वृधा॑ ॥ ११ ॥

तु॒वि॒ऽक्षम् । ते॒ । सु॒ऽकृ॑तम् । सु॒ऽमय॑म् । धनुः॑ । सा॒धुः । बु॒न्दः । हि॒र॒ण्ययः॑ ।
उ॒भा । ते॒ । बा॒हू इति॑ । रण्या॑ । सु॒ऽसँस्कृता । ऋ॒दु॒ऽपे । चि॒त् । ऋ॒दु॒ऽवृधा॑ ॥ ११ ॥

वेङ्कट० यास्कः (६,३३)—'बहुविक्षेपं महाविक्षेपं वा ते सुकृतं सुमयं सुसुखं धनुः । साधयिता ते बुन्दः हिरण्मयः । उभौ ते बाहू रमणीयौ साङ्ग्राम्यौ वा ऋदूपे अर्दनपातिनौ गमनपातिनौ वा । मर्मण्यर्दनवेधिनौ गमनवेधिनौ वा' इति ॥ ११ ॥

[5]इति षष्ठाष्टके पञ्चमाध्याये त्रिंशो वर्गः[5] ॥

---

१. °यतः मूको. २-२. निर्वचनं निगमश्च या. (५,४) द्र. ३. इन्द्रः मूको. ४-४. लिगि रूपमेमुषदिति मूको. ५-५. नास्ति मूको.

[ ७८ ]

'कुरुसुतिः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः, दशमी बृहती' ।

पुरोळाशं नो अन्धस इन्द्र सहस्रमा भर । शता च शूर गोनाम् ॥ १ ॥

पुरोळाशम् । नः । अन्धसः । इन्द्र । सहस्रम् । आ । भर । शता । च । शूर । गोनाम् ॥ १ ॥

वेङ्कट० पुरः दीयमानम् अस्मभ्यम् [१]अन्नम् सुव्यञ्जनम्[१] आ हर इन्द्र! गवाम् सहस्रम् शतानि च शूर! इति ॥ १ ॥

आ नो भर व्यञ्जनं गामश्वमभ्यञ्जनम् । सचा मना हिरण्यया ॥ २ ॥

आ । नः । भर । विऽअञ्जनम् । गाम् । अश्वम् । अभिऽअञ्जनम् । सचा । मना । हिरण्यया ॥ २ ॥

वेङ्कट० आ भर[३] अस्मभ्यम् व्यञ्जनम् गाम् अश्वम् तैलम् च, तैः सह मननीयानि हिरण्मयानि उपस्कराणि चेति ॥ २ ॥

उत नः कर्णशोभना पुरूणि धृष्णवा भर । त्वं हि शृण्विषे वसो ॥ ३ ॥

उत । नः । कर्णऽशोभना । पुरूणि । धृष्णो इति । आ । भर । त्वम् । हि । शृण्विषे । वसो इति ॥ ३ ॥

वेङ्कट० अपि च अस्मभ्यम् कर्णालङ्करणानि[४] बहूनि धृष्णो! आ भर । त्वम् हि उदारः श्रूयसे वासयितः! ॥ ३ ॥

नकीं वृधीक इन्द्र ते न सुषा न सुदा उत । नान्यस्त्वच्छूर वाघतः ॥ ४ ॥

नकीम् । वृधीकः । इन्द्र । ते । न । सुऽसाः । न । सुऽदाः । उत । न । अन्यः । त्वत् । शूर । वाघतः ॥ ४ ॥

वेङ्कट० नास्ति कश्चित् त्वत्तः वर्धयिता इन्द्र!, न अपि सुष्ठु सम्भक्ता युद्धादौ, न अपि सुष्ठु अभिमतानां दाता । एतदेवाह—न अन्यः त्वत् शूर! ऋत्विजः इति यजमानस्य त्वत्तः अन्यः नास्ति नेता इति ॥ ४ ॥

नकीमिन्द्रो निकर्तवे न शक्रः परिशक्तवे । विश्वं शृणोति पश्यति ॥ ५ ॥

नकीम् । इन्द्रः । निऽकर्तवे । न । शक्रः । परिऽशक्तवे । विश्वम् । शृणोति । पश्यति ॥ ५ ॥

वेङ्कट० इन्द्रः [५]न निकर्तुं[५] शक्यते । तथा शक्रः परिशक्तवे परिभवाय न च भवति । विश्वम् च शृणोति, पश्यति च सर्वम् इति ॥ ५ ॥

'इति षष्ठाष्टके पञ्चमाध्याये एकत्रिंशो वर्गः' ॥

---

१-१. नास्ति मूको. २-२. अन्न सुव्यं ज° मूको. ३. हर अ[१]. ४. कर्णालङ्क° मूको.
५-५. न क° वि[२]; निक° अ[१].

स मन्युं मर्त्यानामदब्धो नि चिकीषते । पुरा निदश्चिकीषते ॥ ६ ॥

सः । मन्युम् । मर्त्यानाम् । अदब्धः । नि । चिकीषते । पुरा । निदः । चिकीषते ॥ ६ ॥

वेङ्कट० सः[1] क्रोधम् मर्त्यानाम् स्वयम् अहिंसितः नि चिकीषते[2] निकरोति प्रागेव निन्दायाः । यावदेव एनम् अभिभवति, प्रागेव ततः ॥ ६ ॥

क्रत्व इत् पूर्णमुदरं तुरस्यास्ति विधतः । वृत्रघ्नः सोमपाव्नः ॥ ७ ॥

क्रत्वः । इत् । पूर्णम् । उदरम् । तुरस्य । अस्ति । विधतः । वृत्रऽघ्नः । सोमऽपाव्नः ॥ ७ ॥

वेङ्कट० कर्मणा एव पूर्णम्[3] उदरम्[4] भवति क्षिप्रस्य वृत्रघ्नः सोमपाव्नः । य एनं परिचरति, तस्य कर्मणा इति ॥ ७ ॥

त्वे वसूनि संगता विश्वा च सोम सौभगा । सुदात्वपरिह्वृता ॥ ८ ॥

त्वे इति । वसूनि । सम्ऽगता । विश्वा । च । सोम । सौभगा । सुऽदातु । अपरिऽह्वृता ॥ ८ ॥

वेङ्कट० त्वयि धनानि सङ्गतानि विश्वानि च सोम! सौभाग्यानि शोभनानि च दानानि अकुटिलानि इति इन्द्रेण पीयमानम् सोममाहेति[5] ॥ ८ ॥

त्वामिद्यवयुर्मम कामो गव्युर्हिरण्ययुः । त्वामश्वयुरेषते ॥ ९ ॥

त्वाम् । इत् । यवऽयुः । मम । कामः । गव्युः । हिरण्यऽयुः । त्वाम् । अश्वऽयुः । आ । ईषते ॥ ९ ॥

वेङ्कट० त्वाम् एव यवम्[6] इच्छन् आ इच्छति मम कामः गव्युः हिरण्ययुः च, त्वाम् एव अश्वयुः च इति ॥ ९ ॥

तवेदिन्द्राहमाशसा हस्ते दात्रं चना ददे ।
दिनस्य वा मघवन्त्संभृतस्य वा पूर्धि यवस्य काशिना ॥ १० ॥

तव । इत् । इन्द्र । अहम् । आऽशसा । हस्ते । दात्रम् । चन । आ । ददे ।
दिनस्य । वा । मघऽवन् । सम्ऽभृतस्य । वा । पूर्धि । यवस्य । काशिना ॥ १० ॥

वेङ्कट० तव एव इन्द्र! महाशंसनेन अयम् इन्द्रः मम यवम् दास्यति इति बुद्धया भिक्षणे प्रवृत्तः अहम् हस्तेन लवनाय दात्रम् आ ददे । तत्र दात्रेण अनेन लूनस्य वा मघवन्!, अपि वा प्रागेव यवमद्भिः सम्भृतस्य वा यवस्य पूरय मुष्टिना इति ॥ १० ॥

[7]इति षष्ठाष्टके पञ्चमाध्याये द्वात्रिंशो वर्गः[7] ॥

---

१. सं मूको. २. °कीर्षिते मूको. ३. पूर्वम् मूको. ४. उदकम् मूको. ५. °ममं हे° मूको. ६. य मूको. ७-७. नास्ति मूको.

[ ७९ ]

[1]कृत्नुर्भार्गव ऋषिः । सोमो देवता । गायत्री छन्दः, नवमी अनुष्टुप्[1] ।

अयं कृत्नुरगृभीतो विश्वजिदुद्भिदित् सोमः । ऋषिर्विप्रः काव्येन ॥ १ ॥

अयम् । कृत्नुः । अगृभीतः । विश्वऽजित् । उत्ऽभित् । इत् । सोमः । ऋषिः । विप्रः । काव्येन ॥ १ ॥

**वेङ्कट०** अयम् सोमः कर्ता शत्रुभिः अगृहीतः विश्वजित् उद्भेत्ता च । तम् एनम् ऋषिः विप्रः काव्येन वर्धयति ॥ १ ॥

अभ्यूर्णोति यन्नग्नं भिषक्ति विश्वं यत् तुरम् । प्रेमन्धः ख्यन्निः श्रोणो भूत् ॥ २ ॥

अभि । ऊर्णोति । यत् । नग्नम् । भिषक्ति । विश्वम् । यत् । तुरम् ।
[2]प्र । ईम् । अन्धः । ख्यत् । नि । श्रोणः । भूत्[2] ॥ २ ॥

**वेङ्कट०** अभि छादयति वासांसि जनयन् सोमः यत् नग्नम् भवति । भिषज्यति च विश्वम् अपि यत् आतुरम् ओषधीषु प्रविष्टः । तथा [3]पीतसोमः सन् अन्धः[3] विप्रः पश्यति । श्रोणः अपि निः भवति निर्गच्छति ॥ २ ॥

त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यः । उरु यन्तासि वरूथम् ॥ ३ ॥

त्वम् । सोम । तनूकृत्ऽभ्यः । द्वेषःऽभ्यः । अन्यऽकृतेभ्यः । उरु । यन्ता । असि । वरूथम् ॥ ३ ॥

**वेङ्कट०** त्वम् सोम ! अङ्गानां विच्छेदकेभ्यः द्वेषोभ्यः शत्रुकृतेभ्यः, कृत्याभ्य इत्यर्थः, उरु यन्ता भवसि पारकं स्तोतॄणाम् इति । 'अन्यकृतानि हि रक्षांसि' ( तै ६, ३,२,२ ) इति ब्राह्मणम् ॥ ३ ॥

त्वं चित्ती तव दक्षैर्दिव आ पृथिव्या ऋजीषिन् । यावीरघस्य चिद् द्वेषः ॥ ४ ॥

त्वम् । चित्ती । तव । दक्षैः । दिवः । आ । पृथिव्याः । ऋजीषिन् । यावीः । अघस्य । चित् । द्वेषः ॥

**वेङ्कट०** त्वम् प्रज्ञया तव बलैः दिवः[4] च [5]पृथिव्याः च पृथक्[5] कुरु अस्माकम् आहन्तुः शत्रोः द्विषः कृत्याः हे तृतीयसवनस्थेन ऋजीषेण तद्वन् ! इति ॥ ४ ॥

अर्थिनो यन्ति चेदर्थं गच्छानिद् ददुषो रातिम् । ववृज्युस्तृष्यतः कामम् ॥ ५ ॥

अर्थिनः । यन्ति । च । इत् । अर्थम् । गच्छान् । इत् । ददुषः । रातिम् । ववृज्युः । तृष्यतः । कामम् ॥

**वेङ्कट०** अर्थिनः यन्ति च अर्थम् प्रति भिक्षमाणाः, गच्छन्ति च दातुः दानम् । ते च दातारः

---

१-१. नास्ति मूको.　२-२. तु. ऋ ४,१९,९; १०,२५,११.　३-३. °तसोः सन्नद्धः मूको.
४. दीपः मूको.　५. °याश्च तिरस्कुरु पृ° अ[1].

तृष्यतः भिक्षमाणस्य कामम् धनप्रदानेन संस्थापयन्ति । स तृष्यः तदाश्रय इति ॥ ५ ॥

[1]इति षष्ठाष्टके पञ्चमाध्याये त्रयस्त्रिंशो वर्गः[1] ॥

विदद्यत् पूर्व्यं नष्टमुदीमृतायुमीरयत् । प्रेमायुस्तारीदतीर्णम् ॥ ६ ॥

विदत् । यत् । पूर्व्यम् । नष्टम् । उत् । ईम् । ऋतऽयुम् । ईरयत् ।
प्र । ईम् । आयुः । तारीत् । अतीर्णम् ॥ ६ ॥

**वेङ्कट०** यदा प्रत्नं धनम् नष्टम् लभते, तदा यज्ञकामम् एनं सोमः उत् ईरयति, प्रवर्धयति च आयुः अन्नम् अन्यैः अतीर्णम् । सोमेन यजमानः साधयति अन्नम् इति ॥ ६ ॥

सुशेवो नो मृळयाकुरदृप्तक्रतुरवातः । भवा नः सोम शं हृदे ॥ ७ ॥

सुऽशेवः । नः । मृळयाकुः । अदृप्तऽक्रतुः । अवातः । भव । नः । सोम । शम् । हृदे ॥ ७ ॥

**वेङ्कट०** सुसुखः अस्माकं सुखयिता अप्रमत्तप्रज्ञानः गमनवर्जितः उदर एव तिष्ठन् सोम! भव शङ्करः हृदयाय । पुनः न इति पूरणम् ॥ ७ ॥

मा नः सोम सं वीविजो मा वि बीभिषथा राजन् । मा नो हार्दि त्विषा वधीः ॥८॥

मा । नः । सोम । सम् । वीविजः । मा । वि । बीभिषथाः । राजन् ।
मा । नः । हार्दि । त्विषा । वधीः ॥ ८ ॥

**वेङ्कट०** मा अस्मान् सोम! सम् वीविजः चलिताङ्गान् कार्षीः, मा च वि बीभिषथाः[2] राजन्!, मा च अस्माकम् हृदयम् दीप्त्या वधीः ॥ ८ ॥

अव यत् स्वे सधस्थे देवानां दुर्मतीरीक्षे ।
राजन्नप द्विषः सेध मीढ्वो अप स्रिधः सेध ॥ ९ ॥

अव । यत् । स्वे । सधऽस्थे । देवानाम् । दुःऽमतीः । ईक्षे ।
राजन् । अप । द्विषः । सेध । मीढ्वः । अप । स्रिधः । सेध ॥ ९ ॥

**वेङ्कट०** अव ईक्षे अहं यदा स्वे गृहे देवानाम् दुर्मतयः न प्रविशन्तु इति, तदानीम् एव राजन्! सेक्तः! अप सेध द्विषः स्रिधः च इति ॥ ९ ॥[3]

[1]इति षष्ठाष्टके पञ्चमाध्याये चतुस्त्रिंशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २. भीहिषथाः मूको. ३. तु. ऋ ८,१८,१०; १०,२५,७.

[ ८० ]

[1]एकद्यूनौंधस ऋषिः । इन्द्रो देवता, दशम्या देवाः । गायत्री छन्दः, दशमी त्रिष्टुप्[1] ।

नह्य१न्यं बळाकरं मर्डितारं शतक्रतो । त्वं न इन्द्र मृळय ॥ १ ॥

[2]नहि । अन्यम् । बळा । अकरम् । मर्डितारम् । शतक्रतो इति शतऽक्रतो[2] । त्वम् । नः । इन्द्र । मृळय ॥१॥

वेङ्कट० [3]एकद्यूनौंधसः । न अन्यम्[3] सत्यम् एव अहं करोमि सुखयितारम् शतक्रतो! । तथा सति त्वम् इन्द्र! अस्मान् सुखय ॥ १ ॥

यो नः शश्वत् पुराविथामृध्रो वाजसातये । स त्वं न इन्द्र मृळय ॥ २ ॥

यः । नः । शश्वत् । पुरा । आविथ । अमृध्रः । वाजऽसातये । सः । त्वम् । नः । इन्द्र । मृळय ॥२॥

वेङ्कट० यः अस्मान् पुरा सर्वम् एव रक्षितवानसि अहिंसितः[4] अन्नस्य लाभाय । सः त्वम् इदानीम् अपि इन्द्र! मृडय अस्मान् इति ॥ २ ॥

किमङ्ग रध्रचोदनः सुन्वानस्यावितेदसि । कुवित् स्विन्द्र णः शकः ॥ ३ ॥

[5]किम् । अङ्ग । रध्रऽचोदनः । सुन्वानस्य । अविता । इत् । असि[5] । कुवित् । सु । इन्द्र । नः । शकः ॥३॥

वेङ्कट० किम् त्वम् अङ्ग क्षिप्रम् सुन्वानस्य अविता एव भवसि । रध्रचोदनः रध्रस्य राधकस्य यः चोदयति धनं स तथोक्तः । तथा सति इन्द्र! बहु अस्माकम् कुर्विति ॥ ३ ॥

इन्द्र प्र णो रथमव पश्चाच्चित् सन्तमद्रिवः । पुरस्तादेनं मे कृधि ॥ ४ ॥

इन्द्र । प्र । नः । रथम् । अव । पश्चात् । चित् । सन्तम् । अद्रिऽवः । पुरस्तात् । एनम् । मे । कृधि ॥४॥

वेङ्कट० इन्द्र! अस्माकम् प्र रक्ष रथम् । पश्चात् अपि भवन्तं वज्रिन्! पुरस्तात् एनम् कुरु मम इति ॥ ४ ॥

हन्तो नु किमाससे प्रथमं नो रथं कृधि । उपमं वाजयु श्रवः ॥ ५ ॥

हन्तो इति । नु । किम् । आससे । प्रथमम् । नः । रथम् । कृधि । उपऽमम् । वाजऽयु । श्रवः ॥ ५ ॥

वेङ्कट० हन्त इति आभिमुख्यकृदामन्त्रितेन[6] समानम् । हन्त इन्द्र! किम् त्वम् आससे । मुख्यम् नः रथम् कुरु । अन्नमिच्छत् इदम् अस्मदीयम् अन्नं हविर्भूतं तव उपमम् भवति समीपे[7] वर्तत इति ॥ ५ ॥

[1]इति षष्ठाष्टके पञ्चमाध्याये पञ्चत्रिंशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २-२. तु. ऋ ८,६६,१३. ३-३. °द्यूनौंधसनन्यं मूको. ४. °सतः मूको. ५-५. तु. ऋ ६,४४,१०. ६. °मुख्यने कदामन्ति तेन मूको. ७. ससमीपे मूको.

अर्वा नो वाजयुं रथं सुकरं ते किमित् परि । अस्मान्त्सु जिग्युर्षस्कृधि ॥ ६ ॥

अर्व । नः । वाजऽयुम् । रथम् । सुऽकरम् । ते । किम् । इत् । परि । अस्मान् । सु । जिग्युर्षः । कृधि ॥ ६ ॥

**वेङ्कट०** रक्ष अस्माकम् अन्नेच्छुम् रथम् । सुकरम् ते किम् इत् सर्वं कर्तव्यं भवति परितः । तथा सति अस्मान् सुष्ठु जेतॄन्[1] कुरु इति ॥ ६ ॥

इन्द्र दृह्यस्व पूरसि भद्रा तं एति निष्कृतम् । इयं धीर्ऋत्वियावती ॥ ७ ॥

इन्द्र । दृह्यस्व । पूः । असि । भद्रा । ते । एति । निःऽकृतम् । इयम् । धीः । ऋत्वियऽवती ॥७॥

**वेङ्कट०** इन्द्र![2] दृढ. बलपरिवृतः त्वं पुरम् इव भवसि । भद्रा तव गच्छति संस्कृतस्थानम् इयम् धीः कर्मकाले कृता ॥ ७ ॥

मा सीमवद्य आ भागुर्वी काष्ठा हितं धनम् । अपावृक्ता अरत्नयः ॥ ८ ॥

मा । सीम् । अवद्ये । आ । भाक् । उर्वी । काष्ठा । हितम् । धनम् । अपऽआवृक्ताः । अरत्नयः ॥ ८ ॥

**वेङ्कट०** मा अस्मान् सर्वतः अवद्ये आ भज, न कुतश्चित्[3] प्रापयावद्यम् । अपराजितान् कुर्वित्यर्थः । [4]उर्वी काष्ठा[4] बह्वन्तराल आज्यन्तः[5] ( तु. या २,१५ ) । तत्र शत्रुषु निहितम् आजिहीर्षितं धनम् । अपावृक्ताः सन्तु अदानाः यजमानाः शत्रवः ॥ ८ ॥

तुरीयं नाम यज्ञियं यदा करस्तदुश्मसि । आदित् पतिर्न ओहसे ॥ ९ ॥

तुरीयम् । नाम । यज्ञियम् । यदा । करः । तत् । उश्मसि । आत् । इत् । पतिः । नः । ओहसे ॥

**वेङ्कट०** चतुर्थम् नाम यज्ञियम् यदा च अस्माकम् करोषि, तत् वयं कामयामहे । अनन्तरम् एव पतिः[6] त्वं च अस्मान् वहसि । नक्षत्रनाम गुह्यं नाम प्रकाशं नाम इति त्रीणि नामानि । सोमयाजीति तुरीयं नाम इति ॥ ९ ॥

अवीवृधद्वो अमृता अमन्दीदेकद्यूर्देवा उत याश्च देवीः ।
तस्मा उ राधः कृणुत प्रशस्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १० ॥

अवीवृधत् । वः । अमृताः । अमन्दीत् । एकऽद्यूः । देवाः । उत । याः । च । देवीः ।
तस्मै । ऊँ इति । राधः । कृणुत । प्रऽशस्तम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १० ॥

**वेङ्कट०** इयं वैश्वदेवी[7] । हे देवाः! अमृताः! युष्मान् अयम् अवीवृधत्, अमन्दीत् एकद्यूः । अपि च

---

१. जैत्रान् वि[2]; जेत्रीन् अ[1]. २. °न्द्रः मूको. ३. कश्चि° वि[1]; तश्चि° अ[1]. ४-४. उर्वि काष्ठाः मूको. ५. ज्यतः मूको. ६. नास्ति मूको. ७. वै ··· देवी मूको.

याः भवथ यूयं हे देवपत्न्यः![1] तस्मै मह्यं धनं कुरुत प्रशस्तम्। प्रातः एव अस्मान् इन्द्रः कर्मवसुः आगच्छतु इति ॥ १० ॥

[2]इति षष्ठाष्टके पञ्चमाध्याये षट्त्रिंशो वर्गः[2] ॥

[ ८१ ]

[2]कुसीदी काण्व ऋषिः। इन्द्रो देवता। गायत्री छन्दः[2]।

आ तू न॑ इन्द्र क्षुमन्तं॑ चि॒त्रं ग्रा॒भं सं गृ॑भाय। म॒हा॒ह॒स्ती दक्षि॑णेन ॥ १ ॥

आ। तु। नः॒। इ॒न्द्र॒। क्षु॒ऽमन्त॑म्। चि॒त्रम्। ग्रा॒भम्। सम्। गृ॒भा॒य॒। म॒हा॒ऽह॒स्ती। दक्षि॑णेन ॥१॥

वेङ्कट० काण्वः[3] कुसीदी। [4]आभिमुख्येन सम् गृहाण इन्द्र! अस्माकम्[4] दातुं शब्दवत् प्रसिद्धं धनम् पूजनीयम् महाहस्तः त्वम् दक्षिणेन हस्तेन ॥ १ ॥

वि॒द्मा हि त्वा॑ तुविकू॒र्मिं तु॒विदे॑ष्णं तु॒वीम॑घम्। तु॒वि॒मा॒त्रमवो॑भिः ॥ २ ॥

वि॒द्म। हि। त्वा॒। तु॒वि॒ऽकू॒र्मिम्। तु॒वि॒ऽदे॑ष्णम्। तु॒वि॒ऽम॑घम्। तु॒वि॒ऽमा॒त्रम्। अवः॑ऽभिः ॥ २ ॥

वेङ्कट० जानीमः हि त्वा बहुकर्माणं बहुप्रदेयं बहुमघं[5] बहुप्रमाणं पालनैः युक्तं चेति ॥ २ ॥

न॒हि त्वा॑ शूर दे॒वा न मर्ता॑सो दित्स॑न्तम्। भी॒मं न गां वा॒रय॑न्ते ॥ ३ ॥

न॒हि। त्वा॒। शू॒र॒। दे॒वाः। न। मर्ता॑सः। दित्स॑न्तम्। भी॒मम्। न। गाम्। वा॒रय॑न्ते ॥ ३ ॥[6]

वेङ्कट० नहि [7]त्वा शूर! देवाः मनुष्याश्च दित्सन्तम्[7] भीमम् इव वृषभम् यवसे प्रवृत्तं वारयन्ति ॥३॥

एतो॒ न्विन्द्रं॒ स्तवा॒मेशा॑नं॒ वस्वः॑ स्व॒राज॑म्। न राध॑सा मर्धिषन्नः ॥ ४ ॥

एतो॒ इति॑। नु। इन्द्र॑म्। स्तवा॑म। ईशा॑नम्। वस्वः॑। स्व॒ऽराज॑म्। न। राध॑सा। म॒र्धि॒ष॒त्। नः॒ ॥

वेङ्कट० आगच्छत क्षिप्रम्, इन्द्रम् स्तवाम धनस्य ईशानम् वरिष्ठस्य स्वराजम्। न अस्मान् राधसा मर्धिषत्, अन्य आढ्यः धनेन न प्रबाधताम् इति ॥ ४ ॥

प्र स्तो॑षदुप॑ गासिष॒च्छ्रव॒त् साम॑ गी॒यमा॑नम्। अ॒भि राध॑सा जुगुरत् ॥ ५ ॥

प्र। स्तो॒ष॒त्। उप॑। गा॒सि॒ष॒त्। श्रव॑त्। साम॑। गी॒यमा॑नम्। अ॒भि। राध॑सा। जु॒गु॒र॒त् ॥ ५ ॥

वेङ्कट० प्र स्तौतु इन्द्रः, अस्माकम् उपगानं च [8]करोतु, शृणोतु[8] च साम गीयमानम्। अभि गृणातु च धनेन अस्मान् इति ॥ ५ ॥[9]

[2]इति षष्ठाष्टके पञ्चमाध्याये सप्तत्रिंशोवर्गः[2] ॥

---

१. °पत्नयः मूको. २-२. नास्ति मूको. ३. इन्म मूको. ४-४. °ख्येन ··· अस्माकं मूको. ५. °मखं अ°. ६. तु. ऋ ४,३२,८; ८,१४,४. ७-७. त्वा सन्तम् मूको. ८-८. क ··· शृ° मूको. ९. तु. ऋ १,१०,४; ४८,१४; ५४,७.

आ नो॑ भर॒ दक्षि॑णेना॒भि स॒व्येन॒ प्र मृ॑श । इन्द्र॒ मा नो॒ वसो॒र्निर्भा॑क् ॥ ६ ॥

आ । नः॒ । भ॒र॒ । दक्षि॑णेन । अ॒भि । स॒व्येन॑ । प्र । मृ॒श॒ । इन्द्र॑ । मा । नः॒ । वसोः॑ । निः । भा॒क् ॥

वेङ्कट० आ हर अस्मभ्यम् धनम् दक्षिणेन हस्तेन । अभि प्र मृश अस्मदर्थम् सव्येन च[1] धनम् । इन्द्र! मा अस्मान् धनात् निः भाक्षीः[2] ॥ ६ ॥

उप॑ क्रमस्वा भ॑र धृष॒ता धृ॑ष्णो॒ जना॑नाम् । अदा॑शूष्टरस्य॒ वेदः॑ ॥ ७ ॥

उप॑ । क्र॒म॒स्व॒ । आ । भ॒र॒ । धृ॒ष॒ता । धृ॒ष्णो॒ इति॑ । जना॑नाम् । अदा॑शूःऽतरस्य । वेदः॑ ॥ ७ ॥

वेङ्कट० उप क्रमस्व अस्मान् प्रति । आ हर धृष्टेन मनसा हे धर्षयितः![3] जनानाम् मध्ये अत्यन्तम् अदातुः धनम् ॥ ७ ॥

इन्द्र॒ य उ॒ नु ते॒ अस्ति॒ वाजो॒ विप्रे॑भि॒ः सनि॑त्वः । अ॒स्माभिः॒ सु तं स॑नुहि ॥८॥

इन्द्र॑ । यः । ऊँ इति॑ । नु । ते॒ । अस्ति॑ । वाजः॑ । विप्रे॑भिः । सनि॑त्वः । अ॒स्माभिः॑ । सु । तम् । स॒नु॒हि॒ ॥

वेङ्कट० इन्द्र! यः एव तव वाजः विद्यते मेधाविभिः सम्भजनीयः, तम् अस्मान् उद्दिश्य देहि इति ॥ ८ ॥

स॒द्योजुव॑स्ते॒ वाजा॑ अ॒स्मभ्यं॑ वि॒श्वश्च॑न्द्राः । वशै॑श्च म॒क्षू ज॑रन्ते ॥ ९ ॥

स॒द्यःऽजुवः॑ । ते॒ । वाजाः॑ । अ॒स्मभ्य॑म् । वि॒श्वऽच॑न्द्राः । वशैः॑ । च॒ । म॒क्षु । ज॒र॒न्ते॒ ॥ ९ ॥

वेङ्कट० सद्योनिर्गमनाः ते वाजाः अस्मभ्यम् भवन्तु सर्वकान्ताः । अपरोक्ष उत्तरार्धः । त्वाम् एते स्तोतारः कामैः हेतुभिः शीघ्रं स्तुवन्ति इति ॥ ९ ॥

[4]इति षष्ठाष्टके पञ्चमाध्याये अष्टात्रिंशो वर्गः[4] ॥

अष्टकस्येति षष्ठस्य माधवः सुन्दरीसुतः ।
व्याख्यत् पञ्चममध्यायं तत् पश्यन्तु च पण्डिताः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने षष्ठाष्टके पञ्चमोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये षष्ठाष्टके पञ्चमोऽध्यायः ॥



---

१. न मूको. २. हाक्षि मूको. ३. °तुः मूको. ४-४. नास्ति मूको.

अथ षष्ठोऽध्यायः ।

वेङ्कट०

'आ प्र द्रव परावतो' व्याचिख्यासति माधवः ।
प्रगाथेषु च वक्तव्यं सम्पत्तिं च प्रदर्शयन् ॥ १ ॥

बार्हतो बृहतीपूर्वः ककुप्पूर्वस्तु काकुभः ।
एतौ सतोबृहत्यन्तौ प्रगाथौ भवतो द्व्यृचौ ॥ २ ॥

'त्वमङ्ग प्र'[1], 'प्र वो यह्वं'[2], 'मा चिद्'[3], 'बृहदु गायिषे'[4] ।
बार्हतान् काकुभानाहुः 'तं गूर्धया'[5], 'वयमिव(मु'[6] इ)ति ॥ ३ ॥

चतुर्थषष्ठावभ्यस्येत् प्रगाथे बार्हते सति ।
बृहत्युभे च ककुभौ सम्पद्यन्ते तथा सति ॥ ४ ॥

द्वेतिस्रस्कारं शंसेत बृहतीकारमिच्छता ।
तयोरेव द्विरभ्यासः कार्य इत्याश्वलायनः ॥ ५ ॥

तृतीयपञ्चमौ पादावभ्यस्येत् काकुभे[7] बुधः ।
ऋचौ द्वे ककुभस्तिस्रः सम्पद्यन्ते तथा सति ॥ ६ ॥

महासतोबृहत्यन्तो यो महाबृहतीमुखः ।
स महाबार्हतो नाम 'बृहद्भिरग्ने अर्चिभिः'[8] ॥ ७ ॥

महाबार्हतप्रगाथे चतुर्थं सप्तमं तथा ।
अभ्यस्येते बृहत्यः स्युस्तिस्रस्ता इति पण्डिताः ॥ ८ ॥

सन्ति प्रगाथा बहवः प्रातिशाख्यप्रदर्शिताः ।
पातञ्जले निदाने तु द्वौ प्रगाथौ प्रदर्शितौ ॥ ९ ॥

प्रगाथो यवमध्यान्तो 'वामी वामस्य धूतयः'[9] ।
बृहत्यौ मुखतस्तस्य गायत्रीत्वं ततो भवेत् ॥ १० ॥

अनुष्टुब्द्वे च गायत्र्यावयमानुष्टुभः स्मृतः ।
'आ त्वा रथं यथोतये'[10] इति तत्र निदर्शनम् ॥ ११ ॥

---

१. ऋ १,८४,१९. २. ऋ १,३६,१. ३. ऋ ८,१,१. ४. ऋ ७,९६,१. ५. अद्धय मूको; ऋ ८,१९,१. ६. ऋ ८,२१,१. ७. ककुभे मूको. ८. ऋ ६,४८,७. ९. ऋ ६,४८,२०. १०. ऋ ८,६८,१.

अत्र निदानम् — 'यस्य कस्यचिच्छन्दसः सम्पदं[1] कश्चिदिच्छति।
चतुर्थं तस्य सङ्ख्याय तावतीराहरेद् ऋचः ॥ १२ ॥
यदि तच्छन्द आहरेद् अन्यदन्यस्य सम्पदे।
चतुर्थं तस्य सङ्ख्याय विद्यात्तास्तावतीर्ऋचः'[2] ॥ १३ ॥ इति ॥

तदिदं 'तिस्रोऽनुष्टुभः चतस्रो गायत्र्यः' इत्यादिब्राह्मणानां समर्थनम्। तत्र गायत्रीभिः शस्ताभिः जगतीः सम्पादयितुमिच्छन् जगत्याः चतुर्थं गणयेत्। द्वादश भवन्ति। ततो द्वादश गायत्रीः शंसेत्। यदिदं जगतीसम्पादनार्थमाहृतं छन्दः गायत्रं तस्य यच्चतुर्थं तत् पश्येत्। षड् भवन्ति। एवं च द्वादश गायत्र्यः षड् जगत्यो भवन्ति। गायत्रीभिः त्रिष्टुभः सम्पादयितुमिच्छन् एकादश गायत्रीराहरेत्। षट् त्रिष्टुभो भवन्ति। गायत्रीभिः पङ्क्तीः सम्पादयितुमिच्छन् दश गायत्रीराहरेत्। षट् पङ्क्तयो भवन्ति। अथोष्णिग्भिर्जगतीः सम्पादयितुमिच्छन् द्वादशोष्णिह आहरेत्। सप्त जगत्यो भवन्ति। उष्णिग्भिः त्रिष्टुभः सम्पादयितुमिच्छन् एकादशोष्णिह आहरेत्। सप्त त्रिष्टुभो भवन्ति। गायत्रीभिरुष्णिहः सम्पादयितुमिच्छन् सप्त गायत्रीराहरेत्। षडुष्णिहो भवन्ति। उष्णिग्भिर्गायत्रीः सम्पादयितुमिच्छन् षडुष्णिह आहरेत्। सप्त गायत्र्यो भवन्ति। एवं सर्वत्र द्रष्टव्यमिति ॥

## [ ८२ ]

[3]कुसीदी काण्व ऋषिः। इन्द्रो देवता। गायत्री छन्दः[3]।

**आ प्र द्र॑व परा॒वतो॑ऽर्वा॒वत॑श्च वृत्रहन्। मध्वः॒ प्रति॒ प्रभ॑र्मणि ॥ १ ॥**

आ। प्र। द्र॒व। प॒रा॒ऽवतः॑। अ॒र्वा॒ऽवतः॑। च॒। वृ॒त्र॒ऽह॒न्। मध्वः॑। प्रति॑। प्र॒ऽभ॑र्मणि ॥ १ ॥

**वेङ्कट०** आ प्र द्रव दूरात् अन्तिकात् च वृत्रहन्! सोमान् प्रति तेषां प्रहरणे[4] ॥ १ ॥

**ती॒व्राः सोमा॑स॒ आ ग॑हि सु॒तासो॑ मादयि॒ष्णवः॑। पिबा॑ द॒धृग्यथो॑चि॒षे ॥ २ ॥**

ती॒व्राः। सोमा॑सः। आ। ग॒हि॒। सु॒तासः॑। मा॒द॒यि॒ष्णवः॑। पिब॑। द॒धृक्। यथा॑। ओ॒चि॒षे ॥ २ ॥

**वेङ्कट०** तीव्ररसाः सोमाः इमे मम सुताः मदकराः। आ गच्छ, पिब तान् धृष्टः सन्, यथा तान् सेवसे ॥ २ ॥

**इ॒षा म॑न्द॒स्वादु॒ तेऽरं॒ वरा॑य म॒न्यवे॑। भुव॑त् त इन्द्र॒ शं हृ॒दे ॥ ३ ॥**

इ॒षा। म॒न्द॒स्व॒। आत्। ऊँ इति॑। ते॒। अर॑म्। वरा॑य। म॒न्यवे॑। भुव॑त्। ते॒। इ॒न्द्र॒। शम्। हृ॒दे ॥ ३ ॥

**वेङ्कट०** सोमेन मन्दस्व। अनन्तरम् एव सेयम् इड् अरम् भवतु तव वारकाय क्रोधाय, तथा तव[5] इन्द्र! शम्[6] हृदयाय च ॥ ३ ॥

---

१. °दः मूको. २. निसू १,६. ३-३. नास्ति मूको. ४. प्रहुरणम् मूको. ५. नव मूको. ६. नास्ति मूको.

आ त्वशत्रवा गहि न्युक्थानि च हूयसे । उपमे रोचने दिवः ॥ ४ ॥

आ । तु । अशत्रो इति । आ । गहि । नि । उक्थानि । च । हूयसे । उपऽमे । रोचने । दिवः ॥४॥

**वेङ्कट०** आ गच्छ क्षिप्रम् हे असपत्न! सङ्ग्रामे । तथा द्युलोकात् अग्निभिः दीप्यमाने समीपस्थे यज्ञे च उक्थानि[1] प्रति नि[2] हूयसे । तत्र आ गच्छ ॥ ४ ॥

तुभ्यायमद्रिभिः सुतो गोभिः श्रीतो मदाय कम् । प्र सोम इन्द्र हूयते ॥ ५ ॥

तुभ्य । अयम् । अद्रिऽभिः । सुतः । गोभिः । श्रीतः । मदाय । कम् । प्र । सोमः । इन्द्र । हूयते ॥५॥

**वेङ्कट०** तुभ्यम् अयम् ग्रावभिः सुतः गोविकारैः मिश्रितः मदार्थम् प्र हूयते ॥ ५ ॥

[3]इति षष्ठाष्टके षष्ठाध्याये प्रथमो वर्गः[3] ॥

इन्द्र श्रुधि सु मे हवमस्मे सुतस्य गोमतः । वि पीतिं तृप्तिमश्नुहि ॥ ६ ॥

इन्द्र । श्रुधि । सु । मे । हवम् । अस्मे इति । सुतस्य । गोऽमतः । वि । पीतिम् । तृप्तिम् । अश्नुहि ॥६॥

**वेङ्कट०** इन्द्र! सुष्ठु श्रुधि मे ह्वानम् । तथा अस्माभिः सुतस्य गोभिः श्रीतस्य[4] च पानम्[5] तृप्तिम् च वि अश्नुहि ॥ ६ ॥

य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः । पिबेदस्य त्वमीशिषे ॥ ७ ॥

यः । इन्द्र । चमसेषु । आ । सोमः । चमूषु । ते । सुतः । पिब । इत् । अस्य । त्वम् । ईशिषे ॥७॥

**वेङ्कट०** यः इन्द्र! चमसेषु सोमः चमूषु च सुतः दृश्यते । ग्रहाः चम्वः । पिब त्वम् अमुं सोमम् । तस्य त्वम् एव ईश्वर इति ॥ ७ ॥

यो अप्सु चन्द्रमा इव सोमश्चमूषु ददृशे । पिबेदस्य त्वमीशिषे ॥ ८ ॥

यः । अप्ऽसु । चन्द्रमाःऽइव । सोमः । चमूषु । ददृशे । पिब । इत् । अस्य । त्वम् । ईशिषे ॥८॥

**वेङ्कट०** यः अन्तरिक्षे चन्द्रमाः इव सोमः चमूषु दृश्यते गृहीतः ॥ ८ ॥

यं ते श्येनः पदाभरत् तिरो रजांस्यस्पृतम् । पिबेदस्य त्वमीशिषे ॥ ९ ॥

[6]यम् । ते । श्येनः । पदा । आ । अभरत्[6] । तिरः । रजांसि । अस्पृतम् । पिब । इत् । अस्य । त्वम् । ईशिषे ॥

**वेङ्कट०** यम् ते श्येनः पदा आ जहार तिरः कुर्वन् लोकान् आन्तरिक्ष्यान् तेषु लोकेषु अस्पृष्टम्[7] शत्रुभिः । 'पद्भ्यां द्वे सवने समगृह्णाद् मुखेनैकम्' ( तै ६,१,६,४ ) इति ब्राह्मणम् ॥ ९ ॥

[3]इति षष्ठाष्टके षष्ठाध्याये द्वितीयो वर्गः[3] ॥

---

१. उक्तानि मूको. २. नास्ति मूको. ३-३. नास्ति मूको. ४. स्थितस्य मूको. ५. अन्नम् मूको. ६-६. तु. ऋ १०,१४४,५. ७. स्पष्टम् मूको.

[८३]

[1]कुसीदी काण्व ऋषिः। विश्वे देवा देवता। गायत्री छन्दः[1]।

देवानामिदवो महत् तदा वृणीमहे वयम्। वृष्णामस्मभ्यमूतये ॥ १ ॥

देवानाम्। इत्। अवः। महत्। तत्। आ। वृणीमहे। वयम्। वृष्णाम्। अस्मभ्यम्। ऊतये ॥१॥

वेङ्कट० देवानाम् एव पालनम् महत् विद्यते। तत् आ वृणीमहे वयम् वृष्णाम् तेषां स्वभूतम् अस्मभ्यम् रक्षणाय ॥ १ ॥

ते नः सन्तु युजः सदा वरुणो मित्रो अर्यमा। वृधासश्च प्रचेतसः ॥ २ ॥

ते। नः। सन्तु। युजः। सदा। वरुणः। मित्रः। अर्यमा। वृधासः। च। प्रऽचेतसः ॥ २ ॥

वेङ्कट० ते अस्माकम् सन्तु सहायाः सदा वरुणादयः वर्धयितारः[2] च सुमतयः ॥ २ ॥

अति नो विष्पिता पुरु नौभिरपो न पर्षथ। यूयमृतस्य रथ्यः ॥ ३ ॥

अति। नः। विऽपिता। पुरु। नौभिः। अपः। न। पर्षथ। यूयम्। ऋतस्य। रथ्यः ॥ ३ ॥

वेङ्कट० अति पर्षथ[3] अस्मान् विष्पितानि विप्राप्तानि विततानि बहूनि बलानि नौभिः उदकानि इव यूयम् हे सत्यस्य यज्ञस्य वा नेतारः! ॥ ३ ॥

वामं नो अस्त्वर्यमन् वामं वरुण शंस्यम्। वामं ह्यावृणीमहे ॥ ४ ॥

वामम्। नः। अस्तु। अर्यमन्। वामम्। वरुण। शंस्यम्। वामम्। हि। आऽवृणीमहे ॥ ४ ॥

वेङ्कट० वामम् धनम् नः अस्तु अर्यमन्!, वामम् वरुण! शंसनीयम्। वामम् हि वयम् आवृणीमहे ॥ ४ ॥

वामस्य हि प्रचेतस ईशानासो रिशादसः। नेमादित्या अघस्य यत् ॥ ५ ॥

वामस्य। हि। प्रऽचेतसः। ईशानासः। रिशादसः। न। ईम्। आदित्याः। अघस्य। यत् ॥५॥

वेङ्कट० वामस्य हि धनस्य हे प्रचेतसः! ईश्वराः यूयम् हे रिशतामसितारः!। न एनम् आदित्याः! तत् प्राप्नोतु यत् अघस्य सम्बन्धि ॥ ५ ॥

[1]इति षष्ठाष्टके षष्ठाध्याये तृतीयो वर्गः[1] ॥

वयमिद्वः सुदानवः क्षियन्तो यान्तो अध्वन्ना। देवा वृधाय हूमहे ॥ ६ ॥

वयम्। इत्। वः। सुऽदानवः। क्षियन्तः। यान्तः। अध्वन्। आ। देवाः। वृधाय। हूमहे ॥

वेङ्कट० वयम् युष्मान् हे शोभनदानाः! निवसन्तः गृहेषु[4] अध्वनि वा गच्छन्तः देवाः! वर्धनाय आ[5] हूमहे ॥ ६ ॥

---

१-१. नास्ति मूको. २. °रम् मूको. ३. वर्ष मूको. ४. °हे मूको. ५. नास्ति मूको.

अधि न इन्द्रैषां विष्णो सजात्यानाम् । इता मरुतो अश्विना ॥ ७ ॥

अधि । नः । इन्द्र । एषाम् । विष्णो इति । सऽजात्यानाम् । इत । मरुतः । अश्विना ॥ ७ ॥

**वेङ्कट०** हे इन्द्रादयः! एषाम् सजात्यानाम्[1] अस्मान् एव आगच्छत ॥ ७ ॥

प्र भ्रातृत्वं सुदानवोऽध द्विता समान्या । मातुर्गर्भे भरामहे ॥ ८ ॥

प्र । भ्रातृऽत्वम् । सुऽदानवः । अध । द्विता । समान्या । मातुः । गर्भे । भरामहे ॥ ८ ॥

**वेङ्कट०** प्र भरामहे वयं [2]हे सुदानाः[2] यत् युष्माकम् समान्या द्विता च मातुः गर्भे सञ्जातम् भ्रातृत्वम् । प्रभरणम्[3] उच्चारणं प्रकाशनं वा । आदित्याः सर्वे भ्रातरः द्वन्द्वशः च सङ्गता इति । 'अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्' ( तै ६,५,६,१ ) इति ब्राह्मणम् ॥ ८ ॥

यूयं हि ष्ठा सुदानव इन्द्रज्येष्ठा अभिद्यवः । अधा चिद्व उत ब्रुवे ॥ ९ ॥

यूयम् । हि । स्थ । सुऽदानवः । इन्द्रऽज्येष्ठाः । अभिऽद्यवः । अध । चित् । वः । उत । ब्रुवे ॥ ९ ॥

**वेङ्कट०** यूयम् हि भवथ हे सुदानाः! इन्द्रनेतृकाः अभिगतदीप्तयः । अथ युष्मान् अहं स्तौमि ॥ ९ ॥

[2]इति पष्ठाष्टके षष्ठाध्याये चतुर्थो वर्गः[2] ॥

[ ८४ ]

[2]उशना काव्य ऋषिः । अग्निर्देवता । गायत्री छन्दः[2] ।

प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् । अग्निं रथं न वेद्यम् ॥ १ ॥

प्रेष्ठम् । वः । अतिथिम् । स्तुषे । मित्रम्ऽइव । प्रियम् । अग्निम् । रथम् । न । वेद्यम् ॥ १ ॥

**वेङ्कट०** उशना काव्यः । [4]प्रेष्ठम् युष्माकम्[4] अतिथिम् स्तौमि, मित्रम् इव प्रियम् अग्निम् रथम् इव धनहितम् लाभहेतुम् वा इति ॥ १ ॥

कविमिव प्रचेतसं यं देवासो अध द्विता । नि मर्त्येष्वादधुः ॥ २ ॥

कविम्ऽइव । प्रऽचेतसम् । यम् । देवासः । अध । द्विता । नि । मर्त्येषु । आऽदधुः ॥ २ ॥

**वेङ्कट०** क्रान्तकर्माणम् प्रकृतचेतसम् इव पुरुषम् यम् देवाः द्वैधं मनुष्येषु नि आदधुः गार्हपत्यम्

---

१. साजा अ'. २-२. नास्ति मूको. ३. प्रकर° मूको. ४-४. प्रेष्ठं …मूको.

आहवनीयं च । यद्वा दिवि वर्तमानस्य पृथिव्यां [1]च यस्य निधानं कृतवन्तः । स्तुषे[1] तम् इति ॥ २ ॥

त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ ३ ॥

त्वम् । यविष्ठ । दाशुषः । नॄन् । पाहि । शृणुधि । गिरः । रक्ष । तोकम् । उत । त्मना ॥ ३ ॥

**वेङ्कट०** त्वम् युवतम! दत्तवतः मनुष्यान् पाहि, शृणु[2] च स्तुतीः, रक्ष पुत्रम् अपि च आत्मना एव ॥ ३ ॥

कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम् । वराय देव मन्यवे ॥ ४ ॥

कया । ते । अग्ने । अङ्गिरः । ऊर्जः । नपात् । उपऽस्तुतिम् । वराय । देव । मन्यवे ॥ ४ ॥

**वेङ्कट०** कया वाचा तुभ्यम् अग्ने! अङ्गिरः! अन्नस्य पुत्र! उपस्तुतिम् वरणीयाय अभिमन्यमानाय शत्रुम् देव![3] भरेम इति ॥ ४ ॥

दाशेम कस्य मनसा यज्ञस्य सहसो यहो । कदु वोच इदं नमः ॥ ५ ॥

दाशेम । कस्य । मनसा । यज्ञस्य । सहसः । यहो इति । कत् । ऊँ इति । वोचे । इदम् । नमः ॥५॥

**वेङ्कट०** दाशेम [4]कीदृशस्य मनसा[4] युक्ताः[5] वयं यजमानस्य हे सहसः पुत्र!। कदा वा तुभ्यम् इदम् नमः अहम् वोचे[6] हविः वा नमस्कारं वेति ॥ ५ ॥

[7]इति षष्ठाष्टके षष्ठाध्याये पञ्चमो वर्गः[7] ॥

अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षितीः । वाजद्रविणसो गिरः ॥ ६ ॥

अध । त्वम् । हि । नः । करः । विश्वाः । अस्मभ्यम् । सुऽक्षितीः । वाजऽद्रविणसः । गिरः ॥ ६ ॥

**वेङ्कट०** अथ त्वम् अस्मभ्यम् कुरु । तदेवाऽऽह — अस्मभ्यम् सुनिवासाः वाजद्रविणसः च गिरः विश्वाः स्युरिति[8] । दीप्तधनाः वाजद्रविणस इति ॥ ६ ॥

कस्य नूनं परीणसो धियो जिन्वसि दंपते । गोषाता यस्य ते गिरः ॥ ७ ॥

कस्य । नूनम् । परीणसः । धियः । जिन्वसि । दम्ऽपते । गोऽसाता । यस्य । ते । गिरः ॥७॥

**वेङ्कट०** कस्य इदानीं महतः कर्माणि प्रीणयसि गृहपते!, गवां लाभे भवन्ति यस्य तव स्तुतयः ॥ ७ ॥

---

१-१. च ··· स्तुषे वि[2]; ··· स्तुषे अ[1]. २. स्तुहि मूको. ३. देवम् वि[2]. ४-४. °दृशम° मूको. ५. युक्तम् मूको. ६. वोचः मूको. ७-७. नास्ति ८. तुरि° मूको.

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम् ॥ ८ ॥

तम् । मर्जयन्त । सुऽक्रतुम् । पुरःऽयावानम् । आजिषु । स्वेषु । क्षयेषु । वाजिनम् ॥ ८ ॥

वेङ्कट० तम् परिचरन्ति सुप्रज्ञम् पुरोगन्तारम् आजिषु स्वेषु गृहेषु बलिनम् ॥ ८ ॥

क्षेति क्षेमेभिः साधुभिर्नकिर्यं घ्नन्ति हन्ति यः । अग्ने सुवीर एधते ॥ ९ ॥

क्षेति । क्षेमेभिः । साधुऽभिः । नकिः । यम् । घ्नन्ति । हन्ति । यः । अग्ने । सुऽवीरः । एधते ॥ ९ ॥

वेङ्कट० निवसति साधुभिः क्षेमैः सह । न यम् केचन घ्नन्ति । हन्ति यः [1]सर्वान् । अग्ने![1] सुपुत्रः च वर्धते स तव एव स्तोतेति[2] ॥ ९ ॥

[3]इति षष्ठाष्टके षष्ठाध्याये षष्ठो वर्गः[3] ॥

[ ८५ ]

[3]कृष्ण आङ्गिरस ऋषिः । अश्विनौ देवता । गायत्री छन्दः[3] ।

आ मे हवं नासत्याश्विना गच्छतं युवम् । मध्वः सोमस्य पीतये ॥ १ ॥

आ । मे । हवम् । नासत्या । अश्विना । गच्छतम् । युवम् । मध्वः । सोमस्य । पीतये ॥ १ ॥

वेङ्कट० आङ्गिरसः कृष्णः । आ गच्छतम् युवाम् अश्विनौ! मम हवम् मदकरं सोमं[4] पातुम् ॥ १ ॥

इमं मे स्तोममश्विनेमं मे शृणुतं हवम् । मध्वः सोमस्य पीतये ॥ २ ॥

इमम् । मे । स्तोमम् । अश्विना । इमम् । मे । शृणुतम् । हवम् । मध्वः । सोमस्य । पीतये ॥२॥

वेङ्कट० स्तोत्रम् आगमनविषयं[5] ह्वानं च शृणुतम् इति ॥ २ ॥

अयं वां कृष्णो अश्विना हवते वाजिनीवसू । मध्वः सोमस्य पीतये ॥ ३ ॥

अयम् । वाम् । कृष्णः । अश्विना । हवते । वाजिनीवसू इति वाजिनीऽवसू । मध्वः । सोमस्य । पीतये ॥३॥

वेङ्कट० अयम् कृष्णः नाम वाम् हवते अश्विनौ! अन्नधनौ! ॥ ३ ॥

शृणुतं जरितुर्हवं कृष्णस्य स्तुवतो नरा । मध्वः सोमस्य पीतये ॥ ४ ॥

शृणुतम् । जरितुः । हवम् । कृष्णस्य । स्तुवतः । नरा । मध्वः । सोमस्य । पीतये ॥ ४ ॥

वेङ्कट० शृणुतम् स्तवनशीलस्य[6] हवम् कृष्णनाम्नः सम्प्रति स्तुवतः हे नेतारौ! इति ॥ ४ ॥

---

१-१. सर्वाननेषु वि[2]; °र्वाननेषु अ[1].　२. स्तोते मूको.　३-३ नास्ति मूको.　४. सोममिमं अ[1].
५. आहम° मूको.　६. हवन° मूको.

छर्दिर्यन्तमदाभ्यं विप्राय स्तुवते नरा । मध्वः सोमस्य पीतये ॥ ५ ॥

छर्दिः । यन्तम् । अदाभ्यम् । विप्राय । स्तुवते । नरा । मध्वः । सोमस्य । पीतये ॥ ५ ॥

वेङ्कट० गृहम् यच्छतम् अहिंस्यम् मेधाविने स्तुवते नरौ! इति ॥ ५ ॥

'इति षष्ठाष्टके षष्ठाध्याये सप्तमो वर्गः' ॥

गच्छतं दाशुषो गृहमित्था स्तुवतो अश्विना । मध्वः सोमस्य पीतये ॥ ६ ॥

गच्छतम् । दाशुषः । गृहम् । इत्था । स्तुवतः । अश्विना । मध्वः । सोमस्य । पीतये ॥ ६ ॥

वेङ्कट० गच्छतम् यजमानस्य गृहम् इत्थम् स्तुवतः अश्विनौ ! ॥ ६ ॥

युञ्जाथां रासभं रथे वीड्वङ्गे वृषण्वसू । मध्वः सोमस्य पीतये ॥ ७ ॥

युञ्जाथाम् । रासभम् । रथे । वीळुऽअङ्गे । वृषण्वसू इति वृषण्ऽवसू । मध्वः । सोमस्य । पीतये ॥७॥

वेङ्कट० युञ्जाथाम् रासभम् स्वे[2] रथे दृढाङ्गे हे वृष्यमाणधनौ! ॥ ७ ॥

त्रिवन्धुरेण त्रिवृता रथेना यातमश्विना । मध्वः सोमस्य पीतये ॥ ८ ॥

त्रिऽवन्धुरेण । त्रिऽवृता । रथेन । आ । यातम् । अश्विना । मध्वः । सोमस्य । पीतये ॥ ८ ॥

वेङ्कट० त्रिफलकासङ्घाटेन त्रिकोणेन रथेन आ यातम् अश्विनौ! ॥ ८ ॥

नू मे गिरो नासत्याश्विना प्रावतं युवम् । मध्वः सोमस्य पीतये ॥ ९ ॥

नु । मे । गिरः । नासत्या । अश्विना । प्र । अवतम् । युवम् । मध्वः । सोमस्य । पीतये ॥ ९ ॥

वेङ्कट० क्षिप्रम् मे गिरः '[1]हे नासत्यौ![1]' अश्विनौ! युवाम् प्र गच्छतम् रक्षतं वेति ॥ ९ ॥

'इति षष्ठाष्टके षष्ठाध्याये अष्टमो वर्गः' ॥

[ ८६ ]

'कृष्ण आङ्गिरस ऋषिः, विश्वको वा कार्ष्णिः । अश्विनौ देवता । जगती छन्दः' ।

उभा हि दस्रा भिषजा मयोभुवोभा दक्षस्य वचसो बभूवथुः ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् ॥ १ ॥

---

१-१. नास्ति मूको. २. अश्वे मूको.

उभा । हि । दस्रा । भिषजा । मयःऽभुवा । उभा । दक्षस्य । वचसः । बभूवथुः ।
ता । वाम् । विश्वकः । हवते । तनूऽकृथे । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥१॥

वेङ्कट० कार्ष्णिर्विश्वकः[1] कृष्णो वा आङ्गिरसः। उभौ हि दस्रौ भिषजौ सुखस्य भावयितारौ उभौ दक्षस्य प्रजापतेः स्तुतेः सम्बन्धिनौ बभूवथुः। तौ वाम् विश्वकः हवते पुत्रस्य कृते। मा अस्माकं सख्यानि पृथक् कुरुतम्। अत्र आगन्तुम् अश्वप्रग्रहान् मुञ्चतम् इति। विष्णाप्वम्[2] उद्दिश्य तस्य पिता विश्वकः वा ह्वयत इति आत्मानम् आह। अपि वा विश्वकस्य पिता कृष्णः वदति—अयं मम पुत्रो विश्वकः पुत्रार्थं वाम् ह्वयत इति ॥ १ ॥

कथा नूनं वां विमना उप स्तवद्युवं धियं ददथुर्वस्यइष्टये ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् ॥ २ ॥

कथा । नूनम् । वाम् । विऽमनाः । उप । स्तवत् । युवम् । धियम् । ददथुः । वस्यःऽइष्टये ।
ता । वाम् । विश्वकः । हवते । तनूऽकृथे । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥२॥

वेङ्कट० कथम् वाम् पुरा विमनाः ऋषिः उप स्तवत्। यद्वा विमनसे बुद्धिं दधथुः वसिष्ठस्य[3] अभिलषितस्य इष्टये अभिगमनाय। ता वाम् इति गतम् ॥ २ ॥

युवं हि ष्मा पुरुभुजेममेधतुं विष्णाप्वे ददथुर्वस्यइष्टये ।
ता वां विश्वको हवते तनूकृथे मा नो वि यौष्टं सख्या मुमोचतम् ॥ ३ ॥

युवम् । हि । स्म । पुरुऽभुजा । इमम् । एधतुम् । विष्णाप्वे । ददथुः । वस्यःऽइष्टये ।
ता । वाम् । विश्वकः । हवते । तनूऽकृथे । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥३॥

वेङ्कट० हे पुरुभुजौ! युवाम् हि स्म इमम् एधतुम् इमां वृद्धिम् विष्णाप्वे मम पुत्रे पौत्रे वा दधथुः अस्माकं वसीयसः इच्छां पूरयितुम् ॥ ३ ॥

उत त्यं वीरं धनसामृजीषिणं दूरे चित् सन्तमवसे हवामहे ।
यस्य स्वादिष्ठा सुमतिः पितुर्यथा मा नो वि यौष्टं सख्या मुमोचतम् ॥ ४ ॥

उत । त्यम् । वीरम् । धनऽसाम् । ऋजीषिणम् । दूरे । चित् । सन्तम् । अवसे । हवामहे ।
यस्य । स्वादिष्ठा । सुऽमतिः । पितुः । यथा । मा । नः । वि । यौष्टम् । सख्या । मुमोचतम् ॥

वेङ्कट० अपि च तम् वीरम् धनानां[4] सम्भक्तारम्। [5]ऋजीषम् अपार्जितं[5] भवति। अभिषुतसोमं[6]

1. °र्ष्णिन्धश्चक मूको. 2. विष्णोष्णावम् मूको 3. वरिष्ठस्य वि[2]. 4. नास्ति मूको.
5-5, °षमार्जि° मूको. 6. °भिमत° मूको.

विनष्टं दूरे अपि सन्तम् रक्षणाय हवामहे। पुत्रो हि पितरं रक्षति। यस्य स्वादुतमा सुष्टुतिः पितुः विश्वकस्य इव ॥ ४ ॥

ऋतेन॑ दे॒वः स॑वि॒ता श॑मायत ऋ॒तस्य॒ शृङ्ग॑मुर्वि॒या वि प॑प्रथे ।
ऋ॒तं सा॑साह॒ महि॑ चित् पृतन्य॒तो मा नो॒ वि यौ॑ष्टं स॒ख्या मु॒मोच॑तम् ॥ ५ ॥

ऋ॒तेन॑ । दे॒वः । स॒वि॒ता । श॒म्ऽआ॒य॒ते॒ । ऋ॒तस्य॑ । शृङ्ग॑म् । उ॒र्वि॒या । वि । प॒प्र॒थे॒ ।
ऋ॒तम् । स॒सा॒ह॒ । महि॑ । चि॒त् । पृ॒त॒न्य॒तः । मा । नः॒ । वि । यौ॒ष्ट॒म् । स॒ख्या । मु॒मोच॑तम् ॥५॥

वेङ्कट० सत्येन देवः सविता सायं शमं गच्छति, 'सत्यस्यैव शृङ्गम्' दिवा विस्तीर्णम् वि प्रथयति। अपि च इदम् ऋतम् अभिभवति महत् अपि बलम् पृतन्यतः। एवं प्रशस्तम् ऋतं भवति। युवाम् अपि ऋतेन मा नः वि यौष्टम् इति ॥ ५ ॥

[2]इति षष्ठाष्टके षष्ठाध्याये नवमो वर्गः[2] ॥

[ ८७ ]

[1]कृष्ण आङ्गिरस ऋषिः, वासिष्ठो वा द्युम्नीकः, प्रियमेध आङ्गिरसो वा। अश्विनौ देवता। प्रगाथश्छन्दः (=विषमा बृहत्यः, समाः सतोबृहत्यः)[2]।

द्यु॒म्नी वां॒ स्तोमो॑ अश्विना॒ क्रिवि॒र्न सेक॒ आ ग॑तम् ।
मध्वः॑ सु॒तस्य॒ स दि॒वि प्रि॒यो न॑रा पा॒तं गौ॑रावि॒वेरि॑णे ॥ १ ॥

द्यु॒म्नी । वा॒म् । स्तोम॑ः । अ॒श्वि॒ना॒ । क्रिवि॑ः । न । सेके॑ । आ । ग॒त॒म् ।
मध्व॑ः । सु॒तस्य॑ । सः । दि॒वि । प्रि॒यः । न॒रा॒ । पा॒त॒म् । गौ॒रौऽइ॑व । इरि॑णे ॥ १ ॥

वेङ्कट० द्युम्नीकः वासिष्ठः प्रियमेधो वा आङ्गिरसः। वाम्[3] द्युम्नी युवयोः स्तोता भवति अश्विनौ! कूपः (तु. निघ ३,२३) इव सेके, अनुपक्षीणस्तोत्रः। तथा सति आ गच्छतम्। अपि च अन्नविषयः[4] स्तोमः स्तुतिः इति। सः अयं स्तोता दिवि अभिषुतस्य सोमस्य प्रियः भवति। तम् पातम् शीघ्रमागत्य नरौ! यथा तृषितौ[5] 'गौरौ इरिणे[6] शीघ्रम् आगच्छतः ॥ १ ॥

पिब॑तं घ॒र्मं मधु॑मन्तमश्वि॒ना ब॒र्हिः सी॑दतं नरा ।
ता म॑न्दसा॒ना मनु॑षो दुरो॒ण आ नि पा॑तं॒ वेद॑सा॒ वयः॑ ॥ २ ॥

---

१-१. °त्यस्यै ··· शृ° मूको. २-२. नास्ति मूको. ३. युवाम् मूको. ४. °न्नाद्विषयः मूको. ५. तृचीतौ मूको. ६-६. °रविरि° मूको.

पिबतम् । घर्मम् । मधुऽमन्तम् । अश्विना । आ । बर्हिः । सीदतम् । नरा ।
ता । मन्दसाना । मनुषः । दुरोणे । आ । नि । पातम् । वेदसा । वयः ॥ २ ॥

वेङ्कट० पिबतम् घर्मम् मधुररसवन्तम् अश्विनौ!। आ सीदतम् बर्हिः नरौ!। तौ मोदमानौ मनुषः गृहे आगत्य नि पिबतम्[1] पुरोडाशादिना सह सोमलक्षणम् अन्नम्। अपि च आरक्षतम् धनेन सह आयुरिति ॥ २ ॥

आ वां विश्वाभिरूतिभिः प्रियमेधा अहूषत ।
ता वर्तिर्यातमुप वृक्तबर्हिषो जुष्टं यज्ञं दिविष्टिषु ॥ ३ ॥

[2]आ । वाम् । विश्वाभिः । ऊतिऽभिः । प्रियऽमेधाः । अहूषत ।[2]
ता । वर्तिः । यातम् । उप । वृक्तऽबर्हिषः । जुष्टम् । यज्ञम् । दिविष्टिषु ॥ ३ ॥

वेङ्कट० आहूतवन्तः वाम् विश्वैः पालनैः प्रिययज्ञाः प्रियमेधाः वा। एकस्मिन् बहुवचनम्। तौ गृहम् आगच्छतम् यजमानस्य पर्याप्तम् यज्ञम् प्रति अह्न आगमनेषु ॥ ३ ॥

पिबतं सोमं मधुमन्तमश्विना बर्हिः सीदतं सुमत् ।
ता वावृधाना उप सुष्टुतिं दिवो गन्तं गौराविवेरिणम् ॥ ४ ॥

पिबतम् । सोमम् । मधुऽमन्तम् । अश्विना । आ । बर्हिः । सीदतम् । सुऽमत् ।
ता । ववृधानौ । उप । सुऽस्तुतिम् । दिवः । गन्तम् । गौरौऽइव । इरिणम् ॥ ४ ॥

वेङ्कट० पिबतम् सोमम् मधुमन्तम् अश्विनौ! । आ सीदतम् बर्हिः शोभनम्। तौ वर्धमानौ उप गच्छतम् सुष्टुतिम् द्युलोकात् गौरौ इव इरिणम् ॥ ४ ॥

आ नूनं यातमश्विनाश्वेभिः प्रुषितप्सुभिः ।
दस्रा हिरण्यवर्तनी शुभस्पती पातं सोममृतावृधा ॥ ५ ॥

आ । नूनम् । यातम् । अश्विना । अश्वेभिः । प्रुषितप्सुऽभिः ।
दस्रा । हिरण्यवर्तनी इति हिरण्यऽवर्तनी । शुभः । पती इति । पातम् । सोमम् । ऋतऽवृधा ॥५॥

वेङ्कट० आ यातम् इदानीम् अश्विनौ! अश्वैः दीप्तरूपैः। दर्शनीयौ! हिरण्मयरथौ! उदकस्य पालयितारौ! पिबतम् सोमम् यज्ञस्य वर्धयितारौ! ॥ ५ ॥

वयं हि वां हवामहे विपन्यवो विप्रासो वाजसातये ।
ता वल्गू दस्रा पुरुदंससा धियाश्विना श्रुष्ट्या गतम् ॥ ६ ॥

---

1. चिन्वतं मूको.  २-२. = ऋ ८,८,१८.

वयम् । हि । वाम् । हवामहे । विपन्यवः । विप्रासः । वाजऽसातये ।

ता । वल्गू इति । दस्रा । पुरुऽदंससा । धिया । अश्विना । श्रुष्टी । आ । गतम् ॥ ६ ॥

वेङ्कट० वयम् हि वाम् हवामहे स्तोतारः मेधाविनः अन्नलाभाय । तौ वल्गनशीलौ दस्रौ बहुकर्माणौ प्रज्ञया अश्विनौ! क्षिप्रम् आ गच्छतम् ॥ ६ ॥

[1]इति षष्ठाष्टके षष्ठाध्याये दशमो वर्गः[1] ॥

[ ८८ ]

[1]नोधा गौतम ऋषिः । इन्द्रो देवता । प्रगाथश्छन्दः ( =विषमा बृहत्यः, समाः सतोबृहत्यः )[1] ।

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ १ ॥

तम् । वः । दस्मम् । ऋतिऽसहम् । वसोः । मन्दानम् । अन्धसः ।

अभि । वत्सम् । न । स्वसरेषु । धेनवः । इन्द्रम् । गीःऽभिः । नवामहे ॥ १ ॥

वेङ्कट० नोधा गौतमः । तम् युष्माकं दर्शनीयम् बाधकानामभिभवितारम् वासयित्राऽन्नेन सोमेन मन्दानम् अभि [2]नवामहे अभिशब्दयामः[2], वत्सम् इव गोष्ठेषु धेनवः, इन्द्रम् स्तुतिभिः ॥ १ ॥

द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षू गोमन्तमीमहे ॥ २ ॥

द्युक्षम् । सुऽदानुम् । तविषीभिः । आऽवृतम् । गिरिम् । न । पुरुऽभोजसम् ।

क्षुमन्तम् । वाजम् । शतिनम् । सहस्रिणम् । मक्षु । गोऽमन्तम् । ईमहे ॥ २ ॥

वेङ्कट० दीप्तम् शोभनदानम् बलैः आवृतम् शिलोच्चयम् इव बहुभिर्भोक्तव्यम् शब्दवन्तम् वाजम् याचामहे ॥ २ ॥

न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीळवः ।
यद्दित्ससि स्तुवते मावते वसु नकिष्टदा मिनाति ते ॥ ३ ॥

न । त्वा । बृहन्तः । अद्रयः । वरन्ते । इन्द्र । वीळवः ।

यत् । दित्ससि । स्तुवते । माऽवते । वसु । नकिः । तत् । आ । मिनाति । ते ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. °महे हि शब्द° मूको.

वेङ्कट० न त्वां महान्तः शिलोच्चयाः वारयन्ति इन्द्र! दृढाः, यत् दातुमिच्छसि स्तुवते मादृशाय धनम्। न कश्चित् तव आभिमुख्येन हिनस्ति तत् तव देयम् इति। पूर्वार्धप्रपञ्च उत्तरः ॥ ३ ॥

योद्धासि क्रत्वा शवसोत दंसना विश्वा जाताभि मज्मना।
आ त्वायमर्क ऊतये ववर्तति यं गोतमा अजीजनन् ॥ ४ ॥

योद्धा। असि। क्रत्वा। शवसा। उत। दंसना। विश्वा। जाता। अभि। मज्मना।
आ। त्वा। अयम्। अर्कः। ऊतये। ववर्तति। यम्। गोतमाः। अजीजनन् ॥ ४ ॥

वेङ्कट० योद्धा भवसि प्रज्ञानेन अपि च बलेन कर्मणा। विश्वानि जातानि अभि भवसि च बलेन। तम् त्वा अयम् मन्त्रः स्तोता वा रक्षणाय आ वर्तयति, यम् अजीजनन् गोतमाः ॥ ४ ॥

प्र हि रिरिक्ष ओजसा दिवो अन्तेभ्यस्परि।
न त्वा विव्याच रज इन्द्र पार्थिवमनु स्वधां ववक्षिथ ॥ ५ ॥

प्र। हि। रिरिक्षे। ओजसा। दिवः। अन्तेभ्यः। परि।
न। त्वा। विव्याच। रजः। इन्द्र। पार्थिवम्। अनु। स्वधाम्। ववक्षिथ ॥ ५ ॥

वेङ्कट० स्वबलेन[1] अतिरिक्तो भवसि दिवः पर्यन्तेभ्यः। महता शरीरेण न त्वां व्याप्नोति पार्थिवम् रजः लोकः इन्द्र!। स त्वम् अनु [2]वहसि अन्नम्[2] उदकं वा इति ॥ ५ ॥

नकिः परिष्टिर्मघवन् मघस्य ते यद् दाशुषे दशस्यसि।
अस्माकं बोध्युचथस्य चोदिता मंहिष्ठो वाजसातये ॥ ६ ॥

नकिः। परिष्टिः। मघऽवन्। मघस्य। ते। यत्। दाशुषे। दशस्यसि।
अस्माकम्। बोधि। उचथस्य। चोदिता। मंहिष्ठः। वाजऽसातये ॥ ६ ॥

वेङ्कट० न अस्ति ते [3]परिष्टिः निरोद्धा[3] मघवन्! धनस्य, यदा त्वम् दाशुषे ददासि। तथा सति अस्माकम् बुध्यस्व वचनम् चोदयिता धनानाम् दातृतमः अन्नलाभाय इति ॥ ६ ॥

[4]इति षष्ठाष्टके षष्ठाध्याये एकादशो वर्गः[4] ॥

[ ८९ ]

[4]नृमेधपुरुमेधावाङ्गिरसौ ऋषी। इन्द्रो देवता। प्रथमादिचतुर्थ्यन्ताः प्रगाथौ ( = विषमे बृहत्यौ, समे सतोबृहत्यौ ), पञ्चमीषष्ठ्यौ अनुष्टुभौ, सप्तमी बृहती[4]।

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्[5]।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥ १ ॥

---

१. स्वलेन मूको. २-२. वहस्यतन्नं मूको. ३-३. °ष्टिन्नि° मूको. ४-४. नास्ति मूको.
५. तु. एवं सर्वत्र; वैतु. इहैव परम्परागतः पाठः °हंत° (पपा. °हमऽत°)? इति।

बृहत् । इन्द्राय । गायत । मरुतः । वृत्रहन्ऽतमम् ।
येन । ज्योतिः । अजनयन् । ऋतऽवृधः । देवम् । देवाय । जागृवि ॥ १ ॥

**वेङ्कट०** नृमेध-पुरुमेधौ आङ्गिरसौ । अतिशयेन पापविनाशनम् बृहत् [1]साम इन्द्राय[1] गायत हे स्तोतारः![2], येन साम्ना ज्योतिः इन्द्राय अजनयन्[3] यज्ञस्य वर्धकाः देवनशीलम् जागरणशीलम् देवाय इति ॥ १ ॥

**अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत् ।**
**देवास्त इन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ॥ २ ॥**

अप । अधमत् । अभिऽशस्तीः । अशस्तिऽहा । अथ । इन्द्रः । द्युम्नी । आ । अभवत् ।
देवाः । ते । इन्द्र । सख्याय । येमिरे । बृहद्भानो इति बृहत्ऽभानो । मरुत्ऽगण ॥ २ ॥

**वेङ्कट०** अप अधमत् [4]अभिशस्तीः हिंसाः अशस्तिहा । अथ[4] इन्द्रः [5]यशस्वी आ अभवत् । अथ[5] प्रत्यक्षः—देवाः ते इन्द्र! सख्यार्थम् आत्मनः नि-येमिरे महादीप्ते! मरुत्सख![6] ॥ २ ॥

**प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।**
**वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ३ ॥**

प्र । वः । इन्द्राय । बृहते । मरुतः । ब्रह्म । अर्चत ।
वृत्रम् । हनति । वृत्रऽहा । शतऽक्रतुः । वज्रेण । शतऽपर्वणा ॥ ३ ॥

**वेङ्कट०** प्र अर्चयत यूयम् इन्द्राय महते स्तोतारः![2] स्तोत्रम् । वृत्रम् हन्ति वृत्रहा बहुप्रज्ञः वज्रेण शतपर्वणा इति ॥ ३ ॥

**अभि प्र भर धृषता धृषन्मनः श्रवश्चित् ते असद् बृहत् ।**
**अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वः ॥ ४ ॥**

अभि । प्र । भर । धृषता । धृषत्ऽमनः । श्रवः । चित् । ते । असत् । बृहत् ।
अर्षन्तु । आपः । जवसा । वि । मातरः । हनः । वृत्रम् । जय । स्वरिति स्वः ॥ ४ ॥

**वेङ्कट०** अभि प्र भर[7] अस्मभ्यं धृष्टेन मनसा हे शत्रूणां धर्षणशीलमनस्क!, अन्नं तव भवति महत् । वर्षं च । आपः विविधं गच्छन्तु वेगेन मातृस्थानीयाः । तदर्थं ताडय[8] मेघम् । जय सर्वम् इति ॥ ४ ॥

---

१-१. स्तोमेन्द्रा° वि[२]; सोमेन्द्रा° अ[१]. २. तु. निघ ३,१८. ३. जन° मूको. ४-४. °स्तीर्हिंसो अभि शस्तिथ वि[२]; °स्तीर्हिंसो अहि शस्तिथ अ[१]. ५-५. °यशस्वि ··· थ मूको. ६. °खाय मूको. ७. भरेण मूको. ८. °यन् मूको.

यज्जायथा अपूर्व्य मघवन् वृत्रहत्याय ।
तत् पृथिवीमप्रथयस्तदस्तभ्ना उत द्याम् ॥ ५ ॥

यत् । जायथाः । अपूर्व्य । मघऽवन् । वृत्रऽहत्याय ।
तत् । पृथिवीम् । अप्रथयः । तत् । अस्तभ्नाः । उत । द्याम् ॥ ५ ॥

वेङ्कट० यदा[1] त्वम् अजायथाः हे त्वत्तः व्यतिरिक्तेन पूर्व्येण[2] वर्जित![3] मघवन्! वृत्रहत्याय, तदानीम् पृथिवीम् अप्रथयः । अपि तथा आदित्यम् च अस्तभ्नाः[4] ॥ ५ ॥

तत् ते यज्ञो अजायत तदर्क उत हस्कृतिः ।
तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥ ६ ॥

तत् । ते । यज्ञः । अजायत । तत् । अर्कः । उत । हस्कृतिः[5] ।
[6]तत् । विश्वम् । अभिऽभूः । असि[6] । यत् । जातम् । यत् । च । जन्त्वम् ॥ ६ ॥

वेङ्कट० तदानीं त्वदर्थम्[7] यज्ञः अजायत, तदानीं मन्त्रः अपि च प्रीत्यै क्रियमाणो हर्षस्य सूचकः । तदानीम् विश्वम् अभिभवसि यत् जातम् यत् च जनयितव्यम् तत् विश्वम् इति ॥ ६ ॥

आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।
घर्मं न सामन् तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ ७ ॥

[8]आमासु । पक्वम् । ऐरयः । आ । सूर्यम् । रोहयः । दिवि[8] ।
घर्मम् । न । सामन् । तपत । सुवृक्तिऽभिः । [9]जुष्टम् । गिर्वणसे । बृहत्[9] ॥ ७ ॥

वेङ्कट० आमासु गोषु पक्वम् पयः त्वम् ऐरयः । आ रोहयः च सूर्यम् दिवि । तम् इमं यथा घर्मम् सामभिः तपन्ति, तथा तीक्ष्णीकुरुत स्तुतिभिः पर्याप्तम् गिर्वणसे बृहत् साम गायत इति ॥ ७ ॥

[10]इति षष्ठाष्टके षष्ठाध्याये द्वादशो वर्गः[10] ॥

[ ९० ]

[10]नृमेधपुरुमेधावाङ्गिरसौ ऋषी । इन्द्रो देवता । प्रगाथश्छन्दः (=विषमा बृहत्यः, समाः सतोबृहत्यः)[10] ।

आ नो विश्वासु हव्य इन्द्रः समत्सु भूषतु ।
उप ब्रह्माणि सवनानि वृत्रहा परमज्या ऋचीषमः ॥ १ ॥

---

१. यथा मूको. २. पूर्वेण मूको. ३. वज्रिन् वि². ४. °भ्नात् मूको. ५. तु. ऋ १,२३,१२; ४,७,३. ६-६. तु. ऋ ८,९७,९. ७. यद° वि². ८-८. तु. ऋ १,६२,९;९,१०७,७. ९-९. तु. या ६,१४. १०-१०. नास्ति मूको.

आ । नः । विश्वासु । हव्यः । इन्द्रः । समत्ऽसु । भूषतु ।

उप । ब्रह्माणि । सवनानि । वृत्रऽहा । परमऽज्याः । ऋचीषमः ॥ १ ॥

वेङ्कट० उप आ भवतु अस्माकम् ब्रह्माणि इन्द्रः सर्वेषु सङ्ग्रामेषु ह्वातव्यः सवनानि च वृत्रहा प्रकर्षेण क्षपयिता स्तुत्या समः ॥ १ ॥

त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् ।

तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥ २ ॥

त्वम् । दाता । प्रथमः । राधसाम् । असि । असि । सत्यः । ईशानऽकृत् ।

तुविऽद्युम्नस्य । युज्या । आ । वृणीमहे । पुत्रस्य । शवसः । महः ॥ २ ॥

वेङ्कट० त्वम् दाता मुख्यः धनानाम् भवसि । असि च सत्यकर्मा ऐश्वर्यकृत् । बह्वन्नस्य योग्यानि धनानि आ वृणीमहे बलस्य सूनोः महतः तव ॥ २ ॥

ब्रह्मा त इन्द्र गिर्वणः क्रियन्ते अनतिद्भुता ।

इमा जुषस्व हर्यश्व योजनेन्द्र या ते अमन्महि ॥ ३ ॥

ब्रह्म । ते । इन्द्र । गिर्वणः । क्रियन्ते । अनतिऽभुता ।

इमा । जुषस्व । हरिऽअश्व । योजना । इन्द्र । या । ते । अमन्महि ॥ ३ ॥

वेङ्कट० ब्रह्माणि ते इन्द्र! गीर्भिर्वननीय! क्रियन्ते, 'यानि त्वद् गुणान् नाऽतिभवन्ति'[1] सत्यानि । तानि इमानि जुषस्व हर्यश्व!, यानि त्वा योजयन्ति[2], इन्द्र! यानि तव वयम् उक्तवन्तः ॥ ३ ॥

त्वं हि सत्यो मघवन्ननानतो वृत्रा भूरि न्यृञ्जसे ।

स त्वं शविष्ठ वज्रहस्त दाशुषेऽर्वाञ्चं रयिमा कृधि ॥ ४ ॥

त्वम् । हि । सत्यः । मघऽवन् । अनानतः । वृत्रा । भूरि । निऽऋञ्जसे ।

सः । त्वम् । शविष्ठ । वज्रऽहस्त । दाशुषे । अर्वाञ्चम् । रयिम् । आ । कृधि ॥ ४ ॥

वेङ्कट० त्वम् हि सत्यः मघवन्! अप्रह्वः वृत्राणि भूरीणि न्यक् करोषि । सः त्वम् इति स्पष्टम् ॥ ४ ॥

त्वमिन्द्र यशा अस्यृजीषी शवसस्पते ।

त्वं वृत्राणि हंस्यप्रतीन्येक इदनुत्ता चर्षणीधृता ॥ ५ ॥

---

१-१. यान्निन्नगुणान्नानिभ° मूको. २. यति मूको.

त्वम् । इन्द्र । यशाः । असि । ऋजीषी । शवसः । पते ।
त्वम् । वृत्राणि । हंसि । अप्रतीनि । एकः । इत् । अनुत्ता । चर्षणिऽधृता ॥ ५ ॥

**वेङ्कट०** त्वम् इन्द्र! यशस्वी भवसि ऋजीषी । हे बलस्य पते! त्वम् वृत्राणि हंसि बलिभिः अप्रतिहतानि एकः एव अन्यैः अनुत्तानि[1] नोत्तुमशक्यानि[2] चर्षणीनां धारकेण ॥ ५ ॥

**तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे ।**
**महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन् ॥ ६ ॥**

तम् । ऊँ इति । त्वा । नूनम् । असुर । प्रऽचेतसम् । राधः । भागम्ऽइव । ईमहे ।
महीऽइव । कृत्तिः । शरणा । ते । इन्द्र । प्र । ते । सुम्ना । नः । अश्नवन् ॥ ६ ॥

**वेङ्कट०** तम् उ त्वा इदानीं हे बलवन्! प्रकृष्टज्ञानम्[3] धनम् पितृतः भागम् इव याचामहे । यास्कः ( ५,२२ )—"कृत्तिः कृन्ततेः । यशो वा अन्नं वा । 'महीव कृत्तिः शरणा त इन्द्र' । सुमहत्त इन्द्र [4]शरणमन्तरिक्षे कृत्तिरिव"[4] इति । प्र अश्नवन् तव सुम्नानि अस्मान् इति ॥ ६ ॥

[5]इति षष्ठाष्टके षष्ठाध्याये त्रयोदशो वर्गः[5] ॥

## [ ९१ ]

[5]आत्रेयी अपाला ऋषिः । इन्द्रो देवता । अनुष्टुप् छन्दः, आद्ये पङ्क्ती[5] ।

**कन्या३ वारवायती सोममपि स्रुताविदत् ।**
**अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वा ॥ १ ॥**

कन्या । वाः । अवऽयती । सोमम् । अपि । स्रुता । अविदत् ।
अस्तम् । भरन्ती । अब्रवीत् । इन्द्राय । सुनवै । त्वा । शक्राय । सुनवै । त्वा ॥ १ ॥

**वेङ्कट०** अपाला आत्रेयी । कन्या स्नानार्थम् उदकम् प्रति अवगच्छन्ती मार्गे सोमम् अपि अलभत । तं सोमं गृहं प्रति आहरन्ती सा अब्रवीत्—इन्द्राय सुनवै त्वा शक्राय सुनवै त्वा इति । शाट्यायनकम्—"सा तीर्थमभ्यवयती सोमांशुमविन्दत् । तं समखादत् । तस्यै ह ग्रावाण इव दन्ता ऊदुः[6] । स इन्द्र आद्रवद् ग्रावाणो [7]वै वदन्तीति[7] । साभिव्याहरत् 'कन्या वारवायती[8] सोममपि [9]स्रुताऽविदत् । अस्तं भरन्त्यब्रवीदिन्द्राय सुनवै त्वा शक्राय सुनवै त्वा' इति । अस्यै वा इदं[9] ग्रावाण इव दन्ता वदन्तीति विदित्वेन्द्रः पराङावर्तत[10] । तमब्रवीत् 'असौ य एषि वीरकः' ( ऋ ८,९१,२ )" इत्यादि ( तु. जैमि १,२२०; बृदे ६,९९-१०७; षड्गुरुशिष्यः [ऋअ]) ॥ १ ॥

---

१. °नुत्तानि मूको.　२. नोक्तुम° मूको.　३. °ष्टं ज्ञा° मूको.　४-४. °रिक्षे ··· वि मूको. ५-५. नास्ति मूको.　६. ऊदुः मूको.　७-७. वैदन्ती° मूको.　८. वारचायत्री मूको.　९-९. सुता ··· तदादित्यस्यैवाश्वं मूको.　१०-१०. पुरादावर्तनम् वि².

असौ य एषि वीरको गृहंगृहं विचाकशत् ।
इमं जम्भसुतं पिब धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ॥ २ ॥

असौ । यः । एषि । वीरकः । गृहम्ऽगृहम् । विऽचाकशत् ।
इमम् । जम्भऽसुतम् । पिब । धानाऽवन्तम् । करम्भिणम् । अपूपऽवन्तम् । उक्थिनम् ॥ २ ॥

**वेङ्कट०** असौ यः गच्छसि[1] सोमपानाय वीरः गृहंगृहम् प्रति दीप्यमानः । स त्वम् इमम् दंष्ट्राभ्यां सुतं सोमम् पिब धानादियुक्तम् इति । धानादींश्च अपाला इन्द्राय तदानीं सोमेन सह न्यवेदयदिति ॥ २ ॥

आ चन त्वा चिकित्सामोऽधि चन त्वा नेमसि ।
शनैरिव शनकैरिवेन्द्रायेन्दो परि स्रव ॥ ३ ॥

आ । चन । त्वा । चिकित्सामः । अधि । चन । त्वा । न । इमसि ।
शनैःऽइव । शनकैःऽइव । इन्द्राय । इन्दो इति । परि । स्रव ॥ ३ ॥

**वेङ्कट०** आ चिकित्सामः त्वाम् अवश्यम्[2] इन्द्र! मम गृहम् आगतम् आजानीमः । न च त्वां वयम् अधिगच्छामः त्वमेव इहाऽऽगत इति । इन्द्रं मत्वा सोमम् आह — शनैरिव [3]शनकैरिवेति । स त्वम् इन्दो! अस्मै इन्द्राय आगताय[3] शनैः इव शनकैः इव च परि स्रव । अभिपूयमाणः सोमो यज्ञेपु प्रथमं शनैः परिस्रवति, ततः शनकैरिति । शाट्यायनकम् — 'अनाद्रियमाणैवैतम्[4] अब्रवीत् — 'आ चन त्वा [5]चिकित्सामोऽधि चन[5] त्वा नेमसि' इति । पुरा मा सर्वय-र्चापाला[6] स्तौतीत्यपपर्यावर्तत । 'शनैरिव शनकैरिवेन्द्रायेन्दो परि स्रव' इति ह वा अस्यै मुखात् सोमं निरधयत् । सोमपीथ इव ह वा अस्य [7]स भवति[7] य एवं विद्वान् स्त्रियै मुखम् उपाजिघ्रति" ( तु. जैमि १,२२० ) इति ॥ ३ ॥

कुविच्छकत् कुवित् करत् कुविन्नो वस्यसस्करत् ।
कुवित् पतिद्विषो यतीरिन्द्रेण संगमामहै ॥ ४ ॥

कुवित् । शकत् । कुवित् । करत् । कुवित् । नः । वस्यसः । करत् ।
कुवित् । पतिऽद्विषः । यतीः । इन्द्रेण । सम्ऽगमामहै ॥ ४ ॥

**वेङ्कट०** बहु [8]अस्मान् शक्तान्[8] करोतु । बहु च अस्माकं करोतु । [9]बहु चास्मान् करोतु[9] वस्यसः[10] । अत्यन्तम् त्वग्दोषात्[11] पतिभिः [12]द्विष्टाः पतिभ्यः[12] इतो गच्छन्त्यो वयं कैश्चित् अनूह्यमानाः सम्प्रति इन्द्रेण सङ्गमामहै ॥ ४ ॥

---

१. °च्छति मूको. २. अश्वम् मूको. ३-३. नास्ति वि[1]. ४. °तत्तत् मूको. ५-५. °मोऽन मूको. ६. सेवयश्चापारवा मूको. ७-७. सह पति मूको. ८-८. °स्मात्ताम् मूको. ९-९. नास्ति मूको. १०. नास्ति मूको. ११. त्वदो° वि[1]; त्वदो° अ[1]. १२-१२. नास्ति अ[1].

इमानि त्रीणि विष्टपा तानीन्द्र वि रोहय । शिरस्ततस्योर्वरामादिदं म उपोदरे ॥ ५ ॥

इमानि । त्रीणि । विष्टपा । तानि । इन्द्र । वि । रोहय ।

शिरः । ततस्य । उर्वराम् । आत् । इदम् । मे । उप । उदरे ॥ ५ ॥

**वेङ्कट०** इमानि त्रीणि स्थानानि तानि त्वम् इन्द्र! वि रोहय। शिरः ततस्य मम पितुः। तथा उर्वराम् पितुः क्षेत्रम्। ततः यत् इदम् [1]मे उप उदरे इति[1] गुह्यं निर्दिशति। तद्धि त्वग्दोषे[2] सति असञ्जातरोमकं भवतीति। शाट्यायनकम्—'तामब्रवीत्—अपाले किंकामासीति। साऽब्रवीत्—'इमानि त्रीणि विष्टपा०' इति। खलतिर्हाऽस्यै[3] पितास। तं हाऽखलतिं चकार। उर्वरा हाऽस्य न जज्ञे। सो ह जज्ञे[4]। उपस्थे हाऽस्यै रोमाणि नासुः। तान्यु ह जज्ञिरे'[5] (तु. जैमि १,२२१) इति। अस्योत्तरा भूयसे निर्वचनाय—'असौ च या नः' इति ॥ ५ ॥

असौ च या न उर्वरादिमां तन्वं मम ।
अथो ततस्य यच्छिरः सर्वा ता रोमशा कृधि ॥ ६ ॥

असौ । च । या । नः । उर्वरा । आत् । इमाम् । तन्वम् । मम ।

अथो इति । ततस्य । यत् । शिरः । सर्वा । ता । रोमशा । कृधि ॥ ६ ॥

**वेङ्कट०** निगदव्याख्याता ॥ ६ ॥

खे रथस्य खेऽनसः खे युगस्य शतक्रतो । अपालामिन्द्र त्रिष्पूत्व्यकृणोः सूर्यत्वचम् ।७।

खे । रथस्य । खे । अनसः । खे । युगस्य । शतक्रतो इति शतऽक्रतो ।

अपालाम् । इन्द्र । त्रिः । पूत्वी । अकृणोः । सूर्यऽत्वचम् ॥ ७ ॥

**वेङ्कट०** शाट्यायनकम्—''तां[6] खे रथस्यात्यबृहत्। सा गोधाऽभवत्[7]। तां खेऽनसोऽत्यबृहत्। सा कृकलास्यभवत्। तां खे युगस्याऽत्यबृहत्। सा संश्लिष्टिकाऽभवत्[8]। तद् एषाऽभ्यनूच्यते[9]—'खे रथस्य खेऽनसः०' इति। तस्यै ह यत्[10] कल्याणतमं रूपाणां तद्रूपमास' (तु. जैमि १,२२१) इति। त्वग्दोषापनयनाय[11] अक्षादिद्वारेष्वतिकर्षणमिति ॥ ७ ॥

[12]इति षष्ठाष्टके षष्ठाध्याये चतुर्दशो वर्गः[12] ॥

## [ ९२ ]

[12]श्रुतकक्षः सुकक्षो वा आङ्गिरस ऋषिः। इन्द्रो देवता। गायत्री छन्दः, प्रथमानुष्टुप्[12]।

पान्तमा वो अन्धस इन्द्रमभि प्र गायत। विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥१॥

---

१-१. मूत्रोवो इति अ[1]; मूत्रोदर इति वि[1]. २. त्वं दो° मूको. ३. वल° मूको. ४. न ज° मूको. ५. जज्ञस मूको. ६. नास्ति मूको. ७. °भव मूको. ८. संशिष्टिका° मूको. ९. °ह्यनू° मूको. १०. तत् मूको. ११. त्वाव° मूको. १२-१२. नास्ति मूको.

पान्तम् । आ । वः । अन्धसः । इन्द्रम् । अभि । प्र । गायत ।
विश्वऽसहम् । शतऽक्रतुम् । मंहिष्ठम् । चर्षणीनाम् ॥ १ ॥

वेङ्कट० श्रुतकक्षः सुकक्षो[1] वा आङ्गिरसः । पिबन्तम् आभिमुख्येन सोमं यूयम् इन्द्रम् अभि प्र गायत सर्वसहम् बहुप्रज्ञम् दातृतमम् मनुष्याणाम् ॥ १ ॥

पुरुहूतं पुरुष्टुतं गाथान्यं१ सनश्रुतम् । इन्द्र इति ब्रवीतन ॥ २ ॥

पुरुऽहूतम् । पुरुऽस्तुतम् । गाथान्यम् । सनऽश्रुतम् । इन्द्रः । इति । ब्रवीतन ॥ २ ॥

वेङ्कट० बहुभिर्हूतम् बहुभिः स्तुतम् गातव्यम् सनातनश्रुतम् एनम् इन्द्रः इति यूयम् ब्रवीतन ॥ २ ॥

इन्द्र इन्नो महानां दाता वाजानां नृतुः । महाँ अभिज्ञ्वा यमत् ॥ ३ ॥

इन्द्रः । इत् । नः । महानाम् । दाता । वाजानाम् । नृतुः । महान् । अभिऽज्ञु । आ । यमत् ॥ ३ ॥

वेङ्कट० इन्द्रः एव अस्माकं महताम् दाता [2]अन्नानाम् नेता[2] । सः महान् अस्मान् अभिजानुकम् आ यच्छतु हस्तयोः परिगृह्य नयतु आत्मसमीपम् इति ॥ ३ ॥

अपादु शिप्र्यन्धसः सुदक्षस्य प्रहोषिणः । इन्दोरिन्द्रो यवाशिरः ॥ ४ ॥

अपात् । ऊँ इति । शिप्री । अन्धसः । सुऽदक्षस्य । प्रऽहोषिणः । इन्दोः । इन्द्रः । यवऽआशिरः ॥ ४ ॥

वेङ्कट० अपिबत् शिप्री सोमम् सुदक्षस्य प्रकर्षेण जुह्वतः । तदेवाऽऽह — इन्दोः इन्द्रः यवाशिरः अपिबदिति ॥ ४ ॥

तम्वभि प्रार्चतेन्द्रं सोमस्य पीतये । तदिद्ध्यस्य वर्धनम् ॥ ५ ॥

तम् । ऊँ इति । अभि । प्र । अर्चत । इन्द्रम् । सोमस्य । पीतये । तत् । इत् । हि । अस्य । वर्धनम् ॥ ५ ॥

वेङ्कट० [3]प्र मंहत तम् एव इन्द्रम्[3] अभिषुतसोमस्य पानाय । तत् एव हि अस्य वर्धनम् सोमपानम् इति ॥ ५ ॥

[4]इति षष्ठाष्टके षष्ठाध्याये पञ्चदशो वर्गः[4] ॥

अस्य पीत्वा मदानां देवो देवस्यौजसा । विश्वाभि भुवना भुवत् ॥ ६ ॥

अस्य । पीत्वा । मदानाम् । देवः । देवस्य । ओजसा । विश्वा । अभि । भुवना । भुवत् ॥ ६ ॥

वेङ्कट० अस्य सोमस्य मदकराणि पीत्वा देवः इन्द्रः देवनशीलस्य सोमस्य बलेन विश्वानि भुवनानि अभि भवति[5] इति ॥ ६ ॥

---

१. सूदक्षो° वि[2]; सुदक्षो अ[1]. २-२. ना ··· नेता वि[1]; ··· न्नेन अ[1]. ३-३. मंहितमेवेन्द्र आयम् मूको. ४-४. नास्ति मूको. ५. °वसि मूको.

त्यमु॑ वः सत्रासाहं॒ विश्वा॑सु गी॒र्ष्वाय॑तम् । आ च्या॑वयस्यू॒तये॑ ॥ ७ ॥

त्यम् । ऊँ इति॑ । वः॒ । स॒त्राऽसह॑म् । विश्वा॑सु । गी॒र्षु । आऽय॑तम् । आ । च्य॒व॒य॒सि॒ । ऊ॒तये॑ ॥७॥

वेङ्कट० तम् एव युष्माकम् बहुसहनम् सर्वेषु स्तोत्रेषु विततम् आ गमय रक्षणाय ॥ ७ ॥

यु॒ध्मं सन्तं॑मन॒र्वाणं॑ सोम॒पामन॑पच्युतम् । नर॑मवा॒र्यक्र॑तुम् ॥ ८ ॥

यु॒ध्मम् । सन्त॑म् । अ॒न॒र्वाण॑म् । सो॒म॒ऽपाम् । अन॑पऽच्युतम् । नर॑म् । अ॒वा॒र्यऽक्र॑तुम् ॥ ८ ॥

वेङ्कट० योद्धारम् सन्तम् अप्रत्यृतम् अन्यैः सोमस्य पातारम् अनपच्युतम्[१] सङ्ग्रामे नरम् अवार्यकर्माणम्[२] ॥ ८ ॥

शिक्षा॑ ण इन्द्र रा॒य आ पु॒रु वि॒द्वाँ ऋ॑चीषम । अवा॑ नः॒ पार्ये॒ धने॑ ॥ ९ ॥

शिक्ष॑ । नः॒ । इन्द्र॒ । रा॒यः । आ । पु॒रु । वि॒द्वान् । ऋ॒ची॒ष॒म॒ । अव॑ । नः॒ । पार्ये॑ । धने॑ ॥ ९ ॥

वेङ्कट० प्रयच्छ अस्मभ्यम् इन्द्र! धनानि[३] आहृत्य [४]बहु सर्वज्ञः त्वम् हे स्तुतया सम!। रक्ष[४] अस्मान् पारभवे[५] शत्रुषु स्थिते धने आजिहीर्षिते[६] ॥ ९ ॥

अत॑श्चिदिन्द्र ण॒ उपा या॑हि श॒तवा॑जया । इ॒षा स॒हस्र॑वाजया ॥ १० ॥

अत॑ः । चि॒त् । इन्द्र॒ । नः॒ । उप॑ । आ । या॒हि॒ । श॒तऽवा॑जया । इ॒षा । स॒हस्र॑ऽवाजया ॥ १० ॥

वेङ्कट० अस्मात् अन्तरिक्षात् त्वम् इन्द्र! [७]शत्रुस्थानाद् वा अस्मान्[७] उप आ गच्छ अन्नेन बहुबलेन अपि च बहुभिः क्षमान्नैः(?) युक्तेन इति ॥ १० ॥

[८]इति षष्ठाष्टके षष्ठाध्याये षोडशो वर्गः[८] ॥

अया॑म॒ धीव॑तो॒ धियोऽर्व॑द्भिः शक्र गोदरे । जये॑म पृ॒त्सु व॑ज्रिवः ॥ ११ ॥

अया॑म । धीऽव॑तः । धिय॑ः । अर्व॑त्ऽभिः । श॒क्र॒ । गो॒ऽद॒रे॒ । जये॑म । पृ॒त्ऽसु । व॒ज्रि॒ऽवः॒ ॥ ११ ॥

वेङ्कट० युद्धार्थं गच्छामः वयं [९]कर्मवन्तः कर्माणि अश्वैः[९] शक्र! गवां दारयितः!। तत्र शत्रुम् जयेम वज्रिन्! सङ्ग्रामेषु ॥ ११ ॥

व॒यमु॑ त्वा शतक्रतो॒ गावो॒ न यव॑से॒ष्वा । उ॒क्थेषु॑ रणयामसि ॥ १२ ॥

व॒यम् । ऊँ इति॑ । त्वा॒ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । गाव॑ः । न । यव॑सेषु । आ । उ॒क्थेषु॑ । र॒ण॒या॒म॒सि॒ ॥ १२ ॥

वेङ्कट० वयम् उ त्वा शतक्रतो! पशून् इव यवसेषु[१०] उक्थेषु रमयामः[११] ॥ १२ ॥

---

१. अनच्यु° मूको. २. वार्य° मूको. ३. °नात् मूको. ४-४. °हु ··· रक्ष मूको. ५. पारहवे मूको. ६. °षते मूको. ७-७. °स्थानौ म° वि[२]; °स्थानावास्मा अ[२]. ८-८. नास्ति मूको. ९-९. कर्म ··· श्वैः मूको. १०. चमसे° वि[२]. ११. °म मूको.

विश्वा हि मर्त्यत्वनानुकामा शतक्रतो । अगन्म वज्रिन्नाशसः ॥ १३ ॥

विश्वा । हि । मर्त्यऽत्वना । अनुऽकामा । शतक्रतो इति शतऽक्रतो । अगन्म । वज्रिन् । आऽशसः ॥ १३ ॥

वेङ्कट० विश्वानि एव मर्त्यत्वानि कामानुगतानि शतक्रतो ! । मनुष्याः[1] चेत् तानितानि इच्छन्ति इत्यर्थः । तथा सति प्राप्नुयामः वज्रिन् ! वयम् आशंसनानि ॥ १३ ॥

त्वे सु पुत्र शवसोऽवृत्रन् कामकातयः । न त्वामिन्द्राति रिच्यते ॥ १४ ॥

त्वे इति । सु । पुत्र । शवसः । अवृत्रन् । कामऽकातयः । न । त्वाम् । इन्द्र । अति । रिच्यते ॥ १४ ॥

वेङ्कट० त्वयि सुष्ठु वर्तन्ते हे शवसः पुत्र ! कामकातयः[2] जनाः कामपराः शब्दा येषां भवन्ति ते । न त्वाम् इन्द्र ! कश्चित् अति रिच्यते देवम्[3] ॥ १४ ॥

स नो वृषन्त्सनिष्ठया सं घोरया द्रवित्न्वा । धियाविड्ढि पुरंध्या ॥ १५ ॥

सः । नः । वृषन् । सनिष्ठया । सम् । घोरया । द्रवित्न्वा । धिया । अविड्ढि । पुरम्ऽध्या ॥ १५ ॥

वेङ्कट० सः अस्मान् वर्षितः ! दातृतमया घोरया सपत्नानां द्रावयित्र्या[4] बहूनां धारयित्र्या धिया[5] कर्मणा सम् अभिपालय[6] ॥ १५ ॥

[7]इति षष्ठाष्टके षष्ठाध्याये सप्तदशो वर्गः[7] ॥

यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः । तेन नूनं मदे मदेः ॥ १६ ॥

यः । ते । नूनम् । शतक्रतो इति शतऽक्रतो । इन्द्र । द्युम्निऽतमः ।
मदः । तेन । नूनम् । मदे । मदेरिति मदेः ॥ १६ ॥

वेङ्कट० यः ते नूनम् शतमते ![8] इन्द्र ! यशस्वितमः सोमः, तेन इदानीम् 'मदे तव' सञ्जाते मादय[10] अस्मान् अपि ॥ १६ ॥

यस्ते चित्रश्रवस्तमो य इन्द्र वृत्रहन्तमः । य ओजोदातमो मदः ॥ १७ ॥

यः । ते । चित्रश्रवःऽतमः । यः । इन्द्र । वृत्रहन्ऽतमः । यः । ओजःऽदातमः । मदः ॥ १७ ॥

वेङ्कट० यः तव अतिशयेन चित्रयशाः अतिशयेन शत्रूणां च हन्ता, यः च अतिशयेन बलदायी मदः, तेन मादयेति ॥ १७ ॥

विद्मा हि यस्ते अद्रिवस्त्वादत्तः सत्य सोमपाः । विश्वासु दस्म कृष्टिषु ॥ १८ ॥

---

१. °नुष्यः वि[1]. २. °तमः मूको. ३. °वं तेदेवम् मूको. ४ दारयि° मूको. ५. ध्या वि[2]; नास्ति अ[1]. ६. अविपा° वि[2]; अविपा° अ[1]. ७-७. नास्ति मूको. ८. शतमपि मूको. ९-९. मदेतव मूको. १०. नास्ति मूको.

वि॒द्म । हि । यः । ते॒ । अ॒द्रि॒ऽवः॒ । त्वाऽद॑त्तः । स॒त्य॒ । सो॒म॒ऽपाः॒ । विश्वा॑सु । द॒स्म॒ । कृ॒ष्टिषु॑ ॥१८॥

वेङ्कट० जानीमः हि यः ते रयिः[1] वज्रिन्!। एतदेवाऽऽह—त्वया दत्तः यः सत्य! सोमस्य पातः! विश्वेषु च यजमानेषु दस्म! इति ॥ १८ ॥

इन्द्रा॑य म॒द्वने॑ सु॒तं परि॑ ष्टोभन्तु नो॒ गिरः॑ । अ॒र्कम॑र्चन्तु का॒रवः॑ ॥ १९ ॥

इन्द्रा॑य । म॒द्वने॑ । सु॒तम् । परि॑ । स्तो॒भ॒न्तु॒ । नः॒ । गिरः॑ । अ॒र्कम् । अ॒र्च॒न्तु॒ । का॒रवः॑ ॥ १९ ॥

वेङ्कट० इन्द्राय मदनशीलाय अभिषुतं सोमम् अस्माकं वाचः स्तुवन्तु[2] । अर्चनीयं सोमम्[3] अर्चयन्तु स्तोतारः चेति ॥ १९ ॥

यस्मि॒न् विश्वा॒ अधि॒ श्रियो॒ रण॑न्ति स॒प्त सं॒सदः॑ । इन्द्रं॑ सु॒ते ह॑वामहे ॥२०॥

यस्मि॑न् । विश्वाः॑ । अधि॑ । श्रियः॑ । रण॑न्ति । स॒प्त । स॒म्ऽसदः॑ । इन्द्र॑म् । सु॒ते । ह॒वा॒म॒हे॒ ॥२०॥

वेङ्कट० यस्मिन् अधि विश्वाः श्रियः भवन्ति, रमन्ते च सप्त संसदः होत्राः, तम् इन्द्रम् सुते हवामहे ॥ २० ॥

[4]इति षष्ठाष्टके षष्ठाध्याये अष्टादशो वर्गः[4] ॥

त्रिक॑द्रुकेषु॒ चेत॑नं दे॒वासो॑ य॒ज्ञम॑त्नत । तमिद्व॑र्धन्तु नो॒ गिरः॑ ॥ २१ ॥

त्रिऽक॑द्रुकेषु । चेत॑नम् । दे॒वासः॑ । य॒ज्ञम् । अ॒त्न॒त॒ । तम् । इत् । व॒र्ध॒न्तु॒ । नः॒ । गिरः॑ ॥ २१ ॥

वेङ्कट० व्याख्याता ( ऋ ८,१३,१८ द्र. ) ॥ २१ ॥

आ त्वा॑ विश॒न्त्विन्द॑वः समु॒द्रमि॑व॒ सिन्ध॑वः । न त्वामि॑न्द्राति॑ रिच्यते ॥ २२ ॥

आ । त्वा॒ । वि॒श॒न्तु॒ । इन्द॑वः । स॒मु॒द्रम्ऽइ॑व । सिन्ध॑वः । न । त्वाम् । इ॒न्द्र॒ । अति॑ । रि॒च्य॒ते॒ ॥

वेङ्कट० आ विशन्तु त्वाम् इन्दवः समुद्रम् इव नद्यः। न त्वाम् कश्चित् इन्द्र! बलेन अतिरिच्यते ॥ २२ ॥

वि॒व्यक्थ॑ महि॒ना वृ॑षन् भ॒क्षं सोम॑स्य जागृवे । य इ॑न्द्र ज॒ठरे॑षु ते ॥ २३ ॥

वि॒व्यक्थ॑ । म॒हि॒ना । वृ॒ष॒न् । भ॒क्षम् । सोम॑स्य । जा॒गृ॒वे॒ । यः । इ॒न्द्र॒ । ज॒ठरे॑षु । ते॒ ॥ २३ ॥

वेङ्कट० व्याप्तवानसि महत्त्वेन वृषन्! सोमस्य भक्षम् जागरणशील!, यः सोमः तव उदरेषु प्रविशति[5] इन्द्र! ॥ २३ ॥

अरं॑ त इन्द्र कु॒क्षये॒ सोमो॑ भवतु वृत्रहन् । अरं॒ धाम॑भ्य॒ इन्द॑वः ॥ २४ ॥

१. रयिं मूको. २. °वतु मूको. ३. स्तोम° मूको. ४-४. नास्ति मूको. ५. °शन्ति मूको.

अरम् । ते । इन्द्र । कुक्षये । सोमः । भवतु । वृत्रऽहन् । अरम् । धामऽभ्यः । इन्दवः ॥ २४ ॥

**वेङ्कट०** पर्याप्तम् ते इन्द्र! जठराय सोमः भवतु वृत्रहन्! । अरम् शरीरेभ्यः नानाविधेभ्यः सोमाः भवन्तु ॥ २४ ॥

**अरमश्वाय गायति श्रुतकक्षो अरं गवे । अरमिन्द्रस्य धाम्ने ॥ २५ ॥**

अरम् । अश्वाय । गायति । श्रुतऽकक्षः । अरम् । गवे । अरम् । इन्द्रस्य । धाम्ने ॥ २५ ॥

**वेङ्कट०** गवाश्वसिद्ध्यर्थम् अयम् श्रुतकक्षः स्तौति पर्याप्तम्, तथा गृहार्थं च । यद् इन्द्रः प्रयच्छति अश्वादिकम् इति ॥ २५ ॥

**अरं हि ष्मा सुतेषु णः सोमेष्विन्द्र भूषसि । अरं ते शक्र दावने ॥ २६ ॥**

अरम् । हि । स्म । सुतेषु । नः । सोमेषु । इन्द्र । भूषसि । अरम् । ते । शक्र । दावने ॥ २६ ॥

**वेङ्कट०** पर्याप्तम् यस्मात् सुतेषु सोमेषु त्वं भवसि, पर्याप्तम् प्रयच्छसि धनम् । तथा सति अरम् ते शक्र! दात्रे भवन्तु सोमाः ॥ २६ ॥

[1]इति षष्ठाष्टके षष्ठाध्याये एकोनविंशो वर्गः[1] ॥

**पराकात्ताच्चिदद्रिवस्त्वां नक्षन्त नो गिरः । अरं गमाम ते वयम् ॥ २७ ॥**

पराकात्तात् । चित् । अद्रिऽवः । त्वाम् । नक्षन्त । नः । गिरः । अरम् । गमाम । ते । वयम् ॥

**वेङ्कट०** दूरात् अपि वज्रिन्! त्वाम् व्याप्नुवन्तु अस्माकम् इतो निर्गताः स्तुतयः । पर्याप्तम् गमाम त्वत्तः वयम् धनम् ॥ २७ ॥

**एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते राध्यं मनः ॥ २८ ॥**

एव । हि । असि । वीरऽयुः । एव । शूरः । उत । स्थिरः । एव । ते । राध्यम् । मनः ॥ २८ ॥

**वेङ्कट०** एवं भवसि वीरकामः त्वं युद्धे, तथा एवम् एव च शूरः, अपि च स्थिरः । एवम् एव तव आराधनीयम् मनः स्तुत्यम्[2] ॥ २८ ॥

**एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः । अधा चिदिन्द्र मे सचा ॥ २९ ॥**

एव । रातिः । तुविऽमघ । विश्वेभिः । धायि । धातृऽभिः । अध । चित् । इन्द्र । मे । सचा ॥२९॥

**वेङ्कट०** एवम् रातिः बहुधन! विश्वैः धार्यते यजमानैः । अथ च त्वम् एवंविधो मम अपि सहायः इति ॥ २९ ॥

**मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते । मत्स्वा सुतस्य गोमतः ॥ ३० ॥**

---

१-१. नास्ति मूको. २. स्तुति मूको.

मो इति । सु । ब्रह्माऽइव । तन्द्रयुः । भुवः । वाजानाम् । पते । मत्स्व । सुतस्य । गोऽमतः ॥३०॥

**वेङ्कट०** मा भव[1] हे अन्नानाम् पते! त्वं ब्राह्मणः इव तन्द्रयुः । ब्राह्मणो[2] हि निवृत्तकर्मा तन्द्रायुक्तः भवति । मत्स्व सुतेन गोमिश्रेण ॥ ३० ॥

**मा न इन्द्राभ्या३दिशः सूरो अक्तुष्वा यमन् । त्वा युजा वनेम तत् ॥ ३१ ॥**

मा । नः । इन्द्र । अभि । आऽदिशः । सूरः । अक्तुषु । आ । यमन् । त्वा । युजा । वनेम । तत् ॥

**वेङ्कट०** मा अस्मान् इन्द्र! अभि आ गच्छन्तु रात्रिषु आदेष्टारः सूरः सरणशीलाः राक्षसाः । त्वया सहायेन तत् वयं रक्षः हन्यामेति ॥ ३१ ॥

**त्वयेदिन्द्र युजा वयं प्रति ब्रुवीमहि स्पृधः । त्वमस्माकं तव स्मसि ॥ ३२ ॥**

त्वया । इत् । इन्द्र । युजा । वयम् । प्रति । ब्रुवीमहि । स्पृधः । त्वम् । अस्माकम् । तव । स्मसि ॥३२॥

**वेङ्कट०** त्वया एव इन्द्र! सहायेन वयम्[3] प्रति ब्रुवीमहि[4] स्पर्धमानान् । त्वम् अस्माकम् भवसि, वयं च [5]तव स्म.[5] ॥ ३२ ॥

**त्वामिद्धि त्वायवोऽनुनोनुवतश्चरान् । सखाय इन्द्र कारवः ॥ ३३ ॥**

त्वाम् । इत् । हि । त्वाऽयवः । अनुऽनोनुवतः । चरान् । सखायः । इन्द्र । कारवः ॥ ३३ ॥

**वेङ्कट०** त्वाम् एव हि त्वत्कामाः अनुक्रमेण स्तुवन्तः चरन्तु सखायः इन्द्र! स्तोतारः, निवृत्तोपद्रवा इति ॥ ३३ ॥

[6]इति षष्ठाष्टके षष्ठाध्याये विंशो वर्गः[6] ॥

## [ ९३ ]

[6]सुकक्ष आङ्गिरस ऋषिः । इन्द्रो देवता, चतुस्त्रिंश्या इन्द्र ऋभवश्च । गायत्री छन्दः[6] ।

**उद् घेदभि श्रुतामघं वृषभं नर्यापसम् । अस्तारमेषि सूर्य ॥ १ ॥**

उत् । घ । इत् । अभि । श्रुतऽमघम् । वृषभम् । नर्यऽअपसम् । अस्तारम् । एषि । सूर्य ॥ १ ॥

**वेङ्कट०** उत् एषि विख्यातधनम् वर्षितारम् नृहितकर्माणम्[7] अनुग्रहीतुम्[8] सूर्य!, उदारोऽस्ता प्रदाता, तम्[9] इति ॥ १ ॥

**नव यो नवतिं पुरो बिभेद बाह्वोजसा । अहिं च वृत्रहावधीत् ॥ २ ॥**

नव । यः । नवतिम् । पुरः । बिभेद । बाहुऽओजसा । अहिम् । च । वृत्रऽहा । अवधीत् ॥ २ ॥

---

१. भुवः अ[1]. २. ब्रह्म° मूको. ३. च यम् मूको. ४. मवी° मूको. ५. त्वमव स्म मूको. ६-६. नास्ति मूको. ७. निहि° मूको. ८. जनुक्रम हि मूको. ९. नास्ति मूको.

वेङ्कट० नव नवतिम् च यः पुरः बिभेद बाहुबलेन, अहिम् च अवधीत् सः वृत्रहा इति ॥ २ ॥

स नु इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् । उरुधारेव दोहते ॥ ३ ॥

सः । नः । इन्द्रः । शिवः । सखा । अश्वऽवत् । गोऽमत् । यवऽमत् । उरुधाराऽइव । दोहते ॥ ३ ॥

वेङ्कट० सः नः इन्द्रः कल्याणः सखा अश्वादियुक्तं धनम् उरुधारा गौः इव पयः दोहते[1] ॥ ३ ॥

यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । सर्वं तदिन्द्र ते वशे ॥ ४ ॥

यत् । अद्य । कत् । च । वृत्रऽहन् । उत्ऽअगाः । अभि । सूर्य । सर्वम् । तत् । इन्द्र । ते । वशे ॥४॥

वेङ्कट० यत् किञ्च अद्य वृत्रहन्! सूर्य! अभि उदगाः सर्वम् तत् इन्द्र! तव वशे भवति[2] स्थावरं जङ्गमं च ॥ ४ ॥

यद्वा प्रवृद्ध सत्पते न मरा इति मन्यसे । उतो तत् सत्यमित् तव ॥ ५ ॥

यत् । वा । प्रऽवृद्ध । सत्ऽपते । न । मरै । इति । मन्यसे । उतो इति । तत् । सत्यम् । इत् । तव ॥

वेङ्कट० यत् वा त्वम् प्रवृद्ध! सतां पते! न अहम् मरै इति मन्यसे । अपि च तत् तव सत्यम् एव ॥ ५ ॥

[3]इति षष्ठाष्टके षष्ठाध्याये एकविंशो वर्गः[3] ॥

ये सोमासः परावति ये अर्वावति सुन्विरे । सर्वांस्ताँ इन्द्र गच्छसि ॥ ६ ॥

ये । सोमासः । पराऽवति । ये । अर्वाऽवति । सुन्विरे । सर्वान् । तान् । इन्द्र । गच्छसि ॥ ६ ॥

वेङ्कट० ये सोमाः दूरे, ये वा अन्तिके अभिषुताः, सर्वान्[4] तान् इन्द्र! गच्छसि[5] ॥ ६ ॥

तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे । स वृषा वृषभो भुवत् ॥ ७ ॥

तम् । इन्द्रम् । वाजयामसि । महे । वृत्राय । हन्तवे । सः । वृषा । वृषभः । भुवत् ॥ ७ ॥

वेङ्कट० तम् इन्द्रम् बलिनं कुर्मः महत् वृत्रं हन्तुम् । सः वृषा वृषभः भवतु ॥ ७ ॥

इन्द्रः स दामने कृत ओजिष्ठः स मदे हितः । द्युम्नी श्लोकी स सोम्यः ॥८॥

इन्द्रः । सः । दामने । कृतः । ओजिष्ठः । सः । मदे । हितः । द्युम्नी । श्लोकी । सः । सोम्यः ॥८॥

वेङ्कट० इन्द्रः सः दानाय सृष्टः बलवत्तमः । सः सोमे च निहितः । अन्नवान् स्तुतिमान् सः सोमं च अर्हति ॥ ८ ॥

---

१. दोहमें वि'; दोहं मे अ'. २. °न्ति मूको. ३. नास्ति मूको. ४. °र्वाः मूको. ५. °न्ति मूको.

गि॒रा वज्रो॒ न संभृ॑तः॒ सब॑लो॒ अन॑पच्युतः । व॒व॒क्ष ऋ॒ष्वो अस्तृ॑तः ॥ ९ ॥

गि॒रा । वज्रः॑ । न । सम्ऽभृ॑तः । सऽब॑लः । अन॑पऽच्युतः । व॒व॒क्षे । ऋ॒ष्वः । अस्तृ॑तः ॥ ९ ॥

**वेङ्कट०** स्तुत्या स्तोतृभिः[1] आयुधम् इव कर्मभिः सम्भृतः[2] उत्पादितः बलसहितः अनपच्युतः[3] वहति महान्[4] ( तु. निघ ३,३ ) युद्धे अहिंसितः ॥ ९ ॥

दु॒र्गे चि॑न्नः सु॒गं कृ॑धि गृणा॒न इ॑न्द्र गिर्वणः । त्वं च॑ मघवन् वशः॑ ॥ १० ॥

दुः॒ऽगे । चि॒त् । नः॒ । सु॒ऽगम् । कृ॒धि । गृ॒णा॒नः । इन्द्र॑ । गिर्व॒णः॒ । त्वम् । च॒ । म॒घ॒ऽव॒न् । वशः॑ ॥ १० ॥

**वेङ्कट०** दुर्गे अपि अस्माकम्[5] सुगम् पन्थानम् कृधि स्तूयमानः इन्द्र ! गिर्वणः ! । त्वम् चेत् मघवन् ![6] अस्मान् कामयेथाः ॥ १० ॥

[7]इति षष्ठाष्टके षष्ठाध्याये द्वाविंशो वर्गः[7] ॥

यस्य॑ ते॒ नू चि॑दा॒दिशं॒ न मि॒नन्ति॑ स्व॒राज्य॑म् । न दे॒वो नाध्रि॑गु॒र्जनः॑ ॥ ११ ॥

यस्य॑ । ते॒ । नु । चि॒त् । आ॒ऽदिश॑म् । न । मि॒नन्ति॑ । स्व॒ऽराज्य॑म् । न । दे॒वः । न । अध्रि॑ऽगुः । जनः॑ ॥ ११ ॥

**वेङ्कट०** यस्य तव अद्य पुरा च आज्ञाम् न हिंसन्ति, स्वराज्यम् च । न दवः न अपि अधृतगमनः मनुष्यः । वीरः अधृतगमनो भवति ॥ ११ ॥

अधा॑ ते॒ अप्र॑तिष्कुतं दे॒वी शुष्मं॑ सपर्यतः । उ॒भे सु॑शिप्र॒ रोद॑सी ॥ १२ ॥

अध॑ । ते॒ । अप्र॑तिऽस्कुतम् । दे॒वी इति॑ । शुष्म॑म् । स॒प॒र्य॒तः॒ । उ॒भे इति॑ । सु॒ऽशि॒प्र॒ । रोद॑सी॒ इति॑ ॥ १२ ॥

**वेङ्कट०** अथ ते अप्रतिकृतं शत्रुभिः देव्यौ द्यावापृथिव्यौ उभे[8] पूजयतः[9] बलम् हे सुहनो ! ॥ १२ ॥

त्वमे॒तद॑धारयः कृ॒ष्णासु॒ रोहि॑णीषु च । परु॑ष्णीषु॒ रुश॒त् पयः॑ ॥ १३ ॥

त्वम् । ए॒तत् । अ॒धा॒र॒यः॒ । [10]कृ॒ष्णासु॑ । रोहि॑णीषु । च॒ । परु॑ष्णीषु । रुश॑त् । पयः॑[10] ॥ १३ ॥

**वेङ्कट०** त्वम् एतत् पयः धारयसि[11] कृष्णासु च रोहिणीषु च । 'परुष्णी पर्ववती' इति यास्कः ( ९,२६ )। पर्ववतीषु गोषु श्वेतम् इति ॥ १३ ॥

वि यदहे॒रध॑ त्वि॒षो विश्वे॑ दे॒वासो॒ अक्र॑मुः । वि॒दन्मृ॒गस्य॒ ताँ अमः॑ ॥ १४ ॥

वि । यत् । अहेः॑ । अध॑ । त्वि॒षः । विश्वे॑ । दे॒वासः॑ । अक्र॑मुः । वि॒दत् । मृ॒गस्य॑ । तान् । अमः॑ ॥ १४ ॥

**वेङ्कट०** वि अक्रमुः यदा अहेः ॥ १४ ॥

---

१. स्तोतॄन् मूको. २. सम्भ्रम् मूको. ३. °वच्यु° मूको. ४. महत् मूको. ५. °कम् इन्द्र मूको ६. नास्ति मूको. ७-७ नास्ति मूको. ८. उभौ मूको. ९. °यन्तः मूको. १०-१०. तु. ऋ १,६२,९; ८,३२,२५; १०,४९,१०. ११. °य मूको.

आदु मे निवरो भुवद्वृत्रहादिष्ट पौंस्यम् । अजातशत्रुरस्तृतः ॥ १५ ॥

आत् । ऊँ इति । मे । निऽवरः । भुवत् । वृत्रऽहा । अदिष्ट । पौंस्यम् । अजातऽशत्रुः । अस्तृतः ॥१५॥

वेङ्कट० ··· ··· ··· ··· ··· ॥ १५ ॥

[1]इति षष्ठाष्टके षष्ठाध्याये त्रयोविंशो वर्गः[1] ॥

श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् । आ शुषे राधसे महे ॥ १६ ॥

श्रुतम् । वः । वृत्रहन्ऽतमम् । प्र । शर्धम् । चर्षणीनाम् । आ । शुषे । राधसे । महे ॥ १६ ॥

वेङ्कट० विश्रुतम् युष्माकम् वृत्रहन्तमम् प्र आ शुषे[2] प्रयच्छामि बलभूतम् चर्षणीनाम् महते धनाय ॥१६॥

अया धिया च गव्यया पुरुणामन् पुरुष्टुत । यत् सोमेसोम आभवः ॥ १७ ॥

अया । धिया । च । गव्यऽया । पुरुऽनामन् । पुरुऽस्तुत । यत् । सोमेऽसोमे । आ । अभवः ॥१७॥

वेङ्कट० अनया बुद्धया गा इच्छन्तया वयम् युक्ता[3] भवेम हे बहुनामन्! [4]उत बहुस्तुत![4] । यदि सर्वेषु सोमेषु अस्माकम् आ भवसि ॥ १७ ॥

बोधिन्मना इदस्तु नो वृत्रहा भूर्यासुतिः । शृणोतु शक्र आशिषम् ॥ १८ ॥

बोधितऽमनाः । इत् । अस्तु । नः । वृत्रऽहा । भूरिऽआसुतिः । शृणोतु । शक्रः । आऽशिषम् ॥१८॥

वेङ्कट० यस्य मनः अभिमतं बुध्यते सः[5] बोधिन्मनाः । स एव अस्तु अस्माकम् वृत्रहा भूर्यासुतिः बहुप्रसवः । शृणोतु च शक्रः आशासनम् ॥ १८ ॥

कया त्वं न ऊत्याभि प्र मन्दसे वृषन् । कया स्तोतृभ्य आ भर ॥ १९ ॥

कया । त्वम् । नः । ऊत्या । अभि । प्र । मन्दसे । वृषन् । कया । स्तोतृऽभ्यः । आ । भर ॥१९॥

वेङ्कट० कया त्वम् केन अभिगमनेन अस्मान् अभि प्र मन्दसे वृषन्! । कया च स्तोतृभ्यः अस्मभ्यम् आ बिभर्षि धनम् ॥ १९ ॥

कस्य वृषा सुते सचा नियुत्वान् वृषभो रणत् । वृत्रहा सोमपीतये ॥ २० ॥

कस्य । वृषा । सुते । सचा । नियुत्वान् । वृषभः । रणत् । वृत्रऽहा । सोमऽपीतये ॥ २० ॥

वेङ्कट० कस्य वृषा सुते सहायभूतः नियुत्वान् वृषभः[6] रमते वृत्रहा सोमपानाय ॥ २० ॥

[1]इति षष्ठाष्टके षष्ठाध्याये चतुर्विंशो वर्गः[1] ॥

---

१-१. नास्ति मूको. २. < √ *शुष् 'स्तुतौ' (वैतु. वें. सा. √अश् 'व्याप्तौ' इति; PW. प्रभृ. √श्वस् इति)। शिष्टं वैप १,२२४१ l द्र. ३. अयु° मूको. ४-४. उद्वहु° वि[2]; ···स्तुत अ[1]. ५. वा वि[2]. ६. नास्ति वि[2].

अभी षु णस्त्वं रयिं मन्दसानः सहस्रिणम् । प्रयन्ता बोधि दाशुषे ॥ २१ ॥

अभि । सु । नः । त्वम् । रयिम् । मन्दसानः । सहस्रिणम् । प्रऽयन्ता । बोधि । दाशुषे ॥२१॥

वेङ्कट० अभि आहर सुष्ठु अस्मभ्यम् त्वम् रयिम् मोदमानः सहस्रसङ्ख्याकम् । प्रदाता भवामि इति बुध्यस्व यजमानाय इति ॥ २१ ॥

पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये । अपां जग्मिर्निचुम्पुणः ॥ २२ ॥

पत्नीऽवन्तः । सुताः । इमे । उशन्तः । यन्ति । वीतये । अपाम् । जग्मिः । निऽचुम्पुणः ॥२२॥

वेङ्कट० पत्नीवन्तः सुताः इमे अद्भिः सोमाः कामयमानाः यन्ति पानाय अपाम् गन्ता भवति निचुम्पुणः सोमः इति यास्कः ( तु. या ५,१८ ) ॥ २२ ॥

इष्टा होत्रा असृक्षतेन्द्रं वृधासो अध्वरे । अच्छावभृथमोजसा ॥ २३ ॥

इष्टाः । होत्राः । असृक्षत । इन्द्रम् । वृधासः । अध्वरे । अच्छ । अवऽभृथम् । ओजसा ॥ २३ ॥

वेङ्कट० यजन्तः सप्त होत्राः विसृजन्ति इन्द्रम् वर्धयन्तः यज्ञे बलेन अवभृथम् प्रति । यावदवभृथम् इन्द्रमेव होत्रका यजन्ति ॥ २३ ॥

इह त्या सधमाद्या हरी हिरण्यकेश्या । वोळ्हामभि प्रयो हितम् ॥ २४ ॥

इह । त्या । सधऽमाद्या । हरी इति । हिरण्यऽकेश्या । वोळ्हाम् । अभि । प्रयः । हितम् ॥२४॥

वेङ्कट० गता ( ऋ ८,३२,२९ द्र. ) ॥ २४ ॥

तुभ्यं सोमाः सुता इमे स्तीर्णं बर्हिर्विभावसो । स्तोतृभ्य इन्द्रमा वह ॥ २५ ॥

तुभ्यम् । सोमाः । सुताः । इमे । स्तीर्णम् । बर्हिः । विभावसो इति विभाऽवसो ।
स्तोतृऽभ्यः । इन्द्रम् । आ । वह ॥ २५ ॥

वेङ्कट० निगदसिद्धेति ॥ २५ ॥

[1]इति षष्ठाष्टके षष्ठाध्याये पञ्चविंशो वर्गः[1] ॥

आ ते दक्षं वि रोचना दधद्रत्ना वि दाशुषे । स्तोतृभ्य इन्द्रमर्चत ॥ २६ ॥

आ । ते । दक्षम् । वि । रोचना । दधत् । रत्ना । वि । दाशुषे । स्तोतृऽभ्यः । इन्द्रम् । अर्चत ॥२६॥

वेङ्कट० आभिमुख्येन वि दधातु बलम् तुभ्यं दीप्तम्, तथा रत्नानि च यजमानाय । तथा च स्तोतृभ्यः च तम् इन्द्रम् यूयम् अर्चत इति यजमानस्य स्तोतॄणां चानुशासनमिति ॥ २६ ॥

---

१-१. नास्ति मूको.

आ ते॑ दधामीन्द्रि॒यमु॒क्था विश्वा॑ शतक्रतो । स्तो॒तृभ्य॑ इन्द्र मृळय ॥ २७ ॥

आ । ते॒ । द॒धा॒मि॒ । इ॒न्द्रि॒यम् । उ॒क्था । विश्वा॑ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । स्तो॒तृऽभ्यः॑ । इ॒न्द्र॒ । मृ॒ळ॒य॒ ॥

वेङ्कट० आ दधामि ते इन्द्रियम्[1] बलकरं हविः उक्थानि च विश्वानि शतक्रतो!। स्तोतॄणाम् इन्द्र! सुखम् उत्पादय ॥ २७ ॥

भ॒द्रंभ॑द्रं न॒ आ भ॒रेष॒मूर्जं॑ शतक्रतो । यदि॑न्द्र मृ॒ळया॑सि नः ॥ २८ ॥

भ॒द्रम्ऽभ॑द्रम् । नः॒ । आ । भ॒र॒ । इष॑म् । ऊर्ज॑म् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । यत् । इ॒न्द्र॒ । मृ॒ळया॑सि । नः॒ ॥

वेङ्कट० भद्रम् धनम् अस्मभ्यम् आ हर इषम् च ऊर्जम् च शतक्रतो!, यत् इन्द्र! अस्मान् सुखयसि ॥ २८ ॥

स नो॒ विश्वा॒न्या भ॑र सुवि॒तानि॑ शतक्रतो । यदि॑न्द्र मृ॒ळया॑सि नः ॥ २९ ॥

सः । नः॒ । विश्वा॑नि । आ । भ॒र॒ । सु॒वि॒तानि॑ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । यत् । इ॒न्द्र॒ । मृ॒ळया॑सि । नः॒ ॥२९॥

वेङ्कट० सः अस्मभ्यम् विश्वानि आ भर सुवितानि अभ्युदयान्[2] ॥ २९ ॥

त्वामिद्वृ॑त्रहन्तम सु॒ताव॑न्तो हवामहे । यदि॑न्द्र मृ॒ळया॑सि नः ॥ ३० ॥

त्वाम् । इत् । वृ॒त्र॒ह॒न्ऽत॒म॒ । सु॒तऽव॑न्तः । ह॒वा॒म॒हे॒ । यत् । इ॒न्द्र॒ । मृ॒ळया॑सि । नः॒ ॥ ३० ॥

वेङ्कट० त्वाम् एव हे अतिशयेन वृत्राणां हन्तः! अभिषुतसोमाः हवामहे[3], यत्[4] इन्द्र! अस्मान् सुखयसि ॥ ३० ॥

[5]इति षष्ठाष्टके षष्ठाध्याये षड्विंशो वर्गः[5] ॥

उप॑ नो॒ हरि॑भिः सु॒तं या॒हि म॑दानां पते । उप॑ नो॒ हरि॑भिः सु॒तम् ॥ ३१ ॥

उप॑ । नः॒ । हरि॑ऽभिः । सु॒तम् । या॒हि॒ । म॒दा॒ना॒म् । प॒ते॒ । उप॑ । नः॒ । हरि॑ऽभिः । सु॒तम् ॥ ३१ ॥

वेङ्कट० [6]उप आ याहि[6] अस्माकं सोमम् हे सोमानाम् पते! अश्वैः। उप नः इति पूरणम् ॥३१॥

द्वि॒ता यो वृ॑त्र॒हन्त॑मो वि॒द इन्द्रः॑ श॒तक्र॑तुः । उप॑ नो॒ हरि॑भिः सु॒तम् ॥ ३२ ॥

द्वि॒ता । यः । वृ॒त्र॒ह॒न्ऽत॑मः । वि॒दे । इन्द्रः॑ । श॒तक्र॑तुः । उप॑ । नः॒ । हरि॑ऽभिः । सु॒तम् ॥ ३२ ॥

वेङ्कट० यः वृत्रहन्तमः द्विता[7] ज्ञायते इन्द्रः शतकर्मा उग्रः च। सोऽस्माकं सुखतमैः अश्वैः उप आयातु ॥३२॥

त्वं हि वृ॑त्रहन्नेषां पा॒ता सोमा॑ना॒मसि॑ । उप॑ नो॒ हरि॑भिः सु॒तम् ॥ ३३ ॥

त्वम् । हि । वृ॒त्र॒ऽह॒न् । ए॒षा॒म् । पा॒ता । सोमा॑नाम् । असि॑ । उप॑ । नः॒ । हरि॑ऽभिः । सु॒तम् ॥ ३३ ॥

---

१. नास्ति मूको. २. °यानि मूको. ३. भवेम हे मूको. ४. यदि अ[1]. ५-५. नास्ति मूको. ६-६. उपयाहि अ[1]. ७. अविता मूको.

वेङ्कट० यस्मात् त्वम् इमान् पिबसि सोमान्, अतः[1] उप आयाहि इति ॥ ३३ ॥

इन्द्रं इषे ददातु न ऋभुक्षणमृभुं रयिम् । वाजी ददातु वाजिनम् ॥ ३४ ॥

इन्द्रः । इषे । ददातु । नः । ऋभुक्षणम् । ऋभुम् । रयिम् । वाजी । ददातु । वाजिनम् ॥ ३४ ॥

वेङ्कट० इन्द्रः अन्नार्थम् अस्मभ्यं महान्तम् ऋभुम् देवं प्रयच्छतु दातारम्[2] । तथा बलवान् इन्द्रः बलवन्तम् अन्नवन्तं वा कनीयांसम् च प्रयच्छतु[3] इति ॥ ३४ ॥

[4]इति षष्ठाष्टके षष्ठाध्याये सप्तविंशो वर्गः[4] ॥

[ ९४ ]

[4]बिन्दुः पूतदक्षो वा आङ्गिरस ऋषिः । मरुतो देवता । गायत्री छन्दः[4] ।

गौर्धयति मरुतां श्रवस्युर्माता मघोनाम् । युक्ता वह्नी रथानाम् ॥ १ ॥

गौः । धयति । मरुताम् । श्रवस्युः । माता । मघोनाम् । युक्ता । वह्निः । रथानाम् ॥ १ ॥

वेङ्कट० बिन्दुः आङ्गिरसः । धनवताम् मरुताम् माता गौः सोमं पिबति अन्नकामा । युक्ता वोढ़ी[5] रथानाम् भवति[6] सेयम् इति । मारुतं सूक्तम् ॥ १ ॥

यस्या देवा उपस्थे व्रता विश्वे धारयन्ते । सूर्यामासा दृशे कम् ॥ २ ॥

यस्याः । देवाः । उपऽस्थे । व्रता । विश्वे । धारयन्ते । सूर्यामासा । दृशे । कम् ॥ २ ॥

वेङ्कट० यस्याः गोः उपस्थे विश्वे देवाः वर्तमानाः कर्माणि धारयन्ते । यस्या वा उपस्थे सूर्याचन्द्रमसौ वर्तमानौ दर्शनाय भवतः ॥ २ ॥

तत् सु नो विश्वे अर्य आ सदा गृणन्ति कारवः । मरुतः सोमपीतये ॥ ३ ॥

तत् । सु । नः । विश्वे । अर्यः । आ । सदा । गृणन्ति । कारवः । मरुतः । सोमऽपीतये ॥ ३ ॥

वेङ्कट० तत् सुष्ठु अस्माकम् सदा विश्वे अपि गन्तारः[7] आ गृणन्ति स्तोतारः । मरुतः सोमपानाय आह्वातव्या इति ॥ ३ ॥

अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विना ॥ ४ ॥

अस्ति । सोमः । अयम् । सुतः । पिबन्ति । अस्य । मरुतः । उत । स्वऽराजः । अश्विना ॥ ४ ॥

वेङ्कट० विद्यते अयम् सोमः अभिषुतः । पिबन्ति च एनं माध्यन्दिने सवने मरुतः स्वयं दीप्ताः । अश्विनौ च पिबतः[8] ॥ ४ ॥

---

१. अनन्तः मूको. २. °रः मूको. ३. °न्तु अ°. ४-४. नास्ति मूको. ५. पोभि मूको. ६. °न्ति मूको. ७. °रम् मूको. ८. °ति मूको.

पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषधस्थस्य जावतः ॥ ५ ॥

पिबन्ति । मित्रः । अर्यमा । तना । पूतस्य । वरुणः । त्रिऽसधस्थस्य । जाऽवतः ॥ ५ ॥

**वेङ्कट०** पिबन्ति मित्रावरुणौ अर्यमा च अमुं पवित्रेण पूतम् त्रिस्थानम्[1] । द्रोणकलश आधवनीयः पूतभृदिति तानि स्थानानि । जावतः जववतः । वेगवन्तम् इति ॥ ५ ॥

उतो न्वस्य जोषमाँ इन्द्रः सुतस्य गोमतः । प्रातर्होतेव मत्सति ॥ ६ ॥

उतो इति । नु । अस्य । जोषम् । आ । इन्द्रः । सुतस्य । गोऽमतः । प्रातः । होताऽइव । मत्सति ॥ ६ ॥

**वेङ्कट०** अपि च अस्य सेवाम् इन्द्रः अभिषुतस्य गोभिः मिश्रितस्य प्रातः सवने अभिष्टौति, यथा होता देवान् इति ॥ ६ ॥

[2]इति षष्ठाष्टके षष्ठाध्याये अष्टाविंशो वर्गः[2] ॥

कदत्विषन्त सूरयस्तिर आप इव स्रिधः । अर्षन्ति पूतदक्षसः ॥ ७ ॥

कत् । अत्विषन्त । सूरयः । तिरः । आपःऽइव । स्रिधः । अर्षन्ति । पूतऽदक्षसः ॥ ७ ॥

**वेङ्कट०** कदा दीप्यन्ते अन्तरिक्षे प्राज्ञाः मरुतः तिरश्चीनम् उदकानि इव । शोषकाः शत्रूणां मरुतः त इमे कदा गच्छन्ति शुद्धबलाः ॥ ७ ॥

कद्वो अद्य महानां देवानामवो वृणे । त्मना च दस्मवर्चसाम् ॥ ८ ॥

कत् । वः । अद्य । महानाम् । देवानाम् । अवः । वृणे । त्मना । च । दस्मऽवर्चसाम् ॥ ८ ॥

**वेङ्कट०** कदा वः अद्य महताम् देवानाम् रक्षणम् अहम् वृणे आत्मना च अलङ्करणैरपि विना दर्शनीयवर्चसाम्[3] ॥ ८ ॥

आ ये विश्वा पार्थिवानि पप्रथन् रोचना दिवः । मरुतः सोमपीतये ॥ ९ ॥

आ । ये । विश्वा । पार्थिवानि । पप्रथन् । रोचना । दिवः । मरुतः । सोमऽपीतये ॥ ९ ॥

**वेङ्कट०** आ पप्रथन् ये सर्वाणि पार्थिवानि दिवः च रोचनानि ज्योतींषि मरुतः । सोमपानाय आह्वयामि तान्[4] इति ॥ ९ ॥

त्यान् नु पूतदक्षसो दिवो वो मरुतो हुवे । अस्य सोमस्य पीतये ॥ १० ॥

त्यान् । नु । पूतऽदक्षसः दिवः । वः । मरुतः । हुवे । अस्य । सोमस्य । पीतये ॥ १० ॥

**वेङ्कट०** तान् क्षिप्रं शुद्धबलान् द्युलोकात् युष्मान् आह्वयामि मरुतः । ॥ १० ॥

---

१. °नः मूको. २-२. नास्ति मूको. ३. °वच्चासाम् मूको. ४. तानि मूको.

त्यान् नु ये वि रोदसी तस्तभुर्मरुतो हुवे । अस्य सोमस्य पीतये ॥ ११ ॥

त्यान् । नु । ये । वि । रोदसी इति । तस्तभुः । मरुतः । हुवे । अस्य । सोमस्य । पीतये ॥ ११ ॥

**वेङ्कट०** ये द्यावापृथिव्यौ [1]वि तस्तभुः, तान्[1] एतान् मरुतः हुवे ॥ ११ ॥

त्यं नु मारुतं गणं गिरिष्ठां वृषणं हुवे । अस्य सोमस्य पीतये ॥ १२ ॥

त्यम् । नु । मारुतम् । गणम् । गिरिऽस्थाम् । वृषणम् । हुवे । अस्य । सोमस्य । पीतये ॥ १२ ॥

**वेङ्कट०** तम् इमम् मारुतम् गणम् मेघेषु स्थितम् वर्षितारम् आह्वयामि इति ॥ १२ ॥

[2]इति षष्ठाष्टके षष्ठाध्याये एकोनत्रिंशो वर्गः[2] ॥

[ ९५ ]

[1]तिरश्चीराङ्गिरस ऋषिः । इन्द्रो देवता । अनुष्टुप् छन्दः[2] ।

आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः । अभि त्वा समनूषतेन्द्र वत्सं न मातरः ॥ १ ॥

आ । त्वा । गिरः । रथीःऽइव । अस्थुः । सुतेषु । गिर्वणः ।

अभि । त्वा । सम् । अनूषत । इन्द्र । वत्सम् । न । मातरः ॥ १ ॥

**वेङ्कट०** तिरश्चीः आङ्गिरसः । आ तिष्ठन्ति त्वां स्तुतयः, क्षिप्रं रथेन गच्छन् इव प्राप्यं देशम्, सुतेषु सोमेषु गीर्भिर्वननीय ! । त्वाम् अभि सम् शब्दयन्ति गिरः इन्द्र ! वत्सम् इव मातरः ॥ १ ॥

आ त्वा शुक्रा अचुच्यवुः सुतास इन्द्र गिर्वणः ।
पिबा त्व१स्यान्धस इन्द्र विश्वासु ते हितम् ॥ २ ॥

आ । त्वा । शुक्राः । अचुच्यवुः । सुतासः । इन्द्र । गिर्वणः ।

पिब । तु । अस्य । अन्धसः । इन्द्र । विश्वासु । ते । हितम् ॥ २ ॥

**वेङ्कट०** आ गमयन्तु त्वाम् इन्द्र ! गिर्वणः ! सुताः ज्वलन्तः । सोमम् पिब[3] क्षिप्रम् इदमन्नम् । इन्द्र ! विश्वासु दिक्षु त्वदर्थमेव हविः निहितं भवति ॥ २ ॥

पिबा सोमं मदाय कमिन्द्र श्येनाभृतं सुतम् ।
त्वं हि शश्वतीनां पती राजा विशामसि ॥ ३ ॥

पिब । सोमम् । मदाय । कम् । इन्द्र । श्येनऽआभृतम् । सुतम् ।

त्वम् । हि । शश्वतीनाम् । पतिः । राजा । विशाम् । असि ॥ ३ ॥

---

१-१. °स्त··· तान् वि°; ··· तान् अ°. २-२. नास्ति मूको. ३. °वन्तः वि°; °वन्त अ°.

**वेङ्कट०** पिब सोमम् मदाय । कम् इति पूरणम् । इन्द्र ! दिवः गायत्र्याहृतम् अभिषुतम् । त्वम् हि बह्वीनाम् विशाम्[1] स्वामी राजा च भवसि ॥ ३ ॥

श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ४ ॥

श्रुधि । हवम् । तिरश्च्याः । इन्द्र । यः । त्वा । सपर्यति ।
सुऽवीर्यस्य । गोऽमतः । रायः । पूर्धि । महान् । असि ॥ ४ ॥

**वेङ्कट०** श्रुधि हवम् तिरश्च्याः मम इन्द्र !, यः त्वां परिचरति । श्रुत्वा च शोभनवीर्येण गोमता धनेन पूरय । महान् त्वम् असि इति ॥ ४ ॥

इन्द्र यस्ते नवीयसीं गिरं मन्द्रामजीजनत् ।
चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥ ५ ॥

इन्द्र । यः । ते । नवीयसीम् । गिरम् । मन्द्राम् । अजीजनत् ।
चिकित्वित्ऽमनसम् । धियम् । प्रत्नाम् । ऋतस्य । पिप्युषीम् ॥ ५ ॥

**वेङ्कट०** इन्द्र ! यः ते नवतराम् स्तुतिम् मदकरीम् अजीजनत्, अस्मै त्वं कुरु चिकित्विन्मनसम् धियम् त्वदीयं रक्षणाख्यं कर्म प्रत्नाम् सत्येन पूर्णाम् । अमायया क्रियमाणं[2] यद् रक्षणं सर्वेषां हृदयं प्रज्ञापयति तत् चिकित्वन्मनस्कम् इति ॥ ५ ॥

[3]इति षष्ठाष्टके षष्ठाध्याये त्रिंशो वर्गः[3] ॥

तमु ष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः ।
पुरूण्यस्य पौंस्या सिषासन्तो वनामहे ॥ ६ ॥

तम् । ऊँ इति । स्तवाम । यम् । गिरः । इन्द्रम् । उक्थानि । ववृधुः ।
पुरूणि । अस्य । पौंस्या । सिसासन्तः । वनामहे ॥ ६ ॥

**वेङ्कट०** तम् एव स्तुमः, यम् स्तुतयः शस्त्राणि च इन्द्रम् वावृधुः । बहूनि अस्य इन्द्रस्य वीर्याणि सम्भक्तुमिच्छन्तः वयं भजामहे ॥ ६ ॥

एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।
शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान् ममत्तु ॥ ७ ॥

एतो इति । नु । इन्द्रम् । स्तवाम । शुद्धम् । शुद्धेन । साम्ना ।
शुद्धैः । उक्थैः । ववृध्वांसम् । शुद्धः । आशीःऽवान् । ममत्तु ॥ ७ ॥

---

1. विशाङ्कः मूको. 2. क्रीडमानं मूको. 3-3. नास्ति मूको.

**वेङ्कट०** अत्र शाट्यायनकम्[1] — "इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्योऽमन्यत[2] । सोऽकामयत शुद्धमेव मा सन्तं शुद्धेन साम्ना स्तुयुरिति । स ऋषीनब्रवीत् — स्तुत मेति[3] । त एतद्[4] ऋषयः सामापश्यन् तेनास्तुवन् — 'एतो[5] न्विन्द्रम्°' इति । ततो वा इन्द्रः शुद्धः पूतो मेध्योऽभवत्" (तु. जैमि ३,२२८) इति । आगच्छत क्षिप्रम् इन्द्रम् स्तवाम शुद्धम् शुद्धेन साम्ना शुद्धैः च शस्त्रैः वर्धमानम् । तमिमम् शुद्धः सोमः मिश्रितः मादयतु[6] ॥ ७ ॥

इन्द्रं शुद्धो न आ गंहि शुद्धः शुद्धाभिरूतिभिः ।
शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः ॥ ८ ॥

इन्द्रं । शुद्धः । नः । आ । गहि । शुद्धः । शुद्धाभिः । ऊतिऽभिः ।
शुद्धः । रयिम् । नि । धारय । शुद्धः । ममद्धि । सोम्यः ॥ ८ ॥

**वेङ्कट०** इन्द्र! शुद्धः अस्मान् आ गच्छ । शुद्धः त्वं शुद्धैः मरुद्भिः । शुद्धः त्वं धनं च नि धारय । शुद्धः त्वं माद्य सोमार्हः ॥ ८ ॥

इन्द्रं शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे ।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥ ९ ॥

इन्द्रं । शुद्धः । हि । नः । रयिम् । शुद्धः । रत्नानि । दाशुषे ।
शुद्धः । वृत्राणि । जिघ्नसे । शुद्धः । वाजम् । सिसाससि ॥ ९ ॥

**वेङ्कट०** इन्द्र! शुद्धः त्वम् अस्मभ्यम् रयिम् प्रयच्छ । शुद्धः त्वम् रत्नानि च यजमानाय प्रयच्छ । शुद्धः त्वं शत्रून् हंसि । शुद्धः त्वम् अन्नं प्रदातुमिच्छसि ॥ ९ ॥

[7]इति षष्ठाष्टके षष्ठाध्याये एकत्रिंशो वर्गः[7] ॥

## [ ९६ ]

[7]तिरश्चीराङ्गिरसो द्युतानो वा मारुतिर्ऋषिः† । इन्द्रो देवता, चतुर्दश्या इन्द्रामरुतः, पञ्चदश्या इन्द्राबृहस्पती । त्रिष्टुप् छन्दः, चतुर्थी विराट्, एकविंशी पुरस्ताज्ज्योतिः[7] ।

अस्मा उषास आतिरन्त याममिन्द्राय नक्तमूर्म्याः सुवाचः ।
अस्मा आपो मातरः सप्त तस्थुर्नृभ्यस्तराय सिन्धवः सुपाराः ॥ १ ॥

अस्मै । उषसः । आ । अतिरन्त । यामम् । इन्द्राय । नक्तम् । ऊर्म्याः । सुऽवाचः ।
अस्मै । आपः । मातरः । सप्त । तस्थुः । नृऽभ्यः । तराय । सिन्धवः । सुऽपाराः ॥ १ ॥

---

१. गार्ग्याय° अ[1]. २. इव मूको. ३. कुत मूको. ४. एत मूको. ५. एको मूको.
६. °तु इति अ[1]. ७-७. नास्ति मूको. † तु. ऋअ. वें. च; वैतु. सा. °त ऋ° इति ।

वेङ्कट० द्युतानो मारुतिः, पूर्वो वा। अस्मै भीताः[1] उषसः गमनं वर्धयन्ति। यथा पूर्वमुद्यन्ति। नक्तम्, ऊर्म्याः[2] इति रात्रिनामनी[3] (तु. निघ १,७)। [4]तत्रैकं नैघण्टुकम्[4]। रात्रयः च शोभनवाचः[5]।[6] तथा अस्मै व्याप्ताः मातरः सप्त नद्यः मनुष्याणां तरणार्थं तिष्ठन्ति सुपाराः[7] ॥ १ ॥

अतिविद्धा विथुरेणा चिदस्त्रा त्रिः सप्त सानु संहिता गिरीणाम् ।
न तद् देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥ २ ॥

[8]अतिऽविद्धा । विथुरेण । चित् । अस्त्रा[8] । त्रिः । सप्त । सानु । सम्ऽहिता । गिरीणाम् ।
न । तत् । देवः । न । मर्त्यः । तुतुर्यात् । यानि । प्रऽवृद्धः । वृषभः । चकार ॥ २ ॥

वेङ्कट० अतिविद्धानि असहायेन अपि इन्द्रेण शरस्य क्षेप्त्रा[9] त्रिः[10] सप्त एकविंशतिसङ्ख्यानि[11] गिरीणाम् सानूनि[12] निरन्तराणि। 'स दर्भपुञ्जीलम् उद्वृह्य सप्त गिरीन् भित्त्वा तमहन्' ( तै ६,२,४,३ ) इति च ब्राह्मणम्। तत् कर्म देवः वा मर्त्यः[13] वा न तुतुर्यात्[14] तरेत् न तथा कर्तुं शक्नोति, यानि प्रवृद्धः वृषभः[15] चकार इति ॥ २ ॥

इन्द्रस्य वज्र आयसो निमिश्ल इन्द्रस्य बाह्वोर्भूयिष्ठमोजः ।
शीर्षन्निन्द्रस्य क्रतवो निरेक आसन्नेषन्त श्रुत्या उपाके ॥ ३ ॥

इन्द्रस्य । वज्रः । आयसः । निऽमिश्लः । इन्द्रस्य । बाह्वोः । भूयिष्ठम् । ओजः ।
शीर्षन् । इन्द्रस्य । क्रतवः । निरेके । आसन् । आ । ईषन्त । श्रुत्यै । उपाके ॥ ३ ॥

वेङ्कट० इन्द्रवज्रः अयसा निर्मितः इन्द्रेण अत्यन्तं सम्बद्धः[16]। इन्द्रस्य बाह्वोः भूयिष्ठम् बलम्। युद्धार्थं यदा इन्द्रः निर्गच्छति, तदानीम् इन्द्रस्य शीर्षन् कर्माणि भवन्ति दर्शनप्रेरणादीनि तथा आस्ये। निर्गच्छतः[17] अनुशासत इन्द्रस्य श्रवणार्थम् अन्तिके सर्वे आ गच्छन्ति ॥ ३ ॥

मन्ये त्वा यज्ञियं यज्ञियानां मन्ये त्वा च्यवनमच्युतानाम् ।
मन्ये त्वा सत्वनामिन्द्र केतुं मन्ये त्वा वृषभं चर्षणीनाम् ॥ ४ ॥

मन्ये । त्वा । यज्ञियम् । यज्ञियानाम् । मन्ये । त्वा । च्यवनम् । अच्युतानाम् ।
मन्ये । त्वा । सत्वनाम् । इन्द्र । केतुम् । मन्ये । त्वा । वृषभम् । चर्षणीनाम् ॥ ४ ॥

वेङ्कट० जानामि त्वाम् यज्ञियानाम् देवानाम् यज्ञियम्। मन्ये त्वा च्यावयितारम् अच्युतानाम् अपि वीराणाम्। मन्ये त्वा भजमानानां भटानाम्[18] इन्द्र! उच्छ्रितम्। मन्ये त्वा वर्षितारं मनुष्याणाम् ॥ ४ ॥

---

१. हिताः मूको. २. नास्ति मूको. ३. अतिरात्रि° मूको. ४-४. कत्रैकत्रघण्टकम् मूको. ५. उषसोऽपि द्र. (तु. ऋ ३,७,१०). ६. तु. ऋ ४,३०,३. ७. सुरावः वि[2]. ८-८. तु. ऋ ८,७७,६; १,१६८,६. ९. क्षो मूको. १०. त्रि मूको. ११. °ख्या मूको. १२. सान्द्र मूको. १३. पत्न्यः मूको. १४. तुतू° मूको. १५. °भतः मूको. १६. °म्बन्धः मूको. १७. निर्गतः मूको. १८. भगानाम् मूको.

आ यद्वज्रं बाह्वोरिन्द्र धत्से मदच्युतमहये हन्तवा उ ।
प्र पर्वता अनवन्त प्र गावः प्र ब्रह्माणो अभिनक्षन्त इन्द्रम् ॥ ५ ॥

आ । यत् । वज्रम् । बाह्वोः । इन्द्र । धत्से । मदऽच्युतम् । अहये । हन्तवै । ॐ इति ।
प्र । पर्वताः । अनवन्त । प्र । गावः । प्र । ब्रह्माणः[१] । अभिऽनक्षन्तः । इन्द्रम् ॥ ५ ॥

वेङ्कट० यदा त्वम् इन्द्र! वज्रम् बाह्वोः आ धत्से शत्रूणां मदस्य च्यावयितारम् अहिं हन्तुम् । यदा[२] वा प्रकर्षेण अशब्दयन् मेघाः तत्स्थानि उदकानि । 'यददः सम्प्रयतीरहावनदता[३] हते । तस्मादा नद्यो नाम स्थ' ( तै ५,६,१,२ ) इति मन्त्रः । तुरीयः पादः परोक्षः । तदानीम् अभिगच्छन्तः ब्राह्मणाः इन्द्रम्[४] प्र अस्तुवन्, यद्वा पर्वतादयः अस्तुवन् इति ॥ ५ ॥

[५]इति षष्ठाष्टके षष्ठाध्याये द्वात्रिंशो वर्गः[५] ॥

तमु ष्टवाम य इमा जजान विश्वा जातान्यवराण्यस्मात् ।
इन्द्रेण मित्रं दिधिषेम गीर्भिरुपो नमोभिर्वृषभं विशेम ॥ ६ ॥

तम् । ॐ इति । स्तवाम । यः । इमा । जजान । विश्वा । जातानि । अवराणि । अस्मात् ।
इन्द्रेण । मित्रम् । दिधिषेम । गीःऽभिः । उपो इति । नमःऽभिः । वृषभम् । विशेम ॥ ६ ॥

वेङ्कट० तम् एव स्तुमः, यः इमानि भूतानि जजान । तस्मात् अस्मात् विश्वानि एव जातानि अपरकालीनानि भवन्ति । तेन अनेन इन्द्रेण वयं स्तुतिभिः मैत्रीं धारयेम । उप विशेम च नमस्कारैः क्रियमाणैः हविर्भिः वा वृषभम् इति ॥ ६ ॥

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥ ७ ॥

वृत्रस्य । त्वा । श्वसथात् । ईषमाणाः । विश्वे । देवाः । अजहुः । ये । सखायः ।
मरुतऽभिः । इन्द्र । सख्यम् । ते । अस्तु । अथ । इमाः । विश्वाः । पृतनाः । जयासि ॥ ७ ॥

वेङ्कट० वृत्रासुरस्य श्वसनेन भीताः[६] पलायमानाः त्वाम् विश्वे देवाः त्यक्तवन्तः, ये तव प्राक् सखायः आसन् । तथा सति मरुद्भिः इन्द्र! तव सख्यम् अस्तु, ये त्वां न परित्यजन्ति । अथ इमाः विश्वाः पृतनाः जयासि इति वृत्रं घ्नन्तम् आह इति ॥ ७ ॥

त्रिः षष्टिस्त्वा मरुतो वावृधाना उस्राइव राशयो यज्ञियासः ।
उप त्वेमः कृधि नो भागधेयं शुष्मं त एना हविषा विधेम ॥ ८ ॥

---

१. तु. ऋ ५,२९,३;३१,४. २. प्रय° मूको. ३. °न्प्रती वि². ४. नास्ति मूको.
५-५. नास्ति मूको. ६. हिमा वि¹; हिताः मूको.

त्रिः । षष्टिः । त्वा । मरुतः । वबृधानाः । उस्राःऽइव । राशयः । यज्ञियासः ।
उप । त्वा । आ । इमः । कृधि । नः । भागऽधेयम् । शुष्मम् । ते । एना । हविषा । विधेम ॥८॥

वेङ्कट० त्रिः षष्टिः त्वाम् मरुतः "ईदङ् चान्यादङ् च"[1] ( तै १,८,१३,२;४,६,५,५; मा १७,८०-८४) एवमादिकाः सप्तका नव गणा भवन्ति। तेषु त्रयः अरण्येऽनुवाक्याः। 'स्वतवांश्च प्रघासी च' ( मा १७,८५ ) इति एष ग्रामेऽनुवाक्येषु षष्ठ आम्नातः[2]। त्वा वर्धयन्तः गावः इव सङ्घीभूता यज्ञार्हा अभवन्। तं त्वां वयम् उप आ गच्छामः, कृधि नः भागधेयम्। बलं[3] तव अनेन हविषा वयं कुर्म ॥ ८ ॥

तिग्ममायुधं मरुतामनीकं कस्त इन्द्र प्रति वज्रं दधर्ष ।
अनायुधासो असुरा अदेवाश्चक्रेण ताँ अप वप ऋजीषिन् ॥ ९ ॥

तिग्मम् । आयुधम् । मरुताम् । अनीकम् । कः । ते । इन्द्र । प्रति । वज्रम् । दधर्ष ।
अनायुधासः । असुराः । अदेवाः । चक्रेण । तान् । अप । वप । ऋजीषिन् ॥ ९ ॥

वेङ्कट० तीक्ष्णम् आयुधम् मरुताम् च सङ्घम् कः ते प्रति धर्षयति वज्रम् च। आयुधवर्जिताः असुराः[4] देववर्जिताः। तान् चक्रेण अप वप अपनुद[5] ऋजीषिन्! ॥ ९ ॥

मह उग्राय तवसे सुवृक्तिं प्रेरय शिवतमाय पश्वः ।
गिर्वाहसे गिर इन्द्राय पूर्वीर्धेहि तन्वे कुविदङ्ग वेदत् ॥ १० ॥

महे । उग्राय । तवसे । सुऽवृक्तिम् । प्र । ईरय । शिवऽतमाय । पश्वः ।
गिर्वाहसे । गिरः । इन्द्राय । पूर्वीः । धेहि । तन्वे । कुवित् । अङ्ग । वेदत् ॥ १० ॥

वेङ्कट० महते उद्गूर्णाय वृद्धाय स्तुतिम् प्र ईरय स्तोतः! शिवतमाय पशोः। पशुर्द्विपात्[6] चतुष्पात् च। गीर्भिः उह्यमानाय गिरः इन्द्राय बह्वीः कुरु। स्तोतृपुत्राय स्वशरीराय वा बहुधनं क्षिप्रम् इन्द्रो लम्भयतु इति ॥ १० ॥

[7]इति षष्ठाष्टके षष्ठाध्याये त्रयस्त्रिंशो वर्गः[7] ॥

उक्थवाहसे विभ्वे मनीषां द्रुणा न पारमीरया नदीनाम् ।
नि स्पृश धिया तन्वि श्रुतस्य जुष्टतरस्य कुविदङ्ग वेदत् ॥ ११ ॥

उक्थऽवाहसे । विऽभ्वे । मनीषाम् । द्रुणा । न । पारम् । ईरय । नदीनाम् ।
नि । स्पृश । धिया । तन्वि । श्रुतस्य । जुष्टऽतरस्य । कुवित् । अङ्ग । वेदत् ॥ ११ ॥

---

१-१. ईदृश ⋯ मूको. २. °म्नातं मूको. ३. बलवन् मूको. ४. °रान् मूको. ५. अनुन
६. चद्विपात् वि[2]; चशुद्विपात् अ[1]. ७-७. नास्ति मूको.

वेङ्कट० स्तोत्रैः उह्यमानाय महते स्तुतिं प्रापय, यथा पथिकम् नदीनाम् पारम् द्रुणा प्रापयन्ति। स्तुतिमिन्द्रं प्रति गमयेत्यर्थः। नि स्पृश धनम् आत्मानं गमय पुत्रार्थम् आत्मार्थं वा। विश्रुतस्य जुष्टतरस्य इन्द्रस्य स्वभूतं प्रज्ञया कर्मणा वा 'पर्याप्तं वितरिष्यति'[1] ॥ ११ ॥

तद्विविड्ढि यत् त इन्द्रो जुजोषत् स्तुहि सुष्टुतिं नमसा विवास ।
उप भूष जरितर्मा रुवण्यः श्रावया वाचं कुविदङ्ग वेदत् ॥ १२ ॥

तत् । विविड्ढि । यत् । ते । इन्द्रः । जुजोषत् । स्तुहि । सुऽस्तुतिम् । नमसा । आ । विवास ।
उप । भूष । जरितः । मा । रुवण्यः । श्रवय । वाचम् । कुवित् । अङ्ग । वेदत् ॥ १२ ॥

वेङ्कट० तत् कुरु, यत् तव स्वभूतम् इन्द्रः स्वीकुर्यात्। स्तुहि सुस्तोत्रम् इन्द्रम्। हविषा परिचर। उप भव[2] च जरितः! स्तोतः!। मा रुवण्यः मा रोदीः[3] धनाभावात्। श्रावय इन्द्रम् वाचम् ॥ १२ ॥

अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः ।
आवत् तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त ॥ १३ ॥

अव । द्रप्सः । अंशुऽमतीम् । अतिष्ठत् । इयानः । कृष्णः । दशऽभिः । सहस्रैः ।
आवत् । तम् । इन्द्रः । शच्या । धमन्तम् । अप । स्नेहितीः । नृऽमनाः । अधत्त ॥ १३ ॥

वेङ्कट० यथा इन्द्रः कृष्णासुरं जघान तत् अस्मिन् तृचे वदति— द्रप्सः द्रुतं गच्छति इति अव अतिष्ठत् द्रुतं[4] गच्छन् अंशुमतीम् नाम नदीम् अन्वीयमानः कृष्णः दशभिः असुराणाम् सहस्रैः। तम् अभ्यगच्छत् इन्द्रः प्रज्ञानेन अन्तरुदके वर्तमानम् उच्छ्वसन्तम्। अथ तस्यानुचरान् च हतवान् इति वदत्यृचेति। स्नेहतिर्वधकर्मसु[5] (निघ २,१९) पठितः। अप अधत्त हिंसित्रीः सेनाः नृमणाः इन्द्रः नृषु मनः अस्य भवतीति। 'अप स्नीहितिं नृमणा अधद्राः'[6] (कौ १,३२३) इति छन्दोगाः पठन्ति। तदानीं तम् एव द्रुतपदगतम् अपाधत्त इत्यर्थः ॥ १३ ॥

द्रप्समपश्यं विषुणे चरन्तमुपह्वरे नद्यो अंशुमत्याः ।
नभो न कृष्णमवतस्थिवांसमिष्यामि वो वृषणो युध्यताजौ ॥ १४ ॥

द्रप्सम् । अपश्यम् । विषुणे । चरन्तम् । उपऽह्वरे । नद्यः । अंशुऽमत्याः ।
नभः । न । कृष्णम् । अवतस्थिऽवांसम् । इष्यामि । वः । वृषणः । युध्यत । आजौ ॥ १४ ॥

वेङ्कट० तुरीयपादो मारुतः। उत्तरा ऐन्द्राबार्हस्पत्या[7]। मारुतं[8] प्रति यथा इन्द्रः उवाच तद् अत्र कीर्त्यते— द्रप्सम् अहम् अपश्यम् विष्वगञ्चने देशे चरन्तम् अंशुमत्याः नद्याः उपह्वरे

---

१-१. पर्याप्ततरस्येति वि[२]; पर्याप्त तरस्येति अ[१]. २. इव मूको. ३. °दीत मूको. ४. द्रुतं मूको. ५. तेहन्तिव° मूको. ६. अदध्राम मूको. ७. इन्द्रा° मूको. ८. गणमिति शेषः।

गूढे नभः[1] न आदित्यम्[2] ( तु. या २,१४ ) इव उपदीप्यमानं कृष्णासुरम् [3]उदकस्यान्तः अवस्थितम्। दृष्टे च सत्यस्मिन् युद्धार्थं युष्मान्[4] इच्छामि। हे मरुतः! तम् इमम् युध्यत सङ्ग्रामे इति ॥ १४ ॥

अर्व द्रप्सो अंशुमत्या उपस्थेऽधारयत् तन्वं तित्विषाणः।
विशो अदेवीरभ्याऽचरन्तीर्बृहस्पतिना युजेन्द्रः ससाहे ॥ १५ ॥

अर्व। द्रप्सः। अंशुऽमत्याः। उपऽस्थे। अधारयत्। तन्वम्। तित्विषाणः।
विशः। अदेवीः। अभि। आऽचरन्तीः। बृहस्पतिना। युजा। इन्द्रः। ससहे ॥ १५ ॥

**वेङ्कट०** द्रुतगामी कृष्णः अंशुमत्याः उपस्थे अधारयत् आत्मीयं शरीरं दीप्यमानः। तत्र गत्वा बृहस्पतिना सहायेन इन्द्रः अदेवीः विशः असुरानागच्छतः अभिसोढवान् इति। 'अव द्रप्सो अंशुमतीमतिष्ठत्' ( ऋ ८,९६,१३ ) इत्यैन्द्राबार्हस्पत्यं तृचं शंसति' ( ऐब्रा ६,३६ ) इत्यादि। ब्राह्मणानुरूपोऽयमर्थः। केचित् पुनरत्र बृहद्देवताकारेण उक्तम् इति श्लोकान् पठन्ति —

"अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः।
नदीमंशुमतीं [5]नाम्ना अभ्यतिष्ठत्[5] कुरून् प्रति ॥

तं बृहस्पतिनैकेन सोऽभ्ययाद् वृत्रहा सह।
योत्स्यमानस्तु संहृष्टैर्मरुद्भिर्विविधायुधैः ॥

दृष्ट्वा तानायतः[6] सोमः स्वबलेन व्यवस्थितः।
मन्वानो वृत्रमायान्तं[7] जिघांसुमरिसेनया ॥

व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः।
मरुत्पतिरयं सोम एहि देवान् पुनर्विभो ॥

सोऽब्रवीन्नेति तं शक्रः स्वर्ग[8] एव बलाद्बली।
इयाय देवानादाय तं [9]पपुर्विधिवत् सुराः[9] ॥

जघ्नुः पीत्वा च दैत्यानां समरे नवतीर्नव।
[10]तद् 'अव द्रप्सः'†[10] इत्यस्मिन् तृचे सर्वं निगद्यते ॥" (बृदे ६,१०९-११५) इति ॥

तदेतदनार्षमिव प्रतिभाति ॥ १५ ॥

[11]इति षष्ठाष्टके षष्ठाध्याये चतुस्त्रिंशो वर्गः[11] ॥

---

१. °भव मूको. २. °त्वः मूको. ३-३. °कस्य मूको. ४. युष्मादि मूको. ५-५. नाम ऽत्यति° मूको. ६. त्वायतनात वि[2]; तानापयातनाव मूको. ७. °त्रहायातन् मूको. ८. स्वग मूको. ९-९. पुनर्बिधवत् पुरा मूको. १०-१०. तेदेवर्वच वि[2]; तदेवर्वच अ[1]. † ऋ ८,९६,१३-१५. ११-११. नास्ति मूको.

त्वं ह त्यत् सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
गूळ्हे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ १६ ॥

[1]त्वम् । ह । त्यत् । सप्तऽभ्यः । जायमानः[1] । अशत्रुऽभ्यः । अभवः । शत्रुः । इन्द्र ।
गूळ्हे इति । द्यावापृथिवी इति । अनु । अविन्दः । विभुमत्ऽभ्यः । भुवनेभ्यः । रणम् । धाः ॥१६॥

**वेङ्कट०** त्वम् एतत् सप्तभ्यः असुरेभ्यः प्रादुर्भवन् एव शत्रुरहितेभ्यः बलवद्भ्यः शत्रुः अभवः इन्द्र![2] । तमसा गूढे त्वं द्यावापृथिव्यौ अनु अविन्दः । तथा भुवनेभ्यः महद्भ्यः रणम् रमणम्[3] धारयसि इति ॥ १६ ॥

त्वं ह त्यदप्रतिमानमोजो वज्रेण वज्रिन् धृषितो जघन्थ ।
त्वं शुष्णस्यावातिरो वधत्रैस्त्वं गा इन्द्रशच्येदविन्दः ॥ १७ ॥

त्वम् । ह । त्यत् । अप्रतिऽमानम् । ओजः । वज्रेण । वज्रिन् । धृषितः । जघन्थ ।
त्वम् । शुष्णस्य । अव । अतिरः । वधत्रैः । त्वम् । गाः । इन्द्र । शच्या । इत् । अविन्दः ॥१७॥

**वेङ्कट०** त्वम् ह त्यत् निरुपमानं बलं कृष्णस्य वज्रेण वज्रिन्! धृष्टः सन् हतवान्[4] । एतदेवाऽऽह[5] त्वम् शुष्णस्य बलं विनाशितवान् असि आयुधैः इति । तथा त्वम् इन्द्र! प्रज्ञया शत्रूणाम् गाः अविन्दः इति ॥ १७ ॥

त्वं ह त्यद्वृषभ चर्षणीनां घनो वृत्राणां तविषो बभूथ ।
त्वं सिन्धूँरसृजस्तस्तभानान् त्वमपो अजयो दासपत्नीः ॥ १८ ॥

त्वम् । ह । त्यत् । वृषभ । चर्षणीनाम् । घनः । वृत्राणाम् । तविषः । बभूथ ।
त्वम । सिन्धून् । असृजः । तस्तभानान् । त्वम् । अपः । अजयः । दासऽपत्नीः ॥ १८ ॥

**वेङ्कट०** त्वम् ह एतत् वर्षितः! मनुष्याणां हन्ता उपद्रवाणां प्रवृद्धः बभूथ[7] । तथा त्वम् सिन्धून् असुरैः निरुध्यमानान् उद्-असृजः । त्वम् उदकानि अजयः[8] असुरस्वामिकानि ॥ १८ ॥

स सुक्रतू रणिता यः सुतेष्वनुत्तमन्युर्यो अहेव रेवान् ।
य एक इन्नर्यपांसि कर्ता स वृत्रहा प्रतीदन्यमाहुः ॥ १९ ॥

सः । सुऽक्रतुः । रणिता । यः । सुतेषु । अनुत्तऽमन्युः । यः । अहाऽइव । रेवान् ।
यः । एकः । इत् । नरि । अपांसि । कर्ता । सः । वृत्रऽहा । प्रति । इत् । अन्यम् । आहुः ॥१९॥

**वेङ्कट०** सः सुप्रज्ञः रमयिता, यः सोमेषु अप्रतिनुन्नक्रोधः[9], यः दिवसाः इव धनवान् ।

---

१-१. तु ऋ १०,४९,८;१२०,६. २. नास्ति मूको. ३. रणम् मूको. ४. °पान् मूको. ५. एचद्दे° मूको. ६. °न्दत मूको. ७. बभूव मूको. ८. अजन्यः मूको. ९. °तिरत्नक्रोधः वि[2]; तिरत्नक्रोध अ[2].

दिवसेषु हि धनानि प्रादुर्भवन्ति [1]न रात्रिषु[1]। यः एकः एव[2] मनुष्ये कर्माणि करोति। सः वृत्रहा भवति अन्यम् प्रति एव आहुः। इन्द्रः[3] सर्वम् अन्यम् प्रति भवति इति आहुः इत्यर्थः ॥ १९ ॥

स वृ॒त्र॒हेन्द्र॑श्चर्षणी॒धृत् तं सु॑ष्टु॒त्या हव्यं॑ हुवेम ।
स प्रा॑वि॒ता म॒घवा॑ नोऽधिव॒क्ता स वाज॑स्य श्रव॒स्य॑स्य दा॒ता ॥ २० ॥

सः । वृ॒त्र॒ऽहा । इन्द्रः॑ । च॒र्ष॒णि॒ऽधृत् । तम् । सु॒ऽस्तु॒त्या । हव्य॑म् । हु॒वे॒म ।
सः । प्र॒ऽअ॒वि॒ता । म॒घऽवा॑ । नः॒ । अ॒धि॒ऽव॒क्ता । सः । वाज॑स्य । श्र॒व॒स्य॑स्य । दा॒ता ॥ २० ॥

**वेङ्कट०** सः वृत्रहा इन्द्रः मनुष्याणां धर्ता। तम् वयम्[4] आह्वातव्यं शोभनया स्तुत्या हुवेम। सः प्रकर्षेण रक्षिता धनवान्[5] अस्माकम् अधिवक्ता[6]। सः अन्नस्य यशोनिमित्तस्य[7] दाता ॥ २० ॥

स वृ॒त्र॒हेन्द्र॑ ऋभु॒क्षाः स॒द्यो ज॑ज्ञा॒नो हव्यो॑ बभूव ।
कृ॒ण्वन्नपां॑सि॒ नर्या॑ पु॒रूणि॒ सोमो॒ न पी॒तो हव्यः॒ सखि॑भ्यः ॥ २१ ॥

सः । वृ॒त्र॒ऽहा । इन्द्रः॑ । ऋ॒भु॒क्षाः । स॒द्यः । ज॒ज्ञा॒नः । हव्यः॑ । ब॒भू॒व॒ ।
कृ॒ण्वन् । अपां॑सि । नर्या॑ । पु॒रूणि॑ । सोमः॑ । न । पी॒तः । हव्यः॑ । सखि॑ऽभ्यः ॥ २१ ॥

**वेङ्कट०** सः वृत्रहा इन्द्रः महान् सद्यः एव प्रादुर्भवन् आह्वातव्यः बभूव कृण्वन् कर्माणि नृहितानि[8] बहूनि सोमः इव रक्षकः ह्वातव्यः सखीनाम् इति ॥ २१ ॥

[9]इति षष्ठाष्टके षष्ठाध्याये पञ्चत्रिंशो वर्गः[9] ॥

## [ ९७ ]

[1]रेभः काश्यप ऋषिः। इन्द्रो देवता। बृहती छन्दः, दशमीत्रयोदश्यौ अतिजगत्यौ, एकादशी-द्वादश्यौ उपरिष्टाद्बृहत्यौ, चतुर्दशी त्रिष्टुप्, पञ्चदशी जगती[1]।

या इ॑न्द्र॒ भुज॒ आभ॑रः॒ स्व॑र्वाँ॒ असु॑रेभ्यः ।
स्तो॒तार॒मिन्म॑घवन्नस्य वर्धय॒ ये च॒ त्वे वृ॒क्तब॑र्हिषः ॥ १ ॥

याः । इ॒न्द्र॒ । भुजः॑ । आ । अभ॑रः । स्वः॑ऽवान् । असु॑रेभ्यः ।
स्तो॒तार॑म् । इत् । म॒घ॒ऽव॒न् । अ॒स्य॒ । व॒र्ध॒य॒ । ये । च॒ । त्वे इति॑ । वृ॒क्तऽब॑र्हिषः ॥ १ ॥

**वेङ्कट०** रेभः[10] काश्यपः। याः त्वम् इन्द्र! भुजः धनानि असुरेभ्यः आ अहरः[11] सुखवान्। स्तोतारम् एव तेन आहृतेन धनेन वर्धय, ये च अन्ये त्वदर्थं कीर्णबर्हिषः तांश्च इति ॥ १ ॥

---

१-१. नरादिषु को. २. एष मूको. ३. इन्द्र मूको. ४. यवम् मूको. ५. धनवताम् वि[2]; °नवतान् अ[1]. ६. अधिवाता वि[2]; °वातनं अ[1]. ७. पशोनिर्मितस्य वि[2]; यशोनिर्मितस्य अ[1]. ८. निहि° मूको. ९-९. नास्ति मूको. १०. रेहः मूको. ११. °हर मूको

यमिन्द्र दधिषे त्वमश्वं गां भागमव्ययम् ।
यजमाने सुन्वति दक्षिणावति तस्मिन् तं धेहि मा पणौ ॥ २ ॥

यम् । इन्द्र । दधिषे । त्वम् । अश्वम् । गाम् । भागम् । अव्ययम् ।
यजमाने । सुन्वति । दक्षिणाऽवति । तस्मिन् । तम् । धेहि । मा । पणौ ॥ २ ॥

**वेङ्कट०** यम् इन्द्र! धारयसि त्वम् अश्वम् गाम् धनम् अपि च अव्ययम्[1], तम् सर्वम् तस्मिन् सुन्वति दक्षिणावति यजमाने धेहि, मा पणौ। पणिः पणनात्, अयष्टा जनः ॥ २ ॥

य इन्द्र सस्त्यव्रतोऽनुष्वापमदेवयुः ।
स्वैः ष एवैर्मुमुरत् पोष्यं रयिं सनुतर्धेहि तं ततः ॥ ३ ॥

यः । इन्द्र । सस्ति । अव्रतः । अनुऽस्वापम् । अदेवऽयुः ।
स्वैः । सः । एवैः । मुमुरत् । पोष्यम् । रयिम् । सनुतः । धेहि । तम् । ततः ॥ ३ ॥

**वेङ्कट०** यः इन्द्र! स्वपिति अव्रतः भूत्वा, अनुवृत्तस्वप्नं[2] यथा तथा स्वपिति अदेवकामः। सर्वैरेव गमनैः मारयतु विनाशयतु सः पोष्यम् धनम्। ततः तम् अन्तर्हिते देशे स्थापय ॥ ३ ॥

यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥ ४ ॥

यत् । शक्र । असि । पराऽवति । यत् । अर्वाऽवति । वृत्रऽहन् ।
अतः । त्वा । गीःऽभिः । द्युऽगत्[3] । इन्द्र । केशिऽभिः । सुतऽवान् । आ । विवासति ॥ ४ ॥

**वेङ्कट०** यदि शक्र! भवसि दूरे, यदि वा अन्तिके वृत्रहन्!। [4]अस्मात् देशात्[4] त्वां स्तुतिभिः दिवं प्रति गच्छद्भिः इन्द्र![5] केशिभिः अश्वैः यजमानः आ गमयति ॥ ४ ॥

यद्वासि रोचने दिवः समुद्रस्याधि विष्टपि ।
यत् पार्थिवे सदने वृत्रहन्तम यदन्तरिक्ष आ गहि ॥ ५ ॥

यत् । वा । असि । रोचने । दिवः । समुद्रस्य । अधि । विष्टपि ।
यत् । पार्थिवे । सदने । वृत्रहन्ऽतम । यत् । अन्तरिक्षे । आ । गहि ॥ ५ ॥

**वेङ्कट०** यत् वा भवसि दीप्ते द्युलोकस्य, यद्वा[6] समुद्रस्य विष्टपि तत् सम्बद्धे कस्मिंश्चित् स्थाने, यदि वा पार्थिवे स्थाने वृत्रहन्तम!, यदि वा अन्तरिक्षे, आ गच्छ ॥ ५ ॥

[7]इति षष्ठाष्टके षष्ठाध्याये षट्त्रिंशो वर्गः[7] ॥

---

१. आयथं वि[२]; अयं अ[१]. २. °नुव्रतस्व° मूको. ३. वैप १,१६७१ n द्र. ४-४. अस्मान् देशान् मूको. ५. इन्द्रम् मूको. ६. यथा मूको. ७-७. नास्ति मूको.

स नः सोमेषु सोमपाः सुतेषु शवसस्पते ।
मादयस्व राधसा सूनृतावतेन्द्र राया परीणसा ॥ ६ ॥

सः । नः । सोमेषु । सोमऽपाः । सुतेषु । शवसः । पते ।
मादयस्व । राधसा । सूनृताऽवता । इन्द्र । राया । परीणसा ॥ ६ ॥

**वेङ्कट०** सः अस्मान् सोमेषु हे सोमस्य पातः! सुतेषु बलस्य पते! मादयस्व अन्नेन[1] शब्दवता इन्द्र! धनेन च महता ॥ ६ ॥

मा न इन्द्र परा वृणग्भवा नः सधमाद्यः ।
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परा वृणक् ॥ ७ ॥

मा । नः । इन्द्र । परा । वृणक् । भव । नः । सधऽमाद्यः ।
त्वम् । नः । ऊती । त्वम् । इत् । नः । आप्यम् । मा । नः । इन्द्र । परा । वृणक् ॥ ७ ॥

**वेङ्कट०** मा अस्मान् इन्द्र! परित्याक्षीः । भव अस्माकं सोमेन सहमाद्यः । त्वम् अस्माकं रक्षिता । त्वम् एव अस्माकम् ज्ञातेयम् इति ॥ ७ ॥

अस्मे इन्द्र सचा सुते नि षदा पीतये मधु ।
कृधी जरित्रे मघवन्नवो महदस्मे इन्द्र सचा सुते ॥ ८ ॥

अस्मे इति । इन्द्र । सचा । सुते । नि । सद । पीतये । मधु ।
कृधि । जरित्रे । मघऽवन् । अवः । महत् । अस्मे इति । इन्द्र । सचा । सुते ॥ ८ ॥

**वेङ्कट०** अस्माभिः इन्द्र! समम्[2] अभिषुते सोमे नि सीद मधु पातुम् । कुरु स्तोत्रे[3] मघवन्! महत् रक्षणम् ॥ ८ ॥

न त्वा देवास आशत न मर्त्यासो अद्रिवः ।
विश्वा जातानि शवसाभिभूरसि न त्वा देवास आशत ॥ ९ ॥

न । त्वा । देवासः । आशत । न । मर्त्यासः । अद्रिऽवः ।
विश्वा । जातानि । शवसा । अभिऽभूः । असि । न । त्वा । देवासः । आशत ॥ ९ ॥

**वेङ्कट०** न त्वा देवा व्याप्नुवन्, न अपि मनुष्या वज्रिन्! । विश्वानि एव जातानि भूतानि त्वं बलेन अभिभूः भवसि ॥ ९ ॥

विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।
क्रत्वा वरिष्ठं वर आमुरिमुतोग्रमोजिष्ठं तवसं तरस्विनम् ॥ १० ॥

---

१. अन्ने मूको. २. सोम मूको. ३. °त्रम् मूको.

विश्वाः । पृतनाः । अभिऽभूतरम् । नरम् । सऽजूः । ततक्षुः । इन्द्रम् । जजनुः । च । राजसे ।
क्रत्वा । वरिष्ठम् । वरे । आऽमुरिम् । उत । उग्रम् । ओजिष्ठम् । तवसम् । तरस्विनम् ॥ १० ॥

**वेङ्कट०** सर्वाः एव पृतनाः अत्यन्तमभिभवितारम् नेतारम् सङ्गताः स्तुतिभिः तीक्ष्णमकुर्वन् इन्द्रम्, जनयामासुः च आत्मनो विराजनार्थम् । अपि च[1] कर्मणा वरिष्ठम् एनं मारकं शत्रूणाम् आत्मनः वरे च शत्रुधनार्थं[2] च कुर्वन्ति उद्गूर्णम् अतिशयेन बलिनम् वृद्धम् वेगवन्तम् ॥ १० ॥

[3]इति षष्ठाष्टके षष्ठाध्याये सप्तत्रिंशो वर्गः[3] ॥

सम्मीं रेभासो अस्वरन्निन्द्रं सोमस्य पीतये ।
स्वर्पतिं यदीं वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ११ ॥

सम् । ईम् । रेभासः । अस्वरन् । इन्द्रम् । सोमस्य । पीतये ।
स्वःऽपतिम् । यत् । ईम् । वृधे । धृतऽव्रतः । हि । ओजसा । सम् । ऊतिऽभिः ॥ ११ ॥

**वेङ्कट०** सम् अस्वरन् एनं स्तोतारः इन्द्रम् सोमस्य पानाय स्वर्गस्य पतिम् । यत् एनं वर्धनाय[4] संस्तुवन्ति, तदा धृतव्रतः हि इन्द्रः बलेन[5] स्तोतृभिः सम् गच्छते रक्षणैः ॥ ११ ॥

नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा ।
सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥ १२ ॥

नेमिम् । नमन्ति । चक्षसा । मेषम् । विप्राः । अभिऽस्वरा ।
सुऽदीतयः । वः । अद्रुहः । अपि । कर्णे । तरस्विनः । सम् । ऋक्वऽभिः ॥ १२ ॥

**वेङ्कट०** य इन्द्रः अरान् इव नेमिः[6] सर्वं परिभवति, तं दर्शनेन एव नमन्ति मेधातिथेः मेषम्[7] मेधाविनः अभिस्वरणेन[8] । सुदीप्तयः यूयम् अद्रोग्धारः चेति तान् विप्रान् आह । अपि च इन्द्रस्य कर्णे श्रोत्रसमीपे वेगवन्तः [9]सम् नमत अर्चनैः[9] मन्त्रैः इति ॥ १२ ॥

तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं शवांसि ।
मंहिष्ठो गीर्भिरा च यज्ञियो ववर्तद्राये नो विश्वा सुपथा कृणोतु वज्री ॥ १३ ॥

तम् । इन्द्रम् । जोहवीमि । मघऽवानम् । उग्रम् । सत्रा । दधानम् । अप्रतिऽस्कुतम् । शवांसि ।
मंहिष्ठः । गीःऽभिः । आ । च । यज्ञियः । ववर्तत् । राये । नः । विश्वा । सुऽपथा । कृणोतु । वज्री ॥ १३ ॥

**वेङ्कट०** तम् इन्द्रम् आह्वयामि धनवन्तम् उद्गूर्णम् सत्यम् एव बलानि दधानम् शत्रुभिः अप्रतिकृतम् ।

---

१. नास्ति मूको. २. शत्रुधं° मूको. ३-३. नास्ति मूको. ४. अव° मूको. ५. बले मूको. ६. नेमिम् मूको. ७. तु. माश ३,३,४,१८; षव्रा १,१ प्रभृ.; °ष मूको. ८. हिस्व मूको. ९-९. सह ··· अ° मूको.

पूज्यः[1] स्तुतिभिः आ च यज्ञियः वर्तते यज्ञेषु । धनाय अस्माकम् विश्वानि अपि सुपथा[2] सुमार्गाणि[3] करोतु वज्री इति ॥ १३ ॥

त्वं पुर इन्द्र चिकिदेना व्योजसा शविष्ठ शक्र नाशयध्यै ।
त्वद्विश्वानि भुवनानि वज्रिन् द्यावा रेजेते पृथिवी च भीषा ॥ १४ ॥

त्वम् । पुरः । इन्द्र । चिकित् । एनाः । वि । ओजसा । शविष्ठ । शक्र । नाशयध्यै ।
त्वत् । विश्वानि । भुवनानि । वज्रिन् । द्यावा । रेजेते इति । पृथिवी इति । च । भीषा ॥ १४ ॥

वेङ्कट० त्वम् एव एनानि पुराणि बलेन विनाशयितुम् चिकित् ज्ञाता[4] भवसि बलवत्तम! शक्र! इन्द्र!। त्वत् विश्वानि भुवनानि भीत्या कम्पन्ते वज्रिन्! द्यावापृथिवी च इति[5] ॥ १४ ॥

तन्म ऋतमिन्द्र शूर चित्र पात्वपो न वज्रिन् दुरिताति पर्षि भूरि ।
कदा न इन्द्र राय आ दशस्येर्विश्वप्स्न्यस्य स्पृहयाय्यस्य राजन् ॥ १५ ॥

तत् । मा । ऋतम् । इन्द्र । शूर । चित्र । पातु । अपः । न । वज्रिन् । दुःऽइता । अति । पर्षि । भूरि ।
कदा । नः । इन्द्र । रायः । आ । दशस्येः । विश्वऽप्स्न्यस्य । स्पृहयाय्यस्य । राजन् ॥ १५ ॥

वेङ्कट० तत् तव स्वभूतं सत्यम् इन्द्र! शूर! पूजनीय! मा रक्षतु[6] । स त्वम् उदकानि इव वज्रिन्! दुरितानि अति पारय[7] बहूनि । कदा अस्मभ्यम् इन्द्र! राजन्! धनम्[8] स्पृहणीयम् बहुरूपम् आभिमुख्येन दशस्येः इति ॥ १५ ॥

[9]इति षष्ठाष्टके षष्ठाध्याये अष्टात्रिंशो वर्गः[9] ॥

षष्ठस्य षष्ठमध्यायं व्याचकारेति माधवः ।
सङ्कर्षणानुजो यस्य भ्राताऽऽसीदनुजः कविः ॥

इति वेङ्कटमाधवाचार्यविरचिते ऋक्संहिताव्याख्याने षष्ठाष्टके षष्ठोऽध्यायः ॥

—*—

इति ऋग्वेदे सभाष्ये षष्ठाष्टके षष्ठोऽध्यायः ॥



१. °ज्यम् मूको. २. सुमां वि[2]. ३. सुर्गागि वि[1]. ४. ज्ञाना मूको. ५. इत्यर्थः अ[1]. ६. °न्तु मूको. ७. पात ··· मूको. ८. धनं धनं मूको. ९-९. नास्ति मूको.

अथ सप्तमोऽध्यायः ।

वेङ्कट०

[1]इन्द्राय साम गायत[1] व्याचिख्यासति माधवः ।
पादेपूनेषु वक्तव्यम् आदितः सम्प्रदर्शयन् ॥ १ ॥

व्यूहेदेकाक्षरीभावान्[2] पादेपूनेषु सम्पदे ।
क्षैप्रवर्णांश्च संयोगान्[3] व्यवेयात्[4] सदृशैः स्वरैः ॥ २ ॥

व्यूहेदेकारमृच्यस्यां[5] [6]'प्र इ॑ता जय॑ता नरः'[6] ।
'मि॒ता इ॑व स्वर॑वो(वः'[7] अ)ऽस्याम् ओकारो[8] व्यूह्यते तथा ॥ ३ ॥

'इकः स्थाने' प्रविष्टानां यणां संज्ञेयमिष्यते ।
यामाहुः क्षैप्रवर्णेति तेषां च व्यूह इष्यते ॥ ४ ॥

'अग्ने॑ चिकि॒द्धि अ॒स्य नः॑'[10], 'द्रु अन्नः स॒र्पिरा॑सुतिः'[11] ।
सन्धीनेवंविधान् व्यूहेत्[12] सम्पदर्थमिति स्थितिः ॥ ५ ॥

यस्येतिलोपलुप्तश्च पुनरानीयते तथा ।
'मर्तो॑ वुरीत सखियम्'[13] इति तत्र निदर्शनम् ॥ ६ ॥

समीचीना यदा वृत्तिर्न व्यूहेऽपि भवेदिह ।
न तदा व्यूहमिच्छन्ति तत्रैतल्लिङ्गदर्शनम् ॥ ७ ॥

'विश्वो॑ दे॒वस्य॑ ने॒तुः'[13] इत्यस्यामृचि श्रूयते ।
सप्ताक्षरं [14]प्रथमं पदमष्टाक्षराणि[14] त्रीणि ॥ ८ ॥

[15]न तु सन्धिनिमित्तोऽयं[15] वकारो विश्वगोचरः ।
अनुक्तस्तस्य च व्यूहो यस्माद् [16]व्यूहेऽपि नाक्षरम्[16] ॥ ९ ॥

अक्षरे पादक्लृप्तिः[17] स्यान्न च हल् केवलोऽक्षरम् ।
संयोगानामतो व्यूहो न कार्य इति बह्वृचाः ॥ १० ॥

---

१-१. नास्ति वि[2]. २. °वात् वि[2]. ३. °गात् वि[1] अ[1]. ४. व्यपेयात् वि[1]; नास्ति वि[1] अ[1]. ५. °काक्षरमृ° वि[2] अ[1]. ६-६. प्रति इता ज° वि[2] अ[1]; प्रेता जयता नरेति वेंऋअ; ऋ १०,१०३,१३. ७. ऋ ४,५१,२. ८. °एकारो वि[2] अ[1]; °ओकारं वेंऋअ. ९. उरुस्था° वि[2] अ[1]. १०. ऋ ५,२२,४. ११. ऋ २,७,६. १२. व्यूहे वि[2] अ[1]. १३. ऋ ५,५०,१. १४-१४. °थमपद° वेंऋअ. १५-१५. नन्वस° वि[1] अ[1]. १६-१६. व्यूहे विना° मूको. १७. पादकरेऽस्ति वि[2] अ[1].

भवतो[1] द्वौ यणादेशौ यदेकस्मिन् पदे तदा[2]।
तथा व्यूहेद् यणादेशं[3] यथा वृत्तिर्न दुष्यति ॥ ११ ॥
व्यूहे च वृत्त्यसिद्धिश्चेद्[4] व्यूहं नेच्छन्ति केचन।
व्यूहेनाक्षरसङ्ख्या च कार्यैवेत्याह माधवः ॥ १२ ॥

तदिमौ श्लोकौ भवतः— 'चत्वारि सन्धिजातानि यैश्छन्दो ह्रसते[5] न च।
प्रश्लिष्टमभिनिहितं[6] क्षिप्रसन्धिरभिद्रुतम्[7] ॥
एतानि सन्धिजातानि मिमानश्छन्दसोऽक्षरैः[8]।
द्वैधं कुर्यादसम्पूर्णे न पूर्णे किञ्चनेङ्गयेत् ॥' इति ॥

गुणो वृद्धिश्च दीर्घश्च प्रश्लिष्टाः सन्धयः स्मृताः।
'एङः पदान्तादती(ति[9] इ)ति सन्तोऽभिनिहितं[10] विदुः ॥ १३ ॥
[11]प्रायोऽर्थो वृत्तमित्येते[11] पदज्ञानस्य[12] हेतवः।
[13]बलीयः स्याद्[13] विरोधे च पूर्वं पूर्वमिति स्थितिः ॥ १४ ॥ इति ॥

'अग्निमीळे पुरोहितम्'[14] इति गायत्रीभिः सह पाठात् गायत्रो वा पादोऽवान्तरश्चार्थः[15] तस्मिन्नेव संस्थितस्तथावृत्तियुक्तश्च भवति। प्रायार्थयोर्विरोधे[16] प्रायबलीयस्त्वात् 'त्वं चकर्थ मनवे स्योनान्'[17] इति पादान्तः[18]। यद्यर्थबलीयस्त्वं भवति 'स्योनान्पथः' इति पादान्तः[19] स्यात्, 'अग्निः पूर्वेभिर्ऋषिभिरीड्यः'[20] इति च। 'ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिः'[21] इति च। प्रायवृत्तविरोधे प्रायबलीयस्त्वात् 'प्रत्यग्रभीष्म नृतमस्य नृणाम्'[22] इत्येकादशाक्षर एव भवति न विकर्षेण द्वादशाक्षरः अर्थवृत्तविरोधेऽर्थबलीयस्त्वाद्[23] 'यदग्ने स्यामहं त्वम्'[24] इति पादान्तः। न वृत्ताद् अहम् इति। एवं[25] सर्वत्र बोद्धव्यमिति[26]।

## [ ९८ ]

[27]नृमेध आङ्गिरस ऋषिः। इन्द्रो देवता। उष्णिक् छन्दः, सप्तमीदशम्येकादश्यः ककुभः, नवमीद्वादश्यौ पुरउष्णिहौ[27]।

**इन्द्रा॑य॒ साम॑ गायत॒ विप्रा॑य बृ॒हते॑ बृ॒हत्। ध॒र्म॒कृते॑ विप॒श्चिते॑ पन॒स्यवे॑ ॥ १ ॥**

इन्द्रा॑य। साम॑। गा॒य॒त॒। विप्रा॑य। बृ॒हते॑। बृ॒हत्। ध॒र्म॒ऽकृते॑। वि॒पः॒ऽचिते॑। प॒न॒स्यवे॑ ॥ १ ॥

---

१. °वतां वि[2] अ[1]. २. तथा वि[2] अ[1]. ३. … णादेशः वि[2]; … यणादेशः अ[1]. ४. प्रत्यसि° वि[1,2] अ[1]. ५. ह्रयते वि[1,2] अ[1]. ६. °निहतं वेंकअ. ७. °सन्ध्युपद्रु° वि[2] अ[1]. ८. °इछन्दो अक्षरे वि[2] अ[1]. ९. पा ६,१,१०९. १०. सन्धोभि° वि[2] अ[1]. ११-११. प्रयोगोऽर्थो वृत्तिरेते वेंकअ. १२. पाद° ऋप्रा १७,२५. १३-१३. बलीयस्य वि[2] अ[1]. १४. ऋ १,१,१. १५. °र्थम् वि[2] अ[1]. १६. प्रर्थायो° वि[2] अ[1]. १७. ऋ १०,७३,७. १८. °न्तः … मूको. १९. °दान्तर वि[2] अ[1]; °दान्त वि[1]. २०. ऋ १,१,२. २१. ऋ १,३६,१३. २२. ऋ ५,३०,१२. २३. °वृत्तिवि° वि[2] अ[1]. २४. ऋ ८,४४,२३. २५. प्रवृ° वि[2] अ[1]. २६. बोध्यमि° वि[1]. २७-२७. नास्ति मूको.

वेङ्कट० नृमेध[1] आङ्गिरसः। इन्द्राय साम गायत मेधाविने महते बृहन्नाम कर्मणः कर्त्रे विज्ञाय[2] स्तुतिमिच्छते ॥ १ ॥

त्वमिन्द्राभिभूरसि त्वं सूर्यमरोचयः। विश्वकर्मा विश्वदेवो महाँ असि ॥ २ ॥

त्वम्। इन्द्र। अभिऽभूः। असि। त्वम्। सूर्यम्। अरोचयः।
विश्वऽकर्मा। विश्वऽदेवः। महान्। असि ॥ २ ॥

वेङ्कट० त्वम् इन्द्र! अभिभविता भवसि। त्वम् सूर्यम् अरोचयः। विश्वस्य कर्ता विश्वदेवः सर्वदेवः। 'अग्निं वा अन्वन्या देवताः। इन्द्रमन्वन्याः' (तैब्रा ३,७,१,८) इति ब्राह्मणम्। महान् भवसि ॥ २ ॥

विभ्राजञ्ज्योतिषा स्व१रगच्छो रोचनं दिवः। देवास्त इन्द्र सख्याय येमिरे ॥ ३ ॥

[3]विऽभ्राजन्। ज्योतिषा। स्वः। अगच्छः। रोचनम्। दिवः[3]। देवाः। ते। इन्द्र। सख्याय। येमिरे ॥ ३ ॥

वेङ्कट० प्रकाशयन् ज्योतिषा स्वर्गम् अगच्छः दिवः आदित्यस्य रोचनम्। देवाः ते इन्द्र! सख्याय आत्मानं नियतवन्तः[4] ॥ ३ ॥

एन्द्र नो गधि प्रियः सत्राजिदगोह्यः। गिरिर्न विश्वतस्पृथुः पतिर्दिवः ॥ ४ ॥

आ। इन्द्र। नः। गधि। प्रियः। सत्राऽजित्। अगोह्यः। गिरिः। न। विश्वतः। पृथुः। पतिः। दिवः ॥ ४ ॥

वेङ्कट० आ गच्छ इन्द्र! अस्मान् प्रियतमः महतो जेता गूहितुमशक्यः[5] पर्वतः इव सर्वतः पृथुतमः स्वामी[6] दिवः ॥ ४ ॥

अभि हि सत्य सोमपा उभे बभूथ रोदसी। इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥ ५ ॥

अभि। हि। सत्य। सोमऽपाः। उभे इति। बभूथ। रोदसी इति।
इन्द्र। असि। सुन्वतः। वृधः। पतिः। दिवः ॥ ५ ॥

वेङ्कट० [7]अभि बभूथ[7] हि सत्य! सोमस्य पातः! उभे द्यावापृथिव्यौ। स त्वम् इन्द्र! असि सुन्वतः वर्धयिता [8]पतिः दिवः[8] ॥ ५ ॥

त्वं हि शश्वतीनामिन्द्र दर्ता पुरामसि। हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ॥ ६ ॥

[9]त्वम्। हि। शश्वतीनाम्। इन्द्र। दर्ता। पुराम्। असि[9]। हन्ता। दस्योः। मनोः। वृधः। पतिः। दिवः ॥ ६ ॥

---

१. नृमेधमिति वि[2]. २. मेधाविने विज्ञाय वि[1]; मेधाविज्ञाय वि[2] अ[1]. ३-३. = ऋ १०,१७०,४. ४. °यमवन्तः वि[2] अ[1]. ५. ग्रही° मूको. ६. स्वा वि[2] अ[1]. ७-७. आविभ वि[2] अ[1]. ८-८. नास्ति वि[1]. ९-९. तु. ऋ ८,१७,१४.

वेङ्कट० [1]त्वम् हि बह्वीनाम् इन्द्र! दारयिता पुराम् भवसि, हन्ता उपक्षपयितुः, अस्य मनुष्यस्य च वर्धयिता, पतिः दिवः[1] ॥ ६ ॥

[2]इति षष्ठाष्टके सप्तमाध्याये प्रथमो वर्गः[2] ॥

अधा हीन्द्र गिर्वण उप त्वा कामान् महः ससृज्महे । उदेव यन्त उदभिः ॥७॥

अध । हि । इन्द्र । गिर्वणः । उप । त्वा । कामान् । महः । ससृज्महे । उदाऽइव । यन्तः । उदऽभिः ॥ ७ ॥

वेङ्कट० [1]सम्प्रति इन्द्र! गिर्वणः! त्वां वयम् कामान् कमनीयान् स्तोमान्[3] उप सृजामः प्रापयामः त्वां स्तोमान् बहून्, यथा उदकेन गच्छन्तः पुरुषा अञ्जलिनोत्क्षिप्य उदकैः समीपस्थान्[4] संसृजन्ति इति ॥ ७ ॥

वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि । वावृध्वांसं चिदद्रिवो दिवेदिवे ॥ ८ ॥

वाः । न । त्वा । यव्याभिः । वर्धन्ति । शूर । ब्रह्माणि । ववृध्वांसम् । चित् । अद्रिऽवः । दिवेऽदिवे ॥ ८ ॥

वेङ्कट० यथा उदकं नदीभिः वर्धयन्ति, तथा त्वाम् शूर! स्तोत्रैः[5] वर्धयन्ति वृद्धम् एव वज्रिन्! अन्वहम्। न तु यथा निरुदकं देशं नदीभिः तद्वत् इति ॥ ८ ॥

युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे । इन्द्रवाहा वचोयुजा ॥ ९ ॥

युञ्जन्ति । हरी इति । इषिरस्य । गाथया । उरौ । रथे । उरुऽयुगे । इन्द्रऽवाहा । वचःऽयुजा ॥ ९ ॥

वेङ्कट० युञ्जन्ति अश्वौ गमनशीलस्य स्तोतारः वाचा महति महायुगे रथे इन्द्रस्य वाहनभूतौ वचनमात्रेणैव युज्यमानौ इति ॥ ९ ॥

त्वं न इन्द्रा भरँ ओजो नृम्णं शतक्रतो विचर्षणे । आ वीरं पृतनाषहम् ॥ १० ॥

त्वम् । नः । इन्द्र । आ । भर । ओजः । नृम्णम् । शतक्रतो इति शतऽक्रतो । विऽचर्षणे । आ । वीरम् । पृतनाऽसहम् ॥ १० ॥

वेङ्कट० त्वम् अस्मभ्यम् इन्द्र! आ हर बलम् धनम् च हे बहुकर्मन्! विद्रष्टः! वीरम् च सेनाम्[6] अभिभवितारम् ॥ १० ॥

त्वं हि नः पिता वसो त्वं माता शतक्रतो बभूविथ । अधा ते सुम्नमीमहे ॥ ११ ॥

त्वम् । हि । नः । पिता । वसो इति । त्वम् । माता । शतक्रतो इति शतऽक्रतो । बभूविथ । अध । ते । सुम्नम् । ईमहे ॥ ११ ॥

---

१-१. नास्ति वि[1]. २-२. नास्ति मूको. ३. नास्ति वि[1]. ४. °स्थानाम् वि[1]. ५. स्तोत्रैः वि[1] अ[1]. ६. सेनानाम् अ[1].

वेङ्कट० त्वम् हि अस्माकम् पिता अभवः वासयितः!, त्वम् माता च शतक्रतो! । अथ तव स्वभूतं सुखम् याचामहे ॥ ११ ॥

त्वां शुष्मिन् पुरुहूत वाजयन्तमुप ब्रुवे शतक्रतो । स नो रास्व सुवीर्यम् ॥१२॥

त्वाम् । शुष्मिन् । पुरुऽहूत । वाजऽयन्तम् । उप । ब्रुवे । शतक्रतो इति शतऽक्रतो ।
सः । नः । रास्व । सुऽवीर्यम् ॥ १२ ॥

वेङ्कट० त्वाम् बलवन्![1] पुरुहूत! बलमिच्छन्तम् उप स्तौमि शतक्रतो! । सः नः देहि सुवीर्यम् धनम् ॥ १२ ॥

[2]इति षष्ठाष्टके सप्तमाध्याये द्वितीयो वर्गः[2] ॥

[ ९९ ]

[2]नृमेध आङ्गिरस ऋषिः । इन्द्रो देवता । प्रगाथश्छन्दः (=विषमा बृहत्यः, समा सतोबृहत्यः)[2] ।

त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः ।
स इन्द्र स्तोमवाहसामिह श्रुध्युप स्वसरमा गहि ॥ १ ॥

त्वाम् । इदा । ह्यः । नरः । अपीप्यन् । वज्रिन् । भूर्णयः ।
सः । इन्द्र । स्तोमऽवाहसाम् । इह । श्रुधि । उप । स्वसरम्[3] । आ । गहि ॥ १ ॥

वेङ्कट० त्वाम् अद्य ह्यः च भरणशीलाः यजमानाः सोमम् अपाययन्[4] वज्रिन्! । सः इन्द्र! स्तोत्रवाहसाम्[5] अस्माकं स्तोत्रम्[6] इह श्रुधि, उप आ गच्छ[7] च स्वसरम्[8] गृहम् इति ॥ १ ॥

मत्स्वा सुशिप्र हरिवस्तदीमहे त्वे आ भूषन्ति वेधसः ।
तव श्रवांस्युपमान्युक्थ्या सुतेष्विन्द्र गिर्वणः ॥ २ ॥

मत्स्व । सुऽशिप्र । हरिऽवः । तत् । ईमहे । त्वे इति । आ । भूषन्ति । वेधसः ।
तव । श्रवांसि । उपऽमानि । उक्थ्या । सुतेषु । इन्द्र । गिर्वणः ॥ २ ॥

वेङ्कट० सोमेन मत्स्व सुशिप्र! हरिवः! । तत् वयं याचामहे । [9]त्वयि आ[9] भवन्ति परिचारकाः । किं याच्यम्[10] इत्याह — तव अन्नानि उपमानभूतानि प्रशस्यानि सुतेषु सोमेषु इन्द्र! गिर्वणः! ॥ २ ॥

श्रायन्तइव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ॥ ३ ॥

---

१. शुष्मिन् वि[1]. २-२. नास्ति मूको. ३. या. (५,४) अर्थो निर्वचनञ्च विमृश्यम् । वैप १,३५३३ h द्र. ४. अपायत् वि[2] अ[1]. ५. स्तोत्र स्तोत्र याहसाम् वि[2] अ[1]. ६. श्रोत्रम् मूको. ७. °च्छत् मूको. ८. स्वरम् वि[2] अ[1]. ९-९. त्वयां मूको. १०. वाच्यम् मूको.

आऽर्यन्तःऽइव । सूर्यम् । विश्वा । इत् । इन्द्रस्य । भक्षत ।
वसूनि । जाते । जनमाने । ओजसा । प्रति । भागम् । न । दीधिम ॥ ३ ॥[1]

**वेङ्कट०** यथा समाश्रिता रश्मयः सूर्यम् भजन्ते, एवम् इन्द्रस्य विश्वानि एव धनानि भजत। सः[2] वसूनि जाते जनिष्यमाणे च बलेन करोति। तथा सति पित्र्यम् इव[3] भागम् तानि धनानि प्रति धारयेमेति ॥ ३ ॥

अनर्शरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥ ४ ॥

अनर्शऽरातिम् । वसुऽदाम् । उप । स्तुहि । भद्राः । इन्द्रस्य । रातयः ।
सः । अस्य । कामम् । विधतः । न । रोषति । मनः । दानाय । चोदयन् ॥ ४ ॥

**वेङ्कट०** 'अनर्शरातिम्[4] अनश्लीलदानम्' इति यास्कः (६,२३)। वसूनां दातारं स्तोतः! उप स्तुहि[5]। भद्राः इन्द्रस्य रातयः। सः अस्य कामम् परिचरतः[6] न हिनस्ति स्वमनः दानाय प्रेरयन् ॥ ४ ॥

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ॥ ५ ॥

त्वम् । इन्द्र । प्रऽतूर्तिषु । अभि । विश्वाः । असि । स्पृधः ।
अशस्तिऽहा । जनिता । विश्वऽतूः । असि । त्वम् । तूर्य । तरुष्यतः ॥ ५ ॥

**वेङ्कट०** त्वम् इन्द्र! सङ्ग्रामेषु अभि भवसि विश्वाः स्पृधः। अशस्तीनां हन्ता जनयिता च अशस्तीनाम् असुरेभ्यः विश्वस्य हिंसिता भवसि। त्वम् बाधस्व[7] बाधकान्[8] ॥ ५ ॥

अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ ६ ॥

अनु । ते । शुष्मम् । तुरयन्तम् । ईयतुः । क्षोणी इति । शिशुम् । न । मातरा ।
विश्वाः । ते । स्पृधः । श्नथयन्त । मन्यवे । वृत्रम् । यत् । इन्द्र । तूर्वसि ॥ ६ ॥

**वेङ्कट०** अनु गच्छतः तव बलम् बाधमानं शत्रुम् द्यावापृथिव्यौ शिशुम् इव मातरौ। विश्वाः एव सङ्ग्रामकारिण्यः सेनाः तव क्रोधाय श्नथिताः भिन्नाः भवन्ति, शत्रुम् यत् इन्द्र! हंसि ॥ ६ ॥

इत ऊती वो अजरं प्रहेतारमप्रहितम् ।
आशुं जेतारं हेतारं रथीतममतूर्तं तुग्र्यावृधम् ॥ ७ ॥

---

१. इह या० (६,८) अनुसंधेयः। २. नास्ति वि[1]. ३. एव वि[2] अ[1]. ४. नास्ति मूको. ५. शृद्धि वि[2] अ[1]. ६. °चरन्तः वि[2] अ[1]. ७. बाधकस्य मूको. ८. °कात् वि[2] अ[1].

इतः । ऊती । वः । अजरम् । प्रऽहेतारम् । अप्रऽहितम् ।
आशुम् । जेतारम् । हेतारम् । रथिऽतमम् । अतूर्तम् । तुग्र्यऽवृधम् ॥ ७ ॥

**वेङ्कट०** इतः कुरुत यूयं रक्षणाय अजरम्[1] शत्रूणां प्रेरकम् अप्रहितम्[2] आशुम् जेतारम्[3] गन्तारम्[4] रथितमम् अहिंसितम् उदकस्य वर्धयितारम् ॥ ७ ॥

इष्कर्तारमनिष्कृतं सहस्कृतं शतमूतिं शतक्रतुम् ।
समानमिन्द्रमवसे हवामहे वसवानं वसूजुवम् ॥ ८ ॥

इष्कर्तारम् । अनिःऽकृतम् । सहःऽकृतम् । शतम्ऽऊतिम् । शतऽक्रतुम् ।
समानम् । इन्द्रम् । अवसे । हवामहे । वसवानम् । वसुऽजुवम् ॥ ८ ॥

**वेङ्कट०** संस्कर्तारं स्तोतॄणाम् असंस्कृतम्[5] अन्यैः बलेन कृतं बहुरक्षणं बहुप्रज्ञं बहूनाम् समानम् इन्द्रम् रक्षणाय हवामहे वसूनि आच्छादयन्तम् वसूनां प्रेरकम् इति ॥ ८ ॥

[6]इति षष्ठाष्टके सप्तमाध्याये तृतीयो वर्गः[6] ॥

## [ १०० ]

[1]नेमो भार्गव ऋषिः, चतुर्थीपञ्चम्योश्च इन्द्रः । इन्द्रो देवता, अष्टम्याः सुपर्णः, नवम्या वज्रो वा, दशम्येकादश्योः वाक् । त्रिष्टुप् छन्दः, षष्ठी जगती, सप्तम्यष्टमीनवम्यः अनुष्टुभः[1] ।

अयं त एमि तन्वा पुरस्ताद्विश्वे देवा अभि मा यन्ति पश्चात् ।
यदा मह्यं दीधरो भागमिन्द्रादिन्मया कृणवो वीर्याणि ॥ १ ॥

अयम् । ते । एमि । तन्वा । पुरस्तात् । विश्वे । देवाः । अभि । मा । यन्ति । पश्चात् ।
यदा । मह्यम् । दीधरः । भागम् । इन्द्र । आत् । इत् । मया । कृणवः । वीर्याणि ॥ १ ॥

**वेङ्कट०** नेमो भार्गवः । शत्रून् अभिभवितुम् अयम् ते अग्रतः गच्छामि पुत्रेण सह । तथा गच्छन्तं मां त्वया सह सर्वे देवाः अभि गच्छन्ति पश्चात् । यदा त्वम् मह्यम् शत्रुषु स्थितम् भागम् धारयसि इन्द्र!, अनन्तरम् एव मया सह मच्छत्रुं जेतुम् वीर्याणि कुर्याः । शत्रुजयार्थं गच्छतः सपुत्रस्य मम साहाय्यं[7] कुरु, यदि शत्रुधनं मह्यं दित्ससि इति ॥ १ ॥

दधामि ते मधुनो भक्षमग्रे हितस्ते भागः सुतो अस्तु सोमः ।
असश्च त्वं दक्षिणतः सखा मेऽधा वृत्राणि जङ्घनाव भूरि ॥ २ ॥

---

१. अजनुम् वि[2] अ[1]. २. अप्रतिहतम वि[2]. ३. नास्ति वि[2]. ४. नास्ति वि[2] अ[1]. ५. संस्कृ° वि[2] अ[1]. ६-६. नास्ति मूको. ७. सहायं अ[1].

दधामि । ते । मधुनः । भक्षम् । अग्रे । हितः । ते । भागः । सुतः । अस्तु । सोमः ।
[1]असः । च । त्वम् । दक्षिणतः । सखा । मे । अध । वृत्राणि । जङ्घनाव । भूरि[1] ॥ २ ॥

वेङ्कट० धारयामि तुभ्यं सोमस्य भक्षम्[2] प्रथमम् । निहितः तव हृदये भवतु भजनीयः सुतः सोमः । भव च त्वम् मम दक्षिणपार्श्वे स्थितः सखा सन् । अथ त्वं च अहं च बहून् अस्मदीयान् शत्रून्[3] हन्वः ॥ २ ॥

प्र सु स्तोमं भरत वाजयन्त इन्द्राय सत्यं यदि सत्यमस्ति ।
नेन्द्रो अस्तीति नेम उ त्व आह क ईं ददर्श कमभि ष्टवाम ॥ ३ ॥

प्र । सु । स्तोमम् । भरत । वाजऽयन्तः । इन्द्राय । सत्यम् । यदि । सत्यम् । अस्ति ।
न । इन्द्रः । अस्ति । इति । नेमः । ऊँ इति । त्वः । आह । कः । ईम् । ददर्श । कम् । अभि । स्तवाम ॥ ३ ॥

वेङ्कट० प्र हरत सुष्ठु स्तोमम् सङ्ग्राममिच्छन्तः यूयम् इन्द्राय सत्यभूतम्, यदि सत्यम् नाम किञ्चित् विद्यते । सत्यास्तित्वे कः सन्देहः । तत्र आह — न इन्द्रः नाम कश्चित् विद्यते इति नेमः एव अयं भार्गवः कश्चित् वदति, कः एनम् इन्द्रम् ददर्श, कम् वयम् अभि ष्टवाम । तस्मादिन्द्रो नाम कश्चित् विद्यत इति वादमात्रम् एव, न तु तत् सत्यम् इति ॥ ३ ॥

अयमस्मि जरितः पश्य मेह विश्वा जातान्यभ्यस्मि मह्ना ।
ऋतस्य मा प्रदिशो वर्धयन्त्यादर्दिरो भुवना दर्दरीमि ॥ ४ ॥

अयम् । अस्मि । जरितरिति । पश्य । मा । इह । [4]विश्वा । जातानि । अभि । अस्मि । मह्ना[4] ।
ऋतस्य । मा । प्रऽदिशः । वर्धयन्ति । आऽदर्दिरः । भुवना । दर्दरीमि ॥ ४ ॥

वेङ्कट० ऋषिवचनम् आकर्ण्य इन्द्र आजगाम । आगतः सन् आत्मानं द्वाभ्यां स्तौति । अयम् अहम् अस्मि स्तोतः!, पश्य माम् इह स्थितम् । विश्वानि जातानि अभि भवामि अहं महत्त्वेन । सत्यस्य यज्ञस्य वा प्रदेष्टारः माम् वर्धयन्ति[5] । आदरणशीलोऽहं भुवनानि शत्रुभूतानि दर्दरीमि ॥ ४ ॥

आ यन्मा वेना अरुहन्नृतस्यँ एकमासीनं हर्यतस्य पृष्ठे ।
मनश्चिन्मे हृद आ प्रत्यवोचदचिक्रदञ्छिशुमन्तः सखायः ॥ ५ ॥

आ । यत् । मा । वेनाः । अरुहन् । ऋतस्य । एकम् । आसीनम् । हर्यतस्य । पृष्ठे ।
मनः । चित् । मे । हृदे । आ । प्रति । अवोचत् । अचिक्रदन् । शिशुऽमन्तः । सखायः ॥ ५ ॥

वेङ्कट० यदा मां यज्ञं कामयमानाः आ अरुहन् एकम् आसीनम् कान्तस्य अन्तरिक्षस्य पृष्ठे, तदानीं तेषां

१-१. तु. ऋ १०,८३,७. २. भरक्षम वि[2] अ[1]. ३. शत्रूणाम् वि[1] अ[1]. ४-४. तु ऋ ६,२५,५; ८,८८,४; १०,१५३,५. ५. °न्तीति अ[1].

भवताम् आरोहम् मनः एव मम हृदयाय प्रति अवोचत् — अज्ञासिषं तव आह्वानम्। क्रन्दन्ति अमी पुत्रयुक्ताः सखायः माम् इति ॥ ५ ॥

**विश्वेत् ता ते सवनेषु प्रवाच्या या चकर्थ मघवन्निन्द्र सुन्वते ।**
**पारावतं यत् पुरुसंभृतं वस्वपावृणोः शरभाय ऋषिबन्धवे ॥ ६ ॥**

विश्वा । इत् । ता । ते । सवनेषु । प्रऽवाच्या । या । चकर्थ । मघऽवन् । इन्द्र । सुन्वते ।
पारावतम् । यत् । पुरुऽसंभृतम् । वसु । अपऽअवृणोः । शरभाय । ऋषिऽबन्धवे ॥ ६ ॥

**वेङ्कट०** ऋषिस्तु तं दृष्ट्वा सुप्रीतः 'विश्वेत्ता ते' इति द्वयृचेन विविधानि च कर्माणि दानं मैत्रं च शंसति — विश्वानि एव तानि कर्माणि तव सवनेषु प्रवाच्यानि[1], यानि चकर्थ '[2]त्वम् मघवन्! इन्द्र! सुन्वते[2] यजमानाय[3]। परावन्नाम्नः कस्य चित् स्वभूतम् यत् त्वम् पुरुसंभृतम्[4] धनम् अपावृणोः शरभनाम्न ऋषये[5] इति। बहु च संभृतं च पुरुसंभृतम् इति ॥ ६ ॥

[6]इति षष्ठाष्टके सप्तमाध्याये चतुर्थो वर्गः[6] ॥

**प्र नूनं धावता पृथङ् नेह यो वो अवावरीत् ।**
**नि षीं वृत्रस्य मर्मणि वज्रमिन्द्रो अपीपतत् ॥ ७ ॥**

प्र । नूनम् । धावत । पृथक् । न । इह । यः । वः । अवावरीत् ।
नि । सीम् । वृत्रस्य । मर्मणि । वज्रम् । इन्द्रः । अपीपतत् ॥ ७ ॥

**वेङ्कट०** प्र धावत इदानीम् [7]पृथक्। इह न[7] तिष्ठति यः प्रतिगते तदा युष्मान् निवारयति। नि अपीपतत् शत्रोः मर्मणि वज्रम् इन्द्रः ॥ ७ ॥

**मनोजवा अयमान आयसीमतरत् पुरम् । दिवं सुपर्णो गत्वाय सोमं वज्रिण आभरत् ।८।**

मनःऽजवाः । अयमानः । आयसीम् । अतरत् । पुरम् ।
दिवम् । सुऽपर्णः । गत्वाय । सोमम् । वज्रिणे । आ । अभरत् ॥ ८ ॥

**वेङ्कट०** मनोवेगः गच्छन् आयसीम् अतरत् पुरम्। दिवम्[8] सुपर्णः[9] गत्वा सोमम् इन्द्राय आ अभरत् ॥ ८ ॥

**समुद्रे अन्तः शयत उद्ना वज्रो अभीवृतः । भरन्त्यस्मै संयतः पुरःप्रस्रवणा बलिम् ॥९॥**

समुद्रे । अन्तः । शयते । उद्ना । वज्रः । अभिऽवृतः ।
भरन्ति । अस्मै । सम्ऽयतः । पुरःऽप्रस्रवणाः । बलिम् ॥ ९ ॥

---

१. वाच्यानि वि[२] अ[१]. २-२. त्वमघवन्ति भू सु° वि अ[१]. ३. सजमा° वि[२]. ४. नास्ति मूको. ५. ऋषभ वि[२] अ[१]. ६-६. नास्ति मूको. ७-७. प्रयच्छ वि[२]; पृथच्छ अ[१]. ८. नास्ति वि[२]. ९. सुव° मूको.

**वेङ्कट०** समुद्रस्य अन्तः शेते उदकेन वज्रः परिवर्जितः। तस्मै वज्राय सङ्ग्रामस्य पुरःप्रस्रवणाः पुरस्ताद् गच्छन्तः बलिम् हरन्ति। तस्य छेद्या भवन्तीत्यर्थः ॥ ९ ॥

यद्वाग्वद॑न्त्यविचेत॒नानि॒ राष्ट्री॑ दे॒वानां॑ निष॒साद॑ म॒न्द्रा ।
चत॑स्र॒ ऊर्जं॑ दुदुहे॒ पयां॑सि॒ क्व॑ स्विदस्याः पर॒मं ज॑गाम ॥ १० ॥

यत् । वाक् । वद॑न्ती । अ॒वि॒ऽचे॒त॒नानि॑ । राष्ट्री॑ । दे॒वाना॑म् । नि॒ऽस॒साद॑ । म॒न्द्रा ।
चत॑स्रः । ऊर्ज॑म् । दु॒दु॒हे॒ । पयां॑सि । क्व॑ । स्वि॒त् । अ॒स्याः॒ । प॒र॒मम् । ज॒गा॒म॒ ॥ १० ॥

**वेङ्कट०** यदा वाक् वदन्ती प्रज्ञापयन्ती[1] विज्ञानरहितान् अप्रज्ञातानर्थान्, राजनशीला[2] देवानाम् मदना[3] निषीदति यज्ञे, तदानीम् चतस्रः दिशः अन्नम् दुदुहे सा उदकानि च। [4]क्व स्वित्[4] अस्याः परमम् पदम् जगाम क्व सन्तिष्ठते। अत्र यास्कः (११, २८)—'यद् वाग् वदन्त्यविचेतनानि अविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना[5] चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि। क्व स्विदस्याः परमं जगामेति यत् पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा' इति ॥१०॥

दे॒वीं वाच॑मजनयन्त दे॒वास्तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति ।
सा नो॑ म॒न्द्रेष॒मूर्जं॒ दुहा॑ना धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॑ ॥ ११ ॥

दे॒वीम् । वाच॑म् । अ॒ज॒न॒य॒न्त॒ । दे॒वाः । ताम् । वि॒श्वऽरू॑पाः । प॒शव॑ः । व॒द॒न्ति॒ ।
सा । नः॒ । म॒न्द्रा । इष॑म् । ऊर्ज॑म् । दु॒हा॑ना । धे॒नुः । वाक् । अ॒स्मान् । उप॑ । सुऽस्तु॑ता । आ । ए॒तु॒ ॥ ११ ॥

**वेङ्कट०** यास्कः (११,२९)—'देवीं वाचमजनयन्त देवाः। तां सर्वरूपाः[6] पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च। सा नो मदनान्नं च रसं च दुहाना धेनुर्वाग् अस्मान् उपैतु सुष्टुता'। इन्द्रसाहचर्यात् माध्यमिका वागत्र स्तुतेति ॥ ११ ॥

सखे॑ विष्णो वित॒रं वि क्र॑मस्व॒ द्यौर्दे॒हि लो॒कं वज्रा॑य वि॒ष्कभे॑ ।
हना॑व वृ॒त्रं रि॒णचा॑व॒ सिन्धू॒निन्द्र॑स्य यन्तु प्रस॒वे विसृ॑ष्टाः ॥ १२ ॥

सखे॑ । वि॒ष्णो॒ इति॑ । वि॒ऽत॒रम् । वि । क्र॒म॒स्व॒ । द्यौः । दे॒हि । लो॒कम् । वज्रा॑य । वि॒ऽस्कभे॑ ।
हना॑व । वृ॒त्रम् । रि॒णचा॑व । सिन्धू॑न् । इन्द्र॑स्य । य॒न्तु॒ । प्र॒ऽस॒वे । वि॒ऽसृ॑ष्टाः ॥ १२ ॥

**वेङ्कट०** शौनकः— "त्रीँल्लोकानभितप्येमान्[7] वृत्रस्तस्थौ स्वया त्विषा।
तं नाशकद्धन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ॥
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[8] ममान्तिके।
उद्यतस्यैव वज्रस्य द्यौर्ददातु[9] ममान्तरम् ॥

---

१. न्ति॰ मूको. २. राजानः शी॰ मूको. ३. मोदना वि[२]. ४-४. कश्चित् वि[१] अ[१]; कश्चित् वि[२]. ५. नास्ति मूको. ६. विश्वरूपाः अ[१]. ७. ॰भिवृत्यैकाद् वि[१] अ[१]; ॰भिवृत्यैतान् वि[२]. ८. ॰क्रमाद्य वि[१] अ[१]. ९. ॰धातु वि[१] अ[१].

तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरं ददौ ।
तदेतदखिलं प्रोक्तं 'सखे विष्णो' इति त्वृचा" (बृदे ६,१२१-१२४) ॥ इति ।

**वेङ्कट०** [1]हे सखे! विष्णो![1] त्वम् अत्यन्तम् वि क्रमस्व । द्यौः! देहि अवकाशं वज्रस्य विष्कम्भनाय । हनाव त्वम् च अहम् च [2]विष्णो! वृत्रम् । रिणचाव गमयाव[2] वृत्रावष्टब्धान् सिन्धून् । त इमे सिन्धवः इन्द्रस्य प्रसवे विसृष्टाः यन्तु इति ॥ १२ ॥

[1]इति षष्ठाष्टके सप्तमाध्याये पञ्चमो वर्गः[1] ॥

## [ १०१ ]

[1]जमदग्निर्भार्गव ऋषिः । मित्रावरुणौ देवता, पञ्चम्या मित्रावरुणादित्याः, षष्ठ्या आदित्याः, सप्तम्यष्टम्योः अश्विनौ, नवमीदशम्योः वायुः, एकादशीद्वादश्योः सूर्यः, त्रयोदश्याः उषाः सूर्यप्रभा वा, चतुर्दश्याः पवमानः, पञ्चदशीषोडश्योः गौः । प्रथमाद्वितीये प्रगाथः (=प्रथमा बृहती, द्वितीया सतोबृहती ), तृतीया गायत्री, चतुर्थी सतोबृहती, पञ्चम्यादित्रयोदश्यन्ताः प्रगाथः (=विषमा बृहत्यः, समाः सतोबृहत्यः ), अन्त्यास्तिस्रस्त्रिष्टुभः[1] ।

**ऋधगित्था स मर्त्यः शशमे देवतातये ।**
**यो नूनं मित्रावरुणावभिष्टय आचक्रे हव्यदातये ॥ १ ॥**

ऋधक् । इत्था । सः । मर्त्यः । शशमे । देवऽतातये ।
यः । नूनम् । मित्रावरुणौ । अभिष्टये । आऽचक्रे । हव्यऽदातये ॥ १ ॥

**वेङ्कट०** जमदग्निर्भार्गवः । ऋधक्[3] सत्यम् इत्थम् सः मनुष्यः यज्ञाय हविः संस्करोति[4], यः[5] क्षिप्रम् मित्रावरुणौ अभिमतसिद्ध्यर्थम् अभिमुखौ करोति यजमानाय ॥ १ ॥

**वर्षिष्ठक्षत्रा उरुचक्षसा नरा राजाना दीर्घश्रुत्तमा ।**
**ता बाहुता न दंसना रथर्यतः साकं सूर्यस्य रश्मिभिः ॥ २ ॥**

वर्षिष्ठऽक्षत्रौ । उरुऽचक्षसा । नरा । राजाना । दीर्घश्रुत्ऽतमा ।
ता । बाहुता । न । दंसना । रथर्यतः । साकम् । सूर्यस्य । रश्मिऽभिः ॥ २ ॥

**वेङ्कट०** अतिशयेन[6] वृद्धबलौ महादर्शनौ नेतारौ राजानौ अतिशयेन विद्वांसौ तौ भुजौ इव कर्माणि प्राप्नुतः साकम् सूर्यस्य रश्मिभिः । यथा भुजौ सह कर्म प्रविशतः[7], तद्वत्[8] यज्ञं प्राप्नुत इति ॥ २ ॥

**प्र यो वां मित्रावरुणाजिरो दूतो अद्रवत् । अयःशीर्षा मदेरघुः ॥ ३ ॥**

प्र । यः । वाम् । मित्रावरुणा । अजिरः । दूतः । अद्रवत् । अयःऽशीर्षा । मदेऽरघुः ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. विष्णो! ··· व गमय वि[1] अ[1]. ३. ऋद्धम् मूको. ४. संक° वि[1]. ५. च वि[1] अ[1]. ६. नास्ति मूको. ७. प्रविश वि[1] अ[1]. ८. तद् वि[1].

**वेङ्कट०** समुद्रस्य अन्तः शेते उदकेन वज्रः परिवर्जितः । तस्मै वज्राय सङ्ग्रामस्य पुरःप्रस्रवणाः पुरस्ताद् गच्छन्तः बलिम् हरन्ति । तस्य छेद्या भवन्तीत्यर्थः ॥ ९ ॥

यद्वाग्वद॑न्त्यविचेत॒नानि॒ राष्ट्री॑ दे॒वानां॑ निष॒साद॑ म॒न्द्रा ।
चत॑स्र॒ ऊर्जं॑ दुदु॒हे पयां॑सि॒ क्व॑ स्विदस्याः पर॒मं ज॑गाम ॥ १० ॥

यत् । वाक् । वद॑न्ती । अ॒वि॒ऽचे॒त॒नानि॑ । राष्ट्री॑ । दे॒वाना॑म् । नि॒ऽस॒साद॑ । म॒न्द्रा ।
चत॑स्रः । ऊर्ज॑म् । दु॒दु॒हे॒ । पयां॑सि । क्व॑ । स्वि॒त् । अ॒स्याः॒ । प॒रम॒म् । ज॒गा॒म॒ ॥ १० ॥

**वेङ्कट०** यदा वाक् वदन्ती प्रज्ञापयन्ती[1] विज्ञानरहितान् अप्रज्ञातानर्थान्, राजनशीला[2] देवानाम् मदना[3] निषीदति यज्ञे, तदानीम् चतस्रः दिशः अन्नम् दुदुहे सा उदकानि च । [4]क्व स्वित्[4] अस्याः परमम् पदम् जगाम क्व सन्तिष्ठते । अत्र यास्कः ( ११, २८ )—'यद् वाग् वदन्त्यविचेतनानि अविज्ञातानि राष्ट्री देवानां निषसाद मन्द्रा मदना[5] चतस्रोऽनु दिश ऊर्जं दुदुहे पयांसि । क्व स्विदस्याः परमं जगामेति यत् पृथिवीं गच्छतीति वा यदादित्यरश्मयो हरन्तीति वा' इति ॥१०॥

दे॒वीं वाच॑मजनयन्त दे॒वास्तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति ।
सा नो॑ म॒न्द्रेष॒मूर्जं॒ दुहा॑ना धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॑ ॥ ११ ॥

दे॒वीम् । वाच॑म् । अ॒ज॒न॒य॒न्त॒ । दे॒वाः । ताम् । वि॒श्वऽरू॑पाः । प॒शव॑ः । व॒द॒न्ति॒ ।
सा । नः॒ । म॒न्द्रा । इष॑म् । ऊर्ज॑म् । दुहा॑ना । धे॒नुः । वाक् । अ॒स्मान् । उप॑ । सुऽस्तु॑ता । आ । ए॒तु॒ ॥ ११ ॥

**वेङ्कट०** यास्कः ( ११,२९ )—'देवीं वाचमजनयन्त देवाः । तां सर्वरूपाः[6] पशवो वदन्ति व्यक्तवाचश्चाव्यक्तवाचश्च । सा नो मदनान्नं च रसं च दुहाना धेनुर्वाग् अस्मान् उपैतु सुष्टुता' । इन्द्रसाहचर्यात् माध्यमिका वागत्र स्तुतेति ॥ ११ ॥

सखे॑ विष्णो वित॒रं वि क्र॑मस्व॒ द्यौर्दे॒हि लो॒कं वज्रा॑य वि॒ष्कभे॑ ।
हना॑व वृ॒त्रं रि॒णचा॑व॒ सिन्धू॒निन्द्र॑स्य यन्तु प्रस॒वे विसृ॑ष्टाः ॥ १२ ॥

सखे॑ । वि॒ष्णो॒ इति॑ । वि॒ऽत॒रम् । वि । क्र॒म॒स्व॒ । द्यौः । दे॒हि । लो॒कम् । वज्रा॑य । वि॒ऽस्कभे॑ ।
हना॑व । वृ॒त्रम् । रि॒णचा॑व । सिन्धू॑न् । इन्द्र॑स्य । य॒न्तु॒ । प्र॒ऽस॒वे । विऽसृ॑ष्टाः ॥ १२ ॥

**वेङ्कट०** शौनकः—"त्रींल्लोकानभितप्येमान्[7] वृत्रस्तस्थौ स्वया त्विषा ।
तं नाशकद्धन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ॥
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[8] ममान्तिके ।
उद्यतस्यैव वज्रस्य द्यौर्ददातु[9] ममान्तरम् ॥

---

१. न्ति° मूको. २. राजानः शी° मूको. ३. मोदना वि[२]. ४-४. कश्चित् वि[२] अ[१]; कश्चित् वि[१]. ५. नास्ति मूको. ६. विश्वरूपाः अ[१]. ७. °भिवृत्यैकाद् वि[२] अ[१]; °भिद्रत्यैतान् वि[१]. ८. °क्रमाद्य वि[२] अ[१]. ९. °धातु वि[२] अ[१].

तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरं ददौ ।
तदेतदखिलं प्रोक्तं 'सखे विष्णो' इति त्वृचा" (बृदे ६,१२१-१२४) ॥ इति ।

वेङ्कट० [1]हे सखे! विष्णो![1] त्वम् अत्यन्तम् वि क्रमस्व । द्यौः! देहि अवकाशं वज्रस्य विष्कम्भनाय । हनाव त्वम् च अहम् च [2]विष्णो! वृत्रम् । रिणचाव गमयाव[2] वृत्रावष्टब्धान् सिन्धून् । त इमे सिन्धवः इन्द्रस्य प्रसवे विसृष्टाः यन्तु इति ॥ १२ ॥

[1]इति षष्ठाष्टके सप्तमाध्याये पञ्चमो वर्गः[1] ॥

## [ १०१ ]

[1]जमदग्निर्भार्गव ऋषिः । मित्रावरुणौ देवता, पञ्चम्या मित्रावरुणादित्याः, षष्ठ्या आदित्याः, सप्तम्यष्टम्योः अश्विनौ, नवमीदशम्योः वायुः, एकादशीद्वादश्योः सूर्यः, त्रयोदश्याः उषाः सूर्यप्रभा वा, चतुर्दश्याः पवमानः, पञ्चदशीषोडश्योः गौः । प्रथमाद्वितीये प्रगाथः (=प्रथमा बृहती, द्वितीया सतोबृहती), तृतीया गायत्री, चतुर्थी सतोबृहती, पञ्चम्यादित्रयोदश्यन्ताः प्रगाथः (=विषमा बृहत्यः, समाः सतोबृहत्यः), अन्त्यास्तिस्रस्त्रिष्टुभः[1] ।

ऋध॑गि॒त्था स मर्त्यः॑ शश॒मे दे॒वता॑तये ।
यो नू॒नं मि॒त्रावरु॑णाव॒भिष्ट॑य आच॒क्रे ह॒व्यदा॑तये ॥ १ ॥

ऋध॑क् । इ॒त्था । सः । मर्त्यः॑ । श॒श॒मे । दे॒वऽता॑तये ।
यः । नू॒नम् । मि॒त्रावरु॑णौ । अ॒भिष्ट॑ये । आ॒ऽच॒क्रे । ह॒व्यऽदा॑तये ॥ १ ॥

वेङ्कट० जमदग्निर्भार्गवः । ऋधक्[3] सत्यम् इत्थम् सः मनुष्यः यज्ञाय हविः संस्करोति[4], यः[5] क्षिप्रम् मित्रावरुणौ अभिमतसिद्ध्यर्थम् अभिमुखौ करोति यजमानाय ॥ १ ॥

वर्षि॑ष्ठक्षत्रा उरु॒चक्ष॑सा नरा॒ राजा॑ना दी॒र्घश्रु॑त्तमा ।
ता बा॒हुता॒ न दं॒सना॑ रथर्य॒तः सा॒कं सूर्य॑स्य र॒श्मिभिः॑ ॥ २ ॥

वर्षि॑ष्ठऽक्षत्रौ । उ॒रु॒ऽचक्ष॑सा । नरा॑ । राजा॑ना । दी॒र्घश्रु॑त्ऽतमा ।
ता । बा॒हुता॑ । न । दं॒सना॑ । र॒थ॒र्य॒तः । सा॒कम् । सूर्य॑स्य । र॒श्मिऽभिः॑ ॥ २ ॥

वेङ्कट० अतिशयेन[6] वृद्धबलौ महादर्शनौ नेतारौ राजानौ अतिशयेन विद्वांसौ तौ भुजौ इव कर्माणि प्राप्नुतः साकम् सूर्यस्य रश्मिभिः । यथा भुजौ सह कर्म प्रविशतः[7], तद्वत्[8] यज्ञं प्राप्नुत इति ॥ २ ॥

प्र यो वां॑ मित्रावरुणाजि॒रो दू॒तो अद्र॑वत् । अयः॑शीर्षा॒ मदे॑रघुः ॥ ३ ॥

प्र । यः । वा॒म् । मि॒त्रा॒व॒रु॒णा॒ । अ॒जि॒रः । दू॒तः । अद्र॑वत् । अयः॑ऽशीर्षा । मदे॑ऽरघुः ॥ ३ ॥

---

१-१. नास्ति मूको. २-२. विष्णो! ··· व गमय वि[2] अ[1]. ३. ऋद्धम् मूको. ४. संक° वि[2]. ५. च वि[2] अ[1]. ६. नास्ति मूको. ७. प्रविश वि[2] अ[1]. ८. तत् वि[2].

वेङ्कट० प्र अद्रवत् अभिगच्छति यः वाम् हे मित्रावरुणौ! गमनशीलः दूतः यजमानः, स हि देवानां दूतो भवति, स[1] हिरण्यालङ्कृतशिरस्कः भवति, मदकरे धने च गन्ता भवति[2] ॥ ३ ॥

न यः सं॒पृच्छे॒ न पुन॒र्हवी॑तवे॒ न सं॑वा॒दाय॒ रम॑ते ।
तस्मा॑न्नो अ॒द्य सम॑ृतेरुरुष्यतं बा॒हुभ्यां॑ न उरुष्यतम् ॥ ४ ॥

न । यः । स॒म्ऽपृच्छे॑ । न । पुन॑ः । हवी॑तवे । न । स॒म्ऽवा॒दाय॑ । रम॑ते ।
तस्मा॑त् । न॒ः । अ॒द्य । सम्ऽऋ॑तेः । उ॒रु॒ष्य॒त॒म् । बा॒हुऽभ्या॑म् । न॒ः । उ॒रु॒ष्य॒त॒म् ॥ ४ ॥

वेङ्कट० न यः सम्प्रश्नाय[3] न च हवनाय[4] न च संवादाय[5] आ-रमते उग्रः शत्रुः, तस्मात् शत्रोः अस्मान्[6] [7]अद्य सङ्ग्रामाद्[7] रक्षतम् बाहुभ्याम् इति ॥ ४ ॥

प्र मि॒त्राय॒ प्रार्य॒म्णे स॑च॒थ्य॑मृतावसो ।
व॒रू॒थ्यं॑१ वरु॑णे॒ छन्द्यं॒ वच॑ः स्तो॒त्रं राज॑सु गायत ॥ ५ ॥

प्र । मि॒त्राय॑ । प्र । अ॒र्य॒म्णे । स॒च॒थ्य॑म् । ऋ॒त॒व॒सो॒ इत्यृ॑तऽवसो ।
व॒रू॒थ्य॑म् । वरु॑णे । छन्द्य॑म् । वच॑ः । स्तो॒त्रम् । राज॑ऽसु । गा॒य॒त ॥ ५ ॥

वेङ्कट० प्र गायत मित्राय अर्यम्णे च सेवनार्हम्[8] वचः हे यज्ञधनाः![9] । बहुवदाह— यज्ञगृहभवम् वरुणे प्रीणनसाधनम् वचः गायत[10] । तदेवाह— स्तोत्रम् राजसु गायत इति । मित्रादीन् राज्ञः स्तुत इति समुदायार्थः ॥ ५ ॥

[11]इति षष्ठाष्टके सप्तमाध्याये षष्ठो वर्गः[11] ॥

ते हि॑न्विरे अरु॒णं जेन्यं॒ वस्वेकं॑ पु॒त्रं ति॑सॄ॒णाम् ।
ते धामा॑न्य॒मृता॒ मर्त्या॑ना॒मद॑ब्धा अ॒भि च॑क्षते ॥ ६ ॥

ते । हि॒न्वि॒रे॒ । अ॒रु॒णम् । जेन्य॑म् । वसु॑ । एक॑म् । पु॒त्रम् । ति॑सॄ॒णाम् ।
ते । धामा॑नि । अ॒मृता॑ः । मर्त्या॑नाम् । अद॑ब्धाः । अ॒भि । च॒क्ष॒ते॒ ॥ ६ ॥

वेङ्कट० ते प्रेरयन्ति अरुणवर्णम् जयसाधनम् वसु इति । एतदेवाह— एकम् पुत्रम् तिसृणाम् पृथिव्यादीनाम् आदित्यं प्रेरयन्ति । ते स्थानानि अमृताः मनुष्याणाम् अहिंसिताः अभि पश्यन्ति ॥ ६ ॥

आ मे॒ वचां॑स्यु॒द्यता द्यु॒मत्त॑मानि॒ कर्त्वा॑ ।
उ॒भा या॑तं नासत्या स॒जोष॑सा॒ प्रति॑ ह॒व्यानि॑ वी॒तये॑ ॥ ७ ॥

---

१. न वि[2]; नास्ति वि[1]. २. इति वि[2] अ[1]. ३. °प्रत्ना° वि[2] अ[1]. ४. °नाताय वि[2]; °नाताय त अ[1]. ५. सम्पादाय वि; सम्पादया अ[1]. ६. अस्मात् मूको. ७-७. अन्यस° मूको. ८. सेचना° वि[2] अ[1]; सेनचना° वि[1]. ९. यज्ञनाथ वि[2] अ[1]; यज्ञधनाथ वि[2]. १०. नय वि[2] अ[1]. ११-११. नास्ति मूको.

आ । मे । वचांसि । उत्ऽयता । द्युमत्ऽतमानि । कर्त्वा ।
उभा । यातम् । नासत्या । सऽजोषसा । प्रति । हव्यानि । वीतये ॥ ७ ॥

वेङ्कट० आ यातम् मे वचांसि उद्यतानि च दीप्ततमानि च कर्माणि उभौ सङ्गतौ नासत्यौ![१], प्रति गच्छतम् हव्यानि च भक्षणाय इति ॥ ७ ॥

रातिं यद्वामरक्षसं हवामहे युवाभ्यां वाजिनीवसू ।
प्राचीं होत्रां प्रतिरन्तावितं नरा गृणाना जमदग्निना ॥ ८ ॥

रातिम् । यत् । वाम् । अरक्षसम् । हवामहे । युवाभ्याम् । वाजिनीवसू इति वाजिनीऽवसू ।
प्राचीम् । होत्राम् । प्रऽतिरन्तौ । इतम् । नरा । गृणाना । जमत्ऽअग्निना ॥ ८ ॥

वेङ्कट० दानम् यत् युवयोः सम्बन्धि[२] रक्षोवर्जितम् हवामहे इति । एतदेवाह — हवामहे युवाभ्याम् क्रियमाणाम् रातिम् हे अन्नधनौ! इति । तदानीं प्राङ्मुखाम्[३] स्तुतिम् वर्धयन्तौ[४] आगच्छतम्[५] नेतारौ! स्तूयमानौ जमदग्निना इति ॥ ८ ॥

आ नो यज्ञं दिविस्पृशं वायो याहि सुमन्मभिः ।
अन्तः पवित्र उपरि श्रीणानो३ऽयं शुक्रो अयामि ते ॥ ९ ॥

आ । नः । यज्ञम् । दिविऽस्पृशम् । वायो इति । याहि । सुमन्मऽभिः ।
अन्तरिति । पवित्रे । उपरि । श्रीणानः । अयम् । शुक्रः । अयामि । ते ॥ ९ ॥

वेङ्कट० आ याहि अस्माकम् यज्ञम् देवान् स्पृशन्तम् वायो! सुष्टुतिभिः शुश्रूषिताभिः । पवित्रस्य मध्ये उपरि श्रीयमाणो निषिच्यमानः अयम् सोमः नियत आसीत् तुभ्यम् इति ॥ ९ ॥

वेत्यध्वर्युः पथिभी रजिष्ठैः प्रति हव्यानि वीतये ।
अधा नियुत्व उभयस्य नः पिब शुचिं सोमं गवाशिरम् ॥ १० ॥

वेति । अध्वर्युः । पथिऽभिः । रजिष्ठैः । प्रति । हव्यानि । वीतये ।
अध । नियुत्वः । उभयस्य । नः । पिब । शुचिम् । सोमम् । गोऽआशिरम् ॥ १० ॥

वेङ्कट० गच्छति अध्वर्युः हविर्धानात् ऋजुतमैः मार्गैः, प्रति नयति च[६] हवींषि तत्र भक्षणाय । अथ नियुत्वः! उभयविधम् अस्माकम् पिब सोमम् । उभयविधत्वमेव दर्शयति — शुचिम्[७] सोमम् गोमिश्रितम् चेति ॥ १० ॥

[८]इति षष्ठाष्टके सप्तमाध्याये सप्तमो वर्गः[८] ॥

---

१. नास्ति वि[१]. २. सम्बन्धिनम् वि[२] अ[१]. ३. °खाः वि[२] अ[१]. ४. °न्त वि अ[१], ५. अनुगच्छत वि[२] अ[१], ६. नास्ति अ[१]. ७. शुचि मूको. ८-८. नास्ति मूको.

बण्म॒हाँ अ॑सि सूर्य॒ बळा॑दित्य म॒हाँ अ॑सि ।
म॒हस्ते॑ स॒तो म॑हि॒मा प॑नस्यते॒ऽद्धा दे॑व म॒हाँ अ॑सि ॥ ११ ॥

बट्[1] । म॒हान् । अ॒सि॒ । सू॒र्य॒ । बट् । आ॒दि॒त्य॒ । म॒हान् । अ॒सि॒ ।
म॒हः । ते॒ । स॒तः । म॒हि॒मा । प॒न॒स्य॒ते॒ । अ॒द्धा[1] । दे॒व॒ । म॒हान् । अ॒सि॒ ॥ ११ ॥

वेङ्कट० सत्यं त्वम् महान् असि सूर्य! । [2]बट् अदितेः[2] पुत्र! महान् असि । [3]महतः भवतः[3] तव महिमा स्तोतृभिः स्तूयते । सत्यमेव देव! महान् भवसि[4] ॥ ११ ॥

बट् सू॑र्य॒ श्रव॑सा म॒हाँ अ॑सि स॒त्रा दे॑व म॒हाँ अ॑सि ।
म॒ह्ना दे॒वाना॑मसु॒र्यः॑ पु॒रोहि॑तो वि॒भु ज्योति॒रदा॑भ्यम् ॥ १२ ॥

बट् । सू॒र्य॒ । श्रव॑सा । म॒हान् । अ॒सि॒ । स॒त्रा[1] । दे॒व॒ । म॒हान् । अ॒सि॒ ।
म॒ह्ना । दे॒वाना॑म् । अ॒सु॒र्यः॑ । पु॒रःऽहि॑तः । वि॒ऽभु । ज्योतिः॑ । अदा॑भ्यम् ॥ १२ ॥

वेङ्कट० सत्यमेव सूर्य! श्रुतेन त्वम् महान् भवसि । सत्यमेव देव![5] महान् असि । महत्त्वेन देवानाम् असुराणां हन्ता पुरोहितः त्वम् । तस्य तव विभु ज्योतिः अहिंस्यम् इति ॥ १२ ॥

इ॒यं या नी॒च्य॑र्कि॒णी॑ रू॒पा रोहि॑ण्या कृ॒ता ।
चि॒त्रेव॒ प्रत्य॑दर्श्याय॒त्य१॒॑न्तर्द॒शसु॑ बा॒हुषु॑ ॥ १३ ॥

इ॒यम् । या । नी॒ची॑ । अ॒र्कि॒णी॑ । रू॒पा । रोहि॑ण्या । कृ॒ता ।
चि॒त्राऽइ॑व । प्रति॑ । अ॒द॒र्शि॒ । आ॒ऽय॒ती । अ॒न्तः । द॒शऽसु॑ । बा॒हुषु॑ ॥ १३ ॥

वेङ्कट० सेयम् उषस्या, सूर्यप्रभास्तुतिः[6] वा । इयम् या नीचीनमुखा[7] स्तुतिमती[8] रूपवती प्रकाशयुक्ता प्रभा उषसा कृता सूर्यदीप्त्या वा, '[9]चित्रा गौः[9]' इव सा प्रति अदर्शि आगच्छन्ती अन्तः दशसु बाहुषु बाहुस्थानीयासु दिक्षु इति ॥ १३ ॥

प्र॒जा ह॑ ति॒स्रो अ॒त्याय॑मीयु॒र्न्य१॒॑न्या अ॒र्कम॒भितो॑ विवि॒श्रे ।
बृ॒हद्ध॑ तस्थौ॒ भुव॑नेष्व॒न्तः पव॑मानो ह॒रित॒ आ वि॑वेश ॥ १४ ॥

प्र॒ऽजाः । ह॒ । ति॒स्रः । अ॒ति॒ऽआय॑म् । ई॒युः॒ । नि । अ॒न्याः । अ॒र्कम् । अ॒भितः॑ । वि॒वि॒श्रे॒ ।
बृ॒हत् । ह॒ । त॒स्थौ॒ । भुव॑नेषु । अ॒न्तरिति॑ । पव॑मानः । ह॒रितः॑ । आ । वि॒वे॒श॒ ॥ १४ ॥

वेङ्कट० वाजसनेयकम्—'स तपोऽतप्यत स प्रजाः ससृजे । ता अस्य प्रजाः सृष्टाः पराबभूवुस्ता-

---

१. सत्यनाम (निघ ३,१०). २-२. बड्लदित्ते वि[2] अ[1]. ३-३. भवतो महतः अ[1]. ४. असि अ[1]. ५. देवम् वि[2]. ६. °स्तुतिभिः मूको. ७. नीचीतोमु° वि[2] अ[1]; नीतोमु° वि[1]. ८. °मति वि[2]. ९-९. चित्रगौः वि[2].

नीमानि वयांसि' ( काश १,४,३,१ ) इत्यादिकम् उक्त्वा आह—''तस्मादप्येतद् ऋषिणाऽभ्य-नूक्तम् । 'प्रजा ह तिस्रो अत्यायमीयुः' इति । या अमूः पराभूताः[1] 'न्यन्या अर्कमभितो विविश्रे' इति अग्निर्वा अर्कस्तमिमाः प्रजा अभितो[2] निविष्टा या इमा अपराभूताः। 'बृहद्ध[3] तस्थौ भुवनेष्वन्तः' इति प्रजापतिमेवैतदभ्यनूक्तं[4] 'पवमानो हरित आ विवेश' इति । दिशो वै हरितस्ता अयं पवमान आविष्टः'' ( काश १,४,३,४ [ तु. माश २,५,१,४;५ ] ) इति । सैषा अस्मद्ब्राह्मणे च व्याख्येति ॥ १४ ॥

माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ।
प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥ १५ ॥

माता । रुद्राणाम् । दुहिता । वसूनाम् । स्वसा । आदित्यानाम् । अमृतस्य । नाभिः ।
प्र । नु । वोचम् । चिकितुषे । जनाय । मा । गाम् । अनागाम् । अदितिम् । वधिष्ट ॥ १५ ॥

**वेङ्कट०** [5]†माता रुद्राणाम् रुद्रपुत्राणां† मरुताम्, दुहिता वसूनाम्[5], स्वसा आदित्यानाम् अमृतस्य पयसः नाभिः आवासस्थानम् । प्र वोचम् [6]अहम् इदानीम्[6] चिकितुषे जनाय — मा गाम् अनागसम् अदीनां गोरूपाम् वधिष्ट इति । शुश्रूषमाणेभ्य उपदेशः[7] ॥ १५ ॥

वचोविदं वाचमुदीरयन्तीं विश्वाभिर्धीभिरुपतिष्ठमानाम् ।
देवीं देवेभ्यः पर्येयुषीं गामा मावृक्त मर्त्यो दभ्रचेताः ॥ १६ ॥

वचःऽविदम् । वाचम् । उत्ऽईरयन्तीम् । विश्वाभिः । धीभिः । उपऽतिष्ठमानाम् ।
देवीम् । देवेभ्यः । परि । आऽईयुषीम् । गाम् । आ । मा । अवृक्त । मर्त्यः । दभ्रऽचेताः ॥१६॥

**वेङ्कट०** वचसः[8] लम्भयित्रीम् 'वाचम् उदीरयन्तीम्' । क्षुधितो[10] हि न वाचम् उदीरयति । पयः पीत्वा पश्चात् उदीरयति । विश्वैः कर्मभिः उपतिष्ठमानाम् देवीम् देवेभ्यः मा परि आ अवृक्त गाम्[11] उपगताम्[12] मनुष्यः अल्पचेताः ॥ १६ ॥

[9]इति षष्ठाष्टके सप्तमाध्याये अष्टमो वर्गः[9] ।

## [ १०२ ]

[1]प्रयोगो भार्गव ऋषिः, अग्निर्बार्हस्पत्यः पावको वा, सहसः पुत्रौ गृहपति-यविष्ठावग्नी तयोर्वाऽन्यतरः । अग्निर्देवता । गायत्री छन्द.[1] ।

त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा ॥ १ ॥

त्वम् । अग्ने । बृहत् । वयः । दधासि । देव । दाशुषे । कविः । गृहऽपतिः । युवा ॥ १ ॥

---

१. प्रजा अत्यायन् मूको. २. अभिषः मूको. ३. मह° काश. माश. ४. °दन्यसूक्तम् मूको. ५-५. नास्ति वि[1]. †-† रुद्राणां माता मित्राणां वि[2] अ[1]. ६-६. इदानीमहम् वि[1]. ७. °देशम् वि[2] अ[1]. ८. नास्ति वि[1]; °सो हि वि[2]. ९-९. नास्ति मूको. १०. क्षुभितो मूको. ११. मा न मूको. १२. उपगता वि[1]; उपहरता वि[2]; उपहृता अ[1].

**वेङ्कट०** [1]भार्गवः प्रयोगः, बार्हस्पत्यो वाऽग्निः[1] । त्वम् अग्ने! बृहत् अन्नं प्रयच्छसि देव! यजमानाय कविः गृहपतिः युवा । अत्र कात्यायनः ( ऋअ २,८,१०२)—'भार्गवः प्रयोगो बार्हस्पत्यो वाऽग्निः पावकः सहसः सुतयोर्वाऽग्न्योर्गृहपतियविष्ठयोर्वान्यतरः' इति ॥ १ ॥

स नु ईळानया सह देवाँ अग्ने दुवस्युवा । चिकिद्विभानवा वह ॥ २ ॥

सः । नः । ईळानया । सह । देवान् । अग्ने । दुवस्युवा । चिकित् । विभानो इति विऽभानो । आ । वह ॥२॥

**वेङ्कट०** सः अस्माकं स्तुवत्या सह समकालम् एव अग्ने! परिचरणशीलया वाचा ज्ञाता सन् हे विभानो! देवान् आ वह ॥ २ ॥

त्वया ह स्विद्युजा वयं चोदिष्ठेन यविष्ठ्य । अभि ष्मो वाजसातये ॥ ३ ॥

त्वया । ह । स्वित् । युजा । वयम् । चोदिष्ठेन । यविष्ठ्य । अभि । स्मः । वाजऽसातये ॥ ३ ॥

**वेङ्कट०** त्वया ह स्वित् सहायेन वयम् अतिशयेन धनानां प्रेरयित्रा युवतम![2] अभि भवेम शत्रून् अन्नलाभाय ॥ ३ ॥

और्वभृगुवच्छुचिमप्नवानवदा हुवे । अग्निं समुद्रवाससम् ॥ ४ ॥

और्वभृगुऽवत् । शुचिम् । अप्नवानऽवत् । आ । हुवे । अग्निम् । समुद्रऽवाससम् ॥ ४ ॥

**वेङ्कट०** और्वभृगुवत्[3] अहम् शुचिम् अग्निम् आ हुवे अप्नवानवत् च अग्निम् समुद्रवाससम्[4] वाडवम् इति ॥ ४ ॥

हुवे वातस्वनं कविं पर्जन्यक्रन्द्यं सहः । अग्निं समुद्रवाससम् ॥ ५ ॥

हुवे । वातऽस्वनम् । कविम् । पर्जन्यऽक्रन्द्यम् । सहः । अग्निम् । समुद्रऽवाससम् ॥ ५ ॥

**वेङ्कट०** हुवे वातसदृशस्वनम्[5] कविम् पर्जन्यसदृशक्रन्दनम् सहस्विनम् ॥ ५ ॥

[6]इति षष्ठाष्टके सप्तमाध्याये नवमो वर्गः[6] ।

आ सवं सवितुर्यथा भगस्येव भुजिं हुवे । अग्निं समुद्रवाससम् ॥ ६ ॥

आ । सवम् । सवितुः । यथा । भगस्यऽइव । भुजिम् । हुवे । अग्निम् । समुद्रऽवाससम् ॥ ६ ॥

**वेङ्कट०** आ ह्वयामि प्रसवमिव सवितुः भगस्य इव च भोगम् ॥ ६ ॥

अग्निं वो वृधन्तमध्वराणां पुरूतमम् । अच्छा नप्त्रे सहस्वते ॥ ७ ॥

---

१-१. नास्ति वि[2]. २. °तमाम् वि[1] अ[1]. ३. °भृगव इव वि[2]; और्वाभृगुप इव अ[1]; °भृगुयः इव वि[1]. ४. °वासम् वि[1]. ५. वातस्वनम वि[1]. ६-६. नास्ति मूको.

अग्निम् । वः । वृधन्तम् । अध्वराणाम् । पुरुऽतमम् । अच्छ । नप्त्रे । सहस्वते ॥ ७ ॥

**वेङ्कट०** अग्निम् यूयं वर्धमानम् अहिंस्यानाम् बलिनां[1] बहूनां ग्लेपयितारम्[2] अभिगच्छत[3] [4]नप्त्रे पुत्रस्य पुत्राय[4] सहस्वते [5]बलवन्तं नप्तारं[5] लब्धुम्[6] ॥ ७ ॥

अयं यथा न आभुवत् त्वष्टा रूपेव तक्ष्या । अस्य क्रत्वा यशस्वतः ॥ ८ ॥

अयम् । यथा । नः । आऽभुवत् । त्वष्टा । रूपाऽइव । तक्ष्या । अस्य । क्रत्वा । यशस्वतः ॥ ८ ॥

**वेङ्कट०** अयम् अग्निः यथा अस्मान् आभवति[7] त्वष्टा इव [8]'देवः रूपाणि[8] विकर्तव्यानि, तथा एनम्[9] अभिगच्छत । अस्य प्रज्ञानेन युक्ताः यशस्वतः[10] भवामो यशस्वन्त इति ॥ ८ ॥

अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते । आ वाजैरुप नो गमत् ॥ ९ ॥

अयम् । विश्वाः । अभि । श्रियः । अग्निः । देवेषु । पत्यते । [11]आ । वाजैः । उप । नः । गमत्[11] ॥ ९ ॥

**वेङ्कट०** अयम् मनुष्याणाम् विश्वाः श्रियः अभिलक्ष्य अग्निः देवानां मध्ये गच्छति । सोऽस्मान् अपि अन्नैः उप आ गच्छतु ॥ ९ ॥

विश्वेषामिह स्तुहि होतॄणां यशस्तमम् । अग्निं यज्ञेषु पूर्व्यम् ॥ १० ॥

विश्वेषाम् । इह । स्तुहि । होतॄणाम् । यशःऽतमम् । अग्निम् । यज्ञेषु । पूर्व्यम् ॥ १० ॥

**वेङ्कट०** सर्वेषाम् होतॄणाम् मध्ये यशस्विनम् अस्मिन् यज्ञे स्तुहि । तदेवाह— अग्निम् यज्ञेषु मुख्यम् इति ॥ १० ॥

[12]इति षष्ठाष्टके सप्तमाध्याये दशमो वर्गः[12] ॥

शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा । दीदाय दीर्घश्रुत्तमः ॥ ११ ॥

शीरम् । पावकऽशोचिषम् । ज्येष्ठः । यः । दमेषु । आ । दीदाय । दीर्घश्रुत्ऽतमः ॥ ११ ॥

**वेङ्कट०** 'शीरम् अनुशायिनमिति वाऽऽशिनमिति वा' इति यास्कः (४,१४)। तं शोधकदीप्तिम्, ज्येष्ठः यः गृहेषु दीप्यते दीर्घश्रुत्तमः[13], तं गृणीहि इति ॥ ११ ॥

तमर्वन्तं न सानसिं गृणीहि विप्र शुष्मिणम् । मित्रं न यातयज्जनम् ॥ १२ ॥

तम् । अर्वन्तम् । न । सानसिम् । गृणीहि । विप्र । शुष्मिणम् । मित्रम् । न । यातयत्ऽजनम् ॥ १२ ॥

**वेङ्कट०** तम् अश्वम् इव भजनीयम् गृणीहि मेधाविन्! बलिनम् मित्रम् इव यातयज्जनम्[14] हतशत्रुजनम् ॥ १२ ॥

---

१. नास्ति वि[2] अ[1]. २. ह्वेप° वि[2] अ[1]. ३. अधिग° वि[2]. ४-४. पुत्राय नप्त्रे मूको. ५-५. बलन्तन्नप्तारं वि[2] अ[1]. ६. लब्धमु मूको. ७. आवहति वि[2] अ[1]; आस्मयति वि[1]. ८-८. रूपाणि दवः अ[1]. ९. एवम् अ[1]. १०. तु. १०मो मन्त्रः; नास्ति मूको. ११-११. तु. ऋ १,५,३; ८,१०३,९. १२-१२. नास्ति मूको. १३. °र्धत्त° वि[2]. १४. °ना मूको.

उप॑ त्वा जा॒मयो॒ गिरो॒ देदि॑शतीर्हवि॒ष्कृतः॑ । वा॒योरनी॑के अस्थिरन् ॥ १३ ॥

उप॑ । त्वा॒ । जा॒मयः॑ । गिरः॑ । देदि॑शतीः । ह॒विः॒ऽकृतः॑ । वा॒योः । अनी॑के । अ॒स्थि॒र॒न् ॥ १३ ॥

**वेङ्कट०** उप तिष्ठन्ति त्वां स्वसार इव स्तुतयः तव गुणान् दिशन्त्यः यजमानार्थम् वायोः अनीके । त्वां समेधयन्ति प्रज्वलिते[1] त्वयि इति ॥ १३ ॥

यस्य॑ त्रि॒धात्ववृ॑तं ब॒र्हिस्त॒स्थावस॑न्दिनम् । आप॑श्चि॒न्नि द॑धा प॒दम् ॥ १४ ॥

यस्य॑ । त्रि॒ऽधातु॑ । अवृ॑तम् । ब॒र्हिः । त॒स्थौ । अस॑म्ऽदिनम् । आपः॑ । चि॒त् । नि । द॒ध॒ । प॒दम् ॥

**वेङ्कट०** यस्य त्रिधातु अनावृतम् बर्हिः आसनाय तिष्ठति असन्दिनम् अबद्धम् । स्तरणकाले हि तदबद्धं[2] भवति । तस्मिन् अग्नौ आपः अपि पदम् नि दधति अन्तरिक्ष्या माध्यमिके ॥ १४॥

प॒दं दे॒वस्य॑ मी॒ळ्हुषोऽना॑धृष्टाभिरू॒तिभिः॑ । भ॒द्रा सूर्य॑ इवोप॒दृक् ॥ १५ ॥

प॒दम् । दे॒वस्य॑ । मी॒ळ्हुषः॑ । अना॑धृष्टाभिः । ऊ॒तिऽभिः॑ । भ॒द्रा । सूर्यः॑ऽइव । उ॒प॒ऽदृक् ॥१५॥

**वेङ्कट०** स्थानम् देवस्य सेक्तुः शत्रुभिरनाधृष्टैः रक्षणैः भजनीयं भवति । तथा सूर्यः इव मनुष्यैः भजनीया अस्य उपदृष्टिः ॥ १५ ॥

[3]इति षष्ठाष्टके सप्तमाध्याये एकादशो वर्गः[3] ॥

अग्ने॑ घृ॒तस्य॑ धी॒तिभि॑स्तेपा॒नो दे॑व शो॒चिषा॑ । आ दे॒वान् व॑क्षि॒ यक्षि॑ च ॥ १६ ॥

अग्ने॑ । घृ॒तस्य॑ । धी॒तिऽभिः॑ । ते॒पा॒नः । दे॒व॒ । शो॒चिषा॑ । आ । दे॒वान् । व॒क्षि॒ । यक्षि॑ । च॒ ॥१६॥

**वेङ्कट०** अग्ने! घृतस्य निधानैः[4] तपन्[5] देव! ज्वाल्या[6] आ वह देवान् यज च ॥ १६ ॥

तं त्वा॑जनन्त मा॒तरः॑ क॒विं दे॒वासो॑ अङ्गिरः । ह॒व्य॒वा॒हमम॑र्त्यम् ॥ १७ ॥

तम् । त्वा॒ । अ॒ज॒न॒न्त॒ । मा॒तरः॑ । क॒विम् । दे॒वासः॑ । अ॒ङ्गि॒रः॒ । ह॒व्य॒ऽवाह॑म् । अम॑र्त्यम् ॥ १७ ॥

**वेङ्कट०** तम्[7] त्वाम् अजनयन् निमातारः क्रान्तकर्माणम्[8] देवाः हे अङ्गिरः! हव्यवाहम् अमर्त्यम् ॥१७॥

प्रचे॑तसं त्वा क॒वेऽग्ने॑ दू॒तं वरे॑ण्यम् । ह॒व्य॒वाहं॒ नि षे॑दिरे ॥ १८ ॥

प्रऽचे॑तसम् । त्वा॒ । क॒वे॒ । अग्ने॑ । दू॒तम् । वरे॑ण्यम् । ह॒व्य॒ऽवाह॑म् । नि । से॒दि॒रे॒ ॥ १८ ॥

**वेङ्कट०** प्रचेतसम् त्वाम् कवे! अग्ने! दूतम् वरणीयम् हव्यवाहम् अभि नि सीदन्ति देवाः ॥ १८ ॥

न॒हि मे॒ अस्त्यघ्न्या॒ न स्वधि॑ति॒र्वन॑न्वति । अथै॒तादृग्भ॑रामि ते ॥ १९ ॥

---

१. °लते मूको. २. नास्ति वि[2] अ[2]. ३-३. नास्ति मूको. ४. निदानैः वि[2] अ[1]. ५. स्तयं मूको. ६. ज्व° वि[1]. ७. नास्ति वि[1]. ८. क्लान्तकर्मणां वि[1].

नहि । मे । अस्ति । अघ्न्या । न । स्वऽधितिः । वनन्ऽवति । अथ । एतादृक् । भरामि । ते ॥१९॥

**वेङ्कट०** नहि मे विद्यते[1] गौः, यस्याः[2] पयसा आज्येन च त्वां यजेय। न स्वधितिः काष्ठानि हन्ति, यैः त्वां समिन्धीय[3]। अथ[4] अहं तुभ्यम् एतादृक् भरामि इति। अस्योत्तरा भूयसे निर्वचनाय ॥ १९ ॥

## यदग्ने कानि कानि चिदा ते दारूणि दध्मसि । ता जुषस्व यविष्ठ्य ॥ २० ॥

यत् । अग्ने । कानि । कानि । चित् । आ । ते । दारूणि । दध्मसि । ता । जुषस्व । यविष्ठ्य ॥

**वेङ्कट०** यत् अग्ने! यानि कानि चित् [4]ते दारुणि[4] आ दध्मसि, अपरशुवृक्णान्यपि तानि सेवस्व हे युवतम!। 'न ह स्म वै पुराऽग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एवर्षिरस्वदयत्' ( तै ५,१,१०,१ ) इति ब्राह्मणम् ॥ २० ॥

## यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतम् ॥ २१ ॥

[6]यत् । अत्ति । उपऽजिह्विका । यत् । वम्रः । अतिऽसर्पति[6] । सर्वम् । तत् । अस्तु । ते । घृतम् ॥

**वेङ्कट०** यत् काष्ठम् अत्ति उपजिह्विका, यत् च वम्रः अभि त्वा अतिसर्पति, सर्वम् तत् अस्तु घृतसदृशम् इति[7] ॥ २१ ॥

## अग्निमिन्धानो मनसा धियं सचेत मर्त्यः । अग्निमीधे विवस्वभिः ॥ २२ ॥

अग्निम् । इन्धानः । मनसा । धियम् । सचेत । मर्त्यः । अग्निम् । ईधे । विवस्वऽभिः ॥ २२ ॥

**वेङ्कट०** अग्निम् काष्ठैः इन्धानः मनसा एव श्रद्दधानः कर्म काले भजेत मनुष्यः[8]। अग्निम् एव प्रज्वलयति ऋत्विग्भिः इति ॥ २२ ॥

[5]इति षष्ठाष्टके सप्तमाध्याये द्वादशो वर्गः[5] ॥

## [ १०३ ]

[4]सोभरिः काण्व ऋषिः। अग्निर्देवता, चतुर्दश्या अग्नामरुतः। बृहती छन्दः, पञ्चमी विराड्रूपा, सप्तमीनवम्येकादशीत्रयोदश्यः सतोबृहत्यः, अष्टमीद्वादश्यौ ककुभौ, दशमी ह्रसीयसी, चतुर्दशी अनुष्टुप्[4]।

## अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः ।
## उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्त नो गिरः ॥ १ ॥

---

१. विद्य… मूको. २. °स्य वि². ३. °न्धी अ¹. ४. यथा अ¹ वि². ५-५. नास्ति मूको. ६-६. निर्वचनं निगमश्च या. (३,२०) द्र. ७. इत्यर्थः अ¹. ८. नास्ति वि¹.

अदर्शि । गातुवित्ऽतमः । यस्मिन् । व्रतानि । आऽदधुः ।
उषो इति । सु । जातम् । आर्यस्य । वर्धनम् । अग्निम् । नक्षन्त । नः । गिरः ॥ १ ॥

**वेङ्कट०** सोभरिः । प्रादुरभूत् अतिशयेन मार्गाणां ज्ञाता, यस्मिन् कर्माणि आदधुः । उप अगच्छन् शोभनजातम् आर्यस्य वर्णस्य वर्धयितारम् अग्निम् अस्माकम् गिरः ॥ १ ॥

प्र दैवोदासो अग्निर्देवाँ अच्छा न मज्मना ।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य सानवि ॥ २ ॥

प्र । दैवःऽदासः । अग्निः । देवान् । अच्छ । न । मज्मना ।
अनु । मातरम् । पृथिवीम् । वि । ववृते । तस्थौ । नाकस्य । सानवि ॥ २ ॥

**वेङ्कट०** दिवोदासेनाऽऽहूयमानः अग्निः इमाम् मातरम् पृथिवीम् प्रति न अनु प्र वि ववृते देवान् प्रति तस्य यज्ञे देवानां हव्यं वोढुम् । यस्मादयं बलेन एनम् आजुहाव, न[1] श्रद्धया । तस्थौ स्वर्गस्य समुच्छ्रिते स्वस्मिन् आयतन एवेति ॥ २ ॥

यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः ।
सहस्रसां मेधसाताविव त्मनाग्निं धीभिः सपर्यत ॥ ३ ॥

यस्मात् । रेजन्त । कृष्टयः । चर्कृत्यानि । कृण्वतः ।
सहस्रऽसाम् । मेधसातौऽइव । त्मना । अग्निम् । धीभिः । सपर्यत ॥ ३ ॥

**वेङ्कट०** कर्तव्यानि कुर्वाणात् यस्मात् कम्पन्ते मनुष्याः, सहस्रस्य दातारम् इदानीम् अग्निम् यज्ञे आत्मनैव परिचरत कर्मभिः इति ॥ ३ ॥

प्र यं राये निनीषसि मर्तो यस्ते वसो दाशत् ।
स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ॥ ४ ॥

प्र । यम् । राये । निनीषसि । मर्तः । यः । ते । वसो इति । दाशत् ।
सः । वीरम् । धत्ते । अग्ने । उक्थऽशंसिनम् । त्मना । सहस्रऽपोषिणम् ॥ ४ ॥

**वेङ्कट०** प्र-णेतुमिच्छसि यम् धनाय, यः च मर्तः वासयितः! तुभ्यं प्रयच्छति, सः वीरम् पुत्रं धारयति अग्ने! उक्थानां शंसितारम् आत्मनैव सहस्रपोषं बहुधनम् ॥ ४ ॥

स दृळ्हे चिदभि तृणत्ति वाजमर्वता स धत्ते अक्षिति श्रवः ।
त्वे देवत्रा सदा पुरूवसो विश्वा वामानि धीमहि ॥ ५ ॥

---

१. नास्ति वि[1].

सः । दृळ्हे । चित् । अभि । तृणत्ति । वाजम् । अर्वता । सः । धत्ते । अक्षिति । श्रवः ।
त्वे इति । देवऽत्रा । सदा । पुरुवसो इति पुरुऽवसो । विश्वा । वामानि । धीमहि ॥ ५ ॥

**वेङ्कट०** सः दृढे अपि शत्रुपुरे स्थितम् अन्नम् अभि तृणत्ति, तथा अश्वेन सः धारयति अक्षितम् अन्नम्। तथा सति वयं च त्वयि देवे सदा हे बहुधन! विश्वानि धनानि धारयेम स्थितानि इति ॥५॥

[1]इति षष्ठाष्टके सप्तमाध्याये त्रयोदशो वर्गः[1] ॥

**यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।**
**मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्यग्नये ॥ ६ ॥**

यः । विश्वा । दयते । वसु । होता । मन्द्रः । जनानाम् ।
मधोः । न । पात्रा । प्रथमानि । अस्मै । प्र । स्तोमाः । यन्ति । अग्नये ॥ ६ ॥

**वेङ्कट०** यः विश्वानि प्रयच्छति वसूनि होता मोदनो[2] जनेभ्यः, अस्मै सोमस्य इव पात्राणि मुख्यानि प्र गच्छन्ति[3] स्तोमाः अग्नये ॥ ६ ॥

**अश्वं न गीर्भी रथ्यं सुदानवो मर्मृज्यन्ते देवयवः ।**
**उभे तोके तनये दस्म विश्पते पर्षि राधो मघोनाम् ॥ ७ ॥**

अश्वम् । न । गीःऽभिः । रथ्यम् । सुऽदानवः । मर्मृज्यन्ते । देवऽयवः ।
उभे इति । तोके इति । तनये[4] । दस्म । विश्पते । पर्षि । राधः । मघोनाम् ॥ ७ ॥

**वेङ्कट०** अश्वम् इव स्तुतिभिः रथस्य वोढारम् शोभनदानाः परिचरन्ति यजमानाः। पुत्रे पौत्रे च उभयस्मिन् दर्शनीय! विशां पते! प्रयच्छ धनवताम् धनम् ॥ ७ ॥

**प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे । उपस्तुतासो अग्नये ॥ ८ ॥**

प्र । मंहिष्ठाय । गायत । ऋतऽव्ने । बृहते । शुक्रऽशोचिषे । उपऽस्तुतासः । अग्नये ॥ ८ ॥

**वेङ्कट०** प्र गायत दातृतमाय[5] यज्ञवते महते शुक्रशोचिषे अग्नये हे उपस्तोतारः![6] यूयम्[7] ॥ ८ ॥

**आ वंसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।**
**कुविन्नो अस्य सुमतिर्नवीयस्यच्छा वाजेभिरागमत् ॥ ९ ॥**

आ । वंसते । मघऽवा । वीरऽवत् । यशः । सम्ऽइद्धः । द्युम्नी । आऽहुतः ।
कुवित् । नः । अस्य । सुऽमतिः । नवीयसी । अच्छ । वाजेभिः । आऽगमत् ॥ ९ ॥

---

१-१. नास्ति मूको. २. °ने वि[2] अ[1]. ३. यच्छ° मूको. ४. तु. ऋ १,१४७,१; प्रगृह्याभावः?। ५. मातृ° वि[1]. ६. यूयमुपस्तो° मूको. ७. यूयं सतो वि[2] अ[1]; नास्ति वि[1].

वेङ्कट० [1]आ प्रयच्छति[1] धनवान् पुत्रवत् अन्नम् समिद्धः अन्नवान् आभिमुख्येन आहुतः[2] बहु। अस्मान् अस्य सुमतिः नवतरा अन्नैः सह आगच्छतु ॥ ९ ॥

प्रेष्ठंमु प्रियाणां स्तुह्यासावातिंथिम् । अग्निं रथानां यमम् ॥ १० ॥

प्रेष्ठम् । ऊँ इति । प्रियाणाम् । स्तुहि । आऽसाव[3] । अतिथिम् । अग्निम् । रथानाम् । यमम् ॥ १० ॥

वेङ्कट० प्रियतमम् प्रियाणाम् स्तोतः! स्तुहि[4] अतिथिम्[5] अग्निम् रथानाम् यन्तारम् ॥ १० ॥

[6]इति षष्ठाष्टके सप्तमाध्याये चतुर्दशो वर्गः[6] ॥

उदिंता यो निदिंता वेदिंता वस्वा यज्ञियों ववर्तति ।
दुष्टरा यस्य प्रवणे नोर्मयों धिया वाजं सिषासतः ॥ ११ ॥

उत्ऽईता । यः । निऽदिंता । वेदिंता । वसु । आ । यज्ञियः । ववर्तति ।
दुस्तराः । यस्य । प्रवणे । न । ऊर्मयः । धिया । वाजम् । सिसासतः ॥ ११ ॥

वेङ्कट० उद्भूतानि न्यग्भूतानि च यः वेत्ता धनानि यज्ञियः[7] आ वर्तयति । दुष्टराः यस्य ज्वालाः प्रवणाभिमुखाः इव ऊर्मयः कर्मणा सङ्ग्रामम् सम्भक्तुमिच्छतः[8] ॥ ११ ॥

मा नों हृणीतामतिंथिर्वसुरग्निः पुरुप्रशस्त एषः । यः सुहोता स्वध्वरः ॥ १२ ॥

मा । नः । हृणीताम् । अतिथिः । वसुः । अग्निः । पुरुऽप्रशस्तः । एषः । यः । सुऽहोता । सुऽअध्वरः ॥ १२ ॥

वेङ्कट० मा अस्मभ्यं क्रुध्यताम् अतिथिः वसुः अग्निः बहुभिः प्रशस्तः एषः यः सुहोता सुयज्ञः च ॥ १२ ॥

मो ते रिषन् ये अच्छोक्तिभिर्वसोऽग्ने केभिश्चिदेवैः ।
कीरिश्चिद्धि त्वामीट्टे दूत्याय रातहव्यः स्वध्वरः ॥ १३ ॥

मो इति । ते । रिषन् । ये । अच्छोक्तिऽभिः । वसो इति । अग्ने । केभिः । चित् । एवैः ।
कीरिः । चित् । हि । त्वाम् । ईट्टे । दूत्याय । रातऽहव्यः । सुऽअध्वरः ॥ १३ ॥

वेङ्कट० मा एव ते[9] रिषन्, ये अभिष्टुतिभिः परिचरन्ति त्वां वासयितः! अग्ने! सुखकरैः च अभिगमनैः । स्तोता हि त्वाम् स्तौति दूत्याय दत्तहविष्कः सुयज्ञः[10] ॥ १३ ॥

अग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये ।
सोभर्या उप सुष्टुतिं मादयस्व स्वर्णरे ॥ १४ ॥

---

१-१. नास्ति वि[1] अ[1]. २. हुतः वि[1] अ[1]. ३. वैप १,७३२० द्र. ४. स्तुतिम् वि[2] अ[1]. ५. नास्ति वि[1] अ[1]. ६-६. नास्ति मूको. ७. यज्ञीयः मूको. ८. °त वि[1] अ[1]. ९. तव मूको. १०. नास्ति वि[2] अ[1]; सुयज्ञैः वि[1].

आ । अग्ने । याहि । मरुत्ऽसंखा । रुद्रेभिः । सोमंऽपीतये ।
सोभंर्याः । उपं । सुऽस्तुतिम् । मादयंस्व । स्वंःऽनरे ॥ १४ ॥

वेङ्क० आ याहि अग्ने! मरुत्सखा मरुद्भिः सह सोमपानाय। सोभरेः सुष्टुतिम् उप आगच्छ[1], मादयस्व सर्वनरे कर्मणि[2] इति ॥ १४ ॥

[3]इति षष्ठाष्टके सप्तमाध्याये पञ्चदशो वर्गः[3] ॥

इति ऋग्वेदे सभाष्ये अष्टमं मण्डलं समाप्तम् ॥





---

१. °च्छत वि[2] अ[1]. २. °र्माणि वि[2]. ३-३. नास्ति मूको.

# शोधपत्रम्[1]

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२८९ | १ | °विंशाद्या° | °विंश्याद्या° |
| २२९० | २१ | तेजोभिः, | तेजोभिः |
| ,, | २२ | च[11] | वा[11] |
| २२९३ | १० | उभा | उ॒भा |
| ,, | १७ | भक्षयन्ति | भक्षयन्तु |
| २२९७ | २४ | ८-८. नास्ति मूको. | × |
| २२९८ | ९ | °शसंस्य | °शंसस्य |
| ,, | ११ | । [6]नाराशंसः पूजयामास सदैव यज्ञार्थम्[6] | × |
| ,, | १६ | ... ... ... | नराशंसं पूजयामः सदैव यज्ञार्थम् |
| ,, | २६ | ६-६. नास्ति वि[2] अ[1]. | × |
| २२९९ | १९ | ऊर्ध्वम् | ऊर्ध्वम्[1] |
| ,, | २६ | प्रज्ञो | °प्रज्ञो |
| २३०१ | २२ | दर्शनीय ! त्वम् | [10]°दर्शनीय ! त्वम्[10]° |
| २३०२ | ७ | रुक्मो | रु॒क्मो |
| ,, | २२ | सरी° | सू॒री° |
| २३०५ | ३० | मृतमिति | मृतम् |
| २३२७ | २४ | दधाति | दधा॑ति |
| २३३० | ३ | °यन्तः[7] | °यन्त्यः[7] |
| ,, | २५ | वि[2] अ[1]. | वि[2] अ[1]; °यन्तः ल लअ. |
| २३३१ | १४ | नेतुम् | नेतॄन् |
| २३३२ | २९ | त्वयि | त्ववि |
| २३३३ | १३ | द्रह्यवः | द्रु॒ह्यवः |
| २३३५ | १६ | व्युच्छांन् | व्यु॑च्छान् |
| २३३६ | ५ | °मिति[6] | °मिति |
| ,, | ८ | नि॒डरे॒के | नि॒रे॒के |
| ,, | २६ | ६. °षद° मुको. | × |
| २३३८ | १३ | भगेपु | भटेपु |
| २३४७ | २३ | व्रजहस्तः | वज्रहस्तः |
| २३५२ | १७ | स्तुतिहेतु[12] | स्तुतिहेतुः[12] |
| २३५२ | २७ | °तुः वि[2] अ[1]. | १२. °तु ल. |
| २३५६ | १६ | बलबन् ! | बलवन् ! |
| २३५७ | ३ | इन्द्र | इन्द्र॒ |
| २३५९ | १ | ईन्द्र | ई॑न्द्र॒ |
| ,, | २ | ळहा | दू॒ळहा |
| २३६० | १७ | असोढा | असोढो |
| २३६३ | ८ | त॒नु॒षु | त॒नू॒षु |
| २३६६ | ४ | चर्षणिप्राः | चर्षणिप्राः |
| २३६९ | ३ | । महते धनाय | महते धनाय । |
| ,, | ४ | °हन्त्रे[2] | °हन्तृणे[2] |
| २३७१ | १ | अन्तरिक्षम् | आन्तरिक्षम् |
| २३७७ | १९ | उर्वशीतो[7] | उर्वशीगतात्[7] |
| २३८३ | १४ | न॒ । | न॒ः । |
| २३८५ | २० | तार्यमाणः | त्रार्यमाणः |
| २३९२ | २२ | अज्येष्ठकनिष्ठाभ्याम् | ज्येष्ठकनिष्ठाभ्याम् |
| २३९६ | १६ | °मर्धच | °मर्धर्चे |
| २४०६ | १५ | उषसम् | उ॒षसम् |
| २४१३ | २ | नादेयाः ज्वलन्त्यः[4] | नादेयाः[4] ज्वलन्त्यः |
| २४१९ | २० | जहि | त्वम्[1] जहि |
| ,, | २८ | वि[1] | वि[2] |
| २४२२ | ६ | मनांसि | मनांसि[3] |
| ,, | २३ | नास्ति वि[2] अ[1]. | × |
| ,, | २४ | अ[1] लअ; | अ[1]; |
| २४२५ | २ | गुरुः | गुरु |
| २४२६ | १ | मरुतः | मरु॒तः |
| २४३१ | २५ | ये | हे |
| २४३५ | २५ | छन्न | ८. छन्न |
| ,, | ,, | वि[2]. ८. सायाह्नं | वि[2]; सायाह्नं |
| २४३८ | १९ | इमे | इ॒म |
| २४४० | १५ | भगाः | भटाः |

१. × इत्येतच्चिह्नपरामृष्टः पाठो नेष्टः ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २४४३ | ८ | अथ[३] | अर्थः[३] |
| २४४८ | १२ | दुःऽअत्येतू | दुःऽअत्येतूं |
| २४४९ | १४ | स्वभूताय | स्वभूताय[५] |
| २४५० | ८ | वर्षणादेः | वर्षणादेः ये |
| २४५८ | २ | चिच्छ° | चिच्छ° |
| २४६० | ५ | विद्यतम्, | विद्युतम्, |
| २४६३ | ९ | रथन | रथेन |
| २४६४ | ६ | शतदूरेषु | शतदुरेषु |
| २४६६ | ९ | नासत्यौ | नासत्यौ! |
| ,, | १६ | वृषणौ | वृषणौ! |
| २४७९ | २५ | ६. ऋ १,११,२. | ६. ऋ १,११,१. |
| २४८१ | १० | नासत्या° | नासत्या° |
| २४८२ | १७ | उच्छन्तीं | उच्छन्तीं |
| २४८४ | १५ | पर्थिवस्य | पार्थिवस्य |
| २४९० | १२ | सर्वतः[४] । अस्मभ्यं | [४]स वरुणः अस्मभ्यं[४] |
| ,, | २४ | [४]त्रुटितम् | ४-४. ··· स्मभ्यं |
| २४९५ | २२ | सुऽमेके | सुमेके |
| २५०३ | १५ | [५]तावता आगतौ[५] | तावता[५] आगतौ |
| २५०७ | २१ | यत्[३] | × |
| २५०९ | १२ | प्र । नक् । | प्रणक् |
| २५१० | १ | मोदमानो | मोदमानौ |
| २५१२ | १८ | ऊ | ॐ |
| २५१३ | २१ | पीपिवांसम् | पीपिऽवांसम् |
| २५२१ | २६ | † नास्ति मूको. | † नास्ति ल लअ. |
| २५२२ | १७ | प्रख्यापनीय | प्रख्यापनीयं |
| २५२४ | १८ | गाधिनोऽस्य | गाधिनोऽस्य[८] |
| ,, | २५ | गाथीन्द्रोस्य | ८. गाथीन्द्रोऽस्य |
| २५२६ | २७ | ५,५१,१. | ५,५०,१. |
| २५२७ | ९ | त्रिऽवर्तुं | त्रिऽवर्तुं |
| २५२८ | २० | इच्छतु | इच्छतु |
| २५३१ | ७ | °र्भवति | °र्भवथ |
| २५३७ | १५ | घ्नन्तु | घ्नन्तु |
| २५४० | ५ | मस्य | [८]मस्य |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २५४५ | २ | मर्दनात्[२] | आतर्दनात्[२] |
| ,, | ९ | [७]मा च[७] | किन्तु |
| ,, | १० | दवाग्निना । | दवाग्निना |
| ,, | १७ | मदिरित्य° | अनुमुदिरित्य° |
| २५५५ | ५ | विघ्न[३] | विघ्नो |
| ,, | ९ | हे [५]अभिषोतः | [५]हे अभिषोतः! |
| २५५६ | ९ | गोभिः | [५]गोभिः |
| २५५७ | १ | इन्द्रंः । | इन्द्रंः । पुरु । |
| २५६२ | २२ | इन्द्र स्तोमें° | इन्द्रं स्तोमें° |
| २५६६ | ८ | मदन्तु | मन्दन्तु |
| ,, | २५ | इव | × |
| ,, | ,, | इरिण | इवेरिण |
| २५६६ | २६ | प्र | प्रा |
| २५७० | १५ | शतऽअश्वम् | शतऽअश्वम् |
| २५७१ | १ | अरारणुः | अरारणुः |
| २५७३ | २१ | °ग्नेयम् | °ग्नेयम्[१६] |
| २५७४ | ५ | °कानाम् | °कानाम्[४] |
| ,, | ,, | °मिति[४] | °मिति |
| २५७५ | २३ | अस्माकम् | अस्माकम्[६] |
| ,, | ,, | श्येनेभिः[६] | श्येनेभिः |
| २५७६ | २१ | हे | × |
| ,, | ,, | °धनौ! | °धनौ![९] |
| ,, | ,, | च[९] | च |
| २५८० | १५ | न | × |
| २५८१ | ७ | नवभिक्षैराल° | नवभिक्षणल° |
| २५८८ | २ | इन्द्रम् | इन्द्रम् । |
| ,, | ,, | गचछन्त्यः । | गच्छन्त्यः |
| ,, | ,, | प्रविभजन्ती (?)[१] | [१]प्रति भजन्ती[१] |
| २५९४ | १५ | त्रितस्य[५] | त्रिस्थानस्येन्द्रस्य[५] |
| २६०१ | ४ | काण्वपुत्रः | कण्वपुत्रः |
| ,, | ९ | स्तुतिकामौः! | स्तुतिकामौ! |
| २६०२ | ३ | सान्ति | सन्ति |
| २६०४ | ११ | तत् | यत् |
| २६०६ | ३ | अश्विनौ | अश्विनौः |
| २६०७ | ३ | स्तुवति | स्तुवन्ति |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६०८ | १३ | यद | यद् |
| २६१३ | १ | छन्द[१] | छन्दः[१] |
| ,, | १८ | सुन्वतः | सुन्वन्तः |
| २६२५ | १६ | दट्वेति[३] | दष्ट्वेति[३] |
| ,, | २० | शतक्रतो इति | शतक्रतो इति |
| ,, | ,, | शतक्रतो | शतऽक्रतो |
| २६३१ | ७ | जनैः[४] | भटैः[४] |
| २६३२ | ६ | हर्षमन्तः[३] | हर्षवन्तः |
| २६४६ | २८ | तदानीं विशत वि[२]; | × |
| २६४९ | २३ | रमये[१२] प्रभो! | रमये प्रभो![१२] |
| २६५० | १८ | सुऽम° | सऽम° |
| २६५१ | १३ | [३]तिष्ठन्ति च | तिष्ठन्ति स्थावराणि भूतानि |
| ,, | ,, | युक्तानि | युक्तानि भवन्ति |
| २६५२ | २ | आदिशन्ति, | × |
| २६५३ | २६ | एषा | एषा मूको. |
| २६५८ | ३ | 'नदुं | 'नदं |
| ,, | १९ | काविराण्णाम | काविराण्नाम |
| २६६१ | २२ | नरैः[८] | भटैः[८] |
| २६७५ | २ | विरेच° | निरेच° |
| २६७९ | १२ | इन्द्र । | इन्द्र । |
| २६८० | २० | क्व सा | क्व स |
| २६९२ | १३ | वर्धनायः | वर्धनाय |
| २६९७ | २१ | इत्यर्थे | × |
| ,, | २५ | ९. अत्यूर्ध्वां | ९-९. इत्यर्थे अत्यूर्ध्वां |
| २७०७ | १४ | °पङ्केरथ | °पङ्क्तेरथ |
| २७१४ | २३ | एनं[५] | एतत्[५] |
| २७२१ | ४ | सम्ऽभृंतऽअश्वः | संभृंतऽअश्वः |
| २७३३ | २ | [१]व्यावाश्वस्य | [१]श्यावाश्वस्य |
| २७३४ | २३ | तृयीयाध्याये | तृतीयाध्याये |
| २७३८ | १६ | याः | या |
| २७४२ | ८ | रीदसी[४] | रोदसी[४] |
| २७४५ | १५ | जुह्वो३ | जुह्वो३ |
| २७६५ | २० | अद्रिवः । | अद्रिवः । |
| २७८२ | २० | °हती | °हत्यः |
| २७८४ | १६ | समा सतो बृहती | समाः सतो-बृहत्यः |
| २७९३ | ४ | चड्क्रमत | चङ्क्रमत |
| २७९५ | १ | इमम् । | इमम् |
| २७९७ | ९ | अङ्गिरः | अङ्गिरः |
| २७९९ | १३ | अस्मान् | पाहि अस्मान् |
| २८०२ | ४ | अग्न | अग्ने |
| २८०५ | २३ | [६]अयम् | अयम् |
| २८०६ | ९ | राघःऽपते | राधःऽपते |
| २८१० | ३ | प्रार्दुभूतम् | प्रादुर्भूतम् |
| ,, | ९-१० | तावत् कालम् | तावत्कालम् |
| २८१७ | ९ | वृहत् | बृहत् |
| २८१९ | १९ | श्रूते[११] | श्रुते[११] |
| २८२४ | २४ | °प्रदर्श | °प्रदर्श° वि[२]; |
| २८३१ | १६ | हृषण | हर्षेण |
| ,, | २५ | नास्ति मूको. | द्वौ मूको |
| २८३९ | १ | स्युरिति । | स्युरिति |
| २८४९ | २ | युज्जार्था° | युञ्जार्था° |
| ,, | ९ | घ्रर्मम् | घर्मम् |
| ,, | ११ | श्येनैव | श्येनेव |
| २८५१ | १७ | °द्वृक्ष | °द्वृक्षं |
| २८५४ | १५ | जनासः | × |
| ,, | १९ | आर्क्षै | आर्क्षै |
| ,, | २० | शर्धांसिऽ° | शर्धांसिऽ° |
| २८५५ | १४ | पष्ठा° | षष्ठा° |
| ,, | २२ | °ब्रयाः | °ब्रूयाः° |
| २८५९ | १६ | अद्रिवः | अद्रिवः । |
| २८६१ | २ | प्रऽवृंद्धः । | प्रऽवृंद्धः । |
| २८६४ | १८ | मघवत्न्सं° | मघवन्त्सं° |
| २८६७ | १० | किमङ्ग | किमङ्ग |
| २८७० | ३ | सख्येन | सख्येन |
| २८७६ | २५ | नास्ति | नास्ति मूको. |
| २८७९ | १८ | वृद्धिम् | वृद्धिम् |
| २८८० | २१ | मर्घुमन्त° | मधुंमन्त° |
| २८८५ | २३ | वृत्रहा | वृत्रहा |
| २८८६ | १५ | त्वद् गुणान् | त्वद्गुणान् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८८८ | १४ | इन्द्रो! | इन्दो! |
| २८९७ | १२ | दवः | देवः |
| २९०५ | ४ | शुद्धम् शुद्धेन | शुद्धम् शुद्धेन |
| २९०६ | ६ | ‘अतिविद्धा | ‘अतिविद्धा |
| २९०८ | ७ | कुर्मं | कुर्मः |
| ,, | १६ | ईरय | ईरय |
| ,, | २४ | द्रणा | द्रुणा |
| २९११ | ९ | वर्धंत्रस्त्वं | वर्धंत्रैस्त्वं |
| ,, | १६ | अंजयो | अंजयो |
| २९१२ | २१ | इन्द्र | इन्द्र |
| २९१४ | १६ | इन्द्र | इन्द्र |
| २९१७ | १० | अन्नः | अन्नः |
| २९२८ | १३ | यज्ञधनाः! | यज्ञधन!'। अथ |
| ,, | १९ | तिंसृणाम् | तिसृणाम् |



